प्रत्याहाराच्च स्यादिति परिहारः । इदं चाचार्यदेशीयस्य वचनम्, आचार्यसिद्धान्तं दर्शयितुमेतद् दूषयति । 'सिद्धं टाबस्त्वित्त्वइति' । सत्यं सिद्धमिदं चापा प्रत्याहारे, इत्त्वे तु दोषो भवति, बहूनि चर्माण्यस्याः बहुचर्म्मिकेति, कथं तत्र सुब्विधिरिति सर्वविभक्त्यन्तावयवः समास आश्रितः, सुपो विधिः सुपि विधिरिति, ततश्च यथा राजभ्यामित्यत्र सुपि चेति दीर्घत्वं न भवति तथा टापि सुपि विधीयमानमित्वमपि सुब्विधिरिति तत्र कर्त्तव्ये नलोपस्यासिद्धत्वात्कात् पूर्वोऽकारो न भवतीतीत्वं न स्यादित्यर्थः । सिद्धान्तमाह । 'तस्माच्चोभाविति' । स्त्रियामित्यर्थमात्रमपेक्ष्य तत्र यदुक्तं तत्र भवतीत्येवं ङीप्टापावुभावपि प्रतिषेध्याविस्यर्थः । ननु च सकृत्प्रतिषेधस्य प्रवृत्तिः, स च स्वप्रवृत्तिसमये यस्य प्रसङ्गस्तमेव प्रतिषेधति, ततश्च पूर्वं ङीपि प्रतिषिद्धे नलोपे च कृते पश्चात्प्राप्नुवतष्टापः कथं प्रतिषेधः, आत्माश्रयो हि स्यात् स्वप्रवृत्तिमपेक्ष्य स्वप्रवृत्तिरिति, तस्मात्तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन द्विरस्य प्रवृत्तिः, तत्र द्वितीयया प्रवृत्त्या टापः प्रतिषेधः ॥

"मनः" ॥ 'अनिनस्मन् ग्रहणानीति' । अन् इन् अस् मन् इत्येतेषां ग्रहणे अर्थवत्परिभाषा न व्याप्रियते, तेनैषामनर्थकानामपि ग्रहणं भवति, एभिश्चार्थवद्भिरनर्थकैश्च तदन्तविधिर्भवतीत्यर्थः, सीमन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्, अतिक्रान्ता महिमानमतिमहिमा अत्रापीमनिच एवार्थवत्त्वं न तु मनः ॥

"अनो बहुव्रीहेः" ॥ 'अनुपधालोपी बहुव्रीहिरिहोदाहरणमिति' । कुत एतदित्याह । 'उपधालोपिनो हीत्यादि' 'विभाषां वक्ष्यतीति' । अन उपधालोपिनोऽन्यतरस्यामित्यनेन । 'सुपर्वेत्यादि' । शोभनं पर्वास्याः शोभनं चर्मास्या इति बहुव्रीहिः, अयं च न संयोगाद्वमन्तादित्यल्लोपस्य प्रतिषेधादनुपधालोपी । 'बहुव्रीहेरिति किमिति' । समासादिति वाच्यमिति भावः । 'अतिराज्ञीति' । राजाहः सखिभ्य इति टज् न भवति समासान्तविधेरनित्यत्वात् ॥

"डाबुभाभ्यामन्यतरस्याम् ॥ 'अन्यतरस्यांग्रहणं किमिति'। डापा मुक्ते प्रतिषेधो यथा स्यादित्येवमर्थं तावदेतव कर्त्तव्यं, कथं डाब-प्युच्यते प्रतिषेधोऽपि तावुभौ वचनाद्भविष्यतः, यदि हि नकारान्तस्य श्रवणं न स्यात्तदा डापैवापवादेन ङीपो बाधात् प्रतिषेधोनर्थकः स्यात्, अथ डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवमर्थमन्यतरस्यां-ग्रहणं तदपि न, बहुराज्ञीत्यादावन उपधालोपिनोऽन्यतरस्यामित्यनेनैव ङीपः सिद्धत्वात्, यत्र तर्हि तेन न सिद्ध्यति अतिशर्मेत्यादौ तदर्थमेत-त्स्यात्, यद्येवमनेनैवोपधालोपिनोऽपि सिद्धत्वादन उपधालोपिन इत्ये-तदनर्थकं स्यात्, एवं तर्हि तदन्यतरस्यांग्रहणं न करिष्यामीतीदमन्य-तरस्यांग्रहणं क्रियते, कथमनेनैवान्यतरस्यांग्रहणेनोपधालोपिनोऽनुपधा-लोपिनश्च ङीपि प्रापिते सत्यन उपधालोपिन इत्येतावदपि क्रियमाणं नियमार्थं भविष्यति, अनो बहुव्रीहेर्यन् ङीब्विधानं तदुपधालोपिन एवेति, ततश्च तदन्यतरस्यांग्रहणं न कर्त्तव्यं भवति, तदवश्यं कर्त्तव्यम्, असति हि तस्मिन्ननेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्राड्डाप्प्रतिषेधङीप्सु त्रि-ष्वपि प्राप्तेषूपधालोपिनो डाप्प्रतिषेधौ बाधित्वा नित्यं ङीबेव यथा स्यादित्येवमर्थं तत्स्यात्, अतस्तदवश्यं कर्त्तव्यम्, इदं तु न कर्त्तव्यमिति प्रश्नः, परिहरति। 'बहुव्रीहाविति'। अयमभिप्रायः, डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यादित्येवमर्थमिदं तावदन्यतरस्यांग्रहणं, न चान उपधालोपिन इत्यस्य वैयर्थ्यं, नियमार्थत्वात्, अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति, तेन सुपर्वा सुशर्मेत्यादावनेनान्यतर-स्यांग्रहणेन प्रापितो ङीब् न भवति बहुराज्ञीत्यादावेव तु भवति, नन्वे-वमिदमन्यतरस्यांग्रहणं मा भूत् अन उपधालोपिन इत्येतदेव विध्यर्थ-मस्तु को वा विशेषः, अनेनान्यतरस्यांग्रहणेन बहुव्रीहिमात्रान् ङीपि प्रापिते तन्नियमार्थं स्याद् असति वास्मिन् डाप्प्रतिषेधयोरेव प्राप्तयोरु-पधालोपिनोऽप्राप्तो ङीप् पक्षे विधीयतइति। अयमस्ति विशेषः। अस्मिन्नन्यतरस्यांग्रहणे सति डाप्प्रतिषेधाभ्यां मुक्ते स्वेनस्वेन शास्त्रेण ङीब् भवन्वन्नन्तेषु वनो र चेत्यनेनैव भवतीति बहुधोवरीत्यादौ रेफोऽपि

भवति, एवमनेन वचन्तादुपधालोपिनोनुपधालोपिनश्च बहुव्रीहेर्बहुधीव-न्सुपर्वन्नित्यादेर्ङीब्रेफयोः प्रापितयोरन्यत्र बहुराजन्सुशर्मन्नित्यादौ केवले ङीपि प्रापिते सत्यन उपधालोपिनोन्यतरस्यामित्येतन्नियमार्थं भवति, तेन च नियमेन सुशर्मेत्यादौ ङीब् व्यावर्त्यते, सुपर्वेत्यादौ ङीपि व्याव-र्त्तिते तत्सन्नियोगशिष्टत्वाद्रेफोपि न भवति, बहुराज्ञीत्यादौ तु यथाप्राप्तो ङीबवस्थितः, बहुधीवरीत्यादौ च वनो र चेत्यनेन प्राप्तौ ङीब्रेफाववस्थिताविति सर्वमिष्टं सिद्ध्यति, असति त्वस्मिंस्तस्मिंश्च विध्यर्थे ऽपूर्व एव ङीप् तेन विधीयतइति वन्नन्ते बहुव्रीहावृन्नेभ्यो ङीबित्येतत्सन्नियुक्तं वनो र चेत्येतच्च प्रवर्त्ततेति केवले ङीपि सति बहुधीवनीति स्यात्, अतो ऽन उपधालोपिन इत्येतन्नियमार्थं यथा स्यात्स्वतन्त्रो विधिर्मा भूदित्ये-वमर्थमिहान्यतरस्यांग्रहणं क्रियतइति तदिदमन उपधालोपिन इत्यत्र वृत्तिकारः स्पष्टयिष्यति । यद्यनेनान्यतरस्यांग्रहणेन पक्षे ङीबपि प्राप्यते दामेत्यादौ मन्नन्तादपि प्राप्नोति, नैष दोषः, योगविभागः क्रियते डाबुभाभ्यां भवति, ततो ऽन्यतरस्याम्, अनो बहुव्रीहेरित्येव वर्त्तते, मन इति निवृत्तम् ॥

"अनुपसर्जनात्" ॥ प्रसज्यप्रतिषेधोयमित्याह । 'उत्तरसूत्रेषूप-सर्जनप्रतिषेधं करोतीति'। पर्युदासे को दोषः, कुक्कुटीपाद इत्यत्र न स्यात् पूर्वपदस्योपसर्जनत्वात्, न । अन्तरङ्गत्वात्प्रागेव ङीषि कृते तदन्तस्य समासः, न चेदानीमुपसर्जनत्वे ङीषः पर्युदासः, पूर्वमेवाभिनिर्वृत्तत्वात् । किं च प्रसज्यप्रतिषेधेप्येष दोषः समानः, कुक्कुटीत्यत्रैव तर्हि न प्राप्नोति, किङ्कारणमन्वर्थमुपसर्जनमप्रधानमुपसर्जनमिति, अस्त्वेवमनुपसर्जनं तूपस-र्जनादन्यत्सर्वं न तु प्रधानमेव, तेनापेक्षणीयस्याभावेप्यप्रधानादन्यत्वाद्भवि-ष्यति,यदा तर्ह्यधर्मानृतादिवद्विरोधिवचनोनुपसर्जनशब्दस्तदा न प्राप्नोति, तस्मात्प्रसज्यप्रतिषेधः । 'अनुपसर्जनादित्येवं तदिति'। उपसर्जनाच्च भव-तीत्येवमित्यर्थः । 'वक्ष्यति टिड्ढाणञिति ङीबिति'। कथं प्रथमान्तस्य व-क्ष्यतीत्यनेन सम्बन्धः । अत्राहुः । वक्ष्यति टिड्ढाणञित्येतावान् ग्रन्थः, टि-ड्ढाणञिति वक्ष्यतीत्यर्थः । कः पुनरत्र प्रत्यय इत्यत्राह । 'ङीबिति'। एवं

जातेरिति ङीष् इत्यत्रापि ग्रन्थच्छेदः, तत्र च पूर्वस्मिन्वक्ष्यतीत्यनुषङ्गः। 'कुरुचरीति'। चरेष्टः। 'बहुकुरुचरेति'। बहुव्रीहिः सर्वोपसर्जनः। 'कथं पुनरित्यादिः'। प्रत्युदाहरणे यदुपसर्जनं न तत् स्त्रियां वर्त्तते, यदा च स्त्रियां वर्त्तते तदा भवत्येव प्रत्ययः, बह्वः कुरुचर्योऽस्यां बहुकुरुचरीका बहुकुक्कुटीका मथुरेति, यः स्त्रियां वर्त्तते बहुव्रीहिस्ततोऽटित्वादजातित्वाच्चाप्रसङ्गः। तथाहि। टित्प्रातिपदिकं गृह्यते तच्च किंचित्साक्षाट्टिद्भवति यथा नदट् चोरडिति, किं चित्त्ववयवटित्त्वद्वारेण, यत्र ह्यवयवटित्त्वमकिंचित्करं तत्र समुदायार्थं तद्विज्ञायते, स चावयवः क्वचिद्धातुः स्तनन्धयीति, क्व चित्कृल्ल्युडादिः, क्व चित्तद्धितष्ट्युट्युलादिः, तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थं तस्य टित्त्वमिति कुरुचरशब्द एव टित् तत्कुतो बहुकुरुचरशब्दात्प्रसङ्ग इति प्रश्नः। परिहरति। 'तदन्तविधिनेति'। ननु ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, ग्रहणं चोपादानमात्रं न तु स्वरूपेणोच्चारणमेव तत्कथं तदन्तविधिः। स्यादेतत्। यत्र गृह्यमाणं रूपं प्रातिपदिकस्यैवासाधारणं तत्र तदन्तविधिप्रतिषेधः, इह चोरडित्यादि प्रातिपदिकमपि टित् ल्युडादिप्रत्ययोऽपि धेडिति धातुरपि, ततश्च यथोगितश्चेत्यत्र वर्णाप्युगित्प्रत्ययोऽपि प्रातिपदिकमपीति तदन्तविधिर्भवति तथेहापि प्रसङ्ग इति, स्यादयं प्रसङ्गो यदि टिता प्रातिपदिकं विशेष्येत टिति च प्रातिपदिकेन विशेष्यमाणे नानेन विशेषणेन तदन्तविधिः, प्रातिपदिकेन चासम्भवादिति नैव बहुकुरुचरशब्दात्प्रसङ्ग इत्यत आह। 'ज्ञापितं चैतदिति'। शूद्रा चामहत्पूर्वेत्यत्र ज्ञापितमेतत्। अवश्यञ्चैतज् ज्ञापितमुत्तरत्रापि परिपालनीयमित्याह। 'तथा चेति'। अनाश्रीयमाणे ज्ञापकेणन्ताद्विधीयमानो ङीप् प्रत्ययग्रहणपरिभाषया कारशब्दादेव स्याद् न त्वणन्तात्कुम्भकारशब्दात्, ज्ञापकात्तु ततोऽपि भवतीत्यर्थः। ननु च कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्याणन्तत्वं, नेत्याह। 'न वाणिति'। 'कृद्ग्रहणमिति'। किं कारणमित्यत्राह। 'तद्धितोऽप्यणस्तीति'। यत्र तु गृह्यमाणं रूपं कृत एवासाधारणं तत्रैषा परिभाषा, इह त्वौपगवीति तद्धितस्यापि ग्रहणमिति

नायमस्या विषय इत्यर्थः । अथ कारशब्दादुत्पत्तौ सत्यां को दोषः, कौम्भकारेयो न सिद्ध्यति, प्रत्ययग्रहणपरिभाषया कारीशब्दात्स्त्रीभ्यो ढकि सत्येव वृद्धिस्वरौ स्यातां, ष्यङः सम्प्रसारणञ्च भविष्यति, तद्यथा, ष्यङन्तस्योच्यमानं सम्प्रसारणं परमकारीषगन्धीपुत्र इत्यत्रापि भवति स्त्रीप्रत्यये तदादिनियमाभावात् तथा कारशब्दादप्युत्पत्तौ कुम्भकारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वाद्भविष्यति, एवमपि कारीशब्दादपि कदा चित्स्यात्, अथ ब्रूयाः, कारीशब्देन कुम्भशब्दः समसिष्यते, स्त्रीभ्यो ढगित्यत्र च ङ्याप्प्रातिपदिकादिति त्रितयाधिकारसामर्थ्यात्स्त्रीप्रत्ययान्तात्प्रातिपदिकादिति प्रत्ययो विधास्यते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नमिति कुम्भकारीशब्दादेव ढगुत्पत्स्यते, ङ्याब्ग्रहणानुवृत्त्या च सौपर्णेय इत्यत्रापि भविष्यतीति, एवमपि ङ्याबनुवृत्तेः सौपर्णेय इतिवत् कारीशब्दादपि स्यात्, गतिकारकोपपदानामिति वचनाच्च ङ्यन्तेन समासो दुर्लभः, ततः कुम्भकारशब्दादेव ङीप्यथा स्यादित्युत्तरत्रापि तदन्तविधिरभ्युपगन्तव्यः । न च कुम्भकारशब्दादप्युत्पत्तौ तदादिनियमाभावात्कारीशब्दादपि ढक् प्रत्ययप्रसङ्गः, किं कारणं स्त्रीप्रत्यये चानुपसर्जनेनेत्यनेन, प्रत्ययग्रहणे यस्मात्स तदादेरधिकस्य ग्रहणमभ्यनुज्ञायते न न्यूनस्यापि। ननु च सत्यप्युत्तरत्र तदन्तविधौ कुम्भकारीत्यत्र समुदायादपि भवतु, केवलात्कारशब्दादपि प्रसङ्गो यथोपगवीत्यादौ, ततश्च कौम्भकारेयः पक्षे दुष्यत्येव, एवं तर्हि कारशब्दादप्युत्पत्तौ कुम्भेनैकार्थीभूतस्य तावतो निष्कृष्यापत्येनायोगात्तदादिनियमाभावाच्च समुदायादेव ढग्भविष्यति । यद्वा कुम्भेनैकार्थीभूतस्य कारस्य स्त्रीत्वेनायोगात्स्त्रीप्रत्यय एव न भविष्यति, असति पुनरुत्तरत्र तदन्तविधौ स्त्रीप्रत्ययस्याप्रसङ्गः, किं कारणं, यद्यदन्तं न तस्य निष्कृष्य स्त्रीत्वेन योगः, यस्य च स्त्रीत्वेन योगो न तदणन्तम् । अत उत्तरत्राप्यवश्यं प्रधानेन तदन्तविधिरभ्युपगन्तव्यस्तत्र यथा प्रधानेन भवति तथोपसर्जनेनापि स्यादिति प्रतिषेधोयमारभ्यते, तथा च पूर्वत्रोपसर्जनेनापि तदन्तविधिर्भवति, न षट्स्वस्रादिभ्यः प्रियपञ्चा द्रौपदीति, अतिक्रान्ता भवन्तमतिभवतीति । स्यादेतत् । पूर्व-

चोपात्तं तदन्तं वा स्त्रियामित्यनेन विशेष्यते, टिड्ढाणञित्यादिषूपात्तमेव टिदादिकं, तेन ज्ञापितेऽपि तदन्तविधौ बहुकुरुचरेत्यादौ टिदादेरस्त्रीत्वाच्च भविष्यति, कुम्भकारीत्यत्र त्वणन्तस्य स्त्रियां वृत्तेस्तदन्तादपि भविष्यति नार्थ एतेनेति, तच्च। त्वदुक्तस्य विषयविभागस्य दुर्ज्ञानत्वात्, अतो विषयविभागज्ञापनार्थमिदमारभ्यते। नन्वारब्धेऽप्यस्मिन्नेव विषयविभागः शक्य आख्यातुं, पञ्चाजीत्यत्राजानामस्त्रीत्वेन तदन्तस्य स्त्रियां वृत्तेरजाद्यतष्टाबिति टाप् प्रसङ्गात्, अतो विशेषणविशेष्यभावं प्रति कामचारादजाद्यतष्टाबित्यत्र टिड्ढाणञित्यादौ चोपात्तं स्त्रीत्वेन विशेष्यते, वनो र चेत्यादावुपात्तं तदन्तस्य चेति नार्थ एतेन। एवं तर्हि तदन्तविधिज्ञापनार्थमिदमारभ्यते, अमहत्पूर्वेत्येतत्तु शक्यमकर्त्तुं, नहि महाशूद्रेत्यत्र समुदाये जातिवचने शूद्रशब्दः स्त्रियां वर्त्तते। अपर आह। लौकिकस्याप्रधानस्योपसर्जनस्येह ग्रहणं तेनापिशलिना प्रोक्तमित्यश्चेत्यण्, ततोऽध्येत्र्यां तदधीतइत्यण्, तस्य प्रोक्ताल्लुगिति लुक्, आपिशला ब्राह्मणी, अत्र इञश्चेति विहितस्य प्रोक्तप्रत्ययस्याणोऽप्रधानत्वात्तदन्तान्ङीब् न भवति, नन्विदानीमध्येतृप्रत्यये लुप्ते प्रकृतिरेव तदर्थमाहेति प्रधानस्त्रियामध्येत्र्यामणन्तस्य वृत्तेः स्यादेव ङीप् प्रत्ययः। स्यादेतदेवं यद्यणन्तादनुपसर्जनादित्युच्येत वयं त्वणमेवानुपसर्जनत्वेन विशेषयिष्यामः, अणयोऽनुपसर्जन इति, अर्थद्वारकं चाणः प्राधान्यमप्राधान्यं च, तदेतदुक्तं भवति, यस्मिन्नर्थेऽणुत्पन्नः स यदा प्राधान्येनोच्यते तदा तदन्तान्ङीब् भवति, यदा तु गुणभावेन तदा नेति, इह चाध्येत्र्यां सङ्घान्तत्वात्प्रथमस्याणोऽर्थो गुणभूत इति तदाश्रयस्तावन्ङीब् न भवति, यस्त्वध्येत्र्यामुत्पन्नस्तदाश्रयोऽपि न भवति तस्य लुप्तत्वात्। प्रत्ययलक्षणेनापि न भवति, अणाकारस्य विशेषणात्, टिड्ढाणञित्यत्र ह्यत इति वर्त्तते तत्राणन्तादकारान्तादिति विज्ञायमाने स्यात्प्रत्ययलक्षणमणा त्वकारे विशेष्यमाणे वर्णनिमित्तो ङीप् प्रत्ययः कथं प्रत्ययलक्षणेन स्यात्। ननु स्त्रियामित्यनुवृत्तेनाणं विशेषयिष्यामो योऽण् स्त्रियां विहित इति, एवमपि काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणीति द्वितीयेऽपि

प्रोक्ताल्लुगिति लुप्तेपि प्रथमोप्यण् स्त्रियामेवोत्पन्नस्तदन्ताद्धास्यर्थां वर्तमानान्ङीप्प्रसङ्गः, तस्मात्प्रधानाद्यथा स्यादप्रधानान्मा भूदित्येतत्प्रयोजनं सूत्रस्येति ॥

"टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम्" ॥

'इह कस्मादिति'। लडादेशस्य स्थानिवद्भावेन टित्त्वमस्तीति प्रश्नः । 'पवमाना यजमानेति' । ननु शानजादिषु लट इत्यस्य निवृत्तत्वाद् अनादेशपक्षः स्थापितः, पवमानेत्यादिषु शानजुदाहर्तव्यः । 'ट्वनुबन्धकत्वाल्लट इति' । लडादिष्वकारादयोप्यनुबन्धा इति भावः । एतेन लिङ्लृटौ व्याख्यातौ अनूचाना यक्ष्यमाणेति । 'ल्युडादिषु कथमिति' । ट्वनुबन्धकत्वात्तेषामपि ग्रहणेन न भाव्यमिति प्रश्नः । 'टित्करणसामर्थ्यादिति' । न च लडादिष्वपि टित्करणसामर्थ्यमित्याह । 'इतरथेति' । 'पठिता विद्येति' । कथमित्यनुषङ्गः । इटष्टित्त्वमुभयार्थं स्यादिति प्रश्नः । 'आगमटित्त्वमनिमित्तमिति' । आगमानां टित्त्वं ङीपो निमित्तं न भवतीत्यर्थः । कुत इत्यत आह । 'ट्युट्युलौ तुट् चेति लिङ्गादिति' । यद्यागमटित्त्वं ङीपो निमित्तं स्यात्ततः सायन्तनीत्यादौ तुट आगमस्य टित्त्वान्ङीप् सिद्ध इति ट्युट्युलोष्टित्करणमनर्थकं स्यादिति भावः । ननु च पुराणप्रोक्तेष्विति निर्देशेन यदा तुण् न भवति तदा ङीबर्थं तयोष्टित्त्वं स्यात्तत्र, पुराणशब्दाद्बाह्वादिषु पाठान्ङीषा भवितव्यम्, अन्तोदात्तो हि पुराणीशब्दः पुनःपुनर्जायमाना पुराणीति यथा । एवमपि न ज्ञापकं बाह्वादिभ्यश्चेत्यत्र वेति वर्त्तते, ततश्च ङीपा मुक्ते ङीब् यथा स्यादिति ट्युट्युलोष्टित्त्वं स्यादिति चिन्त्यमेतत् । 'सौपर्णेयीति' । सुपर्णीशब्दात्पाककर्णादिङीषन्तात्स्त्रीभ्यो ढक्, ननु च सानुबन्धत्वादस्य ग्रहणेन न भवितव्यमत आह । 'निरनुबन्धक इति' । यद्यपि शिलाया ढ इति निरनुबन्धको ढशब्दोस्ति स इह स्वभावान्नपुंसकलिङ्ग इति स्त्रियां नास्तीत्युक्तं, योपि सभाया यः, ढश्छन्दसीति ढः सोपि स्त्रियां न वर्तते कथं, तत्र तत्र साधुरिति वर्तते कथं च स्त्री नाम सभायां साध्वी स्यादयज्ञसभायां हि विदुषामधिकारः । ननु मा नाम भूदयज्ञसभायां

साध्वी शालायां स्त्रीसभे च साध्वी भविष्यति, तत्रयज्ञसभायां साध्वी ब्राह्मणपरिषदित्यत्रापि प्रसङ्गः, एवं तर्ह्येवंविधे विषये छन्दसि सभेयीशब्दस्य प्रयोगाभावोत्र हेतुः । 'णोपि क्व चिदणकृतं कार्यं भवतीति'। शीलं छत्रादिभ्यो ण इति यो णस्तत्राण् कृतं कार्यं भवतीति । कथं, ज्ञापकात्, यदयं कार्मस्ताच्छील्यइति टिलोपार्थं निपातनं करोति, यदि हि ताच्छीलिके णे ऽण्कृतं कार्यं न स्यान्निपातनमनर्थकं स्यात्, कर्मशब्दाच्छत्रादिलक्षणे णे कृते नस्तद्धितइत्येव टिलोपस्य सिद्धत्वात्, च चाविति प्रकृतिभावः, अणि हि स प्रकृतिभावः, । 'चौरी तापसीति"। चुरातपःशब्दौ छत्रादिषु पठितव्यौ । क्व चिदित्यस्य व्यावर्त्यं दर्शयति। 'दाण्डा मौष्टेति'। दण्डमुष्टिशब्दाभ्यां तदस्यां प्रहरणमिति णः। 'औत्सी औदपानीति'। उत्सोदपानशब्दाभ्यां भवार्थे उत्सादिभ्योञ्, अथ शार्ङ्गरवादिसूत्रे पुनरञ्ग्रहणं किमर्थं, यावता ऽनेनैव सिद्धं, न रूपभेदो न स्वरभेदस्तत्राह । 'शार्ङ्गरवाद्यञ इत्यादि'। बिदस्यापत्यं बैदी, अनृष्यानन्तर्ये बिदादिभ्योञ्, गोत्रं च चरणैः सहेति जातिः, तत्रौत्सीत्यादौ चरितार्थमिमं ङीपं बाधित्वा जातिलक्षणो ङीष् प्राप्नोति, यदि तर्हि तस्य निबन्धनमस्ति तदेवाञ्ग्रहणमस्तु किमत्राञ् ग्रहणेन, न वा जात्यधिकारात्, जातेरिति हि तत्र वर्तते, अनधिकारे हि पुंयोगादाख्यायां ङीन् प्रसङ्गः, बैदस्य स्त्री बैदी। ऊरुद्वयसीत्यादौ प्रमाणे द्वयसज्दघ्नञ्मात्रचः। 'पञ्चतयीति'। संख्याया अवयवे तयप्. द्वयसज्वादिषु अनुबन्धोच्चारणं प्रातिपदिकानां ग्रहणं मा भूत् किमस्य द्वयसं किमस्य मात्रमिति । तयशब्दोपि तयतेः पचाद्यजन्तः सम्भवति । 'ठनादिनिवृत्त्यर्थमिति'। दण्डोस्या अस्ति, अत इनिठनौ,दण्डिका, काश्यादिभ्यष्ठञ्ञिठौ काशिकेत्यादौ मा भूदित्येवमर्थम् । 'तादृशीति'। त्यदादिषु दृशोनालोचने कञ्च, आ सर्वनाम्नः, कञो ञकारोच्चारणमातोनुपसर्गे कः गोदेत्यादौ माभूत् । 'इत्वरीति'। इण्नशजिसर्त्तिभ्यः क्वरप् । 'आढ्यङ्करणीति'। आढ्यसुभगेत्यादिना ख्युन् । 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामिति'। भाष्ये तु कञ्क्वरप्ख्युनित्येतावत्सूत्रं ख्युनः पाठो नार्ष इति

तस्याप्युपसंख्यानमेव कृतम् । 'स्त्रैणी पौंस्नीति' । स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् । 'शाक्तिकी याष्टिकीति' । प्रहरणाधिकारे शक्तियष्ट्योरीकक् । 'तरुणी तलुनीति' । एतयोरवयोर्थ ग्रहणं तरुणी सुरेति, वयसि तु वयसि प्रथमइत्येव सिद्धं, न सिद्ध्यति, गौरादिपाठान्ङीष् प्राप्नोति, तस्माद्द्वयस्य वयसि च ङीब्ङीषोर्विकल्पः, क्व चिद्गौरादिपाठात्सिद्धमिति पठ्यते तद्रूपमात्रसिद्ध्यभिप्रायं द्रष्टव्यं, स्वरार्थं तूपसंख्यानं कर्त्तव्यमेव ॥

"यञश्च" ॥ 'आपत्यग्रहणमिति' । अपत्ये भव आपत्यः, यञ,आपत्यादितिसूत्रं कर्तव्यमित्यर्थः । 'द्वैप्येति' । भवादावर्थे यञ् । 'योगविभाग उत्तरार्थ इति' । उत्तरत्र यञ एवानुवृत्तिर्यथा स्याट्टिड्ढादीनां मा भूदिति ॥

"प्राचां ष्फ तद्धितः" ॥ 'षकारो ङीषर्थ इति' । ननु च ष्फप्रत्ययेनैव स्त्रीत्वस्य द्योतितत्वान्ङीषा न भाव्यं तत्राह । 'प्रत्ययद्वयेनेति' । 'तद्धितग्रहणं प्रातिपदिकसंज्ञार्थमिति' । प्रातिपदिकसंज्ञा तु ङीषर्था । ननु च सिद्धोऽत्र ङीष् षित्करणसामर्थ्यात्, धातोस्तु त्रपादेः षित्त्वमङ्विधौ चरितार्थमिति त्रपा चमेत्यादौ ङीषभावः, तदेतत्साव्यासिकं तिष्ठतु तावत् । 'सर्वत्रग्रहणमित्यादि' । सर्वत्रग्रहणं तावद् उत्तरसूत्रे न कर्त्तव्यम्, आरम्भसामर्थ्यादेव प्राचामित्यस्य निवृत्तौ सर्वत्र सिद्धत्वादतस्तदिहापकृष्यते, तदयमर्थो भवति, सर्वत्र बाधकविषयेऽपि प्राचां मतेन यञन्तात्ष्फो भवतीति, एवं सप्तम्यर्थोऽपि समञ्जसो भवति । 'आवट्याच्चापं वक्ष्यतीति' । असति पुनरपकर्षे आवट्याच्चाबुदीचां मते सावकाशः परत्वात्ष्फं बाधेत सर्वत्रग्रहणात्ष्फ एव भवति, एवं च षाच्च यञ इति चाब्विषयेऽपि प्राचां ष्फ एव भवति शार्कराक्ष्यायणी पौतिमाष्यायणी गौकक्ष्यायणीति ॥

"सर्वत्र लोहितादिकतन्तेभ्यः" ॥ लोहितादीति पृथक्पदं लुप्तविभक्तिकं, पूर्वत्र च प्राचां मते ष्फो विहित इह तु सर्वत्र मते, कोऽर्थः सर्वेषां मत इत्यर्थः, तदाह । '[1]सर्वेषामाचार्याणां मत इति' । मतेनेति तृतीयान्तपाठे सूत्रे षष्ठ्यन्तान्वल् । 'स्वतन्त्रमिति' । योऽन्यस्यावयवो न भवति तत्स्व-

१ मुद्रितमूलपुस्तके सर्वेषामाचार्याणां मतइति नास्ति ।

तन्त्रं प्रातिपदिकं, कः पुनस्तावित्यत्राह । 'कपिशब्दात्पर इति' । लौहित्यायनीत्यादिर्गर्गाद्यन्तर्गणः, बभ्रुशब्दोऽपि तत्रैव पठ्यते यञ्, तु मधुबभ्र्वोर्ब्राह्मणकौशिकयोरित्यनेनैव भवति । 'कण्वास्त्वित्यादि' । कण्वशब्दात्पूर्वः कतशब्दात्तूत्तरः शकलशब्द इष्यते, कतशकलकण्वेत्येवमेषां संनिवेशः कार्य इत्यर्थः । किमेवं सति भवतीत्याह । 'पूर्वोत्तरावित्ति' । शकलशब्दोऽन्त आदिश्च यथाक्रमं ययोः पूर्वोत्तरयोर्गणयोस्तौ तथोक्तौ पूर्वो गणो लौहितादिः शकलशब्दान्तो भवति, उत्तरश्च गणः शकलशब्दादिर्भवतीत्यर्थः, सत्यमेवं भवति प्रयोजनं तु किमित्यत आह । 'ष्फाणाविति' । श्लोकं व्याचष्टे । 'प्रातिपदिकेष्वन्यथा पाठ इति' । कपिकत कुरुकत अनडुह कण्व शकलेत्येवं गर्गादिषु गणसन्निवेशः, । 'स एवं व्यवस्थापयितव्य इति' । 'एवमिति' श्लोकोक्तयानुपूर्व्येत्यर्थः । अनडुहकुरुकतशब्दावस्मात्स्थानादपकृष्यान्यत्र पाठ्यौ, शकलशब्दस्तु कतकण्वयोर्मध्ये पठितव्य इति यावत् । नन्वेवं गणद्वयादपि प्रच्युतः शकलशब्दः ष्फाणौ द्वावपि न प्रतिपद्येत, तत्राह । 'कतन्तेभ्य इति' । 'बहुव्रीहितत् पुरुषयोरेकशेष इति' । कतस्यान्तः समीपभूतः कतन्त इति तत्पुरुषेण शकलशब्द उच्यते, शकन्ध्वादित्वान्निपातनाद्वा पररूपं, तथा कतोऽन्तो येषां तानि कतन्तानीति बहुव्रीहिः, तत्र बहुव्रीहितत्पुरुषयोः सह विवक्षायां बहुव्रीहिः शिष्यते स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यतइति वचनात् । 'तथेत्यादि' । कण्वादिभ्य इत्यपि बहुव्रहितत्पुरुषयोरेकशेष इत्यर्थः । कण्वस्यादिः समीपभूतः कण्वादिः शकलशब्दः, कण्व आदिर्येषां तानि कण्वादीनि ततः पूर्ववदेकशेषः, तत्र, बहुव्रीहितत्पुरुषयोर्मध्ये तत्पुरुषवृत्त्या, तत्पुरुषसमासेन । 'मध्यवर्त्तीति' । गणद्वयस्य । 'प्रत्ययद्वयमपीति' । ष्फाणावित्यर्थः । 'शाकलाइति' । आपत्यस्येति यलोपः । अपर आह । पूर्वोत्तरौ तदन्तादी याह्याविति शेषः, पूर्वो गणस्तदन्तोग्राह्यः, सर्वत्र लौहितादिशकलान्तेभ्य इति, उत्तरो गणस्तदादिर्ग्राह्यः शकलादिभ्यो गोत्रइति । एवं ष्फाणौ प्रयोजनमिति ॥

"कौरव्यमाण्डूकाभ्यां च" ॥ 'कौरव्यमाण्डूकयोरित्यादि'। अस्मिन्सूत्रे आसुरेरपि ग्रहणं कर्त्तव्यम् । आसुरिकौरव्यमाण्डूकेभ्यश्चेति वक्तव्यमित्यर्थः । 'आसुरायणीति'। ष्फस्य तद्धितत्वाद्यस्येति चेति इञो लोपः, तदिदं तद्धितग्रहणमेव लिङ्गं भवत्यासुरेरपि ष्फ इति, यञादिष्वकारान्तेषु सवर्णदीर्घत्वेनापि रूपं सिद्धम् । 'शैषिकेषु चार्थेष्विति'। आसुरीप्रसङ्गादिदमत्रोक्तम् । अन्यथा द्विरासुरिग्रहणं कर्त्तव्यं स्यात् । 'आसुरीय इति'। असुरस्यापत्यमासुरिः, तेन प्रोक्त आसुरीयः कल्प इति ॥

"वयसि प्रथमे" ॥ 'श्रुत्येति'। श्रवणमात्रेण प्रकरणाद्यनपेक्षयेत्यर्थः । 'कुमारीति'। प्रथमवयोवचन एवायं न पुंयोगाभावहेतुकः, पुंस्यपि प्रयोगात्, यस्तु वृद्धायां प्रयोगो वृद्धकुमारीति, स पुंयोगाभावात्साधर्म्याद्बोद्धव्यः । 'वयस्यचरमइति'। चरममन्त्यमचरमे अनन्त्ये, इह केचिच्चत्वारि वयांसीच्छन्ति कौमारं यौवनं मध्यत्वं वृद्धत्वमिति, यथाहुः ॥

प्रथमे वयसि नाधीतं द्वितीये नार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥

इति । अन्ये तु त्रीणि ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थविरीभावे न स्त्री स्वातन्त्र्यमर्हति ॥

इति । अन्ये तु बालत्वमध्यत्ववृद्धत्वानि त्रीणि ।

आषोडशाद्भवेद्बालो यावत् क्षीरान्नवर्त्तकः ।
मध्यमः सप्ततिर्यावत्परतो वृद्ध उच्यते ॥

एषु सर्वेषु दर्शनेषु यौवनं द्वितीयं वयो भवति, यौवनवचनौ च वधूटचिरण्टशब्दौ, अतो न प्राप्नोति तदाह । 'द्वितीयवयोवचनावेताविति'। यदा तु द्वे एव वयसी उपचयापचयलक्षणे तदैतच्च वक्तव्यं, यौवनस्यापि प्रथमवयोरूपत्वात् । श्रुत्या वर्त्तत इति यदुक्तं तस्य व्यावर्त्यं दर्शयति । 'उत्तानशया लोहितपादिकेति नैता वयःश्रुतय इति'।

श्रुत्या श्रवणमात्रेण नैते वयः प्रतिपादयन्तीत्यर्थः । इह तावदुत्तानशयेति, क्रियाकारकसम्बन्धमात्रं प्रतीयते, तदेव च प्रवृत्तिनिमित्तम् । उत्तानादिषु कर्तृष्विति शेरतेरच् प्रत्ययः, सर्वत्र च कदा चिदुत्ताना शेते उच्यते चेदमुत्तानशयेति तत्र नियमो गम्यते, अन्यथा स्वप्तुमसामर्थ्यादुत्तानैव शेतइति, एवमपि सन्देहः, बाला वृद्धेति, तस्मादुत्तानैव शेतइति नियमे वृद्धत्वाभावे च प्रकरणादिना ऽवसिते बाल्यं गम्यते, लोहितपादिकेत्यत्रापि अन्यपदार्थमात्रं श्रुत्या प्रतीयते । प्रकरणादिना स्वभावत एवास्या रक्तौ पादौ नालक्तकादिनेति प्रतीतौ सत्यां बालेति गम्यते, इतिशब्दः प्रकारे, एवंप्रकारा न वयःश्रुतय इत्यर्थः । अत एव बहुवचनं, तेन द्विवर्षत्यादावपि न भवति, अत्रापि प्रकरणादिना वयो गम्यते, परिमाणमात्रं तुशब्दार्थः, शालादावपि प्रयोगात्, द्वे वर्षे भूता इति ठञो वर्षाल्लुक्च, चित्तवति नित्यमिति लुक् ॥

"अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि" ॥ 'तद्धितलुकि सतीति' । परसप्तमी त्वेषा नोपपद्यते, अभावरूपेण लुका पौर्वापर्यासम्भवात् । 'सर्वतो मानं परिमाणमिति' । परिमाणं तु सर्वत इत्यस्य ग्रहणं न परिच्छेदकमात्रस्येत्यर्थः । 'पञ्चभिरश्वैः क्रीतेति' । तद्धितार्थे द्विगुः, आर्हीयष्ठक् । 'कालः सङ्ख्या च न परिमाणमिति' । नहि ताभ्यां सर्वत आरोहतः परिणाहतश्च मीयते, एवं च कालः सङ्ख्या चेति प्रदर्शनार्थत्वात्प्रमाणमपि परिमाणं न भवति, तथा चोत्तरसूत्रे काण्डशब्दस्यापरिमाणवाचित्वादिति वक्ष्यति, प्रमाणविशेषः काण्डमिति च, तेन द्वौ शमौ प्रमाणमस्या इति मात्रचः प्रमाणे लो द्विगोर्नित्यमिति लुकि द्विशमा त्रिशमेति भवति, यद्येवमुन्मानमपि परिणं न स्यात्, कश्चिदाह,दृष्टमेवैतदुन्मानमपि नैवात्र परिमाणग्रहणेन गृह्यते द्वाभ्यां निष्काभ्यां क्रीता प्राग्वतीयस्य ठञो द्वित्रिपूर्वान्निष्कादिति लुक्, द्विनिष्का त्रिनिष्केति भवतीति । अपर आह, बिस्तकम्बल्यग्रहणं ज्ञापकमुन्मानमप्यत्र परिमाणग्रहणेन गृह्यतइति तयोरुन्मानविशेषत्वात्, सुवर्णबिस्तो हेम्नोऽक्षे, कम्बलाच्च सञ्ज्ञायां कम्बल्यमूर्णापलशतमिति । न्यासकारस्तु द्वौ

बिस्तौ परिमाणमस्येति विगृह्णन् बिस्तं परिपरिमाणं मन्यते । 'द्विबस्तेति' । कृतव्युत्पादनमेतत् । 'द्विशता त्रिशतेति' । द्वाभ्यां शताभ्यां क्रीतेति पणपादमाषशताद्यदिति नित्ये यति प्राप्ते शाणाद्वेत्यत्र शताच्चेति वक्तव्यमिति वचनात्पक्षे सङ्ख्याया अतिशदन्तायाः कन्निति कन्, तस्याध्यर्द्धपूर्वेति लुक् । 'द्विबिस्तेति' । परिमाणत्वे ठञो लुक्, उन्मानत्वे ठकः । 'द्व्याचितेति' । आचितो दशभाराः स्युः, द्वावाचितौ पचति, आढकाचितपात्रात्खोन्यतरस्यां, द्विगोष्ठंश्चेति पक्षे ठन्खौ, ताभ्यां मुक्ते प्राग्वतीयष्ठञ्, तस्य पूर्ववल्लुक् । 'द्विकम्बल्येति' । क्रीतार्थे ठञो लुक्, द्व्याढकी द्व्याचितेत्यनेन तुल्यम् । 'पञ्चाश्वीति' । समाहारे द्विगुः । इमौ द्वौ प्रतिषेधावुच्येते तत्रैकः शक्यो वक्तुं, कथम्, एवं वक्ष्यामि परिमाणात्तद्धितलुकीति, तन्नियमार्थं भविष्यति, परिमाणान्तादेव तद्धितलुकि ङीब् भवतीति, तेन द्व्याढकीत्यादौ च भविष्यति, पञ्चाश्वेत्यादौ च न भविष्यति, ततो बिस्ताचितकम्बल्येभ्यो नेति, नैवं शक्यं विपरीतोपि नियमः सम्भाव्येत परिमाणान्तात्तद्धितलुक्येवेति, तत्र को दोषः, परिमाणात्समाहारे न स्यात् द्विकुडवी पञ्चाढकी, पञ्चाश्वेत्यादौ तु व्यावर्त्तकाभावात्स्यादेव ङीप्, तस्माद्यथान्यासमेवास्तु ॥

"काण्डान्तात्क्षेत्रे" ॥ मानदण्डः काण्डं, द्विगोरित्यधिकारादेव पूर्वसूत्रवत्तदन्तविधौ सिद्धे किमर्थमन्तग्रहणम्, अक्रियमाणेन्तग्रहणे क्षेत्रइत्येतत् काण्डस्यैव विशेषणं विज्ञायेत क्षेत्रे यः काण्डशब्दस्तदन्ताद्द्विगोरिति श्रुतत्वात् न तदन्तस्य, यथोत्तरसूत्रे प्रमाणे यः पुरुषशब्दस्तदन्तादिति, ततश्चेह प्रसज्येत द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेति, इह तु न स्यात् द्वे काण्डे प्रमाणमस्याः द्विकाण्डा क्षेत्रभक्तिरिति, अन्तग्रहणे तु सति तदन्तस्यैव विशेषणं क्षेत्रं न काण्डस्य बहुव्रीहौ गुणभूतत्वात् ॥

"पुरुषात् प्रमाणेऽन्यतरस्याम्" ॥ 'प्रमाणे यः पुरुषशब्द इति' । पञ्चारत्निः पुरुष इति शुल्बविदः, तत्र द्वौ पुरुषौ प्रमाणमस्या इति

वाक्ये प्रमाणशब्देन सम्बन्धात् जातिवचनोऽपि पुरुषशब्दः प्रमाणे वर्त्तते, वृत्तौ तु तत्स्वभावादेव प्रमाणे वृत्तिर्द्रष्टव्या ॥

"बहुव्रीहेरूधसो ङीष्" ॥ 'ऊधसोऽनङिति समासान्ते कृत इति'। स[1]मासार्थादुत्तरपदाद्भवन्समासान्तः पूर्वं भवति ततः स्त्रीप्रत्ययः। 'अनो बहुव्रीहेरिति'। उपलक्षणमेतत्। अनो बहुव्रीहेः, डाबुभाभ्यामन्यतरस्यामिति चेत्यर्थः। 'कुण्डोध्नीति'। कुण्डमिव ऊधोऽस्या इति विग्रहः, ङीष्यल्लोपोऽन इत्यकारलोपः। 'प्राप्तोधा इति'। प्राप्तापन्ने च द्वितीययेति तत्पुरुषः, अत्वसन्तस्य चेति दीर्घः,। 'अन उपधालोपिन इत्यादि'। असत्यां पुनरनुवृत्तौ मध्येपवादन्यायेन डाप्प्रतिषेधयोरेवायं ङीष् बाधकः स्यात् नान उपधालोपिन इत्यस्य ङीपः। ननु च डाबुभाभ्यामित्यत्रानेनान्यतरस्यांग्रहणेन ङीबपि प्राप्यते, अन उपधालोपिन इत्ययं तु नियम इत्यवादीति कुतोऽयमनिष्टप्रसङ्गः। सत्यम्। अन उपधालोपिन इत्यस्य तु विधित्वाभ्युपगमेनैतदुक्तम्। इह बहुव्रीहेरूधसो ङीष् नश्चेति वक्तव्यम्, ऊधःशब्दान्ताद्बहुव्रीहेः स्त्रियां ङीष् भवति तत्सन्नियोगेन चान्त्यस्य नकारः, समासान्तप्रकरणे तु ऊधसोऽनङिति न वक्तव्यं, धनुषोऽनङित्येव पठितव्यं, कः पुनरेवं सति गुणो भवति, अन उपधालोपिन इत्यत्रास्यानुवृत्तिर्नाश्रयितव्या भवति, अपि च महोधाः पर्जन्यः कुण्डोध्नी धैनुकमिति सिद्धं भवति अन्यथा ऊधसोऽनङित्यत्र स्त्रियामिति वक्तव्यं स्यादत आह। 'समासान्तश्च स्त्रियामेवेति'। इष्यतइत्यनुषङ्गः, तत्रैव स्त्रियामिति वक्तव्यमित्यर्थः, इतरथा हि कब्विधिप्रसङ्गः, कपोऽवकाशः ऽन्यो बहुव्रीहिः, अयवकः, अव्रीहिकः, ङीषस्तु विभाषा कप् यदा न कप् सोऽवकाशः, कप्प्रसङ्ग उभयं प्राप्नोति परत्वात्कप् स्यात् ॥

"संख्याव्ययादेर्ङीप्" ॥ 'पूर्वेण ङीषि प्राप्ते ङीब् विधीयतइति'। यत्र पूर्वपदप्रकृतिस्वरस्तत्र बहुव्रीहौ, अन्तोदात्ते तु बहुव्रीहौ ङीम्ङीषोर्नास्ति विशेषः, द्व्यूध्नी, नञ्सुभ्यामित्यन्तोदात्तत्वं तत्राल्लोपे ङीबप्यु-

[1] सामर्थ्यादिति २ पु० पाठः।

दात्तनिवृत्तिस्वरेणोदात्तो भवति । 'द्व्यूधीत्यादि' । द्वे ऊधसी यस्याः अतिगतमूधोस्या निर्गतमूधोस्या इति विग्रहः । 'आदिग्रहणं किमिति' । संख्याव्ययाभ्यामुत्तरो य ऊधःशब्दस्तदन्ताद्बहुव्रीहेरिति विज्ञायमाने द्व्यूधीत्यादि सिद्धमिति प्रश्नः । 'द्विविधोध्नीति' । असत्यादिग्रहणे संख्याव्ययाभ्यामिति पञ्चमीनिर्देशात्ताभ्यामनन्तरो य ऊधःशब्दस्तदन्तादेव स्यात्पदान्तरव्यवाये तु न स्यादिति भावः ॥

"दामहायनान्ताच्च" ॥ स्वरितेनाधिकार इत्यत्र द्वौ पक्षौ शब्दाधिकारोऽर्थाधिकारश्चेति, तत्राद्ये पक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं स एवानुवर्तते, द्वितीये तु द्वन्द्वार्थस्यैकत्वात्तस्यैवानुवृत्तिः स्याद्वा न वा, तदिहाद्यं पक्षमाश्रित्याह । 'संख्याग्रहणमनुवर्तते नाव्ययग्रहणमिति' । 'हायनो वयसि स्मृत इति' । प्रकृतिरिति शेषः । हायनान्तो बहुव्रीहिर्वयसि गम्यमाने ङीपः प्रकृतिराचार्यैः स्मृत इत्यर्थः । 'त्रिहायना शालेति' । प्राणिधर्मो वयः शालाया न सम्भवति । अथ सूत्रोदारहणवत्त्रिचतुर्भ्यां हायनस्येत्यौपसंख्यानिकं णत्वं कस्मान्न भवतीत्यत आह । 'णत्वं चेत्यादि' । बहुव्रीह्यधिकारादेव तदन्तविधिसिद्धेरन्तग्रहणं विस्पष्टार्थम् ॥

"अन उपधालोपिनोऽन्यतरस्याम्" ॥ इति परत उपधालोपो यस्य सम्भवति स उपधालोपी । 'ननु सिद्धा एवेत्यादि' । एतच्च डाबुभाभ्यामित्यत्रैव व्याख्यातम् । 'अनुपधालोपिनो ङीप्प्रतिषेधार्थं वचनमिति' । अनो बहुव्रीहेर्यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेत्येवं नियमार्थमित्यर्थः । अस्य च नियमस्यानुपधालोपिनो ङीब्निवृत्तिः फलमिति फलतः प्रतिषेधवाचो युक्तिः । 'बहुराज्ञे इति' । औङ आप इति शी भावः, द्विवचननिर्देशो डापोऽभिव्यक्तये, एकवचने डाप्प्रतिषेधयो रूपस्य तुल्यत्वात् । 'बहुमत्स्येति' । सूर्यतिष्यागस्त्येत्यादिना उपधालोपविधानादुपधालोप्येष बहुव्रीहिः । 'सुपर्वेति' । न संयोगाद्वमन्तादिति निषेधन्नायमुपधालोपी ॥

"नित्यं संज्ञाछन्दसोः" ॥ ननु छन्दसि दृष्टमेवानुविधीयते नापूर्वमुत्प्रेक्ष्यते, तत्र च ङीबेव चेद्दृश्यते तस्य च लक्षणमस्ति क इदानीं तदभावं प्रयोक्तुं प्रभवति, संज्ञाशब्दा अप्यनादिप्रयुक्ता नियतानुपूर्वीकास्तत्रापि ङीबेव चायं दृश्यते न तदभावः शक्यते कर्तुं, किमर्थमिदं सूत्रं, संज्ञाछन्दसोरिति पदमुत्तरार्थं वक्तव्यं, नित्यग्रहणमुत्तरत्र विकल्पनिवृत्त्यर्थम् ॥

"केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च" ॥ 'केवलेति भाषायामिति'। असंज्ञाविषयइति भावः। 'मामकीति'। ममेयमिति युष्मदस्मदोरन्यतरस्यां खञ्चेत्यण्, तवकममकावेकवचनइति ममकादेशः, तत्राणन्तत्वाट्टिड्ढाणञित्येव सिद्धे नियमार्थं मामकग्रहणं संज्ञाछन्दसोरेव ङीम्नान्यत्रेति। 'मामिकेति'। टापि मामकनरकयोरुपसंख्यानमितीत्वम्। 'भागधेयीति'। भागशब्दात्पुल्लिङ्गात्स्वार्थे धेयप्रत्ययः, स्वार्थिकाश्च क्वचिदतिवर्त्तन्ते प्रकृतितो लिङ्गमिति स्त्रीलिङ्गता। 'पापेति'। अभेदोपचारात्तद्गुति वर्त्तमानः पापशब्दोऽभिधेयवल्लिङ्गः, अवरीत्यत्र द्वितीयो वर्णो दन्त्योष्ठ्यो न पवर्ग्यः। 'आर्यया कृतेति'। प्राक् सुबुत्पत्तेः समासे ऽकारान्तत्वम्। 'भेषजीति'। भिषज इयमित्यणि आदिवृद्धेरभावो ऽस्मादेव निपातनादेकारः, एवं च भेषजग्रहणमपि नियमार्थम् ॥

"रात्रेश्चाजसौ" ॥ 'कथमित्यादि'। दीर्घान्ताज्जसि दीर्घाज्जसि चेति पूर्वसवर्णदीर्घप्रतिषेधाद्यणादेशे रात्र्य इति प्रयोग उपपद्यते, ह्रस्वान्तस्य तु जसि चेति गुणे रात्रय इति रूपं स्यात्, दीर्घान्तश्च रात्रिशब्दः संज्ञाछन्दसोरपि जसि न सम्भवति, अजसाविति प्रतिषेधात् किंपुनर्भाषायामिति प्रश्नः। 'ङीषयमित्यादि'। बह्वादिषु रात्रिशब्दो न पठ्यतइति चेत् तत्राह। 'तत्र हीति'। कृत इकारः कृदिकारः, तदन्तान्ङीष् भवति, दृजारिभ्यां विः, दर्विः, दर्वी, यस्तु क्तिन्संबन्धी तदन्तान्न भवति कृतिः हृतिः। 'सर्वत इति'। कृदिकारादकृदिकाराच्चेत्यर्थः। यस्तु क्तिन्नर्थस्तस्मान्न भवति आक्रोशेनञ्यनिः, अकरणिरहरणिः। रात्रिशब्दोयं राशदिभ्यां त्रिबिति व्युत्पत्तिपक्षे कृदिकारान्तः, अव्युत्पत्तिपक्षे सर्वतोक्तिन्नर्था-

दिति ङीष्, सूत्रं तु ङीबर्थं रात्री व्यख्यत्, रात्रीभिरस्माग्रहभिर्दशस्येत्, अत्राद्युदात्तत्वं भवति ॥

"अन्तर्वत्यतिवतोर्नुक्" ॥ 'निपातनसामर्थ्याच्चेति'। कार्यान्तरवदर्थविशेषवृत्तिरपि लभ्यतइति भावः। कस्मिन्विशेषइत्यत्राह। 'अन्तर्वत्यतिवदिति गर्भभर्तृसंयोगइति'। अन्तर्वदिति गर्भसंयोगे गर्भिण्यामित्यर्थः। पतिवदिति भर्तृसंयोगे भर्तृमत्यामित्यर्थः, जीवपत्यामिति यावत्। 'इह न भवति अन्तरस्यां शालायां विद्यतइति'। अस्मिन्विषये एवं विधं वाक्यमेव भवति न तु मतुबादीत्यर्थः। क्वचिदन्तर्वती शालेति पठ्यते तदयुक्तम्, अत्र मतुबभावस्योक्तत्वात्। 'पतिमती पृथिवीति'। स्वामिपर्यायोऽत्र पतिशब्दः। 'मतुन्निपात्यतइति'। अधिकरणप्रधानस्यान्तःशब्दस्यास्तिना ऽसामानाधिकरण्याच्च प्राप्नोतीति कृत्वा। 'वत्वं तु सिद्धमिति'। मादुपधायाश्चेत्यनेनादुपधत्वात्। 'अन्तर्वत्यतिवतोरित्यादि'। एतयोः शब्दयोर्निपातनान्मतुब्वत्वे भवतः, नुक् विधीयते यथाक्रमं गर्भिण्यां जीवपत्यां चाभिधेयायां, जीवः पतिरस्याः जीवपतिः, विभाषा सपूर्वस्येति ङीम्नकारयोरभावपक्षे रूपं, तत्र ङिति ह्रस्वश्चेति नदीसंज्ञापक्षे ह्रदुन्नामिति ङेरामादेशः, जीवत्पत्यामिति भवति। वा तु छन्दसि नुग्विधिः, छन्दसि विषये तु विकल्पेन नुग्विधिर्भवति, अन्तर्वती अन्तर्वत्नी, पुंस्यपि दृश्यते सोऽन्तर्वानभवत् ॥

"पत्युर्नो यज्ञसंयोगे" ॥ यद्यत्र यज्ञशब्देन पतिशब्दस्य संबन्धो यज्ञसंयोग इत्यर्थः स्यात् यज्ञस्य पतिरियं ब्राह्मणीत्यत्रैव स्यात्, अस्ति ह्यत्रार्थद्वारकः संबन्धः स्वरूपेण चानन्तर्यलक्षणः, अथ यज्ञवाचिना संयोगो यज्ञसंयोगः तथापि पत्नीसंयाज इत्यादावेव स्यान्न त्वियमस्य पत्नीत्यादौ, तस्माद्यज्ञशब्दस्य योऽर्थस्तेन पतिशब्दार्थस्य संबन्धो यज्ञसंयोग इत्याह। 'यज्ञेन संयोगइति'। अन्यथा यज्ञशब्देनेत्यवक्ष्यत्। एवं च पतिशब्दार्थस्येत्यप्युक्तं भवति, नहि पतिशब्दस्य यज्ञेनार्थेन वाच्यवाचकभावः संबन्धान्तरं वा सम्भवति। 'तत्सा-

धनत्वादिति'। देवतोद्देशेन स्वद्रव्यत्यागो यागः, मध्यकं च दम्पत्योर्धनं कुटुम्बिनौ धनस्येशाते जायापत्योर्न विभागो विद्यतइति हि स्मर्यते, ततश्च त्यागे भार्याया अप्यनुमतिरपेक्ष्यतइति, तत्रास्या अनुमत्या साधनत्वं, पत्न्यवेक्षितमाज्यं भवतीत्यादौ च साक्षादेव कर्तृत्वं मदभिलषितसाधनतया मदर्थं कर्मत्येवं रूपोधिकारलक्षणसंबन्धोस्तीत्याह। 'फलग्रहीतृत्वादिति'। कर्तृत्वमात्रं विवक्षितं न स्त्रीत्वमिति ङीप्न कृतः, कर्तरि चेति समासप्रतिषेधः कर्मणि षष्ठ्या एव न शेषषष्ठ्या इति तस्यानेनोपपन्नः समासः, फलगृहीतत्वादिति पाठे गृहीतं फलं ययेति बहुव्रीहौ फलशब्दस्य जातिवचनत्वाद् निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनमिति गृहीतशब्दस्य परनिपातः। 'कथमित्यादि'। शूद्रस्यैव यज्ञे ऽनधिकृतत्वाद्यज्ञेनासंयोगात्कथं तद्भार्याया यज्ञसंयोग इति प्रश्नः। 'उपमानादिति'। अग्निसाक्षिकं यत्पाणिग्रहणं तद्वृषलादीनामप्यस्ति तदाश्रयमुपमानम्॥

"विभाषा सपूर्वस्य"॥ सहशब्दोयमस्ति तुल्ययोगे यथा सशिष्यो गुरुरागत इति, अस्ति च विद्यमानवचनः, यथा सहैव दशभिः पुत्रैर्भारं वहति गर्दभीति, इत्थम्भूतलक्षणे तृतीया, विद्यमानेष्वेव पुत्रेष्वित्यर्थः, पूर्वशब्दोप्यस्ति व्यवस्थावचनः, पूर्वं मथुरायाः पाटलिपुत्रमिति, अस्ति चावयवशब्दः पूर्वं कायस्येति, तत्र तुल्ययोगे सहशब्दः पूर्वशब्दश्च व्यवस्थायामिति पक्षे ग्रामस्य पतिरियमिति वाक्ये प्राप्नोति, पूर्वस्य चापि प्राप्नोति, विद्यमानवचनसहशब्दः पूर्वशब्दश्च व्यवस्थावचन इति पक्षे पूर्वस्य माभूद्वाक्ये तु स्यादेव, अवयववचनः पूर्वशब्दः तुल्ययोगे सहशब्द इति पक्षे वाक्येपि स्यात्, तत्रापि पतिशब्दस्य पूर्वावयवः पकारस्तस्यापि स्यात्तस्माद्विद्यमानवचनः सहशब्दः पूर्वशब्दश्चावयववचन इति पक्ष आश्रीयते, तेन सहेत्यत्र तुल्ययोगइति विशेषणस्य प्रायिकत्वात्समासः, एवं च स्थिते सपूर्वस्येति पतिशब्दविशेषणं नोपपद्यते कथं पकारेण सपूर्वत्वमव्यभिचाराद्विशेषणं शब्दान्तरं तु पतिशब्दस्यावयवो न सम्भवति ततश्च सामर्थ्यात्प्रातिपदिकं पतिश-

ब्देन विशेष्यते न तु तेन। 'पतिशब्द इति'। पतिशब्देन तदन्तस्य ग्रहणम्, अनुपसर्जनग्रहणेनापि तदन्तं प्रातिपदिकमेव विशेष्यते न विशेषणभूतः पतिशब्दः, अन्यथा बहुव्रीहौ न स्यात् जीवः पतिरस्याः जीवपतिर्जीवपत्नीति, षष्ठीसमासएव तु स्यादाशापतिराशापत्नीति, तदेतत् सर्वमालोच्याह। 'पतिशब्दान्तस्य सपूर्वस्यानुपसर्जस्येति'। 'ग्रामस्य पतिरियमिति'। असति सपूर्वग्रहणे तदन्तविधेरभावादत्रैव स्यात्, अथाप्यमहत्पूर्वेति ज्ञापकात्तदन्तेपि भवेत्केवलस्यापि स्यादेव तस्मात्सपूर्वस्येति वक्तव्यम्॥

"नित्यं सपत्न्यादिषु"॥ यानि समानादिपूर्वपदानि पत्यन्तानि प्रातिपदिकानि ते सपत्न्यादयः, कुत एतत्, समानादीनामेव गणे पाठात्, सपत्न्यादीनां चापाठात्, यद्येवं समानादिष्विति वक्तव्यं पूर्वग्रहणानुवृत्तेः, समादिषु पूर्वेष्ववयवेषु सत्स्वित्यर्थः, सत्यं, समानस्य सभावार्थं तु सपत्न्यादिष्वित्युक्तं, क्वचित्तूदाहरणानन्तरं समानादिष्विति वक्तव्यं सभावार्थमेवमुक्तमिति वृत्तावेव पठ्यते, अपर आह। समुदायोच्चारणसामर्थ्यात्सपत्नीभार्य इत्यत्र पुंवद्भावो न भवतीति नात्राप्तोक्तिरस्ति। किं च सभावार्थं समुदायोच्चारणमिदमिति समार्थ्यमपि चिन्त्यं, तथा हे सपत्नि निःसपत्निः सपत्न्यृच्छति सपत्न्या सपत्न्यै इत्यादावपि ह्रस्वयणादेशौ न स्यातां तस्मात्सभावार्थमेव सपत्न्यादिष्वित्युक्तम्। 'नित्यग्रहणं विस्पष्टार्थमिति'। आरम्भसामर्थ्यादेव नित्यं भविष्यतीति भावः। 'दासाच्छन्दसीति'। दासपत्नीरहिगोपाः।

"पूतक्रतोरै च"॥ यद्ययमैकारः प्रत्ययः स्यादुत्तरसूत्रउदात्तवचनमनर्थकं स्यात् प्रत्ययत्वादेव सिद्धेः, तस्मादादेशोयं विज्ञायतइत्याह। 'ऐकारश्चान्तादेश इति'। 'त्रय एते योगा इति'। पुंयोगादाख्यायामित्यत्रानुवर्त्तयितव्या इत्यर्थः। इह करणसामर्थ्याच्च ङीप्सहिता एवानुवर्त्तन्ते, तेन यदा पुंयोगात्स्त्रियां पूतक्रत्वादयो वर्तन्ते तदा ङीषं बाधित्वा ऐकारादिसहितो ङीब् भवति॥

"वृषाकप्यग्निकुसितकुसीदानामुदात्तः" ॥ 'वृषाकपिशब्दो मध्योदात्त इति'। लघावन्ते द्वयोश्च बह्वषो गुरुरिति वचनात्। अस्यार्थः। अन्ते एकस्मिन्लघौ द्वयोश्च लघ्वोः परतो बह्वषः शब्दस्य गुरुरुदात्तो भवतीति, बह्वष इति, बह्वच इत्यर्थः। योस्माकं चकारेण प्रत्याहारः सोन्येषां षकारेण। 'अग्न्यादिषु पुनर्रिति'। फिषित्यनेनाग्न्यादीनामन्तोदात्तत्वं, फिषिति प्रातिपदिकस्यान्याचार्यसञ्ज्ञा, ये तु कुसीदेति मध्ये गुरुमधीयते तेषां लघावन्तइति मध्योदात्तप्रसङ्गः ॥

"मनोरौ वा" ॥ 'ऐकारश्चोदात्त इति'। औकारस्त्वनुदात्त एव। 'वाग्रहणेन द्वावपि विकल्प्येते इति'। यदा च द्वावपि न भवतस्तदा ङीबपि न भवति सन्नियोगशिष्टत्वात्। 'मनुशब्द आद्युदात्त इति'। मन ज्ञाने, भृमृशीतृचरित्सरितनिधनिमिमश्जिभ्य उरिति वर्त्तमाने धान्ये नित्दिति च, शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेति उप्रत्ययः, नित्त्वादाद्युदात्तत्वं, भरुः, मरुः, शयुः, तरुः, चरुः, त्सरुः, तनुः, धनुः, मयुः, मद्गुः, न्यङ्क्वादिपाठात्कुत्वं, प्रथमस्योदाहरणानि। शरुः, स्वरुः, स्नेहुः, त्रपु, असुः, वसुः, हनुः, क्लेदुः, बन्धुः, मनुरितिद्वितीयस्य ॥

"वर्णादनुदात्तात्तोपधात्तो नः" ॥ 'वर्णानां तणतिनितन्तानामिति'। तशब्दान्तानामेतादीनां णशब्दान्तानां शोणादीनां तिशब्दान्तानां शितिप्रभृतीनां निशब्दान्तानां पृश्निप्रभृतीनां तकारान्तानां च पृषत्प्रभृतीनां वर्णवाचिनामादिरुदात्तो भवतीत्यर्थः। 'गतिस्वरेणेति'। गतिरनन्तर इत्यनेन। 'घृतादित्वादिति'। घृतादीनीति फिषि पठ्यते। 'पिशङ्गादिति'। लघावन्तइति मध्योदात्तत्वादुत्तरसूत्रेण ङीषि प्राप्ते ङीब्विधीयते। 'असितपलितयोरिति'। वर्णानां तणतिनितन्तानामित्याद्युदात्तावेतौ। 'छन्दसीत्यादि'। तो न इति नकारे प्राप्ते क्नशब्दं ङीप्सहितमिच्छन्ति। 'भाषायामपीष्यतइति'। भाष्ये तु नैतत्प्रदर्शितम्, अवदातशब्दो न वर्णवाची किं तर्हि विशुद्धवाची, एवं ह्याह।

त्रीणि यस्यावदातानि विद्यायोनिश्च कर्म च ।
एतत्त्रयं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् ॥

इति । तेनावदातेत्यत्र ङीन्न भवति ।

"अन्यतो ङीष्" ॥ सारङ्गकल्माषशब्दौ लघावन्तइति मध्योदात्तौ, शप आक्रोशे, कल तृपः, शपेर्बश्चेति कलप्रत्ययः, पकारस्य बकारः प्रत्ययस्वरेण मध्योदात्तः शबलशब्दः, खड्गाशब्दो नित्स्वरेणाद्युदात्तः, खड्ग काङ्क्षे, अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्, कृष्णशब्दोन्तोदात्तः, कृषेर्वर्णइति नक् प्रत्ययः, इलचि प्रकृते कपेश्चेति उणादिषु सूत्रं, कपिः सौत्रो धातुः, कपिलशब्दोन्तोदात्तः ॥

"षिद्गौरादिभ्यश्च" ॥ 'षिद्भ्यः प्रातिपदिकेभ्य इति' । ष्वुनादेः प्रत्ययस्य षित्त्वमवयवे ऽचरितार्थं समुदायस्य विशेषकं भवतीति प्रातिपदिकानां षित्त्वं, धातोस्तु त्रपादेः षित्त्वमङ्विधौ चरितार्थमिति न तेन प्रातिपदिकं षिद्भवति । 'रजकीति' । शिल्पिनि ष्वुनित्यत्र ष्वुत्यादितं, गौरादिषु गौरशब्दस्य वर्णवाचिनोप्यन्तोदात्तत्वात्पाठः, मत्स्यादीनां योपधानामयोपधादिति जातिलक्षणस्य ङीषः प्रतिषेधात्पाठः, अन्येषां जातिशब्दानां स्त्रीविषयार्थः पाठः, श्वन्तवत्त्वित्येतयोर्ङीपि प्राप्ते । 'अनडुही, अनड्वाहीति' । अनकारान्तत्वादप्राप्ते ङीषि सप्रत्यययोः पाठः, ङीषि परतो विकल्पेनान्यथा स्यात् । 'एषणकरण इति' । करणसाधन एषणशब्दो ङीषमुत्पादयति, इष्यतेनयेत्येषणी, अधिकरणे ल्युडिति टित्त्वान् ङीबेव भवति, अन्येषामपि ल्युडन्तानां ङीपि प्राप्ते पाठः, मेधशब्दस्याजातिवाचित्वाद् गौतमस्य शार्ङ्गरवादित्वान् ङीनि प्राप्ते वचनात्पक्षे सोपि भवति, आयस्थूणशब्दः शिवाद्यणन्तः, भौरिक्यादय इञन्तास्तेषामणिञोरिति ष्यङ्प्राप्तौ, आपिच्छिका नाम राजानः, जनपदशब्दात्क्षत्रियादञ्, तस्यातश्चेति लुकि कृते प्रत्ययलक्षणेन ङीप्प्राप्तौ, अग्रे हायनमस्य अग्रहायनः, प्रज्ञादित्वात्स्वार्थिकोण्, अस्मादेव निपातनाण्णत्वम्, आग्रहायणः, ङीपि प्राप्ते पाठः, के चिदाग्रहायणीतीकारान्तं पठन्ति, तस्य प्रयोजनमाग्रहायणीभार्य इत्यादौ पुंवद्भावो

मा भूदित्याहुः । एतेन प्रत्यवरोहणीति व्याख्यातम् । 'सुमङ्गलात्संज्ञायामिति'। केवलमामकेति ङीपि प्राप्ते पक्षे सोऽपि भवति स्वरे विशेषः, सुमङ्गलशब्दो बहुव्रीहिस्तत्र नञ्सुभ्यामित्यन्तोदात्तत्वान्ङीप्यपि सत्युदात्तनिवृत्तिस्वरेण भाव्यमिति नास्ति विशेषः, तथा च छन्दसि सुमङ्गलीरियं वधूरित्यन्तोदात्तत्वं दृश्यते, तस्माज्जातिवचनो ऽव्युत्पन्नः स्त्रीविषयः सुमङ्गलशब्दो लघावन्तइति मध्योदात्तो द्रष्टव्यः, तरुणतलुनयोर्नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति ङीपि प्राप्ते पक्षे सोऽपि भवति, बृहन्महच्छब्दयोरनर्थकः पाठ इति प्रागेवोक्तम्, ल्युडन्तः सौधर्मशब्दः । 'रोहिणी नक्षत्रइति'। नक्षत्रादन्यत्र रोहिणी । 'रेवती नक्षत्रइति'। रयिरिति धननाम, रयिर्विद्यतेऽस्या इति मतुपि रयेर्मतौ बहुलमिति सम्प्रसारणं, निपातनाद्दुत्वं, नक्षत्रादन्यत्र ङीब् भवति, विकलादीनां टापि प्राप्ते । कटाच्छ्रोणि वचने, कटी श्रोणिः, अन्यत्र कटा । 'पिप्पल्यादयश्चेति गणसूत्रं, पिप्पली हरीतकीत्यादिकं तु तस्योदाहरणप्रदर्शनम् । 'पृथिवीति'। प्रथेः षिवन्सम्प्रसारणं चेति षित्त्वादेव सिद्धे प्रत्ययान्तस्य पाठः पुंवद्भावनिवृत्त्यर्थः, पृथिवीभार्य इति । स्त्रीविषयस्यास्य पुंवद्भावप्राप्तिश्चिन्त्या, क्रोष्टुशब्दस्य स्त्रियां चेति तृज्वद्भावः । क्रोष्ट्रीत्यत्र निरूपणीयमस्ति स्त्रियां चेत्यत्र निरूपयिष्यामः । 'षित्त्वादेव सिद्धइति'। मातरि षिच्चेति वार्त्तिककारवचनात्षित्त्वं निपातनसामर्थ्याद्वा, उक्तं हि

> धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।
> अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥

इति । 'दंष्ट्रेति'। येषामजादिषु दंष्ट्रेति पाठो नास्ति तेषामिदं प्रयोजनम् ॥

"जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु" ॥ वर्त्ततेनया सा वृत्तिः जीविका, । 'स्वरे विशेष इति'।

तमेव दर्शयति । 'उत्सादिपाठादञि कृतइति' । अमत्रं भाजनम् । 'कुण्डान्येति' । क्रियाशब्दोयं, कुडि दाहे, गुरोश्च हल इत्यकारप्रत्ययः, अवटपर्यायस्तु कुण्डशब्दो नपुंसके नियतः, यस्तु पत्यौ जीवति कुण्डः स्यादिति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव कुण्डीयं न गोलीति । अमत्रवाचिनस्तु जातिशब्दादपि स्त्रीविषयत्वान्ङीष् विधीयते । 'आवपनञ्चेदिति' । यत्र धान्यादि प्रक्षिप्य नीयते सा गोणी यस्याः पुनर्यादृच्छिकं नाम सा गोणा । 'स्थलान्येति' । कृत्रिमा पुरुषव्यापारेण निष्पादिता, यथा स्थलयोदकं परिगृह्णन्तीति । 'भाजीति' । भज विश्राणने चुरादिः, णयासश्रन्थो युजिति युचि प्राप्ते ऽस्मादेव निपातनात् स्त्रियामप्येरच् । 'श्राणेति' । श्रा पाके, क्तः, संयोगादेरिति नत्वम् । 'स्थौल्यं चेदिति' । द्रव्ये वर्त्तमानस्य नागशब्दस्य स्थौल्यं चेत्प्रवृत्तिनिमित्तमित्यर्थः । 'नागशब्दो गुणवचन इति' । गजवाची नागशब्दस्तत्सहचरितं स्थौल्यमुपादाय स्त्यन्तरे प्रयुक्त उदाहरणं, सर्पे दृष्टस्तद्गतं दैर्घ्यमुपादाय स्त्यन्तरे प्रयुक्तः प्रत्युदाहरणमित्यर्थः । 'वर्णश्चेदिति' । प्रवृत्तिनिमित्तमित्यर्थः । 'कालान्येति' । यस्या यादृच्छिकीयं संज्ञा । 'नीलान्येति' । नील्या रक्ता शाटी, नील्या अन्वक्तव्य इत्यन् । 'अयोविकारश्चेदिति' । फाल इति यस्याभिधानम् । 'कुशान्येति' । छन्दोगाः स्तोत्रियागणनार्थानौदुम्बरान् शङ्कून् कुशा इति व्यवहरन्ति । 'कामुकान्येति' । यस्या मैथुनादन्यत्कामयितुं शीलम् । 'मैथुनेच्छावती भण्यतइति' । कामुकशब्दस्य लषपतेति कर्त्तरि व्युत्पादितत्वादिच्छामात्रे वृत्त्यभावात्सूत्रे तु प्रवृत्तिनिमित्तमात्रं निष्कृष्योक्तं, मैथुने इच्छा यस्याः सा मैथुनेच्छेति व्यधिकरणपदोबहुव्रीहिराश्रयणीय इति भावः । 'केशवेश इति' । केशसन्निवेशविशेष इत्यर्थः ॥

"शोणात् प्राचाम्" ॥ शोणशब्दोयं वर्णवाची वर्णानां तणतिनितन्तानामित्याद्युदात्तः, तत्रान्यतो ङीषित्येव सिद्धे नियमार्थं वचनं प्राचामेव नान्येषामिति ॥

"वोतो गुणवचनात्" ॥ 'गुणमुक्तवान्गुणवचन इति'। कृत्यल्युटो बहुलमिति भूते कर्त्तरि ल्युटं दर्शयति, स पुनर्यः प्राग्गुणमभिधाय पश्चान्मतुब्लोपादभेदोपचाराद्वा तद्वति वर्त्तते स वेदितव्यः। 'शुचिरिति'। उत इत्यस्मिन्नसत्त्वेपि पट्वीत्यादिसिद्ध्यर्थमेवात इत्यस्यासम्बन्धो व्याख्येयस्ततश्चेहापि प्रसङ्ग इति भावः। 'गुणवचनान्ङीबिति'। मनोरौ वेत्यस्यानन्तरमिदं पठितव्यमित्यर्थः। उत्तरसूत्रं बह्वादिभ्यो वेति पठितव्यम्। 'आद्युदात्तार्थमिति'। आद्युदात्तेषु गुणवचनस्य ङीब्विधानस्य प्रयोजनमित्यर्थः। अन्तोदात्तेषूदात्तयणो हल्पूर्वादिति ङीषप्युदात्त इति नास्ति विशेषः। आद्युदात्तेषु तु ङीबनुदात्त एवावतिष्ठते। 'वस्वीति'। शृस्वृस्निहीत्यादिना वसेरुप्रत्ययः, नित्त्वादाद्युदात्तो वसुशब्दः, गुणवचनश्चायं नैर्मल्यवचनः, प्रशस्तवचन इत्यन्ये, तथा चातिशयेन वसुर्वसिष्ठो भवति, पटुशब्दोप्याद्युदात्तः, धान्ये निदित्यधिकारे फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्चेति उप्रत्ययः, फलेर्गुगागमः, पाटेश्च पटिरादेशः, फल्गुः, पटुः, नाकुः, मधुर्जतु इत्युदाहरणानि। मृदुशब्दस्त्वन्तोदात्तः, प्रद चोदे कुर्भश्चेत्यधिकारे प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्चेति कुप्रत्ययः, पृथुः, मृदुः, भ्रस्जेः सलोपः सम्प्रसारणञ्च, न्यङ्क्वादित्वात्कुत्वम्, भृगुः,। 'खरुरिति'। खरुः कन्या पतिंवरेति निघण्टुः, तत्र पाणिग्रहणोत्कण्ठाभिधायित्वाद्गुणवचनत्वम्। तपरकरणं किम्। पटुमिच्छति पटूयति, पटूयतेः क्विप् पटूः स्त्री, अत्र मा भूत्, यद्यप्ययं सम्प्रति क्रियावचनस्तथापि पूर्वं गुणमुक्तवानिति कृत्वा स्यात्प्रसङ्गः, इहोत इति विशेषणाद्वचनग्रहणाच्च शास्त्रीयोदङ्गुणो न गृह्यते, लोके तूपसर्जनं गुण उच्यते शास्त्रेपि यस्य गुणस्य हि भावादिति विशेषणमात्रं गुणो गृह्यते, शुक्लादौ च प्रसिद्धतरो गुणशब्दः, वैशेषिकादयस्तु रूपरसादयश्चतुर्विंशतिर्गुणा इति प्रतिपन्नास्तदिह जिघृक्षितं गुणं लक्षयति। 'सत्त्वे निविशतइत्यादि'। सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वं द्रव्यं तत्र यो निविशते समवैति स गुणः, यो निविशते स गुण इत्युच्यमाने गुणक्रियाजात्योर्गुणत्वप्रसङ्गात्सत्त्वइत्युक्तम्। एवमपि सत्ता जातिर्गुणः

स्यात्सा हि द्रव्यगुणकर्मसु त्रिष्वपि समवैति तदर्थं द्रव्यएवेत्यवधारणं द्रष्टव्यम्, एवमपि द्रव्यत्वजातिर्गुणः स्यात्सत्त्वे निवेशात्तत्रैव च निवेशादित्यत आह । 'अपैतीति' । ततः सत्त्वादपैति अपगच्छति क्व चिद्वा कदा चिद्वा न भवतीत्यर्थः । यथाम्रफले श्यामता पूर्वमुपैति रक्ततायां तत्र जातायामपैति च, द्रव्यत्वजातिस्तु सर्वदा द्रव्ये निविशते नापैति, यदि हि कदा चित्क्व चिद्वा न स्याद् द्रव्यमेवैतन्न स्यात्, एवमपि गोत्वादिजातिर्गुणः स्यात्सा हि सत्त्वे निविशते ऽपैति च, ततोऽश्वादिष्वभावादित्यत आह । 'पृथग् जातिष्विति' । पृथगिति पृथक्पदं, पृथग्भूतासु जातिष्वित्यर्थः, जात्याधारेषु द्रव्येषु दृश्यमानो जातिषु दृश्यतइत्युपचर्यते, समासे तु सति जात्यन्ताच्छ इति नित्याधिकारपरिगणितशब्दः प्रसज्येत, तदेवमुक्तलक्षणोपेतो यः पृथग्जातीयेषु दृश्यते स गुणः, न चैवंरूपा गोत्वादिजातिः, यद्यपि खण्डमुण्डादिरूपेण खण्डमुण्डादयः पृथग्जातीयास्तथापि गोत्वेन तासामेकजातीयत्वमेव, ये त्वपैतीत्यस्य सत्येवाधारे तत्परित्यागमर्थमाहुस्तेषां पृथग्जातिष्वित्यनर्थकं गोत्वादिजातेरप्यपैतीत्यनेनैव व्यावृत्तिसिद्धेः । तस्मात्पूर्वोक्त एवार्थः, एवमपि हि क्रिया गुणः स्यात्सा हि द्रव्ये निविशते यदा सक्रियं तत्रैव च निविशते ऽपैति च ततो यदा निष्क्रियं द्रव्यं, पृथग्जातीयेषु गवाश्वादिषु दृश्यते ऽत आह । 'आधेयश्चेति' । आधेयो निष्पाद्यः । यथा पाकनिमित्तेषु घटादिषु रक्तता गुणः अक्रियाजः, अनुत्पाद्यो यथा तेजःपरमाणुषु स एव रक्तता गुणः, तदेवमाश्रयभेदेनोत्पाद्यानुत्पाद्यस्वभावो गुण इति नित्योत्पाद्यस्य कर्मणो गुणत्वाभावः । एवमपि द्रव्यं गुणः प्राप्नोति तदपि शरीरादिकं पादादिषु द्रव्येष्वेव पृथग्जातीयेषु निविशते संयोगविनाशे च ततोपैति, आधेयं चाक्रियाजम्, अवयविद्रव्यस्योत्पाद्यत्वादाकाशादेश्चानुत्पाद्यत्वादित्यत आह । 'सोऽसत्त्वप्रकृतिर्गुण इति' । य उक्तलक्षणोपेतः सत्त्वप्रकृतिर्न भवति द्रव्यस्वभावको न भवति स गुण इत्यर्थः । अत्रोत्तरार्द्धेनैव सर्वजातीनां व्यावृत्तिसिद्धेः पूर्वार्द्धं व्यर्थं, जातीनां नित्यत्वेनोत्पाद्यत्वाभावात्, नैतदेवम्, असति पूर्वार्द्धे न जातिर्व्यावर्त्तते, यथा तैजसानां परमा-

णूनां यद्रूपं यच्चेष्टकादिपाक्यद्रव्यगतं तदुभयं मिलितमुत्पाद्यानुत्पाद्य-स्वभावमित्युभयोरपि गुणत्वं भवति न पुनः प्रत्येकमुभयस्वभावत्वात्, तथा पाक्यद्रव्यरूपं जातिश्चेत्युभयं मिलितमुत्पाद्यानुत्पाद्यस्वभावमिति जातिरपि गुणः स्यादेव, नहि सजातीयत्वे सतीति विशेषणमुपात्तमतः पूर्वार्द्धेन जातिव्यावृत्तिः। नन्वेवमपि पृथग्जातिषु दृश्यतइत्यनेनैव सर्व-जातिव्यावृत्तिसिद्धेः पूर्वकं विशेषणद्वयं व्यर्थमेव, तस्मात्सत्त्वे निविशत-इति स्वभावकथनं ततोपैति पृथग्जातिषु दृश्यतइति च विकल्पेन जातीर्व्यावर्त्तयतः, अपैतीत्यस्य च तत्रैव कियन्तं चित्कालं स्थित्वा तमाधारन्त्यजतीत्ययमर्थः। तदेवं सत्त्वे निविशते अपैति आधेयश्चा-क्रियाजश्चेत्येकं लक्षणं, सत्त्वे निविशते पृथग्जातिषु इत्यादिकं चापर-मिति लक्षणद्वयमनुसर्त्तव्यम्॥

"बह्वादिभ्यश्च"॥ 'शक्तिः शस्त्रइति'। शक्तिशब्दः शस्त्रेभिधेये ङीषमुत्पादयति शक्तिः शक्ती। शस्त्रइति किम्। शक्तिः सामर्थ्यम्। अन्ये शक्तिशस्त्री इति शब्दद्वयं पठन्ति, शस्त्रिः शस्त्री, इतः प्राण्यङ्गादीत्या-दीनि त्रीणि वाक्यानि यथोत्तरमधिकविषयाणि, तत्रोत्तरं वाक्यद्वयं रात्रे-श्चाजसावित्यत्रैव व्याख्यातम्। इकारान्तात्प्राण्यङ्गवाचिनो वा ङीष् भवति, धमनिः धमनी। सर्वतो ऽक्तिचर्थादित्येव ङीषि सिद्धे शकट्यादीनामिका-रान्तानां पाठः प्रपञ्चार्थः। पद्धतिशब्दः क्तिचन्तः, पादस्य हतिः पद्ध-तिः, हिमकाषिहतिषु चेति पद्भावः, अहत्विति पठ्यते न स केवलः स्त्रियां वर्त्तते, तस्मात्तदन्तो बहुव्रीहिरुदाहार्यः, दीर्घमहरस्याः दीर्घाह्नी शरत्, पाठसामर्थ्यादनुपसर्जनादिति न प्रवर्त्तते, अस्य ङीषो विकल्पि-तत्वाड्डाप्प्रतिषेधावपि भवतः, अन उपधालोपिन इति ङीप् च। 'बहु-शब्दो गुणवचन इति'। अन्तोदात्तश्च लङ्घिबंह्योर्नलोपश्चेत्युप्रत्य-यान्तः। किमर्थं तर्हि तस्येह पाठ इत्यत्राह। 'तस्येति'॥

"नित्यं छन्दसि"॥ 'नित्यग्रहणमुत्तरार्थमिति'। इह त्वार-म्भसामर्थ्यादेव नित्यो विधिः सिद्धः, योगारम्भश्चिन्त्यप्रयोजनः॥

"भुवश्च" ॥ 'विभ्वी प्रभ्वीति'। विप्रसंभ्यो ड्वसंज्ञायामिति डुप्रत्ययान्तान्ङीप् । 'स्वयंभूरिति' । भवतेः क्विप् । 'ह्रस्वादेवेयमिति'। यद्येवं घेर्ङितीति गुणे कृते भोरिति निर्देशः प्राप्नोति तत्राह । 'सौत्रोयं निर्देश इति'। गुणस्यैव कृतस्य छान्दस उवङादेश इत्यर्थः ॥

"पुंयोगादाख्यायाम्" ॥ 'पुंसा योगः पुंयोग इति'। योगः सम्बन्धः । 'पुंयोगाद्धेतोरिति'। हेतौ पञ्चमीं दर्शयति । आख्याग्रहणं गुणभूतेनापि पुंसैव सम्बध्यते ऽन्येन सम्बन्धासम्भवात् । गणकादयो हि शब्दाः पुंयोगात्स्त्रियां वर्त्तमाना न पुंयोगस्याख्या भवन्ति,स्त्रियां च पुंयोगमन्तरेण न प्रवर्त्तन्तइति स्त्रिया अपि नाख्यास्तदाह । 'पुंस आख्याभूतमिति'। भूतग्रहणेनैतद्दर्शयति यत्प्रातिपदिकं प्राक् पुंसो वाचकमभूत्सम्प्रति तु पुंयोगाद्धेतोः स्त्रियां वर्त्ततइति । 'गणकीत्यादि'। गणयतीति गणकः, ण्वुल्,प्रतिष्ठते प्रष्ठः, प्रष्ठोग्रगामिनीति षत्वं, कथं पुनरेते पुंशब्दा इत्यत आह । 'पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवादिति'। गणयति प्रतिष्ठतइति व्युत्पत्त्या पुंसि रूढा एते न स्त्री गणयति प्रतिष्ठते वा, महामात्रशब्दस्यापि प्रवृत्तिनिमित्तं हस्तिपकानामाज्ञापनं, हस्तिपकाधिपतिर्हि महामात्रः, या तु स्वयं गणयति प्रतिष्ठते वा न तस्यां पुंयोगाच्छब्दप्रवृत्तिः, अपि तर्हि स्वयमेव क्रियासम्बन्धादिति टापैव तत्र भाव्यं, कथं तर्हि स्त्रियां प्रवृत्तिरित्यत आह । 'तद्योगादिति'। कोर्थः ॥

तस्येदमिति सम्बन्धादिति चेत्तद्धितो भवेत् ।
ङीषेव बाधकः स्याच्चेन्नित्यं बाधः प्रसज्यते ॥

गणकस्येयमिति भेदसम्बन्धे विवक्षिते तस्येदमिति तद्धितः प्राप्नोति, अथ नाप्राप्ते तद्धिते ङीषारभ्यमाणस्तस्य बाधक इत्युच्यते कदा चिदपि तद्धितो न स्यात्, उभयमपि त्विष्यते प्राष्ठी प्रष्ठीति। स्यान्मतमेतत् । एतदेव ङीष्विधानं ज्ञापकं भेदविवक्षायामपि तद्धितमन्तरेण प्रष्ठादयः स्त्रियां वर्त्तन्तइति, तेन न केवला प्रकृतिः प्रयोक्तव्येति निय-

मोत्र बाध्यते, सति हि तद्धिते प्राष्ठीत्यणि ङीबेव सिद्धः, तस्य चोदात्तनिवृत्तिस्वरेणोदात्तत्वमिति किं ङीष्विधानेनेति, तन्न । येनीकारान्तास्तद्धिताः भानोरियं भानवीयेति तदर्थमेतत्स्यात्, एवं तर्ह्याख्याग्रहणं ज्ञापकं नात्र तद्धितोत्पत्तिरिति, नहि तद्धितान्तः प्रकृत्यर्थे पुंसि वर्त्तते, एवमपि ज्ञापकेन तद्धितस्य नित्यं बाधात्प्राष्ठीति न स्यात्, तस्माद्दुष्ट एवायं पक्ष, एवं तर्हि यथा मञ्चाः क्रोशन्ति, गौर्वाहीकः, गङ्गायां घोषः, यष्टीः प्रवेशयेत्यादौ तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्याच्चातस्मिन्नपि तत्त्वाध्यारोपेण तच्छब्दप्रवृत्तिस्तद्वदत्रापि प्रष्ठादिसाहचर्यात्तच्छब्दप्रवृत्तिर्भविष्यति, तत्राभेदेन भेदसम्बन्धस्य निवृत्तत्वान्न तद्धितप्रसङ्गः, विवक्षिते च भेदे तद्धितोत्पत्त्या प्राष्ठीत्यादि भविष्यति । तत्राहुः । यस्त्वया धर्मश्चरितव्यः सोनया सहेति भार्यायाः शास्त्रसिद्धं साहचर्यमिति तस्यामेवैतन्ङीष्विधानमिति, भट्टिकाव्ये तु दुहितृष्वपि दृष्टः प्रयोगः । कौसल्यया ऽसाविसुखेन रामः प्राक्केकयीतो भरतस्ततोभूदिति, केकयस्य दुहिता केकयी, जनपदशब्दादपत्यप्रत्यये तु कैकयीति प्राप्नोति, न च तस्यातश्चेति लुक्, न प्राच्यभर्गादीति प्रतिषेधात्तस्मात्सोयमित्यभिसम्बन्ध इत्ययमेव पक्षो ग्राह्यः । यद्वा यथा स्वामिदासौ पचत इति स्वामिनः संविधातृत्वात्पक्तृत्वं दासस्य तु साक्षात् तथा पुरुषः साक्षात्प्रतिष्ठते स्त्र्यपि संविधातृत्वात्पुरुषगतायाः प्रस्थानक्रियायास्तस्यामारोपात्प्रतिष्ठतइति, तस्यामेव प्रष्ठशब्दो व्युत्पाद्यते न तु पुरुषे व्युत्पादितः सन् तेन सहाभेदो पचारात्तस्यां वर्त्तते, न चैतावता पुंयोगादेव हेतोः स्त्रियां वर्त्ततइत्यस्य हानिः, साक्षात्स्वयमकर्तृत्वात् । अत्र पक्षे प्रस्य इति स्थिते सुबन्तस्य समासः, सुप् च संख्यानिमित्तः, प्रातिपदिकं च पूर्वं लिङ्गमभिधत्ते पश्चात्सङ्ख्यामिति तन्निमित्तसुबपेक्षात्समासात्प्रागेवोत्तरपदात्स्थशब्दाट्टाप्प्रसङ्गः, न च स्थशब्दादप्यनेनैव ङीष् लभ्यते प्रष्ठशब्दो हि पुंस आख्या न तु स्थशब्दमात्रं, नैष दोषः । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति कृदन्तावस्थायामेव समासः, सा पुंस आख्येति ङीष् भविष्यति, परिभाषाप्रयो-

जनान्युपपदमतिङित्यत्र प्रतिपादितानि । 'देवदत्तेति' । स्त्रिया एव कस्याश्चिदेषा संज्ञा, 'परिसृष्टा प्रजातेति'। प्रसूतेत्यर्थः । 'पुंयोगादेते शब्दाः स्त्रियां वर्त्तन्तइति'। परिसर्गः प्रसवः, प्रजन इत्यनर्थान्तरं स च न पुंयोगमन्तरेण सम्भवति, तस्मात्पुंयोगाद्धेतोः स्त्रियां वर्त्तते। परिसृष्टा प्रजातेति द्वौ प्रकृतौ, एते शब्दा इति बहुवचनं तु य एवं जातीयकाः शब्दाः प्रसूतादयस्तदपेक्षं द्रष्टव्यम् । 'गोपालिकादीनामिति'। सिद्धयइति शेषः । 'सूर्याद्देवतायां चाब्वक्तव्य इति'। ङीष एव प्रतिषेधे वक्तव्ये चाब्विधानमन्तोदात्तार्थं, सूर्यशब्दोयमाद्युदात्तस्तत्र टापि सति आद्युदात्तत्वमेवावतिष्ठेत। 'सूरीति'। सूर्यस्य स्त्री मानुषी कुन्त्यादिः, सूर्येति यलोपः ॥

"इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्" ॥ 'येषामिति' । इन्द्रादीनामृडान्तानामातुलाचार्ययोश्च । 'अन्येषामिति'। हिमादीनाम् । 'हिमारण्ययोर्महत्वइति'। महत्वयोगेनानयोः स्त्रीत्वम्, अन्यत्र नपुंसकत्वम् । दुष्टो यव इति[1] पाठः । 'यवानीति'। जात्यन्तरमेवाभिधीयते, अयमेव च दोषो यदुत यवत्वजातेरभावे तदाकारानुकृतिः । 'यवनाल्लिप्यामिति'। केचिज्जनपदिनो यवनास्तेषां लिपिः, तस्येदमित्यणो बाधको ङीष्, लिपिशब्दः स्त्रीलिङ्गः। 'उपाध्यायमातुलाभ्यां वेति'। उपाध्यायमातुलाभ्यां यो ङीष् तत्सन्नियोगेनानयोर्वा ऽऽनुगागमो भवतीति वक्तव्यमित्यर्थः, तत्रोपाध्यायस्याप्राप्तौ मातुलस्य तु नित्यं प्राप्त आनुग्विकल्प्यते । 'आचार्यादणत्वं चेति'। क्षुभ्नादिषु पठितव्यमित्युक्तं भवति । 'अर्यक्षत्रियाभ्यां वेति'। ङीषानुकौ द्वावप्यप्राप्तौ विकल्प्येते। 'स्वार्थएवायं विधिरिति'। यदि तु पुंयोगे ऽयं विधिः स्याच्छूद्रापि क्षत्रियस्य भार्या क्षत्रियाणी स्यात् ब्राह्मणभार्या च क्षत्रियाणी न स्यात्, तस्मात्स्वार्थएव स्त्रीत्वविशिष्टेयं विधिः । 'मुद्गलादिति'। ङीषो लित्त्वादानुगाकारस्य लित्स्वरः । अथ किमर्थमानुग्विधीयते न आनुगेवोच्येत, अकारोच्चारणसामर्थ्यादतो

१ नेत्यधिकम् २ पुस्तके ।

गुणे पररूपं बाधित्वा सवर्णदीर्घत्वं भविष्यति, अन्यथा नुगेवोच्येत, यथैव तर्हि पररूपं न भवति तथैव सवर्णदीर्घत्वमपि न स्यात्, नैष दोषः। यं विधिं प्रत्युपदेशोनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, तस्मादनुगेव वक्तव्यः। अपर आह। इन्द्रमाचष्टे इन्द्रयति, इन्द्रयतेः क्विप्, णिलोपः, इन्द्रः स्त्री इन्द्राणी, अत्र दीर्घस्य श्रवणं, दीर्घोच्चारणसामर्थ्यादत इत्यधिकारो बाध्यते इति, एवमपि क्विबन्त पुंस आख्या न भवति॥

"क्रीतात्करणपूर्वात्" ॥ पूर्वशब्दोवयववचन इत्याह। 'करणं पूर्वमस्मिन्नित्यादि'। व्यवस्थावाचिनि तु पूर्वशब्दे करणं पूर्वमस्मादिति वाच्यं स्यात्, एवं च क्रीतस्य करणवाचिशब्दान्तरमवयवो नोपपद्यतइति तद्व्यतिरिक्तमेव प्रातिपदिकं करणपूर्वत्वेन विशेष्यते, क्रीतशब्देनापि विशेषितस्यैव विशेषणात्तदन्तविधिरित्याह। 'क्रीतशब्दान्तात्प्रातिपदिकादिति'। यदि तु व्यवस्थावाचिनं पूर्वशब्दमाश्रित्य क्रीतशब्दो विशेष्यते करणं पूर्वमस्मादिति ततो वाक्येपि स्याद् अश्वेन क्रीतेति, तस्मादवयववाची पूर्वशब्दः प्रातिपदिकं च विशेष्यमिति सम्यगुक्तम्। 'वस्त्रक्रीतीति'। गतिकारकोपपदानामितिवचनात् प्रागेव सुबुत्पत्तेः क्रीतशब्देन सह समासः,। 'टाबन्तेन समास इति'। एकादेशस्य पूर्वं प्रत्यन्तवत्त्वा[1]त्कृदन्ततायां अविघातादविरुद्धष्टाबन्तेन समासः, अथ टाबन्तेनापि समासे कस्मादेवात्र न भवति तत्राह। 'अत इतीति'। ननूदाहरणवत्प्रागेव टाबुत्पत्तेरत्रापि समासः प्राप्नोति, वक्तव्यो वा विशेषो ऽत आह। 'गतिकारकोपपदानामित्यादि'। न तत्र बहुलग्रहणमस्तीति चेत्तत्राह। 'कर्तृकरणे कृता बहुलमिति'। कर्तृकरणे कृता बहुलमित्यनेन तावदत्र समासः, स च बहुलग्रहणात् प्राक् सुबुत्पत्तेः क्व चिद्भवति, क्व चिदुत्पन्ने सुपीति मन्यते, एतावतैव च बहुलं तदुच्यतइति सामान्येनोक्तं न पुनः कर्तृकरणे कृता बहुलमित्ययमेव समासः प्राक् सुबुत्पत्तेरिष्यते, यथा तु भाष्यं तथा नैतदिष्यते॥

१ अन्तवद्भावादिति २ पु॰ पाठः।

"क्तादल्पाख्यायाम्" ॥ 'अल्पाख्यायामिति समुदायोपाधिरिति'। ननु चाल्पैरभ्रैर्विलिप्तेति पूर्वपदार्थस्यैवाल्पता गम्यते न विलिप्तार्थस्य, एवं मन्यते, अभ्राणामल्पत्वे सति त¹द्विलेपनस्याल्पत्वमवश्यम्भावीति । 'अभ्रविलिप्तीति' । वृत्तौ गतार्थत्वादल्पशब्दस्याप्रयोगः, । 'चन्दनानुलिप्तेति' । बहुलेन चन्दनेनानुलिप्तेत्यर्थः, कृद्ग्रहणपरिभाषया समुदायस्य क्तान्तत्वम् ॥

"बहुव्रीहेश्चान्तोदात्तात्" ॥ 'बहुव्रीहिर्योन्तोदात्त इति' । अत्र क्तादित्यनुवृत्तिसामर्थ्यात्प्रत्ययग्रहणपरिभाषा कृद्ग्रहणपरिभाषा च न प्रवर्त्ततइति बहुव्रीहेः क्तान्तत्वम् । 'शङ्खभिन्नीति' । निष्ठेति पूर्वनिपातो न भवति, जातिकालसुखादिभ्यः परवचनमिति वचनात्, शङ्खादयो हि जातिवचनाः, अत एव जातिकालसुखादिभ्य इत्यन्तोदात्तत्वं भवति । 'गलोत्कृत्तीति' । कृती छेदने, उत्पूर्वात् क्तः, गलमुत्कृत्तमस्या इति विग्रहः । 'पादपतितेति' । कर्तृकरणे कृता बहुमिति समासः, थाथादिस्वरेणान्तोदात्तत्वम् । 'अन्तोदात्ताज्जातप्रतिषेध इति' । अन्तोदात्ताद्बहुव्रीहेर्ङीष्विधाने जातशब्दान्तात्प्रतिषेधो वक्तव्यः, स त्वन्तग्रहणादेव सिद्धः, कथम्, इहान्तग्रहणं न कर्त्तव्यं वर्णादनुदात्तादितिवद् उदात्तान्तादिति विज्ञास्यते, तत् क्रियते नित्ययोगे यथा बहुव्रीहिर्विज्ञायेत, दन्तजातादौ तु वा जातइति विकल्पेनान्तोदात्तत्वम् । 'पाणिगृहीत्यादीनां विशेष इति' । सिद्ध्यइति शेषः । अग्निसाक्षिकं यस्याः पाणिर्गृह्यते सा पाणिगृहीतीति भवति । 'कथं चिदिति' । यथोक्तात्प्रकारादन्येन प्रकारेणेत्यर्थः । 'अबहुनञित्यादि' । बह्वादिपूर्वपदाद्बहुव्रीहेर्ङीष् न भवतीति वक्तव्यमित्यर्थः । 'बहुकृतेति' । बहूनि कृतान्यनयेति विग्रहः, बहोर्नञ्वदुत्तरपदभूम्नीत्यन्तोदात्तत्वम् । 'अकृता सुकृतेति' । न विद्यते कृतमनया शोभनं कृतमनयेति विग्रहः, नञ्सुभ्यामित्यन्तोदात्तत्वम् । 'मासजातेति' । मासो जातोतीतोस्याः, सुखं जातं प्राप्तमनया, दुःखं जातमनयेति विग्रहः, सुखादयः सुखादिभ्यः कर्तृवेद-

१ धात्वर्थस्येति २ पु० पाठः ।

नायामित्यत्र पठिता गृह्यन्ते। अथ वा बहुव्रीहेश्च जातिपूर्वादिति वक्तव्यं, बहुव्रीहावन्तोदात्तनिमित्तेष्वन्येषु प्रतिषिद्धेषु जातिरेवान्तोदात्तनिमित्त क्तान्तस्यावशिष्यतइति जातिग्रहणमेवात्र कर्त्तव्यमित्यर्थः॥

"अस्वाङ्गपूर्वपदाद्वा"॥ 'शार्ङ्गजग्धीत्यादि'। शार्ङ्गं जग्धमनया पलाण्डुर्भक्षितोनयेति विग्रहः, शार्ङ्गादिरभक्ष्यजातिः, सर्वत्र जातिकालसुखादिभ्य इत्यन्तोदात्तत्वम्, 'वस्त्रच्छन्नेति'। छद अपवारणे चुरादिः, वा दान्तशान्तेत्यादिना छन्नशब्दो निपातितः, अत्रानाच्छादनादिति प्रतिषेधात्पूर्वपदप्रकृतिस्वरत्वमेव भवति। प्रवृद्धा चेत्यादिना विग्रहविशेषेण तत्पुरुषं दर्शयति॥

"स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्"॥ 'अतिकेशीति'। अतिक्रान्ता केशानिति तत्पुरुषः, एकविभक्ति चेति केशशब्दस्योपसर्जनत्वम्। 'अशिखेति'। असत्युपसर्जनग्रहणेत्रैव प्राप्नोति न मूलोदाहरणेष्वनुपसर्जनादित्यधिकारात्। अथ बहुव्रीह्यधिकारादत्र न भविष्यतीत्युच्येत, अतिकेशोत्यत्रापि तर्हि न स्यात्, अङ्गगात्रेत्यादिभाष्येनुक्तमप्येतत्प्रयोगबाहुल्याद्वृत्तिकारेणोक्तं, यद्यत्र स्वमङ्गं स्वाङ्गं गृह्येत श्लक्ष्णमुखा शाला, अत्रापि प्राप्नोति, मुखस्य शालाङ्गत्वात्, दीर्घकेशी रथ्येत्यत्र च न स्यात्, केशानां रथ्याङ्गत्वाभावात्, तदव्याप्त्यतिव्याप्तिपरिहारार्थं स्वाङ्गं परिभाष्यते। 'अद्रवमिति'। तत्र प्राणिस्थं स्वाङ्गमित्यनेन श्लक्ष्णमुखा शालेत्यत्र न भवति, एवमपि बहु[1]कफाऽत्र प्राप्नोति, तदर्थमाह। 'अद्रवमिति'। द्रवतीति द्रवं, ततोन्यदद्रवम्। एवमपि बहुज्ञानाऽत्रापि प्राप्नोत्यत आह। 'मूर्त्तिमदिति'। असर्वगतद्रव्यपरिमाणं मूर्त्तिः, असर्वगतानि यानि द्रव्याणि तेषां यत्परिमाणं ह्रस्वत्वादि सा मूर्त्तिः, स्पर्शवद्द्रव्यपरिमाणं मूर्त्तिरित्यन्ये, सा यस्यास्ति तन्मूर्तिमत्, एवमपि बहुशोफाऽत्र प्राप्नोत्यत आह। 'अविकारजमिति'। विकारो वातादिवैषम्यं ततो यज्जायते तन्न भवतीत्यविकारजं, शोफस्तु श्वयथुसंज्ञको विकारजः, यदि प्राणिस्थं स्वाङ्गं रथ्यादिपरिगतानां केशानां

१ बहुस्वेदेति २ पु॰ पा॰।

स्वाङ्गत्वं न स्यात्, सम्प्रत्यप्राणिस्थत्वात्, ततश्च दीर्घकेशी रथ्येति न सिद्ध्यत्यत आह । 'अतत्स्थमिति' । सम्प्रत्यप्राणिस्थमपि कदा चित्प्राणिनि दृष्टं चेत्तदपि स्वाङ्गं भवत्येवेत्यर्थः । एवमपि प्रतिमावयवानां मुखादीनां स्वाङ्गत्वं न प्राप्नोति, अप्राणिस्थत्वात्ततश्च दीर्घमुखी प्रतिमेत्यत्र न सिद्ध्यति तत्राह । 'तेन चेदिति' । अतत्स्थमित्यनुषङ्गः, अप्राणिस्थमपि मुखादि स्वाङ्गं तेन चेन्मुखादिना तदप्राणिद्रव्यं तथा युतं भवति यथा प्राणिद्रव्यमित्यर्थः । अन्येषां पाठस्तस्य चेत्तथा युतमिति, तत्रार्थः । अप्राणिस्थमपि मुखादि स्वाङ्गं तस्य चेदप्राणिनः सन्मुखादि तथा युतं भवति, तादृशसंस्थानं भवति यादृशं संस्थानं प्राणिन इत्यर्थः ॥

"नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च" ॥ 'सहनञ्विद्यमानलक्षणस्तु प्रतिषेधो भवत्येवेति' । कथं, नासिकोदरयोस्तावदयं योगः पुरस्तादपवादन्यायेनानन्तरं बह्वज्लक्षणमेव प्रतिषेधं बाधते, ओष्ठादिष्वपि मध्येऽपवादन्यायेन पूर्वं संयोगोपधलक्षणमेव प्रतिषेधं बाधते न सहादिलक्षणम्, अतोऽसौ भवत्येव सनासिका ऽनासिका विद्यमाननासिकेति । 'बिम्बोष्ठीति' । ओत्वोष्ठयोर्वा समासे पररूपं वक्तव्यमिति पररूपम् । 'कबरपुच्छीति' । कबरं नानावर्णं पुच्छमस्याः सा मयूरी, मणिः पुच्छमस्या, विषं पुच्छमस्याः मणिपुच्छी विषपुच्छी वृश्चिकी, उलूक इव पक्षोऽस्या उलूक इव पुच्छमस्या इति विग्रहः ॥

"न क्रोडादिबह्वचः" ॥ 'कल्याणक्रोडेति' । अश्वानामुरः क्रोडा, स्त्रीलिङ्गोयं, तत्र बहुव्रीहौ पूर्वपदस्य पुंवद्भावः, उत्तरपदस्योपसर्जनह्रस्वत्वम् । 'कल्याणनखेति' । अयन्योयं, नखमुखात्सञ्ज्ञायामिति प्रतिषेधात्, असञ्ज्ञायां ङीष दृष्टत्वात्, तस्मात्कल्याणोखेति पाठः । उखेति हि पठ्यते । क्रोडा बालखुरोखाः शफो गुदं भगगलौ चेति ॥

"सहनञ्विद्यमानपूर्वाच्च" ॥ पूर्वग्रहणमकृत्वा सहनञ्विद्यमानेभ्य इत्युच्यमाने सहादिभ्यः परं यत्स्वाङ्गन्तदन्तान्ङीष् न भवतीत्यर्थो भवति ततश्चेह प्रतिषेधः प्रसज्येत विद्यमानं मुखमस्य विद्यमानमुखः,

कल्याणो विद्यमानमुखोऽस्याः कल्याणविद्यमानमुखीति, भवति ह्येतद् यथोक्तविशेषणम्, इह च न स्याद् विद्यमानकल्याणमुखेति, नह्यत्र यथोक्तं विशेषणमस्ति तस्मात्पूर्वग्रहणम् ॥

"नखमुखात् संज्ञायाम्" ॥ 'शूर्पणखेति'। पूर्वपदात्सञ्ज्ञायामग इति णत्वम्, एवं च शूर्पणखा वा राक्षसी शूर्पनखी वा, यदि योगमात्रं न संज्ञा शूर्पनखी, संज्ञायां शूर्पणखा, न पुनः शूर्पणखीति णत्वङीषोः समावेशः साधुः ॥

"दीर्घजीह्वी चच्छन्दसि" ॥ 'निपातनं नित्यार्थमिति'। दीर्घजिह्वादित्युच्यमाने प्रकृतस्य ङीषो विकल्पितत्वादिहापि विकल्पो विज्ञायेत ॥

"दिक्पूर्वपदान् ङीप्" ॥ दिक्पूर्वपदान्ङीषोनुदात्तत्वं स्वाङ्गाच्चेत्यादिना विहितस्य ङीष एवास्मिन्विषयेनुदात्तत्वं वक्तव्यं, ङीब्विधाने ह्यन्यत्रापि ङीब्विषयान्ङीप्प्रसङ्गः, अपूर्वे हि ङीपि विधीयमाने प्राग्गुल्फा प्राग्जघनेति ङीब्विषयादन्यत्रापि ङीप्प्राप्नोति ङीपः प्रतिषेधाभावात्, इत्यस्मिन्पूर्वपक्ष इदमाह । 'विधिप्रतिषेधविषयः सर्वोऽप्यपेक्ष्यत इति'। तत्र विधिविषयापेक्षायाः फलं दर्शयति । 'यत्र ङीब्विहित इति'। 'स्वरे विशेष इति'। ङीपः पित्त्वादनुदात्तत्वं भवति, ङीषस्तु प्रत्ययाद्युदात्तत्वप्रसङ्गः । 'प्राङ्मुखेति'। ङीपा मुक्ते स्वाङ्गाच्चोपसर्जनादिति ङीषपि न भवति, कथम्, उक्तमेतत्, यत्रोत्सर्गापवादौ द्वावपि विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्तत इति । प्रतिषेधापेक्षयाः फलं दर्शयति । 'इह न भवतीति'। एवं च कृत्वा वाक्यभेदः कर्त्तव्यः, दिक्पूर्वपदादसंयोगोपधस्वाङ्गान्तान्नासिकाद्यन्तान्ङीप् भवति, क्रोडादिबह्वजन्तात्तु नेति अपरः कल्पः, अत्र ङीषनुवर्तते, तस्य दिक्पूर्वपदादिति पञ्चम्या षष्ठी प्रकल्प्यते, दिक्पूर्वपदादुत्तरस्य ङीषो ङीबादेशो भवतीत्यर्थः, तेन यत्र ङीष् तत्रैव ङीबिति सिद्धम्, एवं चोत्तरत्र ङीषेव स्वर्यत इत्युपपन्नं भवति ॥

"वाहः" ॥ 'सामर्थ्यादिति'। कर्मण्युपपदे वहेर्ण्विविधानात्केवलस्य वाहः सम्भवो नास्तीत्येतत्सामर्थ्यम् । 'दित्यौहीति'। छन्दसि सहः, वहश्चेति ण्विः, उपधावृद्धिः, ङीषि वाह ऊठ्, तत्र सम्प्रसारणमित्यनुवृत्तेः सम्प्रसारणाच्चेति पूर्वरूपत्वम्, एत्येधत्यूठ्स्विति वृद्धिः ॥

"सख्यशिश्वीति भाषायाम्" ॥ भाषायामित्युच्यते तत्रैतन्न सिध्यति सखी सप्तपदी भव, आ धेनवो धुनयन्तामशिश्वीरिति । नैष दोषः । इतिकरणोऽत्र क्रियते स भिन्नक्रमः, भाषायामित्यस्यानन्तरं द्रष्टव्यः, स च प्रकारे वर्त्तते, तेन छन्दस्यपि क्व चिद्भविष्यति, भाषाग्रहणं तु नित्यार्थम् ॥

"जातेरस्त्रीविषयादयोपधात्" ॥ अस्त्रीविषयादित्यनन्यभावे विषयशब्द इत्याह । 'न च स्त्रियामिति' । स्त्रियामेव यस्य नियमेन वृत्तिस्तत्स्त्रीविषयं ततोऽन्यदस्त्रीविषयमित्यर्थः । इह लौकिकजातिग्रहणे ब्राह्मणत्वादीनां गोत्रस्य च नाडायनादेर्जातित्वे वादिनां विप्रतिपत्तेः चरणशब्दानां च कठादीनामध्ययनक्रियासम्बन्धनिबन्धनत्वेन पाचकादिवत्क्रियाशब्दत्वेनाव्याप्तिरित्यभिमतां जातिं लक्षयति । 'आकृतिग्रहणा जातिरिति' । गृह्यतेऽनेनेति ग्रहणमिति करणसामान्ये पदं संस्क्रियते, पश्चादाकृतिशब्दसमवधाने स्त्रीत्वं प्रतीयमानं बहिरङ्गत्वात् प्रत्ययस्य निमित्तं न भवति, ग्रहणमाकृतिर्यस्या इति ग्रहणरूपोद्देशेनाकृतिरूपता विधीयते न त्वाकृतिरूपोद्देशेन ग्रहणरूपतेत्यर्थः । आकृतिः संस्थानं सा ग्रहणं यस्याः सा ऽऽकृतिग्रहणा, अवयवसन्निवेशविशेषव्यङ्ग्येत्यर्थः । अनेन गोत्वादिजातिर्लक्षिता, ब्राह्मणत्वादिजातिस्तु न संगृहीता भवति, ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्संग्रहायाह । 'लिङ्गानां चेति' । सर्वाणि लिङ्गानि न भजतीत्ययमर्थो विवक्षितः, तत्र सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वाद्भजो ण्विप्रत्ययः समासश्च । लिङ्गानामिति कर्मणि षष्ठी । अप्राप्तप्रापणार्थं चेदं वचनं न त्वाकृतिग्रहणेत्यस्य सङ्कोचकं, तेन तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातित्वं भवत्येव, इह कस्मान्न भवति देवदत्तः देवदत्तेति, उपदेशापेक्षमिदं लक्षणं, कोऽर्थः, असर्वलिङ्गेषु येषु जातिवाचित्वमाचार्या उपदिशन्ति तेष्वेव भवतीत्यर्थः । आकृतिग्रहणाया जातेरेकत्वनित्यत्वप्रत्येकपरिसमाप्तत्वलक्षणान्धर्मानाह । 'सकृदिति' । एकस्मिन्पिण्डे सकृदुपदिष्टा ऽयं गौरिति पिण्डान्तरे निर्ग्राह्या निश्चेतुं शक्येत्यर्थः । यदि चैका न स्याचेन्न गृह्येत, तथा

नित्यत्वाभावेऽपि पिण्डेन सह विनाशात्पिण्डान्तरे न गृह्येत, यदि च प्रत्येकं सर्वात्मना परिसमाप्ता न स्यात् तस्मिन्नपि तावत्पिण्डे सर्वात्मना न गृह्येत यत्राख्याता किं पुनः पिण्डान्तरे, कथं पुनरेकमेव वस्तु बहुत्र युगपत्कार्त्स्न्येन वर्त्तते नहि देवदत्तस्तदानीमेव स्रुघ्ने भवति मथुरायां च, दृश्यते चेत्को दोषः, नहि दृष्टेनुपपन्नं नाम। 'गोत्रमिति'। अपत्यमित्यर्थः। चरणशब्देन शाखाध्यायिनो गृह्यन्ते, गोत्रस्यानाकृतिग्रहणत्वात् सर्वलिङ्गत्वाच्च पृथगुपादानं, नाडायनं नपुंसकमिति दर्शनात्, चरणशब्दस्त्वध्ययनक्रियासम्बन्धेन प्रवृत्तत्वात्क्रियाशब्द एव न जातिशब्दः। 'कुक्कुटी सूकरीति'। आकृतिग्रहणाया जातेरुदाहरणं, ब्राह्मणी वृषलीत्यसर्वलिङ्गायाः, तत्र ब्राह्मणीति रूपोदाहरणं, शार्ङ्गरवादिष्वस्य पाठाद् वृषलीत्येतदेव ङीष उदाहरणम्। 'नाडायनी चारायणीति'। गोत्रलक्षणाया नडादिभ्यः फक्, अपत्यमात्रस्य ग्रहणादनन्तरापत्येऽपि भवति, अवन्ती कुन्तीति,इतो मनुष्यजातेरिति ङीष् भवति, इह तु कुलस्यापत्यं कुलीना ब्राह्मणीति ङीष् न भवत्यजादिषु दर्शनादित्याहुः। 'कठीति'। कठेन प्रोक्तं, वैशम्पायनान्तेवासित्वाण्णिनिः, तस्य कठचरकादिति लुक्, ततस्तदधीतइत्यण्, तस्य प्रोक्ताल्लुगिति लुक्। 'बह्वृचीति'। बह्व्य ऋचोऽस्या इति बहुव्रीहिः, बह्वृचश्चरणाख्यायामित्यकारः समासान्तः, कथं पुनः स्त्री नामाधीते, मा नामाधिगीष्ट तद्वंश्यत्वात्तु ताच्छब्द्यं भविष्यति यथानधीयाने माणवके। अत्रापरं जातिलक्षणमुक्तं भाष्ये॥

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥

इति। सत्त्वस्य प्रादुर्भावविनाशाभ्यां या ऽऽविर्भावतिरोभावौ प्राप्नोति यावद्द्रव्यभाविनीत्यर्थः। गुणैश्च युगपद् द्रव्येण संबध्यते यथा निर्गुणं द्रव्यं न भवति तथा जातिरहितमपीत्यर्थः। बह्वर्थामिति, अर्थशब्दो विषयवाची बहुविषयां बहुव्यक्तिव्यापिनीमित्यर्थः। असर्वलिङ्गामिति, पूर्ववल्लक्षणान्तरं, तत्र यथा पूर्वलक्षणं तथा कुमारीभार्य इति

भवितव्यं, कथं, कौमारमयावद्द्रव्यभाव्यपि आकृतिग्रहणत्वाद्भवति जातिः, ततश्च जातेश्चेति पुंवद्भावप्रतिषेधः, वृद्धा स्थविरेत्यादौ च जातिलक्षणो ङीष्प्राप्नोति, यथा पुनरुत्तरं तथा कौमारादिकं जातिर्न भवति, अयावद्द्रव्यभावित्वात्, तत्र पूर्वकं लक्षणं भाष्यकारस्याभिमतं नोत्तरम्, अपर आहेत्यभिधानात्। तथा च ङ्याप्सूत्रे युवतितरेत्यत्र तसिलादिष्विति प्राप्तस्य पुंवद्भावस्य जातेश्चेति निषेध आश्रितः, अत एव वृत्तिकारेणाप्येतदेव लक्षणमुपन्यस्तमिति केचिदाहुः। एवमपि युवजानिरित्यत्र पुंवद्भावो न प्राप्नोति. तस्माद् द्वितीयमेव लक्षणं साधीयो मन्यामहे, अत एव वृद्धा स्थविरेति जातिलक्षणो ङीष्न भवति, युवतितरेत्यत्र तु भाष्यकारप्रयोगात्पुंवद्भावाभावः। 'मुण्डेति'। गुणशब्दोयम्। 'मक्षिकेति'। स्त्रियामेवायं नियतः। इह कस्मान्न भवति माला बलाकेति, मालाशब्दो मलनं माल इति घञन्तः पुंलिङ्गः, क्षेत्रविशेषे नपुंसकः, स्रजि स्त्रीलिङ्गः, बलाकाशब्दो हि बलां कायतीति यौगिकः सर्वलिङ्गः, बकजातिवचनः स्त्रीलिङ्गः, नात्र यथाकथञ्चिदस्त्रीलिङ्गविषयत्वं विवक्षितं किं तर्हि यस्मिन्प्रवृत्तिनिमित्ते स्त्रीलिङ्गस्तस्मिन्नेव निमित्ते यल्लिङ्गान्तरेपि वर्त्तते तदस्त्रीविषयं, यथापुनरयं शब्दार्थस्तथास्त्रियाः पुंवदित्यत्र वक्ष्यामः, तेन निमित्तभेदेन नानालिङ्गेषु नायं विधिर्भवति, यद्येवं द्रोणी कुटी पात्रीत्यत्र न प्राप्नोति, द्रोणशब्दः प्रमाणविशेषे पुलिङ्गः, गवादिन्यान्तु स्त्रीलिङ्गः, कुटशब्दो घटे पुल्लिङ्गो गेहे तु स्त्रीलिङ्गः, पात्रशब्दो भाजनसामान्ये ऽर्द्धर्चादित्वादुभयलिङ्गः, भाजनविशेषे स्त्रीलिङ्गः, गौरादिपाठात्सिद्धम्। 'हयगवयेत्यादि'। गौरादिष्विदानींतनैर्हयादयः प्रक्षिप्ता इति वार्तिककारवचनाद्विज्ञायते॥

"पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च"॥ 'स्त्रीविषयत्वादेतेषामिति'। पूर्वत्र समानायामाकृतौ यदस्त्रीविषयमित्याश्रयणान्निमित्तभेदेन नानालिङ्गानामेषां न सिध्यतीति भावः। ओदनपाकादयः सञ्ज्ञाशब्दा यथाकथंचिद्व्युत्पाद्याः॥

"इतो मनुष्यजातेः"॥ 'अवन्ती कुन्तीति'। अवन्तिकुन्तिशब्दाभ्यामपत्येर्थे वृद्धेत्कोसलाजादाञ्ञ्यङ्, तस्य स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति

लुक्,। 'दाक्षी प्लाक्षीति'। अत इञ्, । 'विट् दरदिति'। विट्शब्दाज्जनपदशब्दात्क्षत्रियादञ्, दरच्छब्दाद् द्व्यञ्मगधेत्यादिनाण्, तयोरतश्चेति लुक्, उदाहरणसिध्यर्थमेवात इत्यस्यानुवृत्तिर्न शक्याऽऽश्रयितुमित्यत्रापि प्रसङ्गः। 'औदमेयीति'। उदकं मेयमस्य उदमेयः, उदकस्योदः सञ्ज्ञायामित्युदभावः, तस्यापत्यम्, अत इञ्, । 'सौतङ्गमी मौनिचित्तीति'। सुतङ्गममुनिचित्तशब्दाभ्यां तेन निर्वृत्तमित्यत्रार्थे इञ् प्रत्ययः ॥

"ऊङुतः" ॥ 'कुरूरिति'। कुरुनादिभ्यो ण्यः, तस्य स्त्रियामवन्तीत्यादिना लुक्। 'ब्रह्मबन्धूर्वीरबन्धूरिति'। वृत्तस्वाध्यायहीनानां ब्राह्मणजातावेतौ बहुव्रीही वर्त्तेते। 'ङकार इत्यादि'। नोधात्वोरित्युच्यमाने यवाग्वा यावाग्वै अत्राप्युदात्तयणो हल्पूर्वादिति प्राप्तस्य विभक्त्युदात्तस्य निषेधः स्यात्, वर्णग्रहणे ह्यर्थवद्ग्रहणपरिभाषा नोपतिष्ठते, अथ दीर्घोच्चारणं किमर्थं न उङुत इत्येवोच्येत, सवर्णदीर्घत्वेन सिद्धं, न सिध्यति सत्यपि सवर्णदीर्घत्वे गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं प्राप्नोति, न प्राप्नोति, किं कारणम्, उभयत आश्रयणे नान्तादिवत्, तथाहि। एकादेशस्यान्तवत्त्वेन प्रातिपदिकसञ्ज्ञा सम्पाद्या ऽप्रत्यय इति निषेधात्, आदिवत्त्वेन च स्त्रीप्रत्ययत्वं सम्पाद्यम्, इह तर्हि ब्रह्मबन्धूच्छत्रं षत्वतुकोरसिद्धत्वाद् ह्रस्वलक्षणो नित्यस्तुक् प्रसज्येत, दीर्घोच्चारणात्त्वेकादेशस्यासिद्धत्वेपि दीर्घएवायमिति दीर्घात्पदान्ताद्वेति विकल्पः सिध्यति, एतदपि नास्ति प्रयोजनं, पदान्तपदाद्योरेकादेशोऽसिद्धः, न चैष पदान्तपदाद्योरेकादेशः, तस्मादनर्थकं दीर्घोच्चारणमित्याशङ्क्याह। 'दीर्घोच्चारणङ्कपो बाधनार्थमिति'। शेषाद्विभाषेति कपोवकाशो ऽयवको ऽव्रीहिकः, ऊङोवकाशः कुरूरिति, ब्रह्मबन्ध्वादेर्बहुव्रीहेरुभयप्रसङ्गे परत्वात्कप् प्राप्नोति, दीर्घोच्चारणाच्च भवति, कथम्, उकारद्वयं दीर्घेण निर्दिष्टं तत्र द्वितीय उकारः कपो बाधनार्थः। 'अध्वर्युरिति'। अध्वरं यातीति मृगय्वादयश्चेत्युणादिषु दर्शनात्कुप्रत्ययो ऽध्वरशब्दस्यान्तलोपश्च, चरणलक्षणेयं जातिः, अध्वर्युशाखाध्यायिनि वंशे भवेत्यर्थः। 'अप्राणिजातेश्चेति'। अत्रोत इति नापेक्ष्यते तेनालाबूकर्कन्धूशब्दाभ्यां दीर्घान्ताभ्यामपि भवति

कृषिचमितनिधनिसर्जिखर्जिभ्य ऊरिति वर्त्तमाने णित्कशिपद्यर्त्तेरित्यतो णिदिति च, नञिलम्बेर्नलोपश्च, लबि अवस्रंसने, तस्मान्नञ्पूर्वादूप्रत्ययो भवति नलोपश्च, णित्त्वाद्वृद्धिः, अन्दूदृम्भूकर्कन्धूरिति निपातनादूकारान्तः कर्कन्धूशब्दः, एवमलाबूकर्कन्धूशब्दौ दीर्घान्तौ, ऊङ्विधानमलाब्वा कर्कन्ध्वा इत्यादौ नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेधार्थम् । 'कृक-वाकुरिति' । कृके वचः कश्च, कृकशब्दउपपदे वचेर्धातोरुण् प्रत्ययो भवति कश्चान्तादेशः । 'रज्जुरिति' । सृजेरसुम् च, आदिलोपः प्रकृतः, सृजेरुप्रत्यय आदेश्च लोपोऽसुगागमश्च, श्नतो यणादेशः, सकारस्य जश्त्व-चर्त्वे, सृज्यतेसौ रज्जुरिति । 'हनुरिति' । शॄस्वृस्निहित्यादिना हन्तेरुप्रत्ययः ॥

"पङ्गोश्च" ॥ 'श्वशुरस्येति' । पुंयोगलक्षणस्य ङीषो ऽपवाद ऊङ् विधीयते, शावशेराप्तौ, शुशब्दे ऽश्नोतेरुरन् प्रत्ययो भवति, किमिदं शुरिति, आशुशब्दस्यायमादिलोपो निपातितः, आश्वाप्तव्यः श्वशुरः, तस्य स्त्री श्वश्रूः, श्वशुरः श्वश्चेत्यादिनिपातनाद्विभक्त्यादि प्रातिपदिक-कार्यं भवति ॥

"ऊरूत्तरपदादौपम्ये" ॥ उपमीयतेनयेत्युपमा तद्भाव औपम्यं, कथं विचक्रे च करेणुकरोरुभिरिति, निरङ्कुशाः कवयः, करेणु वरोरुभिरिति पाठः । करेणु विचक्रे वरोरुभिरिति ॥

"संहितशफलक्षणवामादेश्च" ॥ संहितशब्दः सहितपर्यायः लक्षणशब्दो ऽर्शआद्यच्प्रत्ययान्तः, वामशब्दः शोभनपर्यायः । 'सहित-सहाभ्यां चेति' । समो वा हिततततयोरिति मलोपे सति यः सहित-शब्दस्तस्य संहितग्रहणेनैव सिद्धम्, एकदेशविकृतस्यानन्यत्वात्, यस्तु सह हितेन वर्त्ततइति व्युत्पन्नः सहितशब्दस्तस्येदं ग्रहणमित्याहुः । 'सहोरूरिति' । सहेते इति सहौ, तादृशावूरू यस्या इत्यर्थः । विद्यमा-नस्य वा सहशब्दस्य ऊर्वतिशयप्रतिपादनायप्रयोगः ॥

"कद्रुकमण्डल्वोश्छन्दसि" ॥ गुग्गुल्वादीनां छन्दसि, व्यत्य-येन स्त्रीत्वं, पतयालुशब्दः स्पृहिगृहीत्यादिना ऽऽलुजन्तः ॥

"शार्ङ्गरवाद्यञो ङीन्" ॥ 'एते णान्ता इति' । शर्ङ्गरुकपटु-

गुग्गुलुब्रह्मन्नित्येतेभ्यः प्राग्दीव्यतोऽण्, गोतमशब्दादृष्यण्, गौरादिष्वप्ययं पठितः । 'एते ठगन्ता इति'। बाहुल्यादेवमुक्तं, कमण्डलुशब्दाच्चतुष्पाद्भ्यो ढञ्, इतरेभ्यस्तु शुभ्रादिलक्षणो ढक्। 'एतौ फगन्ताविति'। वात्स्यशब्दाद्गर्गादियञन्ताद्यूनि यञिञोश्चेति फक्। ननु न स्त्रियां युवसञ्ज्ञा गोत्राद्यून्यस्त्रियामिति वचनात्, गोत्रे चैको गोत्रइति नियमः, एवं तर्हि वात्स्यायनशब्दस्यास्मिन् गणे पाठसामर्थ्यात्स्त्रियां युवसञ्ज्ञा भविष्यति, गोत्रएव वा प्रत्ययद्वयं, मुञ्जशब्दो नडादिः। 'जातिरिति'। गोत्रलक्षणा। 'ठगन्त इति'। कौकसाशब्दः शुभ्रादिः,। '[1]ञ्यङन्ताविति'। वृद्धेत्कोसलाजादाञ् ञ्यङिति कविशिविभ्यां ञ्यङ्, यङश्चाबत्र प्राप्नोति।'एहि पर्येहीति'। इह चेष्टायां आङ्पूर्वात्पर्याङ्पूर्वाच्च सर्वधातुभ्य इनितीन् प्रत्ययः, अश्मरथशब्दो गर्गादिः, उदपानशब्दः शुण्डिकादिरुत्सादिश्च, तत्राह । 'शुण्डिकाद्यणन्तः प्रयोजयतीति'। अन्ते तु ङीपो ङीनो वा नास्ति विशेषः। 'जातिरिति'। अरालचण्डालयोरसर्वलिङ्गत्वाज्जातित्वं, वतण्डशब्दस्य गोत्रत्वात्, वतण्डस्यापत्यं स्त्री वतण्डाच्चेति यञ्, लुक् स्त्रियामिति तस्य लुक्। 'भोगवद्गौरिमतोरिति'। मत्वन्तत्वादुगितश्चेति ङीपि प्राप्ते वचनं, ननु भोगशब्दो घञन्तः, गौरिशब्दोऽत इञितीञन्तः, तौ ञित्स्वरेणाद्युदात्तौ, ताभ्यां मतुप्, पित्त्वादनुदात्तः, ततश्च न ङीम्ङीनोरत्रास्ति विशेषस्तत्राह । 'घादिषु नित्यमिति'। उगिल्लक्षणे ङीपि सति नद्याः शेषस्यान्यतरस्याम्, उगितश्चेति विकल्पेन ह्रस्वत्वं स्यात्,ङीनि तु सति घरूपकल्पेति नित्यं सम्भवति, कथं भवति, यावता उगितः परा या नदी तस्या विकल्पो विहितः, ङीनपि चोगितः परा नदी, भोगवद्गौरिमतोरुगित्त्वात्। नैष दोषः। उगितश्चेतीत्यर्थेयं चशब्दः, उगित इत्येवमुगित्संशब्दनेन या नदी विहिता न चानेन विहितो ङीनेवं विहिता नदी भवति, यथा तु युवोरनाकावित्यत्र भाष्यं तथोगितः परा या नदीत्येतदेव स्थितं, सञ्ज्ञाया अन्यत्र ङीबेव भवति ह्रस्वश्च विकल्पितः। 'नृनरयोर्वृद्धिश्चेति'।

---

१ यञञाविति मुद्रितमूलपुस्तके उपलभ्यमानः पाठः पदमञ्जर्यसंमतः ।

नृशब्दादृवेभ्यो ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम् । 'वृद्धिश्चेति' । वक्ष्यामीति च अन्यतरस्यग्रहणेपि नारीतीष्टं सिद्धमन्यतरस्यानिष्टनिवृत्त्यर्थं तु द्वयोरुपादानं, तत्र नरशब्दे ऽन्त्यस्य वृद्धौ सत्यां यस्येतिलोपादानर्थक्यमिति, यस्येति लोपस्तावद्भवति तत्र कृते रेफस्य वृद्धिः प्राप्नोति, का, ऽविशेषात्पर्यायेण सर्वैव, नैष दोषः । स्थानेन्तरतम इत्यत्रान्तरतमे स्थाने षष्ठीत्यपि पक्षो व्याख्यातः, ततो नृनरयोरिति येयं षष्ठी सा वृद्धेरन्तरतमे नृनरावयवे स्थानिन्यनुसंह्रियते, यत्र च षष्ठी तत्रादेश इत्यकारस्यैव भविष्यति, अत्र पुत्रशब्दं केचित्पठन्ति न स केवलः स्त्रियां वर्त्ततइति तदन्तस्य समासस्य ग्रहणं, तत्रापि बहुपुत्रा ऽतिपुत्रेत्यादावनुपसर्जनाधिकारान्न भवति, क्व तर्हि भवति, पुत्रप्रधाने, ननु पुत्रप्रधाने समासे सैव पुल्लिङ्गता, सत्यं,सूतोग्रराजभोजमेरुभ्यो दुहितुः पुत्रड्विति वार्त्तिककारेण यत्र पुत्रडादेशो विहितस्तान्युदाहरणानि, सूतपुत्री, राजपुत्रीति, अत्र स्वभात्पुत्रशब्दो दुहितृशब्देन समानार्थो न पुत्रडादेश इति पठतामभिप्रायः । अन्ये तु प्रद्योतपुत्री शैलपुत्रीति वार्त्तिकविषयादन्यदेव ङीन उदाहरणं, पुत्रडादेशस्तु ङीपि स्वरार्थ इति मन्यन्ते, नात्राप्तभाषितमस्ति ॥

"यङश्चाप्" ॥ पकारो ङ्याप्प्रातिपदिकादित्यत्र सामान्यग्रहणार्थः, स्वरस्तु परत्वाच्चित्स्वर एव भवति । 'ञ्यङः ष्यङश्च सामान्यग्रहणमिति' । यद्यपि ष्यङ् स्त्रियामेव विधीयते तथापि ङित्करणसामर्थ्यात्तस्याप्यत्र ग्रहणमिति भावः । 'आम्बष्ठ्येत्यादि' । आम्बष्ठादिभ्योपत्ये वृद्धेत्कोसलाजादाञ् ञ्यङ् । 'कारीषगन्ध्येति' । स्वादिसूत्रे व्युत्पादितम् । वराहशब्दादत इञ्,शर्करादपूतिमाषगोकक्षशब्दा गर्गादयः । ननु च गौकाक्ष्यशब्दः क्रौड्यादिषु पठ्यते, ततः ष्यङि यङ इत्येव चाप् सिद्धः, मा पाठि तत्र षाच्च यञ इत्यनेनैव शर्कराक्ष्यादिवद् गौकाक्ष्येति सिद्धं, यद्येवं गौकाक्षीपुत्रः ष्यङः सम्प्रसारणं न प्राप्नोति, नात्र सम्प्रसारणमिष्यते, गौकाक्ष्यापुत्र इत्येव भवति, एवं हि सौनागाः पठन्ति ष्यङः सम्प्रसारणे गौकाक्ष्याया: प्रतिषेधः ॥

"तद्धिताः" ॥ 'युवतिरिति'। तद्धितसञ्ज्ञायां सत्यां कृत्तद्धितसमासाश्चेति प्रातिपदिकसञ्ज्ञा भवति। 'बहुवचनमित्यादि'। प्रत्यय इत्यादिवदेकवचनएव कर्त्तव्ये बहुवचनेन सञ्ज्ञिनां बहुत्वसूचनादनुक्तोपि तद्धितः परिगृह्यइति मन्यते, स्त्रीप्रत्ययानामादितस्तद्धिताधिकारे क्रियमाणे प्राचां ष्फ तद्धित इत्यत्र तद्धितग्रहणं न कर्त्तव्यं यस्येति चेत्यत्र चकारग्रहणं ङ्याप्प्रातिपदिकादित्यत्र तु तदन्तात्तद्धितविधानार्थं ङ्याब्ग्रहणं कर्त्तव्यमेव, सत्यं,ङीबादीनां ङकारस्येत्सञ्ज्ञा न स्यादतद्धितइति प्रतिषेधात्, सत्यामपि वा पट्वीत्यादावोर्गुणः स्यात्तस्माद्यथान्यासमेवास्तु ॥

"यूनस्तिः" ॥ 'युवतिरिति'। त्यन्तादितो मनुष्यजातेरिति ङीप्न भवति तिप्रत्ययेनैव स्त्रीत्वस्योक्तत्वात्, यौवनस्य वा ऽजातित्वात् ॥

"अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे" ॥ इह सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवति, तेन गोत्रे ऽनार्षयोरिति चाणिञ्मात्रस्य विशेषणं गुरूपोत्तमयोरित्येतत्तदन्तस्य, तदाह। 'गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोरिति'। यद्यप्यपत्याधिकारादन्यत्र लौकिकस्य गोत्रस्य ग्रहणं तथाप्यत्र पारिभाषिकस्य ग्रहणं, लौकिकग्रहणस्यानार्षयोरिति पर्युदासाश्रयणेनैव सिद्धत्वात्, इहायं ष्यङ् प्रत्ययो वा स्यादादेशो वा, प्रत्ययविधावपि हि गापोष्टगित्यादौ षष्ठीदर्शनात्, उत्तरत्र क्रौड्यादिभ्यश्चेति पञ्चमीनिर्द्देशाच्च प्रत्ययपक्षोपि सम्भवत्येव, तत्राद्यपक्षे उदमेघस्यापत्यं स्त्री, अत इञ्, औदमेघि इति स्थिते तदन्तात् ष्यङि विहिते औदमेघ्यायाश्छात्रा औदमेघाश्छात्राः, औदमेघ्यानां सङ्घ औदमेघः सङ्घः, इञश्च सङ्घाङ्कलक्षणइति च इञन्ताद्विधीयमानोण् न स्यात्, अथापि लिङ्गविशिष्टपरिभाषया इञन्ताद्विधीयमानोण् ष्यङन्तादपि स्यात्, एवमप्यापत्यस्य च तद्धितेनातीति यलोपो न स्यात्, ष्यङोनापत्यत्वात्, नैष दोषः। भस्याढे तद्धितइति पुंवद्भावात्प्रागेवाण उत्पत्तेः ष्यङ्निवर्त्तते, तस्मिन्निवृत्ते इञ इत्यण् भविष्यति, यकारस्य च श्रवणं न भविष्यति, इह तर्ह्यौदमे-

च्छाया अपत्यं, स्त्रीभ्यो ढक्, औदमेयेय इति यलोपो न स्यात्, पुंवद्भावश्च नास्ति अढ इति प्रतिषेधादितीममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह । 'ष्यङादेशो भवतीति' । नन्वस्मिन्पक्षे उडुलोम्नोपत्यं स्त्री बाह्वादिषु लोमन्शब्दस्य पाठात्केवलस्यापत्येन योगाभावात्सामर्थ्यात्तदन्तस्य ग्रहणादिञि तस्य ष्यङादेशे सति ये चाभावकर्मणोरिति प्रकृतिभावावस्त्वद्धितइति टिलोपो न स्यात्ततश्चौडुलोमन्येति स्यादौडुलोम्येति चेष्यते, प्रत्ययपक्षे तु इञा व्यवधानान्नास्ति प्रकृतिभावः, यस्येति लोपे ऽपि कृते स्थानिवद्भावाद्व्यवधानमेव, नैष दोषः । नात्राकृते टिलोपे ष्यङ् प्राप्नोति, किङ्कारणमगुरूपोत्तमत्वात्, तस्मादिञ्येव टिलोपः, ततो गुरूपोत्तमत्वं, ततः ष्यङित्यानुपूर्व्यात्सिद्धम् । अयं तर्हि दोषः प्रत्ययग्रहणपरिभाषया ऽणिञन्तयोर्ग्रहणं, तयोर्विधीयमानः ष्यङनेकाल्त्वात्सर्वादेशः प्राप्नोति, ङिच्चेत्यन्त्यस्य भविष्यति, तातङ्न्यायेन सर्वादेशः प्राप्नोति, यत्र हि ङकारस्य प्रयोजनान्तरमपि सम्भाव्यते तत्र ङिच्चेत्येतदनन्यार्थङित्त्वेष्वनङादिषु सावकाशं बाधित्वा ऽनेकाल्-शित्सर्वस्येत्येतद्भवति यथा तातङि, इह च सर्वादेशत्वेपि यङश्चाबिति विशेषणं प्रयोजनं सम्भवति तस्मात्सर्वादेशः प्राप्नोति, तत्राह । 'निर्द्दिश्यमानस्येत्यादि' । यद्ययमुत्तमशब्दोऽव्युत्पन्नः स्यात्तदोच्छब्दात्तमपि कृते किमेत्तिङव्ययघादित्याम् प्राप्नोति, न वा द्रव्यप्रकर्षत्वात्, उच्छब्दो हि ससाधनक्रियावचन उद्गते वर्त्तते, तस्य क्रियाद्वारकः प्रकर्षो ऽतिशयेनोद्गत इति, ततश्च द्रव्यनिष्ठत्वात्प्रकर्षस्याद्रव्यप्रकर्षइति प्रतिषेधो भविष्यति, एवमपि तमपः पित्त्वादाद्युदात्तत्वप्रसङ्गः, न वोञ्छादिषु पाठात्, उञ्छादिषु हि उत्तमशश्वत्तमौ सर्वत्रेति पठ्यते, एवमपि स तावत्पाठः कर्त्तव्यः, क्रियामात्रस्य च प्रकर्ष उत्तमामित्याम्प्रसङ्गश्च, अतोनभिधानादुच्छब्दात्तमपोनुत्पत्तिरेषितव्या । किं च व्युत्पन्न उत्तमशब्दश्चतुष्प्रभृतिषु वर्त्तते, कथम्, ऊर्ध्वमुच्चारित उद्गतः स च प्रथमोच्चारितमपेक्षते, ततश्च त्रिषु द्वावुद्गतौ तयोश्च द्वितीयोतिशयेनोद्गतः, द्वयोश्च सम्प्रधारणायां तरपा भाव्यं, ततश्च यत्रोद्गता एव त्रयस्तत्रैव स्यात् कथ-

दीर्घगन्ध्येत्यादौ, वाराह्येत्यादौ तु न स्यात्, तदेवं व्युत्पत्तिपक्षे दोषं पश्यन्नव्युत्पत्तिपक्षमाश्रित्याह । 'उत्तमशब्द इति' । 'स्वभावादिति' । न व्युत्पत्तिवशादित्यर्थः । त्रिप्रभृतीनामितिवचनाद्द्वाचीप्राचीत्यादौ न भवति टिड्ढाणञिति ङीबेव भवतीति प्राप्तिमात्राभिप्रायेणेदमुक्तम्, अत्र हि जातित्वाच्छार्ङ्गरवाद्यञ इति ङीना भाव्यम् । 'वासिष्ठीति' । ऋष्यन्धकेत्यादिनाण् । 'आहिच्छत्रीति' । जातादावर्थेण्, एवमत्रादेशपक्षः स्थापितः । यद्येवं हास्तिशिरसोपत्यं बाह्वादित्वादिञ्, अचि शीर्ष इति शीर्षादेशइञः ष्यङादेशः, ततः स्थानिवद्भावेन शीर्षशब्दस्य शिरोग्रहणेन ग्रहणाद्ये च तद्धितइति शीर्षन्नादेशः प्राप्नोति, अस्तु नस्तद्धितइति टिलोपो भविष्यति, ये चाभावकर्मणोरिति प्रकृतिभावः प्राप्नोति, ततश्च हास्तिशीर्षण्येति स्यात्, प्रत्ययपक्षे त्विञाव्यवहितत्वाच्चास्ति शीर्षन्नादेशः, यस्येति लोपेपि कृते स्थानिवद्भावाद्व्यवधानमेव, तेन हास्तिशीर्ष्येति सिद्ध्यति, तस्मात्प्रत्ययपक्ष आश्रयणीयः, तदेतद्ये च तद्धितइत्यत्र वामनो वक्ष्यति यदि प्रत्ययः कथमौदमेघ्येय इति, आपत्यादिहितः ष्यङ् सोप्यापत्य एव, तत्र यलोपे सिद्धमिति, जयादित्यस्तु मेने शीर्षादेशसन्निपातेन ष्यङ् स तद्विघातं न करिष्यतीति, यद्येवमजादिप्रत्ययनिबन्धः शीर्षादेशः कथं तमजादिं विहन्यात्, ततः किं, ष्यङादेशोपि न प्राप्नोति, अनित्या सन्निपातपरिभाषा तेन ष्यङ् भवति शीर्षादेशश्च न भविष्यति, अयं तर्ह्यादेशपक्षे दोषः । अनुबन्धौ कर्त्तव्यौ यङश्चाबिति सामान्यग्रहणातद्विघातार्थौ, अन्यथा ऽणादेशे ष्यङि टिड्ढाणञित्यादिना ङीप् स्यात्, इञादेशे त्विञ उपसङ्ख्यानमिति ङीष्प्रसङ्गः, नैष दोषः । टिड्ढाणञित्यत्रात इति वर्त्तते तत्र चाणा ऽकारो विशेष्यते ऽणयोकार इति, तत्र ष्यङादेशेऽनल्विधाविति स्थानिवद्भावाभावान्ङीम्न भविष्यति, अणन्तादकारान्तादिति हि विज्ञायमाने स्वाश्रयमकारान्तत्वं स्थानिवद्भावादणन्तत्वं चेति स्यान्ङीपः प्रसङ्गः, इञ उपसङ्ख्यानमित्यत्रापि इतो मनुष्यजातेरित्यत इत इत्यपेक्ष्यते इञ्य इकारः तदन्तादिति, इञन्तादिकारान्तादिति वा विज्ञायमाने ष्यङादेशे सति वाराह्येत्यादिविकाराभावान्ङीषभावः सिद्धः,

एवमपि स्वरार्थश्चाबेष्टव्यः, अन्यथा इञादेशः ष्यङ् स्थानिवद्भावेन ञित् टाबपि पित्त्वादनुदात्त इति ञित्स्वरेणाद्युदात्तं पदं स्यात् । स्यादेतत् । इञो ञकारस्येत्सञ्ज्ञायाः प्रागेव प्रतिपदविधानात्ष्यङादेशः करिष्यते, तत्र ञित्स्वराभावात् प्रत्ययस्वरे सति टाप्यपि सिद्धः स्वर इति, यद्येव तर्हि ञित्स्वरो न भवति एवं वृद्धिरपि न स्याद्, अतो ञकारस्य सत्यामित्सञ्ज्ञायामादेश इत्यास्थेयं, ततश्च स्वरे दोषप्रसङ्गाच्चाबर्थमनुबन्धो कर्त्तव्यावेव, प्रत्ययपक्षे तु सति शिष्टे ष्यङः प्रत्ययस्वरे कृते तदन्तादापि सिद्धमिष्टं न रूपभेदो न स्वरभेदः । ननु च ष्यङेव स्त्रीत्वस्य द्योतितत्वादाप्न स्यात्, नैष दोषः । यथा गार्ग्यायणीत्यादौ द्वाभ्यां स्त्रीत्वं द्योत्यते तथाऽत्रापि द्वयोरेव सामर्थ्यमिति टाबपि भविष्यति, ष्यङः सम्प्रसारणमित्यत्र विशेषणार्थं तर्हि त्वयाप्यनुबन्धो कर्त्तव्यौ, इह माभूत्पाशानां समूहः पाश्या, पाशादिभ्यो यः, पाश्यापतिरिति, एवं तर्ह्येकोऽनुबन्धः करिष्यते, क एकः, षकारे ङीष्प्रसङ्गः, ङकारे यङः सम्प्रसारणमित्युच्यमाने लोलूयापुत्र इत्यत्रापि प्राप्नोति, अप्रत्ययादित्यकारे ऽतो लोपे च सति अकारेण व्यवहितत्वाच्च भविष्यति, वाराहीपुत्र इत्यत्रापि तर्हि टापा व्यवधानमेकादेशस्य पूर्वं प्रत्यन्तवत्त्वान्नास्ति व्यवधानं, ननु ष्यङः सम्प्रसारणमित्यत्र लिटि धातोरित्यतो धातुग्रहणमनुवर्त्तते आदेच उपदेशेऽशितीत्यात्वं धातोर्यथा स्याद्गोभ्यामित्यादौ मा भूदित्येवमर्थं, तत्र यङन्तस्य धातोः पुत्रपत्योरनन्तरयोः सम्प्रसारणं भवतीत्युक्ते यो धातुर्लोलूयादिर्नासावनन्तरः, यश्चानन्तरो वाराह्यादिर्न स धातुस्तत्र धातुत्वानन्तर्ययोरन्यतरद्रूपपरित्यागेन भवत्सम्प्रसारणं यथा वाराहीपुत्र इत्यादौ असत्यपि धातुत्वे आनन्तर्यमात्राश्रयणेन भवति तथा लोलूयापुत्र इत्यत्रासत्यप्यानन्तर्ये धातुत्वाश्रयणेन स्यात्, अथ ब्रूया यङ्धात्वोर्न परस्परेण विशेषणविशेष्यभावो ऽपि तर्हि समुच्चयः पुत्रपत्योरनन्तरस्य यङो धातोश्चेति, तत्र वाराहीपुत्र इत्यादौ भविष्यति न तु लोलूयापतिरित्यादौ धातोर्व्यवधानात्, ततश्च सामर्थ्याद्धातुग्रहणस्योत्तरार्थैवानुवृत्तिः सम्पद्यतइति, यद्येवं वाक्पतिरित्यत्र वचेः सम्प्र-

सारणप्रसङ्गः, एवं तर्हि धातोरिति निवर्त्तिष्यते, आत्वं पुनर्गवादेः प्रातिपदिकस्य न भवति उपदेशाभावात्, स्वरूपज्ञापनप्रधानो निर्देश उपदेशः, गोद्भचः नौद्भच इत्यादौ तु कार्यान्तरार्थमुच्चारणं न स्वरूपज्ञापनार्थं, तदेवं प्रत्ययपत्तएक एवानुबन्धः कर्त्तव्यः। अत्र संग्रहश्लोकाः॥

पुंवद्भावाद्यजादौ यलुगणपि परस्मिन् ष्यङि ह्योदमेघे
स्वार्थे ष्यङ् तद्ग्लुग्के क्रमत इह भवेदौडुलोम्या परस्मिन्।
ष्यङ्शीर्षाधीनलाभस्तदभिविहतये न प्रभूर्हास्ति शीर्ष्यं
सर्वादेशोपि तातङ्इव न यङणिञोःस्थानिनोशक्तिहेतोः॥ १॥
स्युक्तावप्याप्परस्मिन्निह सुलभ इति षङौ विधेयौ न वा ये
ऽणादेशे ङीनिवृत्त्यै त्वण इञ इति चेद् द्वौ विशेष्यौ न दोषः।
ञित्त्वादादेरुदात्तः प्रसजति सहजादेशने वृद्धभावः
पाश्यापुत्रे निवृत्त्यै यण इक इह षेत्त्वे कके ङीषङयेस्तु॥ २॥
लौलूयापुत्र इत्यव्यवहित इतरत्रापि दीर्घान्तवत्स्याद्
धात्वानन्तर्ययोगे विधिरिति स यथानन्तरे ऽधौ तथा धोः।
धात्वानन्तर्ययोश्चेन्मिथ इह न ह्रितेपेक्षिता वाक्यताविक्
धोर्नोत्राधिक्रियात्वे ह्युपदिशिरिति गोर्नौ तदेवं ममैकः॥ ३॥

"गोत्रावयवात्"॥ गोत्रशब्दोयमस्ति पारिभाषिकोपत्यं पौत्रप्रभृतिगोत्रमिति, अस्ति च लौकिकोपत्यमात्रवचनः, अस्ति च व्युत्पत्त्या गूयन्ते शब्द्यन्ते ऽनेन स्वसन्तानप्रभवा इति प्रधानभूत आदिपुरुषः, स्वप्रभवस्यापत्यं सन्तानस्य सञ्ज्ञाकारी गोत्रमित्युच्यते, यथा भरतो रघुर्यदुरिति, अवयवशब्दोप्यस्ति एकदेशे यत्सम्बन्धादवयवतीति समुदाय उच्यते, अस्ति च पृथग्भावे, अवयुत्यानुवाद इत्यादाववपूर्वस्य यौतेः पृथग्भावेपि दर्शनात्, अस्ति चाप्रधाने ऽवयवभूतोयमस्मिन् ग्राम इति, तत्र पारिभाषिके गोत्रे एकदेशे चावयवे च वचनमनर्थकमिदं स्यात्, कथं, पौत्रप्रभृत्यपत्यसमुदायो गोत्रं तदवयवश्चतुर्थादिस्तदपि गोत्रमेव, तद्वाचिनो ऽणिञन्तात्पूर्वेणैव सिद्धः ष्यङ्, अथ कस्मिंश्चिन्महागोत्रे यान्यवान्तर-

गोत्राणि यथा भार्गवगोत्रस्य च्यवनादीनि ते गोत्रावयवास्तेष्वगुरूपोत्तमार्थो ऽयमारम्भः, यद्येवं सप्तर्षीणामगस्त्याष्टमानामष्टौ महागोत्राणि प्रवराध्याये पठ्यन्ते तद्व्यतिरिक्तेभ्यः सर्वेभ्यः ष्यङः प्रसङ्गः, न चैतदिष्टमगुरूपोत्तमेभ्योपि पुणिकादिभ्य एवेष्यते पृथग्भाववचने त्ववयवशब्दे गोत्रादन्यवाचिनो ऽणिञन्तात्ष्यङि विधीयमाने पूर्वसूत्रे गोत्रग्रहणमनर्थकम्, अथाप्रधानवचनोवयवशब्दः पारिभाषिकमेव गोत्रं प्रवराध्याये पाठाच्चाप्राधान्यं ततोयमर्थः स्यात्, येणिञन्ता गोत्रापत्यवाचिनः प्रवराध्याये न पठ्यन्ते तेभ्यः ष्यङिति तत्रानृषिभ्यो गुरूपोत्तमेभ्यः पूर्वेणैव सिद्धः, अगुरूपोत्तमेभ्यस्तु सञ्ज्ञाकारिभ्य एवेष्यते, पारिभाषिके च गोत्रे सञ्ज्ञाकारित्वं विशेषो न लभ्यतइति, इहापि प्रसज्येत तुषजको नाम कश्चित्तस्य गोत्रं स्त्री, अत इञ्, तौषजकी, अपत्यमात्रे तु गोत्रे यद्येकदेशोवयवस्ततो ऽपत्यसमुदायस्य पौत्रप्रभृत्यपत्यमवयव इति तद्वाचिनो ऽणिञन्तात्पूर्वेणैव सिद्धः, पृथग्भावे त्वपत्यादन्यवाचिन आहिच्छत्रादेरेव प्रसङ्गः, अप्राधाने त्वप्रधानापत्यवाचिनोणिञन्तादगुरूपोत्तमात्सर्वत्रेष्यते किं तु सञ्ज्ञाकारिभ्यस्तत्रापि गोत्रे, व्युत्पत्तेगोत्रे एकदेशवचनोवयवशब्दो न सम्भवति, नहि येन पुरुषेण स्वसन्तानप्रभवा गृयन्ते तदवयवाद्धस्तपादादेर्गोत्रेणासौ ऽसम्भवः, अथ गोत्रं च तदवयवश्चेति कर्मधारयस्तदा भार्गवादिगोत्रेषु ये ऽवान्तरव्यपदेशकारिणश्च्यवनादयस्तेभ्यः प्रसङ्गः, पृथग्भावे च ये सञ्ज्ञाकारिभ्यः पृथग्भूतास्तुषजकादयस्तेभ्य एव स्यात्, अत एवमेषु पक्षेषु दोषसम्भवाद्व्युत्पन्नो गोत्रशब्दो ऽप्रधानावचनोवयवशब्दः, कर्मधारयश्चसमासो निपातनाद्विशेषणस्य परनिपातः, प्रवराध्याये ऽपाठाच्चाप्राधान्यं, तदेतदाह । 'गोत्रावयवा गोत्राभिमता इति'। गोत्रमित्येवमभिमताः गोत्राभिधायिन इत्येव लोके प्रसिद्धाः न पुनः प्रवराध्याये पठिता इत्यर्थः । काः पुनस्ता इत्यत्राह । 'कुलाख्या इति' । कुलमाख्यायते आभिरिति कुलाख्याः, पुणिकादिभिर्हि कुलमाख्यायते पुणिका वयं गोत्रेणेत्येवमादि । 'तत इति' । यथोक्तविशेषणविशिष्टाभ्यः कुलाख्याभ्यः । 'अगुरूपोत्तमार्थ आरम्भ

इति'। गुरूपोत्तमयोरिति निवृत्तमन्यत्सर्वमनुवर्त्ततइति भावः। 'पौणिक्येत्यादिः'। पुणिकभुणिकमुखरशब्देभ्योत इञ्, तस्य ष्यङादेशः। 'ते क्रौड्यादिषु द्रष्टव्या इति'। अवृत्कृतत्वात्तस्येति भावः॥

"क्रौड्यादिभ्यश्च"॥ 'ष्यङ् प्रत्ययो भवतीति'। क्रौड्यादिभ्य इति पञ्चमीनिर्द्देशात्प्रत्ययपक्षेप्यत्र दोषाभावाच्चैवमुक्तम्। 'अगुरूपोत्तमार्थ इत्यादि'। तत्र क्रौड्यादयः प्राक्चौपयतशब्दादत इञन्ताः, चैपयतप्रभृतयः प्राग् सौधातकिशब्दाद्यञन्ताः, सौधातकिशब्दः सुधातुरकङ् चेति इञन्तः। 'सूत युवत्यामिति'। सूतशब्दः ष्यङमुत्पादयति युवत्यां प्राप्तयौवनायामभिधेयायां, सूत्या, अन्यत्र क्रियाशब्दाट्टाब् भवति सूता,जातिवाचिनस्तु ङीष् भवति सूती। 'भोज क्षत्रियइति'। जातिलक्षणस्य ङीषोपवादः, भोज्याः, क्रियाशब्दात्तु टाबेव भवति भोजयतीति भोजा, ततः परे इञन्ताः, गौकक्ष्यशब्दो गर्गादियञन्तः॥

"दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योन्यतरस्याम्"॥ देवा यज्ञा यष्टव्या अस्य देवयज्ञः, शुचिर्वृक्षो ऽस्य शुचिवृक्षः, सत्यमुग्रमस्य सत्यमुग्रः, निपातनाद्विशेष्यस्य पूर्वनिपातो मुमागमश्च, कण्ठे विद्धमस्य कण्ठे वा विद्धः, अमूर्द्धमस्तकादित्यलुक्, काण्डेविद्धिभ्य इत्यन्ये पठन्ति, काण्डेन विद्धः, कर्तृकरणे कृता बहुलमिति समासः, निपातनात्काण्डशब्दस्यैकारः, सर्वे इञन्ताः॥

"समर्थानां प्रथमाद्वा"॥ प्रत्येकमत्र पदानां स्वरितत्वं प्रतिज्ञायते न समुदायस्यैकमित्याह। 'त्रयमपीति'। अत्र च प्रयोजनमेकस्य निवृत्तावपरस्य निवृत्तिर्माभूदिति, एतदेव स्पष्टयति। 'समर्थानामिति चेति'। 'स्वार्थिकप्रत्ययावधिश्चायमिति'। स्वस्याः प्रकृतेरर्थे भवाः स्वार्थिकाः, अध्यात्मादिः, भाष्यकारप्रयोगाद् द्वारादिकार्याभावः, स्वशब्दस्य तु द्वारादिषु पाठादस्ति प्रसङ्गः, तदादिविधिर्हि तत्र भवति आख्यविशेषणत्वाद् द्वारादीनां, यथा द्वारपालस्येदं दौवारपालमिति। 'प्राग्दिशो विभक्तिरिति यावदिति'। तत आरभ्य हि स्वार्थिकाः प्रत्यया विधीयन्ते,

किं पुनः कारणं स्वार्थिकेष्वेष न प्रवर्ततइत्याह । 'स्वार्थिकेष्वित्यादि' । तत्र समर्थानामिति सम्बद्धार्थानां चेत्यर्थः । तत्र वाक्ये सम्बद्धार्थता, व्यपेक्षा हि तत्र सामर्थ्यमपेक्षा आकाङ्क्षा अन्योन्यापेक्षा व्यपेक्षा, अनया ऽऽकाङ्क्षासन्निधियोग्यत्वेषु सत्सु यः सम्बन्धः स लक्ष्यते, वृत्तौ संसृष्टार्थता, एकार्थीभावो हि तत्र सामर्थ्यं, वृत्तौ ह्युपसर्जनपदानि स्वार्थमुपसर्जनीकृत्य प्रधानार्थपराणि भवन्ति, यथा गङ्गायां घोष इति गङ्गापदं गङ्गोपसर्जनं तीरमाह, तथौपगव इत्यत्रोपगुशब्दः स्वार्थोपसर्जनमपत्यमाह, अत एव ऋद्धस्यौपगव इति ऋद्धत्वमुपगोर्विशेषणं न भवति, यत्र हि शब्दः पर्यवस्यति तत्रैव विशेषणसम्बन्धः, यदि च वाक्यवद्वृत्तावपि स्वार्थएव पर्यवस्येत्तद्वदेव विशेषणसम्बन्धो भवेत्, प्रधानपदान्यप्युपसर्जनविशिष्टमेव स्वार्थं ब्रुवते, यदि तु वाक्यवद्वृत्तावपि प्रधानपदानि स्वार्थमेव ब्रुवीरन् ततो यथोपगोरपत्यं देवदत्तः कल्याणश्चेत्युभाभ्याम-पत्यार्थस्य सम्बन्धस्तथौपगवः कल्याणश्चेत्यप्युक्ते स्यात्, न चैव,मतो यादृशस्य सम्बन्धस्य भावादयं विशेषः स एकार्थीभावः, न च स्वार्थिकेषु प्रकृत्यर्थादर्थान्तरं सम्भवति यत्प्रत्यायनाय शब्दान्तरं प्रयुज्येत येन सह समर्थता स्यात्, एतेन प्राथम्यं व्याख्यातमतः प्रतियोग्यपेक्षया सामर्थ्यप्राथम्ययोरभावात्स्वार्थिकेषु नास्योपयोग इति सिद्धं, विकल्पो ऽपि तत्रानवस्थित इति क्व चित्प्रवर्त्तते क्व चिन्न, एतच्चाषडक्षादिसूत्रे वक्ष्यते, इह प्रथमादित्येतद्विशेषणं शास्त्रवाक्यगतमाश्रीयते न विग्रहवाक्यगतमनियतत्वात्, वाक्ये हि प्रयोगो ऽनियत इति सर्वेषां प्राथम्यसम्भवात् कदा चिदपत्यवद्वाचिनोपत्ये प्रत्ययः स्यात् कदा चिदपत्यवाचिनस्तद्वति, अयं च प्रकारोसत्यपि प्रथमादित्यस्मिँल्लभ्यतइत्यनर्थकं तत्स्यात् । ननु च यस्मिन्वाक्ये यत्प्रथमोच्चारितं तस्मिंस्तत एव यथा स्याच्चरमोच्चारितान्मा भूदित्येतत्प्रयोजनं स्यात् । तन्न । नहि वृत्तिवाक्ययोः सहप्रयोगः, ततश्च वाक्यगते प्राथम्ये व्यवस्थापके सति वृत्तेः प्रयोगो न नियत इति व्यर्थमेव प्रथमादिति विशेषणं स्यात्तस्माच्छास्त्रवाक्यगतमेव प्राथम्यं व्यवस्थापकमित्याह । 'लक्षणवाक्यानी-

त्यादि'। 'समर्थानामिति निर्द्धारणे षष्ठीति'। ततश्च निर्द्धारणस्य तुल्यजातीयविषयत्वात्प्रथमात्समर्थात्प्रत्ययो भवति, तत्र समर्थात्प्रथमादिति वक्तव्ये समर्थानां प्रथमादिति वचनं प्रधानपदस्याप्युपसर्जनपदेनैकार्थीभावप्रतिपादनार्थम्, अन्यथा वाक्यवद्वृत्तावपि प्रधानपदस्यान्येनापि सम्बन्धः शङ्क्येत, यदि तर्हि लक्षणवाक्ये प्रथमोच्चारितात्प्रत्ययः, एवं सति तस्यापत्यमित्यादौ सर्वनाम प्रथमनिर्द्दिष्टमिति तत एव प्रत्ययः स्यात् नोपग्वादेः, नहि तल्लक्षणवाक्ये प्रथमनिर्द्दिष्टमित्यत आह। 'तस्येति'। 'सामान्यमित्यादि विशेषलक्षणं,'[1] विशेषोपलक्षणमित्यर्थः। तस्यापत्यमित्यादौ हि विशेषा एव निर्द्दिष्टुमिष्टास्तेषां तु सर्वेषां प्रत्येकमुपादाने गौरवं स्याद्, एकस्योपादाने ऽनुपात्ताद्विशेषान्तराच्च स्यान्न स्याद्वा? थाद्भिः संस्कृतमित्यादाविति, सर्वेषामुपलक्षणत्वेन तस्येत्यादिकमुपात्तम्। 'तस्योपग्वादेरिति'। न तु स्वयं कार्यितया, नहि तस्येत्यस्य सामान्यवचनस्य प्रकरणाद्यभावेन विशेषे ऽनवस्थितस्यापत्यं प्रति सम्बन्धिविशेषप्रतिपादनेन सम्बन्ध्यन्तरव्यवच्छेदाख्य उपकारः सम्भवति, सम्बन्धिसामान्यं त्वपत्यशब्दस्य सम्बन्धिशब्दत्वादेवावगतमतो यत्सूत्रे साक्षात्प्रथमोच्चारितं सामान्यवाचि न तस्मात्प्रत्ययो यस्माच्च प्रत्ययो न तत्सूत्रे साक्षात्प्रथमोच्चारितमिति अगत्या उपलक्षणगतं प्राथम्यमुपलक्ष्याणां विज्ञायते तदाह। 'तदीयं प्राथम्यं विशेषाणां विज्ञायतइति'। 'कम्बलउपगोरित्यादि'। यथापत्यशब्दस्य पूर्वपराभ्यां यथेष्टमभिसम्बन्धो भवति एवमणोपि सम्भाव्येतेति भावः। अत्र च प्रत्यये सत्यनर्थकस्यापि समुदायस्य तद्धितान्तत्वेन प्रातिपदिकसञ्ज्ञायामेकत्वाद्यभावेपि अव्ययेभ्य इव स्वादयः स्युः। ननु तस्यापत्यमिति श्रूयमाणसम्बन्धापेक्षायां विभक्तौ विज्ञायमानायां नात्र प्रसङ्गः, नैतदेवं, नहि लक्षणवाक्ये विभक्त्युच्चारणं सम्बन्धप्रतिपादनार्थंसामान्यस्य सम्बन्धासम्भवात्, किं तर्हि षष्ठ्यन्तात्प्रत्ययविध्यर्थमतथापि विशेषोपलक्षणद्वारेण सम्बन्धः स्याद्, एवमपि चटुस्योपगोरपत्यमित्यादौ सापेक्षादपि स्यादेव,

[1] विशेषलक्षणार्थमिति मुद्रितपुस्तके पाठः पदमञ्जर्यसंमतः।

समर्थपरिभाषया तर्हि व्यवस्था भविष्यति, स्यादेवं, यद्येतस्मात्सूत्रात्प्रागेव सुबन्तात्तद्धिता इति व्यवस्थितं स्याद्, इह तु ङ्याप्प्रातिपदिकाधिकारात् षष्ठ्यादिविभक्त्यर्थवृत्तेस्तत एव तद्धिताः स्युः, सति त्वस्मिन्सम्बन्धप्रतिपत्तेर्विभक्त्यायत्तत्वात्सुबन्तादेव तद्धिता भवन्ति, न चैवं सति पदकार्यप्रसङ्गः, तथाहि । राजन्ये वार्चघ्न इत्यादौ भसञ्ज्ञयोपजातया लुप्तविभक्त्याश्रयापि पदसञ्ज्ञा एकसञ्ज्ञाधिकाराद्बाधिष्यते, राजत्वं राजतेत्यादौ तु प्रातिपदिकादप्युत्पत्तौ स्वादिष्विति पदसञ्ज्ञा भवत्येव, ननु तद्धितलुकि सर्वनामस्थाने दोषः, काश्यपेन प्रोक्तमधीयते काश्यपकौशिकाभ्यामृषिभ्यां णिनिः, छन्दोब्राह्मणानीति तद्विषयतायां तदधीते तद्वेदेति द्वितीयान्तात्काश्यपिन्शब्दादुत्पन्नस्याणः प्रोक्ताल्लुकि यद्यपि काश्यपिन इत्यादौ भसञ्ज्ञया लुप्तविभक्तिनिमित्ताया अपि पदसञ्ज्ञाया बाधाददोषः काश्यपिभ्यामित्यादौ तु भवत्येव पदसञ्ज्ञा, तथापि काश्यपिनौ काश्यपिनं इत्यादौ सर्वनामस्थाने भसञ्ज्ञाया अभावाल्लुप्तामन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसञ्ज्ञा स्यात् । न चासर्वनामस्थानइति प्रतिषेधः, किं कारणं, स्वादिष्विति या प्राप्तिस्तस्या एव स निषेधः, एवं तर्ह्यसर्वनामस्थानइति विभज्यते प्रसज्यप्रतिषेधश्चाश्रीयते तत्सामर्थ्यादनन्तरस्य विधिर्वेत्येतच्चाश्रीयते तेन सर्वनामस्थाने परतः पूर्वस्यावधेर्या च यावती पदसञ्ज्ञा स्वादिष्विति वा सुबन्तमिति वा सा सर्वा प्रतिषेत्स्यते, यद्येवं राजा दण्डीत्यादौ सावपि न स्यात्, यचि भमित्यतोऽचीत्येतदसर्वनामस्थानइत्यत्रापेक्ष्यते, तेनाजादावेव सर्वनामस्थाने सर्वा पदसञ्ज्ञा निषेत्स्यते सौ हलादौ स्वादिष्विति वा सुबन्तमिति वा भविष्यतीत्यदोषः, तदेवं सत्यस्मिन् वचने सुबन्तात्तद्धिते न कश्चिद्दोष इति स्थितम् । अत एव पूर्वाह्णेतरां पूर्वाह्णेतमामित्यादौ घकालतनेष्वित्यलुक् विधास्यते, ननु सत्यप्यस्मिन् स्वार्थिकेष्वस्याव्यापारात्कथं सुबन्तात्तरप् स्यात्, एवं तर्ह्ययंक्रम एवायमीदृशो यदुत पूर्वं विभक्त्या योगः पश्चात्तरपा, उक्तं हि प्रियकुत्सनादिषु ततः प्रवर्त्तते ऽसौ विभक्त्यन्तइति, एवं च कृत्वा ऽलुग्विधानमप्युपपद्यते, यदि तु तदे-

वालुग्विधानं ज्ञापकं तस्यापत्यमित्यादौ न विभक्त्यर्थमात्रे तात्पर्यं किं तु षष्ठ्यादिविभक्त्यन्ता एवोपलक्षयितुमिष्टाः, ङ्याप्प्रातिपदिकाधिकारस्तु वृद्धादिविशेषणत्वेनैवोपयुज्यतइति, तथा सति पदविधित्वात्समर्थ-परिभाषयैव व्यवस्था सिद्ध्यति, किं चानभिधानादसामर्थ्ये न भविष्यन्ति नार्थं समर्थग्रहणेन, इदं तर्हि प्रयोजनं यदर्थाभिधानसमर्थं तस्माद्यथा स्यात्किं पुनस्तत्कृतवर्णानुपूर्वीकं पदं सौत्थितः वैक्षमाणिरिति, अत्र सवर्णदीर्घत्वे कृते प्रत्ययो भवति सुउत्थित विईक्षमाणइत्यस्यामव-स्थायां न भवति, यदि स्यात् सावुत्थितिः वायीक्षमाणिरिति प्राप्नोति, वार्णादाङ्गं बलीय इति वृद्धिप्रसङ्गात् । नन्वन्तरङ्गत्वाद्गुणेषु कृतेषु प्रत्ययो भविष्यति, एवं तर्ह्येतदर्थं समर्थवचनं कुर्वन्नेतज्ज्ञापयति अस्तीयं परिभाषा 'अकृतव्यूहाः पाणिनीयाः' कृतमपि शास्त्रं निव-र्तयन्तीति, व्यूहः शास्त्रकार्यं तदन्तरङ्गत्वात्प्राप्तमपि पश्चादस्य निमित्तविघातो[1] भविष्यतीति बुद्ध्या न कृतं यैस्ते ऽकृतव्यूहाः, एवंभूता भवन्ति पाणिनीया इत्यर्थः, कृतमपीत्यत्र वाशब्दोध्याहार्यः, कृतमपि वा शास्त्रकार्यं निवर्त्तयन्ति निमित्ताभावउत्पत्स्यमानइत्यर्थः । तेन पपुष इत्यादि सिद्धं भवति, अत्रान्तरङ्गत्वात्पूर्वकृतोपीडागम एतत्परि-भाषावशान्निवर्त्तते पूर्वमेव वा न क्रियते, ततः शसि सम्प्रसारणे कृते वलादित्वादिडभावः । 'प्रथमान्तादिति' प्रथमानिर्दिष्टादपत्यविशेष-वाचिनो देवदत्तादिशब्दादित्यर्थः । अन्यथा सास्य देवतेति यथा इन्द्रो देवतास्य ऐन्द्रः स्थालीपाक इति प्रथमान्तात् षष्ठ्यर्थे प्रत्ययो भवति, एवमिहापि स्यात्, देवदत्तो ऽपत्यमस्य दैवदत्तिरुपगुरिति । 'वाग्रहणं किमिति' । वृत्तिवाक्ययोर्व्यपेक्षैकार्थीभावलक्षणादर्थभेदादेव बाध्य-बाधकभावो न भविष्यतीति प्रश्नः । 'वाक्यमपि यथा स्यादिति' । तद्यथा गोशब्देन गावीशब्दो निवर्त्तते सत्यामपि स्त्रीत्वप्रतिपत्तौ तथे हाप्यौपगवमानयेत्युक्ते य एवानीयते उपगोरपत्यमानयेत्यप्युक्ते स एवेति प्रधानार्थाभेदाद्वृत्त्या वाक्यं बाध्येतेति भावः । 'यद्येवं समासवृत्तिस्त-

१ विघात इति २ पु॰ पाठः ।

द्धितवृत्त्या बाध्येतेति'। यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्ततइति राज्ञोनन्तरो राजानन्तर इत्यादिषु सावकाशा समासवृत्तिस्तद्धितवृत्त्या बाध्येत यथा दाक्षिरित्यण् प्रत्यय इञेति भावः। 'एतदपीति'। समासवृत्त्याख्यं कार्यमित्यर्थः॥

"प्राग्दीव्यतोण्" ॥ 'तेन दीव्यतीति वक्ष्यतीति'। यदि तस्येदमनुकरणं प्राग्दीव्यतेरिति वक्तव्यं कथं प्राग्दीव्यतइति निर्द्देशात आह। 'तदेकदेश इति'। भवति हि समुदायगुणीभूतस्याप्येकदेशस्य पृथक्कृत्यानुकरणं यथास्य वामीयमित्यत्रेति भावः। प्रत्यय इत्यादिवदणित्येवाधिकारे सत्यत इञित्यादिनापवादप्रकरणेन विच्छिन्नस्याणस्तेन रक्तं रागादित्यादिष्वर्थेषूपस्थानं न स्यात् तस्मादधिकारपरिमाणख्यापनार्थं प्राग्दीव्यतइत्युक्तम्। 'त्रिष्वपि दर्शनेष्वित्यादि'। नन्वधिकारपक्षेपि प्रतियोगमुपस्थानादत इञ् अणेवेत्यणपि प्राप्नोति, परिभाषापक्षेपि प्राग्दीव्यतीयाः प्रकृतयस्ताभ्यः सर्वाभ्योण् परिभाष्यमाणः केनापवादविषये न स्यात्, एवं विधिपक्षेपि सर्वत्र प्रसङ्गः, एवं मन्यते यदयं पीलाया वेति सूत्रमारभते तज्ज्ञापयति नापवादविषयेण् भवतीति अन्यथा द्व्यच इति ठक् सिद्धः, अनेन चाणित्यनर्थकं तत्स्यादिति, उदश्वितोन्यतरस्यामिति विकल्पवचनमप्यस्मिन्नर्थे लिङ्गम्। वयं तु ब्रूमः। प्राग्दीव्यत इति नेदं दीव्यतीतिशब्दैकदेशस्य दीव्यच्छब्दस्यानुकरणं किं तर्हि तत्रत्योऽर्थो निर्द्दिश्यते दीव्यतोर्थात्प्रागिति, तत्र दिवेर्लटि क्रमेऽर्थादित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाप्यप्रथमान्तेन सामानाधिकरण्याल्लटः शत्रादेशः कृतः, तत्रावधेरर्थत्वादवधिमन्तोप्यर्था एव प्रतीयन्ते सजातीयविषयत्वेन प्रसिद्धतरत्वादवध्यवधिमद्भावस्य, ततश्च प्राग्दीव्यतो येर्थास्तेष्वेवास्य त्रिष्वपि पक्षेषु व्यापारः, तत्र समानेर्थे प्रकृतिविशेषादुत्पद्यमानोपवादोऽणं बाधतइति सिद्धमिष्टम्॥

"अश्वपत्यादिभ्यश्च" ॥ 'प्राग्दीव्यतीयेष्विति'। अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावाद्भवार्थे वृद्धाच्छः, अव्ययानां भमात्रे इति टिलोपो न भवति, लुङ्मुखस्वरोपचारा इति परिगणनात्। अत एवा-

ष्यायात्यबपि न भवति, अमेहक्कतसिन्नेभ्य इति परिगणनाद्वा, गणपतिशब्दस्यात्र पाठाद्गाणपत्यो मन्त्र इत्यपशब्दः। एतेन चैत्रपत्यं व्याख्यातम्, चैत्रपत्यं चरुं निर्वपेदिति तु छान्दसं, चैत्रपत्यं प्राश्नन्तीति छन्दोवदृषयः कुर्वन्ति ॥

"दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" ॥ पतिशब्दस्योत्तरपदशब्देन[1] बहुव्रीहौ कृते पश्चाद् द्वन्द्वो न तु द्वन्द्वस्योत्तरपदशब्देन बहुव्रीहिरित्याह। 'पत्युत्तरपदाच्चेति'। एतच्च प्रत्यासत्तेर्व्याख्यानाद्वा लभ्यते, अदितिग्रहणं तु तदुत्तरपदपरिग्रहार्थं स्यात्, नह्यदित्युत्तरपदं दित्युत्तरपदं भवति, पत्यन्तादिति नोक्तं बहुच्पूर्वान्माभूदिति। 'वाङ्मतिपितृमतामिति'। कुर्वादिषु मतिपितृमच्छब्दयोः पाठोऽपत्यार्थो भाषायामपि ण्यो यथा स्यादिति, अनेन तु छन्दसि सर्वेष्वेव प्राग्दीव्यतीयेषु ण्यविधिः, केचिद्वाक्शब्दमपि तत्रैव पठन्ति, तेन याना वाच्या एते वत्सा इति प्रयोगोपपत्तिः। 'यमाच्चेति'। यमशब्दोपि सूत्रे पठितव्य इत्यर्थः। 'पृथिव्या ञाञाविति'। ञाञोः स्त्रियां विशेष इत्याह। 'पार्थिवा पार्थिवीति'। 'स्याम्न इति'। बलवचनोयं, तस्य केवलस्य यद्यप्यपत्येन योगो नास्ति जातादिना तु योगः सम्भवत्येव, सर्वेषु च प्राग्दीव्यतीयेष्वयं विधिः, तस्मादश्वत्थाम इति भाष्योदाहरणादत्र तदन्तविधिर्भवति। 'अश्वत्थाम इति'। अश्वस्येव स्थाम यस्येति बहुव्रीहौ अकारस्थिलोपः, पृषोदरादित्वात्सकारस्य तकारः। 'लोम्नोपत्ये बहुष्विति'। बाह्वादिष्वयं पठ्यतइतीञि प्राप्ते बहुष्वकारः, केवलस्यापत्येनायोगात्सामर्थ्यात्तदन्तविधिः। 'उडुलोमा इति'। उडूनीव लोमान्यस्य, शरा इव लोमान्यस्येति बहुव्रीहिः,। ननु बाह्वादिलक्षणे इञ्यपि कृते तस्य बह्वच इति लुकि सुबन्तादिञुत्पद्यत इति प्रत्ययलक्षणेन सुबन्तं पदमिति पदसञ्ज्ञायां नलोपेन सिद्धं, सिद्धंतु नामेदमुडुलोमैः उडुलोमभ्य इत्येवमादौ सुब्विधौ नलोपस्यासिद्धत्वादैसादिर्न स्यात्, इञो लुगपि प्राच्यभरतगो-

[1] सहेत्यधिकं २ पु०।

त्रादन्यत्र न सिद्ध्यति, न वात्र पदसञ्ज्ञा, असर्वनामस्थानइति निषेधात् । यथा च प्रत्ययलक्षणेन प्राप्तायाः सुबन्तमित्यस्या अपि पदसञ्ज्ञायाः स निषेधस्तथोक्तं पुरस्तात् । 'सर्वत्रेति' । नापत्यएव, यद्वा प्राग्दीव्यतीयेन्यत्र च, तेन गवा चरतीत्यत्रापि गव्य इति भवति । 'गोरूप्यमिति'। हेतुमनुष्येभ्योन्यतरस्यां रूप्यः, मयड् वेति रूप्यमयटौ । 'ण्यादय इति'। येन नाप्राप्तिन्यायेनाण एव ण्यादयोपवादा अणपवादैस्तु ठगादिभिः सह सम्प्रधारणायां परत्वात्तएव स्युरिति वार्त्तिकारम्भः, अर्थविशेषो ऽपत्यादिलक्षणं निमित्तं यस्य सोर्थविशेषलक्षणः, यस्तु तस्येदमित्यर्थसामान्यलक्षणोणपवादः स परत्वाद्भवति, उष्ट्रपतिर्नाम पत्रं तस्येदमौष्ट्रपतं, पत्राध्वर्युपरिषदश्चेत्यञ् भवति न तु ण्यः । 'दितेरपत्यमिति'। अत्रेतश्चानिञ इति ढङ् न भवति, डैलेय इत्यादावेव तु भवति । 'वानस्पत्यमिति' । अचित्तादिलक्षणष्ठङ् न भवति आपूपिकादावेव तु भवति । 'कथं दैतेय इति' । 'अत्र तर्हीति' । गम्यमानत्वाच्च प्रयुक्तं, यदि ण्यादयोर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेन भवन्ति, कथं तर्हि दैतेयः सिध्यतीत्यर्थः । 'दितिशब्दादित्यादि' । ननु प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ङीषन्तादपि ण्य एव प्राप्नोति, तत्राह । 'लिङ्गविशिष्टपरिभाषा चानित्येति' । अन्ये तु भाष्यवार्त्तिकयोरनुक्तत्वाद्दैतेय इत्यसाधुरिति स्थिताः ॥

"उत्सादिभ्योञ्" ॥ 'तदपवादानां चेति' । इञादीनाम् । 'बष्कयासइति' । बष्कयशब्दोञमुत्पादयति, असे, असमास इत्यर्थः । पूर्वाचार्यसंज्ञेयं,बाष्कयः । असइति किम् । गोबाष्कयिः,[1] ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेवात्र न भविष्यति, ज्ञापनार्थं तु, एतज्ज्ञापयति भवत्यत्र तदन्तविधिरिति, किं सिद्धं भवति, धेनुशब्दोत्र पठ्यते तदन्तादपि भवति अधेनूनां समूह आधेनवमिति । 'उदस्थानदेशइति' । उदस्थानशब्दोञमुत्पादयति देशे वाच्ये, औदस्थानो देशः, देशादन्यत्र यदृच्छया कश्चिदुदस्थानः, तस्यापत्यमौदस्थानिः । 'पृषद्दंश-

१ पारमबाष्कयिरित्यधिकं २ पु॰ ।

इति'। पृषच्छन्दोऽसमुत्पादयति अंशे वाच्ये, पार्षतोंऽशः, अंशादन्यत्रा- णेव भवति। 'ग्रैष्मी त्रिष्टुबिति'। ग्रीष्मो देवता अस्या इत्यशेषार्थ- विवक्षायामौत्सर्गिकोऽणेव भवति, ग्रीष्मे भवेत्यादिशेषविवक्षायां तु ऋत्व- णेव सिद्धं, नह्यनेनाऽञा शैषिकस्याणो बाधप्रसङ्गः, अर्थविशेषलक्षणा- नामेव प्रत्ययानां घयादिभिर्बाधनात्, ऋत्वण् तु शेषमात्रे विधानात्रार्थ- विशेषलक्षणः, कक्षान्तरप्राप्तश्च, कथं, कालाट्ठञ् अणोपवादः तस्याप्यृ- त्वण्। 'छन्दश्चेह वृत्तं गृह्यतइति'। यस्य त्रिष्टुबादयो विशेषाः। 'न वेद इति'। तेन वेदविषये ऽपि वृत्तेभिधेये ऽञः प्रतिषेधादणेव भवति ग्रैष्मी त्रिष्टुबिति॥

"स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्"॥ 'स्त्रीशब्दात्पुंस्शब्दाच्चेति'। स्त्र्यधिकारविहितानां टाबादीनां पुंसि सञ्ज्ञायां घ इत्येतदधिकार- विहितानां च प्रत्ययानां ग्रहणं न भवति, स्त्रीपुंसशब्दयोरस्वरितत्वात्, नापि स्त्रीपुंसार्थग्रहणं, स्वंरूपं शब्दस्येति वचनात्। 'पौंस्नमिति'। संयोगान्तस्य लोप इति पुंस्शब्दसकारस्य लोपः, तत्र कर्त्तव्ये ऽनुस्वारस्या- सिद्धत्वात्सकारस्य संयोगान्तत्वात्। अत एव संयोगान्तलोपप्रसङ्गा- न्नञेवोभाभ्यां न विधीयते, एवं हि मा भूत्नञ् मा च भूत्स्नञ् अत्र प्रकृतस्तत्रैतावदस्तु स्त्रीपुंसयोर्नुक्चेति, तत्रायमप्यर्थः, स्त्रैणी पौंस्नी अत्र इतीकारः सिद्धो भवति, नैवं शङ्क्यं स्त्रैणाः पौंस्नाः, यञञोश्चेति बहुषु लुक् प्राप्नोति, इह च स्त्रैणानां सङ्घः सङ्घाङ्कलक्षणेष्वञ्यञिञा- मित्यण् प्राप्नोति, नैष दोषः। उभयत्रापि गोत्रइति वर्त्तते, लौकिकस्य च गोत्रस्य ग्रहणं ऋषिप्रजनं च लोके गोत्रमुपचरन्ति, न च स्त्र्यर्षिणापि पुंशब्दवाच्यं सामान्यं, नस्तद्धितइति टिलोपस्तर्हि प्राप्नोति, प्रकृत्यैका- ज्ञिति प्रकृतिभावो भविष्यति, इष्ठेमेयस्स्विति तत्रानुवर्त्तते, एवं तर्हि नुग्विधानसामर्थ्याट्टिलोपो न भविष्यति, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते तत्र टिलोपार्थमेव नुग्विधानं स्यात् स्त्रीशब्दस्यापि नुगेव लोपस्य निमित्तम्, अन्यथा यस्येति लोपात्परत्वाद्वृद्धिः स्यात्, यथा श्रीर्देवता अस्य श्रायं हविरिति,

तस्माद्यथान्यासमेवास्तु । 'योगापेतं चेति'। स्त्रीपुंसाभ्यामित्यय योगो वत्यर्थे न प्रवर्त्ततइत्येवं ज्ञापनशरीरं न तु स्नञ् वत्यर्थे न प्रवर्त्ततइत्यर्थः । कथं स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्ता चेति, आ च त्वादित्यत्र परिहारो भविष्यति ॥

"द्विगोर्लुगनपत्ये" ॥ 'द्विगोरिति षष्ठीति'। आनन्तर्यलक्षणायां तु पञ्चम्यां पञ्चकपालस्य पुरोडाशस्येदं, तस्येदमित्यण्, पाञ्चकपालमित्यत्रापि प्राप्नोतीति भावः । षष्ठ्यपि यद्यानन्तर्ययोगे स्यात्स एव दोषो यः पञ्चम्यां, ततश्च षष्ठ्याश्रयणमनर्थकं स्यादिति मत्वाह । 'द्विगोर्यः सम्बन्धी निमित्तत्वेनेति'। यस्य तद्धितस्यार्थे तद्धितार्थोत्तरपदेति द्विगुर्विहितः स निमित्तत्वेन सम्बन्धी । 'पञ्चकपाल इति'। संस्कृतं भक्षा इत्यत्रार्थे विवक्षिते द्विगुः, अण्, तस्य लुक्, । 'द्विवेद इति'। तदधीते तद्वेदेत्यत्रार्थे द्विगुः । 'द्वैदेवदत्तिरिति'। द्वयोर्देवदत्तयोरपत्यम्, अत इञ्, अपतनादपत्यं, यस्य पित्रादिषु द्वौ देवदत्तसञ्ज्ञकौ स एवमुच्यते, एकस्य वा दत्तपुत्रोऽन्यस्य साक्षात्पुत्रः । 'द्विगुनिमित्तविज्ञानादिति'। द्विगुनिमित्तस्य प्रत्ययस्य लुग्विधानादित्यर्थः । 'पञ्चकपालस्येदमिति'। अत्र संस्कृतार्थे यः प्रथममुत्पन्नः प्रत्ययः स एव द्विगोर्निमित्तं न द्वितीय इति तस्य लुङ् न भवति । 'अथ वेत्यादि'। पूर्वं लुगित्यनेनोपस्थापितस्य प्रत्ययस्य द्विगोरित्यनेन वैयधिकरण्यमाश्रित्य व्याख्यातम्, इदानीं सामानाधिकरण्यमित्येष विशेषः । कथं पुनर्द्विगोरेव लुग् लभ्यतइत्याह । 'द्विगोरिति स्थानषष्ठीति'। 'ननु चेत्यादि'। प्रत्ययस्य लुक्श्लुलुप इति प्रत्ययादर्शनस्य लुगादयः संज्ञा विहितास्ततश्च द्विगोर्लुगिति नैव समञ्जमिति भावः । 'उपचारेण त्वित्यादि'। अतस्मिंस्तद्रूपारोप उपचारः, परत्र परशब्दप्रयोगो लक्षणा, उपचारेण निमित्तेन या लक्षणा तयेत्यर्थः । अन्ये तूपचारेणेत्यस्य विवरणं लक्षणयेत्येतदित्याहुः । अद्विगुरूपस्तद्धितो द्विगुरूपतया यया बुद्ध्या विवक्ष्यते सा लक्षणा । 'उपचार एवेति'। उपचारस्य निबन्धनं द्विगुनिमित्तत्वं, भवति हि कारणे कार्योपचार आयुर्घृतमिति यथा ।

'द्विगुनिमित्तकोऽपि तर्हीत्यादि'। कार्येऽपि कारणवदुपचारो दृश्यते यथा पुरातनं कर्म भुज्यतइति, ततश्च द्विगुर्यस्य प्रत्ययस्य निमित्तं सोऽपि गुणकल्पनया गुणशब्देनोपचारस्य निमित्तभूतो धर्मो विवक्षितः, तन्निमित्ता कल्पना गुणकल्पना सा पुनरुपचारात्मिका बुद्धिः, तया कस्माच्च द्विगुरित्युच्यते, अर्हत्येवायमेवंविधं वचनमित्यर्थः। परिहरति। 'न तस्येति'। तत्र हि सन्निहितमपि द्विगुत्वं प्रत्ययोत्पत्तौ नोपयुज्यते, नह्यसौ द्विगोरित्येवं विधीयते किं तर्हि प्रातिपदिकादित्येवमित्यर्थः। 'इतरास्त्विति'। प्रत्ययः, यस्य लुग्दर्शितो द्विगुत्वस्यैव निमित्तमिति तदर्थे हि समासो विधीयते तस्यैव च द्विगुसञ्ज्ञा तेनासौ द्विगुत्वस्यैव निमित्तम्। 'यद्येवमित्यादि'। उभयोरपि पक्षयोरेतच्चोद्यं, नह्यत्र द्विगोर्निमित्तत्वेन सम्बन्धी तद्धितः, नापि द्विगुर्निमित्तत्वादुपचारेण तद्व्यपदेशार्हः, अत्र हि समाहारे द्विगौ निष्पन्ने पश्चात्तद्धित उत्पद्यते, स च द्विगोर्निमित्तं न भवतीति चोद्यार्थः। परिहरति। 'नैवात्र तद्धित उत्पद्यतइति'। अनभिधानादिति भावः। यदि नोत्पद्यते कथमस्मिन्नर्थे पञ्चकपाल इति रूपसिद्धिस्तस्मादुत्पद्यतएवात्र तद्धितस्तस्य च लुग्विधेय इत्यत आह। 'त्रैशब्द्यं हीति'। त्रय एव शब्दास्त्रैशब्द्यं, चातुर्वर्ण्यादिः। इह ह्यस्माभिस्त्रैशब्द्यं साध्यं तच्च पञ्चकपालीशब्दात्तद्धितोत्पत्तिमन्तरेणापि सिद्ध्यतीति नाम्मात्तद्धित उत्पद्यते, तानेव त्रीन् शब्दान्दर्शयति। 'पञ्चसु कपालेष्विति'। 'द्वयोः शब्दयोरिति'। यः समाहारे द्विगुः यश्च तद्धितार्थे द्वावपि तौ समानार्थौ तयोरेकेन पूर्वेण विग्रहः। अवधारणमत्र द्रष्टव्यं विग्रह एव न तद्धितोत्पत्तिरनभिधानात्, अपरस्मात्पञ्चकपालादुत्पत्तिः, सोऽयमव्यविकन्याय उच्यते, तद्यथा अवेर्मांसमित्यविशब्देन विग्रह एव, अविकशब्दादुत्पत्तिर्विग्रहश्च आविकमविकस्य मांसमिति। 'सा च व्यवस्थितविभाषेति'। एवं कृत्वा त्रैविद्यः पाञ्चनदं षाट्कुल इत्यत्रापि लुङ् न भवति, अथ वा त्र्यवयवा विद्या त्रिविद्या शाक्यपार्थिवादि,स्तामधीते त्रैविद्यः, विद्यात्रयरूपस्य च समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदाभावः। पञ्चानां नदीनां समा-

हारः पञ्चनदं, नदीभिश्चेत्यव्ययीभावः, गोदावर्याश्च नद्याश्चेत्यच् समासान्तः, पञ्चनदे भवः पाञ्चनदः । अथ वा ऽभिधाने हि सति समाहारद्विगोरपि भवत्येव तद्धितः, तथा षण्णामादिपुरुषाणां कुलानि तत्र भवः षाट्कुलः, अव्यविकन्यायाच्च तिस्रो विद्या अधीते पञ्चसु नदीषु भवः षट्सु कुलेषु भव इति विग्रह एव न द्विगुर्नापि तद्धितः ॥

"गोत्रे ऽलुगचि" ॥ पूर्वत्रोत्तरत्र च लुग्विधानादिह नञ् प्रश्लिष्यते । 'यस्कादिभ्यो गोत्रइत्यादिनेति' । प्राग्दीव्यतइत्युपजीवनाय तु प्रकरणोत्कर्षः, प्रसज्यप्रतिषेधश्चायम् । 'अचीति' । यद्येषा परसप्तमी स्याच्छविधावितरेतराश्रयं प्राप्नोति, गार्गीया वात्सीया इति छे परतो ऽलुका भवितव्यमलुकि च सति वृद्धत्वाच्छेन भवितव्यमिति । ननु नच्छे परतो ऽलुग्विधीयते किं तर्ह्यजादिमात्रे, तत्र य एवाजादिः सम्भवति तत्रैवालुग्भविष्यति, तद्यथा गर्गाणां छात्राः, प्राग्दीव्यतोण्, तत्र परतो यञञोश्चेति प्राप्तस्य लुकः प्रतिषेधे गार्गा इति भवति, यद्यप्यत्र सत्यसति वा लुकि नास्ति विशेषः, आपत्यस्य च तद्धितइति यलोपविधानात् । इह त्वत्रेरपत्यानि बहूनि इतश्चानिञ इति ढको ऽत्रिभृग्विति लुकि कृते ऽत्रीणां छात्रा इत्यणि परतः प्रतिषेधे सति आत्रेया इति भवति, असति तु प्रतिषेधे आत्रा इति स्यात् । स्यादेतदेवं यदि लुप्तस्य प्रत्ययस्य पुनः प्रादुर्भावो विधीयेत, इह त्वलुगिति वचनाल्लुकः प्रतिषेधो विधेयः, प्राप्तस्य चानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्यते कर्त्तुं, ततश्च यद्यत्राण्जादिरभिप्रेतः स्यात् प्रागेव लुकः प्रवृत्तिरभ्युपगन्तव्या ऽन्यथा वृद्धत्वाच्छ एव स्यात्, लुक् चेत्प्रवृत्तः प्रतिषेधः किं करिष्यति, यो हि भुक्तवन्तं प्रति ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात्, तदिहाजादौ प्रवृत्ते ऽलुका भवितव्यमलुकि च प्रवृत्ते ऽजादिना भवितव्यमिति व्यक्तमितरेतराश्रयं, विप्रतिषेधात्सिद्धं, लुकोवकाशो यत्र प्राग्दीव्यतीयार्थो न विवक्ष्यते गर्गा वत्सा इति, छस्यावकाशः शालीय[1]

१ मालीय इत्यधिकं २ पुस्तके ।

इति, गार्गीय इत्यत्रोभयप्रसङ्गे परत्वाच्छो भविष्यति, तत्र परतो लुकः प्रतिषेधः, अन्तरङ्गो लुग् अपत्यबहुत्वमात्रापेक्षत्वात्, बहिरङ्गश्छः प्राग्दीव्यतीयार्थापेक्षित्वात्, अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः, एवं तर्ह्युच्यते चेदमजादौ परतो लुग्भवतीति, यदि च तावत्येव निमित्तमस्तीति बहुत्वमात्रापेक्षो लुक् प्रवर्त्तेत प्रतिषेधविधानमनर्थकं स्यादिति यावत्प्राग्दीव्यतीयोजादिर्नोत्पद्यते तावल्लुङ्न प्रवर्त्ततइति कल्प्यते, ततश्च वृद्धत्वाच्छे सति लुकि प्रतिषिद्धे गार्गीय इति सिद्धमिष्टं, विषयसप्तम्यां तु न किंचिद्व्यवसाध्यं, गर्गाणां छात्रा इत्यर्थविवक्षायामजादौ प्रत्यये विवक्षिते बुद्धिस्थेनुत्पन्नएव लुकि प्रतिषिद्धे वृद्धत्वाच्छो भवतीति, तस्माद्विषयसप्तमीमाश्रित्याह । 'प्राग्दीव्यतीये प्रत्यये विषयभूतइति'। 'खारपायणीया इति'। खरपस्यापत्यानि बहूनि नडादिभ्यः फक्, तस्य यस्कादिभ्यो गोत्रइति प्राप्तस्य लुकः प्रतिषेधः। 'कौवलं बादरमिति'। कुवलीबदरीशब्दौ गौरादिङीषन्तावन्तोदात्तौ, ताभ्यां फले विकारे ऽनुदात्तादेश्चेत्यञ्, तस्य फले लुगिति प्राप्तस्य लुकः तस्येदमित्यर्थविवक्षायां प्रतिषेधो न भवति, तेनावृद्धत्वादणेव भवति। 'गर्गरूप्यमिति'। यद्यत्रालुक् स्याद् गार्ग्यरूप्यमिति स्यात्। 'गर्गीयमिति'। तस्मैहितमिति प्राक्क्रीताच्छः, विषयसप्तम्या एव फलं दर्शयति। 'गोत्रस्येत्यादिः'। 'गोत्रस्येति'। गोत्रप्रत्ययस्येत्यर्थः। 'बहुषु लोपिन इति'। बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः। 'बहुवचनान्तस्य प्रवृत्ताविति'। प्रवृत्तिरर्थान्तरसङ्क्रान्तिः, बहुवचनान्तस्य सतोर्थान्तरसङ्क्रान्तौ सत्यामित्यर्थः। 'द्व्येकयोरिति'। यत्रार्थान्तरे सङ्क्रान्ततस्य द्वित्वैकत्वयोः सतोरित्यर्थः, सा चार्थान्तरसङ्क्रान्तिस्तदन्ताद्यदा यूनि प्रत्यय उत्पद्यते तस्य च लुक् क्रियते तदा भवति, लुप्ते हि युवप्रत्यये प्रकृतिरेव तदर्थमाहेति भवति सङ्क्रान्तिः। 'बिदानामिति'। बिदस्यापत्यानि बहूनि,अनृष्यानन्तर्ये बिदादिभ्योञ्, बिदास्तेषां बिदानामपत्यं युवा युवानौ वेति विवक्षायामत इति इञि विवक्षिते गोत्रप्रत्ययस्याञो लुकः प्राप्तस्यानेन प्रतिषेधः, इञो ण्यक्षत्रियार्षेति लुकि बैदः बैदाविति भवति, परसप्तमीपक्षे त्वलुङ्न प्राप्नोति

अजादेरभावात्। इदमिह सम्प्रधार्यम् इञो लुक् क्रियतामयं वाऽलुगिति, परत्वादलुग्भवति, इञो लुङ्नित्यः, कृतेऽप्यस्मिन्नलुकि प्राप्नोति अकृतेऽपि, अयं पुनरलुगनित्यः, नहीञो लुकि कृते प्राप्नोति अजादेरभावात्, प्रत्ययलक्षणेन भविष्यति, वर्णाश्रये नास्ति प्रत्ययलक्षणं, नात्र वर्णो निमित्तं किं तर्हि प्रत्ययस्तस्यैव तु विशेषणमचीति, तत्र यथा हलादौ पिति सार्वधातुके विधीयमानस्तृणह इम् अतृणेडित्यत्रापि भवति प्रत्ययलक्षणेन तद्वदिहापि भविष्यति, सत्यम्, विषयसप्तमीपक्षे नैवं क्लेशोऽनुभवनीयो भवति, ननूभयोरपि पक्षयोरिहापि न प्राप्नोति बिदानामपत्यं बहवो माणवका बिदा इति, नैष दोषः। द्वे अत्र बहुत्वे युवबहुत्वं गोत्रबहुत्वं च, तत्र गोत्रबहुत्वाश्रयस्य लुकः प्रतिषेधोऽस्तु पुनर्युवबहुत्वाश्रयो लुग्भविष्यति, लुग्विधौ हि लौकिकस्य गोत्रस्य ग्रहणं युवापि च लोके गोत्रमित्युपचर्यते गार्ग्यायणोऽस्मि गोत्रेणेति। अथ युवबहुत्वाश्रयस्यापि लुकः पुनः प्रतिषेधः कस्मान्न भवति, विषयसप्तम्यां तावद् यस्यामवस्थायां लुक् प्राप्तः तस्यामवस्थायां यदि कश्चिदजादिर्विषयभूतस्ततोऽलुका भवितव्यमिह चाजादिर्विषयभूत उत्पन्नो लुप्तश्च, पश्चाद्युवसु बहुषु सङ्क्रान्तौ सत्यां लुक् प्राप्तः, न चास्यामवस्थायां कश्चिदजादिर्विषयभूत इति पुनर्लुङ् भविष्यति, परसप्तम्यामपि गोत्रे वर्त्तमानस्यालुग्भवत्यजादौ परतः, कस्मिन्नजादौ, प्राग्दीव्यतो येऽर्थास्तेषु योऽजादिस्तस्मिन्नित्युच्यमाने यस्मिन् गोत्रे वर्त्तमानस्य लुक् प्राप्तस्तद्व्यतिरिक्ते प्राग्दीव्यतीयेऽर्थे योऽजादिस्तत्रेति गम्यते, इह चेत्रेवाजादिस्तदर्थ एव च गोत्रे लुगिति प्रतिषेधो न भविष्यति, यद्वा समर्थानां प्रथमादित्यतः प्रथमादिति वर्त्तते, तच्च षष्ठ्यन्तं विपरिणम्यते, प्रथमार्थवृत्तित्वाच्च प्राथम्यमाश्रीयते, तदयमर्थो भवति, प्रथमस्य गोत्रप्रत्ययस्य लुङ् भवति, यस्मिन्नर्थे प्रत्यय उत्पन्नस्तत्रैवार्थे वर्त्तमानस्य यो लुक् प्राप्तः स न भवति, इह तु द्वितीयमर्थमुपसङ्क्रान्तस्य लुक् प्राप्त इति न प्रतिषिध्यते, अवश्यं चैतदेवं विज्ञेयं प्रथमस्य लुक् प्रतिषिध्यत इति, अन्यथा अत्रेरपत्यमितश्चानिञ इति ढक्, तस्यापत्यं बहवो युवानः, अत इञो ण्यक्षत्रियार्षेति लुक्,

ठकोत्रिभृग्विति लुक्, अत्रयः, भरद्वाजशब्दाद्विदाद्यञ्, तदन्ताद्युवबहुत्वे इञो लुक्, अञो यञञोश्चेति लुक्, अत्रयश्च भरद्वाजाश्च अत्रिभरद्वाजास्तेषां मैथुनिकाद् द्वन्द्वाद्वुञ्, अत्रिभरद्वाजिकाः, तत्रालुक् प्राप्नोति, कुत्सादृष्यणोत्रिभृग्विति लुक्, कुशिकादजन्तादिञो लुकि कुशिकाः, कुत्सकुशिकिका वसिष्ठकश्यपिका भृग्वङ्गिरसिकाः, अथ वा गोपवनादिषु गर्गभार्गविकाशब्दः पठ्यते, भार्गवशब्दस्य युवबहुत्वे प्राप्तस्य लुकः प्रतिषेधार्थं तन्नियमार्थं भविष्यति, एतस्यैव द्वितीयमर्थमुपसङ्क्रान्तस्यालुग्भवतीति, नैव वा पुनरत्र युवबहुत्वे वर्त्तमानस्यालुक् प्राप्नोति, किङ्कारणं, गोत्रइत्युच्यते, यद्यप्यपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते, इह तु पारिभाषिकस्य ग्रहणं युवशब्दसाहचर्यात्, अन्यथा गोत्रयुवसंज्ञयोः समावेशे यो ऽयं दोषो वक्ष्यते शालङ्केरपत्यं यञिञोश्चेति फक्, तस्य पैलादिभ्यश्चेति लुक्, शालङ्कायनशब्दाच्चा इत्यर्थविवक्षायां गोत्रे ऽलुगचीत्यलुक् प्राप्नोति, ततश्च यूनि लुगित्यस्य फक्फिञोरन्यतरस्यामिति विकल्पितत्वात्पक्षे फकः श्रवणं प्राप्नोतीति स तदवस्थ एव स्यात्, असमावेशेऽपि यूनो लौकिकगोत्रत्वादेवालुक् प्रसङ्गात्, तदेवं गोत्रस्य बहुषु लोपिन इत्यादि न वक्तव्यमिति स्थितम् । 'एकवचनद्विवचनान्तस्येत्यादि' । एकवचनान्तस्य गोत्रप्रत्ययस्य द्विवचनान्तस्य वा बहुष्वर्थेषु युवसंज्ञकेषु प्रवृत्तौ सङ्क्रान्तौ सत्यामित्यर्थः। 'लोप इति'। लुगित्यर्थः। लोपे हि प्रत्ययलक्षणेन वृद्धिस्वरप्रसङ्गः। ननु च युवबहुत्वाश्रयो यञञोश्चेत्येवात्र लुक् सिद्धस्तत्राह। 'नह्यत्राञ् बहुष्वत्र इति' अञो बहुषु यञो बहुष्विति विज्ञायमाने लुङ्न सिध्यतीत्यर्थः । यदा त्वञन्तं यद्बहुषु यञन्तं यद्बहुष्विति विज्ञायते तदाञन्तस्य बहुषु युवसु वृत्तेर्लौकिकस्य च गोत्रस्यापत्यमात्रस्य तत्र ग्रहणात्सिद्ध एव लुक्, तथा च गार्ग्यश्च वात्स्यश्च वाज्यश्च गर्गवत्सवाजाः, बैदश्च और्वश्च भारद्वाजश्च बिदौर्वभारद्वाजा इति यञञोरुत्पत्तिवेलायामबहुत्वेऽपि द्वन्द्वे युगपदधिकरणवचनतया यञन्तस्याञन्तस्य च बहुत्वोपजननाल्लुग्भवति, न चैवं काश्यपस्यैकस्य बह्व्यः प्रतिकृतयः काश्यपा इति इवे प्रतिकृताविति विहितस्य कनो जीविकार्थे चापण्य इति

लुप्, हरीतक्यादिषु व्यक्तिरिति वचनाद् युक्तवद्वचनाभावे ऽजन्तस्य बहुषु वृत्तेर्लुक् प्रसङ्गः, गोत्रबहुत्वे लुग्विधानात् ॥

"यूनि लुक्" ॥ अत्रापि यद्यचीति परसप्तमी स्यात् प्रत्ययस्य यथेष्टप्रसङ्गः, युवप्रत्यये श्रूयमाणे यः प्राप्नोति स तावत्कर्त्तव्यस्तत्र कृते युवप्रत्ययस्य लुकि तस्य श्रवणं प्राप्नोति, विषयसप्तम्यां त्वजादौ विषयभूतएव युवप्रत्यये लुप्ते यो यतः प्राप्नोति ततः स स भवतीति सिद्धमिष्टम्, । एतच्चोदाहरणेषु व्यक्तीकरिष्यते, तदेतदाह । 'अजादौ प्रत्यये विवक्षितइत्यादि' । 'इञश्चेत्यण् भवतीति' । परसप्तम्यां तु वृद्धाच्छ एव स्यात् । 'फेश्छ चेति' । 'यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृता' इति परिगणनं भाष्यकारेण नाश्रितं तेन तैकायनेरपिच्छो भवति । 'तैकायनीया इति' । अत्र परसप्तम्यामप्यदोषः, एवञ्चत्रियार्षञित इत्यत्र तु वृत्तिकारेणाणो लुगुदाहृतस्तैकायनिः पिता तैकायनिः पुत्र इति, स परिगणनाश्रयेण द्रष्टव्यः, तदा च तैकायनीया इत्यनुदाहरणम् 'कापिञ्जलादा इति' । अत्रापि परसप्तम्यां वृद्धाच्छः स्यात्, एवं ग्लौचुकायना इत्यत्रापि द्रष्टव्यम्, इह तु औपगवेर्यूनश्छात्रा इञो लुकि वृद्धाच्छो भवति, परसप्तम्यामिञश्चेत्यण् स्यात्, नैतदस्य योगस्योदाहरणं, कथम्, इञश्चेत्यत्र गोत्रइति वर्त्तते, तेनेञं विशेषयिष्यामः, गोत्रे य इञ् विहित इति, पारिभाषिकं च गोत्रं गृह्यते, कथं, कण्वादिभ्यो गोत्रइत्यत्र तावद्गोत्रे कुञ्जादिभ्य इत्यस्य गोत्रस्यानुवादः कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तादण् भवतीति, तत्र च पारिभाषिकं गृह्यते तस्यैव चानुवादः, तदेव चेञश्चेत्यत्राप्यनुवर्त्तते तत्कृतो युवप्रत्ययान्तादणः प्रसङ्गः, अवश्यं चैतदेवं विज्ञेयम्, अन्यथा लुप्तेपीञि प्रत्ययलक्षणेनाण् स्यादेव, इमानि तर्ह्यत्रोदाहरणानि यत्खञ्छान्ताः,यत्, राजश्वशुराद्यत् श्वशुरस्यापत्यं श्वशुर्यं, तस्यापत्यं श्वाशुरिस्तस्य छात्रा इति लुकि प्राग्दीव्यतोण् भवति श्वाशुरः, अन्यथा वृद्धाच्छः स्यात्, कुलात्खः कुलीनः, तस्यापत्यं कौलीनिः, तस्य छात्रा, इञो लुकि कौलीनः, स्वसुश्छः, स्वस्रीयः, तस्यापत्यं

स्वास्रीयिः, तस्य छात्रा इञो लुकि स्वस्रीयाः, नैतान्युदाहरणानि। अब्राह्मणाद् गोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानमितीञो लुकि कृते श्वशुर्यः पिता श्वशुर्यः पुत्रः, कुलीनः पिता कुलीनः पुत्रः, स्वस्रीयः पिता स्वस्रीयः पुत्र इति भवितव्यं, न च ब्राह्मणगोत्रे कश्चिदवृद्धिनिमित्तः प्रत्ययः सम्भवति यत इञि कृते छः प्राप्नोति, वृद्धिनिमित्ते तु गोत्रप्रत्यये नास्ति विशेषः, यतः श्रूयमाणेपीञि छेन भवितव्यं लुप्तेपि तस्मिन् गोत्रप्रत्ययान्तस्यापि वृद्धत्वाच्छेन भवितव्यं, तद्यथा औपगवीया इति, तदेवमित्र उदाहरणं न सम्भवतीति स्थितं, यदि तु पूर्वसूत्रे लौकिकस्य गोत्रस्य ग्रहणं तदा स्यादेवेत्र उदाहरणम्, तथाहि। श्वशुर्यादिभ्य उत्पन्नस्येञः सत्यप्यौपसङ्ख्यानिके लुकि तस्य प्राग्दीव्यतीयविवक्षायां गोत्रे ऽलुगचीति प्रतिषेधेन पुनः प्रादुर्भावादिञाश्रयो वृद्धाच्छः स्यात्, यदि तस्य यूनि लुगिति लुङ् क्रियेत, अतोस्मादित्र उदाहरणात्वप्रतिषेधादप्यवसीयते पारिभाषिकं गोत्रं पूर्वसूत्रे भाष्यकारस्याभिमतमिति। किमर्थं पुनरिदमुच्यते यावता यूनोपि गोत्ररूपे विवक्षिते गोत्रप्रत्ययेनाभिधानात्तन्निबन्धन एव प्रत्ययो भविष्यति, अर्थप्रकरणादिना च युवविशेषसिद्धिः, अवश्यं चार्थप्रकरणादिनैव विशेषोवसातव्यः, आरभ्येप्यस्मिन्सूत्रे शब्दस्य साधारणत्वात्, नहि ज्ञायते किं भागवित्तेश्छात्रा भागवित्ता आहो स्विद्भागवित्तिकस्येति, यदा तर्हि विशेषविवक्षा तदापि भागवित्ता इत्येव यथा स्याद्भागवित्तिकीया इति जातु चिन्मा भूदित्येवमर्थमिदम्॥

"फक्फिञोरन्यतरस्याम्"॥ किमर्थमिदं यावता युवरूपविवक्षायां गार्ग्यायणीया इति गोत्ररूपविवक्षायां च गार्गीया इति, अर्थप्रकरणादिना च विशेषावसायः, आरभ्येप्यस्मिन्सूत्रेयमाश्रयणीयो गार्गीया इति शब्दस्य साधारणत्वादित्यत आह। 'पूर्वसूत्रेणेति'। यूनि लुगित्येतदारम्भणीयमित्युक्तं तस्मिंश्चारभ्यमाणे यदीदं नोच्येत फक्फिञोरपि नित्यमेव लुक् स्यात्ततश्च गार्ग्यायणीया इति न स्यात्तस्मादिदमप्यारम्भणीयमित्यर्थः॥

"तस्यापत्यम्" ॥ 'अर्थनिर्देशोऽयमिति' प्रकृत्यर्थविशिष्टः षष्ठ्यर्थोऽपत्यरूपः प्रत्ययार्थोऽनेन निर्दिश्यतइत्यर्थः । तेन समर्थविभक्तेरपि षष्ठ्या निर्देशो दर्शित एव । 'पूर्वैरुत्तरैश्चेति' । पूर्वैस्तावदणादिभिः सम्बद्ध्यते ऽसंयुक्तविधानात्, अन्यथा तस्यापत्यमत इञित्येकं योगमेव कुर्यात्, यतस्त्वसंयुक्तं करोति ततो ज्ञायते पूर्वैःसम्बध्यतइति । उत्तरैरपि सम्बध्यते स्वरितत्वात्साकाङ्क्षत्वाच्च तेषाम् । 'तस्येति षष्ठीसमर्थादिति' । तस्येति सामान्यं षष्ठ्यन्तविशेषोपलक्षणार्थं, समर्थानामिति च निर्द्धारणे षष्ठी, तत्र तुल्यजातीयस्य निर्द्धारणादयमर्थः सम्पद्यते षष्ठ्यन्तात्समर्थादिति । 'अपत्यमित्येतस्मिन्नर्थइति' । प्रथमान्तस्यापत्यशब्दस्यान्यथासम्बन्धानुपपत्तेरयमध्याहारो लभ्यः । 'यथाविहितमिति' । यथार्थयदव्ययमिति वीप्सायामव्ययीभावः । प्राग् दीव्यतोऽणित्यादिभिर्यो यतो विहितः स तस्मादित्यर्थः । इह तस्येति पुंनपुंसकयोरन्यतरेणायं निर्देशः क्रियते एकवचनान्तेन च, तेन लिङ्गान्तराद्वचनान्तराच्च न स्यात् सुमातुरपत्यं सौमात्रः, द्वत्रस्यापत्यं द्वात्रिः, उपगोरपत्यमौपगव इति । अपत्यमिति चैकवचनेन नपुंसकेन च निर्देशः क्रियते तेनैकस्मिन्नेवापत्ये स्यान्न द्वयोर्नापि बहुषु, नपुंसकएव स्यान्न स्त्रीपुंसयोरित्याशङ्क्याह । 'प्रकृत्यर्थेत्यादि'। प्रकृत्यर्थे उपग्वादिर्विशेषस्तस्येत्यस्य विशेषोपलक्षणार्थत्वात् । 'अपत्यमात्रं चेति'। मात्रशब्दोऽयं लिङ्गवचनयोरवच्छेदाय । 'लिङ्गवचनादिकमिति'। आदिशब्देन कालस्य ग्रहणमत्र हि वर्तमानकालेन निर्देशोऽस्तीति प्रतीतिः, यथोक्तं यत्रान्यत्क्रियापदं नास्ति तत्रास्तिर्भवतिपरःप्रथमपुरुषो ऽप्रयुज्यमानोऽप्यस्तीति गम्यतइति, ततश्च तस्य कालस्य विवक्षायां कालान्तरे न स्यात् । 'सर्वमविवक्षितमिति' । नान्तरीयकत्वादुपादानस्यावश्यं हि केन चिल्लिङ्गादिना निर्देशः कर्त्तव्यः । 'तस्येदमित्यपत्येऽपीति'। अणादीनां विधानं सिद्धमिति शेषः । तस्येदंविशेषा ह्यपत्यसमूहविकारादयः सम्बन्धसामान्येऽपि सर्वविशेषान्तर्भावात्, ततश्च तस्येदमित्यनेनैवापत्येऽप्यणादीनां विधानं सिद्धं तत्किं योगविभागेनापत्येण

दयो विधीयन्ते न तस्यापत्यमत इञि यपवादैः संयुक्त एवापत्यार्थो निर्द्दिश्यतइति चोद्यार्थं परिहरति । 'बाधनार्थं कृतं भवेदिति'। तस्येदमित्यनेन विधीयमानानामणादीनां यो बाधकश्छस्तस्य बाधनार्थमपत्येऽणादीनां विधानं कृतं भवेदित्यर्थः । ननु शैषिकश्छः, अपत्यादिचतुर्थपर्यन्तेभ्यो योन्योर्थः स शेषः, तत्कथमपत्ये छस्य प्रसङ्गो येन तद्बाधनार्थमिदमित्याह । 'उत्सर्गः शेष एवासाविति'। यदि योगविभागमकृत्वा तस्यापत्यमत इञित्युच्येत तदा प्रकृतिविशेषसंबद्धस्यैवापत्यार्थस्योपयोगोऽतोन्योपत्यार्थः शेष एव स्यादिति स्यादेव वृद्धादपत्ये छः, योगविभागे त्वपत्यार्थस्याणादिविधावुपयोगाच्छेषत्वाभावाच्छस्याप्राप्तिरेव, सैवात्राप्राप्तिर्बाधेत्युच्यते । उत्सर्ग इति प्रकृतिसामान्यसम्बद्धः सामान्यभूतोपत्यार्थ उक्तः, बाधनार्थस्योदाहरणमह । 'वृद्धान्यस्य प्रयोजनमिति' । 'श्यामगव इति' । श्यामा गावोस्य श्यामगुरिति ॥

"एको गोत्रे" ॥ एकशब्दोयमन्यप्रधानासहायसङ्ख्याप्रथमसमानसाधारणवाची, अन्यार्थे तावद् एकान्याभ्यां समर्थाभ्यां, प्रजामेका रक्षत्यूर्जमेका, एकान् बन्धुरपराचिरासुः, इत्येके मन्यन्ते, यजुष्येकेषामिति, के चित्त्वनयोः प्रयोगयोः के चिच्छब्दपर्याय एकशब्द इत्याहुः । एकः पार्थो धनुष्मतामिति प्रधानार्थे । आद्यन्तवदेकस्मिन्, एकहलादौ, एकहलमध्यइत्यसहायार्थे । एको द्वौ बहव इति सङ्ख्यार्थे । एकेल्पप्राणा इति प्रथमार्थे । तेनैकदिगिति समानार्थे, देवदत्तयज्ञदत्तावेकधनाविति साधारणार्थे, तत्र सङ्ख्यावचनः साधारणवचनः प्रथमवचनो वा गृह्यते, अर्थान्तराणामसम्भवात्, गोत्रं पारिभाषिकं, कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्, अपत्याधिकारे गोत्रग्रहणाच्च । किमर्थमिदमुच्यते, पौत्रप्रभृतावपत्ये विवक्षिते मूलप्रकृतेरुपग्वादेरेव प्रत्ययो यथा स्याद् औपगवादेः प्रत्ययान्तान्मा भूदिति । नैतदस्ति प्रयोजनं सन्विधिवदेतद्भविष्यति, तद्यथा धातोर्विधीयमानः सन् सनन्तान्न भवति, तत् कस्य हेतोः, आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्त्तते, न च सनि विधीयमाने सनन्तो धातुः सम्भवति, तद्वदिहाप्यपत्यप्रत्यये विधीयमा-

नापत्यप्रत्ययान्ता प्रकृतिः सम्भवतीति ततः प्रत्ययो न भविष्यति, विषम उपन्यासः । एकः सन् प्रत्ययः विधायकं च लक्षणमेकमेव, तत्र युक्तं न तस्मिन्विधीयमाने तदन्ता प्रकृतिः सम्भवतीति, इह पुनस्तस्यापत्यमत इञ् यञिञोश्चेति बहूनि लक्षणानि प्रत्ययाश्च बहवस्तत्र कस्मिंश्चित्प्रत्यये विधीयमाने प्रत्ययान्तरेण तदन्ता प्रकृतिः सम्भवत्येव, तथा च गुपादीनां सनः सन् भवति जुगुप्सिषतइति, किं पुनः स्याद्यद्येतन्नारभ्येत, उच्यते । इह केचिन्मन्यन्ते, पुत्रशब्दपर्यायोपत्यशब्दो निघण्टुषु तथा पाठाल्लोके च दृष्टत्वात्, तद्यथा पितामहस्योत्सङ्गे दारकमासीनं दृष्ट्वा कश्चित्पृच्छति कस्य पुत्रोयमिति कस्यापत्यमिति, स देवदत्तस्य यज्ञदत्तस्य वेत्युत्पादयितारं व्यपदिशति नात्मानं, ततश्च यथा पितामहं प्रति पुत्रो न भवति तथापत्यमिति, उत्पादयितैवैकोपत्येन युज्यते न तु पितामहादयोऽपीति । अन्ये तु क्रियानिमित्तकोपत्यशब्दः, न पतन्त्यनेनेत्यपत्यमिति औणादिको यत्प्रत्ययः, यस्य च येनापतनं तत्तस्यापत्यं, व्यवहितजनितोपि पौत्रादिः पितामहादेरपतनहेतुर्भवति, श्रूयते हि 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री'ति, एतेन पुत्रमुत्पाद्य पितृणामनृणो भवतीति प्रतिपादनात् पुत्रोत्पादितया प्रजया पितृणामुपकारो दृश्यते, स्मर्यते च ।

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

इति । इतिहासेषु च जारत्कारवादिषु महती वार्त्ता व्यवहितजनितोप्युपकारक इति, सूत्रकारश्च शब्दविदां मूर्द्धाभिषिक्तः सूत्रयत्यपत्यं पौत्रप्रभृति गोत्रमिति, ततो विज्ञायते क्रियानिमित्तकोप्यपत्यशब्द इति, अन्यथा यथा पौत्रप्रभृतिः पुत्र इत्यनुपपन्नं तादृगेव तत्स्यादेवं सति साक्षात्परम्परया वा यस्य य उत्पाद्यः स तं प्रत्यपत्यमिति सर्वेपि पितामहादयोप्यपत्येन युज्यन्ते न तूत्पादयितैवेति, तत्राद्ये पक्षे यद्येतन्नारभ्येत ततस्तत्रतत्रापत्ये तत्तत्पितृवचनात्सस प्रत्ययः स्यात्त-

यथा उपगोरौपगवस्तस्यौपगविस्तस्यौपगवायनः, एवं शततमेपत्ये एकोनशततमपत्यप्रत्यया इत्यनिष्टं प्राप्नोति, इष्टं च न सिद्ध्यति औपगव इति, तृतीयादेरपगुं प्रत्यनपत्यत्वात् । द्वितीये तूपगोः पञ्चमः पूर्वेषां चतुर्णामपत्यं ततो यद्यौपगोः प्रत्ययस्तद्यौपगव इतीष्टं तावत्सिद्ध्यति, अनिष्टमपि च प्राप्नोति, तच्चानिष्टमनियतमौपगविस्तत औपगवायनस्तत औपगवायनिरिति, पञ्चमे त्रीण्यनिष्टानि षष्ठे चत्वारीत्येवं यावतिथमपत्यमभिधित्सितं तावन्ति न्यूनान्यनिष्टानि प्राप्नुवन्ति, तद्यथा शततमे ऽष्टौ नवतिश्चेति, एवं स्थिते इदमारभ्यते, आरभ्यमाणेप्येतस्मिन्यदि प्रथमः पक्ष आश्रीयते ततो विध्यर्थमेतत्स्याद् नियमार्थं वा, कथं चेदं विध्यर्थं कथं वा नियमार्थं, यदि गोत्रशब्देन पौत्रप्रभृत्यपत्यसमुदाय एकैकमपत्यमभिधीयते ततो विध्यर्थं, तर्हि तथा नियमार्थः सम्भवति, एकस्मिन्नपत्ये ऽनेकप्रत्ययप्रसङ्गस्याभावाद्, न तावदेकस्मिन्प्रयोगे एकस्याः प्रकृतेरनेकप्रत्ययप्रसङ्गः, एकेनैवोक्तत्वात्तस्यार्थस्य, नापि प्रयोगभेदेन नानाप्रकृतिभ्यो नानाप्रत्ययप्रसङ्गः, सर्वदा स्वपितृवचनादेव प्रसङ्गादिति परमप्रकृतेस्तृतीयादावपत्ये ऽप्राप्तः प्रत्ययो विधीयते, कथं पुनरेको गोत्र इत्येतावति वचने परमप्रकृतेः प्रत्ययो विधीयतइति शक्यं विज्ञातुं यावता यथा परमप्रकृतेर्योगादप्राप्त एवमौपगवाच्चतुर्थादाविति ततः किं न विधीयते वचनव्यक्तिभेदात्, एवं ह्यत्र वचनं व्यज्यते गोत्रएकः प्रत्ययो भवति, यत एक एव प्रत्ययः कर्तुं शक्यते तत एव प्रत्ययो भवतीत्यर्थः, एकग्रहणसामर्थ्याच्चायमर्थो लभ्यते । ननु विधीयमानेपि प्रत्यये प्रकृतिप्रत्ययावसम्बन्धौ स्यातां, वचनसामर्थ्यादपत्यापत्यस्यापत्यत्वोपचारात् प्रत्ययो भविष्यतीत्यदोषः, मुख्येपत्ये चरितार्थः प्रत्ययो न स्यादिति विधानमनर्थकमपि, अस्मिन्पक्षे सर्वत्रौपगव इतीष्टं सिद्ध्यति प्रत्ययमालाप्रसङ्गस्तदवस्थ एव, नह्यनेन तत्तत्पितृवचनात्प्राप्तः प्रत्ययः प्रतिषिद्ध्यते, तथा पञ्चमेपत्ये उपगुशब्दादनेन प्रत्यये विहिते तस्यापत्यमिति षष्ठ औपगविः स्यात्, यदा त्वपत्यं पौत्रप्रभृतिगोत्रमित्यपत्य-

शब्देन पौत्रप्रभृत्यपत्यसमुदायं लक्षयित्वा तस्यैव गोत्रसंज्ञा विधीयते, एकैकस्मिन्नपत्ये गोत्रशब्दप्रयोगः समुदायेषु वृत्ताः शब्दा अवयवेष्वपीति न्यायात्, अन्त्येन वा गोत्रशब्देनावयवधर्मेण समुदायव्यपदेशात्पौत्रप्रभृत्यपत्यसमुदायोभिधीयते तदा नियमार्थं गोत्रसमुदाये एक एव प्रत्ययो भवतीति, यद्यप्येकैकस्मिन्नपत्ये एकैकः प्रत्ययः प्राप्नोति तथापि पौत्र एकस्तदपत्ये चापर इति सकलनिरूपणे समुदाये बहवः प्रत्ययाः कृतास्युरिति नियम उपपद्यते, अस्मिन्पक्षे दोषः, अनन्तरापत्यप्रत्ययान्तात्तृतीये प्रत्ययः प्राप्नोति गोत्रशब्दोपादानेन हि नियमः क्रियते गोत्र एक एवेति, ततश्च गोत्रेनेकः प्रत्ययो मा भूत्, अनन्तरएकस्तृतीये चापर इत्येवमनेकः कस्मान्न स्यात्, एवमपि गोत्रे एक एव हि कृतो भवति, अथ वा गोत्रसमुदाये एक एवेत्यनेन किं क्रियते, तृतीयादेश्चतुर्थादौ प्राप्तः प्रतिषिध्यते, यदि तृतीयादेः स्यात्समुदायेनेकः प्रत्ययः कृतः स्यादिति, यस्त्वनन्तरात्तृतीये प्राप्तः सोभ्यनुज्ञायते एक एवेतीतरथावृत्तौ नियमेषु तात्पर्यं, ततश्च यतः प्रत्यये क्रियमाणे समुदायेनेकः प्रत्ययः कृतो भवति ततो न भवतीत्येव वचनार्थो भवति, एवं चतुर्थस्यापत्यप्रत्ययेनाभिधानं न प्राप्नोति, द्वितीयादुत्पन्नस्तृतीयमेवाचष्टे न तृतीयादुत्पद्यतइति किं तु औपगवेरपत्यमिति वाक्यमेव, पञ्चमादेस्तु वाक्येनाप्यभिधानं न प्राप्नोति, नहि तत्तत्पितृवचनः कश्चिदपत्यप्रत्ययान्तः शब्दो ऽस्ति येन विगृह्येत, परमप्रकृतेश्च तृतीयादौ न कुत्र चित्प्रत्ययः प्राप्नोत्ययोगात्, तदेवमस्मिन्पक्षे परमप्रकृतेश्चोत्पत्तिर्वक्तव्या, ऽनन्तराच्च तृतीये प्राप्तस्य प्रतिषेधो वक्तव्यः । स्यादेतत् । न परमप्रकृतेरुत्पत्तिर्वक्तव्या, ऽभेदोपचारेणैव सिद्धेः, अभेदोपचारश्चोपगवौपगवयोरौपगवतदपत्ययोर्वा, तदेवं शततमेप्यपत्ये ऽभेदोपचारपरम्परया औपगव इत्यभिधानं सिध्यति, न चैवमभेदोपचारेणैवेष्टस्य सिद्धेः सूत्रस्य वैयर्थ्यं, भेदविवक्षायां प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थत्वादिति, एवमप्यनन्तरस्य तृतीयस्य च भेदविवक्षायां तृतीयऔपगविः स्यात्, तथाऽनन्तरे तृतीयादौ च यत्र प्रत्ययो भिद्यते यथा गर्गादौ तत्राप्यनिष्टप्रसङ्गः,

यदि तावद्गार्ग्ये गर्गोपचारस्तदा तदपत्यमपि गार्गिः स्याद्गार्ग्यश्चेष्यते। अथापि गर्गस्तदपत्यस्य चाभेदोपचार एवमपि गार्गिः स्यादितीत्थाद्दौ विषये दोषवानेवाभेदोपचारः। तदेवं प्रथमपक्षे विधौ नियमे च दोषप्रसङ्गाद् द्वितीयः पक्ष आश्रीयते, तत्रापि नियमः, यद्यप्येकैकस्मिन्प्रयोगे एकस्याः प्रकृतेरेक एव प्रत्ययः प्राप्नोति तथाऽप्युपगोः पञ्चमे पूर्वेभ्यश्चतसृभ्यः प्रकृतिभ्यः प्रयोगभेदेन नानाप्रत्ययप्रसङ्गे नियमः क्रियते एक एवेति, तदिदमुक्तं भेदेन प्रत्ययप्रसङ्गे नियमः क्रियते। ननु न ज्ञायते क एको भवतीति, यो वा परमप्रकृतेर्यो वा प्रत्ययान्तादिति, नन्वेक इत्युच्यते यदि च प्रत्ययान्तात्प्राप्तः प्रत्ययः स्यादनेकः कृतः स्यात्, क्व, न तावत्पञ्चमे पूर्वेषां प्रत्ययानामस्मिन्प्रयोगे प्रसङ्गोऽपत्यान्तरविषयत्वात्। अथ गोत्रसमुदाये केनासौ निवार्येत, न तावदनेनैव, नहि गोत्रसमुदायो गोत्रग्रहणेन गृह्यते, ऽथापि गृह्येत एवमपि न ज्ञायते यो वा परमप्रकृतेर्यो वा ऽनन्तरादिति, यदि पुनर्गोत्रग्रहणं न क्रियते क्रियमाणं वा ऽपत्यमात्रपरं विज्ञायते न स्यादेष दोषः, अपत्ये समुदाये एक एवेति नियमात्, अपत्याधिकारे गोत्रग्रहणात्त्वेष दोषो जायते, नैष दोषः। अपत्यमिति वर्त्तते, गोत्रेऽपत्ये एक एवापत्यप्रत्ययो भवतीति वचनव्यक्तिः, यदि च प्रत्ययान्तात्प्रत्ययः स्यादपत्यप्रत्ययो ऽनेको गोत्रे कृतः स्यात्, सामर्थ्येन वा प्रत्ययो विशेष्यते, गोत्राभिधाने समर्थानां मध्ये एक एवेति, यदि च प्रत्ययान्तात्प्रत्ययः स्याद्गोत्राभिधानसमर्थो ऽनेकः कृतः स्यात्प्रथमस्यापि समर्थत्वात्, यद्यप्यस्मिन्प्रयोगे ऽपत्यान्तरे वर्त्तते पञ्चमं प्रत्यपि सामर्थ्यं तावदस्ति, यदि वा तस्यापत्यमित्यादिलक्षणैरेक एव प्रत्ययः कर्त्तव्यः, क्व, गोत्रे, यस्मिन्प्रत्यये गोत्रमभिधित्सितं तत्रेत्यर्थः, प्रत्ययान्ताच्च प्रत्यये तस्मिन्नेव प्रयोगे प्रकृतिरूपसम्पादनायापि तावदनेकः कृतः स्यात्, यदि वा प्रथमवचन एकशब्दः कश्च प्रथमः यमकृत्वा प्रत्ययान्तरं कर्त्तुं न शक्यते, साधारणवचनो वा ऽपत्याधिकाराच्च यः सर्वापत्यसाधारणः स एव गोत्रे भवतीति, गर्गशब्दाद्यञेव भवतीति, गर्गशब्दाद्यो यञ् प्राप्तः स एव भवति न

प्रकृत्यन्तरेभ्यः प्राप्ताः प्रत्यया इत्यर्थस्तदाह । 'प्रत्ययो नियम्यत इति' । प्रत्ययान्तरं वार्यतइत्यर्थः । एतेन प्रकृतिर्नियम्यतइत्यपि व्याख्यातम् । 'अथ वेत्यादि' । अस्मिन्पक्षे प्रथमवचन एकशब्द इति दर्शितम् । 'प्रथमा प्रकृतिरिति' । सूत्रे तु शब्दापेक्षया पुल्लिङ्गनिर्देश इति दर्शितम् । 'एक एव शब्द इति' । अथ वास्मिन्पक्षे साधारणवचन एकशब्दः परमप्रकृतिश्च सर्वप्रत्ययसाधारणी, सङ्ख्यावचनो वा प्रथमातिक्रमे कारणाभावात्परमप्रकृतिरेकशब्देन गृह्यते । 'अनयोः पक्षयोः प्रथमा प्रकृति रिति' । एकशब्दस्यार्थतो विवरणं द्रष्टव्यम् ॥

"गोत्राद्यून्यस्त्रियाम्" ॥ अत्राप्यनारभ्यमाणेस्मिन्योगे उत्पादयितर्यपत्ययुक्ते गोत्रसञ्ज्ञाया युवसञ्ज्ञया बाधितत्वादसति पूर्वसूत्रव्यापारे चतुर्थे तृतीयात्पञ्चमे चतुर्थात्षष्ठे पञ्चमादित्येवं प्रत्ययान्तादेव प्रत्ययप्रसङ्ग इत्यनिष्टमेव प्राप्नोति, व्यवहिते च पञ्चमादौ यूनि तृतीयादुत्पत्तिर्न प्राप्नोति तं प्रत्यनपत्यत्वादितीष्टं न सिध्यति, सर्वेषु त्वपत्ययुक्तेषु पञ्चमे यूनि पूर्वेभ्यश्चतुर्भ्यः प्रत्ययः प्राप्नोति, तत्र यदा तृतीयात्तदा गार्ग्यायण इतीष्टं तावत्सिध्यति, अनिष्टमपि प्राप्नोति प्रकृत्यन्तरेभ्योपि प्रत्ययप्रसङ्गादित्यत इदमारभ्यते । अत्रापि यदि पूर्वः पक्ष आश्रीयते ततो विध्यर्थमेतत्स्यान्नियमार्थं वा, यदि युवशब्देनैकमपत्यमुच्यते तत एकस्मिन्यूनि गोत्रादगोत्राच्च प्राप्त्यभावात् चतुर्थेन व्यवहिते पञ्चमादौ यूनि गोत्राद्विध्यर्थं भवति । अथ चतुर्थप्रभृत्यपत्यसमुदायो युवशब्देनोच्यते ततो गोत्राच्चतुर्थे चतुर्थादगोत्रात्पञ्चम इति गोत्रादगोत्राच्च युवसमुदाये प्रत्ययप्रसङ्गे गोत्रादेवेति नियमार्थं भवति, तत्र विधौ गार्ग्यायण इतीष्टं सिध्यति प्रत्ययमालाप्रसङ्गदोषः स्यादेव, तत्पितृवचनात्प्राप्तस्य प्रत्ययस्यानिषिद्धत्वात्, नियमे चतुर्थादेः प्राप्तस्य प्रत्ययस्य प्रतिषेधोऽयं सम्पद्यते, यदि चतुर्थादेः स्याद् युवसमुदाये गोत्रादपि प्रत्ययः कृतः स्यादिति, ततश्च नानिष्टप्रसङ्गः किं तु पञ्चमादौ यूनि गोत्रादुत्पत्तिर्न प्राप्नोति तं प्रत्यनपत्यत्वादिति पञ्चमस्य वाक्येनाभिधानं स्याद्गार्ग्यायणस्यापत्यमिति, षष्ठस्य तु वाक्येनापि न

सिद्ध्यति, नहि तत्पितृवचनोपत्यप्रत्ययान्तः शब्दोऽस्ति येन विरुध्येत, तदेवमत्रापि द्वितीयः पक्ष आश्रीयते नियमश्च तदाह । 'अयमपि नियम इति'। 'गोत्रादेवेति'। यून्येवेत्येष विपरीतं नियमो न भवति एको गोत्रइति नियमाद्यूनोन्यत्र गोत्रप्रत्ययस्य प्रसङ्गाभावात् । 'न परमप्रकृत्यनन्तरयुवभ्य इति'। अन्यथा प्रयोगभेदेन तेभ्योपि स्यात् । 'किं पुनरत्र प्रतिषिध्यतइति'। सर्वस्मिन्नपि प्रतिषिध्यमाने दोषदर्शनात्प्रश्नः । तमेव दोषमाविष्करोति । 'यदि नियम इति'। तदेकवाक्यत्वात्प्रतिषेधस्येति भावः । 'स्त्रियामनियमः प्राप्नोतीति'। परमप्रकृत्यनन्तरयुवलक्षणाः प्रत्ययाः प्रयोगभेदेन पर्यायेण स्युरित्यर्थः । 'अथ युवप्रत्ययः प्रतिषिध्यतइति'। अस्त्रियामिति योगविभागेन प्रसज्यप्रतिषेधाश्रयेण चेति भावः । 'गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीति'। तद्यथा गर्गादिभ्यो यञ् गार्गी गार्ग्यायणी, अपत्यसामान्यलक्षण एव तु प्रत्ययः स्यात्किं कारणमनभिधानं प्राप्नोतीत्यत आह । 'गोत्रसञ्ज्ञाया युवसञ्ज्ञया बाधितत्वादिति'। यथा च बाधस्तथा तत्रैव वक्ष्यते । स्यादेतत् । युवप्रत्ययस्य स्त्रियां लुक्करिष्यते, कथं, यूनि लुगित्यस्यानन्तरं स्त्रियां चेति वक्ष्यामि यूनि लुगित्येव प्राग्दीव्यतइत्येतन्निवृत्तं, यद्वा वतण्डाच्च, लुक् स्त्रियां, यूनि चेति वक्ष्यामि, लुक् स्त्रियामित्येव, ततश्च गार्ग्यशब्दादुत्पन्नस्य फको लुकि कृते लुप्तस्याप्यर्थं प्रकृतिरेवाहेति यञन्तात्स्त्रियां वर्तमानान्ङीष्फौ भविष्यत इति, एवमप्यौपगवशब्दादत इञो लुकि कृते ऽनुपसर्जनाधिकारादणोनुपसर्जनमित्युच्यमान ईकारो न प्राप्नोति अणर्थस्याप्रधानत्वात्, यूनि संक्रान्तत्वात्, माभूदेवमणोनुपसर्जनमिति अणन्तादनुपसर्जनादित्येवं भविष्यति, नैवं शक्यम्, इह हि दोषः स्यादापिशलिना प्रोक्तं व्याकरणम्, इञश्चेत्यण्, तदधीते आपिशला ब्राह्मणी, तदधीतइत्यणः प्रोक्ताल्लुकि अणन्तस्याध्येत्र्यां प्रधानस्त्रियां संक्रान्तत्वान्ङीप्प्राप्नोति, तस्मादणोऽनुपसर्जनमित्येवाश्रयणीयं स्त्रियां योऽणिविहित इति वा, तथा च सत्यौपगवीतीकारो न प्राप्नोति, यद्यप्यत्र प्रत्ययलक्षणेन इञ उपसंख्यानमितीकारः स्यात्, इह तु ग्लुचुकायनेरपत्यमौत्सर्गिकस्याणो लुकि ङीच

प्राप्नोति, इतो मनुष्यजातेरिति ङीष् भविष्यति, इह तर्हि यस्कस्यापत्यं शिवाद्यण् यास्कः, तस्यापत्यं स्त्री, अणो द्व्यच इति फिञ् स्त्रियां लुकि ईकारो न प्राप्नोति, नह्यत्र लुप्तः प्रत्यय ईकारस्य निमित्तं, यश्च श्रूयते न स स्त्रियां विहित उपसर्जनं च, तर्हि का गतिरित्यत आह । 'तस्मादिति'। 'युवसञ्ज्ञैव प्रतिषिध्यतइति'। ननु यूनि यदुक्तं तत्स्त्रियां न भवतीत्युक्तं, न च युवसञ्ज्ञा यून्युक्ता, नहि युवसञ्ज्ञायाः प्राग्युवसञ्ज्ञास्ति, चतुर्थादेर्जीवद्वंश्यस्यापत्यस्योपलक्षणं युवशब्द इत्यदोषः । अपर आह । स्वरूपपरो युवशब्दः, परिभाषा चेयं, यत्र युवशब्दः श्रूयते तत्रास्त्रियामित्युपतिष्ठते, जीवति तु वंश्ये युवा, अस्त्रियामिति वा व्यक्तमेव पठितव्यमिति ॥

"अत इञ्" ॥ 'अकारान्तात्प्रातिपदिकादिति'। अत सातत्यगमनइत्यस्य वा ऽब्दाब्दान्तानां वा कुवेदादीनां ग्रहणं न भवति, यदि स्वार्थिकवादिषु येषामस्येञो बाधनार्थः पाठः शिवप्रोष्ठप्रौष्ठिकप्रभृतीनां तेषां पाठोनर्थकः स्यात्, व्यपदेशिवद्भावादिहापि भवति अस्यापत्यमिरिति, यस्येति लोपे प्रत्ययमात्रस्य श्रवणम्, इह तु एरपत्यमस्य युवेति यञिञोश्चेति फकि यस्येतिलोपं बाधित्वा परत्वादादिवृद्धौ कृतायामायायन इति भवति ॥

"बाह्वादिभ्यश्च" ॥ 'क्व चिदिति'। अजीगर्त्तादिषूदङ्कुपर्यन्तेष्वदन्तत्वात्पूर्वेणेञ् प्राप्तस्तस्य ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण् बाधकः प्राप्तः, अन्ये सर्वे ऽनकारान्तास्तेषु च बाहुप्रभृतिषूवर्णान्तेषु पुष्करसदादिषु हलन्तेषु चाण् प्राप्तः, चूडाशब्दाद्व्यच इति ढक्, वृकलादिभ्यस्तचामिकाण् प्राप्तः, शिरस्लोमन्निति तदन्तयोर्ग्रहणं, सम्भूयोम्भोमितौजसां स लोपश्चेत्येव वक्तव्ये पृथक् सलोपश्चेति वचनं वैचित्र्यार्थम् । उदञ्चु इति पठ्यते, तत्र नायमुकारान्तात्प्रत्ययः किं तु क्विन्नन्तात्प्रत्ययः, नलोपाभावस्तु निपात्यते, उदीचोपत्यमौदञ्चिः, एतत्सर्वं पैलादिष्वौदञ्चिशब्दपाठाद्विज्ञायते। 'बाह्वादिप्रभृतिष्विति'। प्रभृतिग्रहणेन वक्ष्यमाणानां कुञ्जादीनां ग्रहणं,

लोके विदितो लौकिको गोत्रभाव:, संज्ञाकारित्वम् आदिपुरुषत्वमित्यर्थः। एतच्च न्यायसिद्धं, कथम्, अर्थवद्ग्रहणे नानर्थकस्येति, अर्थवतां बाह्वादीनां ग्रहणं, स चार्थः प्रसिद्धः, झटिति प्रतीतेः, स्मृतिशास्त्रस्य चार्थेनानादित्वाद्गनाद्यर्थाभिधायिनामेव ग्रहणं न्याय्यम्। 'बाहुर्नाम कश्चिदिति' एवं कुब्जो नाम नष्टो वा, तस्मादिञेव भवति। 'कौञ्जिनोडिरिति'। यत्तु कार्यं न स्वरूपोपादानेन विधीयते किं तु प्रकारान्तरेण तदिदानींतनार्थाभिधायिनामपि भवति, अत इञ्, दैवदत्तिरिति। 'सम्बन्धिशब्दानां चेति'। कार्यापेक्षया षष्ठी, सम्बन्धिशब्दानां श्वशुरादीनां यत्कार्यमुच्यते तस्य तत्सदृशे प्रतिषेधो भवति। 'संज्ञाश्वसुरस्येति'। संज्ञया यः श्वसुरो न संबन्धेन। 'श्वासुरिरिति'। उणादिषु नावश्यं व्युत्पत्तिकार्यं भवति, तेन सावसे राप्ताविति व्युत्पन्नस्य श्वशुरशब्दस्य नञ्याभ्यामित्येष विधिर्न भवति, तथा मातृपितृभ्यां स्वसेति षत्वं धान्यमातरि न भवति, इदमपि न्यायसिद्धं संज्ञाश्वशुरस्यादिमत्त्वात्सम्बन्धिशब्दस्यानादित्वात्, मातृपितृभ्यामित्यत्रापि प्रसिद्धतरत्वाज्जननीवाचिनो ग्रहणम्। उक्तं च॥

अभिव्यक्तपदार्था ये स्वतन्त्राः लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु॥

इति। 'चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयतीति'। पठितशब्दापेक्षः समुच्चय इति भावः॥

"सुधातुरकङ् च"॥ 'व्यासवरुडेत्यादि'। वेदं व्यस्यतीति वेदव्यासः, कर्मण्यण्, तस्यैकदेशप्रयोगो व्यास इति भीमसेनो भीम इतिवत्, वरुडादयो जातिविशेषाः, तर्हि वक्तव्यं न वक्तव्यं, प्रकृत्यन्तराण्येवैतानि स्वार्थिककन्प्रत्ययन्तानि, अव्यविकन्यायेन च कन्नहि तेषामक्यमेव भवति, व्यासशब्दादृषिवाचिनोपि बाह्वादेराकृतिगणत्वादिञ् भवति॥

"गोत्रे कुञ्जादिभ्यश्च्फञ्"॥ 'चकारो विशेषणार्थ इति'। यद्यत्र चकारो न क्रियेत ततो व्रातफञोरस्त्रियामिति वक्तव्यं, ततोऽश्वादिभ्यः

फञित्यस्यापि ग्रहणं स्यात् । 'कौञ्जायन्य इति' । स्वार्थे ञ्यः, बहुषु तु ञ्यादयस्तद्राजा इति तद्राजत्वात्तद्राजस्य बहुष्वित्यादिना लुक्, किं पुनरत्र ञित्स्वरो भवति उत चित्स्वर इत्यत्राह । 'एकवचनद्विवचनयोरिति' । तत्र हि ञ्यप्रत्ययः श्रूयते, स च पश्चाद्भावीति तन्निबन्धनो ञित्स्वरः सति शिष्टः, बहुवचने तु ञ्ये निवृत्ते सम्प्रधारणा ञित्स्वरो वा चित्स्वरो वेति, तत्र परत्वाद् ञित्स्वरः प्राप्नोति, चित्करणसामर्थ्याच्चित्स्वरो भविष्यति, ञित्करणसामर्थ्याद् ञित्स्वरः प्राप्नोति, अस्त्यन्यन् ञित्करणस्य प्रयोजनं, किं, वृद्ध्यर्थो ञकारः, चित्करणेपि तर्ह्यस्त्यन्यत्प्रयोजनं, किं, विशेषणं, शक्योत्र विशेषणार्थोन्योनुबन्ध आसङ्क्तुं, तत्र चकारानुरोधाच्चित्स्वरो भविष्यति, वृद्ध्यर्थोपि तर्ह्यन्योनुबन्धः शक्य आसङ्क्तुं तत्र ञकारानुरोधाद् ञित्स्वरः प्राप्नोति, एवं स्थितइदमुच्यते । 'परमपि ञित्स्वरं त्यक्त्वा चित्स्वर एवेष्यतइति' । एवं मन्यते । स्वरे योगविभागः कर्त्तव्य, इदमस्ति चितः चितोन्त उदात्तो भवति, ततस्तद्धितस्य चित इत्येव, तद्धितस्य चितोन्त उदात्तो भवति, किमर्थमिदं, परत्वात्प्राप्तस्य ञित्स्वरस्य बाधनार्थं, ततः कितः, कितश्च तद्धितस्यान्त उदात्तो भवतीति, यदि तु कफप्रत्ययः क्रियते तद्धितस्येति योगविभागः शक्यो ऽकर्तुम्, अथैवं कस्मान्न क्रियते गोत्रे कुञ्जादिभ्यश्च्फञ्, बहुषु फक्, नडादिभ्यश्चेति, नैवं शक्यम्, इह हि दोषः स्यात्, कौञ्जायनानामपत्यं माणवकः कौञ्जायन्यः कौञ्जायन्यौ, केन यशब्दः श्रूयते द्व्येकयोर्हि च्फ्यञ्विधीयते, यदा तु च्फञन्तात् ञ्यो विधीयते तदा यून्युत्पन्नस्येञो ण्यक्षत्रियार्षञित इति लुकि कृते तद्राजस्येति ञ्यस्य लुकि प्राप्ते गोत्रे ऽलुगचीति प्रतिषेधाद्यशब्दस्य श्रवणं भवति, तथा कौञ्जायन्यस्यापत्यानि बहूनि, अत इञो लुकि तद्राजस्यैव बहुषु वर्त्तमानत्वाद् ञ्यस्य लुकि कौञ्जायना इति भवति ॥

"नडादिभ्यः फक्" ॥ 'शलङ्कु शलङ्कं चेति' । द्वे अपि प्रथमान्ते, शब्दरूपापेक्षया नपुंसकनिर्द्देशः, शलङ्कु इत्येतच्छब्दरूपं शलङ्कं

भवति, तद्रूपेण परिणमतइत्यर्थः । 'इञेवान्यत्रेति'। बाह्वादेराकृतिगण-त्वादिति भावः । अभ्युपेत्यापि गोत्रमात्रे फको विधानं परिहार-माह । 'अथ वेति'। 'इञो भावस्येति'। शलङ्कुभावापत्तेरप्युपलक्षणमे-तत्, पूर्वत्र परिहारे तस्याः स एव पाठो ज्ञापको वेदितव्यः । 'अग्नि-शर्मन्वृषगणइति'। अग्निशर्मन्शब्दः फकमुत्पादयति वृषगणे गोत्रे, आग्निशर्मायणो भवति वार्षगण्यश्चेद् आग्निशर्मा ऽन्यः, अमुष्येति पठ्यते, तत्रादःशब्दे प्रातिपदिकमात्रे पठितव्ये विभक्त्यन्तस्य पाठादुत्पन्नेपि फकि लुङ् भवति, आमुष्यायणामुष्यपुत्रिकेत्यलुग्विधावस्य ग्रहणं न कर्तव्यं भवति । 'कृष्णरणौ ब्राह्मणवासिष्ठयोरिति' । कार्ष्णायनो भवति ब्राह्मणश्चेत् कार्ष्णिरन्यः, राणायनो भवति वासिष्ठश्चेद् राणिरन्यः । 'क्रोष्टु क्रोष्टं चेति'। क्रौष्टायनः ॥

"हरितादिभ्यो ऽञः" ॥ हरितादिभ्यो ऽञ इति व्यधिकरणे पञ्चम्यौ, हरितादिभ्यः परो योञ् तदन्तात्प्रातिपदिकादित्यर्थः । वृत्ति-कारोप्येतदेव वस्तुतो व्याचष्टे । 'हरितादिभ्यो ऽञन्तेभ्य इति'। हरि-तादिभ्यो गोत्रापत्ये ऽञ् प्रत्ययो भवतीत्ययं त्वर्थो न भवति, बिदादिषु पाठात् । 'सामर्थ्यादिति'। गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो न भव-तीत्येतत्सामर्थ्यं, तस्माद्गोत्राधिकारेपि यूनि प्रत्ययो विज्ञायते, न चैवं गोत्राधिकारस्य विच्छेद इत्याह । 'गोत्राधिकार इति'। उत्तरार्थं गोत्र-ग्रहणमनुवर्त्ततएवेत्यर्थः ॥

"यञिञोश्च" ॥ 'गोत्रग्रहणेन यञिञौ विशेष्येते इति'। गोत्रे यौ यञिञौ विहितावित्येवं, न चैवं. प्रत्ययार्थस्यापत्यस्याविशेषितत्वा-दपत्यमात्रे प्रत्ययप्रसङ्ग इत्याह । 'तदन्ताद्यून्येवायं प्रत्यय इति'। एव-कारः पौनर्वचनिकः, न केवलं पूर्व एव प्रत्ययो यूनि भवति अयमपि यून्येवेति, कस्मादित्याह । 'गोत्राद्यूनीति वचनादिति'॥

"शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु" ॥ शरद्वदादीनां भृग्वादिवं-शप्रभवानां कृत्रिमा अपि पुत्राः सन्ति, स्ववंशप्रभवा अपि, तत्रापत्यविशेषणं क्रियते, तत्र भृगुःशरद्वतोऽपत्यं न भवति पूर्वभावित्वात्, एवं शुनकस्य

वत्सः, तस्माद्भार्गवश्च वात्स्यश्च आग्रयणश्चेति द्वन्द्वे युगपदधिकरणवचनतया वर्त्तिपदस्य बहुषु वृत्तेरत्रिभृग्विति यञञोश्चेति च गोत्रप्रत्ययस्य लुक्, तदाह। 'भार्गवश्चेद्वात्स्यश्चेदिति'। 'दार्भिरिति'। दर्भशब्द ऋषिवचनो न भवति, बाह्वादिषु वा पाठः॥

"द्रोणपर्वतजीवन्तादन्यतरस्याम्"॥ पूर्वमुक्तं गोत्राधिकारश्च शिवादिभ्योऽणिति यावदिति, इहाप्युक्तं गोत्रइत्येवेति, तत्र नोदयति। 'कथमिति'। 'नैवात्रेति'। यस्य ग्रहणमूरीकृत्य भवानानन्तर्ये दोषमाह स नैव गृह्यतइत्येवशब्दस्यार्थः। महाभारते द्रोणो महाभारतद्रोणः। 'अनादिरिति' इदानीमिव ह्युक्तं बह्वादिप्रभृतिष्वित्यादि। नन्वेवं प्रयोगस्यात्यन्तमनुपपत्तिरित्यत आह। 'इदानीं त्विति'। अर्वाचीनादित्यर्थः, न पुनर्महाभारतद्रोणो वृत्तिकारेण समानकालः, अनादेरिदानींतनस्य च द्रोण इति श्रुतिः समाना, तत्रानादिद्रोणस्य ये वंश्या अश्वत्थाम्रा समानकालास्ते द्रौणायना इत्युच्यन्ते, तत्र यद् दृष्टं गोत्रत्वं तदश्वत्थाम्न्यपि द्रोणशब्दवाच्यापत्यत्वात् स्खलितबुद्धयः प्रतिपत्तारो ऽध्यारोपयन्ति, तेनाध्यारोपेणाश्वत्थामनि तथा द्रौणायन इत्येतद्गोत्रप्रत्ययेनाभिधानं भवति॥

"अनृष्यानन्तर्ये बिदादिभ्योऽञ्"॥ 'गोत्रइत्येवेति'। एतेन येऽत्र ऋषिशब्दा बिदोर्वप्रभृतयस्तेभ्यो गोत्रएवान्यथा स्यादिति गोत्रइत्येतदिहानुवर्त्तनीयमिति दर्शयति। 'ये पुनरित्यादि'। कथं पुनर्गोत्राधिकारे सत्ययमर्थो लभ्यतइत्यत्राह। 'अनृष्यानन्तर्यइत्यस्यायमर्थ इति'। अनृषीति पञ्चम्या लुका निर्द्देशः, आनन्तर्यइति स्वार्थे ष्यञ्, एवं च पौत्रा इत्यादावनन्तरस्यैवाभिधानं न गोत्रस्य नापत्यसामान्यस्य च। 'यद्वायमर्थ इति'। अस्मिन् ह्यर्थे ऽनृषिभ्योनन्तरापत्ये विध्यर्थमिदं भवति, ततश्च ऋष्यपत्यनैरन्तर्ये, ऋषयश्च ते ऽपत्यानि च ऋष्यपत्यानि तेषां नैरन्तर्ये ऋषिरूपाण्यपत्यानि निरन्तराणि यत्र तस्मिन्विषये प्रतिषेधो न कृतः स्यात्तत्र को दोष इत्यत्राह। 'तत्रेदमिति'। कश्यप ऋषिस्तस्यापत्यमप्यृषिरेवं सप्तनैरन्तर्येण ऋषयस्तेषां सप्तम इन्द्रहूर्नाम तत्र काश्यपानामिति प्रयोगो नोपपद्यते,

ऽत्र सति यञञोश्चेति लुक् प्रसङ्गात्, तस्मादनृष्यानन्तर्ये इत्यस्य ऋषीणामानन्तर्ये ऽव्यवधाने प्रत्ययो न भवतीत्ययमर्थो व्याख्येय इति भावः। प्रयोगं तावदुपपादयति। 'अनन्तरापत्यरूपेणेति'। अपत्यसामान्यरूपेणेत्यर्थः। न पुनर्ऋष्यणनन्तरापत्ये विधीयते, तत्र यथाभूतप इत्यादौ वस्तुतो भूतविशेषेऽपि सामान्यविवक्षया लुङ् भवति तद्वदिहापि वस्तुतो गोत्रेऽपि तद्रूपतिरस्कारेणापत्यसामान्यरूपविवक्षया ऋष्यण् भवतीत्यर्थः। किं पुनःकारणमियं क्लिष्टकल्पनाश्रीयतइत्याह। 'अवश्यं चैतदेवं विज्ञेयमिति'। ऋषीणामपत्यानां नैरन्तर्यं विषयो यस्य प्रतिषेधस्य स तथोक्तः। 'कौशिको विश्वामित्र इति दुष्यतीति'। किं कारणं, विश्वामित्रस्तपस्तेपे नानृषिः स्यामपि तु ऋषिरेव स्यामिति, तत्र भवानृषिः सम्पन्नः, स पुनस्तपस्तेपे नानृषेः पुत्रःस्यामिति, तत्र भवान् गाधिरप्यृषिः सम्पन्नः, स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति, तत्र भवान्कुशिकोऽपि ऋषिः सम्पन्नस्तदेतदृष्यानन्तर्यं सम्भवति। 'परस्त्री परशुं चेति'। द्वितीयानिर्देशादापद्यतइति शेषः। परस्त्रीशब्दः प्रत्ययमुत्पादयति परशुं चादेशमापद्यते, परस्त्रिया अपत्यं पारशवः, ब्राह्मणस्य शूद्रायामूढायामुत्पन्नः, सा च जातितः परस्त्री भवति, यस्तु परभार्यायामुत्पन्नः पारस्त्रैणेयः स भवति कल्याण्यादिः, अनुशतिकादिश्च। पारशव इत्यत्र पूर्वोत्तरपदसम्प्रमोहादनुशतिकादिकार्याभावः॥

"गर्गादिभ्यो यञ्"॥ 'अपत्यसामान्ये भविष्यतीति'। अन्ये तु मनुतन्तुशब्दः समुदाय एको न तु द्वौ शब्दौ पठिताविति वदन्ति, तथा च ब्राह्मणे मानुतन्तव्यमुवाचेति प्रयोगः। कालवमनुतन्तुकुशिकानामिति च प्रवरे, 'कथं मानवीति'। लोहितादिपाठाच्चित्येन ष्फेण भाव्यमिति भावः। 'अनन्तरापत्यविवक्षायां त्विति'। गोत्रस्यापीति बोद्धव्यं, तथा च जामदग्ना वात्सा इति प्रवरे प्रयोगः। 'वाजासइति'। वाजशब्दो यञमुत्पादयति असे असमासे समासे तु सौवाजिः, यद्धवता प्रातिपदिकेनेत्यस्यानित्यत्वज्ञापनार्थो ऽसइति प्रतिषेधः॥

"मधुबभ्वोर्ब्राह्मणकौशिकयोः" ॥ गणएव बभ्रुकौशिकइति वक्तव्यम्, एवं हि द्विर्बभ्रुग्रहणं न कर्त्तव्यं भवति, तथा तु न कृतमित्येव ॥

"कपिबोधादाङ्गिरसे" ॥ 'कापेय इति'। इतश्चानिञ इति ढक्। 'बौधिरिति'। अनृषित्वादिञ्, बाह्वादिर्वा ॥

"वतण्डाच्च" ॥ 'किमर्थमिति'। वतण्डाल्लुक् स्त्रियामित्येव कस्मान्नोक्तं, किमर्थो योगविभाग इति प्रश्नः। परिहरति। 'शिवादिष्वपीति'। वतण्डो नाम ऋषिस्तत ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः, तत्र यथानाङ्गिरसे समावेशो भवति एवमाङ्गिरसेपि स्यादिति तन्निवृत्त्यर्थो योगविभाग इत्यर्थः ॥

"लुक् स्त्रियाम्" ॥ 'वातण्ड्यायनीति'। लोहितादिलक्षणः ष्फः। 'वातण्डीति'। ऋषित्वात् ष्यङ् भविष्यति ॥

"अश्वादिभ्यः फञ्" ॥ 'ये त्वत्र गोत्रप्रत्ययान्ताः पठ्यन्तइति'। बैल्व आनुडुह्य आत्रेय इत्येते, तत्र बैल्यशब्दो वृद्धेत्कोसलाजादाञ्ञ्यङिति ञ्यङन्तः, विलिर्नाम राजर्षिः आनुडुह्यशब्दो गर्गादियञन्तः, आत्रेय इतश्चानिञ इति ढगन्तः, । 'शप आत्रेयइति'। शपशब्दात्फञ् भवति आत्रेयश्चेत्, शापायनः। आत्रेयादन्यत्र शापिः, अनृषित्वादिञ् बाह्वादिर्वा। अन्ये त्वणमेव प्रत्युदाहरन्ति। 'पुंसि जातइति'। पुंसीति प्रकृतिविशेषणं, जातस्यापत्यं जातायनः, स्त्रियां तु जाताया अपत्यं जातेय इति ढगेव भवति, अन्यथा लिङ्गविशिष्टपरिभाषया फञेव स्यात्, । 'आत्रेयभरद्वाजइति'। आत्रेयायनो भवति भारद्वाजश्चेत्, अन्यत्रात इञो एयचत्रियेति लुक्, । 'भारद्वाजात्रेयइति'। अत्रिगोत्रजो यदा भारद्वाजगोत्रजेन पुत्रत्वेन स्वीक्रियते तदा प्रत्ययः स ह्यात्रेयश्च भवति भारद्वाजस्य च गोत्रं भवति, भारद्वाजायन आत्रेयश्चेद् भारद्वाजोन्यः, विदाद्यञेव भवति ॥

"शिवादिभ्योण्" ॥ 'यथायथमित्यादि'। तत्रादन्तेष्विञोपवादः, मुनिसन्धिभूमिप्रभृतिष्वितश्चानिञ इति ढकः, स्त्रीप्रत्ययान्तेषु स्त्रीभ्यो ढक् ढ्रच इति प्राप्तस्य ढकः, गङ्गाविपाट्शब्दयोस्तु यस्मि-

ऽप्राप्ते स वृत्तिकारणैवोक्तः, जरत्कारुशब्दस्य तु पाठे प्रयोजनं चिन्त्यम्। केचिदाहुः। शुभ्रादिष्वयं पठनीयः, जारत्कारेय इति यथा स्यात्, तत्र तु ठका समावेशार्थोऽस्य पाठ इति। 'ण्यप्रत्ययस्य तु बाधो नेष्यतइति'। अत्र हेतुमुदीचामित्यत्र वक्ष्यति। 'शुभ्रादिठका चेति'। शुभ्रादिभ्यश्चेत्यत्र वक्ष्यति चकारोऽनुक्तसमुच्चयार्थ आकृतिगणतामस्य बोधयति, तेन गाङ्गेयः पाण्डेय इत्यादिसिद्धं भवतीति तदभिप्रायेणेदमुक्तम्। रवणाविश्रवणाशब्दौ पठ्येते, तौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे वा, वृत्तिविषये तत्सामानार्थ्ये, विश्रवसोऽपत्यं वैश्रवणो रावणः। 'द्व्यचो नद्या इति'। नदीवाचिनो ये द्व्यचः कुल्याप्रभृतयस्तेभ्यस्तचामिकाणोपवादे द्व्यच इति ठकि प्राप्ते ऽण् भवति। 'त्रिवेणी त्रिवणं चेति'। त्रिवेण्या अपत्यं त्रैवणः, तचामिकाणि सिद्धे आदेशार्थं वचनम्। अथाणग्रहणं किमर्थं, न यथाविहितमित्येवोच्येत, एव मुच्यमाने इञादय एव स्युस्ते विहिताः पुनरारम्भसामर्थ्यद्यो विहितो न च प्राप्नोति स एवाण् भविष्यति, इदं तर्हि प्रयोजनम्, ऋष्टिषेणशब्दोत्र पठ्यते तत्र यथाविहितमित्युच्यमाने ऽत इञ् प्राप्तस्तस्य सेनान्तलक्षणो ण्यो बाधकः प्राप्तस्तत्रारम्भसामर्थ्यादिञ् प्रसज्येत पुनरण्ग्रहणादणेव भवति॥

"अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः"॥ अपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरे यत्परिभाषितं तस्यापि ग्रहणं दृष्टं वृद्धस्य च पूजायां वृद्धो यूनेति, इह तु प्रत्यासत्तेरेतच्छास्त्रसिद्धस्यैव वृद्धस्य ग्रहणमित्याह। वृद्धिर्यस्येति'। 'अवृद्धाभ्य इति शब्दधर्म इति'। वृद्धपर्युदासे सति नञिवयुक्तन्यायेन तत्सदृशस्यैव शब्दस्य सम्प्रत्ययात्, स्त्रीलिङ्गनिर्देशस्तु नदीमानुषीभ्य इत्यनेन सामानाधिकरण्यात्, कथं पुनरर्थवृत्तेः शब्दवृत्तिना सामानाधिकरण्यमभेदोपचारात्, अवृद्धशब्दवाच्यत्वान्नदीमानुष्य एवावृद्धा उक्ताः। 'नदीमानुषीभ्य इत्यर्थधर्म इति'। स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात्, वृद्धपर्युदासाच्च सञ्ज्ञानद्या अपि ग्रहणं न भवति लौकिकार्थवृत्तिना मानुषीशब्देन साहचर्यात्, तन्नामिकाभ्य इति सर्वनाम्ना प्रत्ययप्रकृतेः परामर्श इति ता अवृद्धाः प्रकृतयो नामानि यासां नदीमानुषी-

णामिति बहुव्रीहिः, तदेवं त्रिभिरपि पदैरर्थ एव निर्दिश्यते, तत्रार्थात्प्रत्ययविधानानुपपत्तेस्तद्वाचिनीभ्यः प्रकृतिभ्यः प्रत्ययो विज्ञायते, तदिदमुक्तम् । 'तेनाभेदात्प्रकृतयो निर्दिश्यन्तइति' । तेनार्थेनाभेदात् । एतदुक्तं भवति, अवृद्धशब्दवाच्यास्तत्स्वामिका या नदीमानुष्यस्ताभ्योऽण् प्रत्ययो भवति, कोऽर्थस्तद्वाचिनीभ्यः प्रत्ययो भवतीति, तदेतदाह । 'अवृद्धानि यानीत्यादि' । एवं च कृत्वाऽवृद्धेभ्यो नदीमनुषीनामभ्य इति वक्तव्यं, तथा तु न कृतमित्येव । 'ठकोपवाद इति' । स्त्रीलिङ्गनिर्देशात् भिन्नोद्धशोणादिष्वयं विधिर्न भवतीति भावः ॥

"ऋष्यन्धकवृष्णिकुरुभ्यश्च" ॥ 'ऋषयः प्रसिद्धा वसिष्ठादय इति' । ऋषयो मन्त्रदर्शिनस्ते च प्रसिद्धा वसिष्ठादयो यथा इन्द्रादयो देवतास्तेन तेन परिभाषणीया इति भावः । 'वंशाख्या इति' । केषां चिद्वंशानामेता आख्या इत्यर्थः । एवं के चिद्वंशा आख्यायन्तइति यावत् । मध्येपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानित्यभिप्रायेणाह । 'इञोपवाद इति' । 'अत्र्यादिभ्य इति' । तत्र ऋष्यणोवकाशो वासिष्ठः, इतश्चानित्र इति ठकोवकाशो डुलेरपत्यं डौलेय, आत्रेय इत्युभयप्रसङ्गे परत्वाड्ढग् भवति, सेनान्तलक्षणस्य ण्यस्यावकाशो हारिषेण्यः, अत्र हि एति सञ्ज्ञायामगादिति षत्वस्यासिद्धत्वात्सेनान्तमेतद्भवति, ऋष्यणः स एव, जातसेनो नाम ऋषिस्तस्मादुभयप्रसङ्गे परत्वाद् ण्यो भवति जातसेन्यः, एवमुदीचामिञ्, जातसेनिः, अन्धकाणोवकाशः श्वाफल्कः, ण्यस्य स एव, उग्रसेनादन्धकादुभयप्रसङ्गे परत्वाण्ण्यो भवति औग्रसेन्यः, वृष्ण्यणो ऽवकाशः वासुदेवः, ण्यस्य स एव, विष्वक्सेनाद्वृष्णेर्वैष्वक्सेन्यः, कुर्वणो ऽवकाशः नाकुलः, ण्यस्य स एव, भीमसेनात्कुरोर्भैमसेन्यः । 'काकतालीयन्यायेनेति' । यदृच्छया । 'असङ्कीर्णेति' । शब्दान्तरैरसङ्कीर्णा इत्यर्थः । सङ्कुलिताः संहताः । 'सुबहव इति' । व्युत्पिपादयिषिताः सर्वइत्यर्थः । अनित्योपाश्रयेणापि नित्यस्यान्वाख्यानं दृष्टं यथा अकाश्रयेण कालस्य । 'अथ वेत्यादि' । त्रिपुरुषानूकं नाम कुर्यादित्यनेन न्यायेनान्धकादिवंशा

चापि नित्या एव । 'तेषु ये शब्दा इति' । अन्धकादिष्ववाद्धत्वेपि ये शब्दाः प्रयुज्यन्ते तेभ्य इत्यर्थः ।

"मातुरुत्संख्यासंभद्रपूर्वायाः" ॥ 'द्वैमातुर इति' । तद्धितार्थे द्विगुः, पश्चात्तद्धितः, एकस्या औरसः सुतो ऽपरस्याः कृत्रिम इति द्वैमातुरत्वम् । 'साम्मातुर इति' । प्रादिसमासात्तद्धितः । 'भाद्रमातुर इति' । विशेषणसमासादण्, तेनेत्यादिना ऽर्थापेद्वयस्य स्त्रीलिङ्गनिर्देशस्य फलं दर्शयति । 'धान्यमातुरिति' । धान्यं यो मिमीते स धान्यमाता याजकादित्वात्षष्ठीसमासः, धान्यमातरि यो मातृशब्दस्तस्य ग्रहणं न भवतीत्यर्थः, तेन सम्मिमीते तस्यापत्यं साम्मात्र इत्युत्वं न भवति, न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः, सम्बन्धिशब्दस्य हि प्रसिद्धतरत्वात्तस्यैव ग्रहणं न्याय्यम् । 'सङ्ख्यासम्भद्रपूर्वाया इति किमिति' । न तावत्केवलात्प्रसङ्गः, नहि मातुरपत्यमिति विशेषणं सम्भवति, अपत्ये मातृसम्बन्धस्याव्यभिचारात्, तेन तदन्तस्य ग्रहणात् सङ्ख्यादिपूर्वस्य तावत्सिद्धमिति प्रश्नः, अन्यपूर्वस्यापि स्यादित्युत्तरम् । 'सौमात्र इति' । क्व चिदस्यानन्तरं ग्रन्थः, 'शुभ्रादिपाठाद्वैमा य इति, तेन विपूर्वो मातृशब्दो न प्रत्युदाहर्तव्य इति भावः' । वयं ब्रूमः । स्त्रीभ्यो ढगित्यत्र स्त्रीप्रत्ययविज्ञानादसत्यर्थग्रहणे इह न भवति, ऐडविडो दारद इत्यस्यानन्तरमयं ग्रन्थः, इह तु लेखकैः प्रमादाल्लिखित इति ॥

"कन्यायाः कनीन च" ॥ 'ढकोपवाद इति' । स्त्रीभ्यो ढगिति प्राप्तस्य । 'कन्याया अपत्यं कानीन इति' । शास्त्रोक्तविवाहसंस्कारपूर्वस्य पुरुषसंप्रयोगस्याभावः कन्याशब्दनिमित्तं नाक्षतयोनित्वं, या तु विवाहसंस्कारेण विना पुरुषेण सम्प्रयुज्यते सा कन्यात्वं न जहाति, तेनैतच्च नोदनीयं यदि कन्या नापत्यमथापत्यं न सा कन्या कन्या चापत्यं चेति विप्रतिषिद्धमिति, अपर आह । मुनिदेवतामाहात्म्यात्सा पुंयोगेपि न कन्यात्वं जहाति यथा कुन्ती यथा सत्यवती सात्रोदाहरणमिति तदाह 'कानीनः कर्णः कानीनो व्यास इति' ॥

"विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु" ॥ अत्र वत्सादीनां

मूलप्रकृतीनां विकर्णादीनामन्यपत्यत्वायोगादपत्यप्रत्ययान्तानां वात्स्यादीनां शब्दानां द्वन्द्वे युगपदधिकरणवचनतया प्रत्येकं बहुत्वोपजननात्तस्य बहुत्वस्य लोपिभिरेव कृतत्वादपत्यप्रत्ययस्य लुका निर्देशस्तदाह । 'वैकर्णो भवति वात्स्यश्चेदित्यादि' ॥

"स्त्रीभ्यो ढक्" ॥ 'स्त्रीग्रहणेनेत्यादि' । स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात्, स्त्र्यर्थस्यापि ग्रहणं न भवति विमातृशब्दस्यार्थस्य शुभ्रादिषु पाठात्, तस्य तु स्त्र्यर्थत्वं विधवाशब्दसाहचर्याद्विज्ञेयं, किं च स्त्रीशब्दस्य स्वरितत्वं प्रतिज्ञायते, स्वरितेन चाधिकारावगतिर्भवति, तेन टाबादिस्त्रीप्रत्ययान्तानामेव ग्रहणं युक्तं, क्तिन्नादयस्तु व्यवधानान्न गृह्यन्ते । 'ऐडविडो दारद इति' । इडविट्शब्दाज्जनपदशब्दात्क्षत्रियादञ्, दरच्छब्दाद्वृद्धेत्कोसलाजादञ्यङ्, वृद्धेत्कोसलाजादञ्यङ्, तयोः स्त्रियामतश्चेति लुक्, ततस्तदपत्ये ऽणेव भवति । 'वृषे वाच्य इति' । वृषो बीजाश्वः, तेन चार्थेन विशेषविहितेनापत्यलक्षणोऽर्थे ढको बाध्यते, तेनापत्ये ऽणेव भवति । 'वाडव इति' । चतुष्पाल्लक्षणो ढञपि न भवति, अचतुष्पाद्वाचित्वात् । 'अण् क्रुञ्चेति' । वृष इति नापेक्ष्यते, ऽपत्य एवायं विधिः, ढकोपवादः, क्रुञ्चा च कोकिला च समाहारद्वन्द्वे नपुंसकह्रस्वत्वम् ॥

"द्व्यचः" ॥ 'तत्रामिकाणोपवाद इति' । अन्यत्र पूर्वेणैव सिद्धत्वात् ॥

"शुभ्रादिभ्यश्च" ॥ 'यथायोगमित्यादि' । तत्रादन्तेष्विञोपवादः, शलाकादिषु तत्रामिकाणः, विधवाशब्दात्तु क्षुद्रालक्षणस्य ढ्रकः, चतुष्पाद्वाचिषु चतुष्पाल्लक्षणस्य ढञो, गोधाशब्दाद्गोधाया ढ्रकः, वचनात्सोपि भवति, क्व चिदौत्सर्गिकस्याणः । 'पाण्डवेय इति' । ढे लोपोऽकद्र्वा इति लोपो न भवति, कद्रूपर्युदासेन स्त्रीलिङ्गस्य ग्रहणात्, पाण्डवशब्दाद्वा प्रत्ययः । 'लाक्षणश्यामयोर्वासिष्ठ इति' । लाक्षणेयो भवति वासिष्ठश्चेत् लाक्षणिरन्यः, श्यामेयो वासिष्ठः श्यामायनोन्यः, अश्वादित्वात्फञ् ॥

"कुलटाया वा" 'कुलान्यटतीति कुलटेति'। मूलविभुजादिषु दर्शनात्कः प्रत्ययः, पचाद्यच् तु न लभ्यते, अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेत्यण् प्रसङ्गात्। 'या तु कुलान्यटन्ती शीलं भिनत्तीति'। एकत्र कुले प्रविष्टा स्वैरिणी या कुलान्तरमटति सा दुःशीला कुलटेत्यर्थः। 'क्षुद्राभ्यो वेति परत्वादिति'। क्षुद्रा अङ्गहीनाः शीलहीनाश्च, या पुनर्भिक्षालिप्सया सुशीलापि कुलान्यटति तस्या इह ग्रहणम्॥

"चटकाया ऐरक्"॥ स्त्रीलिङ्गनिर्द्देशात्पुल्लिङ्गाच्च प्रसज्यतइत्याह। 'चटकाच्चेति वक्तव्यमिति'। एवं च पुल्लिङ्गनिर्द्देश एव कर्त्तव्यः, लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गादपि भविष्यति, तथा तु न कृतमित्येव। 'स्त्रियामपत्ये लुग्वक्तव्य इति'। 'चटकाया अपत्यमिति'। चटकस्यापीति द्रष्टव्यम्। 'चटकेति'। लुक्तद्धितलुकीति टापो लुकि कृते पुनरजादिलक्षणष्टाप् कर्त्तव्यः॥

"आरगुदीचाम्"॥ 'रका सिद्धत्वादिति'। न लक्षणेन पदकारा अनुवर्त्त्या इत्यवग्रहेपि नास्ति विशेषः। 'ज्ञापकार्थं त्विति'। भावप्रधानो ज्ञापकशब्दः, ज्ञापनार्थमिति वा पाठम्। 'जाडारः पाण्डार इति'। ह्रस्वान्तादयं प्रत्यय इति रका नास्ति सिद्धिः॥

"क्षुद्राभ्यो वा"॥ 'अङ्गहीना इति' 'काणादयः शीलहीना इति'। अनियतपुंस्का दासीप्रभृतयः॥

"ढकि लोपः"॥ 'कथं पुनरित्यादि'। ढग्विधौ टाबादिस्त्रीप्रत्ययान्तानां ग्रहणाच्छुभ्रादिष्वस्यापाठात् प्रश्नः। 'एतदेवेत्यादि'। नह्यसतो निमित्तभावः सम्भवति॥

"मातृष्वसुश्च"॥ 'पितृष्वसुरित्येतदपेक्ष्यतइति'। चकारेणानुकृष्यतइत्यर्थः। तदनुवृत्तौ योर्थः सम्पद्यते तं दर्शयति। 'पितृष्वसुर्यदुक्तमिति'। किं पुनस्तदित्याह। 'छण् प्रत्ययो ढकि लोपश्चेति'। तेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ढकि लोप एव प्राप्नोति न तु छणिति न चोदनीयमिति भावः॥

"चतुष्पाद्भ्यो ढञ्" ॥ कमण्डलुशब्दश्चतुष्पाद्वचनोऽस्ति, दृश्यते हि कमण्डलुपद आदधीतेति । जम्बुः शृगालः ॥

"गृष्ट्यादिभ्यश्च" ॥ 'अणादीनामिति' । आदिशब्देन ठकः, बहुवचनं तु प्रकृतिभेदेन तयोरेव बहुत्वात् तत्राजवस्तिमित्रयुशब्दयोरणोपवादः, शेषाणामितश्चानिञ इति ठकः । 'गृष्टिशब्दो य इति' । सकृत्प्रसूता स्त्री सर्वैव गृष्टिर्न धेन्वादिश्चतुष्पादेवेति भावः । अपर आह । सकृत्प्रसूतत्वसाधर्म्येणाचतुष्पदीष्वपि गौणो गृष्टिशब्द इति ॥

"राजश्वशुराद्यत्" ॥ 'क्षत्रियजातिश्चेदिति' । प्रकृतिप्रत्ययसमुदायेन क्षत्रियजातिश्चेद्गम्येतेत्यर्थः । 'राजन्य इति' । ये चाभावकर्मणोरिति प्रकृतिभावः । 'राजनोन्य इति' । स पुनर्वैश्याशूद्रयोरक्षत्यत्वः, अचिति प्रकृति भावः ॥

"क्षत्राद्घः" ॥ 'घप्रत्ययो भवतीति' । घशब्द एव न तरप्तमपौ, अन्यथा सर्वत्रैव प्रत्ययविधौ घ इति तरप्तमपोर्ग्रहणात्प्रत्ययादेर्घकारस्येयादेशवचनमनुपपन्नं स्यात्, न च तुयाद्वन्, घच्छौ चेति घन्घचावकाशौ, तत्रापि सञ्ज्ञाशब्दः सानुबन्ध उपात्तः । अनुबन्धस्तु संज्ञ्यर्थ इति सम्भवात् ङमुण्नित्यमितिवत् । किमिदम्भ्यां वो घ इत्यत्रापि तरप्तमपोरेवादेशत्वं विज्ञायेत । 'अयमपि जातिशब्द एवेति' । राजन्यजात्यभिधाने घो भवति, वैश्याशुद्रयोरक्त्याहिते तु इञेवेत्यर्थः ॥

"कुलात्खः" ॥ 'उत्तरसूत्रइत्यादि' । पूर्वपदप्रतिषेधस्यैतत्प्रयोजनमाढ्यकुलादेर्मा भूदिति, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादेवाढ्यकुलादेर्न भविष्यति, पश्यति त्वाचार्यो नायं प्रतिषेधः कुलशब्दे प्रवर्त्ततइति, तेनात्र तावत्तदन्तस्य ग्रहणं येन विधिस्तदन्तस्येत्यत्र स्वरूपमित्यनुवृत्तेः केवलस्यापि ग्रहणं सामान्यापेक्षं च ज्ञापकं प्रातिपदिकग्रुतिमती परिभाषा कुशलशब्दे न प्रवर्तते इति तेन व्यपदेशिवद्भावोप्रातिपदिकेनेत्यस्या अप्यप्रवृत्तिः 'कुलीन इति, उत्तरसूत्रे ऽन्यतरस्यांग्रहणात्केवलादप्यनेन खो भवति, प्रशस्तो वंशः कुलं, तस्यापत्यं तत्प्रभवस्यापत्यमित्यर्थः ॥

"अपूर्वपदादन्यतरस्यां यड्ढकञौ" ॥ ननु च पूर्वपदशब्दः समासावयवे रूढो न तस्य कुलशब्दे प्रसङ्ग इत्यत आह । 'समाससम्बन्धिन इत्यादि' । समाससम्बन्धिपूर्वपदं कुलशब्दस्यापि कथं चित्सम्बन्धि भवति द्वयोरप्येकसमासावयवत्वात्, अवस्थावचनस्तु[1] नैवात्र शङ्कनीयः, पूर्वपदशब्दस्य समासावयवे रूढत्वात्, तेन देवदत्तः कुलीन इत्यादौ वाक्ये प्रतिषेधशङ्का न कार्या । 'बहुच्पूर्वादपीति' । अपूर्वादित्युच्यमाने बहुकुलशब्दो बहुचा सपूर्व इति ततः प्रत्ययो न स्यात् । किं च देवदत्तः कुलीन इत्यादावपि प्रतिषेधः स्यात्तस्माद्रूढिपरिग्रहार्थमपि पदग्रहणं कर्त्तव्यम् ॥

"व्यन्सपत्ने" ॥ ननु च नित्यं सपत्न्यादिष्विति सपत्नीशब्द एव स्त्रीलिङ्गो व्युत्पादितस्तत्कथं पुल्लिङ्गस्य प्रयोगस्तत्राह । 'सपत्नशब्द इत्यादि' । 'इवार्थइति' । सादृश्ये, यथा पत्नी दुःखहेतुस्तथा शत्रुरपीत्येतत्सादृश्यम् । 'समुदायेन चेदिति' । एतेन समुदायार्थः सपत्नो न प्रकृत्यर्थो नापि प्रत्ययार्थविशेषणम्, अनर्थकावेवात्र प्रकृतिप्रत्ययाविति दर्शयति, अथानुवृत्तस्यापत्यस्य विशेषणमेव सपत्नः कस्मान्न भवति, तत्राह । 'अपत्यार्थोऽत्र नास्त्येवेति' । एतदेवोदाहरणेन स्पष्टयति । 'पाप्मना भ्रातृव्येणेति' । नहि पाप्मा भ्रातुष्पुत्रो भवति, अतः सपत्नमात्रे भ्रातृव्यशब्दस्य दर्शनादपत्यार्थोऽत्र नास्ति, किं च योपि सपत्नो भ्रातुरपत्यं सम्भवति सोप्याद्युदात्ताद्भ्रातृव्यशब्दात्सपत्नरूपेणैव प्रतीयते नापत्यरूपेण, तथा च भ्रातृव्यो भ्रातृव्य इति सह प्रयोगोपि व्यन्व्यदन्तयोर्भवति, अतः सुष्ठूक्तमपत्यार्थो नास्त्येवेति ॥

"रेवत्यादिभ्यष्ठक्" ॥ 'ढगादीनामपवाद इति' । तत्र रेवतीशब्दो ङीबन्तः, अश्वमणिद्वारशब्दोपपदात्पालयतेः कर्मण्यणि ङीप्, तेषु[2] ढक् प्राप्तः, वञ्चु प्रलम्भने, अस्माद्वृकोपपदात्कर्त्तर्युपमान इति णिनिः, अस्मादण् प्राप्तः वृकग्रीवकर्णदण्डोपपदाद्ग्रहेः कर्मण्यण्, कुक्कुटस्येवाक्षिणी यस्य स कुक्कुटाक्षः, एष्विञ् प्राप्तः ॥

१ पूर्वशब्द इति २ पु० पाठः । २ चतुर्विंशत्यधिकं २ पुस्तके ।

"गोत्रस्त्रियाः कुत्सने ण च" ॥ पारिभाषिकस्य गोत्रस्य ग्रहणमित्याह । 'अपत्यं पौत्रेति' । लौकिकस्य त्वपत्यमात्रस्य ग्रहणं न भवति, यदि स्यात्तत् स्त्रिया इत्येव ब्रूयात्तच्छब्देन प्रकृतस्यापत्यस्य परामर्शादेव तदर्थलाभात् । 'गार्गे इति' । गार्गीशब्दो यञश्चेति ङीबन्तः, तस्य भस्याढे तद्धितइति पुंवद्भावेन पुंशब्दस्यातिदेशात् गार्ग्यशब्दाद्गोत्रस्त्र्यभिधायिनः प्रत्ययः, यस्येति च आपत्यस्य च तद्धितेनातीत्यल्लोपयलोपौ । 'ग्लौचुकायन इति' । ग्लुचुकस्यापत्यं प्राचामवृद्धात्फिन्बहुलमिति फिन्, इतो मनुष्यजातेरिति ङीष्, तस्य पुंवद्भावेन निवृत्तिः, ततः प्रत्ययः, णस्य णित्करणमत्र वृद्ध्यर्थं, गार्ग्यादौ प्रकृतेरेव वृद्धत्वात्, इह तु वतण्डस्यापत्यं गोत्रं स्त्री, वतण्डाच्च लुक्, स्त्रियां वतण्डी, तस्या अपत्यं वातण्डो जाल्म इति पुंवद्भावेन ङीनि निवृत्ते लुक् स्त्रियामित्यस्य गोत्रे लुगचीति प्रतिषेधाद्वातण्ड्यशब्दादेव प्रत्ययः, इह च गार्ग्या अपत्यं स्त्री गार्गा सा भार्या यस्य गार्गाभार्य इति जातेश्चेत्येव पुंवद्भावप्रतिषेधसिद्धिः, गोत्रं च चरणैः सहेत्यपत्यमात्रं गृह्यते, तेन वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधो न प्रयोजनं, किं च गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः, अस्त्रियामिति युवसञ्ज्ञाया निषेधाद्गोत्रसञ्ज्ञैवावतिष्ठते, तत्रैको गोत्रइति नियमाच्चैत्र गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययः सम्भवति, तेन नास्ति गार्गा नतरां गार्गाभार्यः । अपर आह । अस्ति गार्गा, कथं गार्ग्या अपत्यं या स्त्री न सा युवतिर्नापि गोत्रं, नहि सा गर्गस्यापत्यं पौत्रप्रभृतेश्चापत्यस्य गोत्रसञ्ज्ञा विधीयते तदभावादेको गोत्रइति नियमाभावः, ततश्च णस्य भावादस्ति गार्गेति, ये तु नास्ति गार्गेत्याहुस्ते मन्यन्ते मातृवंशः पितृवंशश्च द्वावपि वंशौ प्रतीयमपत्यं भवति अपातहेतुत्वात्, ततश्च गार्ग्या अपत्यं या स्त्री सा गर्गस्यापत्यं भवत्येव, पौत्रप्रभृति[१]ग्रहणं च व्यवहितापत्योपलक्षणं, तेन गर्गापेक्षया तस्या गोत्रत्वादेको गोत्रइति नियमात्प्रत्ययान्तराभाव इति, वृत्तौ तु क्व चित्पठ्यते गोत्राद्यूनीति यूनि प्रत्ययो भवतीति, तदप्यस्मिन्नेव पक्षे युक्तं तदाह । 'गार्ग्या अपत्यं

१ अपत्येत्यधिकं २ पु० ।



पुमान्युवा भवति गार्ग्यायणो माणवक इति'। मातामहादेरुपलक्षणार्थोऽयं प्रयोग इति नास्ति कुत्सा॥

"वृद्धाट्टक् सौवीरेषु बहुलम्"॥ अत्र वृद्धिर्यस्याचामादिस्तद्वृद्धमिति वृद्धं गृह्यते न त्वपत्यमन्तर्हितं वृद्धमिति शास्त्रान्तरपरिभाषितमुत्तरसूत्रे हि वक्ष्यति फिञो ग्रहणं न फिनः, वृद्धाधिकारादिति। 'सौवीरेष्विति प्रकृतिविशेषणमिति'। गोत्रस्त्रिया इत्यतो गोत्रग्रहणानुवृत्तेर्गोत्रप्रत्ययान्ता या प्रकृतिस्तस्या विशेषणमित्यर्थः। 'वृद्धात्सौवीरगोत्रादिति'। इदमपि पारिभाषिकस्यैव वृद्धस्य ग्रहणे घटतेऽन्यथा सौवीरेषु यद्वृद्धं तस्मादिति वक्तव्यम्। 'भागवित्तायन इति'। यञिञोश्चेति फक्. तृणबिन्दोरपत्यमिति औत्सर्गिकोण् तार्णबिन्दवः, ततष्ठक्, पूर्वठक्ग्रहणं येन संबद्धमतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह ग्रहणम्। 'भागपूर्वपदोवित्तिरिति'। वित्त्यन्त इत्यर्थः। भागवित्तिशब्दइति यावत्। 'गोत्राद्बहुलं तत इति'। गोत्रस्त्रिया इत्यतो गोत्रग्रहणानुवृत्त्या गोत्रवचनात्प्रातिपदिकाद्बहुलं यष्ठगुच्यते स ततस्तेभ्य एव भागवित्तिप्रभृतिभ्यस्त्रिभ्य एव भवति नान्येभ्य इति परिगणनश्लोकार्थः। ननु गोत्रग्रहणमनुवर्त्तते यच्च सौवीरगोत्रवृत्तिप्रातिपदिकं तद्वृद्धमेव तत्किमर्थं वृद्धग्रहणमत आह। 'वृद्धग्रहणं स्त्रीनिवृत्त्यर्थमिति'। तद्धि गोत्रग्रहणं स्त्रिया विशेषणमतस्तदनुवृत्तौ स्त्रीग्रहणमप्यनुवर्त्तेत, वृद्धग्रहणसामर्थ्यात्तु गोत्रग्रहणमेवानुवर्त्तते न स्त्रीग्रहणमिति व्याचक्षते, अपत्यमन्तर्हितं वृद्धमित्यस्य तु वृद्धस्य ग्रहणेऽसमञ्जसोऽयं ग्रन्थः स्यात्। 'औपगविरिति'। ननु च परिगणनादेवात्र न भविष्यति, तच। नहि सूत्रकारोर्वाचीनपरिगणनाश्रयेणातिप्रसङ्गनिवारणं मन्यते, वाग्रहणएव कर्त्तव्ये यद्बहुलग्रहणं कृतं तस्य प्रयोजनमाह। 'बहुलग्रहणमित्यादि'। वैचित्र्यमेव दर्शयति। 'गोत्रस्त्रिया इत्यारभ्येति'। तत्रान्त्यः सौवीरगोत्रएवेत्ययमेवार्थो यत्नसाध्यः॥

"फेश्छ च"॥ 'यमुन्दश्चेत्यादि'। अत्र वार्ष्यायणीति शब्दरूपापेक्षाया नपुंसकनिर्द्देशः। 'फिञ इति'। फिञन्ता इत्यर्थः। 'स्मृताइति'।

एते त्रयः फिञन्ताः प्रकृतयः स्मृता इत्यर्थः। 'सौवीरेषु च कुत्सायामिति'। पुनश्चकारो वृत्तभङ्गभयान्न पठितः। बहुलग्रहणात्सिद्धोयमर्थः पूर्वं वृत्तिकृता दर्शित इदानीं तु श्लोकवार्त्तिककारेणेत्यपौनरुक्त्यं, सुयामशब्दोपि तिकादिः, वृषस्यापत्यं वार्ष्यायणिः, अयमपितिकादिरेव, वृगुकोसलमीरच्छागवृषाणां युड्वादिष्टस्येति वचनाद् आयनादेशे कृते युडागमः॥

"फाण्टाहृतिमिमताभ्यां णफिञौ"॥ 'तेन यथासंख्यमिह न भवतीति'। एवं च कृत्वा णस्य णित्करणमर्थवद्भवति, तद्धि मिमतशब्दे वृद्ध्यर्थं, यथासंख्ये तु फाण्टाहृतेर्वृद्धत्वाण्णित्करणमनर्थकं स्यात्, इह तु फाण्टाहृताभार्य इति गार्गीभार्य इतिवत्पुंवद्भावप्रतिषेधादिकं द्रष्टव्यं, यथा तु वार्त्तिकं तथा यथासंख्यमत्रेष्यते यथाह, फाण्टाहृतेर्णस्य णित्करणानर्थक्यं वृद्धत्वात्, प्रातिपदिकस्य पुंवद्भावप्रतिषेधार्थं तु, उक्तं वेति॥

"कुर्वादिभ्यो ण्यः"॥ ननु च कुरुनादिभ्यो ण्यं इत्येव कुरुशब्दाण्ण्यः सिद्धः किमर्थमिह पठ्यते ऽत आह। 'कुरुशब्दादपरोपीति'। सत्यमपरोपि ण्यप्रत्ययो भविष्यति, स तु क्षत्रियादित्यनेनार्थभेदमाह, तद्राजसञ्ज्ञक इत्यनेन रूपभेदमाह। 'तिकादिषु पाठादिति'। कुरुकौरव्यशब्दौ द्वावपि पठ्येते। 'कारिणस्तु रथका'रादिति'। कारिणः शिल्पिनः, रथकारजातिस्तु शिल्पिवृत्तिर्न भवतीति मन्यते। 'तस्य पुंवद्भावो न भवतीति'। भस्याढे तद्धितइति विधीयमानः, यदि हि स्याचस्तद्धितइति टिलोपः स्यात्, कस्मान्न भवतीत्याह। 'स्त्रीप्रत्ययनिर्द्देशसामर्थ्यादिति'। पुल्लिङ्गस्यापि पाठे लिङ्गविशिष्टपरिभाषया केशिनीशब्दादपि सिद्धः प्रत्ययः पुल्लिङ्गात्त्वनभिधानाच भविष्यतीति भावः। वामरथस्य कण्वादिवत्स्वरवर्जमिति गणवाक्यं व्याचष्टे। 'वामरथशब्द इत्यादि'। तस्येति प्रकरणाण्ण्यप्रत्ययान्तस्येति विज्ञेयम्। 'कण्वादिवदिति'। केवलानां तेषां कस्य चित्कार्यस्याविधानाञ्ञन्तानां कण्वादीनां यत्कार्यं तस्यातिदेशः। 'लुगादिकमिति'। कण्वादिषु यञन्तेषु दृष्टमात्रस्य कार्यस्यातिदेशो न तु कण्वादित्वप्रयुक्तस्य, अत एव स्वरवर्जमित्याह,

१ शब्दादित्यधिकं मुद्रितमूलपुस्तके।

तेन लुगादिकमप्यतिदिश्यते न तु कण्वादिभ्यो गोत्रइत्येव प्रत्ययविधिः। 'वामरथ इति' यञञोश्चेति बहुषु लुक्, यञश्च प्राचां ष्फ तद्धितः, यूनि यञिञोश्चेति फक्, शैषिकेष्वर्थेषु छे प्राप्ते कण्वादिभ्यो गोत्रे सङ्घाङ्कलक्षणेष्विति चाण् भवति। 'सम्राजः क्षत्रियइति'। सम्राजोपत्यं साम्राज्यो भवति, क्षत्रियश्चेत्, साम्राजोन्यः॥

"सेनान्तलक्षणकारिभ्यश्च"॥ लक्षणेति स्वरूपग्रहणमित्याह। 'लक्षणशब्दादिति'। कारीत्यर्थग्रहणमित्याह। 'कारिवचनेभ्यश्चेति'। साधु कुर्वन्तीति कारिणः शिल्पिनः। 'नापित्य इति'। प्राचां मते ण्य उदाहृतः, उदीचां तु मते परत्वादुदीचां वृद्धादिति फिञेव भवति नापितायनिरिति॥

"उदीचामिञ्"॥ 'तात्त्व इति'। यपूर्वहन्धृतराज्ञामणीत्यल्लोपः। 'ताक्षण्य इति'। ये चाभावकर्मणोरिति प्रकृतिभावः। इह सेनान्तलक्षणकारिभ्यो वेति वक्तव्यं, नार्थोनेनेञ्वचनेन,नापि शिवादिषु तक्षन्शब्दस्य पाठेन ण्ये हि विकल्पिते यो यतः प्राप्नोति स ततो भवतीति तक्ष्णः प्राग्दीव्यतोण् अन्येभ्यश्चात इञ् भविष्यति, नैवं शक्यम्। एवं हि जातसेनादिभ्य स्त्र्यादिलक्षणोण् प्राप्नोति॥

"तिकादिभ्यः फिञ्"॥ 'क्षत्रियवचन इति'। यः कुरुनादिभ्यो ण्य इति व्युत्पादितः। 'औरशशब्देनेति'। उरसा शेते उरशः क्षत्रियः, पृषोदरादित्वाद्रूपं, तस्यापत्यं जनपदशब्दात्क्षत्रियादित्यञ्, किं पुनरेवं प्रयत्नेन क्षत्रियवचनस्य ग्रहणं व्याख्यायतइत्यत्राह। 'तथा चेति'। 'उदाहृतमिति'। पूर्वैरपि वृत्तिकारैरित्यर्थः। तिकतेरिगुपधात्कः, तिकः, किं तवास्तीति प्रवर्त्तते कितवः पृषोदरादिः, सम्पूर्वाज्ज्ञानातेरातश्चोपसर्गइति कः, स्त्रियां टाप्, सञ्ज्ञा, बालैर्वृद्धाशिखास्य स बालशिखः, द्वौ शब्दावित्यन्ये, बलतेर्णजन्तादच् बालः, तस्य बालायनिः शिखाशब्देन तद्वान् लक्ष्यते, शैखायनिः, उरशशब्दो व्युत्पादितः, शट कुत्सायां पचाद्यच् ततो गर्गादित्वाद्यञ् शाट्यः, ततो यूनि फिञ्, सिन्धुशब्दात्सुञ्मगधेत्यण्, सैन्धवः, अत्रापि यूनि फिञ् यममुनत्तीति यमुन्दः, शकन्ध्वादिः, प्रशस्तं

रूपमस्यास्ति रूपादाहतप्रशंसयोर्यप्, रूप्यः, ग्रामे भवो ग्राम्यः, नील वर्णे, इगुपधात्कः नीलः, अम् रोगे, औणादिक इत्रः, अमित्रः, गोकाद्यो गर्गादियञन्तः, क्रपोरः, कुरुः, देवस्येव रथो ऽस्य देवरथः, तिले तिलः, तितिलः, पृषोदरादिः, ततो मत्वर्थीय इन्, तितिलिनो ऽपत्यमौत्सर्गिकोण्, नस्तद्धितइति टिलोपः, तैतिलः, औरशशब्दो व्युत्पादितः, कुर्वादिभ्यो ण्यः, कौरव्यः, भूरि अस्यास्ति भूरिको व्रीह्यादिः, तस्यैव पक्षे कपिलकादित्वाल्लत्वं भूलिक, ताभ्यामत इञ्, भौरिकिः भौलिकिः, चुप मन्दायां गतौ, ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चौपयतः, एवं चैयतः, विट परप्रेष्ये, ण्यन्ताल्लटः शत्रादेशः, तस्यापत्यं चैटयतः, शीक सेचने, णिजादि पूर्ववत्, शैकयतः, चितमाचष्टे चितयन्, तस्यापत्यं चैतयतः, ध्वजोस्यास्ति ध्वजवान्, तस्यापत्यं ध्वाजवतः, द्वौ शब्दावित्यन्ये, ध्वज गतौ ण्यन्तात्पचाद्यच्, ध्वाजः, वनोतेस्तः, वतः, चदि आह्लादने, ततो रमस् चन्द्रमाः, तस्यापत्यं चान्द्रमसायनिर्बुधः, शोभतेसौ शुभः, इगुपधात्कः, गमेर्गन्, गङ्गा,वृञ एण्यः वरेण्यः, सर्वधातुभ्यो मनिन्, यानं यामा, शोभनं यामास्य सुयामा, आरदो नाम जनपदः ततोपत्ये जनपदशब्दादित्यञ्, आरदः, वह्यं करणं, वह्यमेव वह्यका निपातनादित्वाभावः, खलाय हिता खल्या, खलयवेति यत्, वृषु सेचने इगुपधात्कः वृषः, लोमानि कामयति लोमका, उदकमिच्छत्यात्मन उदन्यः, अशनायोदन्यधनायेत्युदकस्योदन्भावः, ततः पचाद्यच्, यञयोगाद्यञः, एते तिकादयः ॥

"कौसल्यकार्मार्याभ्यां च" ॥ कोसलशब्दाद्वृद्धेत्कोसलाजादाञ्ञ्यङ्, कर्मारशब्दात्कारिलक्षणो ण्यः, एतयोरिह ग्रहणमिति शङ्कामपाकरोति । 'परमप्रकृतेरेवेति'। कथं तर्हि विकृतं प्रकृतिरूपं श्रूयते तत्राह । 'प्रत्ययसंयोगेन त्विति'। न चेयं स्वमनीषिकेत्याह । 'तथा चेति'। 'युट्टादिष्टस्येति'। पूर्वान्तकरणे दागव्यायनिः, ओर्गुणो न स्यात्, अतः परादिकरणम् । 'आदिष्टस्येति'। कृतायनादेशस्येत्यर्थः । एतस्मिन्नुच्यमाने ऽनवकाशत्वाद्युटि कृते ऽनादित्वादायनादेशो न स्यात् ॥

"अणो द्व्यचः" ॥ 'कार्त्रायणिरिति'। कर्त्तुरपत्यमित्यण्, कार्त्रः, ततो यूनि फिञ्, तस्याण्व्रात्स्मणगोत्रादिति लुङ् भवति, विधानसामर्थ्यात्, अपर आह । कर्त्तृशब्दात्रः कार्त्रः, तस्यापत्यमित्यादावगोत्रे चरितार्थं वचनमिति । अपर आह, अपत्यग्रहणमावर्तते तत्रैकेनाण् विशेष्यते, अपरेण प्रत्ययार्थो निर्दिश्यते, ततश्चापत्यस्यैवाणो ग्रहणादस्त्येव वचनसामर्थ्यमिति ॥

"उदीचां वृद्धादगोत्रात्" ॥ 'कारिशब्दादपीति'। कारिलक्षणस्योदीचामिञोऽवकाशस्तान्तुवायिः, फिञोऽवकाशः आम्रगुप्तायनिः, नापितादुभयप्रसङ्गे फिञ् भवति । 'याज्ञदत्तिरिति'। वा नामधेयस्य वृद्धसंज्ञा वक्तव्या, पक्षे याज्ञदत्तायनिरिति भवत्येव ॥

"वा किनादीनां कुक् च" ॥ 'यदिह वृद्धगोत्रमिति'। वाकिनगारेधकाकइत्येते त्रयः, वचनं वाकः सोऽस्यास्ति वाकिनः, बर्हिणवदुपपाद्यः, अगारे एधते गारेधः पृषोदरादित्वादादिलोपः, शकन्ध्वादित्वात्पररूपं, कायतेः काकः, अन्येषामपीति कः, कर्कटस्यापत्यं कार्कट्यः, गर्गादिः, कुर्वादिर्वा,लन्धयतेर्लङ्का, अस्मादेव निपातनाद् घस्य कादेशः, वर्मचर्मशब्दौ व्रीह्यादी । 'इञोऽपवाद इति'। वर्मिचर्मिणोरण् प्राप्तः, लङ्काशब्दाद्व्यच इति ठक् प्राप्तः, यञन्ताद्यञिञोश्चेति फक्, शेषेभ्य इञ् प्राप्तः, वर्मिचर्मिणोर्नलोपश्चेति कुकि कृते प्रातिपदिकस्यानकारान्तत्वाच्चलोपो न प्राप्नोतीति विधीयते, यदि पुनरयं कुक् परादिः क्रियते आयनादेशो न स्यात् फस्यानादित्वात्, यदा च लिङ्गविशिष्टपरिभाषयावर्मिणीचर्मिणीशब्दाभ्यां प्रत्ययो भवति तदा भस्याढे तद्धितइति पुंवद्भावो न स्यात् ॥

"पुत्रान्तादन्यतरस्याम्" ॥ 'पूर्वेणैव प्रत्ययः सिद्ध इति'। तेनासाविह विधीयते, कथं तर्हि पञ्चम्या निर्देश इत्याह । 'पुत्रान्तादित्यादि' ॥

"प्राचामवृद्धात् फिन्बहुलम्" ॥ 'विकल्पार्थं इति'। विकल्पप्रयोजनं तत्राचार्योपादानं मतान्तरे प्रत्ययस्याभावं द्योतयति, बहुल-

ग्रहणं तु क्व चित्प्रकृत्यादिकम्, अन्यतरस्यांशब्दस्तु विकल्पमेव, तेषामेके नैव सिद्ध्यतीति प्रकरणाद्विकल्प इति गम्यते, किमर्थं तर्हि सर्वेषां ग्रहणं तत्राह । 'तत्रेति' । 'बहुलग्रहणं वैचित्र्यार्थमिति' । पारिशेष्यादन्यस्य ग्रहणं विकल्पार्थमित्युक्तं भवति, वैचित्र्यमेव दर्शयति । 'क्व चिदिति' ॥

"मनोर्जातावञ्यतौ षुक् च" ॥ 'तथा चेति' । अपत्यार्थे तु सति यञञोश्चेति बहुषु लुक् प्रसज्येत, लौकिकस्य गोत्रस्य तत्र ग्रहणात् । 'अपत्ये कुत्सितइति' । णत्वविधानार्थमिदम्, अणः सिद्धत्वात् न च न दण्डमाणवान्तेवासिष्विति णत्वसिद्धिः, अर्थविशेषस्यानिश्चयाद् अनधीतवेदत्वान्मूढत्वं, विहिताकरणात्प्रतिषिद्धसेवनाच्च कुत्सितत्वम् ॥

"अपत्यं पौत्रप्रभृति गोत्रम्" ॥ 'तद्गोत्रसंज्ञं भवतीति' । अपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं युक्ता न सञ्ज्ञेति चेत्, न, लिङ्गवती परिभाषा भवति यथा इको गुणवृद्धी इति, विध्यन्तरशेषभूता वा, यथा विप्रतिषेधे परं कार्यमिति, न चेयं तथा, किं च वृद्ध्यादयोपि सर्वार्थप्रत्यायनयोग्याः सञ्ज्ञिविशेषे शक्त्यवच्छेदेन नियम्यन्ते, अथ च ताः सञ्ज्ञास्तथेयमपि भविष्यति, उक्तं च ।

व्यवहाराय नियमः सञ्ज्ञानां सञ्ज्ञिनि क्व चित् ।
नित्य एव तु सम्बन्धो डित्यादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रे ऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमो हि सम्बन्धो विशेषणविशेष्यवत् ॥

इति । यदि पौत्रप्रभृतेरपत्यस्य गोत्रसञ्ज्ञा क्रियते गर्गस्यापि प्राप्नोति सोपि कं चित्प्रति पौत्रो भवत्येव, तत्र को दोषः, गोत्राद्यून्यस्त्रियामिति यूनि प्रत्ययप्रसङ्गः, गार्ग्यादेव तु यूनीष्यते, नैष दोषः । इहापत्यग्रहणं न कर्त्तव्यं, पौत्रस्यापत्यत्वात्तत्प्रभृतेरपत्यस्यैव ग्रहणं सिद्धं, तत् क्रियते ऽपत्यरूपेण प्रतिभासमानस्य यथा स्याद्वस्तुतो ऽपत्यस्य मा भूदित्येवमर्थमतोपत्यरूपेण प्रतिभासमानस्य गर्गस्य न भविष्यति, ननु वासत्यप्यपत्यग्रहणे पौत्रप्रभृतिरूपेण प्रतिभासमानस्य सञ्ज्ञाया विज्ञानात्तेन रूपेणाप्रतिभा-

समानस्य गर्गस्य न भविष्यतीति किमपत्यग्रहणेन, यद्येवमौपगवस्यापि न स्यात् सोऽपि ह्यपत्यरूपेण प्रतिभासते न तु पौत्रप्रभृतिरूपेण, अपत्यमात्रे प्रत्ययविधानाद् गार्ग्यादेरेव तु स्याद् यत्र गोत्र एव प्रत्ययः, कुतश्चायमर्थो लभ्यते पौत्रप्रभृतिरूपेण प्रतिभासमानस्येति, तद्ग्रहणसामर्थ्यादिति चेत् सर्वस्यापि यत्किंचित्प्रति वस्तुतः पौत्रप्रभृतित्वाव्यभिचारात् पौत्रप्रभृतिग्रहणं न कर्त्तव्यं भवति, तद्ग्रहणसामर्थ्यादयमर्थो लभ्यत इति, तच्च, सञ्ज्ञिनिर्देशार्थत्वादचेतनव्यावृत्त्यर्थत्वाच्च, गोत्रंइत्येतावति ह्युक्ते कस्य सञ्ज्ञा स्यात्, रथादीनां च वस्तुतोऽपि पौत्रप्रभृतित्वं नास्ति, अतो वस्तुतः पौत्रप्रभृतेर्गर्गस्य मा भूदपत्यरूपेण प्रतिभासमानस्य यथा स्यादित्येवमर्थं त्वपत्यग्रहणं कर्तव्यं, सम्बन्धिशब्दत्वाच्च पौत्रप्रभृत्यपत्यशब्दयोर्यं प्रति पौत्रप्रभृतित्वमपत्यत्वं च तमेव प्रति गोत्रसंज्ञा विज्ञायते, तेनाङ्गिरसः पौत्रे गर्गस्यानन्तरे न भवति गर्गादिभ्यो यञ्, तदेतत्सर्वमुक्तम्। 'सम्बन्धिशब्दत्वादित्यादि', 'यस्य यदपत्यमिति'। प्रतिभासत इति भावः। तदयमत्र सूत्रार्थः, वस्तुतः पौत्रप्रभृतिरपत्यरूपेण प्रतिभासमानोऽर्थो यं प्रत्यपत्यरूपेण प्रतिभासते यं च प्रति वस्तुतः पौत्रप्रभृतिस्तं प्रति गोत्रसञ्ज्ञ इति। 'अपत्यमिति व्यपदेशायेति'। सञ्ज्ञिन इति शेषः। अपत्यरूपेण प्रतिभासमानस्य सञ्ज्ञिनो व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः। इह कस्मान्न भवति गर्गापत्यस्य तृतीयादेरपत्यमिति, अत्र हि गर्गापत्यशब्देन गर्गं प्रत्यपत्यरूपेण प्रतिभासमानस्य वस्तुतः पौत्रप्रभृतेर्गर्गं प्रति गोत्रसञ्ज्ञायां सत्यां गर्गस्य चतुर्थे जीवद्वंश्ये गोत्राद्यूनीति गर्गापत्यशब्दात्प्रत्ययः प्राप्नोति, नैष दोषः। सञ्ज्ञाप्रकरण एवास्मिन्कर्त्तव्ये ऽपत्यप्रत्ययेषु विधीयमानेषु मध्ये सञ्ज्ञाकरणं प्रत्ययवाच्यस्यापत्यस्य परिग्रहार्थं, यदिदं तस्यापत्यमित्यारभ्य प्रत्ययार्थत्वेन निर्दिष्टमपत्यं तद्गोत्रसञ्ज्ञमिति, तेनापत्यशब्देन प्रतिभासमानस्यापत्यस्य सञ्ज्ञा न भविष्यति। ननु च ते तद्राजा इत्यत्र तच्छब्देनाञादीनामेव परिग्रहो यथा स्यात्पूर्वेषां मा भूदिति मध्ये सञ्ज्ञाकरणं स्यात्, यद्येतावत्प्रयोजनं स्यादञादयस्तद्राजा इत्येव ब्रूयात्तस्मादुक्तमेव साक्षात्प्रयोजनमस्मिन् प्रकरणे सञ्ज्ञाकरणस्य, स्थिते त्वेवमुक्तमपि

प्रयोजनं भवत्येव, अत एव तत्र वक्ष्यति गोत्रयुवसञ्ज्ञा काण्डेन व्यवहितत्वादिति ॥

"जीवति तु वंश्ये युवा" ॥ 'अभिजनप्रबन्धो वंश इति'। अभिजनाः पित्रादयः,अभिजायन्ते येभ्यः पुत्रादय इति कृत्वा, प्रबन्धः, सन्तानः। 'तत्र भवो वंश्य इति'।। दिगादित्वाद्यत्, पौत्रप्रभृत्यपत्यमिति षष्ठीसमासः, यद्यत्रापि पूर्ववत्पौत्रप्रभृतीत्येतत्सामानाधिकरण्येनापत्यं विशेषयेत् तृतीयस्यापि जीवद्वंश्यस्य युवसञ्ज्ञा स्यात्, तत्र को दोषः, युवसञ्ज्ञया गोत्रसञ्ज्ञाया बाधितत्वाद्गर्गादिभ्यो यञ् स्यान्न कश्चिदपत्यप्रत्ययः, किं कारणं, गोत्रादेव यूनीति नियमात्, नानन्तरान्न मूलप्रकृतेस्तस्माद्वाक्येनैवाभिधानं प्राप्नोति गर्गस्यापत्यं गार्गेरपत्यमिति, एतेनोपमेोस्तृतीयो जीवद्वंश्यो व्याख्यातः, तस्माद्वैयधिकरण्येन विशेषणमित्याह। 'पौत्रप्रभृतीति'। 'षष्ठी विपरिणम्यत इति'। अत्र च व्याख्यानमेव शरणम्। 'तुशब्दोऽवधारणार्थ इति'। अनेकार्थत्वान्निपातानां भिन्नक्रमो युवशब्दानन्तरं द्रष्टव्य इत्याह। 'युवैव भवति न गोत्रमिति'। असत्यवधारणे एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशाभ्युपगमात्कृत्यप्रत्ययसंज्ञानामिव गोत्रयुवसंज्ञयोः समावेशः स्यात्, अस्तु को दोषः, यस्कस्यापत्यं गोत्रं शिवादिभ्योऽण्, तदन्ताद्यून्यणो द्व्यच इति फिञ्। वृद्धौ यस्येति लोपे कृते यास्कायनिरिति। बहुषु यस्कादिभ्यो गोत्र इति फिञो लुक् प्रसज्येत एकदेशविकृतस्यानन्यत्वात्,यस्कादिभ्योऽनन्तरस्य गोत्रप्रत्ययस्य लुगुच्यते, न चात्रानन्तरः फिञ्, शिवाद्यणो यस्येति लोपः, तस्य पूर्वस्मादपि विधौ स्थानिवद्भावाद्यस्कादिभ्यो विहितस्येति वा विज्ञास्यते, इह च कण्वस्यापत्यं काण्व्यः, तस्यापत्यं युवा काण्व्यायनस्तस्यच्छात्राः काण्वायनीया इति, कण्वादिभ्यो गोत्र इत्यण् न भवति, कण्वादिभ्यः परो योऽनन्तरो यो वा तेभ्यो गोत्रे विहितस्तदन्तादित्याश्रयणात्, इह च औपगवस्यापत्यमौपगविरिति गोत्राद्यूनीति प्रतिपदविधानादेको गोत्र इति नियमो बाधिष्यते, यदि बाध्यते औपगवेर्यूनोपत्यमिति चतुर्थस्य यूनो गोत्रत्वात्पञ्चमे यूनि फक् प्राप्नोति, नैष दोषः, पञ्चमे

यूनि विवक्षिते उत्पन्नस्येञो यूनि लुगिति लुकि कृते औपगवशब्दादण्-न्तात्पुनरपीञेव भविष्यति, इह तर्हि दाक्षेरपत्यं दाक्षायणस्यापत्यमित्य-र्थविवक्षायां फक्फिञोरन्यतरस्यामिति फक्को लुगभावपक्षे तदन्तादिञ् प्राप्नोति, किं च औपगवेरपत्यमित्यत्रापि लुप्ते ऽपीञि प्रत्ययलक्षणेन फक् प्राप्नोति, एवं तर्हि गोत्राद्यूनीत्यत्र एकग्रहणमनुवर्तिष्यते तेनानेकः प्रत्ययो न भविष्यति, यस्तर्हि गोत्रेऽलुगचीत्यलुक् सोऽत्रीणां यूनां छात्र इत्यादौ प्राप्नोति, यूनोपि गोत्रत्वात्, प्राप्नोतु तं बाधित्वा परत्वाद्यूनि लुग्भविष्यति, नैवं शक्यं, फक्फिञोर्हि दोषः स्यात्, शालङ्केरपत्यं शालङ्किः, पैलादिषु पाठादिञ् शलङ्कादेशश्च, ततः शालङ्केरपत्यं युवा यञिञोश्चेति फक्, पैलादिभ्यश्चेति लुक्, ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थ-विवक्षायां गोत्रे लुगचीति पैलादिषु लुकः प्रतिषेधे सति यूनि लुगिति लुकि नित्ये प्राप्ते फक्फिञोरन्यतरस्यामिति पक्षे फकः श्रवणप्रसङ्गः, असत्यां तु यूनो गोत्रसंज्ञायां गोत्रे लुगचीत्यस्याप्रवृत्तौ पैलादिषु लुग्भ-वत्येव, फक्फिञोरन्यतरस्यामित्ययं तु विकल्पो यूनि लुगित्यस्यानन्तरस्य न तु पैलादिषु लुको व्यवहितस्यान्तरङ्गस्य, तत इञश्चेत्यण् शालङ्का इति भवति, तथा पीलाया अपत्यं, पीलाया वेत्यण्, पैलः, तस्यापत्यं युवा, अणो द्व्यच इति फिञ्, तस्य पैलादिभ्यश्चेति लुक्, ततः पैलस्य यूनश्छात्राः पैलीया इति ॥

"भ्रातरि च ज्यायसि" ॥ 'कनीयान् भ्रातेति'। भ्रातृज्यायः-शब्दयोः संबन्धिशब्दत्वादयमर्थो लभ्यते। 'अकारणत्वादिति'। यः साक्षात्परम्परया वा कारणं भवति स लोके वंश्य इत्युच्यते। 'गार्ग्ये जीवतीति'। ज्यायसि भ्रातरि जीवतीत्यर्थः। एवं वात्स्यायनादावपि द्रष्टव्यम् ॥

"वान्यस्मिन् सपिण्डे स्थविरतरे जीवति" ॥ 'सप्तमपुरुषावधय-इति'। आत्मनः प्रभृति पित्रादिषु पुत्रादिषु वा गण्यमानेषु सप्तम-पुरुषोऽवधिर्येषां ते तथोक्ताः, प्रायेण तु पूरणप्रत्ययो न पठ्यते, सप्तपुरु-षावधय इत्येव पठ्यते, न तत्र समीचीनमर्थं पश्यामः, समानः पिण्डो

येषामिति सपिण्डाः, निपातनात्सभावः । 'स्मर्यन्तइति' । तद्यथा 'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तत' इति, सप्तमे ऽतीते विनिवर्त्तत-इत्यर्थः । 'उभयत्रेति' । जनने मरणे वेत्यर्थः । 'एवमादिकायां क्रिया-यामिति' । आदिशब्देन 'दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तत-' इत्यादिका क्रिया गृह्यते । 'जीवद्वेति' । वस्तुव्याख्यानमेतत्, सूत्रे तु जीवतीत्याख्यातपदं तच्चेदपत्यं जीवतीति, प्रथमार्थे वा शत्रन्तात्स-प्तमी व्याख्येया। 'तरब्निर्द्देश इत्यादि'। असति तस्मिन्स्थविरशब्दाद्वयः-प्रकर्षमात्रं गम्येत, तरपा तु स्थानप्रकर्षो द्योत्यते, ततस्तदुपादानसाम-र्थ्यात्, यथा गोतरोऽश्वतर इत्यादावप्रवृत्तिनिमित्तभूतस्यापि वाहदोहादेः प्रकृत्यर्थसंबन्धिनः प्रकर्षे तरब् भवति तथात्रापि, स्थानं पदं पितृत्वा-दिकम् । 'स्थानवयोन्यूने इति' । स्थानेन वयसा च न्यूने इत्यर्थः । ननु च ज्यायसीत्यनुवृत्तेरेवोभयोः प्रकर्षो लभ्यते, प्रशस्यस्य श्रः, ज्य च, वृद्ध-स्य चेत्युभयोर्ज्य देशविधानात्, तन्न, नहि सकृत्प्रयुक्तः शब्दोनेकार्थमभि-धातुं समर्थः, एवमपि तरब्निर्द्देशो न कर्त्तव्यः, ज्यायसीत्यनुवृत्तेरेव स्थान-प्रकर्षलाभात्, एतदपि नास्ति, स्थविरइति विशेषणान्तरोपादाने सति ज्यायसीत्यस्यानुवृत्तेरेव दुर्ज्ञानत्वात् । 'जीवतीति किमिति'। मृतं प्रकृतं चोभयमधिकृत्य प्रश्नः । अत एवोभयोः प्रयोजनं दर्शयति । 'मृते मृतो वेति'। तत्र मृतइति स्वपितरि, मृतो वेति पौत्रप्रभृतेरपत्यभूतोर्थः ॥

"वृद्धस्य च पूजायाम्" ॥ 'अपत्यमन्तर्हितमित्यादि'। एत-च्चापत्यग्रहणेन वृद्धस्य विशेषणाद् इह परिभाषितस्य च शब्दात्मकस्या-पत्यत्वासम्भवात् विज्ञायते । 'पूजायां गम्यमानायामिति'। का पुनरत्र पूजा, यद्युवत्वमेव, यद्यपि युवशब्दोनपेक्षितप्रवृत्तिनिमित्तमेव सञ्ज्ञा तथापि प्रायेणाल्पवयसो जीवद्वंश्यत्वं सम्भवतीति तदध्यारोपे सति तत्सहचरितं वयोपि प्रत्यायितं भवतीति पूजा भवति । 'सञ्ज्ञासामर्थ्या-दिति'। गोत्रस्य सतो युवसञ्ज्ञा विधीयते, गोत्रसञ्ज्ञा चेत्प्रवृत्ता एको गोत्रइति नियमः प्राप्नोति, ततश्च परमप्रकृतेरेवोत्पन्नेन प्रत्ययेनाभिहि-तत्वादप्राप्तोपि प्रत्ययोस्माद्वचनाद्भवतीत्यर्थः । इह पूर्वत्र सामानाधि-

करणेन सञ्ज्ञाविधानात्क्रमाभेदाय तथैव सञ्ज्ञा विधातुं युक्ता, कोयं वृद्धस्येति षष्ठीनिर्द्देश इत्यत्राह । 'वृद्धस्येति' । षष्ठीनिर्द्दिशतीति-करणे हेतौ, वार्त्तिककारीयं चेदं सूत्रं वृत्तिकारेण तु सूत्रेषु प्रक्षिप्तम्, एतेनोत्तरसूत्रं व्याख्यातम् ॥

"यूनश्च कुत्सायाम्" ॥ 'निवृत्तिप्रधानो विकल्प इति' । न पुनः प्रवृत्तिप्रधान इति पूर्वमेव प्रवृत्तत्वात्, यदाह । 'यूनश्चेति' । नह्यप्रवृत्तायां तस्यामेष निर्द्देश उपपद्यते, ननु च निवृत्तिरप्यनिर्वृत्ता या न शक्यते कर्त्तुं, यो हि भुक्तवन्तं ब्रूयान्मा भुक्तथा इति किं तेन कृतं स्यात्, तस्माद्यूनश्चेति निर्द्देशो युवसंज्ञाविषयो लक्षणार्थः । 'जीवद्वंश्यस्य चतुर्थादेरिति' । न तु युवसंज्ञाशिष्टस्य निर्द्देश इति वक्तव्यमेवं च प्रवृत्तिविकल्पोऽप्युपपद्यते, सा तु प्रवृत्तिरसत्यपि सूत्रे लभ्यतइति मत्वा निवृत्तिप्रधान इत्युक्तम् । 'युवसंज्ञायां प्रतिषिद्धायामिति' । तस्या अभावपक्षइत्यर्थः । 'गार्ग्यो जाल्म इति' । का पुनरत्र कुत्सा, गोत्रत्वारोपिणामेव, अजीवद्वंश्या हि गोत्रसंज्ञकास्ते प्रायेण चरमवयसो भवन्तीति तदारोपे भवति कुत्सा ॥

"जनपदशब्दात्क्षत्रियादञ्" ॥ 'जनपदशब्दो यः क्षत्रियवाचीति' । नन्वेते पञ्चालादयः शब्दाः क्षत्रियशब्दा एव, तत्सम्बन्धात्तु तस्य निवास इति तद्धिते कृते जनपदे लुबिति च लुपि जनपदे वर्त्तन्ते, तत्कथमवरकालया जनपदशब्दतया नित्यक्षत्रियशब्दता लक्ष्यते, कः पुनराह क्षत्रियसम्बन्धादेव ते जनपदे वर्त्तन्तइति, सूत्रकारस्तावल्लुब्योगाप्रख्यानादिति वदन् क्षत्रियेष्विव जनपदेऽपि स्वाभाविकां पञ्चालादिशब्दस्य प्रवृत्तिरित्याह । 'पञ्चाल इति' । यद्यपि पञ्चालादयः शब्दा जनपदे बहुवचनान्ताः क्षत्रिये त्वेकवचनान्तास्तथापि प्रातिपदिकस्य विशेषणं जनपदत्वं न सुबन्तस्येत्येकवचनान्तादपि प्रत्ययो भवत्येव । 'ऐक्ष्वाक इति' । इक्ष्वाकुशब्दस्य दाण्डिनायनादिसूत्रे टिलोपो निपातितः । 'ब्रौह्म इति' । क्षत्रियवचन एवायं न जनपदशब्दः । 'ब्राह्मणस्य पञ्चालस्येति' । बाह्वादिप्रभृतिषु येषां दर्शनमित्युक्तत्वात्कथमत्र प्रसङ्ग इति चिन्त्यम् ।

'क्षत्रियसमानशब्दादिति' । समानः शब्दो यस्य समानशब्दः, क्षत्रियेण समानशब्दस्तस्माज्जनपदशब्दात् तस्येति षष्ठीसमर्थाद्राजन्यभिधेये ऽपत्यवत्प्रत्ययो भवति, अवृद्धादपीति प्राप्तस्य वुञो ऽपवादः । क्व चित्तु वृत्तावेवायं ग्रन्थः पठ्यते । 'मागध इति' । द्व्यञ्मगधेत्यण् ॥

"वृद्धेत्कोसलाजादाञ् ञ्यङ्" ॥ 'अणवक्तव्य इति' । ङकारष्टिलोपार्थः, णकारो वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधार्थः । 'अन्यस्मादिति' । गुणवचनाद्युधिष्ठिरपितृवनाच्च, पुरोरणवक्तव्यः पौरवइति, इति क्विचित्पठ्यते, तत्र पुरुशब्दस्याजनपदशब्दत्वात्प्राग्दीव्यतीयेणि सिद्धे तद्राजसंज्ञार्थं वचनं, जनपदवाचित्वे द्व्यञ्मगधेत्येव सिद्धम् ॥

"कुरुनादिभ्यो ण्यः" ॥ आदिशब्दो नकारेणैव संबध्यते न कुरुशब्देन, तदादेर्जनपदस्याभावात्, तदाह । 'कुरुशब्दान्नकारादिभ्यश्चेति' । 'अणञोरपवाद इति' । कुरुशब्दाद्व्यञ्मगधेत्यणोपवादः, नादिभ्यस्त्वञः । 'नैषध्य इति' । कथं नैषधोर्हति चेदर्घमिति, स्वच्छन्दवाच ऋषयः, कथं स नैषधस्यार्थपतेः सुतायामिति, निरङ्कुशाः कवयः, शेषविवक्षायां वाभयत्राण् समर्थनीयः ॥

"साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" ॥ सल्वा क्षत्रियेति पाठः, तन्नामिकेति वचनात्, इदं हि तन्नामिकाणः प्राप्त्यर्थमुक्तं, न च साल्वाशब्दात्तस्य प्राप्तिः, वृद्धत्वात्, सलेत्रप्रत्ययः । 'अणपीष्यतइति' । साल्वावयवे, अपदातौ साल्वादिति निर्द्देशात्, न च निपातितोण् ठकोपवादः, साल्वेयगान्धारिभ्यां चेति निर्द्देशात् । 'तेभ्यः क्षत्रियवृत्तिभ्य इति' । जनपदशब्दात्क्षत्रियादित्यनुवृत्तेरेतल्लभ्यते, उदुम्बरास्तिलखला इति श्लोकः प्रदर्शनार्थस्तेन बुस, अजमीढ, आजक्रन्द, इत्येतेभ्योपि भवति, तथा च भाष्यउदाहृतं, बौसिः, आजमीढिः आजक्रन्दिरिति । 'साल्वावयवसंज्ञिता इति' । साल्वावयव इत्येवं शब्दिता इत्यर्थः ॥

"ते तद्राजाः" ॥ 'तथा चैवोदाहृतमिति' । तत्र तद्राजस्य बहुषु तेनैवास्त्रियामित्यत्र कार्याश्रयमुदाहृतम्, इह तु प्रकरणे रूपाश्रयम् ॥

"कम्बोजाल्लुक्" ॥ 'चोल शक इति'। द्व्यञ्मगधेत्यस्याणः केरल इत्यत्राञः ॥

"स्त्रियामवन्तिकुन्तिकुरुभ्यश्च" ॥ 'अवन्तीकुन्तीति'। लुकि कृते इतो मनुष्यजातेरिति ङीष्। 'कुरूरिति'। ऊङुतः ॥

"अतश्च" ॥ 'तकारो विस्पष्टार्थ इति'। असति हि तस्मिन्नश्चेति निर्देशः स्यात्ततश्च सन्देहः स्यात्किमयं वर्णनिर्देश आहोस्विदिदम इति, इदमश्च निर्देशेनन्तरस्येञो लुक् प्रसज्येत, तकारे सत्येष दोषो न भवति, तपरनिर्देशस्य भूयसा वर्णेष्वेव प्रसिद्धत्वात्तपरस्तत्कालस्येति सञ्ज्ञाकरणाच्च, कथं माद्रीसुतौ पुण्यफले समृद्धे इति, स्वच्छन्दत्वाच्च ऋषयः, मद्रिसुतावित्येव वा पाठम्, । 'अवन्त्यादिभ्यो लुग्वचनादिति'। यद्यत्र तदन्तविधिः स्यादवन्त्यादिभ्यो लुग्वचनमनर्थकं स्यादनेनैव सिद्धत्वात्, तदन्तविधौ त्वसति अकारमात्रस्य ग्रहणेन सिध्यतीत्यवन्त्यादिभ्यो लुग्वचनमर्थवद्भवति ॥

"न प्राच्यभर्गादियौधेयादिभ्यः" ॥ 'पाञ्चालीत्यादि'। पञ्चालादयः शरावत्याः प्राञ्चो जनपदाः, भर्गादिग्रहणमप्रागर्थं, भृञो गः, भर्गः, कृञ उः, करु,स्तमोषति दुष्टि, मूलविभुजादित्वात्कः, करूषाः, चिनोतेः कयः आदेश्च कः, बहुलवचनादित्सञ्ज्ञाभावः, केकयः, कशेर्मिरः, कस्मीरः, साल्वशब्दो निरुक्तः, शोभनानि स्थलान्यस्य सुस्थलः, उरसा शेते उरशः, कुरुनादिभ्यो ण्यः कौरव्यः। 'यौधेयीत्यादि'। युधाया अपत्यं, शुभ्राया अपत्यं, द्व्यच इति ढक्, शुभ्राशब्दाच्छुभ्रादिभ्यश्चेति, ततः स्वार्थे पर्श्वादियौधेयादिभ्यामित्यञ्, यद्यञो लुक् स्याद्गुणलक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात्, लुकि तु प्रतिषिद्धे शार्ङ्गरवाद्यञ इति ङीनि सत्याद्युदात्तं भवति। 'कस्य पुनरिति'। अस्य वाक्यमाणोभिप्रायः, तमेव प्रकाशयति। 'कथं पुनरिति'। परिहरति। 'एतदेवेति'। 'पर्शुरिति'। पर्शुः क्षत्रियो जनपदेन समानशब्दः तस्यापत्यं सङ्घः, स्त्रीत्वविशिष्टः, द्व्यञ्मगधेत्यण्, तस्यातश्चेति लुक्, पुनः पर्श्वादिलक्षणः स्वार्थिकोऽण्, तस्यापि लुक्। 'एवं रक्षा इति'। रक्षः क्षत्रियस्यापत्यं, स्त्रीत्ववि

शिष्टः सङ्घः, पूर्ववदण्, द्वयस्यापि लुक्, अत्वसन्तस्येति दीर्घः । 'आसुरीति'। जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्याणो लुक्, जातिलक्षणो ङीष्, ज्ञापकत्वमेव द्रढयति । 'तथा चोक्तमिति'। वार्त्तिककारेणैतदुक्तं, यौधेयादिषु त्रयो निरुक्ताः, ज्ययासहितो बाणो यस्याः स ज्याबाणा, तस्या अपत्यं ज्याबाणेयः, ज्यावानेय इत्यन्ये पठन्ति । तत्र ज्यावानो यस्या ज्यावाना, घृ क्षरणे, धृ धारणे आभ्यां क्तिजन्ताभ्यामितश्चानिञ इति ढक्, घार्त्तेयः धार्त्तेयः,त्रयो गर्ता येषां ते त्रिगर्त्ताः, भृञोतच्, भरतः, वशेः कर्मणि किः, उशिः, उशयः, उष्टा नरा यस्य स उशीनरः, अन्येषामपि दृश्यतइति दीर्घः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थाध्यायस्य प्रथमः पादः ॥



# काशिकाव्याख्या पदमञ्जरी ।

"तेन रक्तं रागात्" ॥ रञ्जिरयमस्त्येवाभिष्वङ्गे,भोजने रक्त इति, अस्ति वर्णविशेषे, रक्ता गौ,लोहितेत्यर्थः । अस्ति शुक्लस्य वर्णान्तरापादने, रक्तः पट इति, तत्राद्ययोरर्थयोर्ग्रहणे, रूपेण कान्तायां रक्तः, कोपेन रक्तं मुखमित्यत्रापि प्राप्नोतीति मन्यमानस्तृतीयमर्थमाश्रित्याह । 'शुक्लस्येत्यादि' । एतच्चाभिधानस्वाभाव्याल्लभ्यते । 'रज्यतेनेन राग इति' । घञि च भावकरणयोरिति नलोपः, भावसाधनस्तु रागशब्दो न भवति, नहि रञ्जनक्रियैव रञ्जनक्रियायाः करणं भवति । 'रागविशेषवाचिन इति' । स्वरूपग्रहणं तु न भवति उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात् । 'रागादिति किमिति' । अनभिधानादेव कर्तृवाचिनो न भविष्यति, देवदत्तं वस्त्रमिति ह्युक्ते स्वस्वामिभावस्यैव संप्रत्ययादिति प्रश्नः, लक्षणैकशरणो नैतत्प्रतिपत्तुमर्हतीत्युक्तम् । 'कथमिति' । नह्यत्र वर्णान्तरमाहितमिति प्रश्नः । 'उपमानादिति' । रूपसादृश्यनिमित्तात् ॥

"लाक्षारोचनाट्ठक्" ॥ शकलकर्दमयोर्वार्त्तिके दर्शनात्सूत्रे प्रक्षेपः । 'नील्या इति' । ओषधिविशेषो नीली, अणुबाधनार्थवचनं, नीलशब्दस्तु गुणशब्दत्वादेव नीलीरक्ते वस्त्रे सिध्यति । 'पीतादिति' । रागविशेषवाची पीतशब्दः, इदमपि वचनमणुबाधनार्थमेव, स्वार्थिककन्प्रत्ययान्तस्तु पीतकशब्दो गुणवचनो वस्त्रे लभ्यते ॥

"नक्षत्रेण युक्तः कालः" ॥ इह पारमर्षाः कालं क्रियात्मानमिच्छन्ति, यथोक्तम् ॥

आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥

इति । वैशेषिकास्तु द्रव्यमाकाशकल्पम्, उक्तं च ।

व्यापारव्यतिरेकेण कालमेके प्रचक्षते ।
नित्यमेकं विभु द्रव्यं परिमाणं क्रियावताम् ॥

इति । द्वयोरपि दर्शनयोर्नक्षत्रेण कालस्य योगो न सम्भवति किं कारणम्, अप्राप्तिपूर्विका प्राप्तिर्योगः, कालविशेषावधारणार्थो हि लोके पौषादिशब्दप्रयोगः, एवंविध एव च योगः कालविशेषावधारणहेतुर्भवति, द्रव्यपक्षे तावद्द्वयोरपि नक्षत्रकालयोर्नित्यत्वात्कालस्य च सर्वगतत्वान्न कदा चिदयोगः, क्रियापक्षेपि नक्षत्रगतायाः क्रियायाः कालाख्यायाः समवायलक्षणो योगो ऽव्यभिचाराद्विशेषणं, सूर्यादिगताया-स्त्वसम्भवादविशेषणं, यदि तु यथाकथं चिद्योगस्तदा व्यभिचाराभावः, नहि सोस्त्यहोरात्रो यः पुष्येण न युक्तः, तस्मान्नक्षत्रेण युक्तः काल इत्यनुपपन्नो निर्देशः, कथं तर्हि निर्देशः कर्त्तव्यः, नक्षत्रादेर्युक्तान्ताद्युक्ते काले प्रत्ययविधानं युक्तलोपश्च, पुष्येण युक्तश्चन्द्रमाः पुष्ययुक्तः, पुष्ययुक्तेन युक्तः काल इति पुष्ययुक्तशब्दाच्चन्द्रमसि वर्त्तमानात्प्रत्ययः, युक्तशब्दस्य च लोपः, पौषी रात्रिः, पौषमहः, एवं सर्वत्र, तत्र युक्तवद्भावे दोषः, मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य लुपि मघा इति स्त्रीत्वबहुत्वे न सिद्ध्यतः, युक्तस्येव तु चन्द्रमसो लिङ्गवचनप्रसङ्गः, अतो नक्षत्रवाचिन एव प्रत्यययोर्योगः सम्भवतीति मत्वा पृच्छति । 'कथं पुनरिति' । न चन्द्रमसैव योगे पुष्यादीनां नक्षत्रता ज्योतिर्मात्रवचनत्वान्नक्षत्रशब्दस्य, ये तु पुष्यादीनामावस्थिकी नक्षत्रता चन्द्रमसा योगे भवतीत्याहुस्तेषामयं प्रश्नो ऽनुपपन्नः । 'पुष्यादिसमीपस्थ इति' । मुख्यार्थासम्भवे गौणस्याश्रयणमिति भावः, तत्र मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्त्तन्ते, यथा मञ्चादयः मञ्चान् स्त्रियः पश्येति, तेन युक्तवद्भावविषयेऽपि दोषाभावः । 'पुष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थ इति' । यद्यपि चन्द्रमसा कालस्य योगो नित्यः, चन्द्रमसो नित्यत्वात् पुष्यसमीपेन तु कादाचित्कः, पुष्यसमीपतायाः कादाचित्कत्वात् । 'पौषीति' । सूर्यतिष्येत्यादिना यलोपः ॥

"लुबविशेषे" ॥ यद्यविशेषे लुब् भवति, इहापि प्राप्नोति पौषी रात्रिः पौषमहरिति, अत्राप्यद्य श्वो वेति विशेषो न गम्यते । 'अथ रात्रिरहरिति' । विशेषावसायास्तदाश्रयः प्रतिषेधो भवति, इहापि तर्हि न स्यादद्य पुष्यो श्वः कृत्तिका इति, अद्यत्वादिविशेषावसायात्, पुष्ये पायसमश्नीयादित्यादावेव तु स्याद् यत्र न मनागपि विशेषा-वसायो ऽत आह । 'न चेदित्यादि' । रात्र्यादिरित्यादिशब्देन मुहूर्त्तादेः परिग्रहः । 'विशेषोभिधीयतइति' । प्रत्ययान्तेन, एतदेव स्पष्टयति । 'यावानिति' । कियांश्च कालो नक्षत्रेण युज्यतइत्याह । 'अहोरात्रइति' । षष्टिनाडिकात्मक इत्यर्थः, तावन्तं हि कालमेकस्य नक्षत्रस्य समीपे चन्द्रमा वर्त्तते तदेतदेवं यावान्कालो नक्षत्रेण युज्यते तस्य सर्वस्य प्रत्ययान्तेनाभिधानमविशेषः, तदेकदेशस्याभिधानं विशेषः, एतच्च प्रत्ययान्तेनुप्रवेशादन्तरङ्गत्वाच्च लभ्यते, प्रसज्यप्रतिषेधश्चायं, तेन पौषोऽहोरात्र इत्यत्र समुदायेनापि प्रतीयमानो ऽवयवद्वयात्मकः प्रतीयतइति तदाश्रयः प्रतिषेधो भवति, इह पुष्येण युक्ता पौर्णमासी पौषी मघाभिर्युक्ता माघीत्यादौ लुप् प्राप्नोति, ज्ञापकात्सिद्धं, यदयं विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति निर्दिशति तज्ज्ञापयति पौर्णमास्यां लुम्न भवतीति, श्रवणाशब्दात्तु भवति श्रवणाकार्त्तिकीति निर्देशादेव, कथं तर्हि श्रावण्यां पौर्णमास्यामिति, अबाधकान्यपि निपातनानि भवन्ति ॥

"सञ्ज्ञायां श्रवणाश्वत्थाभ्याम्" ॥ 'विशेषार्थोपमारम्भ इति' । न तु सञ्ज्ञायां नियमार्थः, विधिसम्भवे नियमायोगात्, श्रवणाकार्त्ति-कीत्यसञ्ज्ञायामपि लुपो दर्शनाच्च । 'लुपि युक्तवद्भावः कस्मान्न भव-तीति' । 'श्रवणारात्रिरित्यत्र निपातनादिति' । ङीप्चात्र प्रत्ययलक्षणेन न भवति, अण् यो ऽकार इति विज्ञानात् ॥

"द्वन्द्वाच्छः" ॥ नक्षत्रग्रहणमनुवृत्तं षष्ठ्यन्ततया विपरिण-म्यते, तच्च द्वन्द्वस्य विशेषणमित्याह । 'नक्षत्रद्वन्द्वादिति' । 'राधा-नुराधीया रात्रिरिति' । एकदेशद्वारेण रात्र्यादेर्नक्षत्रद्वययोगः, । 'अद्य

राधानुराधीयमिति'। आद्येत्यस्यालिङ्गत्वेपि तद्विशेषणस्य नपुंसकत्वं, लोकाश्रयत्वाल्लिङ्गस्य, लुपं परत्वाद्बाधते । 'छ इति' । ननु युगपत्प्राप्तयोर्विप्रतिषेधः, न च लुप्छयोर्युगपत्प्रसङ्गः, प्रत्ययादर्शनस्य हि लुप्सञ्ज्ञा तस्य कथं प्रत्ययेन सह प्रसङ्गः, तस्मादयमत्रार्थः, मध्ये ऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति, एवमयं लुबण एव भवति, नास्य छस्य, तेनायं छो लुपो विषये श्रूयते, एतदेव लुपं परत्वाद्बाधते च्छ इति बाधकत्वम् । 'परत्वादिति'। यतोयं परस्तेन लुबस्य न भवति, तेन तद्विषयेप्यसौ श्रूयतइति ॥

"दृष्टं साम" ॥ यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तत्तेन दृष्टमित्युच्यते ॥

"कलेर्ढक्" ॥ 'सर्वत्रेति' । न केवलमग्नेः साऽस्य देवतेत्यस्मिन्नेवार्थे ढक्, नापि केवलं दृष्टं सामेत्यत्रैवार्थे कलेर्ढग् अपि तु सर्वेष्वेव प्राग्दीव्यतीयेष्वित्यर्थः, संग्रहश्लोके जाते च द्विरण् डिद्वा विधीयतइति पाठः । जातेर्थे योण् विधीयते स वा डिद्भवतीत्यर्थः । 'न विद्याया इति'। विद्यावाचिन ईकग् न भवतीत्यर्थः । 'गोत्रादङ्कवदिति' । अङ्के यो दृष्टः प्रत्ययः स सर्वोतिदिश्यते न त्वङ्क एवाहत्य विहितस्तेन सङ्घाङ्कलक्षणेष्वित्यस्याणो गोत्रचरणाद्वुञित्यस्य च वुञोतिदेशः ॥

"वामदेवाड्ड्यड्ड्यौ" ॥ 'डित्करणं किमर्थमिति'। यस्येति लोपेनैव सिद्धिं मत्वा प्रश्नः । 'अनयोर्ग्रहणं मा भूदिति' । अथ क्रियमाणेपि डित्करणे कस्मादेवानयोर्ग्रहणं न भवति तत्राह । 'अननुबन्धकेति'। अननुबन्धकस्य ग्रहणे न सानुबन्धकस्येति यद्ग्रहणे ड्यड्ड्यतोर्ग्रहणं न भवति, एकानुबन्धकपरिभाषया तु यद्ग्रहणे ड्यतो ग्रहणाभावः । 'अवामदेव्यमिति' । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति, संग्रहश्लोके ऽतदर्थइत्यनेन ययतोश्चातदर्थइत्येतत्सूत्रं लक्ष्यते । 'नञ्स्वर इति' । नञाश्रयः स्वरो नञ्स्वरः, उत्तरपदान्तोदात्तत्वं तस्मिन्विधीयमानइत्यर्थः ॥

"परिवृतो रथः" ॥ 'चार्मण इति'। अचिति प्रकृतिभावः। 'परिवृतो रथ इति'। तदेकान्तग्रहणं, येन परिवृतो रथस्तदेकान्तश्चेद्भवतीति वक्तव्यं, तेन चर्मवस्त्रादावेव भवति, इतरथा छात्रादावपि प्रसङ्ग इत्याह। 'समन्ताद्वेष्टित इत्यादि'। वृञोऽतिर्वेष्टने परिः सर्वतो भावे। 'यस्य न कश्चिदवयव इति'। बाहुल्याभिप्रायमेतत्, नहि चक्रनेमिप्रभृतयश्चर्मणा पिधीयन्ते नाप्यन्तरावयवाः। ननु तत्कारी चायं यदाह। 'छात्रैः परिवृत इति'। तद् द्वेषी च, यदाह। 'समन्ताद् द्वेष्ठित इत्यादि'। नायं तत्कारी, औपचारिकोऽयं प्रयोगः, परिवृत इव परिवृतः ॥

"पाण्डुकम्बलादिनिः" ॥ 'मत्वर्थीयेनैव सिद्ध इति'। यो हि येन परिवृतः स तस्यास्ति। 'अणो निवृत्त्यर्थमिति'। यद्येतन्नारभ्येत परिवृतो रथ इति विवक्षायां पूर्वेणाण् प्रसज्येत ॥

"द्वैपवैयाघ्रादञ्" ॥ 'द्वीपिव्याघ्रयोरिति'। विरूपाणामपि समानार्थानामेकशेषः प्राप्नोति, तत्रावान्तरजातिभेदेन भिन्नार्थत्वान्न भविष्यतीति समाधातव्यं, चर्मणैव रथस्य परिवरणं सम्भवति न विकारमात्रेणेति चर्मणी इत्युक्तं, द्वीपिव्याघ्रशब्दाभ्यां प्राणिरजतादिभ्योऽञित्यञ् प्रत्ययः, द्वीपिनष्टिलोपः ॥

"कौमारापूर्ववचने" ॥ 'अपूर्ववचनइति'। अपूर्वशब्दो भावप्रधानः, अपूर्वत्वस्य वचनमपूर्ववचनं तस्मिन्नपूर्ववचने, कस्य पुनरपूर्वत्वोक्तावित्याह। 'पाणिग्रहणस्येति'। एतच्च निपातनसामर्थ्याल्लभ्यते, उभयतः, आद्यादित्वात्तसिः, स्त्रीपुंसयोरुभयोरप्येतन्निपातनमिष्यते, उभयोश्च पक्षयोरपूर्वत्वं स्त्रिया एव न पुंस इत्यर्थः। तत्र कौमारेति स्त्रीपुंससाधारणप्रातिपदिकमात्रनिर्देशादवसीयते उभयोरपि निपातनमिति, स्त्रिया एवापूर्वत्वमित्येतत्तु निपातनबलाल्लभ्यते। 'अपूर्वपतिमिति'। यस्याः पाणिर्न केन चिद्गृहीतपूर्वः सा ऽपूर्वपतिः, न विद्यते पूर्वः पतिरिति कृत्वा तामुपपन्नः प्राप्तः, भार्यात्वेन स्वीकृतवानित्यर्थः, स तु पूर्वकृतोद्वाहो भवतु मा वा भूत्। 'अपूर्वपति-

रिति'' । अयमपि बहुव्रीहिः, अत्रापि पुरुषः पूर्ववत् । 'कौमारेत्यादि' । कौमारेति निपात्यतेऽपूर्ववचने, किमत्र निपात्यते कुमार्या अण् विधीयते, कदा, ऽपूर्वत्वं यदा तस्याः, यदा कुमार्या अपूर्वत्वं न पुंसस्तदेत्यर्थः । 'कुमार्या भवतीति वेति' । 'अनेन योगः प्रत्याख्यायते, यः कुमारीमुपपन्नस्तस्यामसौ भवति तदायत्तत्वाद्धर्माचरणादेस्ततश्च तत्र भव इत्येवाण् सिद्धः, यद्यपि वाण्याद्यपि कुमार्या भवति तथापि सत्यभिधाने तत्र भव इति भवत्येव, सूत्रारम्भेऽपि हि नासौ दण्डवारितः, एवं तावत्कौमार इति सिद्धं, स्त्रियामपि सिद्धं, कथं, कौमारस्य स्त्री कौमारी, प्रत्यासत्त्या च यस्यामसौ भवन् कौमारव्यपदेशं लभते सैवाभिधीयते न स्त्र्यन्तरम्, एतच्च सूत्रारम्भेऽप्यङ्गीकर्त्तव्यम् ॥

"तत्रोद्धृतममत्रेभ्यः" ॥ अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्त्तते तेन सप्तमीसमर्थाद् विभक्तिर्नोपपद्यते । 'भुक्तोच्छिष्टमिति' । शिष्टमेवोच्छिष्टं, यथा उच्छिनष्टि न सर्वं जुहोतीति भुक्तशिष्टमित्यर्थः । 'यस्योद्धरणमिति प्रसिद्धिरिति' । कृत्यल्युटो बहुलमिति भूते कर्मणि ल्युट् । 'शरावेषूद्धृत इति' । उद्धृत्य निहित इत्यर्थः ॥

"स्थण्डिलाच्छयितरि व्रते" । 'शास्त्रित इति' । संजातशास्त्र इत्यर्थः । यद्वा तृतीयासमर्थाद्विधानेर्थे प्रातिपदिकाद्धात्वर्थइति णिच्, कर्मणि क्तः, शास्त्रेण विहित इत्यर्थः । 'स्थण्डिले शयितं व्रतमस्येति' । तुमुनत्र वक्तव्यः, व्रतस्य क्रियारूपत्वात् ॥

"संस्कृतम्भक्षाः" ॥ संस्कृतमित्येतत्कर्मसामान्ये व्युत्पाद्यते, तेन नपुंसकलिङ्गमेकवचनं च, भक्षा इत्येतत्तु अपूपाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुल्लिङ्गं बहुवचनं च, तत्र वाक्यार्थगम्यस्यार्थस्य पदसंस्कारेऽनुपयोगात्संस्कृतमित्येतद्भवति, अत एव विरम्य संबन्धं दर्शयति । 'यत्तत्संस्कृतम्भक्षास्ते चेद्भवन्तीति' । अणौ यत्कर्म णौ चेत् स कर्त्तेतिवत्, तच्छब्दस्य प्रतिनिर्द्दिश्यमानलिङ्गता । 'खरविशदमिति' । खरङ्कठिनं, विशदं विभक्तम् । 'भवशब्देनोच्यतइति' । यद्यप्यब्भवो वायुभव इति भवयतेरन्यत्रापि प्रयोगः, भवशब्दस्तु तत्रैव प्रसिद्ध इति भावः ॥

"शूलोखाद्यत्" ॥ शूलोखादिति समाहारद्वन्द्वः, उखापात्रविशेषः । यस्तु स्वाङ्गवाच्युखाशब्दस्तस्येह ग्रहणं न भवति, स्वाङ्गे संस्कर्त्तव्यस्याभावात् । 'कथमुख्योग्निरिति' । नह्यसौ भवः, भवार्थे दिगादित्वाद् द्रष्टव्यः ॥

"दध्नष्ठक्" ॥ 'इह तु दधि केवलमाधारभूतमिति' । यथा शूले संस्क्रियमाणस्य मांसस्य शूलं, यद्यप्यत्र दध्यपि संस्कारकं तथापि न तद्विवक्षितं किं तु तदाधारस्य द्रव्यान्तरेण यः संस्कारः स एव विवक्षित इति भावः ॥

"उदश्वितोऽन्यतरस्याम्" ॥ 'औदश्वित्क इति' । इसुसुक्तान्तात्कः ॥

"क्षीराड्ढञ्" ॥ अत्र संस्कृतमित्येव सम्बध्यते न भक्षा इति, तेन यवाग्वामपि भवति । 'क्षैरेयीति' । टिड्ढाणञित्यादिना ङीप् ॥

"सास्मिन्पौर्णमासीति सञ्ज्ञायाम्" ॥ 'ततश्चेद्विवक्षेति' । ततः प्रत्ययान्ताल्लोकस्य विवक्षा भवति चेद् एवं प्रत्ययो भवति नान्यथेत्यर्थः । 'संज्ञायामिति समुदायोपाधिरिति' । एतदेव स्पष्टयति । 'प्रत्ययान्तेन चेदिति' । 'पौषी पौर्णमासीति' । लुबविशेषइति पौर्णमास्यां लुब्न भवतीति पूर्वमेवोक्तम् । 'भृतकमासे चेति' । भृता एव भृतकाः, कर्मकरास्तेषां यो मासः कर्मकरणादारभ्य त्रिंशद्रात्रलक्षणः स यदा पौष्या पौर्णमास्या तद्वान् भवति वस्तुतश्च न माघादिव्यपदेशभाक् तत्रेत्यर्थः । 'तुल्यमेव फलमिति' । किं पुनस्तदित्याह । 'प्रयोगानुसारणमिति' । णयर्थाल्ल्युट् । 'संज्ञाशब्देन तुल्यतामिति' । तुल्यफलतामित्यर्थः 'इतिकरणस्य ज्ञापयितुमिति' । किं पुनरिदं ज्ञापकसाध्यं तत्राह । 'नह्ययमिति' । ज्ञापनस्य प्रयोजनं दर्शयति । 'संज्ञार्थत्वे त्विमि' । संज्ञाशब्देन तुल्यफलत्वे इत्यर्थः । 'प्रवृत्तिभेदेन चायमर्थो ज्ञाप्यतइति' । संज्ञायामिति द्वितीयाप्रवृत्तिः, इह शास्त्रे संज्ञायामित्यस्यार्थे इतिशब्दो वेदितव्य इति परिभाषा सम्पद्यते । 'पूर्वो-

मासादिणीति'। पूर्णो मासोस्यान्तिथाविति बहुव्रीहौ प्रज्ञादेराकृतिगण-त्वादस्मादेव वा निपातनादण्। 'माइति चन्द्रमा उच्यतइति'। चन्द्र-मश्शब्दैकदेशप्रयोगः सत्याभामा भामेतिवत् ॥

"आग्रहायण्यश्वत्थाट्ठक्" ॥ अग्रेहायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, पूर्वपदात्संज्ञायामिति णत्वम्। 'अश्वत्थेन युक्ता पौर्णमासी अश्वत्थ इति'। निपातनात्पौर्णमास्यामपि लुप् ॥

"सास्य देवता" ॥ 'यागसम्प्रदानं देवतेति'। यद्यपि देवशब्दो मनुष्यादिवज्जातिवचनः स्वार्थिकश्च तल्, तथापि समुदायशक्त्या देवताशब्दो यागे दर्शपूर्णमासादौ यद्यत्सम्प्रदानत्वेन चोदितं तत्र सर्वत्र वर्त्तते न स जातिविशेष इत्यर्थः। 'देयस्य पुरोडाशादेः स्वामिनीति'। दिवेरैश्वर्यकर्मणो देवताशब्दव्युत्पत्तिं दर्शयति, एवं च कृत्वा वाय्वृतुपित्रुषसो यत्, कालेभ्यो भववदिति वचनमुपपद्यते, नह्यृतुषु पितृषु उषसि वा जातिरस्ति, तथा पितृदेवत्यंदेवदेवत्यमिति प्रयोगोप्येवमेवोपपद्यते। 'कथमिति'। पुरोडाशादिकस्य देयस्याभावादिन्द्रस्य सम्प्रदानत्वं नास्तीति प्रश्नः। 'मन्त्रस्तुत्यामपीत्यादि'। नानेनौपचारिकत्वं प्रयोगस्योच्यतेऽपि तु मुख्य एव प्रयोगः, यागसम्प्रदाने सार्वलौकिकः प्रयोगः, अयं तु नैरुक्तानामित्येतावान्विशेषः। 'उपचरन्तीति'। ब्रुवते प्रयुञ्जतइत्यर्थः। 'कथमित्यादि'। पूर्वोक्तं प्रकारद्वयमत्र नास्तीति प्रश्नः। 'उपमानादिति'। काषायौ गर्द्दभस्य कर्णावितिवद्गौणोयं प्रयोग इत्यर्थः। 'सेति प्रकृतइति'। प्रकृतं हि साग्रहणं संज्ञया संबद्धमिति तदनुवृत्तौ संज्ञाया अप्यनुवृत्तिः स्यात् ॥

"कस्येत्" ॥ किमो विभक्तौ कादेशं कृत्वा कस्येति निर्द्दिष्टमित्याशङ्कामपनयति। 'कशब्दइति'। एवं च कृत्वा कायानुब्रूहीति सम्प्रैषः, कस्मायनुब्रूहीति, न कस्मै देवाय हविषा विधेमेति तु छान्दसः स्मैभावः, यविन्द्राग्नी अवमस्यामित्यादिवत्। 'कायमिति'। इत्वे कृते यस्येति लोपः प्राप्तः परत्वादादिवृद्धया बाध्यते श्रीर्द्देवतास्य श्रायमि-

तिवत्, सोमाट्ट्यणित्यत्र कग्रहणे च क्रियमाणे यद्यपि यस्येति लोपात्परत्वाद्वृद्धिर्भवति, कृतायामपि वृद्धौ यस्येति लोपः स्यादेव ॥

"अपोनप्त्रपान्नप्तृभ्यां घः" ॥ 'अपोनपात् अपांनपादिति देवतानामधेये इति'। पृषोदरादित्वादनयोः साधुत्वम्, । 'तयोस्तु प्रत्ययसन्नियोगेनेति'। एवं च अपोनपाते ऽनुब्रूहि अपां नपाते ऽनुब्रूहि अपोनपात्तं यज, अपां न पातं यजेति सम्प्रैषो, वेदे त्वपोनप्त्रे स्वाहेति छान्दसः प्रयोगः ॥

"छ च" ॥ 'योगविभाग इत्यादि'। पूर्वसूत्रएव छग्रहणे सति घच्छौ द्वौ प्रत्ययौ प्रकृती अपि द्वे इति स्यात्सङ्ख्यातानुदेशः। 'शतरुद्रीयमिति'। शतशब्दोऽनन्तवचनः, शतं रुद्रा देवता ऽस्येति घच्छौ, तयोर्विधानसामर्थ्याद् द्विगोर्लुगनपत्यइति लुङ्न भवति ॥

"महेन्द्राद्घाणौ च" ॥ महेन्द्रादणेत्युच्यमाने ऽनन्तरश्छ एव समुच्चीयेत न व्यवहितो घ इति पुनर्ग्रहणम् ॥

"सोमाट्ट्यण्" ॥ 'सौमीति'। टित्वान्ङीप्, हलस्तद्धितस्येति यलोपः ॥

"वाय्वृतुपित्रुषसो यत्" ॥ 'वायव्यमिति'। ओर्गुणः, वान्तो यि प्रत्यये। 'पित्र्यमिति'। रीङृत इति रीङ्, यस्येति लोपः ॥

"द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च" ॥ 'अणो ण्यस्य चापवाद इति'। वास्तोष्पतिशब्दात्पत्युत्तरपदस्य ण्यस्यापवादः, शेषेभ्योऽणः। 'द्यावापृथिव्यावीति'। दिवो द्यावा, दिवसश्च पृथिव्यामिति द्यावादेशः। 'शुनासीरावीति'। देवता द्वन्द्वे चेत्यानङादेशः, शुनो वायुः, सीर आदित्य इति, अन्ये तु एकमेव शुनसीरमिन्द्रस्य गुणमन्यन्त, यथाहाश्वलायनः, इन्द्रो वा शुनासीर इति। मन्त्रलिङ्गञ्च भवति, इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहइति। मरुतो ऽस्य सन्ति मरुत्वानिन्द्रः, । 'अग्नीषोमीयमिति'। ईदग्नेः सोमवरुणयोः, वास्तोः पतिर्वास्तोष्पतिः, अस्मादेव निर्देशात्साधुः, गृहमेधशब्दमकारान्तं बहु-

चा मन्यन्ते, मरुद्भ्यो गृहमेधेभ्य उत्तरेत्याश्वलायनः, गृहमेधास आगतेति च मन्त्रलिङ्गं, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमिति तु तैत्तिरीयकं, तत्र चेकारान्तो नकारान्तो वेति विप्रतिपन्नाः ॥

"अग्नेर्ढक्" ॥ कलेर्ढगित्यत्रोक्तमेवार्थं स्मारयति । 'प्राग्दीव्यतीयेष्विति ॥

"कालेभ्यो भववत्" ॥ 'कालविशेषवाचिभ्य इति' । स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात् । 'वत्करणमित्यादि' । असति वत्करणे कालेभ्यो भव इत्युच्यमाने यदि तावदेवं सम्बन्धः, कालेभ्यो भवे ये प्रत्यया विधास्यन्ते ते सास्य देवतेत्यत्रार्थे भवन्तीति देवताप्रकृतिरविशेषिता स्यात्ततश्च कालाट्ठञिति ठञिन्द्रादेरपि प्राप्नोति, अथ पुनरेवं सम्बन्धो भवे ये प्रत्यया विधास्यन्त्ये ते भवन्ति कालभ्यो देवताभ्य इति, एवमपि भवप्रत्यया न विशेषिताः स्युस्ततश्च दिगादिभ्यो यदिति यत् प्रत्ययोपि भवे विहितः कालवाचिभ्यो ऽस्मिन्नर्थे प्राप्नोति, अथाप्येवं सम्बन्धः कालेभ्यो भवे ये प्रत्ययास्ते भवन्ति, कालेभ्य एव देवतार्थे इति, तत्र सकृच्छ्रुतस्य कालशब्दस्यैवमुभयसम्बन्ध एव तावद्दुर्लभः । अथापि लभ्येत एवमपि यः कश्चित्कालाद्भवे प्रत्ययो यतः कुतश्चिद्देवतायाः स्याद् ऋतुभ्योण् मुहूर्त्तादेरपि प्राप्नोति, वतिनिर्देशे तु सति सादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन भवेर्थे विधास्यन्ते ये प्रत्ययाः, इहापि ताभ्य एव प्रकृतिभ्यस्तेनैव विशेषणेन तएव प्रत्यया भवन्तीति न किं चिदनिष्टम् ॥

"महाराजप्रोष्ठपदाट्ठञ्" ॥ महाराजो वैश्रवणः, प्रोष्टपदशब्दात्पूर्वेण नक्षत्राणि प्राप्ते वचनं, नवयज्ञ आग्रयणम् । 'पूर्णमासादणिति'। अस्मिन्वर्त्ततइत्येव । 'पौर्णमासीति' । पूर्णो मासो ऽस्यां तिथौ वर्त्तत इति विग्रहः, एषैव च व्युत्पत्तिः सास्मिन्पौर्णमासीत्यत्रापि दर्शिता ॥

"पितृव्यमातुलमातामहपितामहाः" ॥ 'पितृमातृभ्यामिति' । स्वरूपपदार्थकत्वेनाभ्यर्हितत्वे विशेषाभावाल्लघ्वक्षरस्य पूर्वनिपातः, अयोनिसम्बन्धवाचित्वादनङ्भावश्च । 'डामहजिति' । कथं तर्ह्योकारे ऽवग्रहो

मातामहः पितामह इति । तस्मान्महप्रत्ययः पितृमातृभ्यां निपाति- तस्तयोश्चानङादेश इति केचित् । वृत्तिकारस्तु संहितापाठस्यैव नित्य- त्वाच्च लक्षणेन पदकारा अनुवर्त्या इति न्यायेनावग्रहो मा कारीति मन्यते । 'मातरि षिच्चेति' । षित्त्वमुपसङ्ख्येयमित्यर्थः । न पुनः षकारो ऽनुबन्धः कर्त्तव्य इति देशाभावात्, मातामहा इत्यपि मन्त्रे दृश्यते । 'अवेर्दुग्ध- इति' । दुग्धं क्षीरं सोढादीनामादेशप्रत्यययोरिति षत्वं न भवति, सकारोच्चारणसामर्थ्यात् । 'निष्फलस्तिलइति' । सस्यावस्थायां फल- रहित उच्यते, धान्यावस्थायां प्रयोजनशून्य इत्यन्ये ॥

"तस्य समूहः" ॥ सर्वस्यैव विषयस्यापवादैरवष्टब्धत्वात्पृच्छति । 'किमिहोदाहरणमिति' । काकशुकवकशब्दा आद्युदात्ताः प्राणिनां कुपूर्वाणामित्यनेन, अस्यार्थः, व्यधिकरणे षष्ठ्यौ, अथादिः प्राक् शकटेरि- त्यत आदिरित्यनुवृत्तं षष्ठीबहुवचनान्तं विपरिणम्यते प्राणिवाचिनां ये आदिभूताः कवर्गात्पूर्वे अचस्तेषामुदात्तो भवतीति, तत्र शौकमित्यनु- दाहरणं खण्डिकादिषु पाठात्, बकशब्दस्तूदाहार्यः ॥

"भिक्षादिभ्योऽण्" ॥ 'अण्ग्रहणं बाधकबाधनार्थमिति' । भिक्षा- शब्दोयं गुरोश्च हल इत्यकारप्रत्ययान्तत्वादन्तोदात्तः, ततोनुदात्तादे- रित्यञ् अणो बाधकः प्राप्नोति तस्य बाधनार्थमण्ग्रहणम् । ननु च यद्य- त्राञ् स्यात्पुनर्वचनमनर्थकं स्यात्, नानर्थकं, परत्वादचित्त तल्लक्षणष्ठक् प्राप्नोति, तद्बाधनार्थमत्र पुनर्वचनं स्यादित्यञ् स्यादेव, पुनरण्ग्रहणाद- णेव भवति । 'गार्भिणमिति' । भस्याढे तद्धितइति पुंवद्भावेन ङीपो निवृत्तिः, ततोणि इनण्यनपत्यइति प्रकृतिभावान्नस्तद्धितइति टिलोपाभावः । 'तस्य ग्रहणसामर्थ्यात्पुंवद्भावो न भवतीति' । यदि स्यात्सिद्धत्वात्प्रत्ययविधा- वितिवचनादनुत्पन्नएव तद्धिते पुंवद्भावेन भवितव्यं, युवशब्दश्च कनि- न्युवृषेति कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सर्गिकएवाण् सिद्ध इति तस्येह पाठोनर्थकः स्यात् । 'यौवतमिति' । यथा तु वार्त्तिकं तथा पुंवद्भाव इष्यते । आह हि भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् प्रत्ययविधाविति ॥

"गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ्" ॥ 'अपत्याधिकारादन्यत्रेति' । यद्येवं राजन्यमनुष्ययोरुपादानमनर्थकं गोत्रइत्येवसिद्धं, न तावपत्यप्रत्ययान्तौ जातिः प्रत्ययार्थत्वात्, उक्तं हि । 'राज्ञोऽपत्ये जातिग्रहणं, मनोर्जातावञ्यतौ षुक्चेति, किं तर्ह्युच्यते प्रकृत्या के राजन्यमनुष्ययुवान इति, यलोपो न भवतीति, यावता ऽनापत्ययकारत्वेनैव न भविष्यति, सत्यम्, अपत्यार्थत्वमभ्युपेत्यैतदुच्यते, यद्यपत्यार्थत्वमभ्युपेयते राजन्यमनुष्ययोर्ग्रहणमनर्थकं, नानर्थकं ज्ञापनार्थत्वात्, एतज् ज्ञापयति, नैतयोरपत्यकृतं भवतीति, तेन यलोपो न भवति, सर्वथा प्रकृत्या के राजन्यमनुष्ययुवान इति न वक्तव्यम्, । 'औपगवकमिति' । यथात्र परोऽप्यनुदात्तादेरञ् न भवति तथा खण्डिकादिभ्यश्चेत्यत्र वक्ष्यते ॥

"ब्राह्मणमाणववाडवाद्यन्" ॥ 'नकारः स्वरार्थ इति' । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं यथा स्यात्, किमर्थं पुनर्ब्राह्मणादिभ्यो यन्विधीयते न प्रकृतो यञेव विधीयेत, नहि वृद्धेषु यञो यनो वा विशेषोस्ति, तदेव रूपं स एव स्वरः, ठञस्त्व स्वरितत्वादननुवृत्तिः, ज्ञापनार्थं तु, एतज् ज्ञापयति अन्येभ्योप्ययं भवतीति, किं सिद्धं भवति, पृष्ठादुपसङ्ख्यानं चोदयिष्यति तच्च वक्तव्यं भवति पृष्ठानां समूह इति, पृष्ठशब्दः स्तुतिविशेषवचनः । 'पृष्ठ्यः षडह इति' । तद्वृति तदुपचारः । 'णस्वक्तव्य इति' । सकारः पदसञ्ज्ञार्थः, तेन पार्श्वमित्यत्र भत्वाभावादोर्गुणो न भवति ॥

"अनुदात्तादेरञ्" ॥ 'अचित्तात्परत्वाद् ठका भवितव्यमिति' । चित्तवन्त उदाहृताः, कपोतमयूरशब्दौ लघावन्तइति मध्योदात्तौ, इगुपधात्कः, तरतेः सन्वल्लुक् चाभ्यासस्येति किप्रत्ययान्तस्तितिरिशब्दः प्रत्ययस्वरेणान्तोदात्तः, सन्वद्भावेनाद्युदात्तत्वं न भवति, उणादयो बहुलमिति बहुलवचनात् ॥

"खण्डिकादिभ्यश्च" ॥ 'क्षुद्रकाश्चेति' । क्षुद्रकस्यापत्यानि, जनपदशब्दादिति विहितस्य तद्राजस्य लुक्, मालवात्तु बहुलग्रहणस्य व्यङः । 'पूर्वेणापि सिद्ध इति' । समासान्तोदात्तत्वे सति शेषनिघातेनानुदात्तादित्वात् ॥ 'ननु च परत्वादिति' । अभ्युपेत्य गोत्रत्वमेतदुक्तं,

तदेव तु नास्तीत्याह । 'न च गोत्रसमुदायो गोत्रमिति'। तत्र च यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यतइति काशिकोसलाया इत्यत्र छ एव भवति न जनपदलक्षणो वुञ् तद्वदत्रापि गोत्रलक्षणो वुञ् न प्राप्नोतीति भावः। स्यादेतत्। मा भूत्समुदायो गोत्रं मालवशब्दस्तु गोत्रं भवति, ततश्च तदन्तविधिना समुदायादपि वुञ् प्राप्नोतीति तत्राह। 'न चेति'। येन विधिस्तदन्तस्येत्यत्र हि समासप्रत्ययविधौ प्रतिषेध इत्युक्तम्। 'एवं तर्हीत्यादि'। कथमेकेन यत्नेनोभयं शक्यं ज्ञापयितुं, शक्यमित्याह, अन्यथानुपपत्त्या ज्ञापकं भवति, उभयेन च विना नास्मादञ्विधानमुपपद्यतइति, किमत्रानुपपन्नं, तत्र पूर्वविप्रतिषेधज्ञापनस्य प्रयोजनमौपगवकं कापटवकमिति, वुञोवकाशः ग्लादाद्युदात्तं, ग्लुचुकस्यापत्यं ग्लुचुकायनिः, प्राचामवृद्धात्फिन्, तेषां समूहो ग्लैचुकायनकमिति, अञस्तु कापोतमित्यादगोत्रमवकाशः, गोत्रादनुदात्तादेरुभयप्रसङ्गे परत्वादञ् स्यात्, अस्मात्तु ज्ञापकाद्वुञेव भवति, तदन्तविधिज्ञापनस्य प्रयोजनं वनहस्तिनां समूहो वानहस्तिकम्। 'गोधेनुकमिति'। जङ्गलधेनुवलजान्तस्येत्युत्तरपदवृद्धिविकल्पः। पुनरस्यैव नियमार्थत्वं वर्णयिष्यन् कथमेकेन यत्नेनायं लभ्यं, ज्ञापनं च नियमश्चेत्याशङ्क्याह। 'क्षुद्रकमालवादित्येतावतेति'। योगविभागेन यत्नद्वयमाश्रीयतइत्यर्थः। 'क्षौद्रकमालवी क्षौद्रकमालवकमिति'। उभयत्रापि मालवादुत्पन्नस्य ञ्यङो गोत्रे ऽलुगचीति लुकि प्रतिषिद्धे आपत्यस्येति यलोपः। 'अञ्सिद्धिरित्यादि'। अनुदात्तादेरिति हेतुगर्भं विशेषणं, यतोयं क्षुद्रकमालवशब्दोनुदात्तादिस्तेन तस्मादनुदात्तादेरित्येवाञः सिद्धिरस्ति, कोर्थस्तस्य गणपाठनेति शेषः, न किंचित्प्रयोजनमित्यर्थः, गोत्रलक्षणो वुञ् प्राप्नोति, अतस्तद्बाधनार्थः पाठ इति चेत्तत्राह 'गोत्राद्वुञिति'। गोत्राद्वुञ् विधीयते न च तत्क्षुद्रकमालवेतिशब्दरूपगोत्रमित्यर्थः। 'तदन्तादिति'। मालवशब्दस्य गोत्रत्वात्तदन्तविधिना प्राप्नोत्येव। 'न स सर्वत इति'। आद्यादित्वात्सप्तम्यन्तात्तसिः, स तदन्तविधिः सर्वत्र न भवतीत्यर्थः। 'तदन्तात्वइति'। तदन्तविधिरस्तीत्यस्मिन्नर्थइत्यर्थः। 'तथा चेति'। धेनुरनञिकमुत्पादय-

तीत्यापिशलेः सूत्रम्, । अत्र वुञर्थोनुबन्धो मृग्यः, एकस्यैव चेत्सुक्ता-न्मात्परस्य कादेशो द्रष्टव्यः, अर्थमात्रं वा भाष्यकारेण निर्दिष्टम् । एक-मिति ठकमित्यर्थः । धेनूनां समूहो धैनुकम् । अनञीति किम्, अधेनूनां समूह आधेनवम्, उत्सादिपाठादञ्, यद्यपि धेनुशब्दः सूत्रे पठ्यते तथापि बक्ष्यमाण इति लिङ्गादधेनुशब्दादपि भवति, तत्र यदि सामूहिकेषु तदन्तविधिर्न स्यादनञीति प्रतिषेधो ऽनर्थकः स्यात्, प्रयोजनान्तरम-प्याह । 'सेनायामिति' । 'यथेति' । पूर्वविप्रतिषेधेन वुञा ऽञो बाधा यथा स्यादित्येवमर्थश्च तस्य गणे पाठ इत्यर्थः । उलूकशब्दोत्र पठ्यते स लघावन्तइति मध्योदात्तः, छन्दसि तु यदुलूको वदति मोघ-मेतत्, इत्या उलूक आपप्तदिति यदाद्युदात्तत्वं तच्छान्दसम्, भाषायां तु मध्योदात्तमेव, तत्र पूर्वेणैवाञ् सिद्धस्तस्मादेवं वक्तव्यम्, औलूक्यशब्दो गर्गादियञन्तस्तस्य यञञोश्चेति बहुषु लुकि कृते रूपम् । 'तदिह पठ्यतइति' । असति हि तस्य पाठे उलूकानां समूह इत्यर्थविवक्षायां गोत्रे ऽलुगचीति लुकः प्रतिषेधादौलुक्यशब्दाद्गोत्राश्रयो वुञ् प्राप्नोति । शुकशब्दोत्र पठ्यते, तस्य समूह इत्यत्र तु यस्य च नान्यत्प्रतिपदविधा-नमस्तीत्युक्त्वोदाहृतं काकं शौकमिति, तस्मात्तत्र शौकमित्यस्य स्थाने बाकमिति पठितव्यं, बकशब्दः प्राणिनां कुपूर्वाणामित्याद्युदात्तः, युग-वरत्रेति पठ्यते, तत्सङ्घातविगृहीतार्थमिच्छन्ति, यौगवरत्रं यौगं वारत्र-मिति, तत्र सङ्घातपक्षे जातिरप्राणिनामिति द्वन्द्वैकवद्भावे नपुंसकह्र-स्वत्वे सति युगवरत्रेति दीर्घनिर्देशोनुपपन्नस्तस्माद्युगसहिता वरत्रेति समासः कर्त्तव्यः, जातिपरत्वाभावाद्वा एकवद्भावाभावः ॥

'चरणेभ्यो धर्मवत्' ॥ 'गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्य-न्तइति' । ननु च न तत्र धर्मग्रहणमस्ति तत्कथं धर्मवदित्यतिदेशो युज्यतइत्याह । 'तत्रेदमिति' । इदमेव धर्मवदितिवचनं लिङ्गमस्ति तत्र चरणाद्धर्माम्नाययोरिति । 'वतिः सर्वसादृश्यार्थ इति' । असति तस्मिन् चरणेभ्यो धर्म इत्युच्यमाने यदि तावदेवं संबन्धः, चरणेभ्यो धर्मे ये प्रत्यया विधास्यन्ते ते भवन्ति, समूह इति समूहप्रकृतिरविशेषिता स्यात्,

ततश्च काकादिभ्योपि वुञादयः प्रसज्येरन्; अथ पुनरेवं संबन्धो धर्मे ये प्रत्यया विधास्यन्ते ते चरणेभ्यः समूहे भवन्तीति, एवमपि धर्मप्रत्यया न विशेषिताः स्युः, ततश्च तस्येदमिति विधास्यमाना अणादयोपि कठादिभ्य आपद्येरन्, अथाप्येवं संबन्धः, चरणेभ्यो धर्मे ये प्रत्ययास्ते भवन्ति चरणेभ्य एव समूहइति, तत्र सकृच्छ्रुतस्य चरणशब्दस्यैवमुभयसंबन्ध एव ताव-दुर्लभः, अथापि लभ्येत एवमपि यः कश्चिद्धर्मे प्रत्ययो यतः कुतश्चि-च्चरणशब्दात्स्यात् कौपिञ्जलहास्तिपदादण् कठादिभ्योपि स्यात्, वति-निर्देशे तु सति सर्वसादृश्यपरिग्रहो भवति, तेन याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया धर्मे विधास्यन्ते इहापि ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन तएव भवन्तीति न किं चिदनिष्टम् । 'काठकं कालापक-मिति' । गोत्रचरणाद्वुञ् । 'छान्दोग्यमिति' । छन्दोगौक्थिकेति ञ्यः, । 'आथर्वणमिति' आथर्वणिकस्येकलोपश्चेत्यण् इकलोपश्च ॥

"अचित्तहस्तिधेनोष्ठक्" ॥ 'अणोऽपवाद इति' । अचित्ता-र्थेषु येन नाप्राप्तिन्यायेनाणोपवादः, कपोतादिषु चित्तवत्सु चरितार्थस्या-ञोपि परत्वाद्बाधक इत्यर्थः । हस्तिधेनुशब्दयोस्तु प्रत्ययस्वरेणान्तोदा-त्तयोरनुदात्तादिलक्षणस्याञोपवादः, हस्तिशब्दो हस्ताज्जाताविती नि-प्रत्ययान्तः, धेनुशब्दो धेटोनुश्चेति नुप्रत्ययान्तः । 'आधेनवमिति' । उत्सादिपाठादञ्, अङ्गलधेनुवलजान्तस्येति पक्षे वृद्ध्यभावः ॥

"पाशादिभ्यो यः" ॥ यप्रत्ययान्तं स्वभावतः स्त्रीलिङ्गं, वातश-ब्दोत्र पठ्यते वातानां समूहो वात्या, पृथग्वातादर्शनादयुक्तोत्र समूहः, तस्माच्छीघ्रत्वे प्रत्ययो वक्तव्यः,नैष दोषः । एकस्यापि वातावयविनो दिग्भे-देन भेदो ऽध्यारोपः, तदाश्रयश्च समूहः, अथ वा प्रतिदिशं वातावय-विन एव भिद्यन्ते, तथा च प्रतिभासः पूर्वोवात उत्तरो वातः सर्वतो वान्ति वाता इति, आह च वायोर्वायुसंमूर्छनं नानात्वे लिङ्गमिति ॥

"खलगोरथात्" ॥ अथ कस्मात्खलादयोपि पाशादिष्वेव न पठिताः, एवं हि विभक्तिर्नोच्चारयितव्या भवति, तत्राह । 'पाशादि-ष्वपाठ इति' ॥

"इनित्रकट्यचश्च" ॥ योगविभागो यथासङ्ख्यार्थः, अन्यथा इनि त्रकट्यचस्त्रयश्चकाराश्चश्चेति चत्वारः प्रत्ययाः प्रकृतयस्तु तिस्र इति वैषम्यं स्यात् । 'खलादिभ्य इति' । खलादयः प्रयोगतो गम्याः, एतेपि प्रत्ययाः स्वभावतस्त्रियामेव ॥

"विषयो देशे" ॥ ननु च विषयस्य देशत्वाव्यभिचाराद्देश इति विशेषणं व्यर्थमित्यत आह । 'विषयशब्दोयमिति' । अत्यन्तशीलितो त्यन्ताभ्यस्तः । 'तत्र देशग्रहणं ग्रामसमुदायप्रतिपत्त्यर्थमिति' । यद्येवं देशग्रहणमेवास्तु मा भूद्विषयग्रहणं, नैवं शक्यं, देशशब्दोपि नानार्थः, देशनं देश इति क्रियाशब्दस्यापि भावात् । 'शिबीनां विषयो देशः शैब इति' । कथं शिबयो देश इति, निवासविवक्षायां तस्य निवासः, जनपदे लुबिति लुपि भविष्यति । नन्वर्थभेदो भवति, शिबीनां निवासो जनपद इत्यत्र स्वस्वामिभावो न प्रतीयते, अन्यदीयेपि जनपदे निवाससम्भवात्, शिबीनां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते न तु निवासार्थस्तत्रा-वसतामपि स्वामित्वसम्भवात्, सत्यं, य एवासौ येषां विषयस्तत्रैव तेषां निवासे जनपदे लुप् स्मर्यते न निवासमात्रे, अत्र चाभिधानस्वाभाव्यं हेतुः, एवं च शिबीनां विषयः शैब इत्यत्रार्थे शिबय इत्यपि भवति, एवं वसातीनां विषयो वासातः, तेषामेव निवासो वसातयः, तथा गान्धारीणां विषयो गान्धारः, निवासो गान्धारयः, अङ्गाः वङ्गाः सुह्माः पुण्ड्रा इति, निवासरूपतैव विवक्ष्यते न विषयरूपता, एवं राजन्यादिभ्यो वुञित्यत्रापि विषयविवक्षायां राजन्यकं, निवासो राजन्याः, तत्रैव बैल्वतादिषु विषयविवक्षैव तेन बैल्वतकम्, आम्बरीषपुत्रकमित्याद्येव भवति, सर्वत्र चाभिधानशक्तिरेव हेतुः, तदाह, विषयाभिधाने जनपदे लुप्, बहुवचनविषयाद्गान्धार्यादिभ्यो वा राजन्यादिभ्यो नित्यं, न चाभिधेयस्य निवासविषयत्वात्, निवासविवक्षायां लुप्, विषयविवक्षायां तु प्रत्यय इति ॥

"सोस्यादिरितिच्छन्दसः प्रगाथेषु" ॥ छन्दस इति न स्वरूपग्रहणं नापि मन्त्रब्राह्मणयोः, कस्य तर्हि, अक्षरसामियत्तावचनश्छन्दः शब्दोस्ति यस्य जगत्यादयो विशेषास्तस्य ग्रहणं, प्रगाथानामादौ तस्यैव

सम्भवात्, तेन पङ्क्त्यादिशब्देभ्यः प्रत्ययः, यत्र द्वे ऋचौ तिस्रः क्रियन्त इति चतुर्थषष्ठौ पादौ बार्हतो प्रगाथे पुनरभ्यसित्वोत्तरयोरवस्येदित्येवमादिना प्रकारेण तद्यथा यज्ञायज्ञा वः प्रियं मित्रं न शंसिषं प्रियं मित्रं न शंसिषमूर्जे निपातमिति, तत्र योयमुच्चैरिणप्रकारस्तद्ग्रथनम् । 'प्रग्रथनादिति'। प्रगाथशब्दप्रवृत्तिनिमित्तं दर्शयति, प्रग्रथ्यतइति प्रगाथः, अकर्त्तरि च कारकइति कर्मणि घञ्, पृषोदरादित्वाद्रेफनकारयोर्लोपः । 'प्रा(१)गाणाद्वेति' । कृत्यश्च इति णत्वं, कै गै शब्दे, प्रगीयतइति प्रगाथः, उषिकुषिगार्तिभ्यस्थन् । 'त्रैष्टुभमिति' । कुटीर इति स्वार्थिकस्यापि प्रत्ययस्य यथा भिन्नलिङ्गता तथेहापि नपुंसकत्वं द्रष्टव्यम् ॥

"संग्रामे प्रयोजनयोद्धृभ्यः" ॥ समर्थानां प्रथमाद्वेति वचनात्संग्रामवाचिभ्यः प्रत्ययः प्राप्नोति न प्रयोजनयोद्धृभ्यश्चरमनिर्दिष्टेभ्य इत्याशङ्क्याह । 'सोस्येति'। 'समर्थविभक्तिरित्यादि'। 'प्रथमासमर्थविशेषणमिति'। तेन विशेष्यद्वारेण प्रयोजनयोद्धार एव प्रथमनिर्दिष्टाः, प्रत्ययार्थविशेषणं संग्रामइति, तेन तद्द्वारेण संग्राम श्चरमनिर्दिष्टः ॥

"घञः सास्यां क्रियेति ञः" ॥ 'अस्यामिति प्रत्ययार्थः स्त्रीलिङ्गइति'। तेन लिङ्गस्य विवक्षितत्वं दर्शयति, । 'घञन्तात्क्रियावाचिन इति'। भावे यो घञ् तदन्तादित्यर्थः। 'श्यैनंपातेति'। पतनं पातः, श्येनानां पात इति कर्त्तरि षष्ठ्याः समासः, ततो ञः, श्येनतिलस्य पाते ञइति मुम्। 'प्राकार इति'। द्रव्यवचनोयं कर्मणि घञन्तः, उपसर्गस्य घञ्यमनुष्ये बहुलमिति प्रशब्दस्य दीर्घत्वम्, । 'सामान्येन चेदं विधानमिति'। एतदेवोदाहरणेन द्रढयति। 'दण्डपात इति' ॥

"तदधीते तद्वेद" ॥ इह योयं ग्रन्थमधीते स तं स्वरूपतो वेत्ति, यश्च वेत्ति सो ऽवश्यमधीतइत्यन्यतरोपादानेन सिद्धं किमर्थमिमावर्थावुपदिश्येते, नैतयोरवश्यकः समावेशः, अध्ययनं शब्दपाठः, अर्थावबोधो वेदनं, भवति च कश्चित्संपाठं पठति नार्थं वेत्ति, कश्चिच्चार्थं वेत्ति न संपाठं पठति। 'द्विस्तद्ग्रहणमित्यादि'। तदधीते वेदेत्युच्यमाने समु-

(१) मुद्रितमूलपुस्तके प्रगथनादिति पाठ उपलभ्यते स पदमञ्जर्यसंमतः ।

च्चयो विज्ञायेत, ततश्च यस्तदधीते वेद च तत्रैव स्याद्यस्तु केवलमधीते वेद वा न तत्र स्यात्, द्विस्तद्ग्रहणे तु वाक्यभेदेनाधीयानविदुषोः पृथक् प्रत्ययविधानं सिध्यति, ननु च तदस्य तदस्मिन्स्यादित्यत्र नानार्थनिर्द्देशे प्रत्येकं समर्थविभक्तिः सम्बन्धनीयेति द्विस्तद्ग्रहणेन न्यायो व्युत्पादयिष्यते, अत एव तेन दीव्यतीत्यत्र प्रत्यर्थं प्रत्ययो भवति, न ह्रम इहैव द्विस्तद्ग्रहणमधीयानविदुषोः पृथग्विधानार्थमिति किं तर्ह्युत्तरत्र क्रतूक्थादिसूत्रान्ताट्ठक्, वसन्तादिभ्यष्ठगित्यत्रापि, किं च कारणं न स्यात्, क्रतुशब्दः कर्मनामधेयं वसन्तादयोप्यर्थाः, न तेषामध्ययनं सम्भवति, तस्य शब्दविषयत्वात्, तत्सहचरिते तु ग्रन्थे सम्भवति, गौणत्वात्तु न गृह्यते, मख्य एव त्वयं वेदनं सम्भवतीति तेभ्यो विदुष्येव स्याद् नाध्येतरि, पुनस्तद्ग्रहणात्तु यत्नाद्गौणस्यापि ग्रहणात्तत्रापि भवति॥

"क्रतूक्थादिसूत्रान्ताट्ठक्"॥ 'क्रतुविशेषवाचिभ्य इति'। स्वरूपस्य तु ग्रहणं न भवति, यदि स्यादुक्थादिष्वेव पठेत्, क्रतुसामान्यवाचिनामपि [illegible]दीनां पर्यायाणां न भवति, उक्थादिषु यज्ञशब्दस्य पा[illegible]त्यमाद्विशेषवाचिनामेव ग्रहणं तेभ्यो मुख्यार्थवृत्तिभ्यो वेदितरि [illegible]प्रतिपादनपरग्रन्थवृत्तिभ्यस्त्वध्येतरि। 'वार्त्तिकसूत्रिक इति'। [illegible]धु वार्त्तिकं, कथादिभ्यष्ठक्। वार्त्तिकं च तत्सूत्रं चेति कर्मधारयात्प्रत्ययः, एवं सांग्रहसूत्रिक इति, कल्पसूत्रमिति कर्मधारयः समाहारद्वन्द्वो वा। 'यज्ञायज्ञीयात्परेणेति'। एनपा योगे पञ्चमी चिन्त्या, एनबपि परशब्दात्पाक्षिकः, यदा तद्विधावुत्तराधरदक्षिणादातिरिति नानुवर्त्तते दिक्शब्देभ्य इत्येवानुवर्त्तते। 'न च तान्यधीयाने प्रत्यय इष्यत इति'। ठग् अण् च प्रत्ययद्वयमपि नेष्यते तेनोक्थान्यधीयतइति वाक्यमेव भवति, अत्र च अभिधानमेव शरणम्, सामलक्षणं प्रातिशाख्यम्। 'औक्थिक्य इति'। औक्थिका नामाम्नायः, इदमर्थं छन्दोगौक्थिकेति ज्यः। 'औक्थिक्यशब्दाच्च प्रत्ययो न भवतीति'। अण्प्रत्यय इत्यर्थः, इदं प्रसङ्गादुक्तम्। 'सूत्रान्तादिति'। अत्यल्पमिदमुच्यतइत्याह 'विद्यालक्षणकल्पसूत्रान्तादिति वक्तव्यमिति'। विद्या चेत्यादिवाक्येनातिप्रसक्तस्यापवादः।

अङ्गादिपूर्वो विद्याशब्दः प्रत्ययं नोत्पादयतीत्यर्थः । 'त्रैविद्य इति' । अथवा विद्या त्रिविद्या तामधीते त्रैविद्यः, तिस्रो विद्या अधीतइति तु विग्रहे द्विगोर्लुगनपत्यइति लुक् प्रसङ्गः । 'यावक्रीतिक इति' । यवक्रीतमधिकृत्य कृतमाख्यानं यवक्रीतशब्देनोच्यते, एवं प्रैयङ्गवमधिकृत्य कृतमुपचारात्प्रैयङ्गवमुच्यते । 'वासवदत्तिक इति' । वासवदत्तामधिकृत्य कृता आख्यायिका, अधिकृत्य कृते ग्रन्थइत्यत्रार्थे वृद्धाच्छः, तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्, ततोनेन ठक्, एवं सौमनोत्तरिकः । 'ऐतिहासिक इति' । इतिहासीदिति यत्रोच्यते स इतिहासः, पृषोदरादित्वात्साधुः । 'सर्वसादेरिति' । सर्वादेः सादेर्द्विगोश्चोत्पन्नस्य प्रत्ययस्य लो भवति लुभवतीत्यर्थः, अर्थवतः सशब्दस्य ग्रहणात्सर्वशब्दः पृथगुपात्तः, द्विगोश्चेत्यनेन द्विगोर्लुगनपत्य इत्ययमेव लुक् स्मारितः । 'सर्ववेद इति' । सर्ववेदानधीतइत्यणो लुक् । 'सवार्त्तिक इति' । वार्त्तिकान्तमधीतइति अन्तवचने सहशब्दस्याव्ययीभावः, अव्ययीभावे चाकालइति सभावः, ततोणो लुक् । 'अनुसूरिति' । अनुसूशब्दष्ठकमुत्पादयति लक्षणशब्दो चेत्यर्थः ! 'अनुसुक इति' । अनुसूमधीतइति ठक्, तस्य इसुसुक्तान्तात्क इति कादेशः, केण इति ह्रस्वः । 'पदोत्तरपदादिति' पदशब्द उत्तरपदं यस्य स तथोक्तः, पूर्वपदमधीते पूर्वपदिकः, एवमुत्तरपदिकः । 'शतषष्टेरिति' । शतशब्दात्षष्टिशब्दाच्च परो यः पथिन्शब्दस्तदन्तात् षिकन् भवति षकारो ङीषर्थः ॥

"अनुब्राह्मणादिनिः" ॥ 'ब्राह्मणसदृश इति' । यथार्थ यस्मार्यमिति सादृश्येऽव्ययीभावः, चोदयति । 'मत्वर्थ इति' परिहरति । 'तत्रैतस्मादिति' । दूषयति । 'अनभिधानादिति' । साक्षात्परिहारमाह । 'अणो निवृत्त्यर्थं तु वचनमिति' । क्व चित्तु मत्वर्थ इत्यादि न पठ्यते ॥

"वसन्तादिभ्यष्ठक्" ॥ 'वसन्तसहचरित इति' । यत्र वसन्तो वर्ण्यते यो वा वसन्तेध्येयः, वसन्तसाहचर्यात्ताच्छब्द्यं लभते, उक्थादिष्वेते पठितव्यास्ते वा वसन्तादिषु तथा तु न कृतमित्येव, अथर्वन्शब्दोत्र

पठ्यते स उपचारेणप्रोक्ते ग्रन्थे वर्त्तते, अथर्वणमधीते आथर्वणिकः, दाण्डिनायनहास्तिनायनेति निपातनाद्वस्तद्धित इति टिलोपाभावः ॥

"प्रोक्ताल्लुक्" ॥ 'प्रोक्तसहचरित इति'। अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यायोगान्मुख्यार्थासम्भवाद्गौणस्य ग्रहणमित्यर्थः । अपर आह। प्रोक्तशब्द इह स्वर्यते तेन तदधिकारविहितः प्रत्ययो गृह्यतइति, यदि वा प्रोक्ते भवः प्रोक्त इति सौत्रोयमतद्धितनिर्द्देशः। 'पाणिनीयमिति'। ननु पणोस्यास्तीति पणी तस्यापत्यं पाणिनः, पाणिनस्यापत्यं पणिनो युवा पाणिनिः, ततस्तेन प्रोक्तमित्यर्थविवक्षायां यूनि लुगिति इञो लुकि कृते प्रत्ययलक्षणेनेञश्चेत्यण् प्राप्नोति । नैष दोषः । इञश्चेत्यत्र कण्वादिभ्यो गोत्रइत्यतो गोत्रइत्यनुवर्त्तते तेनेञं विशेषयिष्यामः, गोत्रे य इञ् विहितस्तदन्तादिति, तत्र च पारिभाषिकं गोत्रं गृह्यते, तेन यूनीञो न भविष्यति, ततो वृद्धाच्छः, आपिशलिशब्दादिञश्चेत्यण् उभयत्राध्येतृप्रत्ययस्य लुक्, नन्वत्र लुकि सत्यसति वा तदेव रूपमिति नास्ति विशेषस्तत्राह। 'स्त्रियां स्वरे च विशेष इति'। असति लुकि स्त्रियां टिड्ढाणञित्यादिना ङीप् स्यात् अण्स्वरेणान्तोदात्तत्वं च, लुकि तु सति टाब् भवति, छस्वरेण मध्योदात्तत्वं च, आपिशले तु स्वरे नास्ति विशेषः, यथा तु लुकि सत्यपिशलेत्यत्र ङीम्न भवति तथानुपसर्जनादित्यत्र प्रत्यपादि ॥

"सूत्राच्च कोपधात्" ॥ 'अष्टकं सूत्रमिति'। अष्टावध्यायाः परिमाणमस्य, संख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेष्विति संख्याया अतिशदन्तायाः कन्। 'संख्याप्रकृतेरिति वक्तव्यमिति'। संख्या प्रकृतिर्यस्य प्रत्ययस्य तदन्तात्कोपधादिति वक्तव्यमित्यर्थः। 'कालापकमधीते कालापक इति'। कलापिना प्रोक्तमधीयते कालापाः, कलापिनोण्, नान्तस्य टिलोपे सब्रह्मचारीत्यौपसंख्यानिकष्टिलोपः, ततस्तदधीतइत्यण्, प्रोक्ताल्लुक्। कालापानामाम्नाय इति गोत्रचरणाद्वुञ्, कालापकं, ततस्तदधीत। इत्यण्, तस्य लुङ्न भवति, यदि स्याद् ञित्स्वरेणाद्युदात्तत्वं स्यात्, लुगभावे त्वण एव स्वरो भवति, स्त्रियां च ङीब् भवति। 'चतुष्टय इति'। चत्वारोऽवयवा अस्य संख्याया अवयवे तयप्, ह्रस्वात्तादौ तद्धितइति मूर्द्धन्यः ॥

"छन्दोब्राह्मणानि च तद्विषयाणि"॥ 'प्रोक्तग्रहणमनुवर्त्ततइति' तद्ध्यनुवर्त्तमानमेव पूर्वसूत्र आरम्भसामर्थ्याच्च सम्बध्यते। 'छन्दांसि च ब्राह्मणानि चेति'। तद्वाचीनि शब्दरूपाणीत्यर्थः। स्वरूपग्रहणं तु न भवति बहुवचननिर्देशात्, अप्रोक्तप्रत्ययान्तत्वाच्च। 'प्रोक्तप्रत्ययान्तानीति'। प्रोक्तादिति पञ्चम्यन्तं प्रकृतं प्रथमाबहुवचनान्तं विपरिणम्यते, छन्दोब्राह्मणानीत्यनेन सामानाधिकरण्यादिति भावः, अध्येतृवेदितृप्रत्ययविषयाणीत्यनेनैतद्दर्शयति तच्छब्देनाध्येतृवेदितृप्रत्ययः परामृश्यते, विधेयतया प्रधानत्वात्, नाध्येतृवेदितारावर्थौ, तयोः प्रत्ययविधौ गुणभावादिति किं सिद्धं भवति, अध्येतृविषयमपि वाक्यं निवर्त्तितं भवति। 'अनन्यभावो विषयार्थ इति'। ग्रामसमुदायादिवृत्तिस्तु विषयशब्दोऽसम्भवान्न गृह्यते, अत्र यद्यधीते वेदेत्यनुवर्त्तेत ततोऽध्येतृवेदितृविवक्षायामेव तद्विषयता विधीयेत ततश्च तद्विषयमेव वाक्यं निवर्त्तयेत् न क्रियान्तरविषयं नापि स्वातन्त्र्यमुपाध्यन्तरयोगं च, यदाह, तत्र यथाधिकारात्तद्विषयप्रसङ्ग इति, तस्मात्प्रोक्तग्रहणमेवानुवर्त्तते नाधीते वेदेति, तच्छब्देन च प्रत्ययः परामृश्यते विषयशब्दश्च अनन्यभावार्थः, तेन सर्वमेतत्स्वातन्त्र्यादि निवर्त्तते, आह च, सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनादिति। प्रोक्तग्रहणमेवाधिक्रियते नाधीते वेदेत्येतावर्थाविन्यर्थः, इह प्रोक्तप्रत्ययान्तस्य बहुप्रकारता दृश्यते स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यमध्येतृवेदित्रोः प्रत्यय इति, स्वातन्त्र्यं तावत्पाणिनिना प्रोक्तं पाणिनीयमिति प्रोक्तार्थ एव वृत्तिः, उपाध्यन्तरयोगो महत्पाणिनीयमिति वाक्यं, पाणिनीयमधीतइति प्रत्ययः पाणिनीयाश्छात्रा इति, छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानां नित्यमध्येतृवेदितृप्रत्ययान्ततैवेष्यते न तु स्वातन्त्र्यादि, तदर्थमिदमारभ्यते तदाह। 'तेनेति'। एवं च कृत्वाऽर्थद्वयस्यापि तन्त्रेण विग्रहः कर्त्तव्य इति दर्शयति, कठेन प्रोक्तमधीयते कठाः वैशम्पायनान्तेवासित्वाणिनिः, तस्य कठचरकाल्लुगिति लुक्, ततस्त दधीतइत्यण्, ततस्तस्यापि प्रोक्ताल्लुगिति लुक्, मुदपिप्पलादशब्दाभ्यां प्रोक्तार्थे औत्सर्गिकोऽण्, शेषं यथायोगं पूर्ववत्, चरकाभो वैशम्पायनान्ते.

वासी, एवं ताण्ड्यः । वाजसनेयशब्दः शौनकादिः । 'ताभ्यः न इति' । आपत्यस्येति यलोपः, भाल्लविशब्द इञन्तः, शाट्यशब्दाद्गर्गादियञन्ताद्यञिञोश्चेति फक्, ऐतरेयशब्दः शुभ्रादिढगन्तः, तेभ्यः पुराणप्रोक्तेष्विति णिनिः, सर्वत्राध्येतृप्रत्ययस्य लुक् । 'ब्राह्मणविशेषप्रतिपत्त्यर्थमिति' । ब्राह्मणस्य विशेषः पुराणप्रोक्तत्वम् । 'याज्ञवल्क्यानीति' । याज्ञवल्क्यशब्दः कण्वादिः, सुलभादौत्सर्गिकोऽण्, अत्र स्वातन्त्र्यं भवति । पुराणप्रोक्तेष्वित्यत्र वक्ष्यति, याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता इत्याख्यानेषु वार्तेति । 'काश्यपिनः कौशिकिन इति' । काश्यपकौशिकाभ्यामृषिभ्यां णिनिः । 'पाराशरिण इति' । पाराशर्यशब्दाद्गर्गादियञन्तात्पाराशर्यशिलालिभ्यामिति णिनिः, पूर्ववद्यलोपः । 'कर्मन्दिन इति' । कर्मन्दकृशाश्वादिनिः, पिङ्गशब्दात्पुराणप्रोक्तेष्विति णिनिः ॥

"तदस्मिन्नस्तीति देशे तन्नाम्नि" ॥ 'इतिकरणस्ततश्चेद्विवक्षेति' । ननु तन्नामग्रहणादेवातिप्रसङ्गो न भविष्यति, तच्च, द्विविधं नाम कदा चित्केन चित्सङ्केतितं नित्यं व्यवहारानुपाति, तत्र द्वितीयस्य परिग्रहार्थमितिकरणः क्रियते, भूमादिविशेषपरिग्रहार्थं च, तन्नाम्नीत्येतत्तु नामधेयताविरोधिनो बलीयसोऽपि प्रत्ययान् बाधितुमन्यथा नाप्राप्ते मतुप्प्रारम्भात्तस्यायं बाधकः, तदपवादैस्त्विनिठनादिभिः सह सम्प्रधारणायामपवादविप्रतिषेधादिनिठनादय एव स्युः ॥

"तेन निर्वृत्तम्" ॥ निर्वृत्तमित्यन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः ॥

"तस्य निवासः" ॥ 'ऋजुनावामिति' । ऋज्वी नौर्येषां तेषामित्यर्थः ॥

"अदूरभवश्च" ॥ अदूरमन्तिकं तत्र भवतीत्यदूरभवः, निपातनात्सप्तमीसमासः । 'विदिशाया इति' । दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति षष्ठी । 'चकार इत्यादि' । असति तु तस्मिन्नानन्तर्यादयमेवार्थ उत्तरत्र सम्बध्येत ॥

"ओरञ्" ॥ अरडुः क्षत्रियविशेषः । 'नद्यां तु मतुप्परत्वादिति' आरडवमित्यादिरञोऽवकाशः, नद्यां मतुबिक्षवस्योदुम्बरावतीत्यादिः ॥

"मतोश्च बह्वजङ्गात्" ॥ 'चातुरर्थिक इति'। चतुर्णामर्थानां समूहश्चतुरर्थी, तत्र भवः, अध्यात्मादित्वाट्ठञ्, तद्धितार्थे द्विगौ तु ठञो लुक् स्यात्। 'अङ्गग्रहणं किमिति'। मतोश्च बह्वच इत्येवास्तु, व्यधिकरणे पञ्चम्यौ, बह्वचो यो विहितो मतुप् तदन्तादिति विज्ञायमाने सिद्ध्यत्येव विवक्षितमिति प्रश्नः। 'मतुबन्तविशेषणं मा भूदिति'। अन्यथा सामानाधिकरण्ये सम्भवति वैय्यधिकरण्यस्यायुक्तत्वात् तस्यैव विशेषणं स्यादिति भावः, अस्ति चेदिदानीं क्वचिदबह्वच् मत्वन्तो यदर्थं बह्वज्ग्रहणं स्यात्, अस्तीत्याह, स्ववान् श्ववान् ॥

"उदक्च विपाशः" ॥ 'महती सूक्ष्मेक्षिकेति'। एवं नाम स्वरेप्याचार्योऽवहित इति आचार्यस्य प्रशंसैषा ॥

"सुवास्त्वादिभ्योऽण्" ॥ 'अञ इति'। अण्ग्रहणरहितसूत्राभिप्रायमेतत्, तस्य तु प्रयोजनं स्वयमेव वक्ष्यति अण्ग्रहणं मतुपो बाधनार्थमिति, तेन वस्तुतो मतुपोप्ययमपवादः, अथाण्ग्रहणं किमर्थं न सुवास्त्वादिभ्यो यथा विहितमित्येवोच्येत, पुनर्वचनाद्धि यो विहितो न च प्राप्नोति स एव भविष्यति स चाणेव तत्राह। 'अण्ग्रहणमिति'। असत्यण्ग्रहणे मध्येपवादन्यायेन यथाविहितमित्युच्यमानोयाञ एव बाधकः स्याद् नदीमतुपा तु परत्वाद्बाध्येत, पुनरण्ग्रहणात्तु मतुपो विषये भवतीत्यर्थः, किं च ओरञित्यस्य नद्यां मतुप्परत्वाद्बाधक इत्युक्तं तत्रासत्यण्ग्रहणे यथाविहितमित्युच्यमाने नद्यामोरञेव स्याद् वचनं तु मतुपो बाधनार्थं स्यात्, तस्मादेतदर्थमप्यण्ग्रहणं कर्तव्यम् ॥

"रोणी" ॥ 'केवलस्तदन्तश्चेति'। अन्यथा ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात् केवलादेव स्यान्न तदन्तात्, रोणीति पुनः शास्त्रनिरपेक्षेण निर्देशेन शास्त्रनिरपेक्षत्वमिह सूच्यतइति परिभाषाया अनपेक्षणात्तदन्तादपि भवति, ननु च रोणीति नेदं प्रातिपदिकं स्त्रीप्रत्ययान्तत्वात्, न च ग्रहणवता प्रातिपदिकेनेत्यत्र लिङ्गविशिष्टस्य ग्रहणं येन स्त्रीप्रत्ययान्तेनापि तदन्तविधिः प्रतिषिध्येत, स्वरूपविधिविषया परिभा-

षेयं प्रातिपदिकस्य स्वरूपग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्युक्तत्वात्, यथाकथंचित्प्रातिपदिकग्रहणे लिङ्गविशिष्टस्य ग्रहणं भवतीति भाष्यकारपक्षस्तदाश्रयेणैतदुक्तम्, एवं च वृत्तिकारस्याप्ययमेव पक्षः, ज्ञापकसूत्रे तु परपक्षो दर्शित इति गम्यते, किं सिद्धं भवति, कुमारीमाचष्टे कुमारयति णाविष्टवदिति टिलोपः सिद्धो भवति ॥

"वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्यकक्ठकोरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः" ॥ सूत्रे कुमुदशब्दो द्विरुपादीयते तत्रारीहणकृशाश्वर्श्यकुमुदाश्च काशतृणादयश्चेति द्वन्द्वयोर्द्वन्द्वकरणादेकशेषाभावः । 'कुमुदादिष्विति' । ऋश्यादेरनन्तरेषु औत्सर्गिकोपि तत इष्यतइत्यादि यदुक्तं तदेवाप्तप्रयोगेण द्रढयति । 'तथा चोक्तमिति' । लुपि युक्तवदित्यत्र भाष्यकारेणैतदुक्तम्, अथास्मात्प्रयोगाद्विशेषविहितानामेव पक्षे लुब् भवतीति कस्मान्नोच्यते, तथा वा भवतु सर्वथा चातूरूप्यमेवात्र नः समीहितम् ॥

"शर्कराया वा" ॥ 'कुमुदादिष्विति' । ऋश्याद्यनन्तरेषु । 'पाठसामर्थ्यादिति' । नित्ये हि लुपि गणयोरस्य पाठोनर्थकः स्यात् । 'शर्करेति' । अणो लुप् । 'शार्करमिति' । तस्यैव श्रवणम् । 'शर्करिकमिति' । कुमुदादित्वाट्ठच् । 'शार्करकमिति' । वराहादित्वात्कक् । केण इति ह्रस्वः । 'शार्करिकं शर्करीयमिति' । उत्तरसूत्रेण ठक्छौ ॥

"नद्यां मतुप्" ॥ तदस्यास्त्यस्मिन्निति मतुपि सिद्धे वचनमिदं तदस्मिन्नस्तीति प्राप्तस्याणो बाधनार्थं निर्वृत्ताद्यर्थं च, तत्सूचितम् । 'चातुरर्थिक इति' । 'देशस्य विशेषणं नदीति' । यद्यपि विशिष्टलिङ्ग इत्यत्रोक्तं नदीग्रहणमदेशत्वात् जनपदो हि देश इति, इह तु नद्यां देशइति सम्बन्धसामर्थ्यादजनपदोपि देशग्रहणेन गृह्यते, एवं च पर्वतेष्वपि चातुरर्थिको भवति, अन्ये त्वाहुः । यद्यपि देश एव लोकप्रसिद्धः, विशिष्टलिङ्ग इत्यत्र तु नदीग्रहणं यस्य द्वन्द्वस्य सर्व एवावयवो नदीवचनस्तत्परिहार्थं, यत्र कश्चिदवयवो नदीवचनः कश्चिदन्यदेशवाची तत्र मा भूदि-

त्येवमर्थमिति, उदुम्बरावतीत्यादौ मतौ बह्वचो ऽनजिरादीनामिति दीर्घत्वम् । 'भागीरथीति' । तेन निर्वृत्तमित्यण् ॥

"कुमुदनडवेतसेभ्यो ड्मतुप्" ॥ कुमुद्वानित्यादौ झयः मादुपधायाश्चेति वत्वम्, अथ वकारादिरेव कस्मान्न विहितः, ज्ञापनार्थम्, एतज्ज्ञापयति अन्येभ्योऽप्ययं भवतीति, तेन महिष्मानिति सिद्धं भवति, महिषाच्चेति न वक्तव्यं भवति, एतेनैतदपि निरस्तं प्रकृतस्यैव मतुपो डित्त्वातिदेशेन सिद्धमिति, नहि डित्त्वातिदेशे पूर्वोक्तं ज्ञापनं समर्थितं भवति ॥

"नडशादाड् ड्वलच्" ॥ शादशब्दो दोपधः, पङ्कोऽस्त्री शादकर्दमाविति ॥

"शिखाया वलच्" ॥ 'शिखाया वलच् वक्ष्यतीति' । दन्तशिखात्संज्ञायामित्यनेन । 'तद्देशार्थं वचनमिति' । इदं तु निर्वृत्ताद्यर्थं, देशे तत्राभ्यणो बाधनार्थं च ॥

"नडादीनाङ्कुक् च" ॥ 'तत्रनलोपश्चेति' । यदि पुनरयं कुक् परादिः क्रियेत नान्तस्य पदत्वान्सिद्धो नलोपः किं तु कुटि प्रत्ययादेरादेशानुपपत्तिः, छस्याप्रत्ययादित्वादीयादेशो न प्राप्नोति ॥

"शेषे" ॥ 'उपयुक्तादन्यः शेष इति' । शब्दार्थकथनमेतत्, तस्यैव प्रकरणादागतं विशेषमाह । 'अपत्यादिभ्य इति' । एते ह्यत्रोपयुक्ताः । 'चतुरर्थपर्यन्तेभ्य इति' । चत्वारोऽर्थास्तदस्मिन्नस्तीत्यादयः पर्यन्ता येषामिति त्रिपदो बहुव्रीहिः, चातुरर्थ्यपर्यन्तेभ्य इति पाठे समाहारद्विगोश्चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्, ये तु पठन्ति, चातुरर्थपर्यन्तेभ्य इति ते प्रज्ञादेराकृतिगणत्वादणमिच्छन्ति, किमर्थं पुनः शेषवचनं, शेषे घादयो यथा स्युरपत्यादिषु मा भूवन्, चिरनिवृत्ता अपत्यादयः, चतुर्ष्वर्थेषु तर्हि मा भूवन्. अन्यथा ओरञ् इत्यादयो नडादीनां कुक् चेत्येवमन्ता यथा चतुरर्थेषु भवन्ति तथा घादयोऽपि विभाषा पूर्वाह्णापराह्णाभ्यामित्येवमन्तास्तत्रैव स्युः, नह्यकस्मात्प्रकरणं विच्छिद्यते, निवर्तिष्यते तर्हि चतुर्थो अस्वरितत्वाल्लिङ्गाच्च, यदयमुत्करादिषु कांश्चिद्वृद्धान् शब्दान्पठति

आर्द्रिका शालेति, अन्यथा वृद्धाच्छ इत्येव सिद्धः स्यात्, स्वार्थे तर्हि घादयो मा भूवन् अनिर्दिष्टार्थत्वाद्धि स्वार्थएव स्युः, नामी अनिर्दिष्टार्थाः, जातादिष्वर्थेषु घादयोनुवर्त्तिष्यन्ते, यद्यनुवर्त्तन्ते या या परा प्रकृतिः तस्यास्तस्याः पूर्वः पूर्वः प्रत्ययः प्राप्नोति नार्थनिर्देशं प्रति, अथयोरन्योन्यमभिसम्बन्धो भवति, लिङ्गाच्च, यदयं क चिच्चकारेण प्रकृतं समुच्चिनोति रङ्कोरमनुष्येण चेति तज्ज्ञापयति न पूर्वः पूर्वः प्रत्ययः परस्याः परस्याः प्रकृतेर्भवतीति, अथ वा लौकिकोधिकारोपेक्षालक्षणः, न च घादीनां प्रकृत्यन्तरापेक्षा नापि यामादीनां प्रत्ययान्तरापेक्षा, तस्मादप्रयोजनमेतत्स्वार्थे मा भूवन्निति, तदेव तर्हि प्रयोजनम्, अपत्यादिषु तर्हि मा भूवन्निति, ननु चोक्तं चिरनिवृत्ता अपत्यादयश्चातुरर्थी च नापेक्ष्यतइति, न ब्रूमोपत्यादीनामत्राभिसम्बन्ध इति किं तर्हि तस्येदमित्यनेनापत्यादिष्वपि प्राप्नुवन्ति, कथमित्याह। 'तस्येदं विशेषा ह्यपत्यसमूहनिवा[1]सदय इति'। यथा तस्येदमित्यनेन पाणिनीयाश्छात्रा इति छात्रादिषु विशेषेषु प्रत्ययो भवति एवमपत्यादिष्वपि विशेषेषु घादयः स्युः, विशेषेषु सामान्यभावात्, ननु च विशेषशब्दसंनिधौ सामान्यशब्द उपात्तस्तत्र विशेषे पर्यवस्यति कौण्डिन्यो ब्राह्मण इति, विशेषान्तरे वा दधि ब्राह्मणेभ्यस्तक्रं कौण्डिन्यायेति, तत्रापत्यादिविशेषसन्निधावुपात्तं तस्येदमिति सामान्यं, यद्यपत्यादिष्वेव पर्यवस्येत् सामान्योपादानं व्यर्थं स्यादिति विशेषान्तर एव पर्यवसास्यति, किं च यद्यपत्यादिष्वपि घादयः स्युः प्राग्दीव्यतोणित्यत्रैवाणादिभिः सह विधीयेरन्, लिङ्गाच्चापत्यादिषु घादयो न भविष्यन्ति, किं लिङ्गं, फेश्छ चेत्यत्र फेर्वेत्येव ठग्विधानार्थं वक्तव्यं, ठका मुक्ते वृद्धाच्छ इति तावच्छः सिद्धः, तदेव छविधानं ज्ञापनार्थं नह्यपत्यादिषु घादयो भविष्यन्ति, तथा गोत्रचरणाद्वुञिति समूहःइदमर्थान्तर्भूते वुञि सिद्धे गोत्रोक्षोष्ट्रेति पुनर्विधानमपि लिङ्गमस्यार्थस्य, तथा राजन्यादिभ्यो वुञिति राजन्यादिषु दैवयातशब्दः पठ्यते स च देवयातूनामपत्यानि दैवयातवा इति गोत्रप्रत्ययान्तः, तथाऽरीहणादिषु भास्त्रायणशब्दो गोत्रप्रत्ययान्तः पठ्यते

[1] निवास इति मुद्रितमूलपुस्तके नास्ति ।

तत्रापि गोत्रचरणाद्वुञित्येव सिद्धः, तदेतैर्लिङ्गैरपत्यादिषु घादयो न भविष्यन्ति, तदेवमेतत्प्रयोजनं नोपपद्यतइति प्रयोजनान्तरमाह । 'किं चेति'। असति हि शेषग्रहणे प्रथमेनैवार्थेन सम्बन्धमनुभवतां कृतार्थता विज्ञायेत द्वितीयादिषु त्वर्थेषु प्राग्दीव्यतइति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युः, शेषशब्दस्तूपयुक्तादन्यतयाऽऽजातादीनर्थान्वशीकृत्य शक्नोत्यभिधातुमिति सर्वत्र घादयः सिध्यन्ति, अतः साकल्यार्थमपि विशेषवचनं कर्त्तव्यम् । 'लक्षणं चाधिकारश्चेति'। तत्र तस्येदमित्येव चाणुआदयः सिध्यन्ति, दार्षदादयस्तु संस्कृतं भक्षा इति, तस्माल्लक्षणत्वं नातीवोपयुज्यते ॥

"राष्ट्रावारपाराद्घखौ" ॥ 'विगृहीतादपीष्यतइति'। सूत्रे तु संघातस्यैव ग्रहणम् अन्यथा वैषम्यात्संख्यातानुदेशो न स्यात् । 'विपरीताच्चेति'। इयमपीष्टिरेव ॥

"ग्रामाद्यखञौ" ॥ ग्रामशब्दः कत्र्यादिषु पठ्यते तेन ढकञपि भवति ॥

"कत्र्यादिभ्यो ढकञ्" ॥ 'कात्रेयक इति'। कुत्सितास्त्रयः कत्रय इति बहुव्रीहिर्वा, अस्मादेव निपातनात्कोः कद्भावः, तेन कद्भावे त्रौ उपसंख्यानमिति न वक्तव्यं भवति । 'कुल्याया यलोपश्चेति'। केचित्तु तृतीयं वर्णं लकारं पठन्ति, अन्ये तु डकारम् ॥

"कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" ॥ अयं योगः शक्योऽवक्तुं, कथं कौलेयकः श्वा, यदा कुलशब्दः श्वकुले वर्त्तते तदा तस्यापत्यमपि श्वैव भवति तत्रापूर्वपदादन्यतरस्यामिति ढकञा सिद्धं, कुक्षिग्रीवाशब्दाभ्यां दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञिति ढञि कृते आस्यलङ्कारयोः स्वार्थिकः कन् भविष्यति ॥

"नद्यादिभ्यो ढक्" ॥ गणे नदीति स्वरूपग्रहणं न संज्ञा नद्याः मह्यादीनां पृथग्ग्रहणात्, पौरेयमित्यादिषु पुरि भवं वने भवं गिरौ भवमिति विग्रहः । 'उभयमपि दर्शनं प्रमाणमिति'। उभयथाप्याचार्येण शिष्याणां प्रतिपादितत्वात् ॥

"दक्षिणापश्चात्पुरसस्त्यक्" ॥ दक्षिणाशब्दो दक्षिणादाजित्याजन्तोऽयं गृह्यते पश्चात्पुरोभ्यां साहचर्यात्, तेन न टाबन्तस्य प्रवीणवाचिनो ग्रहणम् ॥

"कापिश्याः ष्फक्" ॥ 'बाह्ल्युर्दिपर्द्दीति'। अवृद्धादपीति वुञि प्राप्ते वचनम् ॥

"रङ्कोरमनुष्येऽण्च" ॥ रङ्कवो नाम जनपदस्ततः प्राग्दीव्यतोऽण् प्राप्तस्तस्यावृद्धादपीति वुञ् बाधकस्तस्य ओर्देशे ठञ्, ततः कोपधादण्, ततः कच्छादिभ्यश्चेत्यण् प्राप्तः, ततःष्फगणौ विधीयेते, कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य कच्छादिषु पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थः। 'मनुष्ये परत्वादिति'। उत्कृष्टत्वाद् अपवादत्वादित्यर्थः। 'कच्छादिपाठादमनुष्येऽणपि सिद्धइति'। ननु च मनुष्यतत्स्थयोर्वुञ्विधानार्थस्तत्र पाठः स्यात् ततश्च तद्व्यतिरिक्ते विषये ष्फगेव स्याद्यत्राण् विधीयते, नैतदस्ति, कच्छादिपाठस्योभयार्थत्वे बाधकाभावात्,। 'नञिवयुक्तन्यायेन मनुष्यसदृशे प्राणिनि प्रतिपत्तिः क्रियतइति'। यस्त्वमनुष्यशब्दो रक्षःपिशाचादिषु रूढो न तस्यैव ग्रहणम् अनभिधानादिति मन्यते, अथैवं कस्मान्न विज्ञायते परत्वादेव वुञि सिद्धे मनुष्यप्रतिषेधो ज्ञापयति मनुष्यतत्स्थयोरित्यस्याप्येतौ ष्फगणौ बाधकाविति, तेन तत्स्थे ष्फगणावेव भवतो न वुञिति, तन्न, अनिष्टत्वात्, नहि तत्स्थे ष्फगणाविष्येते किं तर्हि वुञेव। 'राङ्कवः कम्बल इति ष्यङ् भवतीति'। यथा तु वार्त्तिकं भाष्यं च तथात्र ष्फगिष्यते, मनुष्यप्रतिषेधश्च प्रत्याख्यातः, यथाऽऽह, रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात्, तत्स्थे ष्फगणोर्ज्ञापकमिति चेदानिष्टत्वादण्ग्रहणानर्थक्यं च कच्छादिभ्योऽणविधानादिति। 'विशेषविहितेन च ष्फकेति'। अन्यथा कच्छादिपाठस्याप्राणिनि चरितार्थत्वात्प्राणिनि ष्फगेव स्यात् ॥

"द्युप्रागपागुदक्प्रतीचो यत्" ॥ द्यु इति दिव उत्वेन निर्देशः, द्युशब्दस्य तु ग्रहणं न भवति व्याख्यानात्। 'अवाच्यमिति'। अवाची

दक्षिणा दिक्। 'अव्ययात्तु कालवाचिन इति'। यथाव्ययात्कालवाचिनः कालाट्ठञिति ठञ् न भवति न्यायस्य तुल्यत्वात् ॥

"वर्णौ वुक्" ॥ 'तत्समीपो देशो वर्णुरिति'। अदूरभवश्चेत्यार्थे सुवास्त्वादिभ्योऽणित्यण्, तस्य जनपदे लुबिति लुप्। 'तद्विषयार्थवाचिन इति'। स वर्णुर्देशो विषयो यस्यार्थस्य तद्वाचिन इत्यर्थः, विषयग्रहणेन वर्णाविति विषयसप्तमीं दर्शयति ॥

"अव्ययात्त्यप्" ॥ 'अमेहेति'। योऽव्ययात्त्यब्विहितः सोमादिभ्य एव स्मृत इत्यर्थः, अमाशब्दः समीपवाची स्वरादिः, अमा समीपे भवोऽमात्यः। 'औपरिष्ट इति'। उपरिष्टाद्भव इत्यणि कृते ऽव्ययानां भमात्रे टिलोप इति टिलोपः, परतःशब्दो विभाषापरावराभ्यामित्यतसुजन्तः, तत्र भवः। 'आरातीय इति'। बहिषष्टिलोपश्चेत्यनित्यत्वज्ञापनादत्र टिलोपाभावः। 'त्यब्नेर्ध्रुवइति'। निशब्दाद् ध्रुवे वाच्ये त्यब् भवति, नियतं सर्वकालं भवो नित्यः। 'निसो गतइति'। निःशब्दाद्गते वाच्ये त्यब् भवति। 'निष्ट्य इति'। ह्रस्वात्तादौ तद्धितइति षत्वन्तकारस्य ष्टुत्वमेवमाविर्भूतमाविष्ट्यम्। 'आरण्याण्ण इति'। अणि सति ङीप् स्यादिति णो विधीयते। 'दूरेत्य इति'। तत आगत इत्यत्रार्थे एत्यः। 'उत्तरादाहञिति'। आद्युदात्तार्थं वचनम्। 'औत्तराहमिति'। उत्तराच्चेत्याहि प्रत्ययः, उत्तराहिशब्दात्परिगणनेन त्यपोऽभावादणि सति सिद्धम् ॥

"ऐषमोह्यःश्वसोरन्यतरस्याम्" ॥ 'ठञपि तृतीयो भवतीति'। विधिवाक्यापेक्षं तृतीयत्वं प्रत्ययापेक्षया तु ठञ् चतुर्थः, श्वसस्तुट्चेत्यत्र विकल्पाधिकाराट् ट्युट्युलावपि भवतः ॥

"तीररूप्योत्तरपदादञ्ञौ" ॥ अञ्ञयोः स्त्रियां विशेषः, काकतीरी चाहरणहष्या। 'बहुच्पूर्वान्मा भूदिति'। अन्यथा बहुतीरशब्दादपि स्यात्, उत्तरपदशब्दस्य तु समासविषये नियतत्वान्नास्ति बहुच्पूर्वत्वमङ्गः ॥

"दिक्पूर्वपदादसंज्ञायां ञः" ॥ 'असंज्ञायामिति' । न चैवमसंज्ञाया इति पञ्चम्या निर्द्देशः विषयसप्तम्यापि तदर्थलाभादित्याह । 'संज्ञाविषयादिति'। 'पौर्वशाल इति'। पूर्वस्यां शालायां भव इति तद्धितार्थे समासः, ततः प्रत्ययः । 'पदग्रहणमित्यादि' । दिक्पूर्वादित्युच्यमाने स्वरूपग्रहणं स्यात् ततश्च दिग्गज इत्यादेरेव स्यात् पदग्रहणे तु सति दिग्विशेषवाचिनां ग्रहणं भवति, कथं, व्यधिकरणपदो बहुव्रीहिः दिशः पूर्वपदमस्मिन्निति, दिश इति वाचकापेक्षया षष्ठी, दिशो वाचकं पूर्वपदमस्मिन्नित्यर्थः ॥

"मद्रेभ्योऽञ्" ॥ मद्रशब्दो जनपदवचनः, बहुवचननिर्द्देशो जनपदवाचिनः परिग्रहार्थः, तेन भद्रपर्यायो न गृह्यते । 'पौर्वमद्र इति' । मद्रकदेशे मद्रशब्दस्य वृत्तेर्दिक्शब्देन सामानाधिकरण्ये सति तद्धितार्थ इति समासः ॥

"उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्" ॥ 'शैवपुरमिति' । प्रस्थपुरवहान्तादिति वुञ् न भवति, वृद्धादिति तत्र वर्त्तते ॥

'प्रस्थोत्तरपदपलद्यादिकोपधादण्' ॥ 'उदीच्यग्रामलक्षणस्याञोऽपवाद इति'। ततोऽन्यत्र व्रीहिप्रस्थगिरिप्रस्थकर्किकादावौत्सर्गिक एवाण्, कैलासप्रस्थकाकशाकादिषु वृद्धेषु वृद्धाच्छो भवति, देशवाचिनि तु मालाप्रस्थादौ प्रस्थपुरवहान्ताच्चेति वुञ्, इत्वाकुप्रभृतिषु जनपदवुञोऽपवादः. कोपधादणित्यण् वक्ष्यते, अरीहणकादौ च वृद्धादकेकान्तेति छो भवति, तस्मादञोऽपवाद इति सूक्तम्, उत्तरपदग्रहणादिह न भवति, उत्तरो माहकिप्रस्थ उत्तरमाहकिप्रस्थः, तत्र भव इति, प्रस्थान्तादिति तूच्यमानेऽत्रापि स्यात् । 'अण्ग्रहणं बाधकबाधनार्थमिति'। यद्यण्ग्रहणं न क्रियेत तदा यदत्र वृद्धं वाहीकग्रामवाचि तस्मात्प्राग्दीव्यतोऽणित्यणि प्राप्ते वृद्धाच्छः प्राप्तस्तस्मिन्वाहीकग्रामेभ्यश्चेति ठञ्ञिठाभ्यां बाधिते पुनर्विधानाच्छ एव स्यात् तस्माद्बाधकमपि तं छं बाधित्वा अण्ग्रहणादणेव भवति, यक्रल्लोमशब्दः पठ्यते यक्रल्लोम्नि भवः याक्रल्लोमः, अन्निति प्रकृतिभावो न भवति, गणे नलोपनिपातनादित्याहुः ॥

"कण्वादिभ्यो गोत्रे" ॥ 'गोत्रमिह न प्रत्ययार्थ इति'। शेषाधिकारस्य बाधप्रसङ्गात्। 'न च प्रकृतिविशेषणमिति'। कण्वादीनामगोत्रप्रत्ययान्तानां गोत्रे वृत्त्यसम्भवात्। 'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहित इति'। प्रतिपदविहितो यञेव गृह्यते, एवं च कृत्वा गोत्रमपि पारिभाषिकं गृह्यते न त्वपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यतइत्यपत्यमात्रस्य ग्रहणम्। 'काण्वा देवतास्येति'। ननु कण्वादिभ्य इत्युच्यमाने कथमणन्तात्प्रसङ्गः, कथं वा यञन्तेभ्यः स्याद् येनेष्टं तावत्सिध्यति, एवं मन्यते, केवलेभ्यः कण्वादिभ्य औत्सर्गिक एवाण् सिध्यति क्वापवादत्वाद्योगस्य कण्वाद्यवयवे तद्धितान्ते कण्वादिशब्दो वर्तिष्यतइति ॥

"इञश्च" ॥ 'गोत्र इत्येवेति'। पूर्वत्र पारिभाषिकस्य गोत्रस्य ग्रहणमित्युक्तम् इहापि तदेवानुवर्तते तेनात्रापि पारिभाषिकस्यैव ग्रहणादिह न भवति पाणिनेर्यूनश्छात्राः पाणिनीया इति। 'सौतङ्गमेरिदमिति'। सुतङ्गमशब्दादुञ्छणादिसूत्रेण चातुरर्थिक इञ्, अत्रापत्यत्वमेव नास्तीति सुतरामगोत्रत्वाद्भवति प्रत्युदाहरणम् ॥

"न द्व्यचः प्राच्यभरतेषु" ॥ ननु च भरताः प्राच्या एव तत्किमर्थं तेषां स्वशब्देन ग्रहणं तत्राह। 'ज्ञापकादन्यत्रेति'। बह्वच इञः प्राच्यभरतेष्वित्यत्रायमर्थो ज्ञापितः, अन्यत्र प्राच्यग्रहणे भरतानां ग्रहणं न भवतीति, अपर आह, ज्ञापकादन्यत्रेत्यन्वयः, अन्यत्रास्यार्थस्य ज्ञापितत्वादित्यर्थः ॥

"वृद्धाच्छः" ॥ 'अव्ययतीरेत्यादि'। अव्ययात्त्यब् भवतीत्यस्यावकाशो ऽमात्यः, छस्यावकाशः शालीयो मालीयः, आराच्छब्दाच्छो भवति आरातीयः। अमेहक्वतसित्रेभ्य इति परिगणनमनपेक्ष्यायं विप्रतिषेधः, तीरोत्तरविधेरवकाशः काश्यतीरः, छस्य स एव, वायसतीराच्छो भवति वायसतीरीयः, रूप्योत्तरविधेरवकाशः चाररूप्यः छस्य स एव, माणिरूप्याच्छः प्राप्तस्तं चापि योपधलक्षणो वुञ् बाधते माणिरूप्यकः प्राप्तिमात्राश्रयेण तु छस्य रूप्योत्तरपदलक्षणस्य च ञस्य विप्रतिषेध उक्तः, उदीच्यग्रामलक्षणस्य विधेरवकाशः शिवपुर—शैवपुरः, वाडवकर्णाच्छो भवति

वाडवकर्णीयः, कोपधविधिः प्रस्थोत्तरपदपलद्यादिकोपधादणित्ययं विवक्षितः, स तस्माद्धि परस्थस्तस्यावकाशो निलीनक-नैलीनकम् उलूका अस्मिन्सन्ति तदस्मिन्नस्तीत्यण्, औलूको नाम ग्रामस्तत्र भवस्तस्माच्छो भवति औलूकीयः, यस्तु कोपधादणित्यण् स जनपदवुञोपवादः, तस्यापि वृद्धादकेकान्तेत्यत्र कोपधग्रहणं सौसुकाद्यर्थमिति विहितश्छो बाधको भवति ॥

"भवतष्ठक्छसौ" ॥ 'ठक्छसावित्येताविति'। सित्करणादवसीयते छसोऽयं निर्देशो न शस इति, शसि हि स्वादिपदत्वेनैव सिद्धम्। 'सकारः पदसञ्ज्ञार्थ इति'। तेन भवदीय इत्यत्र जश्त्वं भवति। 'भावत्क इति'। इसुसुक्तान्तात्कः, प्रक्रियालाघवार्थं कवि विधातव्ये ठग्विधानं स्त्रियां ङीबर्थं भावत्की। 'अवृद्धात्तु भवत इति'। शत्रन्तात्, क्वचित्तु भवतः शतुरित्येव पाठः ॥

"काश्यादिभ्यष्ठञ्ञिठौ" ॥ 'वृद्धादित्येवेति'। कथं तर्ह्यवृद्धेभ्यो युवराजादिभ्यः प्रत्यय इत्यत आह। 'ये त्विति'। यद्यवृद्धेभ्यो वचनप्रामाण्यात्प्रत्ययौ भवतः किमर्थं तर्हि वृद्धाधिकार इत्यत आह। 'देवदत्तशब्द इत्यादि'। 'कथं भाष्य उदाहृतमिति'। यद्यपि तत्र स्वयमपि छप्रत्ययमुदाहरत्येव तत्तु भाष्यकारप्रामाण्येन न स्वातन्त्र्येणेति भाष्य इत्युक्तम्। 'आपदादिपूर्वपदादिति'। आपदादिराकृतिगणः। 'कालादिति'। कालशब्दान्तादित्यर्थः ॥

"वाहीकग्रामेभ्यश्च" ॥ 'छस्यापवाद इति'। एवं च ये छेनैव बाधिता अव्ययतीरुरूप्योत्तरपदोदीच्यग्रामकोपधविषयास्तद्विषयेप्येतावेव भवतो न चेदन्येन बाधः, तद्यथा ऽऽराचाम वाहीकग्रामः आरात्की आरात्का इसुसुक्तान्तात्कः, तथा कास्तीरं नाम वाहीकग्रामः कास्तीरिकी कास्तीरिका, इह तु दाशरूप्यं नाम वाहीकग्रामः धन्वयोपधाद्विति वुञ् ठञ्ञिठौ बाधते दाशरूप्यकः, तथा शकलान्यस्मिन्सन्ति शाकलं नामोदीच्यग्रामः भूयो वाहीकग्रामः ततष्ठञ्ञिठौ भवतः शाकलिकी शाकलिका, इह तु सौसुकं नाम वाहीकग्रामः प्रस्थोत्तरपदादिसूत्रेण

प्राप्तं कोपधलक्षणमणं छो बाधते परत्वात्तमप्यपवादत्वाद्वृद्धाट्ठकेकान्ते-त्यत्र कोपधग्रहणं सौसुकाद्यर्थमिति कोपधलक्षणश्छो बाधते, सौसुकीयः ॥

"ओर्देशे ठञ्" ॥ 'नैषादकर्षुकः शाबरजम्बुक इति'। निषादकर्षुशबरजम्बूशब्दाभ्यां ठञ्, इसुसुक्तान्तात्कः, केण इति ह्रस्वः ॥

"वृद्धात्प्राचाम्" ॥ 'वृद्धादेव प्राचामिति'। विपरीतस्तु नियमो न भवति प्राचामेव वृद्धादिति, अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याभावात् यत्र पूर्वसूत्रस्यातिप्रसङ्गः स्यात्। 'आढकजम्बुक इति'। पूर्ववत्कादेशह्रस्वत्वे ॥

"धन्वयोपधाद्वुञ्" ॥ 'धन्ववाचिन इति'। धन्वविशेषवाचिन ऐरावतादेरित्यर्थः, स्वरूपस्य पर्यायाणां च ग्रहणं न भवति वृद्धाधिकारात्। 'पारेधन्वक इति'। पारेमध्ये षष्ठ्या वेत्यव्ययीभावः, अनश्चेति टच् समासान्तः, वुञि यस्येति लोपः, यदि तु धन्वशब्दो नपुंसकलिङ्गस्ततो नपुंसकादन्यतरस्यामिति टजभावपक्षे वुञि नस्तद्धित इति टिलोपः, साङ्काश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ ॥

"प्रस्थपुरवहान्ताच्च" ॥ 'वृद्धादिति वर्त्तत इति'। यद्यत्रमन्तग्रहणमनर्थकं प्रस्थादीनामवृद्धत्वादेव तदन्तविधिर्भविष्यति, नैतदस्ति, वा नामधेयस्येति प्रस्थादीनामेव पदानां वृद्धत्वसम्भवात्, अथाप्येवं नाम्नोदेशस्याभावस्तथापि यथा पूर्वसूत्रे धन्वविशेषग्रहणं तथेहापि सम्भाव्येत, नादीपुरं नाम वाहीकेषु ग्रामस्तत्र वाहीकग्रामलक्षणौ ठञ्ञिठौ छस्यापवादौ, अयमपि वुञ् छस्यापवादः, इह त्वपवादविप्रतिषेधाद्वुञ् भवति, एवं च पातनप्रस्थकः कौञ्जीवहक इत्यत्रापि वुञेव भवति ॥

"रोपधेतोः प्राचाम्" ॥ 'ईकारान्ताच्चेति'। ह्रस्वस्य तु ग्रहणं न भवति तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्। 'ऐकचक्र इति'। एकचक्रा नाम प्राग्देशे नगरी तत्र एङ् प्राचां देशइति वृद्धसञ्ज्ञा, ककन्देन निर्वृत्ता नगरी काकन्दी, स्त्रीषु सौवीरसाल्वप्राक्ष्वित्यञ्। 'तपरकरणं विस्पष्टार्थमिति'। न तु ह्रस्वप्लुतयोर्निवृत्त्यर्थं तदन्तस्य प्राग्देशवाचिनोऽसम्भवात्,

ईकारस्यानणत्वेन तयोरग्रहणाच्च, असति तु तकारे रोपधयोरित्युच्यमाने किमत्र गृहीतमिति विस्पष्टं न ज्ञायेत तकारे तु सति वर्णनिर्देशो निश्चीयते तत्रैव तस्य प्रसिद्धत्वात्, ईकाररोपधयोरिति निर्देशे गौरवप्रसङ्गः ॥

"जनपदतदवध्योश्च" ॥ 'तदवधिरपि जनपद एव गृह्यत इति'। स चासाववधिरिति कर्मधारय आश्रीयते न तु तस्यावधिस्तदवधिरिति षष्ठीसमास इत्यर्थः, तथा हि सति मौञ्जी नामावधिभूतो ग्रामस्तत्र भवो मौञ्जीय इत्यत्रापि स्यात्, कस्य पुनरसाववधिरिति चेत् सन्निधानाज्जनपदस्यैवेति विज्ञायते। 'गर्त्तोत्तरपदाच्छं बाधित्वेति'। अन्यथा तु गर्त्तोत्तरपदाच्छो भवतीत्यस्यावकाशः, वृकगर्तीयः जनपदवुञोऽवकाश आङ्गकः, त्रिगर्त्तशब्दादुभयप्रसङ्गे परत्वाच्छः स्यात्, ततश्च गर्त्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् पूर्वविप्रतिषिद्ध इति पूर्वविप्रतिषेधः पठितव्यो भवति। 'त्रैगर्त्तक इति'। उत्तरसूत्रेण वुञ्, एतेनोत्तरत्र तदवधिग्रहणस्योपयोगं दर्शयति ॥

"अवृद्धादपि बहुवचनविषयात्" ॥ 'अणछयोरपवाद इति'। अवृद्धादणोपवादो वृद्धाच्छस्य, इहावृद्धादपि बहुवचनादित्येव सिद्धं, यौगिको बहुवचनशब्दो बहूनामर्थानां वचनो बहुवचन इति, यदि वा बहुवचनाद्बहुवचनान्तादित्यर्थो नार्थो विषयग्रहणेन, तत्राह। 'जनपदैकशेषबहुत्वइति'। जनपदस्यैकशेषवशेन यद्बहु तत्रेत्यर्थः। 'वर्त्तव्य इति'। अवयवभेदेन भेदमाश्रित्य एकशेषः, नायं नित्यबहुवचनान्तः द्व्येकयोरपि दर्शनात्। 'तक्रकौण्डिन्यन्यायेनेति'। पूर्वसूत्रे हि जनपदसामान्ये वृद्धाद्वुञ् विहितः, यथा ब्राह्मणसामान्ये दधिदानं, इह तु बहुवचनविषये विशेषे ऽवृद्धाद्वुञ् यथा कौण्डिन्ये तक्रदानं, ततश्च बहुवचनादपि वृद्धाद्वुञि प्राप्ते आरभ्यमाणोऽवृद्धाद्वुञ् वृद्धाद्वुञो बाधकः स्यादित्यपिशब्देन समुच्चीयतइत्यर्थः, इह बहुवचनविषयादित्येतावता सिद्धमवृद्धार्थोयमारम्भः, वृद्धाधिकारविच्छेदार्थं त्ववृद्धादपीति वचनम् ॥

"कच्छाग्निवक्त्रवर्त्तोत्तरपदात्" ॥ कच्छशब्दार्थमुत्तरपदग्रहणं, स हि केवलोपि कूलाख्ये देशे वर्त्तते, इतरेषां तु केवलानां देशवृत्त्य-

सम्भवादेव तदन्तविधिः सिद्धः, कच्छाद्यन्तादित्युच्यमाने बह्वच्पूर्वादपि स्यादित्युत्तरपदग्रहणम् ॥

"धूमादिभ्यश्च" ॥ 'अणादेरपवाद इति'। अवृद्धेभ्यो धूमादिभ्योऽणोपवादः, वृद्धेभ्यश्छस्य, उदीच्यग्रामेभ्यस्त्वञः, वाहीकग्रामेभ्यष्ठञ्ञिठयोः। 'कूलात्सौवीरेष्विति'। कौलको भवति सौवीरेषु कौलमन्यत्र ॥

"नगरात् कुत्सनप्रावीण्ययोः" ॥ केनेदं मुषितमिति प्रश्नः, इह नगरे मनुष्येणेत्युत्तरम्। सम्भाव्यतएतदित्यादि प्रष्टुर्वचनम्। 'संज्ञानगरं पठ्यतइति'। माहिष्मतीशब्दसाहचर्यात् सञ्ज्ञा नगरं सञ्ज्ञाभूतो नगरशब्द इत्यर्थः ॥

"अरण्यान्मनुष्ये" ॥ 'औपसंख्यानिकस्येति'। अरण्याण्णो वक्तव्य इत्युपसंख्यानप्राप्तस्य, मनुष्यइत्यल्पमिदमुच्यतइत्याह। 'पथ्यध्यायेति'। 'आरण्यकोध्याय इति'। यो ऽरण्ये ऽधीयते उपनिषद्भागः स उच्यते, विहारः क्रीडा ॥

"विभाषा कुरुयुगन्धराभ्याम्" ॥ 'कुरुशब्दः कच्छादिषु पठ्यतइति'। कथं तर्हि कुरुशब्दाद्वुञः प्राप्तिरुक्ता ताभ्यामवृद्धादपीति नित्यं वुञि प्राप्तइति, आद्यप्राप्त्यभिप्रायेण तदुक्तं न पुनर्योनेन विकल्पेन बाध्यते तदभिप्रायेण, येपि पठन्ति वुञि सिद्धइति, प्राप्त इत्यर्थः, यथा सिद्धे सत्यारम्भो नियमार्थ इति, कुरुशब्दार्थं विभाषाग्रहणं न कर्त्तव्यमिति प्रतिपादयिष्यन्नाह। 'कुरुशब्दः कच्छादिषु पठ्यतइति'। ततः किमित्यत्राह। 'तत्रेति'। किमर्थं तर्हि विभाषाग्रहणमित्याह। 'सैषेति'। ननु युगन्धरशब्दादप्यवृद्धादपीति नित्ये वुञि सिद्धे ऽन्तरेणापि विभाषाग्रहणं पुनर्वचनाद्विकल्पो विज्ञास्यते, नैवं शक्यं, विपर्ययोपि स्यात्, युगन्धरशब्दान्नित्यो वुञ्, अवृद्धादपीत्यनेन तु विभाषित इति पुनरारम्भो ह्येवमप्युपपद्यते। 'मनुष्यतत्स्थयोस्त्विति'। एतच्च कच्छादिषु पाठसामर्थ्याल्लभ्यते ऽन्यथाऽनयैव विभाषया वुञणोः सिद्धत्वात्तत्रास्य पाठोऽनर्थकः स्यात् ॥

"मद्रवृज्योः कन्" ॥ मद्रशब्दः स्फायितञ्चीति रक्प्रत्ययान्तः, वृजीवर्जने इगुपधात्किरिति किप्रत्ययान्तो वृजिशब्दः । 'जनपदवुञोऽपवाद इति' । अवृद्धादपीति प्राप्तस्य ॥

"कोपधादण्" ॥ किं पुनरदेशवाचिनोऽयं नेष्यते यतो देशग्रहणमनुवर्त्तत इत्यत आह । 'अन्यत्रेति' । पूर्वेण, प्रस्थोत्तरपदादिसूत्रेण, एवं चोत्तरार्थं देशानुवृत्तिर्न त्वदेशनिवृत्त्यर्था, नन्वदेशवाचिनः प्राग्दीव्यतीय एवाण् सिद्धः, प्रस्थोत्तरपदादिसूत्रं तु उदीच्यग्रामलक्षणाञो बाधनार्थं, तत्किमुच्यतेऽन्यत्र पूर्वेणैवेति, सत्यं, सति त्वेवमर्थे तस्यारम्भे प्रतिपदविधानात्तेनैव सर्वत्राणविधिर्युक्तः, अथाण्ग्रहणं किमर्थं, न कोपधाद्यथाविहितमित्येवोच्येत, आरम्भसामर्थ्याद्धि यो विहितो न च प्राप्नोति स एव भविष्यतीत्यत आह । 'अण्ग्रहणमिति' । इक्ष्वाकुशब्दादोर्द्देशे ठञ् प्राप्तस्तस्मिन् जनपदवुञा बाधिते यद्यण् ग्रहणं न क्रियेत पुनर्वचनाद्वुञेव स्याद् अण्ग्रहणे त्वणेव भवति । 'ऐक्ष्वाक इति' । दाण्डिनायनादिसूत्रेण टिलोपः, एवं चाण्ग्रहणादेवायमोर्द्देशे ठञो बाधको न परत्वात् ॥

"कच्छादिभ्यश्च" ॥ 'वुञादेरपवाद इति' । ये जनपदवाचिनो बहुवचनविषयास्तेभ्यो वुञोऽपवादः, सिन्धुवर्णुशब्दाभ्यामोर्द्देशे ठञः, साल्वशब्दः पठ्यते जनपदलक्षणो वुञ्माभूदिति, अपदातौ साल्वात् गोयवाग्वोश्चेति नियमार्थं भविष्यति, अपदातावेव गोयवाग्वोरेवेति, वृद्धत्वाच्छः प्राप्नोति ॥

"अपदातौ साल्वात्" ॥ 'पादाभ्यामततीति' । पादस्य पदाज्यातिगोपहतेष्विति पदादेशः, न पदातिरपदातिरपदातिरश्वारोहादिः । 'अपदातावेव मनुष्ये तत्स्थे चेति' । द्वन्द्वनिर्द्दिष्टत्वेन तत्स्थे चेत्युक्तं न तु तत्स्थस्य पदातेः सम्भवोऽस्ति, अपदातौ साल्वादेवेत्येष तु विपरीतनियमो न भवति गोयवाग्वोश्चेत्यारम्भात् ॥

"गर्त्तोत्तरपदाच्छः" ॥ 'वाहीकग्रामलक्षणमिति' । यद्यपि वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ विहितौ तथाप्युत्सृष्टानुबन्धयोस्तयोष्ठरूपाविशे-

बाहीकग्रामलक्षणमित्येकवचननिर्देशः । 'श्वाविद्गर्तीयमिति'। श्वानं विध्यतीति व्यधेः क्विप् सम्प्रसारणं, नहिवृतीति दीर्घः, श्वाविधां गर्तः श्वाविद्गर्तः ॥

"गहादिभ्यश्च" ॥ 'अणादेरपवाद इति'। तत्र माहकिप्रस्थशब्दात्प्रस्थपुरवहान्ताच्चेति वुञोऽपवादः, वाल्मीकिप्रभृतिभ्य इञन्तेभ्य इञश्चेत्यणः, शेषेभ्य औत्सर्गिकस्याणः । 'सम्भवापेक्षमिति'। येषां देशे चादेशे च वृत्तिः सम्भवति गहादीनां तेषामेव विशेषणं न त्वन्तस्थपूर्वपदादीनामित्यर्थः । 'पृथिवीमध्यस्येति'। पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यो न मध्यान्तरवाचीत्यर्थः। 'चरणसम्बन्धेन निवासलक्षणोऽणिति'। चरणसम्बन्धेन योऽणिविधीयते ऽण् चरणइत्यनेन स निवासलक्षणो द्रष्टव्यः, सोऽस्य निवास इत्यस्यैवार्थे भवतीत्यर्थः, तेन पृथिवीमध्यं निवास एषां कठादीनां चरणानामित्यत्रार्थे मध्यमा इति भवति । 'मुखपार्श्वतसोर्लोप इति'। मुखपार्श्वशब्दयोस्तसन्तयोः प्रत्ययसन्नियोगेन लोपो भवति स चालोन्त्यस्य, तत्र कृते यस्येति लोपः, लोपवचनमव्ययानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थं, तेनारातीय इति सिद्धं भवति ॥

"वृद्धादकेकान्तखोपधात्" ॥ 'आरीहणकीयं द्रौहणकीयमिति'। तेन निर्वृत्तमित्यत्रार्थे वुञ्छणादिसूत्रेण यो वुञ् तदन्ताभ्यां प्रत्ययः, उदाहरणादिक्वेयमकान्तस्य दर्शिता, वृद्धाच्छ इत्येव ह्यत्र छः सिद्धः, नह्येतौ जनपदवाचिनौ येन कोपधादणः प्रसङ्गः स्यात्, इदं त्वत्रोदाहरणं द्रष्टव्यं ब्राह्मणको नाम जनपदो यत्र ब्राह्मणा आयुधजीविनो ब्राह्मणकोष्णिके सञ्ज्ञायामिति निपातनात्साधुः, तत्र जातो ब्राह्मणकीय इति। 'अकेकान्तग्रहणे कोपधग्रहणमिति'। सूत्रे ऽकेकान्तग्रहणमपनीय कोपधादिति वक्तव्यं, व्यापकत्वाल्लघुत्वाच्चेत्यर्थः ॥

"कन्थापलदनगरग्रामह्रदोत्तरपदात्" ॥ अन्तग्रहणेनैव सिद्धं नार्थ उत्तरपदग्रहणेन, न च बहुच्पूर्वे प्रसङ्गः, प्राचां देशइत्यधिकारात् ॥

"विभाषा ऽमनुष्ये" ॥ यद्यत्र नञः प्रश्लेषो न स्यादसन्देहार्थं मनुष्ये विभाषेत्येव ब्रूयात्, लाघवे विशेषाभावादिति मत्वाह । 'अमनुष्ये-

भिधेयइति'। अमनुष्यशब्दो यौगिकोऽत्र गृह्यते न तु रक्षःपिशाचादिषु रूढ इति दर्शयत्युदाहरणेन । 'पर्वतीयानि फलानीति' ॥

"कृकणपर्णाद् भारद्वाजे"॥ 'न गोत्रशब्द इति'। कुत इत्याह। 'प्रकृतिविशेषणं चैतदिति'। चशब्दो हिशब्दार्थे ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

"युष्मदस्मदोरन्यतरस्यां खञ्च"॥ षष्ठीनिर्देश उत्तरार्थः। 'एते त्रयः प्रत्यया भवन्तीति'। ननु चान्यतरस्यांग्रहणेन खञ्छयोः पक्षेनुत्पत्तिः प्रतिपाद्यते तदनुत्पत्तावपवादाभावात्स्वशास्त्रेण प्राग्दीव्यतइत्यनेनैवाण् भवति तत्कुतोनेन प्रत्ययत्रयस्य विधानं, छोपि तर्हि नैवानेन विधीयते तस्यापि हि चकारोऽभ्यनुज्ञापक एव, यद्यन्योपि कश्चित्प्राप्नोति सोपि भवतीति, ततश्छोपि स्वशास्त्रेण वृद्धाच्छ इत्यनेनैव भवति, एक एव त्वपूर्वः खञ् विधीयते, अथ यस्य प्रवृत्तावस्य तात्पर्यं स सर्वोनेन विधीयतइति छस्यानेन विधानं, यद्येवमणोप्यनेनैव विधानं न खञ्छयोरनुत्पत्तिमात्रेऽन्यतरस्यांग्रहणस्य तात्पर्यं तस्य महाविभाषयैव सिद्धत्वात्, किं तर्हि अणः प्रवृत्तावपि, तस्मात्तात्पर्यतस्त्रय एते प्रत्यया भवन्तीत्युक्तं प्रत्येकं प्रत्ययत्रयं विधीयतइति च, तत्र खञ्प्रत्ययो भवतीत्यनेन खञ एवापूर्वस्य विधानमिति दर्शितम्, अन्यतरस्यांग्रहणाद्यथाप्राप्तं चेत्यनेनाणोऽभ्यनुज्ञानं, त्यदादित्वाद्युष्मदस्मदोश्छे प्राप्तइत्यनेनापि छस्याभ्यनुज्ञानं, भाष्ये तु योगविभागेन यथासंख्याभावः प्रतिपादितः, युष्मदस्मदोरित्येको योगः, अत्र गर्त्तोत्तरपदाच्छ इत्यतश्छोनुवर्त्तते, ततः खञ्चेति द्वितीयो योगः ॥

"तस्मिन्नणि च युष्माकास्माकौ"॥ 'साक्षादिति'। प्रत्यक्षेण विहितः, स्वरूपोपादानेन विहित इत्यर्थः, हेतुगर्भं चेदं विशेषणं, यतः साक्षाद्विहितः ततः स एव निर्दिश्यतइति, तस्मिन्नित्युक्ते तत्रैव झटिति प्रत्ययो भवति न चानुकृष्टश्छ इति, चकारो हि समीपवर्त्तिनः खञः सं

सहायतामात्रमभिधाय निवर्त्तते, तत्र सहायस्यानिर्दिष्टत्वात्कृतान्वेषणं, तत्र गर्त्तोत्तरपदाच्छ इति यावदन्वेषणे छस्य प्रतीतिश्चिरेण भवति तेन च नासौ प्रत्यवमर्शार्हः, यदा तु यथासंख्यनिरासाय पूर्वसूत्रे योगविभागस्तदा नैव चकारेण छस्यानुकर्षणमिति न तस्य परामर्शशङ्का । 'निमित्तयोरित्यादि' । द्वे हि निमित्ते खञणौ निमित्तिनावपि द्वावेवादेशौ, ततश्च साम्याद्यथासंख्येन भवितव्यमिति मत्वा प्रश्नः । 'योगविभागः करिष्यतइति' । खञणोर्युष्माकास्माकाविति वक्तव्ये तस्मिन्नणि चेति वचनाच्चकारेण वाक्यभेदस्य सूचनादादेशयोर्निमित्ताभ्यां प्रत्येकमनभिसम्बन्ध इत्यर्थः ॥

"तवकममकावेकवचने" ॥ कृत्रिमाकृत्रिमयोः कृत्रिमस्यैकवचनस्य ग्रहणं, तस्य च कृताकृतप्रसङ्गित्वेन सुपो धातुप्रातिपदिकयोरिति लुकि कृते युष्मदस्मदोरेकवचनपरता न सम्भवतीति प्रत्ययलक्षणेन समर्थयितव्या, तदपि प्रत्ययलक्षणं विघटयन्नाह । 'ननु चेति' 'वचनादिति'। यदि पुनरेकवचनपरत्वेनाणखञौ विशेष्येयातां को दोषः, इह च स्यातां युष्माकं छात्रो यौष्माकीणः आस्माकीन इति, इह च न स्यातां तव छात्रास्तावकीना मामकीना इति, तस्मात्पूर्वसूत्रे खञणपरतया विशेष्येते युष्मदस्मदी, एकवचनपरतयापि ते एवात्र विशेष्येते, ततश्च वचनाद् आस्माकीनः प्रत्ययलक्षणं भवतीत्येवैव गतिः । 'अन्वर्थग्रहणमिति', एकोर्थ उच्यते येन तदेकवचनम् । अत्र च पक्षे एकवचने इति प्रथमाद्विवचनान्तं न सप्तम्यन्तम् ।

"अर्द्धाद्यत्" ॥ बल्पथे वस्तु वालेयं, तस्यार्द्धमेकदेशः, तत्र भवं वालेयार्द्धिकम् ।

"परावराधमोत्तमपूर्वाच्च" ॥ सपूर्वपदाट्ठञ् वक्तव्य इत्योपसङ्ख्यानिके ठञि प्राप्ते वचनम् । 'अर्द्धादिति वर्त्ततइति' । ततश्च परावराधमोत्तमेभ्यः परो योऽर्द्धशब्द इत्येवं विशेषणसामर्थ्यादेवार्द्धशब्दस्य परावरादिपूर्वता विज्ञास्यते तत्किं पूर्वग्रहणेनेति, एवमनन्तरोक्तस्य चोद्य-

स्यैवैतत्समर्थनं परिहरति । 'बरावरशब्दाविति' । 'अस्मात्तु पूर्वग्रहणा-द्व्यत्यय एव भवतीति' । पूर्वविप्रतिषेधसूचनद्वारेणेति भावः ।

"दिक्पूर्वपदाट्ठञ्च" ॥ 'अणोपवाद इति' । सौत्रीं प्राप्तिम-भिप्रेत्यैतदुक्तं, सपूर्वपदाट्ठञ् वक्तव्य इत्युक्तत्वात् । 'पदग्रहणमित्यादि' । दिक्पूर्वादित्युच्यमाने स्वरूपविधिः स्यात् ततश्च दिगर्द्धे जात इत्य-त्रैव स्यात्, पदग्रहणे तु सति पद्यतेऽनेनेति पदं, दिशः पदं पूर्वमस्मा-दिति निपातनात्समासः ॥

"ग्रामजनपदैकदेशादञ्ठञौ" ॥ 'पौर्वार्द्धा इति' । ग्रामस्य पूर्व-स्मिन्नर्द्धे भवा इति तद्धितार्थे समासः, ततः प्रत्ययः, यद्यप्यर्द्धशब्दो ग्राममपेक्षते तथाप्यस्य नित्यसापेक्षत्वात्प्रधानत्वाच्च वृत्तिद्वयमप्यविरुद्धं समासवृत्तिस्तद्धितवृत्तिश्च, ठञ्ग्रहणं किमर्थं, नाञ् चेत्येवोच्येत, न चैवमुच्यमाने यतोऽपि समुच्चयप्रसङ्गः पूर्वसूत्रे चानुकृष्टत्वात्, तस्माद्विस्प-ष्टार्थं ठञ्ग्रहणम् ॥

"अ साम्प्रतिके" ॥ 'साम्प्रतिकं युक्तं न्याय्यमुचितं सममुच्यत-इति' । कस्य चित्कश्चित्प्रमिद्ध इत्यनेकशब्दोपादानं, सम्प्रतिशब्द इदा-नीमित्यत्रार्थे प्रसिद्धोऽपि न्याय्येऽपि वर्तते, दृश्यते हि अनाप्तश्चतूरात्रो-तिरिक्तः षड्रात्रोऽथ वा एष सम्प्रति यज्ञो यत्पञ्चरात्र इति, न न्यूनो नातिरिक्तः सम इत्यर्थः, स च प्रज्ञादौ पठ्यते, तेन साम्प्रतं सम्प्रतीति च पर्यायौ ॥

"द्वीपादनुसमुद्रं यञ्" ॥ 'अनुसमुद्रमिति' । अनुर्यत्समयेत्य-व्ययीभावः, सप्तम्यन्तं चैतद् तद्द्वीपस्य विशेषणं तदाह । 'समुद्रसमीपे योद्वीप इति' ॥

"कालाट्ठञ्" ॥ 'कालविशेषवाचिन इति' । स्वरूपस्य च पर्या-याणां च ग्रहणं न भवति सन्धिवेलादिसूत्रेण सन्धिवेलाद्यृतुनक्षत्रेभ्यः प्रभृ-तिभ्योऽवृद्धेभ्यो ऽविधानात्, तद्धि ठञो बाधनार्थः, अर्थग्रहणे च तेभ्यष्ठञः प्रसङ्गः, इह गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायान्मुख्यया वृत्त्या ये

काले वर्त्तन्ते मासोऽर्द्धमास इति तत एवायं प्रत्ययः स्याद् न तु गौण-वृत्त्या कालवृत्तेः, कदम्बपुष्पसाहचर्यात्कदम्ब कालः, व्रीहिपलालसाहचर्याद्व्रीहिपलालं काल इत्यादेरित्याशङ्क्याह। 'यथाकथञ्चिदिति'। येन केन चित्प्रकारेण. एतदेव स्पष्टयति। 'गुणवृत्त्यापीति'। परत्र परशब्दप्रवृत्तेर्यन्निबन्धनं स गुणः, तन्निबन्धना वृत्तिर्गुणवृत्तिः, एतच्च सन्धिवेलादिसूत्रेणेन कालग्रहणेन नक्षत्राणि यद्विशिनष्टि ततो लभ्यते, नहि मुख्यार्थः कालशब्दोऽस्ति नक्षत्राणां सम्भवति पुष्यादिसमीपस्थेन हि चन्द्रमसा योगाल्लक्षितलक्षणया पुष्यादिशब्दानां काले वृत्तिः सैव च लुब्विशेष इति लुब्विधानेनाप्यन्वाख्यायते पौषादिनिवृत्त्यर्थं न त्वेतावता कालस्तेषां मुख्योऽर्थः ॥

"श्राद्धे शरदः" ॥ 'श्राद्ध इति कर्म गृह्यत इति'। श्रद्धास्मिन्विद्यत इति प्रज्ञाश्रद्धार्चेति मत्वर्थीयो णः, श्रद्धया सम्पाद्यं पित्र्यङ्कर्म श्राद्धशब्देन उच्यत इत्यर्थः। 'न श्रद्धावान् पुरुष इति'। यदा स एव णः मत्वर्थे भवति तदा पुरुषवृत्तिः श्राद्धशब्दः, कथं पुनः शब्दसाधारण्येऽयं विशेषो लभ्यत इत्याह। 'अनभिधानादिति'। 'शारदिकं श्राद्धमिति'। यदत्र विहितं तत्तत्र भवमिति भवे प्रत्ययः ॥

"श्वसस्तुट् च" ॥ 'तस्य चेति'। ठञः न तु श्वःशब्दस्य, कुत एतट्ठञो विधेयत्वेन प्राधान्यात्, स च तुडागम इकादेशे कृते भवतीति वेदितव्यं, ननु चान्तरङ्गत्वादिकादेशात्प्राक् ठञस्तुट् प्राप्नोति इकादेशस्त्वङ्गाधिकारे विधानादङ्गसंज्ञायामभिनिर्वृत्तायां पश्चाद् भवन्बहिरङ्गः, तुटि च कृते प्रत्ययादेष्ठस्येकादेशविधानाद्यथा कर्मठ इत्यत्र न भवति एवमत्रापि न स्यात्, यदि पुनरयं तुक् पूर्वान्तः क्रियते, नैवं शक्यम्, इसुसुक्तान्तात्क इति कादेशः स्यात्, तस्मादस्तु परादिरेव, कथमिकादेशः, ज्ञापकात्सिद्धं, यदयं वुञ्छणादिषु ठच्श्चित्करणं करोति तज्ज्ञापयति अन्तरङ्गेभ्योऽपि पूर्वमिकादेश एव भवतीति, यदि न स्यात्प्रत्ययसंज्ञासन्नियोगशिष्टे प्रत्ययस्वरे कृते पश्चादिकादेश इति सिद्धमन्तोदात्तत्वं स्यात्। 'ट्युट्युलावपि भवत इति'। सायंचिरमित्यादिना श्वःशब्दोऽयं काल-

वाची चेति कृत्वा । 'शौवस्तिकमिति' । द्वारादित्वाद्वृद्धिप्रतिषेध ऐजागमश्च ॥

"सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" ॥ 'अण्ग्रहणं वृद्धाच्छस्य बाधनार्थमिति' । असत्यण्ग्रहणे सन्धिवेलादिभ्यो यथाविहितमित्युच्यमाने यद्यप्यारम्भसामर्थ्यात्कालाट्ठञ् न भवति तथापि सन्धिवेलादिषु पठितात्पौर्णमासीशब्दात्स्वात्यादेश्च वृद्धाच्छः स्याद्वचनं तु कालाट्ठञो बाधनार्थं स्यात्तस्मादण्ग्रहणं कर्त्तव्यं वृद्धाच्छस्य बाधनार्थम् । 'सौवातमिति' । अत सातत्यगमने सुपूर्वाद्वल्यतिभ्यां चेतीण् प्रत्ययः, स्वात्या युक्तः काल इत्यण्, तस्य लुबविशेष इति लुप्, ततो भवादावर्थेऽनेनाण्, नय्वाभ्यामिति वृद्धिप्रतिषेध ऐजागमश्च, जातार्थे तु श्रविष्ठाफल्गुनीति लुकि स्वातिरिति भवति । 'तैषमिति' । अत्रापि जातार्थे पूर्ववल्लुका भवितव्यमिति भवादौ प्रत्ययः, तिष्यपुष्ययोर्नक्षत्राणि यलोप इति यलोपः । 'संवत्सरात्फलपर्वणोरिति' । सांवत्सरं फलं पर्व वा सांवत्सरिकमन्यत् ॥

"प्रावृष एण्यः" ॥ प्रवर्षतीति प्रावृट्, क्विपि नहिवृतीत्यादिना दीर्घः । 'प्रावृषेण्य इति' । भवार्थे प्रत्ययः, जाते तु प्रावृषष्टपं वक्ष्यति । रषाभ्यामित्येव सिद्धे प्रत्यये णकारोच्चारणं प्रावृषेण्यमाचष्टे प्रावृषेण्ययतेः क्विप् णिलोपः, लोपोव्योर्वलीति यलोपः, प्रावृषेणित्यत्र णत्वार्थम्, अन्यथा पदान्तस्येति प्रतिषेधः स्यात् ॥

"वर्षाभ्यष्ठक्" ॥ 'वार्षिकं वास इति' । कालात्साधुपुष्प्यत्पच्यमानेष्विति साध्वर्थे ठक् ॥

"छन्दसि ठञ्" ॥ 'नभश्च नभस्यश्च वार्षिकावृतू इति' । तस्येदमित्यत्रार्थे प्रत्ययः, ऋतुशब्दश्च ऋत्ववयवयोर्मासयोर्वर्तते, वर्षतौरेतौ मासाववयवावित्यर्थः ॥

"सर्वत्राण् च तलोपश्च" ॥ 'हैमनमिति' । यदा तशब्दस्य समुदायस्य लोपस्तदा ऽचीति प्रकृतिभावाभावस्तद्धितइति टिलोपो न भवति, यदा तु तकारस्यानेन लोपोऽकारस्य तु यस्येति लोपस्तदा तस्या-

सिद्धवदत्राभादित्यसिद्धत्वात्स्थानिवद्भावाच्च टिलोपाभावः। 'ननु च छन्दसीति नानुवर्त्तिष्यतइति'। अस्वरितत्वात्। 'सैवेत्यादि'। यासाव स्वरितत्वादननुवृत्तिः सैव सर्वत्रेत्यनेन शब्देनाख्यायते, किमर्थमित्याह। 'प्रयत्नाधिक्येनेति'। ननु च तत एवास्वरितत्वात्पूर्वसूत्रेपि छन्दसीति नानुवर्त्तिष्यते तस्माद्विस्पष्टार्थमेव सर्वत्रग्रहणम्। 'भाषायामपि ठञं स्मरन्तीति'। भाष्ये तु नैतदिष्यते, तथा हि, सूत्रमिदं प्रत्याख्यातं,कथं, हेमन्तपर्यायो हेमन् शब्दोस्ति हेमवागनीगन्ति कर्णा, तस्मादेतौ हेमन्तशुष्यतः, यदि हेमन् प्रमीयते हेमन्तो भवतीति दर्शनात्, तत्र भाषायां हेमन्हेमन्तशब्दयोरण्यणि हैमनं हैमन्तमिति रूपद्वयं सिद्धं, छन्दसि तु हेम्नो हैमनं हेमन्तस्य हेमन्ताच्चेति ठञि हैमन्तिकं, सर्वे विधयश्छन्दसि विकल्प्यन्तइति हेमन्तशब्दादेवाणि हैमन्तमिति रूपत्रयं सिद्धमिति, सूत्रकारेण तु भाषायामेतद्वृत्तिविषयादन्यत्रर्तुवाचिनो हेमञ्छब्दस्य प्रयोगाभावात् नलोपो विहितः, यथाप्राप्तं च ऋत्वणीति, अनन्तरस्तु ठञ् सर्वत्रग्रहणस्य पूर्वत्रान्वयेनैव सर्वत्र सिद्धिरिति नासौ समुच्चीयते। 'कः पुनरनयोर्विशेष इति'। न कश्चिदिति भावः। 'त्रीणि रूपाणि भवन्तीति'। पूर्वेण ठञि एकम्, अनेनाणतलोपयोर्द्वितीयम्, ऋत्वणि यस्येति लोपे परमिति त्रीणि रूपाणि॥

"सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च"॥ इह युवोरनाकावित्यङ्गाधिकारे विहितत्वादनादेशो बहिरङ्गः, तुडागमस्तु प्रत्ययसन्नियोगेन विधानादन्तरङ्ग इति तेनैव तावद्भवितव्यं, तत्र कृते ऽनादेशो न प्राप्नोति, किं कारणम्, अङ्गस्य निमित्तं यो युस्तस्यानादेशः, तुटि त्वत्र सति त्युशब्दोङ्गस्य निमित्तं न युशब्दमात्रं, ततश्च यथा मृत्युरित्यत्रानादेशो न भवति तथात्रापि न स्यात्, यदि पुनरयं तुक् पूर्वान्तः क्रियते, नैवं शक्यं प्रातस्तनमित्यत्र हि विसर्जनीयो न स्यात्, अपदान्तत्वात्, तस्मात्परादिरेवायं कर्त्तव्यः, तत्र चानादेशो न प्राप्नोति तत्राह। 'तयोश्चादिष्टयोस्तुडागमो भवतीति'। आदिष्टयोरिति कृतादेशयोरित्यर्थः, एष चार्थ आदिष्टशब्दस्य अर्शआद्यच्प्रत्ययान्तत्वेन लभ्यते, आदिश्यतइत्यादिष्टः, स ययोरस्ति तावादिष्टौ, तयोरादिष्टयोरिति, एतच्च घकालतनेष्विति

निर्देशाल्लभ्यते, नह्यनादिष्टयोस्तुड्विधाने तनशब्द उपपद्यते, प्रातस्तन मित्यत्र वृद्धाच्छं परत्वाद्बाधतइति नोक्तं, छस्य बाधकमपि ठञं बाधमानयोष्ट्युट्युलोरुत्कृष्टबलयोर्दुर्बलेन छेन सह सम्प्रधारणाभावात्। 'मकारान्तं पदमव्ययमिति'। स्वरादिषु पठितम्। 'अन्तकर्मणा इति'। अन्तक्रियस्य, षोन्तकर्मणीत्यस्येत्यर्थः, यद्यप्यसाववसानमात्रवाची घञन्तस्तु सायशब्दो दिवसान्तवचन इति न कालाधिकारस्य बाधशङ्का। 'प्रत्ययसन्नियोगेनेति'। अन्यत्र त्वकारान्त एव यथा सायाह्नः सायतर इति, आह च संख्याविसायपूर्वस्याह्नस्येति, । 'एकारान्तत्वमिति। निपात्यतइत्यनुषङ्गः, यत्र सप्तम्यर्थो नास्ति प्राह्णः सोढोस्येत्यादौ तदर्थं निपातनं जातादिके त्वर्थे घकालतनेष्वित्यलुका सिद्धम्। 'चिरपरुत्परारिभ्य इति'। चिरशब्दस्य सूत्रउपादानात् ट्युट्युलावपि भवतः, न तु कियत्तद्बहुषु कृञोऽज्विधानमितिवत्त्नस्य बाधः परुत्पूर्वस्मि, संवत्सरे, परारि पूर्वतरे, प्रवशब्दः पुराणवचनः। 'अग्रपश्चाड्डिमजिति'। के चिदग्रादिशब्दमपि पठन्ति अग्रादिपश्चादिति, ते मध्यान्म इत्यत्रादेश्चेति वक्तव्यमिति न पठन्ति, डित्करणं पश्चादित्यत्र टिलोपार्थम्, अव्ययानां भमात्रे टिलोप इत्यस्यैवायं प्रपञ्चार्थः ॥

"विभाषा पूर्वाह्णापराह्णाभ्याम्" ॥ 'सप्तम्या अलुगिति'। ङ्याप्प्रातिपदिकादित्यत्र निरणायि सुबन्तात्तद्धितोत्पत्तिरिति तत्तत्रैव द्रष्टव्यं, यदि सुबन्तात्तद्धित उत्पद्यते कथं पूर्वाह्णतन इत्यत्र भवति तत्राह। 'यदा त्विति' ॥

"तत्र जातः" ॥ 'तेषामतः प्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्तइति'। तदिदमुभयमनिर्देश्यं, कथं शेष इति लक्षणं चाधिकारश्चेत्युक्तं तत्र लक्षणतया चातुर्थं रूपमित्यादाविव जातादिष्वप्यर्थेष्वणादयः सिद्धाः, अधिकारतया च घादय इत्यर्थास्तावन्न निर्देश्याः प्रत्ययार्थेन चाभिधानस्वाभाव्येन समर्थविभक्तयोपि लभ्यन्तइति तन्निर्देशोपि न कर्तव्य एव, नियमार्थमिति चेन्नानिष्टत्वात्, तन्नेत्स्यात्, जातादिष्वेव तद्धिता यथा स्युस्तत्रास्ते तत्र शेतइत्यादौ मा भूवन्निति जाता-

द्वयोर्थो अनुक्रम्यन्तइति, तच्च नैवम्, अनिष्टत्वात्, अन्यत्रापि हि तद्धिता इष्यन्ते चातुर्थं रूपं श्रावणः शब्दः चातुर्दृशं रक्षः दार्षदः सक्तव इति, यत्र तु नेष्यन्ते तत्रास्तइत्यादौ तत्रानभिधानान्न भविष्यन्ति, यथाङ्गुल्या खनतीत्यादौ तस्माचार्थो जाताद्यनुक्रमणेन, अपवादविधानार्थं तु, प्रावृषष्ठबादीनपवादांस्तत्र तत्रासङ्करेण वक्ष्यामीति अवश्यानुक्रमितव्या अर्थास्तेन्यार्थाः सन्तो योगविभागेनाणादीनामप्यर्थो निर्दिश्यन्ते, विस्पष्टार्थं, यानि पुनरनपवादान्यर्थादर्शनानि यथा कृतलब्धक्रीतकुशला इति तानि शक्यान्यवक्तुम् ॥

"संज्ञायां शरदो वुञ्" ॥ 'समुदायेन चेदिति'। प्रकृतिप्रत्ययसमुदायश्चेत्संज्ञा भवतीत्यर्थः, । 'कृतलब्धक्रीतकुशला इति यावदिति'। यावच्छब्दोवधिद्योतको निपातः ॥

"अमावास्याया वा" ॥ 'एकदेशविकृतस्यानन्यत्वादिति'। अमावस्यदन्यतरस्यामित्यत्र अमापूर्वस्य वसेर्ण्यति पक्षे वृद्ध्यभावो निपात्यतइत्युक्तं, ण्यति चात उपधाया इति सामान्येन वृद्धिविधानात्, अमावास्याशब्दस्य न्याय्यत्वादवृद्ध्युपधस्तस्यैवैकदेशविकार इति भावः, ये त्विह सूत्रे सन्धिवेलादिषु च ह्रस्वोपधमधीयते तेषां दीर्घोपधस्य न स्यात्, अतद्विकारत्वात् ॥

"अ च" ॥ किमर्थो योगविभागः, न चामावास्याया वेत्युच्येत चकाराद्वुञ् वावचनादुभयोरभावे ऽणपि भविष्यति, सत्यम्, उत्तरत्र तु विकल्पानुवृत्तिः शङ्क्येत योगविभागे तु सन्धिवेलाद्यणोभ्यनुज्ञानाय पूर्वसूत्रे वाग्रहणसामर्थ्यादस्यापि विकल्पसिद्धेरिह वाग्रहणं नानुवर्त्यमिति व्यवधानादुत्तरत्र विकल्पस्य निवृत्तिः सिद्धा भवति ॥

"अणञौ च" ॥ योगविभागो यथासंख्यार्थः ॥

"श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्" ॥ कृत्तिकापर्यायस्य बहुलाशब्दस्यात्र द्वन्द्वैकवद्भावेन नपुंसकह्रस्वत्वेन निर्देशः, न बहूर्थादानिमित्तस्य बहुलाशब्दस्य श्रविष्ठा-

दिभिः साहचर्यात् । 'चित्रेति'। लुक्तद्धितलुकीति लुकि कृते पुनष्टाप् । 'गौरादिपाठान् ङीषिति'। रेवती नक्षत्रे रोहिणी नक्षत्रइति तत्र पठ्यते, न चेमौ नक्षत्रवाचिनौ जातार्थवृत्तित्वात्, तस्माद्गौरादिषु पिप्पल्यादयश्चेति पाठात्तेषां चावृत्कृतत्वादत्र ङीषित्यर्थः । 'टानौ वक्तव्याविति'। स्त्रियामित्यपेक्ष्यते, टकारो ङीबर्थः, नकारः स्वरार्थः, विधानसामर्थ्याच्चानयोर्लुङ् न भवति । 'क्वापि वक्तव्य इति'। अत्र च स्त्रियामिति नापेक्ष्यते ॥

"स्थानान्तगोशालखरशालाच्च" ॥ 'गोशालेति'। विभाषा सेनेति नपुंसकत्वे ह्रस्वत्वं, तत्साहचर्यात्खरशालस्यापि नपुंसकस्य ग्रहणं न तु द्वन्द्वैकवद्भावेन ह्रस्वत्वम्, एकादेशस्य पूर्वं प्रत्यन्तवद्भावाल्लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गाभ्यामपि लुभवत्येव, यद्यपि टाबन्तयोरपि पाठे एकदेशविकृतस्यानन्यत्वान्नपुंसकाभ्यामपि लुक् सिद्ध्यति, लाघवार्थे तु ह्रस्वस्य पाठः ॥

"वत्सशालाभिजिदश्वयुक्छतभिषजो वा" ॥ 'वत्सशालेति'। ह्रस्वान्तस्य दीर्घान्तस्य वा ग्रहणम् । 'बहुलग्रहणस्यैवायं प्रपञ्च इति'। अश्वयुक्शतभिषक्शब्दावभिप्रेत्यैतदुक्तम् अन्ययोरनक्षत्रवाचित्वात् । 'अभिजिदिति'। यद्यपि नक्षत्रमप्यस्ति अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामिति मुहूर्तमप्यस्ति ॥

"नक्षत्रेभ्यो बहुलम्" ॥ वाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लुग्व्यवस्थायां सिद्धायां बहुलवचनं क्वचिदन्यदेवेत्येतदर्थं, तेन टानौ वक्तव्यावित्यादि सिद्धं भवति । 'रोहिण इति'। चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसङ्ख्यानमित्येतत्तु स्त्रियां नियमेन लुगर्थन तु स्त्रियामेव लुगर्थम् ।

"कृतलब्धक्रीतकुशलाः" । 'यदत्र कृतं जातमपि तत्तत्र भवतीति'। यद्यपि जातं सर्वं कृतं न भवति स्वयं जातस्यापि भावात्, कृतं तु सर्वं जातं भवति, नह्यजननस्वभावं क्रियते यथा व्योमेति भावः । 'यच्च क्रीतं लब्धमपि तत्तत्र भवतीति'। अत्रापि लब्धं सर्वं क्रीतं न भवति दाना-

विनापि लाभसम्भवात् क्रीतं तु लब्धमेव क्रयस्यापि लाभहेतुत्वादित्यर्थः। 'तत्किमर्थं भेदेनोपात्तं क्रियतइति'। जातलब्धाभ्यामेव गतमिति प्रश्नः। 'शब्दार्थस्य भिन्नत्वादिति'। परव्यापारोपहितं रूपं कृतमित्युच्यते तद्रहितं तु जातमिति, तथा मूल्यप्रदानरूपो यः स्वीकर्तृव्यापारस्तदुपहितं रूपं क्रीतमित्युच्यते तद्रहितं तु लब्धमिति, तत्र यथा विक्लिन्न ओदनःपक्व ओदन इति शब्दार्थभेदस्तथात्रापीत्यर्थः। एतदेवस्पष्टयति। 'वस्तुमात्रेणेति'। वस्तुत इत्यर्थः, एतदुक्तं भवति, क्रीतं वस्तुतो लब्धं भवतीत्येतावत्, शब्देन तु रूपान्तरमभिधीयते, एवं कृतमपि वस्तुतो जातं भवति शब्देन तु रूपान्तरमभिधीयतइति द्रष्टव्यम्। उपसंहरति 'शब्दार्थस्तु भिन्नत एवेति'। तत्राक्रियमाणे कृतक्रीतयोरुपादाने यथा क्वायं घटः कृतः क्रीतो वेति पृष्टे स्रुघ्ने जातो लब्ध इति चोत्तरं न प्रयुज्यते, तथा तद्धितोपि न स्यात्, तस्मात्कृतक्रीतयोस्तद्धितेनाभिधानाय भेदेनोपादानमिति॥

"प्रायभवः"॥ प्रायेण भव', कर्तृकरणे कृता बहुलमिति समासः। 'तत्र भवेन कृतत्वादिति'। यत्प्रायभव इत्यस्य साध्यं तस्य तत्र भव इत्यनेनैव साधितत्वादित्यर्थः, यो हि राष्ट्रे प्रायेण भवति तत्रैवासौ भवतीति तत्र भव इत्येव सिद्धं, शङ्कते। 'अनित्यभवः प्रायभव इति चेदिति'। यस्तत्र कदाचिद्भवति कदा चिन्न स प्रायभवः, यस्य तु नियत आधाराधेयभावः स तत्र भव इति पृथगुपादानसामर्थ्यादेव आश्रीयतइति यदुच्येतेत्यर्थः, निराकरोति। 'मुक्तसंशयेन तुल्यमिति'। यं भवान्मुक्तसंशयं न्याय्यं तत्र भव उदाहरणं मन्यते, स्रौघ्नो देवदत्त इति तेनैव तुल्यं सोपि हि कदाचित्तस्मादुदकदेशादभिनिष्क्रामति तत्र चेद्युक्तो तत्र भवता इहापि युक्तो दृश्यताम्। अथैतदपि प्रायभवस्योदाहरणं स्रौघ्नो देवदत्त इति तत्र भवनस्य किमुदाहरणं तत्र नित्यभवः स्रौघ्नः प्राकार इति यद्येवं तत्र भव इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते स तस्मिन्दृष्टापचारे न स्यात्, दृश्यते च॥

वानरोहं महाभागे दूतो रामस्य धर्मतः।
राममनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम्॥

इति । तस्मात्तत्र भवे सामान्ये प्रायभवस्य विशेषस्यान्तर्भावादनर्थकं प्रायग्रहणम् । इदं तर्हि प्रयोजनम् उपजानूपकर्णोपनीवेष्ठक् प्रायभवे यथा स्यान्नित्यभवे मा भूत्, उपजानु भवं गछ्रुति, अथेदानीं जानुसमीपस्थशरीरावयववाचिन उपजानुशब्दात्तत्र भवं इति प्रकृत्य शरीरावयवाच्चेदिति यत्कस्माच्च भवति, अनभिधानात्, ठगपि तर्ह्यनभिधानादेव न भविष्यति, तदेवं स्थितमेतत्प्रायग्रहणमनर्थकं तत्र भवेन कृतत्वादिति ॥

"उपाजानूपकर्णोपनीवेष्ठक्" ॥ उपजान्वादयः सामीप्येऽव्ययीभावाः, समाहारद्वन्द्वस्य सौत्रः पुल्लिङ्गनिर्द्देशः ॥

"सम्भूते" ॥ 'अवक्लृप्तिः प्रमाणानतिरेकश्चेति' । सङ्क्रत्ययुक्तस्याप्यनेकार्थत्वमविरुद्धं तन्त्राद्याश्रयणादिति भावः, तत्रावक्लृप्तिः सम्भावना, इदमेवं भवेदिति बुद्धिः, प्रमाणानतिरेक आधारपरिमाणादाधेयपरिमाणस्यानतिरेकता, यस्यां सत्यां सर्वमाधेयमाधारेनुप्रविशति । 'स्रौघ्न इति'। देवदत्त इदानीं स्रुघ्ने सम्भाव्यतइत्यर्थः, स्रुघ्नप्रमाणाद्वानतिरिच्यते सेनादिकोर्थ इत्यर्थः ॥

"कोशाड्ढञ्" ॥ 'कौशेयं वस्त्रमिति'। ननु च न वस्त्रं कोशे सम्भवति वस्त्रदशायां तत्कारणस्य कोशस्य परावृत्तत्वात्, न च कोशान्तरे वस्त्रस्य सम्भवो, न च तत्रेष्यते, तस्माद्विकारे कोशाड्ढञ् सम्भूते ह्यर्थानुपपत्तिरिति वार्त्तिकमेव शरणं, तस्य विकार इत्यत्र प्रकरणे एण्या ढञित्यस्यानन्तरं कोशाच्चेति वक्तव्यमित्यर्थः । 'अर्थानुपपत्तिरिति'। कौशेयशब्दस्य योर्थो लौकिकः सूत्रवस्त्रलक्षणस्तस्यानुपपत्तिः स्यात्, लौकिकोर्थः शास्त्रेण नानुसृतः स्यात्, कृमिरेव त्वभिधेयः प्राप्नोति स हि कोशे सम्भवति, किं चाविशेषाभिधानात्खड्गकोशादपि प्रत्ययः प्रसज्येत इत्यत आह । 'रूढिरेवेति'। रूढिशब्देषु नावश्यमवयवार्थोन्वेष्यः, यथा तैलपायिकादिष्विति मन्यते । सूत्रकारेण तु सत्कार्यवादाश्रयेण सम्भूते प्रत्ययो विहितः, तत्र हि कारणदशायामपि कार्यस्य सत्त्वात् तत्र तत्सम्भवति तदनुपपन्नं, कार्यकारणयोर्हि तादात्म्यमभिसम्बन्धो न त्वाधाराधेयभावः ॥

"कालात्साधुपुष्प्यत्पच्यमानेषु" ॥ 'कालविशेषवाचिभ्य इति'। स्वरूपग्रहणं तु न भवति उत्तरत्राश्वयुज्यादीनामनेन कालशब्देन विशेषणात् ॥

"उप्ते च" ॥ सूत्रे भूतकालस्याविवक्षां दर्शयति। 'हेमन्ते उप्यन्त इति'। 'योगविभाग उत्तरार्थ इति'। उत्तरयोगयोरुक्त एव प्रत्ययो यथा स्यात् साध्वादिषु मा भूत् ॥

"आश्वयुज्या वुञ्" ॥ वुञो ञकारः स्वरार्थः, उत्तरत्र वृद्ध्यर्थश्च, अश्वयुग्भ्यां युक्तेति पाठः, अश्वयुजोर्द्वित्वात् नमोऽश्विभ्यामश्वयुग्भ्यामिति दर्शनात्, अश्विनीपर्याय इति पाठः, तारा अश्वयुगश्विनीत्यमरसिंहः, अश्वनीपर्याय इति प्रसिद्धः पाठः, तत्राशुपूर्वादनेरौणादिक इन् प्रत्ययः, पृषोदरादित्वादादेर्ह्रस्वः ॥

"कलाप्यश्वत्थयवबुसाद्वुन्" ॥ मयूरादिषु प्रसिद्धानां कलाप्यादीनां शब्दानां काले वृत्तिर्न सम्भवति तत्कथं कालविशेषवाचिभ्य इत्युक्तमत आह। 'कलाप्यादयः शब्दा इति'। अश्वत्थेन वृत्तेण कालस्य सम्बन्धोऽव्यभिचारादविशेषणमिति फले लुगिति लुगन्तोऽश्वत्थशब्द इत्याह। 'यस्मिन्नश्वत्थाः फलन्तीति'। अपकृष्टो यवो यवबुसं जात्यन्तरं वा यवादिवत्, यवानामेव वा बुसं यवबुसम् ॥

"ग्रीष्मावरसमाद्वुञ्" ॥ 'अवरसममिति'। विशेषणसमासः, न चावरशब्दो दिग्वाची येन दिक्संख्ये सञ्ज्ञायामिति नियमात्समासो न स्यात्। 'अवरसकमिति'। आगामिनां संवत्सराणामाद्यवत्सरे देयमित्यर्थः। अपर आह। अतीते वत्सरे देयं यदद्यापि न दत्तं तदवरसकमिति ॥

"संवत्सराग्रहायणीभ्यां ठञ्च" ॥ 'वेति वक्तव्यइति'। वुञि विकल्पिते पक्षे यथा प्राप्तष्ठञत्र भविष्यतीति मन्यते। 'ठञ्ग्रहणमित्यादि'। असति ठञ्ग्रहणे सन्धिवेलादिषु संवत्सरात्फलपर्वणोरिति पाठात्फलेऋणत्वेन विवक्षिते वुञा मुक्ते ऽणेव स्यात् ठञ्ग्रहणात्तु ठञेव भवति ॥

"व्याहरति मृगः" ॥ व्याहरति शब्दायते ॥

"तदस्य सोढम्" ॥ अस्येति नेयं सोढापेक्षया कर्त्तरि षष्ठी न

लोकाव्ययेति प्रतिषेधात्, किं तर्हि कर्त्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी । 'निशासहचरितमध्ययनमिति' । कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्तेरत्र सूत्रे ग्रहणमिति दर्शयति ॥

"तत्र भवः" ॥ 'कालादिति निवृत्तमिति' । तत्र जात इति प्रकृतं तत्रग्रहणं कालाधिकारेण सम्बद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनरिह तत्रग्रहणं कृतं सप्तम्यर्थमात्रं यथा गृह्येत कालसम्बन्धविशिष्टः सप्तम्यर्थो मा ग्राहीत्येवमर्थमिति भावः । ननु च प्रकृतं तत्रग्रहणं पूर्वसूत्रे तदिति प्रथमया समर्थविभक्त्या व्यवहितं, नेत्याह, शक्यं हि तदन्यत्रापि पठितुम् ॥

"दिगादिभ्यो यत्" ॥ 'सेनामुख्यमिति' । यदन्तस्य सेनाशब्देन षष्ठीसमासो न तु सेनामुख्यशब्दात्प्रत्ययः, तदन्तविध्यभावात् ॥

"शरीरावयवाच्च" ॥ 'शरीरं प्राणिकाय इति' । व्याकरणस्य शरीरमित्यादिकस्तु प्रयोगो गौणः । 'अणोपवाद इति' । वृद्धात्तु छं परत्वाद्बाधते, पादे भवं पद्यं, पद्यत्यतदर्थे इति पद्भावः, नासिकायां भवं नस्यं नस् नासिकाया यत्तस्क्षुद्रेष्विति नस्भावः, कथं वेगो जङ्घोरस्य इति, कथं च न स्यात्, न शरीरावयवसमुदायः शरीरावयवग्रहणेन गृह्यते न च तदन्तविधिरस्ति, निरङ्कुशाः कवयः ॥

"दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" ॥ दृतिश्चर्मविकारः शरीरावयवश्च, कुक्षिशब्दो धूमादिः वस्तिर्नाभेरधःशरीरावयवः, आहेयं विषादि । 'अस्तिशब्दः प्रातिपदिकमिति' । विभक्तिप्रतिरूपं निपातसञ्ज्ञकं तच्च तिङन्तेन समानार्थम् अस्तिक्षीरा गौरिति, धनवचनं च अस्तिमानिति ॥

"ग्रीवाभ्योऽण्च" ॥ 'धमनीवचन इति' । धमनीसङ्घातवचन इत्यर्थः, स च यदोद्भूतावयवभेदे सङ्घाते वर्त्तते तदा बहुवचनं, यदा तु तिरोहितावयवभेदे सङ्घाते वर्त्तते तदैकवचनान्तः प्रयोगः ॥

"गम्भीराञ्ञ्यः" ॥ 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यमिति' । प्राग्दीव्यतइत्यत्रोक्तं टेरस्य यञञौ, बहिषष्टिलोपश्चेति, तच्चावश्यं वक्त-

व्यम् अर्थान्तरेष्वपि यथा स्यादिति तस्यैव प्रपञ्चार्थमिह तु बहिर्देवयोर्ग्रहणम् ॥

"अव्ययीभावाच्च" ॥ 'किं तर्हि परिमुखादेरिति'। कथं पुनः सामान्योक्तावयं विशेषो लभ्यतइत्याह। 'परिमुखादीनां चेति'। चशब्दो हेतौ, दिगादेरनन्तरं परिमुखादिगणः पठ्यते, तस्य नान्यत्प्रयोजनं सम्भवति अव्ययीभावग्रहणस्य, परिमुखादिविशेषणतयान्वयसम्भवात्, तस्मात्परिमुखादेरेव भविष्यति न सर्वस्मादव्ययीभावात्, यद्येवं परिमुखादेरित्येव वक्तव्यमत आह। 'तेषामेवेति'। परिमुखादेरित्युच्यमाने बहुव्रीहितत्पुरुषेभ्योऽपि ञ्यप्रत्ययः स्यात्, अव्ययीभावग्रहणात्तु तेभ्य एव भवति, उत्तरार्थं चावश्यमव्ययीभावग्रहणं कर्त्तव्यं तत्र ये परिपूर्वास्तत्र यदि वर्जनं गम्यते ततोऽपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः, अथ सर्वतो भावस्ततोऽस्मादेव निपातनादव्ययीभावः, उपपूर्वेषु सामीप्ये ऽनुपूर्वेष्वनुर्यत्समया यस्य चायामः पश्चादर्थे यदव्ययमिति च यथाभिधानं समासः ॥

"अन्तःपूर्वपदाट्ठञ्" ॥ 'आध्यात्मिकमिति'। अनश्चेति टच् समासान्तः। 'अधिदैविकमाधिभौतिकमिति'। अनुशतिकादित्वादुभयपदवृद्धिः। 'अध्यात्मादिराकृतिगण इति'। एवं च समानशब्दादित्यादिरस्यैव प्रपञ्चः। 'ऊर्ध्वशब्देन समानार्थ ऊर्ध्वंशब्द इति'। स चैतद्वृत्तिविषयएव, अपर आह, ठञ्सन्नियोगेन दमशब्द उत्तरे ऊर्ध्वशब्दस्यैव मान्तत्वं निपात्यतइति। 'उर्ध्वंदेहाच्चेति'। 'नात्र मान्तत्वम्। 'ऐहलौकिक इति'। पूर्ववदुभयपदवृद्धिः। 'मुखतीयं पार्श्वतीयमिति'। मुखपार्श्वशब्दाभ्यां सप्तम्यान्ताभ्यामाद्यादित्वात्तसिः,-तत ईयः, अव्ययत्वा ट्टिलोपः, अयं गहादिपाठस्यैव प्रपञ्चः, एतेन परं व्याख्यातम्। 'मध्यमीयाविति'। गहादिषु मध्यमध्यमं चाण् चरणइति यत्पठितं तत्र पृथिवीमध्यवाची मध्यशब्दो गृह्यतइत्युक्तं, भवार्थे तु ततोऽन्यत्रापि मध्यमीयमिति यथा स्यादिति मीयप्रत्ययवचनं जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति भवति न मध्यान्तरवाचिनः, तथा गहादिपाठेन पृथिवीमध्यं निवास एषामित्यस्मिन्नेवार्थे माध्यमा इति सिध्यति मध्यान्तरवाचिनो भवार्थेपि यथा

स्यादिति यण् प्रत्यय उक्तः । 'मध्यो मध्यन्दिनञ् चास्मादिति'। मध्यशब्द-मध्यभावमापद्यते दिनञ् चास्मात्प्रत्ययो भवतीत्यर्थः । 'स्याम्न इति'। स्यामन्शब्दान्तादित्यर्थः । 'अश्वत्थामेति' । अश्वस्येव स्याम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, ततो भवार्थे स्याम्नोकार इत्य-कारः, तस्यानेन लुक् । 'वृकाजिन इति' । अणो लुक् । 'समानस्य तदा-देश्चेति'। आनन्तर्यत्वलक्षणा षष्ठी । 'अध्यात्मादिष्विति' । विषयस-प्तमी । 'ऊर्ध्वं दमाच्च देहाच्चेति'। ऊर्ध्वशब्दाद्दमशब्दान्ताच्चेत्यर्थः । ऊर्ध्वपूर्वादेव च देहान्तादिष्यते । उक्तं हि प्राक् उर्ध्वदेहाच्च चौर्ध्वदेहि-कमिति, स्याम्नो लुगजिनात्तथेति पाठे उभयत्रापि तदन्तविधिः ॥

"अशब्दे यत्खावन्यतरस्याम्" ॥ 'वासुदेववर्गीय इति' । वृद्धा-च्छ इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः ॥

"तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः" ॥ 'तस्येति षष्ठी समर्थादिति'। ननु चाधिकारार्थोयमिति वक्ष्यति, भवव्याख्यानयोर्युगपदधि-कारोपवादविधानार्थः, कृतनिर्देशौ हि ताविति, तत्किमित्यत्र यथा-विहितविधानार्थत्वं व्याख्यायते, उच्यते, तात्पर्यतोपवादविधानायाधिका-रस्यानुषङ्गिकेऽण्यादिविधानार्थत्वे को दोष इति मन्यते, अगतिकगतिर्हि विशेषविवक्षायां सामान्याश्रयः प्रत्ययः, अत एव कृतलब्धक्रीतकुशला इत्यादीन्यनपवादान्यर्थादेशनानि भवन्ति। 'तत्र भवे चेति'। अयमनुवाद, एतस्मिन्नेव विशेषे तत्र भव इति विहितत्वात् । ननु च व्याख्यानस्य प्रत्य-यार्थस्य समीपे श्रूयमाणश्चशब्दस्तत्समानजातीयस्यैव प्रत्ययार्थस्य समु-च्चयं करोति न समर्थविभक्तेः, यथा केदाराद्यञ् चेति प्रत्ययसमीपवर्त्तिना प्रत्यय एव समुच्चीयते न प्रकृतिः, ठञ्कवचिनश्चेति प्रकृतिरेव न प्रत्ययः, ततश्चेह तस्येत्युपादानाद्भवार्थेपि षष्ठी समर्थादेव प्रत्ययो युक्त-स्तत्राह। 'वाक्यार्थसमीप इति'। इहेतिकरणः क्रियते, प्रकृतं वाक्यार्थं प्रत्यवमर्शामीति, प्रत्यवमर्शस्य च प्रयोजनं तत्तुल्यजातियस्यैव समुच्चयो यथा स्यादित्येतदेवेति भावः, एतमेव च न्यायं निरूपयितुं पूर्वं तत्र भवे-चेत्यनुवादः कृतः । 'व्याख्यातव्यनाम्न इति किमिति'। व्याख्यानशब्दस्य

सम्बन्धिशब्दत्वाद्यत्प्रति व्याख्यानं तदेव तस्येत्यनेन निर्दिष्टमिति गम्यत इति मत्वा प्रश्नः। 'पाटलिपुत्रं सुकोशलया व्याख्यायत इति'। नेयं कर्त्तरि तृतीया किं तर्हि करणे सुकोशलया करणभूतया पुरुषैर्व्याख्यायत इत्यर्थः। कथमित्याह। 'एवं सन्निवेशमिति'। तादृशो हि पाटलिपुत्रे प्राकारादिसन्निवेशो यादृशः सुकोशलायां तेन तया तद्व्याख्यायते, यद्येवं तस्य व्याख्यातव्यस्य पाटलिपुत्रशब्दो नामापि भवति तत्कथं प्रत्युदाहरणमत आह। 'न त्विति'। यदिह व्याख्यातव्यमभिप्रेतं न तस्य नाम भवतीत्यर्थः। किं पुनरिहाभिप्रेतं यद्व्याख्यातव्यतया लोके प्रसिद्धं ग्रन्थात्मकम्, एतदर्थमेव हि व्याख्यातव्यनामग्रहणं कृतं, व्याख्यातव्यमात्रस्य व्याख्यानशब्दस्य सम्बन्धिशब्दत्वेनैवाक्षेपसिद्धेः। ननु च भवार्थमेतत्स्यात् नहि तत्राक्षेपतो व्याख्यातव्यस्य लाभ एवं तर्हि नामग्रहणं प्रसिद्धोपसंग्रहार्थं भविष्यति। 'भवव्याख्यानयोरिति'। नात्रायमर्थः, योयंभवव्याख्यानयोर्युगपदधिकारः सो, ऽपवादविधानार्थ इति, पूर्वमधिकारत्वस्याव्याख्यातत्वात्तस्माद्भवव्याख्यानयोर्युगपदधिकारोयं न त्वणादीनामर्थनिर्द्देश इत्यर्थः। किमर्थोधिकारस्तत्राह। 'अपवादविधानार्थ इति'। अणादीनां चायमर्थनिर्द्देशः कस्माच्च भवति तत्राह। 'कृतनिर्द्देशौ हि ताविति'। एकस्तत्र भव इति अपरस्तस्येदमित्येवं कृतनिर्द्देशौ हि तावर्थौ, तस्मात्तदर्थमेतच्च भवति पूर्वे त्वधिकारार्थतयावश्यकर्त्तव्यस्यानुषङ्गिकमर्थनिर्द्देशार्थमिदमितिव्याख्यातम् ॥

"बह्वचोऽन्तोदात्ताट्ठञ्"। 'अणोपवाद इति'। वृद्धाच्छं तु परत्वाद्बाधते, सामस्तं नाम शास्त्रं तस्य व्याख्यानं सामस्तिकं षत्वादिविधायकं शास्त्रं षत्वादिशब्देनोच्यते नतो ऽनुदात्तः, अनत उदात्तः। 'अन्तोदात्ताः प्रकृतय इति'। उदाहृतयोर्द्वित्वेप्येवं जातीयापरप्रकृत्यपेक्षं, बहुवचनं तोश्च कृत्वणत्वादयः। 'गतिस्वरेणेति'। गतिरनन्तर इत्यनेन। उदात्त इति वर्णग्रहणं तेन सिद्धस्तदन्तविधिः, यथा वर्णादनुदात्तादित्यत्र, तस्मादन्तग्रहणं विस्पष्टार्थम् ॥

"क्रतुयज्ञेभ्यश्च"॥ अग्निष्टोमाद्यर्थेषु मन्त्रब्राह्मणकल्पेषु वर्त्तमाना अग्निष्टोमादिशब्दा इहोदाहरणम्। 'अनन्तोदात्तार्थं आरम्भ इति'। तत्र राजसूयवाजपेयशब्दौ कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तौ, राज्ञा सूयते राजा वेह सूयते क्यप्, तत एव निपातनात्समासः षष्ठीसमासो वा। पीयतेऽस्मिन्निति पेयः कृत्यल्युटो बहुलमित्यधिकरणे यत्, वाजो यवागूभेदः, तस्य पेयः पायो वाजपेय इति, स्तुतिः स्तोमः अग्नेस्तोमोऽस्मिन्निति बहुव्रीहिः, परादिश्च परान्तश्चेत्यन्तोदात्तः। नवैर्व्रीहिभिर्यजनं नवयज्ञ आग्रयणं, कर्तृकरणे कृता बहुलमिति समासः, कृदुत्तरपदप्रकृतिभावेन नञ्‌ एव स्वरोऽवतिष्ठतइत्यन्तोदात्तः। अल्पपर्यायः पाकशब्दः, पाकश्चासौ यज्ञश्च पाकयज्ञः, समासस्वरेणान्तोदात्तः। सत्यन्यार्थेऽएतस्यारम्भे ऽन्तोदात्तादपि यज्ञाभिधायिनः परत्वादनेनैव ठञ्प्रत्ययो युक्त इत्यन्तोदात्तानामुपन्यासः। 'क्रतुभ्य इत्येव सिद्धइति'। क्रतुयज्ञयोः पर्यायत्वादिति भावः। 'असोमयागेभ्योपीति'। अन्यथा क्रतुशब्दस्य सोमयागे रूढत्वादन्यत्र न स्यात्,यज्ञग्रहणात्तु तेभ्योपि भवति। एवं केवलयज्ञग्रहणेपि स एव दोषो यः केवलक्रतुग्रहणे, तस्माद् गौणमुख्यपरिग्रहार्थमुभयोरुपादानम्॥

"अध्यायेष्वेवर्षेः"॥ 'ऋषिशब्दाः प्रवरनामधेयानीति'। होत्राध्वर्युणा च प्रव्रियन्तइति प्रवराः भृग्वादयः, तद्यथा भार्गवच्यावनाप्नवानौर्वजामदग्नेति होता, जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः, एतेन यद्यपि मन्त्रदर्शिष्वृषिशब्दः प्रसिद्धस्तथापि प्रवराध्यायपठितानामेव ग्रहणमिति दर्शयति। 'वसिष्ठस्य व्याख्यान इति'। वसिष्ठेन दृष्टो मन्त्र उपचाराद् वसिष्ठ इत्युक्तः, वासिष्ठी ऋगिति भवार्थेण, एवकारः सर्ववाक्यानां सावधारणत्वज्ञापनार्थः॥

"पौरोडाशपुरोडाशात्ष्ठन्"॥ 'पुरोडाशाः पिष्टपिण्डा इति'। दाशृ दाने कर्मणि घञ्, पुरोदाश्यन्ते दीयन्तइति पुरोडाशाः, पृषोदरादित्वात्समासः, दकारस्य च डकारः, एतेनैतदाह आकृतिवचनः पुरोडाशशब्दो न यूपाहवनीयादिवददृष्टनिमित्त इति। 'तेषां संस्कारको मन्त्र

इति'। मखस्य शिरोसीत्येवमादिः। 'पुरोडाशसहचरितो मन्त्रः पुरोडाश इति'। मन्त्र एव हि व्याख्यातव्यो न पुरोडाशः॥

"छन्दसो यदणौ"॥ अत्र भवव्याख्यानौ द्वावर्थौ यदणौ प्रत्ययावपि द्वावेव, तथापि यथासंख्यं न भवति, तस्य व्याख्यान इति यदणौ भवतः, तत्र भव इति चेत्येवं समुच्चयात्। 'द्व्यच इति ठकि प्राप्त इति'। उत्तरसूत्रे द्व्यज्ग्रहणेन ठकि प्राप्त इत्यर्थः॥

"द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक्"॥ 'अणादेरपवाद इति'। आदिशब्देन ठञः, तत्र ऋक् छन्दे द्व्यत्तु चाणोपवादः, पुरश्चरणशब्दोपि ल्युडन्तः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, असिप्रत्ययो हि सप्तम्यन्ताद्धुत्पन्नतइति पुरःशब्दः कारकं, पुरोव्ययमिति वा गतिः तेन तस्मादप्यण एवापवादः, ब्राह्मणादिष्वन्तोदात्तेषु ठञोपवादः, ऋकारान्तेष्वप्यणोपवादः, ये तु तत्र बह्वचोन्तोदात्तास्तेषु परत्वादयं ठञं बाधते। 'नामाख्यातग्रहणं सङ्घातविगृहीतार्थमिति'। आख्यातार्थं विगृहीतग्रहणं नामशब्दात्तु द्व्यच्त्वादेव सिद्धम्॥

"ऋगयनादिभ्यः"॥ 'ठञ देरिति'। आदिशब्देन ठकः छस्य च ग्रहणं, तत्र विद्यान्यायशिक्षाशब्देभ्यो द्व्यज्लक्षणस्य ठकोपवादः, व्याकरणशब्दाद्वृद्धाच्छस्य, शेषा बह्वचोन्तोदात्तास्तेभ्यञः, अथाण्ग्रहणं किमर्थं, न ऋगयनादिभ्यो यथाविहितमेवोच्येत वचनप्रमाण्याद्यो विहितो न च प्राप्नोति अन्येन बाधितत्वात्स एवाण् भविष्यत्यत आह। 'अण्ग्रहणमिति'। असत्यण्ग्रहणे यद्वृद्धमन्तोदात्तं बह्वज् यथा वास्तुविद्येति तस्माद्वृद्धाच्छे ठञा बाधिते पुनर्वचनाच्छ एव स्याद् अणग्रहणात्त्वणेव भवति। 'ऋगयनमिति'। पूर्वपदात्संज्ञायामग इति णत्वं न भवति अग इति प्रतिषेधात् अयनशब्दश्च भावसाधनोऽभेदोपचाराद्ग्रन्थे वर्तते, अनो भावकर्मवचन इत्यन्तोदात्त, पदव्याख्यानशब्दो मन्क्तिन्व्याख्यानेत्यन्तोदात्तः, छन्दोमानशब्द ऋगयनशब्देन व्याख्यातः, छन्दो भाषेति कृत्स्वरेणान्तोदात्तः, छन्दोविचितिशब्दो मन्क्तिन्नित्यन्तोदात्तः, पुनरुक्तशब्दस्याथादिस्वरेण, निरुक्तशब्दः संज्ञायामनाचितादीनामिति, निगमशब्दो गोच-

रादिसूत्रे घान्तो निपातितोऽन्तोदात्तः वास्तुविद्या क्षत्रविद्या अङ्गविद्येति समासस्वरेण, उत्पातोत्पादशब्दौ थाथादिस्वरेण, अशेः सरन्, वसेः संपूर्वाच्चिदिति संवत्सरशब्दोन्तोदात्तः, मुहूर्त्तनिमित्तशब्दौ प्रातिपदिकस्वरेण, उपनिपूर्वात्सदेः, क्विप् उपनिषच्छब्दः कृत्स्वरेणान्तोदात्तः ॥

"तत आगतः" ॥ 'तत इति मुख्यं यदपादानं विवक्षितं तदिह गृह्यतइति'। मुख्यत्वादेव, अपादानसंज्ञा तु नान्तरीयकस्यापि भवति, कारकप्रकरणे हि गौणमुख्यविभागो नाश्रीयते ॥

"ठगायस्थानेभ्यः" ॥ 'आयइति स्वामिग्राह्यो भाग इति'। एत्येनं स्वामी स्वामिनं वायमेतीति कृत्वा ॥

"शुण्डिकादिभ्योऽण्" ॥ 'आयस्थानठकोपवाद इति'। उपलक्षणमेतत्। कृकणशब्दात्कृकणपर्णाद्भारद्वाजइति छस्याप्यपवादः, तीर्थशब्दाद्धूमादिलक्षणस्य वुञोऽप्यपवादः, उदपानशब्दादुत्साद्यञोऽप्यपवादः। अथाण्ग्रहणं किमर्थं न शुण्डिकादिभ्यो यथाविहितमेवोच्येत वचनसामर्थ्याद्धि यो विहितो न च प्राप्नोति, अन्येन बाधितत्वात्स एवाण् भविष्यतीत आह। 'अण्ग्रहणमिति'। उदपानशब्द इह पठ्यते, स चोत्सादिः, तत्रासत्यण्ग्रहणे आयस्थानठकं बाधित्वा उत्सादिभ्योऽञित्यञेव स्यात्, अण्ग्रहणात्त्वणेव भवति ॥

"विद्यायोनिसम्बन्धेभ्यो वुञ्" ॥ 'विद्यायोनिकृतइति'। बहुव्रीहौ गतार्थत्वात्कृतशब्दस्याप्रयोगः ॥

"ऋतष्ठञ्" ॥ एषूदाहरणेष्विसुसुक्तान्तात्कः, एवं च प्रक्रियालाघवाय कञेवायं विधेयः, तथा तु न कृतमित्येव ॥

"पितुर्यच्च" ॥ 'पित्र्यमिति'। रीङृतः, यस्येति च।

"गोत्रादङ्कवत्" ॥ 'अङ्कग्रहणेन तस्येदमित्यर्थसामान्यं लक्ष्यतइति'। कथं मुख्ये सम्भवति लक्षणाश्रीयते, व्याख्यानमत्र शरणम्। अपर आह। अङ्के यद् दृष्टं तदतिदिश्यते न त्वङ्कमाहत्य विहितं गोत्रचरणाद्वुञित्ययमपि वुञ् तस्येदमिति सामान्ये विहितोऽप्यञादिभ्यतिरिक्ते विषयेऽङ्केपि

वृष्ट इति तस्याप्यतिदेश इति । 'औपगवकमिति' । वुञ उदाहरणम्, अणस्तु वेदं गार्ग्यं दात्तमिति, वतिः सर्वसादृश्यार्थः, कालेभ्यो भववत्, चरणेभ्यो धर्मवदिति यथा ॥

"हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः" ॥ 'समादागतमिति' । समाद्धेतोरागतमित्यर्थः । तत्र हेताविति तृतीया प्राप्नोति, ज्ञापकात्सिद्धं, यदयं पञ्चम्यन्ताद्धेतोः प्रत्ययमाह तज्ज्ञापयति भवति हेतौ पञ्चमीति, नैतदस्ति ज्ञापकं, यत्र विभाषा गुणइति पञ्चमी तदर्थमेतत्स्यात् जाड्यादागतइति, तस्माद्विभाषागुणइत्यत्र विभाषेति योगविभागादगुण-वचनादपि पञ्चमी भवति ॥

"मयट् च" ॥ 'योगविभागो यथासंख्यनिरासार्थइति' । विक-ल्पार्थेनान्यतरस्यांग्रहणेन रूप्यमयटोः पक्षे ऽभावः प्रतिपाद्यते तदभावे स्वशास्त्रेणैव प्राप्तः प्रत्ययो भवति, तेन रूप्यमयटोरेवानेन विधाना दसति योगविभागे स्याद्देव यथासंख्यमिति भावः ॥

"प्रभवति" ॥ 'प्रकाशतइति' । उत्पत्तिवचनस्तु प्रभवतिर्न गृह्यते तत्र जात इत्यनेन गतत्वात् ॥

"विदूराञ्ज्यः" ॥ अयुक्तोयं निर्देशइत्याह । 'ननु चेति' । 'वालवायो विदूरं चेति' । वालवायशब्दः प्रत्ययमुत्पादयति विदूरं चादेशमापाद्यते, सूत्रे त्व देश एव निर्दिष्टः, तेनानुरूपः स्थानी वालवा-यशब्द आक्षिप्यते यथा शिवादिषु विश्रवणरवणेत्यादेशाभ्यां पठिताभ्यां विश्रवः शब्दः । 'प्रकृत्यन्तरमेव वेति' । विदूरशब्दो नगरस्येव पर्वतस्यापि वाचकः स एवात्र प्रकृतिरित्यर्थः । 'न वै तत्रेति चेद्ब्रूयादिति' । चेच्छब्दो ऽसमायां, पर्वतवाची विदूरशब्दो न प्रसिद्ध इति चेद्ब्रूयात्स जित्वरीवदु-पाचरेत्, व्यवहरेत्, यथा वणिज एव मङ्गलार्थं वाराणसीं जित्वरीति व्यवहरन्त्येवं वैयाकरणा एव वालवायं विदूरमुपचरन्ति, नियतपु-रुषापेक्षापि प्रसिद्धिर्भवतीत्यर्थः ।

"तद्गच्छति पथिदूतयोः" ॥ प्राप्तिफले परिस्पन्दे गमिर्वर्तते न च पथः परिस्पन्दोस्ति तस्मात्पुरुषवर्त्ति गमनं पथ्युपचर्यतइत्याह ।

तत्स्येष्विति'। 'अथ वेति'। प्राप्तावपि गमिर्वर्तते यथा द्वैधभूयकृत इति ॥

"अभिनिष्क्रामति द्वारम्" ॥ 'द्वारमभिनिष्क्रमणक्रियायामिति'। अनेनैतदाह तत्स्येष्वभिनिष्क्रामत्सु करणभूते द्वारे तदारोपाद् द्वारमेवाभिनिष्क्रामतीत्युच्यतइति, अभिनिष्क्रमणं द्वारमिति नोक्तं तदिति द्वितीयाधिकारात् तदा हि कृद्योगलक्षणा षष्ठी प्राप्नोति ॥

"अधिकृत्य कृते ग्रन्थे" ॥ 'आख्यायिकाभ्य इति'। तादर्थ्ये चतुर्थी, आख्यायिका गद्यग्रन्थप्रभेदः, तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः। न चेदं वक्तव्यम्, अभेदोपचारेण ताच्छब्द्यलाभाद् अभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते क्वचिच्च ॥

"शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः" ॥ 'इन्द्रजननादिराकृतिगण इति'। तेन विरुद्धभोजनीयमध्यायं व्याख्यास्याम इति सिद्धं भवति ॥

"सोस्य निवासः" ॥ इह यस्य स्रुघ्नो निवासः स्रुघ्नेसौ भवति ततस्तत्र भव इत्येव सिद्धं शब्दार्थभेदात्तु पृथगुपादानम् ॥

"अभिजनश्च" ॥ 'अभिजनाः पूर्वबान्धवा इति'। अभिजायन्ते तेभ्य इति कृत्वा, पूर्वबान्धवाः पित्रादयः, बन्धुशब्दः प्रज्ञादिः। 'तत्सम्बन्धाद्देशोपीति'। यथा यष्टिसम्बन्धाद्यष्टिशब्दः पुरुषे वर्तते तथाभिजनशब्दो देशे, कः पुनरसौ देश इत्याह। 'यस्मिंश्चेति'। 'तदिहेत्यादि'। तदितिवाक्योपन्यासे, कथंपुनर्मुख्ये ऽभिजने सम्भवति गौणात्प्रत्ययो भवतीत्याह। 'निवासप्रत्यासत्तेरिति'। प्रत्यासन्नेनानन्तरसन्निहितेन निवासशब्देनाभिजनस्य विशेषणादित्यर्थः। इह हि निवासे यो ऽभिजन इति विशेषिते तस्माद्देशवाचिन एव प्रत्ययः। 'निवासाभिजनयोः को विशेष इति'। अभिजनस्यापि निवासभूतस्य ग्रहणात्तस्यैव विशेष इत्यर्थः। 'यत्रेति'। यत्र स्वयं निवसति स तस्य निवासः। यत्र तु पूर्वैः पित्रादिभिरुषितं सोऽभिजन इत्यर्थः।

"आयुधजीविभ्यश्छः पर्वते" ॥ 'आयुधजीविभ्य इति तादर्थ्ये चतुर्थीत्यादि'। यदि त्वायुधजीविभ्य इति पञ्चमी स्यात्पर्वतादिति ल्यब्लोपे पञ्चमी व्याख्येया स्यात् ततश्चायमर्थः स्यात् आयुधजीविभ्यः पर्वतमुद्दिश्य पर्वतेऽभिधेये छो भवतीति तच्च सोऽभिजन इत्यधिकारो बाध्येत ॥

"शण्डिकादिभ्यो ञ्यः" ॥ 'अणादेरपवाद इति'। आदिश-ब्देन छादेः, तत्र यदि शण्डिकादयः पर्वतशब्दास्ततः पूर्वेण छः प्राप्तः, अथ जनपदशब्दास्ततोऽवृद्धादपि बहुवचनविषयादिति वुञ्, शण्डिका-शब्दात्कोपधादण् प्राप्तः ॥

"सिन्धुतक्षशिलादिभ्योऽणञौ" ॥ 'सिन्धुवर्णुप्रभृतय इति'। प्रभृतिशब्देन मधुमत्कम्बोजसाल्वकश्मीरगन्धारइत्येते गृह्यन्ते, किष्कि-न्धादिभ्यश्चतुर्भ्यो ऽवृद्धादपीति वुञि प्राप्ते वचनं, तक्षशिलादिष्वपि वृद्धेभ्यश्छः प्राप्तः, शेषेभ्यः प्राग्दीव्यतोऽण् ॥

"अचित्ताददेशकालाट्ठक्" ॥ 'अचित्तवाचिन इति'। स्वरू-पग्रहणं तु न भवति, देशकालप्रतिषेधात् तत्साहचर्याद्देशकालयोरपि स्वरूपग्रहणं न भवति ॥

"वासुदेवार्जुनाभ्यां वुन्" ॥ 'छाणोरपवाद इति'। वासुदेव-शब्दः संज्ञेति वक्ष्यति, तेन तत्रोत्तरस्य वुञोऽप्राप्तिः, अर्जुनशब्दोपि यो वृ-क्षविशेषवचनो वर्णविशेषवचनो वा न तत्र वुञः प्राप्तिः क्षत्रियवचना-दपि बहुलवचनाद्वुञोऽप्राप्तिरेवेति भावः। 'ननु चेत्यादि'। वसुदेव-स्यापत्यम्, ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण्। 'न चात्रेति'। न तावद् वृद्धो विशेषः प्रागेव वृद्धत्वात्, योपि वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः सोऽस्यापि न कोपधाया इत्यस्त्येव। 'संज्ञैषा देवताविशेषस्येति'। वस-त्यस्मिन्सर्वमिति व्युत्पत्त्या परमात्मन एषा संज्ञा। 'न क्षत्रियाख्येति'। उपलक्षणमेतत्, नापि गोत्राख्येत्यपि द्रष्टव्यम्। प्रासङ्गिकं प्रयोजनान्तरं वासुदेवग्रहणस्य दर्शयति। 'अजाद्यदन्तम्, अल्पाच्तरमिति चेति'।

इतिकरणः प्रत्येकमभिसंबद्ध्यते, यद्यप्येतज्ज्ञाप्यते तथापि श्वयुवमघोनामतद्धित इति निर्देशात्क्वचिदन्यथापि भवति ॥

"गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्" ॥ 'गोत्रक्षत्रियाख्येभ्य इति'। आङ्पूर्वात्ख्यातेर्मूलविभुजादित्वात्कः । 'आख्याग्रहणमिति'। आङ्पूर्वस्य ख्यातेर्ग्रहणमित्यर्थः । 'यथाकथंचिदिति'। क्षत्रियशब्दसामानाधिकरण्याद्येषां क्षत्रिये वृत्तिः यथा शूरः क्षत्रिय इति, तेभ्यो मा भूदित्यर्थः ॥

"जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने" ॥ जनपदिनां जनपदिवाचिनां शब्दानां जनपदवत् जनपदवाचिनां शब्दानामिव जनपदेन जनपदवाचिना शब्देन समानशब्दानां समानश्रुतीनां बहुवचने बह्वर्थाभिधाने, वृत्तेरप्येष एवार्थः । 'प्रत्ययः प्रकृतिश्चेति'। अनेन सर्वशब्दस्यार्थो दर्शितः । 'जनपदिनो जनपदस्वामिन इति'। स्वस्वामिभावसम्बन्धे मत्वर्थीयं दर्शयति । अङ्गा जनपदा इत्यादिना दृष्टान्ते प्रवृत्तिप्रकारमाह । तद्वदित्यादिना तूदाहरणं, सर्वत्र बहुष्वर्थेषु द्व्यञ्मगधेत्यादिना विहितस्याणस्तद्राजस्य बहुष्विति लुकि कृते समानशब्दादवृद्धादपि बहुवचनेति वुञि विवक्षिते गोत्रेऽलुगचीति वचनादाङ्गशब्दाद्वुञ्,। 'पञ्चाला ब्राह्मणा इति'। अभेदोपचाराद्ब्राह्मणेषु पञ्चालशब्दस्य वृत्तिः, तत्रातिदेशाभावादणेव भवति । 'सर्वग्रहणमित्यादि'। असति सर्वग्रहणे प्राधान्यात्प्रत्ययस्यैवातिदेशः स्यान्न प्रकृतेः, वतिनिर्देशस्तु यैर्जनपदैर्ये जनपदिनस्तेषां तज्जनपदप्रत्यय एव यथा स्यात् जनपदान्तरप्रत्ययो माभूदित्येवमर्थं स्यात्, न त्वनेन प्रकृत्यतिदेशो लभ्यते, तस्मात्तदर्थं सर्वग्रहणं क्रियते, स च द्व्येकयोः प्रयोजयतीति पाठः, स च प्रकृत्यतिदेशः सर्वग्रहणं द्व्येकयोः प्रयोजयति न बहुषु तत्र रूपस्याभिन्नत्वात्, यदाह, बहुवचने समानशब्दानामिति। द्व्येकयोस्तु जनपदवाचिनो रूपं वृद्धं जनपदवाचिनस्त्ववृद्धमिति तत्रैव सर्वग्रहणस्य प्रयोजनमित्यर्थः । 'अतिदेशः प्रयोजयति'। अतिदेशं प्रयोजयतीति वा पाठे न समीचीनमर्थं पश्यामः । 'वृद्धिनिमित्तेष्वित्यादि'। तत्र ह्यतिदिष्टेपि प्रकृतिरूपे पुनर्वृद्ध्या भाव्यमिति नास्ति विशेषः । 'मद्रवृज्योः कनि विशेष इति'।

तत्र वृद्धासम्भवात् । 'प्रकृतिनिर्ह्रासे कृतइति'। निर्ह्रासोपचयोल्पत्व-मित्यर्थः। 'मद्रकः वृजिक इति'। असति तु प्रकृत्यतिदेशे माद्रकको वार्ज्यक इति स्यात्। 'बहुवचनग्रहणमित्यादि'। समानशब्दताया यो विषयस्तस्य लक्षणं प्रदर्शनं तदर्थम्, 'अन्यथा हीति'। यदि बहुवचन-ग्रहणं न क्रियते। 'यत्रैवेति'। बहुवचने, तत्रैव हि तद्राजस्य लुकि कृते समानशब्दता भवति 'एकवचनद्विवचनयोर्न स्यादिति'। लुगभावेन समानशब्दताया अभावात्, ननु सर्वग्रहणं प्रकृत्यतिदेशार्थं स च द्व्येकयोः प्रयोजयतीत्युक्तं तत्कथं द्व्येकयोर्न स्यात् तस्मात्सर्वग्रहणादत्र क्वचित्स-मानशब्दानां सर्वत्रातिदेशः सिद्धः अस्यैवार्थस्य विस्पष्टप्रतिपत्त्यर्थं बहु-वचनइत्युपलक्षणमुपात्तम् ॥

"तेन प्रोक्तम्" ॥ 'प्रकर्षेणोक्तमिति'। अध्यापनेनार्थव्याख्यानेन वा प्रकर्षेणप्रकाशितमित्यर्थः। प्रकर्षेणेतिवचनाद्ग्रामेग्रामे यद्यपि काठ-कादिकं देवदत्तादिभिः प्रोच्यते तथापि तेभ्यः प्रत्ययो न भवति। 'न तु कृतमिति'। प्रपूर्वो वचिः करणेपि वर्त्ततइति भावः। मधुरायां भवो माधुरः, ततो वृद्धाच्छे प्राप्ते कलापिनोऽणित्यण्ग्रहणादधिकवि-धानार्थोदण् प्रत्ययः। 'पाणिनीयमिति'। स्वयमन्येन वा कृतं यत्पा-णिनिना प्रोक्तं तदुच्यते ॥

"तित्तिरिवरतन्तुखण्डिकोखाच्छण्" ॥ 'छन्दसि चायमिष्यत इति'। छन्दस्यभिधेयइत्यर्थः। 'तित्तिरिणा प्रोक्तः श्लोक इत्यत्र न भवतीति'। न केवलं छणेवापि त्वणपि न भवत्यनभिधानादित्याहुः। कथं पुनरिष्यमाणोपि छन्दसि लभ्य इत्याह। 'शौनकादिभ्य इति'।

"काश्यपकौशिकाभ्यामृषिभ्यां णिनिः" ॥ 'णकार उत्तरत्र वृद्ध्यर्थ इति'। इह तु पूर्वमेव वृद्धेः सिद्धत्वात्, योपि वृद्धिनिमित्तस्येति पुंवद्भा-वप्रतिषेधः सोपि न प्रयोजनं णिन्यन्तस्याध्येतृवेदितृविषयत्वेन स्त्रिया-मवृत्तेः, वृत्तावपि जातेश्चेति सिद्धत्वात्, चरणत्वेन जातित्वात्। 'तस्यापि चेति'। कथं छन्दोब्राह्मणानामुच्यमाना तद्विषयता कल्पस्य भवति, तत्राह। 'शौनकादिभ्य इति'। ननु च तत्रानुवृत्तौ सत्यामप्यस्ययोगस्य न

कल्पः छन्दो भवति नापि ब्राह्मणमत आह । 'छन्दोधिकारविहितानां चेति'। छन्दोब्राह्मणानीत्यत्र छन्दोग्रहणं स्वर्यते, तत्र स्वरितेनाधिकारावगतिर्भवतीति छन्दःप्रकरणमध्यपातिनोस्यापि णिनेस्तद्विषयताभवतीत्यर्थः। यत्तु छन्दोब्राह्मणानीत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वमाश्रित्य कल्पादेस्तद्विषयत्वप्रतिपादनं तत्प्रकारान्तरं द्रष्टव्यम् । 'इदानीन्तनेन गोत्रकाश्यपेनेति'। नह्यसावृषिरमन्त्रदर्शित्वात् ॥

"कलापिवैशम्पायनान्तेवासिभ्यश्च" ॥ 'कलाप्यन्तेवासिनामित्यादि'। सूत्रे त्वभेदोपचाराश्रयो निर्देशः। 'कलाप्यन्तेवासिनश्चत्वार इत्यादि'। ननु च शिष्यशिष्येष्वपि शिष्यव्यवहारो लोके दृश्यते तत्कथमियन्त एवेति नियमस्तत्राह । 'प्रत्यक्षकारिण इति'। क्रियासामान्यवचनः करोतिः प्रकरणादिहाध्ययने वर्तते । 'कलापिखाण्डायनग्रहणादिति'। एतदेव विवृणोति । 'तथाहीति'। वैशम्पायनस्यान्तेवासी कलापी, यदि चान्तेवास्यन्तेवासिनोपि गृह्येरन् कलापिग्रहणमनर्थकं वैशम्पायनान्तेवासिभ्य इत्येव सिद्धं कलाप्यन्तेवासिनामपि वैशम्पायनान्तेवासित्वात्, तथा वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाण्डायनः, तत्र व्यवहितानामपि ग्रहणे वैशम्पायनान्तेवासित्वादनेनैव सिद्धे शौनकादिषु खाण्डायनशब्दस्य पाठो निष्फलः स्यात्, उदाहरणेषु छन्दोब्राह्मणानीति तद्विषयता, अध्येतृप्रत्ययस्य प्रोक्ताल्लुगिति लुक् । 'उलपेन चतुर्थेनेति'। सहयोगे तृतीया, कलापिन इदं कालापकं, गोत्रचरणाद्वुञ् तत्र धर्माम्नाययोरिति पठ्यते तस्मादिहोपमानाच्छिष्यसमूहे प्रयोगः। 'आलम्बिश्चरकःप्राचामिति'। आलम्बिर्नाम प्राचां देशउत्पन्नश्चरकस्य शिष्यः, एवं फलिङ्गकमलाबुभौ प्राचामेव त्रय एते प्राच्या उक्ताः। 'कठकलापिनोरिति'। कठचरकाल्लुगिति कठाल्लुक:, कलापिशब्दादपि कलापिनोणित्यणुक्तः ॥

"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" ॥ 'भाल्लविन इत्यादि'। भल्लु शाट्यायन ऐतरेय पिङ्ग अरुण पराजि इत्येतेभ्यो णिनिः, यज्ञवल्काश्मरथशब्दौ कण्वादी, ताभ्यां यञन्ताभ्यामप्यापत्यस्येति यलोपः। ननु च

याज्ञवल्क्यादीन्यपि पुराणप्रोक्तान्येव, शाट्यायनकादिभिर्ब्राह्मणान्तरैस्तुल्यकालत्वादित्यत आह । 'याज्ञवल्क्यादयो हीति' । आख्यानानि भारतादीनि । 'तथा व्यवहरतीति' । अर्थस्तु तथा वा भवत्वन्यथा वेति भावः । 'तद्विषयता कस्मान्न भवतीति' । याज्ञवल्क्यादिविषयः प्रश्नः, छन्दो ब्राह्मणानि चेत्यत्र पुराणप्रोक्तत्वविशेषस्यानाश्रयणात्प्राप्नोतीति भावः । 'प्रतिपदमिति' । एतल्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते, एतदर्थमेव च तत्र ब्राह्मणग्रहणं छन्दस्त्वादेव सिद्धेः, कल्पेषु तर्हि कस्मान्न भवति यथा काश्यपिनः कौशिकिन इत्यत्रेत्यत आह । 'न वायमिति' । युक्तं तत्र छन्दोधिकारे तस्य योगस्यानुवृत्तेः, अयं तु न तथेति कल्पेष्वपि तद्विषयता न भवतीत्यर्थः । 'न चात्यन्तबाधैवेति' । सिद्धशुष्कपक्वबन्धैश्चेति निपातनादेव सिद्धे शुषः कः पचो व इति लिङ्गमबाधकान्यपि निपातनानि भवन्तीति, यथा तु सर्वादिसूत्रे भाष्यं तथान्यपराण्यपि निपातनानि बाधकान्येवेति स्थितम् ॥

"कलापिनोऽण्" ॥ 'यथाविहितमेवोच्येतेति' । तत्र वचनसामर्थ्याद्यो विहितो न च प्राप्नोति स एवाण् भविष्यतीति भावः । 'एवमादीनीति' । आदिशब्देन मौदाः पैप्पलादाः शाकला इत्येतेषां ग्रहणम् । अत्र मुदपिप्पलादशाकल्य इत्येतेभ्यः पुराणप्रोक्तेष्विति णिनेरपवादोऽण् भवति ॥

"पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" ॥ 'तदर्थं छन्दोग्रहणमनुवर्त्यमिति' । ननु तदनुवृत्तावपि कथं भिक्षुनटसूत्रयोश्छन्दस्त्वं तत्राह । 'गुणकल्पनया चेति' । उपचारस्य निमित्तभूतो धर्मो गुणो गुरुशुश्रूषणादिस्तन्निमित्ता कल्पना गुणकल्पना । 'पाराशरिण इति' । पूर्ववद्यलोपः । 'शैलालिन इति' । शिलामलतइति शिलाली, अल भूषणपर्याप्तिवारणेष्वित्येतस्मात्सुप्यजाताविति णिनिः, ततोऽस्मिन् णिनौ टिलोपः । 'पाराशर्यमिति' । कण्वादिभ्यण् । 'शैलालमिति' । औत्सर्गिकेऽणि नान्तस्य टिलोपे सब्रह्मचारीत्यादिना टिलोपः ॥

"तेनैकदिक्" ॥ 'सौदामनीति' । अन्निति प्रकृतिभावः, सुदामादयः पर्वतविशेषाः ॥

"तसिश्च" ॥ 'स्वरादिपाठादव्ययत्वमिति' । तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानमपि स्वाभाविकं वेदितव्यम् ॥

"उपज्ञाते" ॥ 'विनोपदेशेन ज्ञातमुपज्ञातमिति' । उपपूर्वो जानातिस्तत्र प्रसिद्ध इति भावः । 'अकालकमिति' । आन्याय्यादुत्थानादित्यादिकालपरिभाषारहितमित्यर्थः । गुरुलाघवं नामार्थशास्त्रं यत्रोपायानां गौरवं लाघवं चिन्त्यते, दुष्ट इत्ययं सङ्केतशब्दो यत्र क्रियते यथा पाणिनीये वृदिति तद्दुष्करणं व्याकरणं कामशास्त्रमित्यन्ये ॥

"कृते ग्रन्थे" ॥ तित्तिरिवरतन्तिखण्डिकोखाद्‌दीनि सूत्राण्यत्र प्रकरणे न पठितानि, तित्तिर्यादयो हि छन्दसां प्रवक्तारो न कर्तारः, नित्यानि हि छन्दांसि न केन चित्क्रियन्ते ॥

"संज्ञायाम्" ॥ अग्रन्थार्थमिदम् ॥

"कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दसि" ... 

"क्षुद्राभ्रमरवटरपादपादञ्" ॥ 'अणोपवाद इति' । बाहुल्यादेवमुक्तं पादपशब्दाद्धि कः प्राप्नोति, अन्ये तु पादपशब्दस्य स्थाने पदपशब्दं पठन्ति ॥

"तस्येदम्" ॥ तस्यापत्यमित्यत्रोक्तमेवार्थं स्मारयति । 'प्रकृतिप्रत्ययार्थयोरित्यादि' । प्रकृतौ षष्ठ्यर्थमात्रं विवक्षितं प्रत्ययार्थोऽपि तत्सम्बन्धिमात्रं यद्योगात्षष्ठी, तस्मिन्नभिधेये प्रत्ययः, मात्रशब्दव्यवच्छेद्यं दर्शयति । 'यदपरमिति' । इदंशब्दः प्रत्यक्षवचनः, तच्छब्दः परोक्षवचनः, आदिशब्देन सामान्याभिधायित्वं गृह्यते । 'तत्सर्वमविवक्षितमिति' । अत्र कारणं तस्यापत्यमित्यत्रैवोक्तम् । 'वहेस्तुरिति' । तृन्तृचोः सामान्येन ग्रहणम् । 'सांवहित्रमिति' । ढत्वादीनामसिद्धत्वात्पूर्वमिहेटि कृते निमित्ताभावात्तेषामभावः । 'अग्नीध इति' । अग्निमिन्ध इति क्विप् अग्नीत् ऋत्विग्विशेषः, त्वमग्निदृतीयत इत्यत्र तु छान्दसं ह्रस्वत्वं, शरणं गृहं स्थानं यत्राग्नीधीयं धिष्ण्यं तदाग्नीध्रं, तात्स्थ्यात्तु मञ्चाः क्रोशन्तीतिवदृत्विजि प्रयोगः कल्पसूत्रकाराणां

प्रत्याश्रावयेदाग्नीध्रः आग्नीध्रं पोतारं ब्रह्मण इति, छप्रत्ययं च ततः शरणे कुर्वन्ति, आग्नीध्रीयसकाशमुत्तरेणाग्नीध्रीयं धिष्ण्यं परीत्येति शरणवचनाच्छः। 'समिदाधानइति'। यया समिध्यतेऽग्निः सा समित्, सम्पदादित्वात्करणे क्विप् सा समिदाधीयते यया सा सामिधेनी ऋक्, खित्वान्ङीष्, हलस्तद्धितस्येति यलोपः॥

'रथाद्यत्'' ॥ 'रथाङ्ग एवेष्यतइति'। यस्तु रथस्य वोढा रथ्य इति वोढरि प्रयोगः स तद्वहति रथयुगप्रासङ्गमिति द्रष्टव्यः, स्यादेतत्। अयमेव तद्वोढर्यपीष्यतां तद्वहतीत्यत्र रथग्रहणं मा कारीति, मैवं शक्यम्, इह द्वौ रथौ वहति द्विरथ्य इति द्विगोर्लुगनपत्य इति प्राग्दीव्यतीयो लुक् प्राप्नोति, यत्तु द्वयो रथयोरङ्गं तत्र द्विरथमित्येव भवति॥

"पत्रपूर्वादञ्" ॥ 'पतन्त्यनेनेति पत्रमिति'। दाम्नीशसेत्यादिना ष्ट्रन्, अश्वयुक्तो रथोऽश्वरथः, षष्ठीसमासे वृत्तिस्वभावाद्युक्तार्थावगतिः। तस्यांगमाश्वरथम्॥

"पत्राध्वर्युपरिषदश्च" पत्रेत्यर्थग्रहणमितरयोः स्वरूपग्रहणं व्याख्यानं चात्र शरणम्॥

"द्वन्द्वाद्वुन् वैरमैथुनिकयोः" ॥ वैरं विरोधः वीराणामिदमिति कृत्वा, मिथुनकर्म मैथुनिका मनोज्ञादित्वाद्वुञ् मिथुनं दम्पती कर्म, क्रियामिष्पादनम्। 'बाभ्रवशालङ्कायनिकेति'। वुञन्तं स्वभावतः स्त्रियां वर्त्तते॥

"गोत्रचरणाद्वुञ्" ॥ वुनि प्रकृते वुञो विधानमवृद्धेषु वृद्ध्यर्थं, वृद्धेषु वुनि वुञि च विशेषो नास्ति, तदेव रूपं स एव स्वरः, पुंवद्भावप्रतिषेधोपि न कोपधाया इत्युभयोरस्ति॥

"संघाङ्कलक्षणेष्वञ्यञिञामण्" ॥ 'पूर्वस्य वुञोपवाद इति'। गोत्रग्रहणानुवृत्तेरञादीनां गोत्रप्रत्ययानामत्र ग्रहणमिति भावः। 'घोषग्रहणमत्र कर्त्तव्यमिति'। घोष आभीरस्थानं तत्रापि प्रत्ययो यथा स्यादित्येवमर्थं घोषग्रहणस्यानुषङ्गिकं प्रयोजनान्तरमाह। 'तेन वैषम्यादिति'।

'अथाङ्कलक्षणयोः को विशेष इति'। निघण्टुषु पर्यायतया पाठादास्त्येव विशेषइत्यर्थः । पृथगुपादानसामर्थ्याद्विशेषोऽत्राश्रीयतामित्याह । 'लक्षणं मत्यस्यैवेति'। स्वमात्मीयं सम्बन्धीत्यर्थः, । 'वैदी विद्या अस्येति'। विद्वानामसाधारणी या विद्या सा यस्यास्ति स वैदीविद्यः ॥

"शाकलाद्वा" ॥ 'वुञोपवाद इति'। शाकलशब्दस्य चरणशब्दत्वात्, तद्दर्शयति । 'शाकलेन प्रोक्तमिति' ॥

"छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" ॥ 'वुञणोरपवाद इति'। चरणशब्देभ्यो वुञोपवादः, नटादौत्सर्गिकस्याणः ॥

"न दण्डमाणवान्तेवासिषु" ॥ 'दण्डप्रधाना माणवा इति'। अर्थकथनमेतत्, समासस्तु कर्मधारयः, सदा दण्डधारणाद्दण्डशब्दो माणवेषु वर्त्तते ॥

"रैवतिकादिभ्यश्छः" ॥ 'पूर्वेणेति'। गोत्रचरणाद्वुञित्यनेन । 'रैवतिकीय इति'। रेवत्या अपत्यं, रेवत्यादिभ्यष्ठक् रैवतिकः, ततश्छः, अन्ये इञन्ताः, तत्रानन्तरसूत्रात्प्रतिषेधोनुवर्त्तिष्यते, रैवतिकादिभ्यो वुञः प्रतिषेधे विज्ञायमाने यत्रापवादो नास्ति रैवतिकीय इति तत्र वृद्धाच्छ इत्येव सिद्धः, क्षेमवृद्धिशब्दादपि गहादित्वाच्छः, अन्येष्विञश्चेत्यण् स्यात्, तस्माच्छग्रहणम् ॥

"कौपिञ्जलहास्तिपदादण्" ॥ 'गोत्रवुञोपवाद इति'। कुत इत्याह । 'गोत्राधिकारादिति'। 'कौपिञ्जल इति'। कुपिञ्जलस्यापत्यम्, अस्मादेव निपातनादण्, तदन्तात्पुनरण् । 'हास्तिपद इति'। हस्तिन इव पादावस्य हस्तिपादः, पादस्य लोपो न भवति अहस्त्यादिभ्यइति वचनात्, हस्तिपादस्यापत्यं तस्यापत्यमिति अस्मादेव निपातनादण् पद्भावश्च, हास्तिपदस्येदं, पुनरण् । अथाण्ग्रहणं किमर्थम्, असत्यण्ग्रहणेऽनन्तरश्छः प्राप्नोति, सिद्धोऽत्र छो वृद्धाच्छ इति, न सिद्ध्यति, गोत्रचरणाद्वुञिति वुञ् प्राप्नोति, एवं तर्हि यद्येताभ्यां छ इष्टः स्याद्रैवतिकादिष्वेवैनौ पठेत्, एवं हि विभक्त्यनुच्चारणाल्लाघवं भवति, तस्मात्पृथगारम्भादेव

को न भविष्यति, अन्यस्तु यो विहितो न च प्राप्नोति स एव भविष्यति, स चाणेव, एवं तर्ह्यसत्यण्ग्रहणे यत्र वुञ् प्राप्तः प्रतिषिध्यते न दण्डमाण-वान्तेवासिषु तत्र वुञो विधानार्थमेतत्स्यात्तस्मादण्ग्रहणं कर्त्तव्यं, णित्करणं ङीबर्थं, पुंवद्भावप्रतिषेधार्थं च, कौपिञ्जली क्रिया अस्य कौपिञ्जलीक्रिय इति ॥

"आथर्वणिकस्येकलोपश्च" ॥ 'चरणवुञोपवाद इति'। अथ-र्वणा प्रोक्तो वेदो ऽभेदोपचारादथर्वा तमधीते वसन्तादित्वाट्ठक्, आथ-र्वणिकः, दाण्डिनायनादिसूत्रे निपातनाट्टिलोपाभावः, अथ वा ऽथर्वणा प्रोक्तो वेदस्तेन प्रोक्तमित्यण्, ततश्छन्दोब्राह्मणानीति तद्विषयतायामा-थर्वणशब्दस्यापि वसन्तादिषु पाठादध्येतरि ठक्, तस्य विधानसामर्थ्या-त्प्रोक्ताल्लुगिति लुङ्न भवति, आथर्वणिकः, पूर्वसूत्रमिदञ्च वार्त्तिके दर्श-नात्सूत्रेषु प्रक्षिप्तम् ॥

"तस्य विकारः" ॥ 'प्रकृतेरिति'। उपादानकारणस्य। 'अव-स्थान्तरमिति'। अन्यथात्वम्, अपत्यादिनानाक्रान्तस्य विषयस्य दुर्ल-भत्वात्प्रश्नः। 'किमिहोदाहरणमिति'। 'अप्राणीति'। प्राणि-भ्योऽञं वक्ष्यति। 'आद्युदात्तमिति'। अनुदात्तादेरञं वक्ष्यति। 'अवृद्धमिति'। वृद्धान्मयटं वक्ष्यति। 'यस्य च नान्यदिति'। यथा गोपयसोर्यदिति। 'नित्स्वरेणेति'। अश्मभस्मशब्दौ मनिन्प्रत्ययान्तौ, मृ-दस्तिकन्। मृत्तिका। 'तस्य प्रकरणइति'। तस्येदमित्यस्मिन्। 'पुनर्वचनं शैषिकनिवृत्त्यर्थमिति'। प्रकृतं हि तस्यग्रहणं शैषिकैर्घादिभिः सम्बद्ध-मतस्तदनुवृत्तौ तेऽप्यनुवर्त्तेरन्, इदं त्वपूर्वं तस्य ग्रहणं क्रियमाणं घादि-सम्बद्धस्य तस्यग्रहणस्य निवर्त्तकं घादीनपि निवर्त्तयति। ननु च विधेयतया प्रधानभूता घादयो न ते गुणभूते तस्यग्रहणे निवर्त्तमानेऽपि निवर्तितुमर्हन्ति, नहि गुणानुवृत्तिप्रधानं किं तर्हि प्रधानानुवर्त्ती गुणः, सत्यं, तस्य ग्रहणसामर्थ्यात्प्रधानभूतानामपि घादीनां निवृत्तिः, अणा-दयस्तु न निवर्त्तन्ते प्राग्दीव्यतः प्राग्भवनादिति च विशिष्टावधिपरिच्छे-देनाधिकृतत्वात्। 'विकारावयवयोरिति'। परस्तात्तु प्राग्वहतेः प्राग्घ-

तादिति चाधिकारान्तरेणावष्टब्धत्वादेव घादीनां निवृत्तिः सिद्धेति भावः। स्यादेतत्। प्राग्भववचनेन घादयस्तस्य ग्रहणेन निवर्त्तितत्वात्, तस्येदमित्यनेन तु प्राप्नुवन्ति, तस्येदंविशेषत्वाद्विकारावयवयोरिति, तन्न। तस्येदमित्येव विकारावयवयोरणादिषु सिद्धेषु पुनस्तेषां विधानं शैषिकाणां बाधनार्थमेव किं तर्ह्युच्यते तस्येतिपुनर्वचनं शैषिकनिवृत्त्यर्थमिति यावता सूत्रप्रवृत्तिरेव शैषिकनिवृत्त्यर्था, सत्यं, तस्यग्रहणे त्वसति सूत्रप्रवृत्तिः शैषिकानपि विषयीकुर्यादिति तस्यग्रहणस्यैवायं भारः यदुत वै शैषिका निवर्त्तन्ते। 'हालः सैर इति'। हलशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः, सीरशब्दः कन्प्रत्ययान्तत्वान्नित्स्वरेणाद्युदात्तः, नात्र वक्ष्यमाणस्यापवादस्य कस्य चित्प्रसङ्ग इत्यण् भवति, इदं च योगविभागेनाणादिविधानस्य प्रयोजनं दर्शितं, यदि हि तस्य विकारो बिल्वादिभ्योणित्येवापवादविधानार्थमुच्येत ततो हलस्य विकार इत्यत्र तस्येदमित्यनेन प्रत्ययो विधातव्यस्ततश्चाणं बाधित्वा हलसीराट्ठगिति ठक् प्राप्नोति यथान्यस्मिंस्तस्येदं विशेषे, योगविभागेन त्वणादीनां विधानादणेव भवति, तस्यग्रहणे तु घादीनां निवृत्तिः प्रयोजनम्। 'वृजीनां विकारो वार्ज इति'। वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनान्तोदात्तत्वविधानात्पक्षे आद्युदात्तत्वादण्, यदि त्वत्र तस्येदमित्यण् प्रत्ययः स्यादादिवानेन घादयो विधीयेरन् ततो मद्रवृज्योः कन्निति कन्स्यात्, तथा त्रिगर्त्तानां विकारः त्रैगर्त्त इति, त्रिगर्त्तशब्दो बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तः, अत्र प्रथमः प्राग्दीव्यतोऽण् प्राप्तः, जनपदलक्षणो वुञ् द्वितीयः, गर्त्तोत्तरपदलक्षणश्छस्तृतीयः, तदवधिग्रहणेन विहितो वुञ् चतुर्थः, अनेन त्वणेव भवति, तथा रङ्कूणां विकारो राङ्कव इति अत्र प्राग्दीव्यतोऽण् प्रथमः, तदपवादयोररङ्कुदादपीति ओर्देशेठञिति वुञ्ठञोस्तुल्यकक्षयोरन्यतरो द्वितीयः, कोपधादणिति वा कच्छादिपाठाद्वाण् तृतीयः, मनुष्यतत्स्थयोर्वुञ् चतुर्थः, अनेन त्वण् प्राप्त ओरञा बाधितः कोपधाच्चेति प्रतिप्रसूयते, यदि तर्हि विकारावयवयोर्घादयो न भवन्ति पाटलिपुत्रस्यावयवाः पाटलिपुत्रकाः प्रासादा इति, तस्येदमित्यत्रार्थे रोपधेतोः प्राचामिति वुञ्

प्राप्नोति, नैष दोषः । प्राण्यौषधिवृक्षेभ्यो हि घादीनामवयवे निवृत्तिः, तत्र कः प्रसङ्गो यदप्राण्यौषधिवृक्षेभ्योऽवयवे निवृत्तिः स्यात् ॥

"अवयवे च प्राण्यौषधिवृक्षेभ्यः" ॥ 'मौर्वमिति' । मूर्वाशब्दस्तृणधान्यानां च द्व्यषामित्याद्युदात्तः । 'खादिरमिति' । खादेः खदिरशब्दः किरच् प्रत्ययान्तो निपातितस्तेनानुदात्तादिलक्षणो वुञ् प्राप्नोति, यदि त्वणिष्यते बिल्वादिषु पठितव्यः । 'कृतनिर्देशौ हि ताविति' । तस्येदमित्यनेन, यद्यपि शैषिकनिवृत्त्यर्थत्वं पूर्वयोगस्य प्रयोजनमुक्तं तथापि तदनपेक्ष्य भास्मनं मार्त्तिकमित्यादौ तावदणादयः सिद्धा इत्यभिसन्धायेदमुक्तम् ॥

"बिल्वादिभ्योऽण्" ॥ 'अञ्मयटोरपवाद इति' । तत्र काण्डपाटलीशब्दाभ्यां वृद्धलक्षणस्य मयटोऽपवादः, शेषेभ्यस्त्वनुदात्तादिलक्षणस्याञः, बिल्वशब्दस्य बिल्वतिष्ययोर्वान्तः स्वरित इत्यन्तः स्वरित उदात्तो वा, व्रीहिमुद्गशब्दौ घृतादित्वादन्तोदात्तौ मसूरगोधूमगवीधुकशब्दा लघावन्ते द्वयोश्चेति मध्योदात्ताः, इक्षेः क्सुः इक्षुः प्रत्ययस्वरेणान्तोदात्तः, वेणुशब्दो विभाषा वेण्विन्धानयोरिति पक्षेन्तोदात्तः, कर्पासीशब्दो जातिलक्षणङीषन्तः कर्कन्धूशब्दो ऽल·बूकर्कन्धूदिधिषूरिति निपातनान्मध्योदात्तः, कुटीशमीशुण्डाभ्यो रः कुटीरशब्दः प्रत्ययस्वरेणान्तोदात्तः, । 'मयड्बाधनार्थमिति' । मयड्वैतयोरित्यादिना प्राप्तस्य मयटो बाधनार्थं, शेषेभ्यस्त्ववृद्धेभ्यः शब्देभ्यः पक्षे मयड् भवत्येव, अण्ग्रहणं बाधकबाधनार्थं, बिल्वादिभ्यो यथाविहितमित्युच्यमानेऽपि हि पाटलीशब्दान्ङीषन्तादनुदात्तादिलक्षणस्याञो मयटा बाधे प्राप्ते पुनर्वचनादञेव स्यादण्ग्रहणात्त्वणेव भवति ॥

"कोपधाच्च" ॥ 'अञोऽपवाद इति' । ओरञ् अनुदात्तादेश्चेति प्राप्तस्य, तित्तिडीकादयो लघावन्त इत्यादिना मध्योदात्ताः ॥

"त्रपुजतुनोः षुक्" ॥ 'अप्राण्यादित्वादिति' । प्राण्यौषधिवृक्षेष्वन्यतमत्वस्याभावादित्यर्थः ॥

"ओरञ्" ॥ देवदारुभद्रदारुशब्दौ पीतद्रवर्थानामित्यादिनाद्युदात्तौ, पीतद्रुः सरलो वनस्पतिः, पीतद्रुरर्थो येषां तेषामादिरुदात्तो भवतीत्यर्थः ॥

"अनुदात्तादेश्च" ॥ 'दाधित्थं कापित्थमिति' । दधनि तिष्ठतीति सुपि स्थः, उपपदसमासः, पृषोदरादित्वात्सकारस्य तकारः, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् ।

"पलाशादिभ्यो वा" ॥ 'उभयत्रविभाषेयमिति' । कथमित्याह । 'पलाशखदिरेत्यादि' । पलाशशब्दो घृतादित्वादन्तोदात्तः, खदिरशब्दोऽजिरशिशिरेत्यादौ किरच्प्रत्ययान्तो निपातितः, शिंशपाशब्दो द्वितीयं प्रागीषादिति वर्त्तमानेऽपान्तादीनां गुर्वादीनामिति मध्योदात्तः, स्यदि किञ्चिच्चलने, अनुदात्तेतश्च हलादेरिति युच्, किरतेरीरन् करीरं, कृहृभ्यामीषन्, शृपृभ्यां किच्च, शिरीषं, शेषे नित्स्वरेणाद्युदात्तावेतौ, विकङ्कतमूलासयवासशब्दा ग्रामादीनां चेत्याद्युदात्ताः ॥

"शम्याष्टलञ्" ॥ 'अञोपवाद इति' । शमीशब्दो गौरादिङीषन्तः, । 'शामीली स्रुगिति' । चातुर्मास्ये वरुणप्रघासेषु शमीमय्यः स्रुचो भवन्तीति श्रुतम् ॥

"मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" ॥ 'मौद्गः सूपः कार्पासमाच्छादनमिति' । उभयत्र बिल्वाद्यण्, विकारावयवयोरभक्ष्याच्छादनयोश्च यथासङ्ख्यं न भवति विकारावयवयोरसमासनिर्द्देशेन प्रत्येकमभिसम्बन्धात् । 'तद्विषयेपि यथा स्यादिति' । यद्येतयोरिति नोच्येत उत्तरैर्विशेषप्रत्ययैरञादिभिः सम्प्रधारणायां परत्वात्तएव स्युः, पूर्वेषां विशेषप्रत्ययानां मयडभावपक्षे सावकाशत्वान्मयट्पक्षे परत्वान्मयडेव लभ्यतइति प्राणिरजतादिभ्योऽञादय इत्युक्तम्, एतयोरिति वचनं पुनर्विधानार्थं सम्पद्यतइति परेषामपि विषये मयड्भवति ॥

"नित्यं वृद्धशरादिभ्यः" ॥ 'नित्यं मयट्प्रत्ययो भवतीति' । प्राग्दीव्यतीयानामपवादः, अणं तु कोपधलक्षणमञेव परत्वाद्बाधते । 'शा-

कमयमाम्रमयमिति'। आम्रशब्दो ऽमितम्योर्दीर्घश्चेति रन्प्रत्ययान्तः। 'तदनेन क्रियतइति'। नित्यंशब्दोऽतिरिच्यमानः पूर्वाचार्यपठितस्य वाक्यस्य स्मारक इति, एवं च मृच्छब्दस्य शरादिषु पाठोऽस्यैव प्रपञ्चार्थो द्रष्टव्यः॥

"गोश्च पुरीषे"॥ 'गव्यं पय इति'। कथं पुनरत्र प्रसङ्गो यावता विकारावयवयोरिति वर्त्तते पयश्च न विकारो नावयवस्तत्राह। 'पुरीषं न विकार इत्यादि'। अक्रियमाणे पुरीषग्रहणे इष्टसिद्ध्यर्थमेव तस्येदमित्यधिकारे गोर्मयडिति सूत्रं कर्त्तव्यं ततश्चात्रापि प्रसङ्ग इत्यर्थः॥

"पिष्टाच्च"॥ 'पिष्टमयं भस्मेति'॥ पैष्टी सुरेति तु सामान्यविवक्षायां तस्येदमित्यण्, प्रदीयतां दाशरथाय मैथिलीतिवत्॥

"असंज्ञायां तिलयवाभ्याम्"॥ 'यावक इति'। यवशब्दाद्विकारेण्, तदन्ताद्यावादिभ्य इति स्वार्थे कन्॥

"नोत्वद्वर्ध्रबिल्वात्"॥ 'मौञ्जमिति'। मुञ्जशब्दात्तृणधान्यानां च द्व्यषामित्याद्युदात्तत्वादौत्सर्गिकोऽण्। 'गार्मुतमिति'। गर्मुच्छब्दः मृगोऽहतिः, ग्रोर्मुट् चेत्युतिप्रत्ययान्तत्वादन्तोदात्त इत्यनुदात्तादेश्चेत्यञ्, कथं तर्हि तस्माएतं गार्मुतं चरुं निर्वपेदित्यन्तोदात्तत्वं, सर्वविधीनां छन्दसि विकल्पितत्वादण् भविष्यति। 'वार्ध्रीति'। वर्ध्रशब्दो लघावन्तइत्याद्युदात्तस्तस्मादण्, टिड्ढाणञिति ङीप्। 'मतुब्विद्धश इत्यादि'। असति तस्मिन्वर्णग्रहणं सर्वत्र तदन्तविधिं प्रयोजयतीति तदन्तविधिः स्यात्। 'बैल्वीति'। बिल्वाद्यण्॥

"तालादिभ्योऽण्"॥ 'मयडादीनामपवाद इति'। आदिशब्देनाञो ग्रहणं, बहुवचनं तु तयोरेव प्रकृतिभेदेन बहुत्वात्, तत्र तालश्यामाकाभ्यां वृद्धत्वान्मयट् प्राप्तः, बर्हिणस्य विकारो बार्हिणं, प्राणिरजतादिभ्योऽञ्, तस्माद् ञितश्च तत्प्रत्ययादित्यञ् प्राप्तः, शेषेभ्योऽनुदात्तादिलक्षणस्य। लिशिद्रुशिभ्यामिन्द्रशब्दउपपदे मूलविभुजादित्वात्कः, अन्येषामपि दृश्यतइति दीर्घत्वं, चप् सान्त्वने, पचाद्यच्, पीयूक्षाशब्दो लघावन्तइति मध्योदात्तः, तत्र हि फिष इत्यधिकारात्प्रागेव टापः स्वरप्रवृत्तिः,

इन्द्रायुधशब्दः समासस्वरेणान्तोदात्तः । 'तालाद्धनुषीति' । अन्यत्र तालमयमित्येव भवति । अण्ग्रहणं बाधकबाधनार्थम्, अन्यथा यथाविहितमित्युच्यमाने बार्हिणशब्दाद्वृद्धलक्षणो मयट् स्यात्, वचनं तु जितश्च तत्प्रत्ययादित्यञो बाधनार्थं स्यात् ॥

"जातरूपेभ्यः परिमाणे" ॥ 'मयडादीनामपवाद इति' । आदिशब्देनाञो ग्रहणं, बहुवचनं तु पूर्ववत्, तत्र वृद्धेभ्यो हाटकादिभ्यो मयटोपवादः, तपनीयादिभ्योनुदात्तादिभ्योञः ॥

"प्राणिरजतादिभ्योञ्" ॥ 'अणादीनामिति' । आदिशब्देन मयड् गृह्यते, बहुवचनं तु पूर्ववत्, तत्राद्युदात्तेभ्यः प्राणिशब्देभ्योणोपवादो वृद्धेभ्यो मयटः, रजतादिष्वपि यदाद्युदात्तं तस्मादणोपवादः, अनुदात्तादेस्तु मयटः । 'कापोतं मायूरं तैत्तिरमिति' । तित्तिरिशब्दस्तरतेः सन्वच्चाभ्यासस्येति किप्रत्ययान्तोन्तोदात्तः, शेषौ लघावन्त इति मध्योदात्तौ । परिशिष्टमिहोदाहरणमिति चोक्तं, तस्माच्छुकबकगृध्रादय इहोदाहार्याः । शुकबकशब्दौ प्राणिनां कुपूर्वाणामित्याद्युदात्तौ, गृध्रशब्दोरन्प्रत्ययान्त आद्युदात्तः, कथं तर्हि कापोतमित्याद्युदाहृतं, सत्युदात्तार्थे प्राणिग्रहणेनुदात्तादेरपि प्राणिनः परत्वादनेनैवाञ् भवितुमर्हतीति मन्यते, आह चानुदात्तादेरञः प्राण्यञ्विप्रतिषेधे नेति, कः पुनरत्र विशेषस्तेन वा सत्यनेन वा, सापवादकः स विधिर्मयटा परेण बाध्यते, अयं पुनर्निरपवादोऽनेनैव हि परत्वान्मयड् बाध्यते, किं सिद्धं भवति, श्वाविधो विकारः शौवाविध इति सिद्धं भवति, कथं सिद्धं भवति, श्वानं विध्यतीति क्विप्, नहिवृतीति दीर्घः, ग्रहिज्यादिसम्प्रसारणं, कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वादनुदात्तादिः, तत्रानुदात्तलक्षणस्याञो बाधकं मयटं परत्वादयमञ् बाधते, द्वारादित्वाद्वृद्धिप्रतिषेध ऐजागमश्च ॥

"ञितश्च तत्प्रत्ययात्" ॥ तयोर्वाचकत्वेन यः सम्बन्धी प्रत्ययः स तत्प्रत्ययः, षष्ठीसमासः । 'विकारावयवयोरेवेति' । यदि तु ञित्प्रत्ययान्तः प्राण्योषधिवृक्षवाची सम्भवति ततोवयवेपि भवति, द्वयोः प्रकृतत्वात्, लक्ष्यमनपेक्ष्यैवमुक्तम् । ननु च पूर्वे पञ्चालाः, पटो दग्ध

इत्यवयवे समुदायशब्दो दृष्टः, विकारे च प्रकृतिशब्दः शालीन्भुङ्क्ते मुद्गैरिति, शालिविकारान्मुद्गविकारैरित्यर्थः, ततश्च देवदार्वाद्यवयवविकारवृत्तेर्देवदार्वादिशब्दात्तद्विकारावयवयोस्तेनतेनाञादयो भविष्यन्ति नार्थोनेनेत्याशङ्क्याह । 'मयटोपवाद इति' । सत्यमस्ति यथाकथंचिदिष्टसिद्धिस्तथापि वृद्धलक्षणो मयण्माभूदित्येवमर्थमेवाञ्विधेयः, अन्यथा येनैव हेतुनैतद्वाक्यं भवति दैवदारवस्य विकारः शामलस्य विकारस्तेनैव मयडपि स्यात्, विकार्यात्तेनैव हेतुना मयडपि प्राप्नोति, अनभिधानाच्च भविष्यति, तदेव तर्ह्यनभिधानं विधानेन प्रतिपाद्यते, यद्येवं तस्य विकारः, उष्ट्राद्वुञ्, औष्ट्रकञ्चर्म, तस्य विकार औष्ट्रिकोपानदिति, टिड्ढाणञिति ङीप्प्राप्नोति, न चेष्यते, एवं हि सौनागाः पठन्ति वुञश्चाञ इतः प्रसङ्ग इति, तस्मादवयवे समुदायशब्दो विकारे च प्रकृतिशब्द इति तेनतेन लक्षणेनाञादयो भविष्यन्ति, अनभिधानात्तु विकारावयवप्रत्ययान्तान्न मयड्भविष्यतीत्येतदेव साम्प्रतम् । 'बैल्वमयमिति' । ञितो यत्नेन मयटं सूत्रकारो निवर्त्तयन् अन्यतो वष्टि मयटमिति वृत्तिकृतो मतम् । भाष्यवार्त्तिककारौ पुनराहतुस्तच्चानभिधानमाश्रयितव्यम्, अभिधाने ह्यन्यतोपि मयटः प्रसङ्गो बैल्वस्य विकार इति ॥

"क्रीतवत्परिमाणात्" ॥ चरणेभ्यो धर्मवदित्यनेन तुल्यमेतत् । 'सङ्ख्या च परिमाणग्रहणेन गृह्यतइति' । चकारादुन्मानं च, परिमीयतेनेनेति परिमाणमिति यौगिकः परिमाणशब्द इत्यर्थः । तदाह । 'न रूढिपरिमाणमेवेति' । 'नैष्किक इति' । असमासे निष्कादिभ्य इति ठक् । 'शत्यः शतिक इति' । शताच्च ठन्यतावशते । 'साहस्रमिति' । शतमानविंशतिकसहस्रवसनादण् । 'वतिः सर्वसादृश्यार्थ इति' । किमेवं सति सिद्धं भवति तदाह । 'अध्यर्द्धपूर्वेत्यादि' । आदिशब्देन प्रकृतिप्रत्यययोः प्राग्वतेः सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकीति तदन्तविधेश्च परिग्रहः । एतदुक्तं भवति, याभ्यः प्रकृतिभ्यो येन विशेषणेन ये प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन तएव प्रत्यया विकारे भवन्ति । 'द्विसाहस्रमिति' । पक्षे लुक्, सङ्ख्यायाः संवत्सरसङ्ख्यस्य चेत्युत्तरपदवृद्धिः ।

'द्विनैष्किकमिति' । प्राग्वतीयस्य ठञो द्वित्रिपूर्वान्निष्कादिति पक्षे लुक्, परिमाणान्तस्येत्युत्तरपदवृद्धिः ॥

"उमोर्णयोर्वा" ॥ उमाशब्दस्तृणधान्यानां वेत्याद्युदात्तः, ऊर्णाशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ताभ्यां वुञभावे यथाक्रममणञौ ॥

"एण्या ढञ्" ॥ स्त्रीलिङ्गनिर्देशस्य प्रयोजनमाह । 'पुंसस्त्वञेव भवतीति' ॥

"गोपयसोर्यत्" ॥ 'मयड्विषये त्विति' । मयड्वैतयोरिति विहितस्य मयटो विषये ॥

"द्रोश्च" ॥ 'अञोऽपवाद इति' । ओरञित्यस्य, सूत्रप्राप्त्यभिप्रायं चैतत् । एकाचो नित्यं मयटमिच्छन्तीति मयट् त्वस्मात्प्राप्नोति । 'द्रव्यमिति' । गुणैः संद्रूयते प्राप्यतइति गुणसंद्रावः ॥

"माने वयः" ॥ मीयते येन तन्मानं प्रस्थादि ॥

"फले लुक्" ॥ 'तद्विशेष इति' । विकारावयवविशेषे, उदाहरणेषु आमलकीशब्दाद्वृद्धान्मयटो लुक्, इतरयोर्गौरादित्वान्ङीष्, ताभ्यामनुदात्तादिलक्षणस्याञः, सर्वत्र लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक्, ननु च न फलं वृक्षस्य विकारः, स हि द्विविधो भवति यो वा प्रकृतिमुपमृद्नाति खादिरं भस्मेति, यो वा प्रकृतेर्व्यपदेशान्तरं करोति खादिरः स्रुव इति, फलं तु नैवं विधमिति वृक्षे स्थितमपि काकादिवच्च तस्य विकारो नाप्यवयवोनारम्भकत्वात्, उत्पन्ने हि वृक्षे पश्चात्फलमुपजायते तत्कथं विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुग्विधीयतइत्याह । 'फलितस्येति' । फलशब्दस्तारकादिः, प्रकृतेरेवस्यान्तरं विकार इत्युक्तम्, अफलितावस्थायाश्च फलिताऽवस्थान्तरं भवत्येव, तत्र वृक्षत्वं तूभयत्रानुवर्त्तते, सर्वत्र चोत्तरावस्था विकारः, सर्वश्चावयवः स्वोत्पत्तेः प्राङ्नोपस्थितो नास्यारम्भकः, यथा शृङ्गदन्तादिरपि च गवादेरवयवो भवति तदेतत्फलेऽपि समानं, पल्लवशब्दोर्द्धर्चादिः, फले लुग्विधानमनर्थकं प्रकृत्यन्तरत्वात्, आमलकादिशब्दः फले वर्त्तते न यौगिक आमलक्याः फलमिति, यथा नामलकयोगाद्वृक्षे आमलकशब्दः, आमलकफलस्येयमामलकीति, यथाङ्गादि

शब्दः क्षत्रिये जनपदे च, प्रत्ययनिवृत्त्यर्थं तु यथैतद्वाक्यं भवति आमलक्या विकारः कुवल्या विकार इति तथा प्रत्ययोऽपि स्यात् ॥

"प्लक्षादिभ्योऽण्" ॥ 'अञोऽपवाद इति'। शिंशपाक्षतुशब्दाभ्यामुवर्णान्तलक्षणस्य, शेषेभ्यस्त्वनुदात्तलक्षणस्य, तत्र प्लक्षशब्दः फिषित्यन्तोदात्तः, फिषिति प्रातिपदिकस्य नाम,न्यग्रोधशब्दो लघावन्तइति मध्योदात्तः, अश्वत्थशब्दो घृतादित्वादन्तोदात्तः, इङ्गुदीबृहतीशब्दौ गौरादिङीषन्तौ । 'विधानसामर्थ्यादिति' । यद्यस्य लुक् स्याद्विधानमनर्थकं स्यात्, नह्यणोऽञो वा लुकि कृते कश्चिद्विशेषः । 'नैयग्रोधमिति' । न्यग्रोधस्य च केवलस्येत्यैजागमः ॥

"जम्ब्वा वा" अणस्तु भवत्येव, नह्यञो विधानसामर्थ्यं फलादन्यत्र श्रवणात् । 'जम्बूनीति' । फलस्याभिधेयत्वान्नपुंसकह्रस्वे जश्शसोः शिः, नुम्, सर्वनामस्थाने चेति दीर्घः ॥

"लुप् च" ॥ 'युक्तवद्भावे विशेष इति' । लुपि हि सति लुपि युक्तवद्व्यक्तिवचने इति प्रकृत्यर्थगते लिङ्गवचने भवतः, लुकि त्वभिधेयवल्लिङ्गवचने स्याताम् । 'फलपाकशुषामिति' । फलपाकेन शुष्यन्तीति फलपाकशुषः । 'व्रीहयो मुद्गा इति' । विल्वाद्यणो लुक्, यवमाषतिलशब्दास्तृणधान्यानां च द्व्यषामित्याद्युदात्तास्तेभ्य औत्सर्गिकस्याणो लुक्, मल्लिकाशब्दो मादीनामिति मध्योदात्तः, अस्यार्थः । अत्र द्वितीयः प्रागीषादिति त्र्यषामिति वर्त्तते, मकारादीनां त्र्यषां द्वितीयमक्षरमुदात्तं भवति, नवमालिकाशब्दो लघावन्तइति मध्योदात्तो जातिशब्दः, विदारीबृहतीशब्दौ गौरादिङीषन्तौ, अंशुशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, ततो मतुप्, ह्रस्वनुड्भ्यां मतुबिति मतुबाद्युदात्तः, ङीबनुदात्तः, तदेवमंशुमतीशब्दे मतुबकार उदात्तः । 'पाटलानीति' । बिल्वादित्वादण्, साल्वशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'क्वचिदन्यदपि भवतीति' । लुपोऽन्यदपि क्वचित्कार्यं भवति, तत्पुनर्लुग्लुपोरभावश्च, कदम्बमित्यादावनुदात्तादिलक्षणस्याञो लुक्, कदम्बादयः शब्दा लघावन्तइति मध्योदात्ताः । 'बैल्वानीति' । अत्रोभयाभावः, बिल्वाद्यण् ॥

"हरीतक्यादिभ्यश्च" ॥ हरीतक्यादिषु द्राक्षाप्रभृतिभ्यो मयटो लुप्, उदात्तादिभ्योऽण:, अनुदात्तादिभ्योऽञः ॥

"कंसीयपरशव्ययोर्यञञौ लुक् च" ॥ 'प्राक् क्रीताच्छेन कंसीय इति' । प्राक् क्रीताच्छ इत्यधिकारे तस्मै हितमितिच्छप्रत्ययेन कंसीयशब्दो व्युत्पादित इत्यर्थः । एतेनोगवादिभ्यो यता परशव्यशब्द इति व्याख्यातम् । 'तत्सन्नियोगेन कंसीयपरशव्ययोर्लुग्भवतीति' । प्रत्ययादर्शनस्य लुक्संज्ञाविधानात्तदवयवयोः प्रत्यययोर्लुग्भवतीत्यर्थः । अथ वृतृहनिकषिकमिभ्यः स इति सः, कंसशब्दे सप्रत्ययो, यश्च परान् शृणोतीति परशुः, आङ्परयोः खनिशृभ्यां णिच्चेति कुप्रत्ययस्तयोर्लुक् कस्मान्न भवति, तत्राह । 'प्रातिपदिकाधिकारादिति' । प्रातिपदिकाधिकारे हि ततः परयोश्छयतोर्लुग्भवति न धातुप्रत्ययस्य, आह, ङ्याप्प्रातिपदिकग्रहणमङ्गपदसंज्ञार्थं यच्छयोश्च लुगर्थमिति, ननु चातः कृकमिकंसेत्यत्र कंसग्रहणं लिङ्गं नावश्यमुणादिषु व्युत्पत्तिकार्यं भवतीति, तेनोकारसकारयोर्लुग्न भविष्यति, सत्यं, वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणप्रत्ययविधौ तत्संप्रत्ययार्थमवश्यकर्तव्यस्य ङ्याप्प्रातिपदिकग्रहणस्यानुषङ्गिकं प्रयोजनं दर्शितम्, अत एव च ङ्याप्प्रातिपदिकादित्यत्र नेदं वृत्तिकृता दर्शितम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य तृतीयश्चरणः ॥

"प्राग्वहतेष्ठक्" ॥ 'तदाहेति' । वाक्यादेतत्प्रत्ययविधानमिति वक्ष्यति, न च वाक्याद् द्वितीया सम्भवत्यप्रातिपदिकत्वात्, तेन तदिति कर्ममात्रं निर्दिश्यते न तु द्वितीयासमर्थविभक्तिः । 'माशब्द इत्याहेति' । शब्दो माकारीत्याहेत्यर्थः । संसर्गरूपस्य वाक्यार्थस्येति करणेन प्रत्यवमर्शे सति वचनक्रियां प्रति कर्मत्वं संभवति नान्यथेति मत्वैष विग्रहः । 'वाक्यादेतत्प्रत्ययविधानमिति' । एतच्चाहौ प्रभूतादिभ्यः पुनर्वचनाल्लभ्यते, अन्यथा प्रभूतादयो माशब्दादय एव भवन्तु किं पृथग्वचनेन । 'आहाविति' । आहेति पदे प्रकृतिभागस्यागन्तुकेनेकारेणेदम

नुकरणं, तत्र शब्दे कार्यस्यासम्भवादर्थप्रत्ययविधिः । 'क्रियाविशेषणाद्विति' । तदन्ताभिधायिन इत्यर्थः । 'पृच्छतावविति' । तिङन्तानुकरणमेतत् । एवं गच्छतावविति, तिङन्तार्थे तु प्रत्ययः । 'सुस्नातं पृच्छतीति' । सुस्नातं भवता सुस्नातो भवानित्येवं वा पृच्छतीत्यर्थः । 'सौखरात्रिक इति' । सुखरात्रिं पृच्छति, एवं यः पृच्छति स एवमुच्यते, एतेन सौखशायनिको व्याख्यातः, अनुशतिकादित्वादुभयपदवृद्धिः । 'गौरुतल्पिक इति' । तल्पशब्देन भार्या लक्ष्यते ॥

"तेन दीव्यति खनति जयति जितम्" ॥ 'सर्वत्र करणे तृतीयेति' । दीव्यत्यादावभिहितत्वात्कर्त्तरि तृतीया नोपपद्यतइति तत्साहचर्याज्जितमित्यनेनापि योगे करणएव तृतीयेति सर्वशब्दार्थः, तेन देवदत्तेन जितमित्यत्र न भवति, हेतुतृतीया तु नाशङ्किता, ऽनभिधानात्, नहि हेतुतृतीयान्तादुत्पद्यमानेन ठका विग्रहवाक्यार्थस्याभिधानमस्ति । 'प्रत्ययार्थइति' । निर्द्धारणएषा सप्तमी, सामान्यापेक्षमेकवचनम्, इह दीव्यत्यादौ तिपो बहवोऽर्थाः, एकत्वसङ्ख्या वर्त्तमानकाले-युष्मदस्मद्व्यतिरेक इति, तेषु मध्यइत्यर्थः । तत्रैव दर्शितं । 'सङ्ख्याकालयोरविवक्षेति' । नान्तरीयकत्वात्, अवश्यं हि यया कया चित्सङ्ख्यया येन केन चित्कालेन निर्देशइति तयोरुपादानं न तु तयोर्विवक्षा, तत आक्षिकौ आक्षिका इति द्विबह्वोरपि भवति, अक्षैरदीव्यदित्यादौ कालान्तरे चाक्षिक इति भवति, न्यायस्य तुल्यत्वा, त्पुरुषस्याप्यविवक्षा, तेनाक्षिकस्त्वमाक्षिकोऽहमित्यत्रापि भवति, यथैव तर्हि सङ्ख्याकालपुरुषाणामविवक्षा तथा कर्त्तुरपि प्राप्नोति, एकप्रत्ययवाच्यत्वात्, नैष दोषः कर्त्तुरविवक्षायामाख्यातोपादानमकिंचित्करं स्यात्, विपर्ययस्तु न भवति कर्त्तुरविवक्षा कालादीनां विवक्षेति, कर्त्तुः प्रधानत्वात्, सङ्ख्यादिविशिष्टो हि कर्त्ताऽऽख्यातानां प्रधानभूतोऽर्थस्तेन स तावद्विवक्ष्यते, इतरेषां नान्तरीयकत्वादविवक्षा, किं च साधनस्याप्यविवक्षायां जितमित्यस्योपादानमनर्थं स्यात्, इहाख्यातेषु क्रिया प्रधानभूता गुणभूतः कर्त्ता, अत एव किं करोति देवदत्त इति

क्रियाप्रश्ने पचतीत्याख्यातेनोत्तरं दीयते, न तु कृदन्तेन पाचक इति, तस्य सत्त्वप्रधानत्वात्, किं च यदि कृदन्तेष्विवाख्यातेष्वपि कर्ता प्रधानभूतः स्याद् यथा पाचकस्यापत्यमित्यपत्यादिभिर्योगो भवति तथाऽऽख्यातवाच्यस्यापि स्यात् पचत्ययमिति, क्रियावेशः स्याद् यथा पाचकस्तिष्ठतीति, तस्मात्क्रियाप्रधानमाख्यातं ततश्च तदर्थे विधीयमानः प्रत्ययोपि क्रियाप्रधानः स्यादिति तदन्तस्यापत्यादिभिर्योगः क्रियावेशश्च न स्यात्, आक्षिकस्यापत्यमाक्षिकं पश्येति, तत्राह । 'क्रियाप्रधानत्वेपि चाख्यातस्येति' । आख्यायतेनेन क्रिया प्रधानभूतेत्याख्यातस्तिङन्तः, कृत्यल्युटो बहुलमिति करणे क्तः, स्वनिकायप्रसिद्धिरेषा । 'स्वभावादिति' । यथा तेनैकदिक्,तसिश्चेत्येतस्मिन्नर्थे विधीयमानयोरण्तसोरसत्त्वभूतार्थाभिधायित्वं, विपर्ययश्च, सौदामनी विद्युत्सुदामतो विद्युदिति, तथात्रापि, नहि स्वभावः पर्यनुयोगमर्हति ॥

"संस्कृतम्" ॥ 'योगविभाग उत्तरार्थ इति' । उत्तरोपवादः संस्कृतएव यथा स्यात् ॥

"कुलत्थकोपधादण्" ॥ कुले तिष्ठति कुलत्थः, अस्मादेव निपातनात्सकारस्य तकारः, के चित्पुनः सकारमेवाधीयते ॥

"नौद्व्यचष्ठन्" ॥ इह ठगधिकारे सूत्रे क्व चित्प्रत्ययस्यानुबन्धो ङीषर्थः किं सांहितिकः, किं वानुबन्धइति तत्र सन्देहे विषयपरिगणनं करिष्यञ्श्लोकवार्त्तिककारः सर्वानेव षितः परिगणयति । 'आकर्षादिति' । यदि तु यत्र सन्देहस्तानेवोपादायैतावन्तष्ठगधिकारे षित इत्युच्येत तदा आकर्षादिषु प्रत्ययस्याषित्त्वमनार्षमाशङ्क्येत । 'कुसीदसूत्राादिति' । कुसीदादिकं सूत्रं यस्य तत्कुसीदसूत्रं कुसीदशब्दश्च, दशैकादशशब्दश्च, ननु सप्तैते भवन्ति, कुसीदादिसूत्रेण द्वयोः षितोर्विधानादित्यत आह । 'विधिवाक्यापेक्षं च षट्त्वमिति' । सप्तानां प्रत्ययानां विधिवाक्यापेक्षमौपचारिकं षट्त्वमाश्रित्य षितः षडेतइत्युक्तम् ॥

"आकर्षात् ष्ठल्" ॥ 'आकर्षेति'। पुंसि सञ्ज्ञायां घः प्रायेणेति अधिकरणे घः ॥

"पर्पादिभ्यः ष्ठन्" ॥ पर्पादिषु पादः पदिति पठ्यते, पादाभ्यां चरति पदिकः पद्यत्यतदर्थइत्यत्र वक्ष्यति पद्भाव इके चरतावुपसङ्ख्यानमिति, सोस्यैव प्रपञ्चार्थः ॥

"श्वगणाट्ठञ् च" ॥ 'श्वागणिकइति'। ननु च श्वशब्दो द्वारादिषु पठ्यते तदादिविधिश्च तत्रेष्यते तत्कथं श्वागणिक इति, तत्राह। 'श्वादेरिञीत्यत्रेति' ॥

"वेतनादिभ्यो जीवति" ॥ 'धनुर्दण्डग्रहणं सङ्घातविगृहीतार्थमिति'। तन्त्रावृत्येकशेषाणामन्यतमाश्रयणात्।

वस्नक्रयविक्रयाट्ठन्" ॥ वसेर्वस्नं मूल्यम्। 'क्रयविक्रयग्रहणं सङ्घातविगृहीतार्थमिति'। उक्तोत्र हेतुः। क्रयविक्रयेणेति समाहारद्वन्द्वः ॥

"आयुधाच्छ च" ॥ आयुध्यतेनेनेत्यायुधं घञर्थे कविधानमिति कप्रत्ययः ॥

"हरत्युत्सङ्गादिभ्यः" ॥ हरति नयत्युपादत्ते वा ॥

"भस्त्रादिभ्यः ष्ठन्" ॥ भस्त्रं चर्मविकारः, येन लोहादि ध्मायते येन वा धान्यादिकं नीयते, हुयामाश्रुभसिभ्यस्त्रन्निति करणे त्रन्। शीर्षभारः शीर्षभारइति पठ्यते, निपातनाच्छीर्षभावः सप्तमीसमासश्च, तत्पुरुषे कृति बहुलमिति सप्तम्या अलुक् ॥

"विभाषा विवधवीवधात्" ॥ 'पर्याहारे चेति'। परित आह्रियतेनेन तण्डुलादिकोर्थ इति पर्याहारः, उभयतो बद्धशिक्यांसवाह्यः काष्ठविशेष उच्यते, वीवधशब्दो वार्तिके दर्शनात्सूत्रे प्रक्षिप्तः ॥

"अण् कुटिलिकायाः" ॥ कुटिलव्याधानामुपरमणं कुटिलिका, सञ्ज्ञायां कन् ॥

"त्रेर्मम्नित्यम्" ॥ 'ड्वितः क्त्रिरित्ययं त्रिशब्दो गृह्यतइति'। सङ्ख्यावचनस्त्वनभिधानान्न गृह्यते। 'उप्त्रिममिति'। वच्यादिसूत्रेण

संप्रसारणम् । 'नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थमिति' । प्रत्ययरहितस्य त्र्यन्तस्य प्रयोगः स्वातन्त्र्यं, स्वातन्त्र्यनिवृत्तौ सत्यां यो गुणस्तं दर्शयति । 'त्र्यन्तं नित्यं मप्प्रत्ययान्तमेव भवतीति' । एवकारव्यवच्छेद्यं दर्शयति । 'विषयान्तरे न प्रयोक्तव्यमिति' । ननु विभाषया वाक्ये प्रसक्ते नित्यग्रहणं क्रियमाणं निर्वृत्ताधिकारे तद्विषयमेव वाक्यं निवर्त्तयितुमर्हति पक्त्रिणा निर्वृत्तमिति, यथा अन उपधालोपिनोन्यतरस्यां, नित्यं सञ्ज्ञाच्छन्दसोरिति, ततश्च विषयान्तरगतत्र्यन्तस्य स्वातन्त्र्यं स्यादेव कृत्रिमहंत्सुविहितमिति, एवं मन्यते, योगविभागोत्र कर्त्तव्यः, त्रेर्मब् भवति, निर्वृत्तइत्येको योगः, ततो नित्यम्, अत्र त्रेर्मबित्येवापेक्ष्यते न निर्वृत्तइति, योगविभागसामर्थ्यात्, तेन सर्वविषयस्वातन्त्र्यस्य नित्यग्रहणेन निवृत्तिः क्रियतइति । नन्वेवमपि नित्यमित्यत्र निर्वृत्तमित्यस्यानपेक्षणात्स्वातन्त्र्यान्तरे नित्यमुपाधिः प्राप्नोति, सत्यम्, अनभिधानात्तु तथानाश्रीयते, 'भावप्रत्ययान्तादिमब् वक्तव्यइति'। तेन निर्वृत्तमित्येतस्मिन्नर्थे । 'पाकेन निर्वृत्तं पाकिममिति' । एवं च त्र्यन्तादपि भावाभिधायिनइमपिङ्कृते यस्येति लोपे च कृत्रिममित्यादिसिद्धं भवति, स्वरेपि नास्ति विशेषः, उदात्तनिवृत्तिस्वरेणैवोदात्तत्वं, सूत्रारम्भस्तु नित्यग्रहणेन स्वातन्त्र्यं निवर्त्तयिष्यामीत्येवमर्थो वेदितव्यः ॥

"अपमित्ययाचिताभ्यां कक्कनौ" ॥ 'अपमित्येति' । उदीचां माङो व्यतिहारइति क्त्वाप्रत्यये ऽपशब्देन समासे क्त्वो ल्यप्, मयतेरिदन्यतरस्यामितीत्वं, क्त्वातोसुन्कसुन इत्यव्ययसञ्ज्ञा, तेन नात्र तृतीयासमर्थात्प्रत्ययः ॥

"संसृष्टे" ॥ ननु यद्येन संसृष्टं तत्तेन संस्कृतं भवति, ततश्च संस्कृतमित्येव संसृष्टेपि प्रत्ययः सिद्धः, न सिध्यति, सत उत्कर्षाधानं संस्कारः, एकीभावस्तु संसर्गः, न च यत्रासौ तत्रावश्यमुत्कर्षोस्ति, अशुचिद्रव्यसंसर्गे हि प्रत्युतापकर्ष एव भवति, तस्मात्संसृष्टइति वक्तव्यं, यद्यस्य निबन्धनमस्त्येतदेवास्तु माभूत्संस्कृतमित्येतत्, तदवश्यं कर्त्तव्यम्, इहापि यथा स्यात् विद्यया संस्कृतो वैद्यक इति, नह्यत्र संसर्गोस्ति

मूर्त्तिधर्मत्वात्, किं च कुलत्थकोपधादण् संस्कृतएव यथा स्यात्संसृष्टे मा भूदित्येवमर्थं संस्कृतमित्येतद्भवतीति वक्तव्यम् ॥

"चूर्णादिनिः" ॥ चूर्णेन ये संसृष्टास्तेषां चूर्णमस्तीति मत्वर्थीयेनैवेनिना सिद्धं, सत्यं, तद्रूपविवक्षायां सिद्धं, संसर्गविवक्षायां तु ठक् प्राप्नोति, अनभिधानं तु दुर्ज्ञानम् ॥

"लवणाल्लुक्" ॥ 'लवणद्रव्यवाचीत्यादि'। लवणशब्दोयमस्त्येव गुणवचनः षण्णां रसानामन्यतमस्य वाचकः, अस्ति च द्रव्यवचनो यः सैन्धवादिषु वर्त्तते, तत्र यो गुणवचनः स न लुकं प्रयोजयति मधुरादिशब्दवदभेदोपचारादेव द्रव्ये वृत्तिसिद्धेः, द्रव्यशब्दस्तु सोयमित्यभिसम्बन्धाद् द्रव्ये वर्त्तमानः, यद्यपि प्रष्ठी प्रचरी यष्टीः प्रवेशयेत्यादौ द्रव्यशब्दस्यापि क्वचिदभेदोपचारो दृष्टस्तथापि भेदविवक्षायां तस्योपि दृश्यते प्रष्ठस्येयं प्राष्ठी यष्टिमतः पुरुषानिति । तस्माद् द्रव्यवाच्येव लवणशब्दो लुकं प्रयोजयति, स च प्रयोजयत्येव ॥

"व्यञ्जनैरुपसिक्ते" ॥ ओदनादिषु रसो येन व्यज्यते तद्व्यञ्जनं, बहुवचननिर्द्देशः स्वरूपविधिनिरासार्थः, उपसिक्तः सेचनेन मृदूकृतः, इह यद्येनोपसिक्तं तत्तेन संसृष्टं भवति तत्र संसृष्टइत्येव सिद्धे नियमार्थं वचनं, व्यञ्जनेभ्य उपसिक्तएव संसृष्टे यथा स्यात्संसृष्टमात्रे माभूत्, दध्ना संसृष्टा स्थालीति ॥

"तत्प्रत्यनुपूर्वमीपलोमकूलम्" ॥ 'क्रियाविशेषणमित्यादि'। आख्यातं हि धात्वर्थस्य कर्त्तव्यतामाचष्टे वर्त्तते वर्त्तनं करोति, सुप्यते स्वापः क्रियते, शोभनमोदनं पच्यते ओदनकर्मकः पाकः शोभनः क्रियतइति, पचिधात्वर्थः कर्त्तव्यएव सम्बध्यमानः कर्म संपद्यते तस्य यत्समानाधिकरणं विशेषणं तदपि कर्मैव भवति । 'प्रातीपिक आन्वीपिक इति'। प्रतिगता आपोऽस्मिन्निति बहुव्रीहिः, ऋक्पूरब्धूरित्यकारः समासान्तः, द्व्यन्तरुपसर्गेभ्योप ईदितीत्वं, व्युत्पत्तिमात्रं चैतत्, प्रतिकूलानुकूलपर्यायौ त्वेतौ, ऊदनोर्द्देशइत्यूत्वमत्र न भवति अदेशत्वात्, देशत्वे क्रियाविशेषणत्वासम्भवात्, सूत्रे ईपशब्दस्य निर्द्देशात् । 'प्रातिलोमिक आनु-

लोमिक इति'। पूर्ववद्बहुव्रीहिः, अच् प्रत्यन्ववपूर्वादित्यच् समासान्तः, अत्रापि व्युत्पत्तिमात्रमर्थस्तु पूर्वोक्त एव। 'प्रातिकूलिक इति'। पूर्ववद्बहुव्रीहिः, अत्रापि कूलार्थो नास्ति प्रतिसरणं चैतयोरर्थः॥

"परिमुखं च"॥ 'पारिमुखिक इति'। परिरिह वर्त्तते तस्य चापपरीवर्जनइति कर्मप्रवचनीयसञ्ज्ञा, पञ्चम्यपाङ्परिभिरिति पञ्चमी, अपपरिबहिरञ्चवः पञ्चम्या इत्यव्ययीभावः, अनेन ठक्, स्वामिनो मुखं वर्जयित्वा यः सेवको वर्त्तते स पारिमुखिकः, सर्वतो भावे वा परिशब्दः परितो मुखं प्रादिसमासः, यतो यतः स्वामिनो मुखं ततस्ततो वर्त्तत इत्यर्थः, एवं पारिपार्श्विकः॥

"प्रयच्छति गर्ह्यम्"॥ 'द्विगुणार्थं द्विगुणमिति'। द्वैगुणिक उत्तमर्ण उच्यते, न चासौ द्विगुणं प्रयच्छति किं तर्ह्येकगुणं दत्त्वा द्विगुणं गृह्णाति अत एव तद्गर्ह्यं भवतीति, तस्माद् द्विगुणार्थे द्विगुणशब्दो वर्त्तयितव्यः। 'वार्द्धुषिक इति'। वृद्ध्यर्थे धने वृद्धिशब्दः। 'प्रकृत्यन्तरमेवेति'। एतच्च वार्द्धुषिक इत्येतद्वृत्तिविषयमेव, नियतविषया अपि हि शब्दा भवन्ति, वृद्धिशब्दादनभिधानाच्चैव भविष्यति, तेन वार्द्धिक इत्यनिष्टप्रसङ्गो नोद्भावनीयः, अथ कथं वार्द्धुदासमकम्पत ववा न्यस्य च वार्द्धुषेरिति, स्वच्छन्दवाच ऋषयः॥

"कुसीददशैकादशात् ष्ठन्ष्ठचौ"॥ 'तदर्थं द्रव्यं कुसीदमिति'। अत्रापि कुसीदिक इत्युत्तमर्णस्याभिधानमिष्यते, न चोत्तमर्णः कुसीदं प्रयच्छति किं तर्ह्यधमर्णः, न च तस्य वृद्धिप्रदानं गर्ह्यं तस्मात्तादर्थ्यात्ताच्छब्द्यमिति भावः, एकादशार्थं दश दशैकादशशब्देनोच्यन्तइति तत्रैकादशशब्दस्यापि तदर्थेषु दशस्वेव वृत्तेः सामानाधिकरण्ये सति विशेषणसमासः, संख्याया अल्पीयस्या इति दशशब्दस्य पूर्वनिपातः। दशैकादशादिति निर्द्देशादकारः समासान्तः, एवं वाक्यमप्यकारान्तेनैव भवति दशैकादशान्प्रयच्छतीति॥

"रक्षति"॥ 'सामाजिक इति' समाजः समूहः समजन्त्यस्मिन्निति कृत्वा, एवं सांनिवेशः॥

"शब्ददर्दुरं करोति" ॥ 'शब्दं करोतीति'। करोतिरिह ज्ञाने वर्तते, प्रकृत्यादिविभागेन जानातीत्यर्थः, एतच्चाभिधानस्वाभाव्याल्लभ्यते, इह न भवति शब्दं करोति खर इति, पात्रविशेषवाची दर्दुरशब्दः, अनुकरणशब्द इत्यन्ये ॥

"पक्षिमत्स्यमृगान्हन्ति" ॥ 'स्वरूपस्य तद्विशेषाणां पर्यायाणां च ग्रहणमिष्यतइति'। अत्र हेतुः स्वंरूपमित्यत्रैवोक्तः। 'मात्स्यिक इति'। सूर्यतिष्येति लोपो न भवति मत्स्यस्य ड्यामितिपरिगणनात्। 'हारिणिकः सौकरिक इति'। अत्र मृगपर्यायस्योदाहरणं किमिति न प्रदर्शितं, यथा पूर्वयोः द्वावपि ह्येतस्माद्विशेषौ, आरण्याश्चतुष्पादो मृगाः उच्यते, हरिणपर्यायोपि मृगशब्दोस्ति तदपेक्षया हारिणिक इति पर्यायोदाहरणम् ॥

"परिपन्थं च तिष्ठति" ॥ 'तदिति द्वितीयासमर्थादिति'। परिपन्थशब्दः परिमुखशब्दवदव्ययीभावस्तत्पुरुषो वा, तत्राप्यव्ययीभावपक्षे क्रियाविशेषणात्तिष्ठतेरकर्मकत्वेपि परिपन्थस्य कर्मत्वं, तत्पुरुषे तु परितः पन्थाः परिपन्थइति कालभावाध्वगन्तव्या इतिवचनात्कर्म, तदित्यधिकारसामर्थ्यादित्यन्ये। 'पारिपन्थिकश्चोर इति'। यः पन्थानं वर्जयित्वा तिष्ठति यो वा पन्थानं व्याप्य तिष्ठति स एवमुच्यते। 'लौकिकवाक्यप्रदर्शनार्थमिति'। परिपन्थं तिष्ठतीत्येतल्लौकिकवाक्यं तस्य प्रदर्शनार्थं द्वितीयोच्चारणम्' अथैवमर्थे द्वितीयोच्चारणे किं सिद्धं भवतीत्याह। 'परिपथपर्याय इत्यादि'। किमेतस्य ज्ञापने प्रयोजनमित्याह। स विषयान्तरेपीति। असति तु ज्ञापने प्रत्ययसंनियोगेन परिपन्थशब्दस्य निपातनं विज्ञायेत ततश्च ततोन्यत्र प्रयोगो न स्यात् ॥

"माथोत्तरपदपदव्यनुपदं धावति" ॥ 'माथशब्दः पथिपर्यायइति'। मथ्यते प्रणाद्यते गन्तृभिरिति कृत्वा, दण्डाकारो माथो दण्डमाथः ॥

"आक्रन्दाट्ठञ्च" ॥ 'आक्रन्दो देश इति,। दुःखितानां रोदन-

स्थानमार्त्तायनमुच्यते, आर्त्तैरीयते प्राप्यतइति कृत्वा, आर्त्तायनमार्त्तानां त्राता आक्रन्द इत्युच्यते, आक्रन्द्यते आर्त्तैराहूयतइति कृत्वा ॥

"पदोत्तरपदं गृह्णाति" ॥ पदग्रहणेन स्वरूपं गृह्यते न सुप्तिङन्तमुत्तरपदस्य पदत्वाव्यभिचाराद्, अत एवाह । 'पदशब्द उत्तरपदं यस्येति' ॥

"प्रतिकण्ठार्थललामं च" ॥ कण्ठं कण्ठं प्रति प्रतिकण्ठं, यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः, आभिमुख्ये वा, लक्षणेनाभिप्रती आभिमुख्यंइति, यस्तु प्रतिगतः कण्ठं प्रतिकण्ठ इति प्रादिसमासस्तस्य ग्रहणं न भवत्यनभिधानात् ॥

"धर्मं चरति" ॥ 'अधर्माच्चेति वक्तव्यमिति' । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधाद्वचनम् । 'आधर्मिक इति' । नञत्र विरोधिवचनः, पापाचार इत्यर्थः ॥

"प्रतिपथमेति ठंश्च" ॥ 'प्रतिपथमिति' । पूर्ववद्वीप्सायामव्ययीभावः, ऋक्पूरब्धूरित्यकारः समासान्तः ॥

"समवायान् समवैति" ॥ 'समवायः समूह उच्यतइति' । समवयन्ति तस्मिन्निति कृत्वा । 'न संप्रधारणेति' । समयपूर्वस्येणः सम्प्रधारणायामपि प्रयोगोस्तीति मन्यते । 'समागत्यतदेकदेशीभवतीत्यर्थ इति' । तत्र गुणभूतसमागमापेक्षया समवायमिति द्वितीयानिर्द्देशः, लोके तु प्रायेण सप्तमी प्रयुज्यते द्रव्ये गुणाः समवयन्तीति ॥

"परिषदोण्यः" ॥ परितः सीदन्त्यस्यामिति परिषत्, सम्पदादित्वादधिकरणे क्विप्, सदिरप्रतेरिति षत्वम् ॥

"सञ्ज्ञायां ललाटकुक्कुट्यौ पश्यति" ॥ सञ्ज्ञानं सञ्ज्ञा प्रतीतिः, प्रसिद्धिरित्यर्थः । 'अभिधेयनियमार्थमिति' । अभिधेये सेवकविशेषे भिक्षुविशेषे च नियमस्तत्रैव वृत्तिर्यथा स्यादित्येवमर्थमित्यर्थः । 'न रूढ्यर्थमिति' । लालाटिककौक्कुटिकशब्दयोर्डित्थादिवदरूढत्वात् तद्विद्योगेन वर्त्ततेयावद्योगे च वर्त्तते, योगेपि ललाटकुक्कुटीदर्शनमात्रेण

ठञ् न भवतीत्येतावत्सञ्ज्ञाग्रहणेन प्रसिद्ध्युपसंग्रहार्थं न क्रियते, यादृशस्तु योगोऽत्र विवक्षितस्तं दर्शयति । 'सर्वावयवेभ्यइत्यादि' । अनुपश्लेषस्य विवरणं कार्येष्वनुपस्थायित्वमिति, दूरे स्थितो ललाटमेव पश्यति न पुनः कार्येषूपतिष्ठतइत्यर्थः । 'कुक्कुटीपातो लक्ष्यतइति' । यावति देशे कुक्कुटी पतति यावन्तं देशं समतीत्य निपतितुं समर्था स देशो लक्ष्यतइत्यर्थः । अनेनापि प्रकारेण देशस्याल्पत्वं लक्ष्यते, कुक्कुटी पततु मा वा ऽपतदित्याह । 'देशस्याल्पतेति' । एतदेव स्पष्टयति । 'यो हि भिक्षुरिति' । भिक्षुःसन्यासी ॥

"तस्य धर्म्यम्" ॥ धर्मानुवृत्त आचारस्तेनानपेतं धर्म्यं धर्मपथ्यर्थन्यायादनपेतइतिवचनात् । 'दौवारिकमिति' । द्वारादीनां चेति वृद्धिप्रतिषेध ऐजागमश्च ॥

"ऋतोऽञ्" ॥ 'होतुर्धर्म्यं हौत्रमिति' । होतृशब्दस्य महिष्यादिषु पाठादपपाठोऽयं, पोतुर्धर्म्यमिति तु पाठः, अपर आह । यजमानसाहचर्यादृत्विग्वचनस्य होतृशब्दस्य महिष्यादिषु पाठः, अयं तु क्रियाशब्द उदाहृत इति । 'नराच्चेति वक्तव्यमिति' । नृशब्दात्सूत्रेणैवाञि नारमिति सिद्धे नरशब्दाट्ठको निवृत्त्यर्थं वचनमनभिधानं तु दुर्ज्ञानम् ॥

"अवक्रयः" ॥ 'अवक्रीयतेनेनेत्यवक्रय इति' । क्रयो नाम स्वद्रव्यत्यागेन परद्रव्यस्वीकरणं, तस्यावमत्वमवशब्दोद्योतयति, वाणिज्यार्थं तैलधान्यादिकं देशान्तरं नयता ऽस्मिन् शुल्कस्थाने प्रतिभारमेतावद्देयमिति तद्देशाधिपतिना यत्कल्पितं सोवक्रयः पिण्डक इति चोच्यते, तत्र स्वद्रव्यमेव दत्वा स्वद्रव्यमेव स्वीक्रियतइत्ययमवक्रयो भवति, नतु मुख्यः । 'नन्वित्यादि' । अवक्रयस्याप्यनादिप्रवृत्तत्वादिति भावः । 'लोकपीडयेति' । अर्थलोभेन धर्मातिक्रमेण धर्मापेतत्वं दर्शयति ॥

"तदस्य पण्यम्" ॥ 'पण्यमितिविशेषणमित्यादि' । इह यो विशेषणमुपाधिर्वोपादीयते द्योत्ये तस्मिंस्तेन भवितव्यं,तद्यथा सास्य

देवता, इन्द्रो देवताऽस्य ऐन्द्रः स्थालीपाक इति देवतात्वं वृत्तावन्तर्भवति, तद्वदत्रापि पण्यत्वमन्तर्भवतीति नात्रापूर्वं किं चित् ॥

"किशरादिभ्यष्ठक्" ॥ किशरादयो गन्धविशेषवचनास्तद्वति वर्तन्ते, गन्धान्पिनष्टीति यथा ॥

"शलालुनोन्यतरस्याम्" ॥ 'शलालुक इति'। इसुसुक्तान्तात्कः ॥

"शिल्पम्" ॥ 'कौशलमिति'। क्रियाभ्यासपूर्वको ज्ञानविशेषः। 'मृदङ्गवादनं शिल्पमस्येति'। मृदङ्गो वाद्यते येन तन्मृदङ्गवादनं शिल्पं, भावसाधनस्य गौणं सामानाधिकरण्यं, मृदङ्गवादनविषयं शिल्पमस्येत्यर्थः। 'मार्द्दङ्गिक इति'। ननु मृदङ्गवादनं शिल्पमस्येति विग्रहः कृतस्ततश्च मार्दङ्गवादनिक इति भवितव्यं तत्राह। 'मृदङ्गेत्यादि'। मृदङ्गवादनशब्दात्तु प्रत्ययो न भवत्यनभिधानात्, किं तूपचरितवृत्तेरपि मृदङ्गशब्दादेव भवति, अत एवानभिधानान्मृदङ्गनिष्पादनं शिल्पमस्य मार्द्दङ्गिकः कुम्भकार इत्यत्र न भवति ॥

"मड्डुकझर्झरादणन्यतरस्याम्" ॥ अयमेव निर्द्देशो ज्ञापयति तद्वादनवृत्तिभ्यो मृदङ्गादिभ्यः प्रत्यय इति, नहि मुख्यमड्डुकझर्झरयोः शिल्पेन सामानाधिकरण्यमुपपद्यते ॥

"प्रहरणम्" ॥ प्रहरणमायुधं प्रह्रियतेनेनेति कृत्वा। 'धानुष्क इति'। पूर्ववत्कादेशः, इणः ष इति विसर्जनीयस्य षत्वम् ॥

"परश्वधाट्ठञ्च" ॥ परश्वधः परशुः ॥

"शक्तियष्ट्योरीकक्" ॥ शक्यतेनया प्रहर्त्तुमिति शक्तिः, यष्टिशब्दोऽव्युत्पन्नं प्रातिपदिकं, किमर्थमीकगुच्यते न कगेवोच्यते, का रूपसिद्धिः, शक्तियष्टिशब्दाभ्यां बह्वादिङीषन्ताभ्यां लिङ्गविशिष्टपरिभाषया कनि कृते शाक्तीको याष्टीक इति सिद्धं, न सिध्यति, केण इति ह्रस्वत्वं प्राप्नोति, विभाषा ङीबुक्तः, तदभावपक्षे दीर्घस्य शङ्केव नास्ति, एवं तर्हि इकगेवोच्येत, इकारेपि हि सवर्णदीर्घत्वे सिध्यति, यस्येति लोप इकारोच्चारणसामर्थ्याच्च भविष्यति, पदस्यावग्रहनिवृत्तिरिकारस्य

प्रयोजनम्, एवं तर्हि सूत्रारम्भो निष्फलः स्यात्, पूर्वसूत्रविहितेन ठकैवा-वग्रहनिवृत्तेः सिद्धत्वात्, नानर्थकं वाक्यनिवृत्त्यर्थत्वात्, एवमपि प्रत्ययान्तरमनर्थकं शक्तियष्ट्योरित्येतावद्वक्तव्यं, ठक् प्रकृतस्तस्य पुनर्विधानं वाक्यनिवृत्त्यर्थं भविष्यति किमीकको विधानेन, तद्विधानात्तु यस्येति लोपो न भविष्यति, यथैव तर्हि यस्येति लोपो न भवति एवं सवर्ण-दीर्घत्वमपि न स्यात्, यं विधिं प्रत्युपदेशोनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, यस्येतिलोपं च प्रति इकारोच्चारण-मनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव ॥

"अस्तिनास्तिदिष्टं मतिः" ॥ यद्यस्ति मतिर्यस्य स आस्तिकः, चोरेऽपि प्राप्नोति तस्यापि मतिसद्भावात्, तत्राह । 'न चेति' । 'तद्वि-परीत इति' । परलोको नास्तीति मतिर्यस्य तत्रास्तिको लौकायतिको न त्वचेतनः पदार्थः, मत्यभावमात्रे प्रत्ययस्यानिष्टत्वात्, दिष्टं दैवं तद्विषया मतिर्यस्य स दैष्टिकः, वृत्तावपि प्रमाणानुपातिनी मतिर्यस्येति दैववित्, प्रमीयते तेभ्यो दैवमिति, प्रमाणशब्देनेतिहासपुराणादिविवक्षि-तम् । 'अस्तिनास्तिशब्दौ निपाताविति' । तेन प्रातिपदिकाधिकारो न बाध्यतइति भावः । वचनसामर्थ्याच्चेत्यभ्युपगम्यवादः ॥

"शीलम्" ॥ 'शीलं स्वभाव इति' । शील्यते पुनःपुनः क्रियते ऽनेनेति कृत्वा । 'अपूपभक्षणं शीलमस्येति' । शीलविषये शीलत्वमारोप्य सामानाधिकरण्येन व्यपदेशः । 'भक्षणक्रियेत्यादि' । शीलं तावदुपात्तत्वा-दन्तर्भवति क्रियाविषयत्वाच्च शीलस्य क्रियाप्यन्तर्भवति, स्वभावाच्च भक्षणक्रिया, न निष्पादिका ॥

"छत्रादिभ्यो णः" ॥ छत्रशीलता शिष्यस्य दर्शयितुमाह । 'छाद-नादावरणाच्छत्रमिति' । छादयतेः ष्ट्रनि इस्मन्त्रन्क्विषु चेति ह्रस्वः । 'छ-त्रशील इति' । छत्रसहचरिता छादनक्रिया शीलमस्येत्यर्थः, यदि त्वपूप-भक्षणं शीलमस्यापूपिक इतिवत् छत्रावरणंशीलमस्य छात्रिक इति व्युत्पा-द्यते तदा दासेऽपि प्राप्नोति, अभिधानस्वाभाव्यात्तु तथा नाश्रीयते । 'उप-सर्गपूर्वो गृह्यतइति' । ततश्च तस्यातश्चोपसर्गइत्यादिना व्युत्पत्तिः,

केवलस्य स्याशब्दस्याभावात् केवलस्य तु पाठः सर्वोपसर्गसंग्रहार्थः, चुरेति पठ्यते, तत्र चोरयतेर्ण्यासश्रन्थो युजिति युचि प्राप्तेस्माद्देव निपातनादकारो गुणाभावश्च, न च युचोन्यत्र बाधः, चोरणेत्यपि भवति ॥

"कर्माध्ययने वृत्तम्" ॥ कर्म क्रिया तच्च स्खलितमपचाररूपं विवक्षितं न तच्छीलं कर्म, तेनेह न भवति, अध्ययने जपो वृत्तोस्येति, एतच्चाभिधानस्वाभाव्याल्लभ्यते; तदेतदुच्यते । 'यस्याध्ययने नियुक्तस्येत्यादि'। 'एकमन्यदिति'। सम्यक्पाठापेक्षया ॥

"बह्वच्पूर्वपदाट्ठच्" ॥ स्वरभेदेप्यन्यत्वं भवति न वर्णभेद एवेत्याह । 'उदात्ते कर्तव्यइति'। उदात्तग्रहणं सम्यक्स्वरस्योपलक्षणम् । अनुदात्तग्रहणं चासम्यक्स्वरस्य ॥

"हितं भक्षाः" ॥ हितं भक्षा इति पदयोः पर्यवसानेन सम्बन्धः, अत्र हितमिति सामान्योपक्रमत्वादेकवचनं नपुंसकत्वं च, भक्षा इत्यपूपादिविशेषेषूपसंग्रहात्पुल्लिङ्गं बहुवचनं च, अत एवाह । 'यत्तत्प्रथमासमर्थं हितं चेत्तद्भवति तच्च भक्षा इति'। 'एवं तर्हीति'। एवं च चतुर्थ्यर्थे प्रत्ययो न षष्ठ्यर्थे, कथं तर्हि पूर्वमुक्तमस्येति षष्ठ्यर्थ इति, एवं तर्ह्यधिकारमात्रापेक्षया तदुक्तम्, अपर आह, हितं भक्षास्तदस्मादिति सूत्रच्छेदः, ततो दीयते नियुक्तमिति तस्मा एवेति। 'हितार्थः क्रिया चेति'। हितार्थस्तावदुपात्तत्वादन्तर्भवति, भक्षणक्रियाप्यपूपादिशब्दानां लक्षणया तत्र वृत्तेरन्तर्भवति ॥

"तदस्मै दीयते नियुक्तम्" ॥ अव्यभिचारो नियोग इत्यस्मिन्पक्षे नियुक्तमिति क्रियाविशेषणत्वात्कर्मणि द्वितीया । 'अग्रभोजनमस्मै नियुक्तं दीयतइति'। यदग्रभोजनं दीयते तदास्माएवेत्येष नियोगार्थः । तेन कदाचिल्लोपेपि न नियुक्तताया हानिः । 'केचित्त्विति'। अत्र पक्षे नियुक्तमित्यन्तसंयोगे द्वितीया ॥

"श्राणामांसौदनाट्टिठन्" ॥ श्रा पाके क्तः, क्षीरहविषोरेव निपातनाच्छृभावाभावे संयोगादेरातो धातोरिति निष्ठातकारस्य नकारः । श्राणा यवागूः, मांसमिश्र ओदनो मांसौदनः । 'ठञेव कस्माचोक्त इति'।

लाघवात्स एव युक्तो वक्तुमिति भावः । 'नक्षत्रेति' । द्वे अप्येते प्रकृती पूर्वमेव वृद्धे, योऽपि वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधः स ठिठन्यपि न कोपधाया इति भवति । 'मांसौदनग्रहणमित्यादि' । ठञ्येव वक्तव्ये टिठनो वचनमेवात्र प्रमाणमिति तेषां भावः ॥

"भक्तादणन्यतरस्याम्" ॥ भजेर्भक्तमन्नम् ॥

"तत्र नियुक्तः" ॥ नियुक्तमिति प्रकृते पुनर्नियुक्तग्रहणमर्थभेदार्थमेव, तमेवार्थभेदं दर्शयति । 'नियुक्तोऽधिकृत इत्यादि' । किं च प्रकृतं नियुक्तग्रहणं प्रकृत्यर्थविशेषणस्य दीयतइत्यस्योपाधिर्न तस्येह प्रत्ययार्थत्वं शक्यं विज्ञातुम् ॥

"अध्यायिन्यदेशकालात्" ॥ अधीतइत्यध्यायी, आवश्यके णिनिर्ग्रह्यादिलक्षणो वा, अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावदेशकालशब्देनोच्येते इति, अप्रतिषिद्धाभ्यां देशकालशब्दाभ्यामन्यत्वात्पर्युदासवृत्त्या, अभक्ष्यास्पर्शनीयवत्, तद्यथा शूद्रादिप्राणिभिर्भक्ष्यमाणमपि लशुनमभक्ष्यमित्युच्यते, स्पृश्योऽपि चण्डालोऽस्पृश्य इत्युच्यते, अप्रतिषिद्धाभ्यां भक्ष्यस्पृश्याभ्यामन्यत्वात्तद्वदिहापि श्मशानचतुर्दश्यौ स्वरूपेणादेशकालावेव सन्तावप्रतिषिद्धाभ्यां देशकालाभ्यामन्यत्वाददेशकालशब्देनोच्येते, अध्ययनस्येत्येतदध्यायिना प्रत्ययार्थेन संनिधापितत्वाल्लभ्यते ॥

"कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति" ॥ व्यवहरतिः सम्भवति पणिना समानार्थः, आह हि व्यवहृपणोः समर्थयोरिति, अस्ति विवादे व्यवहारे पराजित इति, अस्ति विक्षेपे शलाकां व्यवहरतीति, अस्ति क्रियातत्त्वे, तदिह चरमस्य ग्रहणं तद्धितस्वभावादित्याह । 'व्यवहारः क्रियातत्त्वमिति'। यत्र देशे या क्रिया यथानुष्ठेया तत्र तस्यास्तथानुष्ठानमित्यर्थः, वंशा वेणवः कठिना यस्मिन्वंशकठिनो देशः, वर्ध्रीं चर्मविकारः कठिना अस्मिन्वर्ध्रकठिनः, आहिताग्न्यादित्वाद्विशेषणस्य परनिपातः, चक्रयुक्तेन शकटेन चरतीति चक्रचरः, स देशाननुक्रमेण चरन् तत्रानुष्ठेयक्रियाविपरीतं चरन्नेवमुच्यते, संस्थानप्रस्तारौ संनिवेशौ ॥

"निकटे वसति" ॥ अरण्यं निवासो यस्य स आरण्यकः, अरण्यान्मनुष्यइति वुञ्, भिक्षुः सन्यासी । 'ग्रामात्क्रोशइति' । यतश्च निर्द्धारणमिति पञ्चमी, अयं च विशेषोभिधानस्वभावाल्लभ्यते ॥

"आवसथात् ष्ठल्" ॥ आवसत्येतमिति आवसथः, उपसर्गे वसेरित्यथप्रत्ययः । 'ठकः पूर्णो विधिरिति' । प्राग्वहतीयस्य ठको विधानं पूर्णमित्यर्थः, अवधिरिति पाठे पूर्णः प्राप्त इत्यर्थः ॥

"तद्वहति रथयुगप्रासङ्गम्" ॥ ननु य एवार्थो रथं वहतीति स एव रथस्य वोढेति, तत्र तस्येदं रथाद्यदित्येव सिद्धं नार्थो रथग्रहणेन, ननु तत्रोक्तं रथाङ्गएवेष्यतइति, वोढर्यपि प्रयोगदर्शनादिष्यताम् । इदं तर्हि प्रयोजनं द्वौ रथौ वहति द्विरथ्यः, द्विगोर्लुगनपत्यइति प्राग्दीव्यतीयो लुङ् माभूत्, रथसीताहलेभ्यो यद्विधाविति तदन्तविधिः, युग्यं च पत्रइत्येव सिद्धम् इह युगग्रहणमयुग्यमित्यत्र ययतोश्चातदर्थइति स्वरार्थं, निपातनस्य तु क्यबन्तत्वादेष स्वरो न स्यात्, रथाङ्गवचनोयं युगशब्दः, इह न भवति युगं वहति राजा कलिं द्वापरं वेति, प्रासङ्गशब्दो वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते तद्वाची गृह्यते, प्रासज्यतइति प्रासङ्गः, इह न भवति प्रसङ्गादागतः प्रासङ्गस्तं वहतीति, एतच्चाभिधानस्वभावाल्लभ्यते॥

"धुरो यड्ढकौ" ॥ धूर्धुर्वेतेः, भ्राजभासेति क्विप्, राल्लोपः । 'धुरं वहतीति धुर्य इति' । न भकुर्छुरामिति प्रतिषेधाद्धलि चेति दीर्घाभावः, ढञत्र विधीयते न तु ढकञ्, धौरेयो भविता पितुरिति च दृश्यते, धौरेयक इति स्वार्थिके कनि भवति, इह धुरो ढक् चेति वक्तव्यं चकारात्प्राग्घितीयो यद्भविष्यति ॥

"खः सर्वधुरात्" ॥ 'स्त्रीलिङ्गनिर्द्देशो न्याय्य इति' । सर्वा चासौ धूश्चेति पूर्वकालेत्यादिना समासः, ऋक्पूरब्धूरित्यकारः समासान्तः, तत्र धूःशब्दस्य स्त्रीलिङ्गत्वात्परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति वचनात् स्त्रीलिङ्गनिर्द्देशस्य न्याय्यत्वं, यथा बन्धुनि बहुव्रीहावित्यत्र, दक्षिणाधुरीणः, दक्षिणां धुरं वहति उत्तरां धुरं वहतीति तद्धितार्थे समासः, ततोकारः समासान्तः ॥

"एकधुराल्लुक् च" ॥ एकधुरादिति निर्द्देशः सर्वधुरादित्यनेन व्याख्यातः, चकारेण खोनुकृष्यते, तेन स तावद्विधेयः, प्रत्ययादर्शनस्य च लुक् सञ्ज्ञा, न चान्योत्र प्रत्ययः, तेन खस्यैव लुग्विज्ञायते, तस्य यदि लुक् स्याच्चकारेणानुकृष्य विधानमनर्थकं स्यात्, एकधुराल्लुगिति वक्तव्यं, लुक् स्वभावादनन्तरस्य खस्य प्राकरणिकस्य यतो वा विधिरनुमास्यते, तदाह । 'तस्य च लुग्भवतीति' । 'एकधुरीण इति' । एकां धुरं वहतीति तद्धितार्थे समासः, तत्रोक्तोकारः समासान्तः, ततः खः ॥

"शकटादण्" ॥ शकटादण्विधानमनर्थकं, कथं शाकट इति, तस्येदमित्यण् भविष्यति, यो हि शकटं वहति शकटस्यासौ वोढा भवति, तत्राहुः, आरम्भसामर्थ्यादत्रापि तदन्तविधिः, तेन द्वे शकटे वहति, द्वैशकट इति प्राग्दीव्यतीयो लुङ् न भवति ॥

"हलसीराट्ठक्" ॥ इह यो हलं वहति सीरं च तस्यासौ वोढा भवति तत्र तस्येदं हलसीराट्ठगित्येव हालिकः सैरिक इति सिद्धं नार्थोनेन, अत्राहुः, आरम्भसामर्थ्यादत्रापि तदन्तविधिः, द्वैहालिकः द्वैसीरिकः त्रैसीरिक इति लुङ् न भवतीति ॥

"सञ्ज्ञायां जन्याः" ॥ 'जामातुर्वयस्येति' । सा हि प्रणयकलहादौ जनीं जामातुः समीपं प्रापयति । 'जनी वधूरुच्यतइति' । जायतेस्यां गर्भ इति कृत्वा, जनिवदिभ्यामितीञ्प्रत्यये जनिवध्योश्चेति वृद्धिप्रतिषेधे कृदिकारादक्तिन इति ङीष् ॥

"विध्यत्यधनुषा" ॥ 'पादौ विध्यन्ति पद्या इति' । तुदन्तीत्यर्थः । पद्यत्यतदर्थेइति पद्भावः । 'ऊरव्या इति' । ओर्गुणः । वान्तो यि प्रत्यये । 'नन्वसमर्थत्वादिति' । सापेक्षमसमर्थं भवतीत्यसामर्थ्यं, प्रत्ययार्थो ह्यत्र बाह्यं करणं धनुरपेक्षते, ननु व्यधनमत्र सापेक्षं करणक्रिययोः संबन्धात्, व्यधनं च प्रधानं क्रियाप्रधानत्वादाख्यातस्य, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, यथा राजपुरुषः शोभन इति, भवतु क्रियाप्रधानमाख्यातं तद्धितस्तु स्वभावात्साधनप्रधानः क्रिया तु गुणभूतेत्युक्तं, सा च धनुरपेक्षतइत्यसामर्थ्यम् । 'अनभिधानाच्चेति' । अत्रैवोपपत्यन्तरमनभिधानमेव दर्शयति ।

'नहीति'। धनुषा पद्म इत्युक्ते इत्थम्भूतलक्षणा सहयोगलक्षणा वा तृतीया गम्यते न तु पादौ धनुषा विध्यतीत्ययं विवक्षितोर्थः, अवश्यं चैतदेवं विज्ञेयम् असमर्थत्वादनभिधानाच्चात्र प्रत्ययो न भवतीति, यो हि मन्यते ऽधनुषेति प्रतिषेधात्प्रत्ययो न भवतीति तस्य शर्कराभिः पादौ विद्ध्यति कण्टकैरूरू विद्ध्यतीत्यत्र प्रत्ययः स्यादेव, एवं तर्हि विशेषोपलक्षणपरोत्र धनुषेति निर्द्देशो न तु धनुषः करणत्वप्रतिषेधपर इत्यर्थः। 'धनुष्प्रतिषेधेनेति'। नित्यं समासेनुत्तरपदस्थस्येति षत्वनुपलक्षणत्वमेव प्रतिपादयति। 'यस्यामिति'। तेनेह न भवति चौरं विद्ध्यतीति, सम्भाव्यते हि प्रत्यवच्छेदनादिकायां चोरस्य व्यधनक्रियायां धनुषः करणत्वम् ॥

"धनगणं लब्धा"॥ लब्धेति तृचन्तमेतत्, तृजन्ते तु कर्तृकर्मणोः कृतीति षष्ठ्या भवितव्यं, तृचन्ते तु न लोकाव्ययनिष्ठेति प्रतिषेधाद् द्वितीयैव भवति ॥

"वशङ्गतः"॥ वश कान्तौ, वशनं वशः, वशिरण्योरुपसङ्ख्यानमित्यच्, काम इच्छा तां प्राप्त इति, परेच्छानुगामीत्यर्थः ॥

"पदमस्मिन् दृश्यम्"॥'निर्द्देशादेव प्रथमा समर्थविभक्तिरिति'। द्वितीया तु न भवति दृश्यमिति क्यपा कर्मणोभिहितत्वात्। 'शक्यार्थे कृत्यप्रत्य[1]य इति'। तेन योग्यत्वे सति पदस्पर्शनाभावेपि पद्यः कर्द्दम इति प्रयोग उपपद्यतइति भावः, मुद्रा सन्निवेशः, प्रतिरूपा मुद्रा प्रतिमुद्रा। 'नातिद्रवो नातिशुष्क इति'। पांसवोपि नात्यल्पा नातिबहुलाः पद्याः ॥

"मूलमस्यावर्हि"॥ 'प्रथमासमर्थादिति'। द्वितीयाया निमित्ताभावान्निर्द्देशादेव प्रथमैव भवतीति भावः। वृहू उद्यमने, वादिरयं न बादिः, दृश्यते हि उद्वृह रक्षः सहमूलमिन्द्र वृश्चस्सुष्मिक् प्रवृहाण, तद्वर्हात्मनोदेवा इति च, आवर्हणमावर्हः, उत्पाटनमावर्हास्यास्ती-

१ प्रत्यय इति मुद्रितमूलपुस्तके नास्ति।

त्यार्वर्हि,सुष्टु पक्का न शक्यन्ते संग्रहीतुं, मध्यतो लूयमाने कोशस्था अपि यस्यामवस्थायां पतेयुस्तामवस्थां प्राप्ता इत्यर्थः ॥

"सञ्ज्ञायां धेनुष्या" ॥ 'यश्च प्रत्ययो निपात्यतइति'। कुत्र, अनिर्दिष्टार्थत्वात्स्वार्थे, तदाह। 'या धेनुरुत्तमर्णायेति'। कथं पुनर्यति प्रकृते यप्रत्ययो निपात्यते तत्राह। 'अन्तोदात्तोपि ह्ययमिष्यतइति'। यति हि तित्स्वरितमिति स्वरितः स्याद्, अन्तोदात्तश्चेष्यते, न केवलं सञ्ज्ञायामपि त्वन्तोदात्तोपीत्यपिशब्दस्यार्थः ॥

"गृहपतिना संयुक्ते ञ्यः" ॥ 'अन्यस्यापीत्यादि'। गृहपतिर्हि यजमानः स यथा गार्हपत्ये कार्याणि करोति तथा दक्षिणाग्नावाहवनीये च, भूयो वाहवनीये तस्मादन्यस्यापि गृहपतिना योगोस्ति, यद्येवं तत्राप्यतिप्रसङ्ग इत्यत आह। 'तत्रेति'। अपर आह, गृहपतिरग्निविशेषस्तेन संयोगो गार्हपत्यस्यैवाग्निहोत्रेपि गार्हपत्ये अग्नये गृहपतये प्रजापतये, पत्नीसंयाजेषु च तत्रैवेज्यतइति तत्रापि गृहपतिरग्निर्गृह्यते न यजमान इत्यत्र सञ्ज्ञाधिकार एव शरणम् ॥

"नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु" ॥ तत्र नावादीनां प्रथममूलान्तानां पञ्चानां द्वितीयमूलादीनां च त्रयाणां पूर्वं पृथक्पृथक् द्वन्द्वं कृत्वा ततो द्वयोरपरो द्वन्द्वः कृतः, न त्वष्टानां युगपत्सहविवक्षा, किं सिद्धं भवति, न मूलयोः सारूप्यादेकशेषो भवति, का पुनरत्र समर्थविभक्तिरित्यत आह। 'प्रत्ययार्थद्वारेणेति'। द्वारं मुखमुपायः, इह तार्यादयः प्रत्ययार्थास्तत्संबन्धे करणे कर्त्तरि हेतौ तुल्यार्थयोगे च यथासम्भवं तृतीयैव भवति। 'नाव्यमिति'। अत्र तावत्तरणक्रियायां करणत्वम्। 'वयसा तुल्य इति'। तत्र हेतुमाह। यो येन वयस्तुल्यः स तं प्रति वयस्यः। 'शत्रौ न भवतीति'। किंतु मित्रएव भवति। 'ननु चेति'। धर्मेण प्राप्यं सुखादि फलमपि धर्मादनपेतमेव कार्यस्य कारणाविनाभावादिति प्रश्नः। 'धर्मं यदनुवर्त्ततइति'। अनादिः शिष्टसमाचारस्तज्जन्यो वात्मगुणो धर्मः, यदनुष्ठानमनुवर्त्तते तद्धर्मादनपेतं, फलं तु धर्मादपैत्येवेति, कुत इत्याह। 'कार्यविरो-

धित्वादिति'। धर्मस्य कार्यं सुखानुभवः, कार्यं विरोधि नाशकं यस्य स कार्यविरोधी तस्य भावः कार्यविरोधित्वं तस्मादित्यर्थः, उत्पन्ने हि फले धर्मो नश्यति, अन्यथा सकृद्धर्मे कृते स्वर्गमनुभवतः प्रभवो न स्यात्। 'वधमर्हतीत्यर्थे इति'। वध्यशब्दस्य दण्डादिभ्यो य इत्यत्रार्थे व्युत्पादितत्वात्। 'आनाम्यमभिभवनीयमिति'। अनेकार्थत्वाद्धातूनामाङ्पूर्वो नमिरभिभवे वर्तते। 'पटादीनामुत्पत्तिकारणमिति'। पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं यद्वस्तु तन्मूलशब्दवाच्यमित्यर्थः। 'तेनेति'। मूलेन। 'तदिति'। मूल्यम्। 'शेषीक्रियतइति'। शेषीकरणमेवात्राभिभव इत्यर्थः। गुणभावमापद्यते कथमित्याह। 'मूलं हि सगुणं मूल्यं करोतीति'। मूल्यमिह कर्तृ, मूलं कर्म, पटादिषु विक्रीयमाणेषु यन्मूलातिरिक्तं वस्तु लाभो नाम तन्मूल्यं, गुणो भागः स पुनरिह मूल्यमेव, तेन सह वर्तते सगुणः, हिशब्दो हेतौ, एतदुक्तं भवति, यस्मान्मूल्यमात्मनैव भागभूतेन सभागं मूलं करोति तस्मान्मूले मूल्यमभिभूयते शेषीक्रियते, मूल्ये सति तेन गुणेन सगुणं मूलं भवति, इयमेव चावनतिः, अयमेवाभिभवः, इदमेव शेषीकरणं, लोके तु यावता द्रव्येण पटादिको विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धो न मूलातिरिक्ते भागे, स च मूल्यसंभवादौपचारिकः, एवं च यत्रापि मूल्यं नास्ति दायप्रतिग्रहादिलब्धे क्षेत्रे क्रीयमाणे तत्रापि क्रयद्रव्ये मूल्यशब्दप्रयोगः सिद्धो भवति, सीता हलाग्रं, संपूर्वाद्विणः क्तः, समितं सङ्गतं, निम्नोन्नतादिरहितं कृतमित्यर्थः, समीकृतमिति यावत्। 'द्विसीत्यमिति'। द्वाभ्यां सीताभ्यां समीकृतमिति तद्धितार्थे समासस्ततः प्रत्ययः। 'तुलया संमितं तुल्यमिति'। अत्र तुल्यार्थयोगे तृतीया, यद्यपि तद्योगे षष्ठ्यपि भवति तथापि नावादिभिस्साहचर्यात्तुलाशब्दादपि तृतीयासमर्थादेव प्रत्ययः, अत एव पूर्वमुक्तं तृतीयासमर्थविभक्तिर्लभ्यतइति, षष्ठ्यन्तादपि न कश्चिद्दोषः, न्यायस्तु कथितः, कथं पुनस्तुल्यस्य तुलया सदृशत्वमत आह। 'यथेति'। 'एवं तदपीति'। तदपि तुल्यं प्रतियोगिनं सादृश्येन परिच्छिनत्ति, एतद् व्युत्पाद्यत्वेन प्रदर्शितं सदृशपर्यायस्तुल्यशब्दः नावयवार्थः कश्चित्, अत एव तुल्यास्यप्रयत्नं सवर्णमित्यत्रोक्तं तुल्यशब्दः सदृशपर्याय इति॥

"धर्मपथ्यर्थन्यायादनपेते" ॥ 'निर्देशादेवेति'। सत्यर्थसम्भवेऽर्थान्तरस्य वा सम्भवे सति निर्देशादिति द्रष्टव्यं, धुरो यड्ढकावित्यत्रातिप्रसङ्गो नोद्भावनीयः। 'संज्ञाधिकारादभिधेयस्य नियम इति'। शास्त्रीयात् पथो यदनपेतं तत्पथ्यं न तु तस्मादनपेतश्चोरः ॥

"छन्दसो निर्मिते" ॥ 'प्रत्ययार्थसामर्थ्ये लभ्यतइति'। निर्माणे छन्दसः करणत्वात्। इच्छपर्यायश्छन्दःशब्दोगृह्यतइति न वेदवचनो नापि त्रिष्टुबादिवचनः, एतच्च संज्ञाधिकाराल्लभ्यते, यद्यपि स्वच्छन्दतो हि वचसां प्रवृत्तिः, छन्दानुवृत्तिदुस्साध्येत्यादावकारान्तश्छन्दशब्द इच्छापर्यायः, तथापि तस्यैव धातोरसुन्नन्तस्येच्छावाचित्वमविरुद्धं चेति मन्यते ॥

"उरसोण् च" ॥ 'औरसः पुत्र इति'। आत्मनोत्पादित इत्यर्थः। 'संज्ञाधिकारादभिधेयनियम इति'। उरसा निर्मितं सुखमित्यादौ न भवति ॥

"हृदयस्य प्रियः" ॥ हृदयमन्तःकरणं, प्रियं प्रीतिकरम्। 'हृद्यमिति'। हृदयस्य हृल्लेखयदण्लासेष्विति हृदादेशः ॥

"बन्धने चर्षौ" ॥ 'षष्ठीसमर्थादिति'। बन्धनयोगे कृद्योगलक्षणा कर्मणि षष्ठी। 'ऋषिर्वेदो गृह्यतइति'। तदुक्तमृषिणेत्यादौ दर्शनात्, यस्त्वाध्यानसम्पन्ने वसिष्ठादावृषिशब्दस्तस्य ग्रहणं न भवति संज्ञाधिकारात् ॥

"मतजनहलात्करणजल्पकर्षेषु" ॥ 'प्रत्ययार्थसामर्थ्यलब्धेति'। करणादयः प्रत्ययार्थाः, तद्वचनाः करणादयः शब्दाः कृदन्ताः, तद्योगे यथायथं कर्तृकर्मणोः कृतीति षष्ठी भवति संज्ञाधिकाराद्धलसम्बन्धाच्च कर्षशब्दोपि क्रियावचनो गृह्यते न परिमाणशब्दः, मतस्य करणमिति कर्मणि षष्ठी, जनस्य जल्प इति कर्त्तरि, जल्पशब्दो भावसाधनः, अत एवात्र भावः साधनं वेति नोक्तं, हलस्य कर्ष इति कर्मणि षष्ठी करणस्य वा कर्तृत्वविवक्षायां कर्त्तरि। 'द्विहल्य इति'। रथसीताहलेभ्यो यद्विधाविति तदन्तविधिः ॥

"तत्र साधुः" ॥ 'सामन्य इति'। ये चाभावकर्मणोरिति प्रकृतिभावः, प्रवीणो निपुणः, योग्यः समर्थः । 'तत्र हि परत्वादिति'। तस्मै हितमित्यनेन चतुर्थीसमर्थात्प्रत्ययो विधीयतेऽनेन तु सप्तमीसमर्थात्तेन नात्र विप्रतिषेधे परमित्येतत्परत्वापरत्वं विवक्षितं, किं तर्हि इष्टवाची परशब्दः, उपकारलक्षणे साधौ प्राक्क्रीतीयानामेवेष्टत्वात्तस्मै हितमित्यनेन विधिना भवितव्यमित्यर्थः, एतच्च संज्ञाधिकाराल्लभ्यते ॥

"प्रतिजनादिभ्यः खञ्" ॥ जनञ्जनं प्रति प्रतिजनमिति यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः । 'प्रतिजने साधुरिति'। तृतीयासप्तम्योर्बहुलम् । 'परस्य कुलममुष्य कुलमिति'। षष्ठीसमासेस्मादेव निपातनात् षष्ठ्या अलुक्, पूर्वसूत्रउक्तं साधुः प्रवीणो योग्यो वा गृह्यते नोपकारकस्तत्र प्राक्क्रीतीयानामेवेष्टत्वादिति, इह तु न तथेत्याह । 'यत्रेति'। 'प्राक्क्रीतीया बाध्यन्तइति'। अप्राप्तिरत्र बाधः, नहि चतुर्थ्यन्ताद्विधीयमानानां सप्तम्यन्तेभ्यः प्राप्तिरस्ति, तत्र प्राक्क्रीतीया न भवन्तीति वक्तव्ये बाध्यतइत्युक्तं चतुर्थ्यन्तेभ्योऽप्यनभिधानात्प्राक्क्रीतीया न भवन्तीति दर्शयितुम् ॥

"भक्ताद्णन्यतरस्याम्" ॥ 'भाक्तास्तण्डुला इति'। भक्तयोग्यास्ति:फलीकृतत्वात् ॥

"परिषदो ण्यः" ॥ 'णप्रत्ययोप्यत्रेष्यतइति'। पारिषदा कृतिरेषा तत्र भवतां, सर्ववेदपारिषदं हीदं शास्त्रमिति च भाष्यकारप्रयोगात् ॥

"पथ्यतिथिवसतिस्वपतेर्ढञ्" ॥ पतन्त्यनेनेति पन्थाः, गमेरिनिः पतेस्थ च, अतति [illegible]तं गच्छतीत्यतिथिः, न विद्यते तिथिर्यस्य सोऽतिथिः, एकमपि दिनमत्रास्थित इत्यर्थः, वसनं वसतिः वसेश्चेत्यतिप्रत्ययः, तत्र योग्या वासतेयी रात्रिः, स्वपतिराढ्यः स्वपतेर्योग्यं स्वापतेयं धनम् ॥

"समानतीर्थे वासी" ॥ वसतीति वासी निपातनाण्णिनिः, ग्रह्यादेराकृतिगणत्वाद्वा साधुरिति । 'निवृत्तमिति'। तेन किं सिद्धं भवतीत्याह । 'वासीति प्रत्ययार्थ इति'। साधुरित्यस्यानुवृत्तौ तु तस्यैव विशेषणं

वासिग्रहणं स्यात् । 'तीर्थशब्देनेह गुरुरुच्यतइति' । प्रयागादितीर्थसाधर्म्यात्, तरन्त्यनेनेतितीर्थं, तरतेः क्थन्, मुख्यस्य तीर्थस्य ग्रहणं न भवति संज्ञाधिकारात् ॥

"समानोदरे शयित ओ चोदात्तः" ॥ 'ओकारश्चोदात्त इति' । तित्स्वरितस्यापवादः । 'शयितः स्थित इति' । शेतेः स्थितावपि वृत्तेः, आमाशयो जलाशय इति यथा । 'समानोदर्य इति' । उद्गीर्यतइत्युदरम्, उदि दृणातेरलचौ पूर्वपदान्तलोपश्चेत्यलचोरन्यतरः, समानं च तदुदरं च समानोदरं, पूर्वापरप्रथमेत्यादिना समासस्ततः प्रत्ययः ॥

"सोदराद्यत्" ॥ 'यकारादौ प्रत्यये विवक्षितइति' । विभाषोदरइत्यत्र तीर्थे यइत्यतो यइत्यनुवर्त्तते, तत्र यइत्येषा विषयसप्तमीति दर्शयति । 'ओ चोदात्त इति तु नानुवर्त्ततइति' । यविधानसामर्थ्यात् ॥

"भवेच्छन्दसि" ॥ 'अणादीनां घादीनां चापवाद इति' । तत्र भवदृतिप्राप्तानां सति दर्शने तेपि भवन्तीति । तद्यथा मुञ्जवान्नाम पर्वतस्तत्र भवो मौञ्जवतस्तस्येति भक्षः । 'मेध्यायेति' । अत्र यतो नाव इत्याद्युदात्तत्वं प्राप्नोति अन्तस्वरितं चाधीयतइति ॥

"पाथोनदीभ्यां ड्यण्" ॥ 'पाथोन्तरिक्षमिति' । पाति भूताद्यवकाशदानेनेति कृत्वा, यद्यपि पातेर्बलेजुट् उदके थुट् चेति अन्नोदकयोः पाथःशब्दोऽसुनि व्युत्पाद्यते तथापि बाहुलकादन्तरिक्षेपि भवति ॥

"वेशन्तहिमवद्भ्यामण्" ॥ वेशन्तः पल्वलं विशेर्झ च तत्र भवा आपः वैशान्त्यः ॥

"स्रोतसो विभाषा ड्यड्ड्यौ" ॥ स्रुरीभ्यां तुट् चेत्यसुन्, स्रोतो नदीप्रवाहः ॥

"सगर्भसयूथसनुताद्यत्" ॥ अर्त्तिगृभ्यां भन्, गिरति गीर्यते वा गर्भः, युता भवन्त्यस्मिन्यूथं, तिथपृष्ठगूथयूथप्रोथा इति क्थन्प्रत्ययान्तो निपातितः, नुतिर्नुतं नपुंसके भावे क्तः, सगर्भादयस्त्रयोपि कर्मधारयाः ॥

"तुयाद् घन्" ॥ तुरस्तुशम्यमः सार्वधातुकइत्यत औणादिको रन् गुडागमः ॥

"अयाद्यत्" ॥ ऋज्रेन्द्राग्रेत्यग्रशब्दो निपातितः । 'सामान्येनेति' । भवे छन्दसीतीति । 'ताभ्यां बाधा मा भूदिति पुनर्विधीयतइति' । एवमपि यद्ग्रहणमनर्थकम् । अयादित्येवास्तु प्राकरणिको यद्भविष्यति, अथ वा ऽयाद् घच्छौ चेति चकाराद्भविष्यति, अग्रपश्चादिमजित्यस्य समुच्चयो न शक्यो विदेशस्थत्वात्, एवमप्यनन्तरस्य घनः समुच्चयो विज्ञायेत, योगविभागे पुनरनन्तरो घनेत्र स्यात्, योगविभागसामर्थ्याच्च भविष्यति, अथ कथं ताश्च स एव चाग्र्यजननः, एतच्छिवे जानीहि ब्राह्मणाग्र्यस्य लक्षणमिति भाषायां प्रयोगः छन्दोवदृषयः कुर्वन्ति ॥

"घच्छौ च" ॥ 'चकारस्तुयाद्वनित्यस्यानुकर्षणार्थ इति' । पूर्वमेव विहितस्य यतोनुकर्षणे प्रयोजनाभावात् ॥

"समुद्राभ्राद् घः" ॥ समुनत्तीति समुद्रः, उन्देःस्फायितञ्चीति रक्प्रत्ययः, अपो विभर्तीत्यभ्रं, मूलविभुजादित्वात्कः । 'तस्य लक्षस्येति' । तस्य पूर्वनिपातस्य यल्लक्षणं तस्येत्यर्थः । 'व्यभिचारित्वादिति' । व्यभिचारस्य चायमेव निर्द्देशो लिङ्गम् ॥

"बर्हिषि दत्तम्" ॥ बृंहेर्नलोपश्चेतीसिप्रत्ययः, बर्हिः ॥

"दूतस्य भागकर्मणी" ॥ दूताद्भागे तस्येदमित्यणि प्राप्ते वचनं, कर्मणि तु दूतवणिग्भ्यां चेत्यौपसंख्यानिके यें ॥

"रक्षोयातूनां हननी" ॥ रक्षेरसुनि रक्षः कमिमनिजनीत्यादिना, यातेस्तौ यातुः, यातुशब्दो रक्षःपर्यायः विरूपाणामपि समानार्थानामित्येकशेषस्तु न भवति बह्वर्थाभिधायिस्वरूपपरत्वेन सूत्रे भिन्नार्थयोर्निर्देशात् । 'निर्द्देशादेव समर्थविभक्तिरिति' । सा पुनः कर्तृकर्मणोः कृतीति कर्मणि षष्ठी । 'बहुवचनं स्तुतिवैशिष्ट्यज्ञापनार्थमिति' । तद्धि बहुवचनात्प्रत्ययविध्यर्थमन्यथा द्वित्वाद् द्विवचनमेव न्याय्यं स्यात्, कथं पुनर्बहुवचनेन स्तुतिवैशिष्ट्यं ज्ञाप्यते तत्राह । 'बहूनामिति' । बहुवचनान्तात्प्रत्यये

बहूनां रक्षसां हनने सामर्थ्यमुद्भाव्यते मन्त्रे, तथा च स्तुतिर्विशिष्टा संपूर्णा भवति, योगश्चायं शैषिकयोरण्ठकयोरपवादः ॥

"रेवतीजगतीहविष्याभ्यः प्रशस्ये" ॥ रयिरस्यास्तीति रेवती रयेर्मतौ। बहुलमिति बहुलवचनात्संप्रसारणम् । उगित्त्वान्ङीप्, नक्षत्रे तु गौरादित्वान्ङीष् । जगच्छब्दाच्छतृवद्भावान्ङीप् । 'षष्ठी समर्थेभ्य इति' । शंसु स्तुतावित्यस्मात्कृत्यल्युटो बहुलमिति भावे क्यप्, तद्योगे कर्मणि षष्ठी भवति, हविषे हिता हविष्या, उगवादिभ्यो यत् ॥

"असुरस्य स्वम्" ॥ न सुरोऽसुरः सुरप्रतिपक्षः, अथ वा असेहरन् अस्यत्यस्यते वेत्यसुरः ॥

"मायायामण्" मीयतेनयेति माया, असदर्थप्रकाशनशक्तिः, माङ औणादिको यः, नेति वक्तव्ये ऽण्ग्रहणं लाघवे विशेषाभावात् ॥

"तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः" ॥ मतुनिर्ह्रासः मतोरपचयः । 'तद्वानित्यवयवेन समुदायो निर्दिश्यतइति' । स विवक्षितो वर्चःशब्दादिरवयवोऽस्मिन्मन्त्रलक्षणे समुदायेस्तीत्येवमेकदेशार्थाभिधायिनः सर्वनाम्नः समुदाये मतुबयं विहित इत्यर्थः । 'वर्चःशब्दोऽस्मिन्मन्त्रेस्तीति' । स पुनः कुम्भेष्टकोपधानमन्त्रः, भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसव इत्यादिकः । 'वर्चस्या उपदधातीति' । यथा वर्चस्या भवन्ति तथोपदधातीत्यर्थः, तेजस्वान्मन्त्रः, वसु च स्थ वाम च स्थ देवस्य वः सवितुरित्यादिकः, वयस्वन्तोमन्त्राः त्र्यविर्वयः स्त्रिष्टुबित्यादिकाः, ऋतुमन्तो मन्त्राः मधुश्च माधवश्चेत्यादिकाः । 'मन्त्रसमुदायादेव मा भूदिति' । ननु तद्वानित्यस्मिन्नसति समर्थानां प्रथमाद्वेति वचनादासामिति प्रथमं निर्दिष्टत्वात् षष्ठ्यन्तादिष्टकावाचिन उपधाने मन्त्रे प्रत्ययविधिः प्रसज्जनीयः, सत्यम् । आसामिति प्रथमं न करिष्यतइति मत्वा प्रश्नप्रतिवचने, ततश्च तद्वानित्यस्याभावे त्र्यविर्वयस्त्रिष्टुप्छन्द इत्ययमुपधानमन्त्र आसामिष्टकानामिति वाक्यं स्यात्तत्र्वर्तिना परामृष्टान्मन्त्रसमुदायादेव प्रत्ययः प्राप्नोति । 'वर्चस्वानुपस्थान-

मन्त्र इत्यादि'। उपस्थानं मन्त्रेणाभिमन्त्रणं विवक्षितं, शिवेन मा चक्षुषेत्यादिकः कुम्भेष्टकाभिमन्त्रणे विनियुक्तः। 'अङ्गुलिमानित्यादि'। यद्यपि सर्वासामिष्टकानामङ्गुलिमान्हस्त उपधानस्तथापि यास्तूष्णीमुपधेया इष्टकास्तासु मन्त्रव्यावृत्त्यर्थतया विशेषणमर्थवत्। 'एवां कपालानामित्यत्र मा भूदिति'। स्त्रीलिङ्गनिर्देशादत्राप्रसङ्ग इति चेत् एवमपि शर्करासु-प्रसङ्गः। 'अनेकपदसम्भवेपीति'। असति त्वितिकरणे मन्त्रे बहूनां सम्भवाद्येन केन चित्पदेन तद्वान्मन्त्रो गृह्येत तथा पदैकदेशेन वर्णसमुदायेन, इतिकरणात्त्वयमतिप्रसङ्गो न भवति। मतुब्ग्रहणमुत्तरार्थम् अश्विमानित्यत्र मतुप एव लुग्यथा स्यादिनेर्मा भूदिति, इह तु मत्वन्तात्प्रत्ययविधानात्तस्यैव लुग्भविष्यति, वर्चःशब्दादावसुप्रभृतेरप्रसङ्गः, उणादीनामव्युत्पन्नत्वात्, इह प्राणभृत उपदधातीत्यादावभेदोपचारात्प्रत्ययाभावः।

"अश्विमानण्" ॥ 'सोश्विमानिति'। यद्यपि बहवोश्विमन्तो मन्त्रा ध्रुवक्षितिरित्यादिकास्तथापि सामान्यापेक्षमेकवचनम्।

"वयस्यासु मूर्ध्नो मतुप्" ॥ 'वयस्यास्विति'। छन्दसि या वयस्या इष्टका उच्यन्ते तास्वित्यर्थः, ताश्च बह्व्यः, तास्वन्तश्चतस्रो मूर्द्धन्वत्यः, विष्टम्भो वय इत्यादिवयस्वद्भिर्मन्त्रैरुपधेयास्तत्र च यद्यपि मूर्द्धा वयः प्रजापतिश्छन्द इत्यन्तिमएकस्मिन्नेव मन्त्रे मूर्द्धशब्दोस्ति तथापि साहचर्याद्विष्टम्भो वय इत्याद्याश्चत्वारो मूर्द्धन्वन्त उच्यन्ते, यथा छत्रिणो यान्तीति, तेन मूर्द्धन्वतीरुपदधातीति बहुवचनम्। 'मूर्द्धन्वानपि भवतीति'। नन्वनो नुडिति छन्दसि नुड्विधीयते, सत्यं, यथा सूत्रकारेण छान्दसमेव पदं प्रयुक्तं वयवस्यास्विति तथेदमपि वृत्तिकारेण, मूर्धन्वानपि भवति छन्दसीत्यर्थः, वयस्याश्च ताः मूर्धन्वत्याश्चेति उभयथापि छान्दस्यभिधीयतइत्युक्तं भवति। 'यत्र मूर्द्धन्वच्छब्द एव केवल इति'। यथाग्ने यशस्विन्यशसे समर्पयेत्यादिके मन्त्रे। 'ततो मा भूदिति'। तदभिधायिनो मूर्द्धन्शब्दादित्यर्थः। 'मूर्द्धन्वत इति वक्तव्यमिति'। तद्वानिति च लुक् च मतोरिति चानुवर्त्तते, ततश्च मूर्द्धन्वत इति युक्तं वक्तुमिति भावः, इह तु गायत्रीः पुरस्तादुपदधाति तेजो वै गायत्री तेज एव

मुखतो धत्ते मूर्द्धन्वती भवन्तीति मुख्यो गायत्रीषु मूर्द्धन्वतीशब्दः प्रथमं मतुबन्तः प्रयुक्तः, किं कारणं, तदुपधानमन्त्रेषु अग्निर्मूर्द्धा भुव इत्यादिषु वयःशब्दस्याभावात् ।

"मत्वर्थे मासतन्वोः" ॥ मत्वर्थग्रहणाल्लब्धमर्थं दर्शयति । 'प्रथमासमर्थादित्यादि' । मासतन्वोरिति कृषिचमितनिधनिसर्ज्जिखर्ज्जिभ्य ऊरित्यूकारान्तस्तनूशब्दः सूत्रे निर्द्दिष्टो न तु भृमृशीङ्तृचरित्सरितनिमिमस्जिभ्य उरित्युकारान्तः, द्वन्द्वे घीति पूर्वनिपातप्रसङ्गात् । 'अनन्तरार्थे चेति' । न केवलं मत्वर्थमात्रइति चशब्दस्यार्थः । 'लुगकारेकाररेफाश्चेत्यादि' । रादिफ इत्यत्र वर्णादिति न संबद्ध्यते तेन समुदायनिर्द्देशेपि इफः कृतः, अन्ये तु रशब्दा इति पठन्ति, प्रत्यय इत्यधिकारोकारादिभिः संबद्ध्यते न तु लुका, तपनं तपः, सहनं सहः, भावेऽसुन्, तदस्मिन्नस्तीति सूत्रेण विहितस्य यतो लुक्, कथं पुनरत्र नपुंसकत्वं यावता तद्धितलुकि सत्यभिधेयवल्लिङ्गेन भवितव्यमत आह । 'नपुंसकलिङ्गं छान्दसत्वादिति' । इडत्रम् इष्यमाणत्वात्, ऊर्क् बलम्, ऊर्ज्ज बलप्राणनयोः, ताभ्यामकारः प्रत्ययः, इषः ऊर्ज्जः, शोचनं शुक्, पूर्ववत्क्विप्, आतपातिरेकेण शरीरादेः शोषस्तद्वान्मासः शुचिः, एवं शुक्रः, अत्र छान्दसत्वादेवायस्मयादित्वाद्भत्वाज्जशत्वाभावः, तदेव छन्दोधिकारे लुगादीनां विधानाद्भाषायां शुचिशुक्रादीनामन्याय्यः प्रयोगः स्यात्, व्युत्पत्यन्तरेण वा ऽव्युत्पन्ना वा नभस्यादयः शब्दा मासेषु वर्त्तन्ते, इषोर्ज्जशब्दावर्शआद्यच्प्रत्ययान्तौ, मत्वर्थीये रप्रत्यये पृषोदरादित्वाज्जशत्वाभावे शुक्र इति भवति, शोचतेरन्तर्भावितण्यर्थादौणादिके किप्रत्यये कृते शुचिरिति भवति, शोचयति संतापयति प्राणिन इति कृत्वा, अभेदोपचारान्नभःप्रभृतीनां मासेषु वृत्तिः, नभस्यप्रभृतयस्तु तत्र साधुरिति यदन्ताः, मतौ छः सूक्तसाम्नोरित्यत्र यथान्तरेणाप्यर्थग्रहणं मत्वर्थे प्रत्ययो लभ्यते तथेहापि लप्स्यते नार्थोर्थग्रहणेन ।

"मधोर्ञ च" ॥ अत्रापि भाषायां मधुयोगान्मासो मधुः, तस्य प्रज्ञादिषु पाठादाद्युदात्तत्वम् ।

"ओजसोऽहनि यत्खौ" ॥ यद्ग्रहणमनर्थकं खश्चेत्येव वक्तव्यं, चकारात्प्राकरणिको यद्भविष्यति, नैवं शक्यं, खश्चेत्युच्यमानेऽनन्तरसूत्रविहितस्य जस्य समुच्चयो विज्ञायेत तस्माद्यद्ग्रहणम् ।

"ख च" ॥ 'योगविभाग इत्यादि' । के चित्पुनरेकमेव योगमधीयते, तथा च यथासंख्यमनुदेशः समानां प्रत्ययविध्यर्थो बहुवचननिर्देशः, बहुवचनान्तात्प्रत्ययोत्पत्तौ यथासंख्यमिष्यतइति । 'उत्तरार्थश्चेति' । उत्तरत्र खस्यैवानुवृत्तिर्यथा स्याद्यतो मा भूदिति ।

"पूर्वैः कृतमिनियौ च" ॥ 'बहुवचनान्तेनेत्यादि' । बहुवचनान्तात्प्रत्ययविध्यर्थो बहुवचननिर्देशो बहुवचनान्तात्प्रत्ययोत्पत्तौ यथा प्रशंसा गम्यते पूर्वैर्बहुभिः क्रियतइति प्रतीतेः, तेन पूर्वशब्दश्च वृद्धेषु पुरुषेषु प्रवर्त्ततइत्यर्थः ।

"सहस्रेण संमितौ घः" ॥ 'निर्देशादेव समर्थविभक्तिरिति' । सा पुनस्तुल्यार्थयोगे तृतीया । 'संमितएव लक्षयितव्य इति' । किंकारणमित्याह । 'तत्रेति' । छन्दसि हि तत्र संमिते प्रयोगो दृश्यते ।

"सोममर्हति यः" ॥ छन्दसीत्यधिकाराद्भाषायां सोम्यशब्दस्य साधुत्वं चिन्त्यम्, आयुष्मान्भव सोम्येति वाच्यो विप्रोभिवादनइति, के चित्सौम्येति वृद्धिं पठन्ति, सोम्यशब्दो दर्शनीयवचनः सुखादिवत् ।

"मये च" ॥ 'मय इति मयडर्थो लक्ष्यतइति' । शब्दे कार्यस्यासंभवात् । 'तत्र यथायोगं समर्थविभक्तिरिति' । आगते पञ्चमी, विकारावयवयोः षष्ठी, प्रकृतवचने प्रथमा ।

"वसोः समूहे च" ॥ ओश्रावयेत्यादिकस्याक्षराणि गण्यन्ते, सप्तदशात्मकश्छन्दस्योऽक्षरसमूहः, प्रजापतिः प्रजापतिना दृष्टः, हस्तौ पृणस्वेति पृणातिः पूरणकर्मा ।

"नक्षत्राद् घः" ॥ 'समूहइति नानुवर्त्ततइति' । तेनानिर्दिष्टार्थत्वात्स्वार्थे प्रत्यय उत्पद्यतइति भावः ।

"शिवशमरिष्टस्य करे" ॥ 'करोतीति कर इति'। पचाद्यच्। 'सामर्थ्यलभ्या षष्ठी समर्थविभक्तिरिति'। सा पुनः कृद्योगलक्षणा कर्मणि, भाषायां शिवतातिप्रभृतीनां साधुत्वं चिन्त्यम्।

श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तोऽध्यायश्च ॥



श्रीगणेशाय नमः ॥

# अथ पञ्चमोध्यायः ।

# काशिकाव्याख्या पदमञ्जरी ।

"प्राक् क्रीताच्छः" ॥ 'अवत्सीय इति'। अतिदोहनाद्वत्सान्प्रति हितो न भवति गोधुगित्येवं प्रकृत्या नञा च युगपत्प्रत्ययार्थस्य संबन्धः, प्रधानभूतश्च प्रत्ययार्थः, भवति च प्रधानस्य सापेक्षस्यापि वृत्तिः, प्रधानत्वादेवानेकोपकार्यत्वस्याविरोधात्, सामान्याप्रयोग इति लिङ्गाच्च । किं च विशेषतोत्र ज्ञापकमस्ति, यदयं नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिता इत्याह, तज्ज्ञापयति भवत्येवं जातीयकेपि विषये तद्धित इति, अन्यथा संपाद्यर्हहितालमर्था ये तद्धितास्तदन्तान्युत्तरपदानि नञो गुणप्रतिषेधे प्रवृत्तिनिमित्तप्रतिषेधे वर्तमानात्पराणि न संभवेयुः, तत्र पूर्वं प्रत्ययः पश्चान्नञ्समासः, अत एव यत्नसाध्यत्वादवत्सीय इत्यादेरुपन्यासः, यस्तु वत्सादन्यस्मै हितो यो वा वत्सीयादन्यो न तत्र किञ्चिद्यत्नसाध्यम् । अथ किमर्थमियानवधिरुपादीयते यावता नह्यस्य प्राग्वतेष्ठञित्यारभ्य ये योगास्तेन क्रीतमित्येतस्मात्प्राक् पठितास्तेषु व्यापारोस्ति, नहि तत्र कश्चिदर्थो निर्दिश्यते ततश्च प्राक् ठञ इति वक्तव्यं, प्राग्वतेष्ठञित्ययमेव च प्रत्यासन्नष्ठञ् ग्रहीष्यते न विप्रकृष्टो लोकसर्वलोकाट्ठञित्यादिरित्यत आह । 'अर्थावधित्वेन गृहीत इति'। गृहीतो ग्रहीतुमिष्टः । अयमभिप्रायः । अवश्यमत्रार्थावधित्वेन ग्राह्यः, अन्यथा प्राक् ठञ इत्युच्यमानेवधिना सजातीयस्यावधिमतोऽभावादर्थाः प्रकृतयो वाऽवधिमत्त्वेन गृह्येरन् प्राक् ठञो येऽर्था या वा प्रकृतय इति, तत्र प्रकृतिपक्षेधिकारस्य नदीस्रोतोरूपेण प्रतिप्रकृत्युपस्थानादुगवादिभ्यो यच्छश्चेति यच्छयोः संनिधानादविशेषादुत्सर्गापवादभावो[1] न स्यात्तव्यत्तव्यानीयरामिव विकल्प

1 अवादतेति २ पा ।

एव स्यात्, अर्थे त्ववधित्वेन गृहीते प्राक् क्रीताद्येऽस्तेर्ष्वस्योपस्थानं भवति, अवधिसजातीयो ह्यवधिमान् भवति, यथा मासात्पर इति कालः प्रतीयते, ग्रामात्पूर्व इति देशः, अलोऽन्त्यात्पूर्व इत्यलेव, ततोऽतिप्रसङ्गो न भवति, कथं समानार्थे प्रकृतिविशेषादुत्पद्यमानो यदादिः प्रकृत्यन्तरे सावकाशं छं बाधते यथा तक्रं कौण्डिन्ये दधि, अतोऽर्थावधित्वेन गृहीत इति। ननु च प्राक् ठञ इत्युच्यमाने भवतु नामैवं प्राक् ठञो याः प्रकृतय इति तथापि यदादिविषये छो न भविष्यति, ज्ञापकात्, यदयं विभाषा हविरपूपादिभ्य इति विभाषां शास्ति तज्ज्ञापयति नान्यविषये छो भवतीति, एवं च कृत्वा छ इत्येवाधिकारोऽस्तु नार्थावधिनिर्देशेन, ज्ञापकाच्च प्रतिसूत्रमुपस्थानेऽप्यन्यविषये न भविष्यति, प्राग्वतेष्ठञित्यादिके तु प्रकरणे नास्याधिकारोऽधिकारान्तरेणावष्टब्धत्वात्। सत्यम्। प्रतिपत्तिगौरवपरिहारार्थस्त्ववधिनिर्देशः, स चावधिरर्थ एव निर्देश्यो न प्रत्ययोऽन्यथा लशुनं च भक्षितं व्याधिश्च न निवृत्त इत्येतदापद्येत॥

"उगवादिभ्यो यत्"॥ 'उवर्णान्तात्प्रातिपदिकाद्गवादिभ्यश्चेति'। उवर्णादेर्गशब्दादेर्वशब्दादेश्च यद्भवतीत्यर्थो न भवति गवादिगणपाठतः। 'सनङ्गुरित्यादि'। चर्मविकारलक्षणस्याञोऽवकाशो वार्ध्रं चर्म वारत्रं चर्मेति, उवर्णान्तलक्षणस्य यतोऽवकाशः शङ्कव्यं पिचव्यमिति, सनङ्गोरुभयप्रसङ्गे परत्वादञ् प्राप्नोति। 'चरुर्नाम हविरिति'। स्थालीवचनस्य चरुशब्दस्य तदधिकरणे हविष्युपचाराद्वृत्तिः। विभाषा हविरपूपादिभ्य इत्यत्र हविर्विशेषवाचिनां ग्रहणं न स्वरूपस्य तस्य गवादिषु पाठात्, विपर्ययस्तु न भवति इह विशेषग्रहणं तत्र स्वरूपग्रहणमिति, गवादिष्वसञ्जातविरोधित्वेन स्वरूपग्रहणे बाधकाभावत्, अतो विभाषा हविरपूपादिभ्य इत्यत्रैव विशेषग्रहणमिति स्थिते तस्यावकाश आमिक्ष्यमामिक्षीयं पुरोडाश्याः पुरोडाशीया इति। 'अन्नविकारेभ्यश्चेति पठ्यतइति'। तस्यावकाशः सुराः सुर्या सुरीयाः, ओदन्याः ओदनीया इति, उवर्णान्तलक्षणस्य यतः स एव, चरुसक्तुभ्यामुभयप्रसङ्गे परत्वाद्विभाषा प्राप्नोति, 'तत्र सर्वत्र पूर्वविप्रतिषे-

धेन यत्प्रत्यय एवेष्यतइति'। अयमेव नित्यो यत्प्रत्यय इत्यर्थः। 'नभं चादेशमापद्यतइति'। भसंज्ञकं च न भवतीत्ययं त्वर्थो न भवति व्याख्यानात्, तदर्थमेव हि गणसूत्रं व्याख्यातं, प्रायेण हि वृत्तिकारो गणसूत्राणि न व्याचष्टे। 'नभ्योक्ष इति'। छिद्रवद्रथाङ्गविशेषो नाभिः, तच्छिद्रानुप्रविष्टकाष्ठविशेषोक्षः, स तदनुगुणत्वात्तस्मै हित इत्युच्यते, अञ्जनं तैलकृताभ्यङ्गः, तदपि स्नेहनत्वान्नाभये हितं, यत्तु भाष्यउक्तं, नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावादिति, तन्नभ्यं चक्रमिति प्रयोगाभिप्रायं, नहि चक्रस्य नाभिर्विकृतिरपि त्ववयवः, नापि तादर्थ्यमस्ति, अवयविनोवयवार्थत्वाभावात्, तेन तदर्थं विकृतेः प्रकृतावित्यत्रार्थे नभ्यं चक्रमिति नैव सिद्ध्यति, हितार्थस्त्वशङ्क्य एवेति न सर्वथा प्रत्ययानुपपत्तिस्तत्र विवक्षितेति भावः। 'शरीरावयवाद्यदिति यति कृतइति'। परत्वादिति भावः। 'नाभ्यं तैलमिति'। 'भवितव्यमिति'। अथात्रापि नभभावः कस्मान्न भवतीत्याह। 'गवादियतेति'। 'शुन इत्यादि'। श्वनित्यस्य सम्प्रसारणं यत्प्रत्ययश्च भवति पक्षे दीर्घश्च तत्संनियोगेनेति, यदा दीर्घत्वं तदा शुने हितं शुन्यं शून्यमिति वा नस्तद्धित इति टिलोपो न भवति, ये चाभावकर्मणोरिति प्रकृतिभावात्। नन्वनिति तत्र वर्त्तते, सम्प्रसारणे च कृते नेदमवन्तं कामं दीर्घपक्षे तद्विधानसामर्थ्याट्टिलोपो न स्यात्पक्षान्तरे तु प्राप्नोति, स[1]म्प्रसारणं बाधकबाधनार्थमन्यथा प्रकृतिभावप्रसङ्गात्, एवं तर्हि चकारद्वयमत्र पठ्यते, तत्रैकः सम्प्रसारणसमुच्चये द्रष्टव्यः, तत्रान्यस्य समुच्चेतव्यस्याभावात्सम्प्रसारणमेव पुनर्विधीयते, तत्र पुनर्विधानं तु तद्रूपस्यैवावस्थानार्थं भविष्यति। 'ऊधसोनङ् चेति'। नश्चेति नोक्तं लाघवे विशेषाभावात्, ऊधःशब्दस्यानङादेशो भवति यत्सन्नियोगेन, ऊधन्यः, ये चाभावकर्मणोरिति प्रकृतिभावः॥

"कम्बलाच्च संज्ञायाम्"॥ अयं योगः शक्योवक्तुं, कथं कम्बल्य इति, निपातनादेवैतत्सिद्धम्, अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धि-

[1] संप्रसारणविधानं तु टिलोपार्थमेव स्यादन्यथा ये चाभावकर्मणोरिति प्रकृतिभावप्रसङ्गात्।

तलुकीति, इदं तर्हि प्रयोजनं संज्ञायामिति वक्ष्यामीति, एतदपि नास्ति प्रयोजनं, परिमाणपर्युदासेन पर्युदासे प्राप्ते तत्र कम्बल्यग्रहणं परिमाणस्य च संज्ञा कम्बल्यशब्दः, एवं तर्हि स्वरार्थं वचनं, निपातनेन हि परिमाणे कम्बल्यशब्दः साधुरित्येतावदवगम्यते न तु यदन्तोयमिति, ततश्चान्तस्वरितत्वं न स्यात्, अथ निपातनएवान्तस्वरितत्वं पठेत, तत्र व्याख्यानं शरणं व्याख्यानाच्च लघु सूत्रम् ॥

"विभाषा हविरपूपादिभ्यः" ॥ 'हविर्विशेषवाचिभ्य इति'। स्वरूपस्य ग्रहणं न भवति तस्य गवादिषु पाठात्, विपर्ययस्तु न भवति तत्र विशेषाणां ग्रहणमिह स्वरूपस्येति, असंजातविरोधित्वेन तत्रैव स्वरूपग्रहणस्य न्याय्यत्वात्। 'अन्नविकारेभ्यश्चेति'। अन्नविकारा अन्नप्रकारा अदनीयविशेषा इत्यर्थः, तेभ्यश्च विभाषा यद् भवति ओदन्या ओदनीयाः, यद्येवमपूपादीनां किण्वपर्यन्तानां पाठोनर्थकः, अन्नविकारत्वादेव सिद्धेः, सुराप्रकृतिद्रव्यं किण्वं, नानर्थकः प्रपञ्चार्थत्वात्, अपर आह। यदा सादृश्यादिनापूपादयोर्थान्तरउपचर्यन्ते तदर्थं एषां पाठ इति ॥

"तस्मै हितम्" ॥ तस्मादिति हितयोगे चतुर्थी वक्तव्येति चतुर्थी। अपर आह। अयमेवनिर्देशो ज्ञापको हितयोगे चतुर्थी भवतीत्यस्येति, तच्चिन्त्यम्, चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरिति आशिषि विषयविशेषे हितयोगे चतुर्थ्याः सम्भवात् ॥

"शरीरावयवाद्यत्" ॥ 'शरीरं प्राणिकाय इति' ॥ एतेनैतद्दर्शयति शीर्यतइति शरीरमिति, शृणातेरीरन् प्रत्ययमुत्पाद्य यद्यपि शरीरशब्दो व्युत्पाद्यते तथापि योगरूढत्वात्प्राणिकायएव वर्त्तते न घटादाविति ॥

"खलयवमाषतिलवृषब्रह्मणश्च" ॥ 'ब्रह्मण्यमिति'। पूर्ववट्टिलोपाभावः, वृषशब्दोयमकारान्तो गृह्यते न तु नकारान्तः, अन्यथाऽसन्देहार्थं नकारलोपमकृत्वैव निर्दिशेत्, यथात्मन्विश्वजनेति, अस्ति च नकारान्तस्तत्र वक्तव्यं ततोपि यद्भवतीति, अन्यथा तत्र छे टिलोपे च वृषीयमिति प्राप्नोति, तस्य च वृषशब्द आदेशो वक्तव्यः, अन्यथा

वृषण्य इति स्यात्, तथा ब्रह्मशब्दो नकारान्तो गृहीतः ब्राह्मणशब्दश्चाकारान्तोस्ति तत्र वक्तव्यं ब्राह्मणशब्दादपि यद्भवतीति, अन्यथा ततश्छः स्यात्, तस्य च ब्रह्मन्शब्द आदेशो वक्तव्यः, अन्यथा ब्राह्मण्यमिति प्राप्नोति, इत्यस्मिन्पूर्वपक्षइदमाह । 'वृष्णे हितमित्यादि' । 'छप्रत्ययोपि न भवतीति' । यत्प्रत्ययस्तु तावत्सूत्रेनुपादानादेव न भवति, न केवलं स एवा ऽपि तु छप्रत्ययो[1]पीत्यपिशब्दस्यार्थः । कुत इत्याह । 'अनभिधानादिति' । तदनेनाप्यव्यविकन्यायो दर्शितः, त्रैशब्द्यं हि नः साध्यं वृषाय हितं वृष्यं वृष्णे हितं तथा ब्रह्मणे हितं ब्रह्मण्यं ब्राह्मणाय हितमिति तत्र द्वयोः शब्दयोः समानार्थयोरेकत्र विग्रहएवापरत्र विग्रहश्च वृत्तिश्च भविष्यति, तद्यथा ऽविकस्य मांसमाविकमवेर्मांसमिति । 'रथाय हिता रथ्येति' । हितार्थएव यथा स्याद्र्थान्तरे मा भूदित्येवमर्थं गवादिषु पाठो नाङ्गीकृतः । के चि[2]त्तदन्तविधिमिच्छन्ति रथसीताहलेभ्यो यद्विधाविति, अपरे तु हलसीताभ्यां साहचर्याच्चातुरर्थिकएव तदन्तविधिर्भवति न स्वस्मिन्निति ॥

"अजाविभ्यां थ्यन्" ॥ अजशब्दो ऽयमिह पुल्लिङ्ग उपात्तः, अत एव द्वन्द्वे घीत्यविशब्दस्य पूर्वनिपातं बाधित्वाजाद्यदन्तमित्यजशब्दस्य पूर्वनिपातः कृतः, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति स्त्रीलिङ्गादपि थ्यन् भवत्येव, अजायै हितमजथ्यं, तसिलादिषु थ्यन्पाशाविति परिगणनात्पुंवद्भावः ॥

"आत्मन्विश्वजनभोगोत्तरपदात्खः" ॥ इहोत्तरपदग्रहणं व्याप्तिन्यायेन सर्वैः संबध्येत प्रत्यासत्तिन्यायेन भोगशब्देनैव वा, तत्राद्यं पक्षं निराकरोति । 'आत्मन्निति नलोपो न कृत इति' । विवक्षितां प्रकृतिं कार्त्स्न्येन निर्दिशेयमिति नलोपो न कृतः, प्रत्येकं सम्बन्धे चोत्तरपदग्रहणस्य नैतावती प्रकृतिः स्याद् अतो नलोपाकरणेन प्रत्येकं सम्बन्धे निवारिते भोगशब्देनैव संबध्यतइत्यर्थः । 'कर्मधारयादिष्यतइति' । व्याख्यानमत्र शरणम् । 'षष्ठीसमासादिति' । विश्वस्य जनो विश्वजनः

१ अत्रेति २ पु॰ अधिकम् ।

सर्वसाधारणो वेश्यादिः। 'बहुव्रीहेश्चेति'। विश्वो जनोऽस्येति स एव वेश्यादिरन्यपदार्थः। 'पञ्चजनादिति'। रथकारपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः। दिक्संख्ये संज्ञायामिति समासः। 'पञ्चजनीयमन्यदिति'। षष्ठीसमासाद्बहुव्रीहेश्च छ एव भवतीत्यर्थः। यदा च प्रकरणादिवशाद्विशिष्टसंख्येयवृत्तित्वावसायः संख्याशब्दानां तदा सापेक्षत्वाभावादविरुद्धः समासः, जनादिनैव साक्षात्सम्बन्धादन्यथा तु संख्येयस्यैव जनापेक्षया व्यतिरेकस्तद्द्वारेण तु संख्यागुणस्येति साक्षात्सम्बन्धाभावाद्दुर्लभः षष्ठीसमासः। 'सर्वजनादिति'। पूर्वकालैकसर्वेति कर्मधारयः। 'महाजनान्नित्यमिति'। नित्यग्रहणं सर्वजनादुक्तो खो मा भूदिति। 'तत्पुरुषादेवेति'। अत्र कर्मधारयादेवेति नोक्तमात्वनिर्द्देशेनैव षष्ठीसमासव्यावृत्तिसिद्धेः, इह पितृभोगीणादिशब्दैः पित्रादिहितस्यार्थस्याभिधानमिष्यते पित्रादिभोगहितस्य तु प्राप्नोति, भोगशब्दश्चायमस्त्येव द्रव्यपदार्थकः, तद्यथा भोगवानयं देश उच्यते यस्मिन् गावः सस्यानि च वर्त्तन्ते, भुज्यत इति भोगः, अस्ति च क्रियापदार्थः, तद्यथा भोगवानयं ब्राह्मण उच्यते यः सम्यक् स्नानादिकाः क्रिया अनुभवति, अस्ति च शरीरवाची, अहिरिव भोगैः पर्येति बाहुमिति दर्शनात्, अत्र समुदाये प्रवृत्तस्य भोगशब्दस्यैकदेशेषु फणेषु प्रयोगः, न चाहेरेव शरीरं भोगोऽपि तु सर्वं शरीरम् अनन्तत्वात्प्रयोगविषयस्यावधारणस्य कर्त्तुमशक्यत्वात्, निघण्टुषु तु प्रयोगबाहुल्यादहिशरीरे प्रयोगः, सर्वेष्वपि चार्थेषु विवक्षिताभिधानं न प्राप्नोति तस्माचायं भोगोत्तरपदात्खो विधेयः, पित्रादिभ्य एव तु भोगीनच्प्रत्ययो विधेयः, पित्रे हितः पितृभोगीण इति, यद्येवं वावचनं कर्त्तव्यं मात्रीयं पित्रीयमिति यथा स्याद् अन्यथा भोगीनचा बाधितत्वाच्छो न स्यात्, इह च ग्रामणिभोगीनः सेनानिभोगीन इतीको ह्रस्वोऽङ्यो गालवस्येत्युत्तरपदनिबन्धनं ह्रस्वत्वं न स्यात्, इह चाभ्भोगीन इत्यपो भीति भकारादौ प्रत्यये विधीयमानं तत्वं प्राप्नोति, भोगोत्तरपदात्तु खविधाने नैते दोषाः, अर्थविरोधस्तु भवति तं परिहरति। 'भोगशब्दः शरीरवाचीति'। तत्र शरीरशरीरिणोरभेदाद्य एवार्थो मात्रे हित इति स एव मातृभोगाय हित

इत्यपि विग्रहे भवतीति भावः, एवं भोगोत्तरपदात्खविधानेप्यर्थविरोधं परिहृत्य तत्रैव गुणमाह । 'केवलेभ्यो मात्रादिभ्यश्छ एव भवतीति'। एवकारो भवतीत्यस्यान्तरं द्रष्टव्यः, भोगीनच्प्रत्ययविधाने तु छो न स्यादेवेत्येवशब्दस्यार्थः। 'राजाचार्याभ्यामिति'। राजाचार्याभ्यां हितार्थे यदि प्रत्ययो भवति नित्यं भोगोत्तरपदाभ्यामेव स च ख एवेत्यर्थः । 'न केवलाभ्यामिति'। अत्र प्रत्यय इष्यतइत्येतावदपेक्ष्यते न तु खप्रत्यय इष्यतइति, प्राप्त्यभावात्, अत एव के चित्खः प्रत्यय इष्यतइति व्यस्तं पठन्ति। 'आचार्यादणत्वं चेति'। भोगोत्तरपदादिति गम्यते, इदानीमेव ह्युक्तं राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेवेति॥

"सर्वपुरुषाभ्यां णढञौ" ॥ 'सर्वादिति'। अनुकरणत्वात्सर्वनामकार्याभावः, सर्वनामानीत्यन्वर्थसंज्ञाविज्ञानात्प्रकृतिवदनुकरणमित्यपि सर्वनामत्वं न भवति, अनाश्रितार्थस्य शब्दरूपस्यानुकरणात् । 'पुरुषाद्धेति'। प्रत्ययार्थसामर्थ्येन षष्ठीसमर्थविभक्तिर्लभ्यते कृते तु तेनेत्युपात्तैव तृतीया, भाष्यकारप्रयोगाच्च द्वन्द्वमध्येपि तेनेत्यस्य निवेशः, तत्र वधे तस्येदमित्यणोपवादः, विकारे प्राणिरजतादिभ्योञित्यञः, समूहेपि तस्य समूह इत्यण एव, तेन कृतेपि ग्रन्थात्मके कृते ग्रन्थइत्यण एव, पौरुषेयः प्रासाद इत्यत्र न कस्य चिदपवादः ॥

"माणवचरकाभ्यां खञ्" ॥ मनोरपत्यं कुत्सितं माणवः, अपत्ये कुत्सिते मूढइति णत्वं, चरतीति चरः पचाद्यच्, चरिचलिपतिवदीनामिति द्विर्वचनं विकल्पितत्वादिह न भवति, ततः संज्ञायां कन् चरकः, खञो ञित्करणं वृद्ध्यर्थं स्वरार्थं च, चरके वृद्ध्यर्थं माणवे वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधार्थं माणवीभार्यः ॥

"तदर्थं विकृतेः प्रकृतौ" ॥ 'प्रकृतिरुपादानकारणमिति'। उपादीयतेस्मात्कार्यमित्युपादानम् उपादानं च तत्कारणं च उपादानकारणं, कार्यस्य हि त्रीणि कारणानि उपादानकारणमसमवायिकारणं निमित्तकारणमिति, तत्र कार्यणापृथक्देशं यद्बुद्धिः कार्येष्वनुवर्त्तते तद्यथा मृदयं कुम्भः तन्तवः पटो हिरण्यं कुण्डलमिति तदुपादानकारणम्, उपादा-

नकारणप्रत्यासन्नमसमवायिकारणं यथा तन्तुसंयोगः पटस्य, तटस्थं तु कारणं निमित्तकारणं तन्तुवायादि, तदेतेषु त्रिषु यदुपादानं सा प्रकृतिः, तस्यैवोपादानकारणस्योत्तरमवस्थान्तरं विकृतिरिति, अनेन कार्योपादानयोरभेदमाह, यथाहि शिक्यं रज्जुरिति न तत्त्वान्तरम्, अथ च न रज्जुमात्रे शिक्यप्रतीतिरेवमत्रापि मृदेव घटस्तन्तव एव पटः सुवर्णमेव कुण्डलम् अथ च न मृदादिमात्रे घटादिप्रतीतिः, यद्यपि वृक्षादिषु न बीजादिप्रतीतिर्भवति या तु बीजस्यानन्तरावस्था तत्र तत्प्रतीतिर्भवत्येव, एवं तदनन्तरादिष्ववस्थासु पूर्वपूर्वा प्रतीतिर्द्रष्टव्या, वृक्षस्य तु बीजं परम्परयोपादानकारणमिति सर्वमवदातम्। 'विकृतिवाचिन इति'। ननु समर्थानां प्रथमादिति वचनात्तदर्थस्य चेह प्रथमनिर्देशात्प्रकृतेश्च तदर्थत्वात्तद्वाचिन एव प्रत्ययः प्राप्नोत्यत आह। 'तदिति सर्वनाम्ना विकृतिः प्रत्यवमृश्यतइति'। तेन विकृतिरेव सर्वतः प्रथमनिर्दिष्टेति भावः। 'विकृत्यर्थायां प्रकृतौ प्रत्यय इति'। एतेन तदर्थमिति सप्तम्याः स्थाने प्रथमा स्त्रीलिङ्गस्य च स्थाने नपुंसकलिङ्गमिति दर्शयति। 'तदर्थग्रहणेनेत्यादि'। इह प्रकृतिविकारवाक्ये क्वचिद्योग्यतामात्रं विवक्ष्यते मूत्राय कल्पते यवागूरिति, क्वचित्प्रकृत्यन्तरव्यावृत्तिः, यथा यवानां धाना धानानां सक्तव इति, क्वचित्प्रकृतेरनन्यार्थता यथाङ्गारेभ्य एतानि काष्ठानीति, तत्रेह चरमोऽर्थो विवक्षित इति प्रतिपादनाय तदर्थग्रहणं कृतमित्यर्थः, किं सिद्धं भवति तदाह। 'न प्रकृतिविकारेति'। 'प्रत्ययार्थस्य चेत्यादि'। विकृत्यर्थायां हि प्रकृतौ प्रत्यय उच्यते तच्च तस्यास्तादर्थ्ये चतुर्थ्यैव शक्यते बोधयितुमित्येतत्सामर्थ्यम्। 'केचित्त्विति'। तेषां वचनादेव लभ्या चतुर्थी। 'यवानां धाना इति'। येषां सामर्थ्यलभ्या चतुर्थी तेषामिदं प्रत्युदाहरणं, ये तु तस्मादित्यनुवर्त्तयन्ति तेषां मूत्राय कल्पते यवागूरिति द्रष्टव्यम्। 'या काचिदिति'। अनुपादानकारणभूतापीत्यर्थः, तत्रैतस्याद् न कूप उदकस्य काचिदपि प्रकृतिस्तत्राह। 'भवति चेति'। कुत इत्याह। 'तत्रेति'। यथैव हि प्रयाजादीनां धर्माणामुत्पत्त्याधारत्वाद्दर्शपूर्णमासौ प्रकृतिः सौर्यादीनामेवमुदकधर्माणां क्षारत्वादीनामुत्पत्त्याधारत्वात्कूप

उदकस्य प्रकृतिरित्यर्थः, यद्येवमुदकमपि तस्य विकृतिरेव सौर्यादिवदित्यत आह । 'नत्विति' । कुत इत्यत आह । 'अत्यन्तभेदादिति' । तस्यैवोत्तरमवस्थान्तरं विकृतिरित्यत्र कार्योपादानयोरभेदो दर्शितः, उदकं तु कूपादत्यन्तभिन्नमत्यन्तग्रहणे नैतद्दर्शयति कार्यकारणयोर्नात्यन्तभेदः, मृदयं कुम्भ इति प्रतीतेः, नाप्येकान्ततस्तत्त्वं मृन्मात्रे कुम्भप्रतीतेरभवात्, तस्मात्कथञ्चिद्भेदः कथञ्चिच्चाभेदः, एतेन जातितद्वतोर्गुणगुणिनोश्च भेदाभेदौ व्याख्यातौ । 'न तु कोशी तस्य प्रकृतिरिति' । अतत्कारणत्वादनुत्पत्त्याधारत्वाच्च, चर्मपिनद्धं दार्वादिनिर्मितमस्यादीनां प्रक्षेपस्थानं कोशी, ननु च प्रकृतिर्विकृतिरिति च सम्बन्धिशब्दावेतौ सम्बन्धिशब्दाश्च नियतमेव सम्बन्धिनमुपस्थापयन्ति, तद्यथा मातरि वर्त्तितव्यमित्युक्ते न चोच्यते स्वस्यामिति, अथ च या यस्य माता तस्यामिति गम्यते, एवं चात्रान्यतरोपादानेऽप्यन्यतरस्य प्रतीतिः सिद्धेत्यत आह । 'द्वयोरपीति' । एवं मन्यते, विपूर्वोऽयं करोतिरस्त्येवापकारे दैवं मे दौरथ्यं विकरोतीति, अस्ति चेष्टानानात्वे विकुर्वते छात्रा इति, अस्त्यनौचित्ये विकृतिरेषा स्त्रीणां यत्स्वातन्त्र्यं नामेति, अस्ति कार्ये तन्तूनां विकारः पट इति, तथा प्रपूर्वोऽपि करोतिरनेकार्थः, अस्ति कारणे तन्तवः प्रकृतिः पटस्येति, सांख्यास्तु सत्त्वरजस्तमसां गुणानां साम्यावस्थां प्रकृतिमाहुः, अस्ति दोषापगमे प्रकृतिस्थं मन इति, अस्ति स्वभावे प्रकृत्याभिरूप इति, अस्ति धर्माणामुत्पत्त्याधारे यथोक्तं पुरस्तात्, तदेवमनेकार्थत्वान्नानयोरैकान्तिकं सम्बन्धिशब्दत्वमित्यन्यतरोपादानेन विवक्षितः प्रकृतिविकारभावो लभ्यत इति, तस्य विकार इत्यत्र तु अभिधानस्वभावादेव कार्यस्य ग्रहणं नापकारादेः ॥

"छदिरुपधिबलेर्ढञ्" ॥ छाद्यतेनेनेति छदिः, अर्चिशुचिहुसृपिच्छादिभ्य इसिः, इस्मन्त्रन्क्विषु चेति ह्रस्वत्वम् । 'छादिषेयाणि तृणानीति' । यदा तु चर्मविकारश्छदिस्तदा परत्वाच्चर्मणोऽञित्यञ् प्राप्नोति तत्र पूर्वविप्रतिषेधेन ढञेवेष्यते छादिषेयं चर्मेति, आह च यज्ञ्यावञः पूर्वविप्रतिषेधेन ढञ् चेति, वृत्तिकारेण तु प्रतिपदविधेर्बलीयस्त्वान्नैतदुपन्यस्तमित्याहुः, नेति वयं, ढञोऽपि छादिषेयाणि तृणानीत्यत्र चरितार्थत्वात् ।

'बालेयास्तण्डुला इति'। कथं पुनरत्र प्रकृतिविकृतिभावः, यदा बल्यवस्थायामपि तएव तण्डुलाः, नावश्यं यत्प्रकृत्युपमर्द्दनेनैव भवति स एव विकारः, तदेव गुणान्तरयुक्तमपि विकारः, अस्ति च बल्यवस्थायां हरिद्रायोगेन तण्डुलानां गुणान्तरयोगः, अन्ततः प्रक्षालनेन श्वैत्यमार्द्रतामादेवं सन्निवेशविशेषो वा भवति। 'उपधिशब्दात्स्वार्थे प्रत्यय इति'। इष्टिरेषा, किं पुनः कारणमधिकारप्राप्तो नेष्यतइत्याह। 'उपधीयतइत्युपधिरित्यादि'। यदेव हि तद्रथाङ्गमुपधीयमानत्वादुपधिशब्देन कर्मणि किप्रत्ययान्तेनोच्यते, यद्यपि तस्य प्रकृतिरस्ति तथापि तत्र न ठञन्तं वर्तते किं तर्हि तत्रैव हि रथाङ्गे, स्वभावश्चात्र हेतुः, न च तदेव तस्य प्रकृतिर्भवति, अतः स्वार्थे प्रत्यय एषितव्यः, अथायमुपधानमुपधिरिति क्रियावचन उपधिशब्दस्तादर्थ्यमपि सम्भवति उपधानक्रियार्थत्वाद् द्रव्यस्येत्युच्यते, एवमपि क्रियाविकारो न भवति, क्रियापि विकारो भवति बहुविकारोयं मनुष्यो हसति नृत्यति गायतीति दर्शनात्, सत्यं, तदर्थं विकृतेः प्रकृतावित्यत्र तु विशिष्ट एव प्रकृतिविकारभावो गृह्यते यत्र प्रकृतेरुच्छेदो यत्र वा रूपान्तरापत्तिरत एव तत्र विवक्षितः प्रकृतिविकारभाव इत्युक्तम्॥

"ऋषभोपानहोर्ञ्यः"॥ 'आर्षभ्यो वत्स इति'। महाप्राणः संहननवान् सुजातावयवो यो वत्स ऋषभावस्थाप्राप्तये पोष्यते। 'चर्मण्यपीति'। ञ्यस्यात्रकाश औपानह्यो मुञ्जः, अञोकाशो वाह्यं चर्म, उपानच्छब्दाच्चर्मणि प्रकृतित्वेन विवक्षिते सति परत्वादञ् प्राप्नोति पूर्वविप्रतिषेधेन ञ्य एव भवति, ये तु सावकाशत्वे सत्यपि प्रतिपदविधानं बलियस्त्वे कारणमाहुस्तेषामयं पूर्वविप्रतिषेधोसङ्गतः स्यात्॥

"चर्मणोञ्"॥ 'चर्मण इति षष्ठीति'। पञ्चम्यां तु चर्मन्शब्दाच्चर्मार्थायां प्रकृतौ प्रत्ययः स्यात् चर्मणे द्वीपीत्यादौ, न चैवमभिधानमस्ति॥

"तदस्य तदस्मिन् स्यादिति"॥ 'सम्भावने लिङिति'। सम्भावनेलमिति चेत्यादिना, इष्टकानां बहुत्वेनेत्यादिना सूत्रार्थमुदाहरणेषु दर्शयति, प्रकृतिविकारभाव इत्यादिना तदर्थं विकृतेरित्यादिना सिद्धिं

दर्शयन्सूत्रारम्भं समर्थयते । 'योग्यतामात्रमिति' । तथा चान्यार्थास्वपीष्टकासु वक्तारो भवन्ति प्राकारीया इष्टका इति । 'द्विस्तद्ग्रहणमित्यादि' । ननु विपरीतमिदं प्रत्येकं सम्बन्धे ह्यत्र द्विस्तद्ग्रहणमनर्थकमतोत्र द्विस्तद्ग्रहणादन्यत्र समुदायेन सम्बन्धो युक्त इति, सत्यमयमपि तु प्रकारः सम्भवतीति न्यायप्राप्तं प्रत्येकं सम्बन्धमस्मिन्सूत्रे स्थित्वा उदाहरणरूपेण दर्शयतीति तदिदमुक्तम् । 'न्यायप्रदर्शनार्थमिति' । प्रदर्शनं दिगुदाहरणमित्यर्थः, यदि पुनरयं न्यायोत्र न प्रदर्श्येत तदा तदस्यास्त्यस्मिन्निति मतुबित्यत्र समुदायेन समर्थविभक्तिसम्बन्धो विज्ञायेत ततश्च शाखावान्वृक्ष इत्यादौ यत्र द्वाभ्यां प्रत्ययार्थाभ्यां समर्थविभक्तेः सम्बन्धः सम्भवति तत्रैव स्यात्, यत्र त्वन्यतरेण सम्बन्धो गोमान्देवदत्तो वृक्षवान्पर्वत इति तत्र न स्यात् । 'अथेहेति' । यदा ब्राह्मणार्थं निर्मितं प्रासादं गुणवन्तं च देवदत्तं पश्यन्सम्भावयति तदा तस्य प्रसङ्गः ॥

"प्राग्वतेष्ठञ्" ॥ 'वक्ष्यति पारायणतुरायणेति' । अत्र तु प्रदेशेस्य करणमुत्तरसूत्रे येषां पर्युदासस्तेभ्यष्ठञ् यथा स्यादिति गौपुच्छिकः साम्प्रतिकः, ठञित्येवाधिकारे सिद्धे प्राग्वतेरिति वचनं मध्ये योधिकारवानपवादः सर्वभूमिपृथिवीभ्यामणञौ शीर्षच्छेदाद्यच्चेत्येवमादिस्तेन विच्छेदेपि पारायणतुरायणेत्येवमादौ ठञेव यथा स्यादित्येवमर्थं, यद्यप्यत्र प्रत्ययोवधित्वेन गृहीतस्तथाप्यर्थेष्वेवोपतिष्ठते न तु प्रकृतिषु तेनापवादविषये न भवति, तथा च शूर्पादञन्यतरस्यामित्यन्यतरस्यांग्रहणमर्थवद्भवति ॥

"आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्" ॥ 'तदर्हतीति वक्ष्यतीति' । तदेकदेशोर्हशब्दो निर्दिश्यतइति भावस्तदाह । 'आ एतस्मादर्हसंशब्दनादिति' । तदर्हमित्ययं त्ववधिर्न भवति यदि स्यादार्हादित्यनर्थकं प्राग्वतेरित्येव सिद्धत्वात्, ननु च वत्यर्थेपि ठको विधिर्यथा स्यादित्येवमर्थमार्हादिति वचनं स्याद् एवमप्याङ एव निर्देशः कर्त्तव्यो वतेरित्येवाभिविधावाकारः, एवमप्युपसर्गाच्छन्दसि धात्वर्थइत्यत्रापि वत्यर्थे ठक् प्राप्नोति तस्माद्व्याख्यानमेवात्र शरणम् । 'गोपुच्छादीन्वर्जयित्वेति' ।

अगोपुच्छशब्दात्सङ्ख्यावाचिनः परिमाणशब्दाच्चेत्ययं त्वर्थो न भवति यदि स्यान्निष्कादिषु द्रोणशब्दस्य परिमाणवाचिनः षष्ठिशब्दस्य सङ्ख्यावाचिनः पाठोनर्थकः स्याद् अनेनैवसिद्धत्वा,न्नानर्थकः, नियमार्थं पुनर्वचनं स्यादसमासएव यथा स्यादिति, नैतदस्ति, विधिनियमसम्भवे विधिरेव ज्यायस्त्वात्। 'अभिविधौ वायमाकार इति'। यदि तु मर्यादायां स्यात्तस्य ग्रहणमनर्थकं स्यात् प्राग्ग्रहणानुवृत्त्यैव सिद्धत्वात्, तेन किं सिद्धं भवति तदाह। 'अर्हत्यर्थेपि ठञ्भवत्येवेति'। 'सङ्ख्यापरिमाणयोः को विशेष इति'। परिमीयते परिच्छिद्यते येन तत्परिमाणं सङ्ख्ययापि च परिच्छिद्यतइति प्रश्नः। 'भेदगणनं सङ्ख्येति'। भिद्यतइति भेदः, मिथो भिन्नाः पदार्थाः ते गण्यन्ते येन तद्भेदगणनम्, एकत्वादिसङ्ख्यासामान्योपक्रमत्वाद्भेदगणनी सङ्ख्येति न भवति, भेदगणनमित्यनेन पृथक्त्वनिवेशितत्वमाह, यथोक्तं पृथक्त्वनिवेशितत्वात्सङ्ख्यया कर्मभेदः स्यादिति, एकत्वसङ्ख्यापि बहुषु बुद्ध्या सन्निवेशितेषु भेदमेकमसहायमाह, एतदुक्तं भवति एको घट इत्यत्रापि द्व्यादिनिरासाद्भेदावगतिरस्त्येवेति। 'गुरुत्वमानमुन्मानमिति'। तुलादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वमुन्मीयते तदुन्मानमित्यर्थः। 'आयाममानं प्रमाणमिति'। आयामो दैर्घ्यं स येन मीयते तदायाममानम्, एतच्च क्वचित्तिर्यगभिमुखस्य वस्तुनो भवति यथा वस्त्रादेर्हस्तादि, क्वचिदूर्ध्वाधरदिगवस्थितस्य भवति हास्तिनमुदकम् ऊरुद्वयसमुदकमिति। 'आरोहपरिणाहमानं परिमाणमिति'। आरोह उच्छ्रायः, परिणाहो विस्तारः, ताभ्यामारोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादि परिमीयते तत्परिमाणं, परिः सर्वतोभावे, सङ्ख्यापरिमाणयोर्विशेषे पृष्टे उन्मानादेर्विशेषप्रदर्शनं प्रसङ्गेन तद्विशेषस्याप्यज्ञानस्यापनयनार्थम्। 'ऊर्ध्वमानमिति'। ऊर्ध्वारोपणाद्गुरुत्वमानमुन्मानमिति पूर्वोक्त एवार्थः, किलशब्दः प्रसिद्धौ। 'परिमाणं तु सर्वत इति'। ऊर्ध्वमानमित्युपसमस्तमपि मानमित्येतदत्रापेक्ष्यते, एतदर्थमेव केचिदूर्ध्वं मानमिति व्यस्तं पठन्ति। 'आयामस्येति'। मानमित्यपेक्ष्यते, कर्मणि षष्ठी, प्रसिद्धस्तु पाठ

आयामस्त्विति तत्रायामपरिच्छेद्यार्थे उपचारादायामशब्देनोक्त। 'सङ्ख्या बाह्या तु सर्वत इति'। पूर्वोक्तादुन्मानादेः सर्वतो बाह्या तत्रानन्तर्भावात् तस्याश्च सङ्ख्यायतेनयेति निर्वचनं भेदगणनलक्षणत्वं व्याख्यातव्यमित्यनुसन्धातव्यम् ॥

"असमासे निष्कादिभ्यः" ॥ 'ठञोपवाद इति'। येन नाप्राप्तिन्यायेन निष्कादिभ्यो हि द्रोणपर्यन्तेभ्यः परिमाणशब्दात्वष्ठिशब्दाट्टुकः पर्युदासे ठञेव प्राप्नोत्यतस्तस्यैवायमपवादः। 'तदन्ताप्रतिषेधस्येति'। तदन्तविधावप्रतिषेधस्येत्यर्थः, यदि तर्हि तदन्तात्प्रत्ययो विज्ञायते एवं तर्हि व्यपदेशिवद्भावो प्रातिपदिकेनेति केवलेभ्यो नोपपद्यते, नैष दोषः, असमासग्रहणे न हि ग्रहणवत्परिभाषाया निवृत्तिराख्याता तन्निवृत्तौ येन विधिस्तदन्तस्येति तदन्तता, अत्र स्वस्य च रूपस्य प्रकृतत्वात्केवलादपि भवति। यस्तु मन्यते पूर्वत्रोपादानसामर्थ्यात्केवलादपि स्यादिति तस्य हि लाघवार्थं केवलानां पाठः स्यादिति यत्किञ्चिदेतत्। 'इत उत्तरं चेति'। कथं पुनरिष्यमाणोऽपि तदन्तविधिर्लभ्यते यावता ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नेति प्रतिषिध्यते, अस्याः परिभाषाया अनित्यत्वात्, अनित्यत्वं च तस्या गर्गादिषु वाजासइति समासप्रतिषेधाद्गम्यते, नित्यत्वे हि सति वाजशब्दादुत्पद्यमानस्य प्रत्ययस्य समासे प्राप्तिरेव नास्तीति समासे प्रतिषेधं न कुर्यात्। 'द्विशूर्पमिति'। द्वाभ्यां शूर्पाभ्यां क्रीतमिति तद्धितार्थे द्विगुं कृत्वा न तावदेषा लुगन्ता प्रकृतिरिति संख्यापूर्वपदादपि शूर्पादञन्यतरस्यामित्यञेव क्रियते तस्याध्यर्धपूर्वद्विगोर्लुगसंज्ञायामिति लुक्। 'द्विशौर्पिकमिति'। परिमाणान्तस्यासंज्ञाशाणयोरित्युत्तरपदवृद्धिः। यदुक्तमित उत्तरं संख्यापूर्वपदानां तदन्तविधिरिष्यतइति यच्चोक्तं लुगन्तायास्तु प्रकृतेर्नेष्यतइति तदुभयमाप्तागमेन स्थिरीकर्त्तुमाह। 'तथा चोक्तमित्यादिना' ॥

"शताच्च ठन्यतावशते" ॥ 'कनोपवादइति'। उत्तरसूत्रेण प्राप्तस्य। 'शतकमिति'। तदस्य परिमाणमिति वर्त्तमाने संख्यायाः संज्ञासङ्घसू-

त्राध्ययनेष्विति सङ्घप्रत्ययार्थे विवक्षिते उत्तरसूत्रेण कनेव भवति। 'प्रत्ययार्थोऽत्र सङ्घ इति'। शतमध्यायानां परिमाणं यस्य निदानाख्यस्य ग्रन्थस्य स इह प्रत्ययार्थः स च शतसंख्यावच्छिन्नाध्यायसमुदायात्मक इति सङ्घः प्रत्ययार्थो भवति। 'शतमेव वस्तुत इति'। शतात्तस्यानन्यत्वात् ततश्च प्रकृत्यर्थान्न भिद्यते यदेवाध्यायानां शतं प्रकृत्याभिधीयते प्रत्ययान्तेनापि तदेवेति नेह प्रकृत्यर्थात्प्रत्ययार्थस्य भेदः, एतेन यत्राव्यतिरिक्तः प्रत्ययार्थात्प्रकृत्यर्थस्तत्र प्रतिषेधो भवति न व्यतिरिक्त इत्येतदाख्यातं, ननु च सङ्घे चानौत्तराधर्ये सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्वित्यत्र च प्राणिसमूहे सङ्घशब्दो गृह्यते तत्कथमत्र ग्रन्थविषयो गृह्यते, उपचारेणेत्यदोषः, यदि वा संज्ञासङ्घसूत्रे शब्दसाहचर्याद्विशिष्टः सङ्घो गृह्यते, सङ्घे चानौत्तराधर्यइत्यत्रापि छन्दोनाम्नीत्यतश्छन्दोग्रहणानुवृत्तेः प्राणी गृह्यते, इह तु यत्नान्तराभावाद्ग्रन्थस्यापि ग्रहणमित्यदोषः, ननु च शतेभिधेये नं भवितव्यम् इह च शत्यं शाटकशतं शतिकं शाटकशतमित्युक्ते शतं प्रतीयतएव तत्किमिति प्रतिषेधो न भवतीत्यत आह। 'वाक्येनेत्यादि'। शत्यशतिकशब्दौ समान्यशब्दौ, सामान्यशब्दाश्च प्रकरणादिकमन्तरेण न विशेषे वर्त्तन्ते, न यावच्छाटकशतमित्येतत्पदान्तरं प्रयुज्यते तावत्प्रत्ययार्थस्य शतत्वं नावसीयते तस्मात्पदान्तरसंनिधौ गम्यमानत्वाद्वाक्यार्थोसौ भवति। 'न श्रुत्येति'। गम्यतइति सम्बन्धः, यत्र प्रत्ययान्तेन पदान्तरनिरपेक्षेण प्रत्ययार्थस्य शतत्वमाख्यायते तत्र श्रुत्या प्रत्ययान्तश्रवणमात्रेणैव गम्यते यथा प्रत्युदाहरणे शतं परिमाणमस्य शतकमित्युक्ते गम्यते एतत्प्रत्ययार्थोपि शतमेवेति, इह तु वाक्याच्छतत्वं प्रतीयते, न च पदसंस्कारकाले वाक्यार्थस्याङ्गभावोस्ति तदा तस्यानुपस्थानात्, प्रकृत्यर्थादव्यतिरिक्ते प्रत्ययार्थे प्रतिषेधो भवति, नव्यतिरिक्ते वाक्यगम्यइत्येतदाप्तवचनेन द्रढयितुमाह। 'तथा चोक्तमित्यादि'। शतप्रतिषेधे कर्त्तव्ये प्रकृत्यर्थादन्यस्य च प्रत्ययार्थस्य शतत्वे सत्यप्रतिषेधः, एतदुक्तं भवति, यत्रान्यत्प्रकृत्यर्थे शतमन्यत्प्रत्ययार्थेशतं तत्र विधिरेव भवति न प्रतिषेधः, केन पुनः समासे प्राप्नोति यतस्तत्प्रतिषेधार्थमसमासानुकर्षणार्थश्चकारः क्रियतइत्याह। 'प्राग्वतेरित्यादि'।

"संख्याया अतिशदन्तायाः कन्"। 'पञ्चकः पट[1] इति'। लौकिक्याः संख्याया उदाहरणम् । 'बहुक इति'। पारिभाषिक्याः। 'चात्वारिंशत्क इति'। इसुसुक्तान्तात्कः। 'अर्थवत्तस्तिशब्दस्य ग्रहणादिति'। अर्थवद्ग्रहणपरिभषया । 'डतेरिति'। इत्यवयवस्य तिशब्दस्येत्यर्थः। 'पर्युदासो न भवतीति'। नह्यसावर्थवान्। 'कतिक इति'। का संख्या परिमाणं येषामिति किमः संख्यापरिमाणे डति चेति डतिः, सप्ततिशब्दे तु सप्तदशदर्थाभिधायिनः सप्तशब्दात्परिमाणोपाधिकादस्येति षष्ठ्यर्थे तिप्रत्ययो भवतीति तिशब्दोऽर्थवान्, एवं नवतिशब्दे, अशीतिशब्दे तु यद्यप्यशीशब्दस्याष्टस्वन्य[2]त्र न दृष्टः प्रयोगः, शास्त्रे त्वेषा व्यवस्था, अष्टानामशीभावस्तिश्च प्रत्यय इति, विंशतिशब्दे तु द्वयोर्दशतोर्विन्भावः शतिश्च प्रत्यय इति तिशब्दोऽनर्थक एव, ततश्च ततः कन् भवत्येव विंशतिकः, एवं च कृत्वा विंशतिकात्खः शतमानविंशतिक इति निर्देश उपपद्यते किं तु विंशतित्रिंशद्भ्यां ड्वुनसञ्ज्ञायामित्यसञ्ज्ञायां ड्वुन्विधानात्सञ्ज्ञायामेव कन् भवति, अतिशदन्ताया इत्यत्रान्तग्रहणमेकसप्तत्या क्रीतमित्यत्रापि पर्युदासार्थमन्यथा प्रत्ययग्रहणपरिभाषया न स्यात् ॥

"वतोरिड्वा" ॥ 'तस्य त्वनेनेति'। चरेष्ट इत्यादिवत् प्रत्ययान्तरं त्विण्[3] न भवति टित्करणसामर्थ्यात्, अस्त्यन्यट्टित्करणस्य प्रयोजनं टित इति ङीब्यथा स्यात्, अत इत्यधिकारे ङीप्, न चैषोकारान्तः, टित्करणसामर्थ्यादनदन्तादपि ङीप् स्यात, यथा डित्यभस्याप्यनुबन्धकरणसामर्थ्या[4]त्सरज इत्यत्र टिलोपः, एवं तर्हि स्वरितत्वप्रतिज्ञानेन कनोनुक्षेणसामर्थ्यादागमो भविष्यति, अस्त्यन्यदनुवृत्तेः प्रयोजनम्, इटा बाधो मा भूत् कनोपि विधिर्यथा स्यादिति, वावचनादेव कन् भविष्यति, इदं तर्हि प्रयोजनं स्यादिट्कनौ वा भवतः पक्षे सामन्यविहितष्ठञि[5]ति,

१ पटइति नास्ति २ पुस्तके ।
२ अर्थेष्विति २ पु॰ पाठः ।
३ प्रत्ययान्तरविधिर्नेति २ पु॰ पाठः ।
४ उपेत्यधिकं २ पुस्तके ।
५ भविष्यतीत्यधिकं २ पुस्तके ।

तस्माद्व्याख्यानमेव शरणम् । ननु नेह कन्ग्रहणमस्ति यदपि प्रकृतं तदपि प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः, वतोरिति पञ्चमी कनिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति । 'तावत्क इति' । तत्परिमाणमस्य यत्तदेतेभ्यः परिमाणे वतुप्, आ सर्वनाम्नः ॥

"विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्" ॥ 'विंशक इति' । ति विंशतेर्डितीति तिशब्दस्य लोपः, अतो गुणइति पररूपत्वं, यस्येति लोपस्तु न भवति असिद्धवदत्राभादिति तिलोपस्यासिद्धत्वात् । ननु सुबन्तात्तद्धितोत्पत्तिः, ततश्चान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसञ्ज्ञा भवति तत्कथं पररूपत्वं, या तु ड्वुनमपेक्ष्य भसंज्ञा सा येन नाप्राप्तिन्यायेन स्वादिष्विति या पदसंज्ञा तामेव बाधते न सुप्तिङन्तं पदमित्येतामपि, एतामपि बाधते, कथं, परत्वात्, अत एव सामन्य इत्यादौ नलोपाद्यभावः । 'कथं पुनरत्रेति' । त्रिंशत्कमधिकृत्य प्रश्नप्रतिवचने, विंशतिशब्दात्तु कनः सिद्धिः प्रागेव प्रतिपादिता, यदा तु द्वयोर्दशतोर्विंशभावस्तिश्च प्रत्यय इति पक्षस्तदा विंशतिकमप्यधिकृत्य भवतः ॥

"कंसाट्टिठन्" । कंसशब्दोयं कांस्यपात्रवाची परिमाणशब्दो गृह्यते पूर्वोत्तरैः परिमाणशब्दैः साहचर्यात्, न लोहविशेषवचनो नाप्युग्रसेनसुतवचन इति दर्शयति । 'ठञोपवाद इति' । 'इकार उच्चारणार्थ इति' । एवं च प्रक्रियालाघवाय टिकनेव वक्तव्यः, तथा तु न कृतमित्येव । 'अर्द्धिक इति' । अर्द्धशब्दः कार्षापणस्यार्द्धे निरूढ इति भागवदपेक्षया ऽसामर्थ्यं नाशङ्कनीयम् । अपर आह । प्रकरणादिवशेन भागविशेषे निश्चिते सति नासामर्थ्यमिति ॥

"शूर्पादञन्यतरस्याम्" ॥ 'ठञोपवाद इति' । शूर्पशब्दस्य परिमाणवाचित्वात्, यद्यपि परिपवनविशेषः शूर्पं तथापि विशिष्टसंस्थानं धान्यादेः परिमाणमपि, शूर्पपरिमितो वा व्रीह्यादिः शूर्पशब्देनोच्यते ॥

"शतमानविंशतिकसहस्रवसनादण्" ॥ 'ठक्ठञोरपवाद इति' । शतमानं परिमाणं सहस्रं सङ्ख्या ताभ्यां ठञोपवादः, विंशत्या क्रीतं विंश-

तिकं संज्ञाशब्दोयम्, असञ्ज्ञायां विंशतित्रिंशद्भ्यां ड्वुनसञ्ज्ञायामिति ड्वुना भवितव्यं, सा यदि पारिमाणस्य संज्ञा तदा ततोपि ठञो पवादः, अथ त्वर्थान्तरस्य ततष्ठकः, वसनशब्दात्तु ठक एव ॥

"अध्यर्द्धपूर्वद्विगोर्लुगसञ्ज्ञायाम्" ॥ अध्यारूढमर्द्धमस्मिन्नित्यध्यर्द्धं, प्रादिभ्यो धातुजस्येति बहुव्रीहिः । अध्यर्द्धपूर्वद्विगोरिति समाहारद्वन्द्वः, सौत्रः पुल्लिङ्गनिर्द्देशः । 'तस्मादध्यर्द्धपूर्वात्प्रातिपदिकाद्विगोश्च परस्येति' । तेनाध्यर्द्धपूर्वद्विगोरिति पञ्चम्याश्रितेति लक्ष्यते, यद्येवं द्विगोर्लुकि तन्निमित्तग्रहणं, द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग् भवतीति वक्तव्यं, द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं द्विशूर्पेण क्रीतं द्विशौर्पिकमित्यत्र द्वितीयस्य मा भूत्, तथार्थविशेषासंप्रत्यये तन्निमित्तादपि यत्र तद्धितार्थे द्विगुना सहार्थो न भिद्यते तत्रातन्निमित्तादपि, स तद्धितो यस्य निमित्तं न भवति तस्मादपि द्विगोः परस्य लुग्भवतीति वक्तव्यं, द्वयोः शूर्पयोःसमाहारो द्विशूर्पी, द्विशूर्प्या क्रीतमित्यपि विग्रहे द्विशूर्पमित्येव यथा स्यात्, तस्माद्द्विगोरिति नैषा पञ्चमी, का तर्हि, षष्ठी, द्विगोर्यस्तद्धितः, कश्च द्विगोस्तद्धितो यस्तस्य निमित्तं यस्मिन् द्विगुर्भवति, द्विशूर्प्या क्रीतमित्यत्र त्वनभिधानात्प्रत्ययो न भविष्यति, त्रैशब्द्यं हि नः साध्यं, द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं द्विशूर्प्या क्रीतमिति, तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रह एव द्विशूर्प्या क्रीतमिति न तु वृत्तिरनभिधानात्, अपरेण विग्रहश्च वृत्तिश्च द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पमिति, अव्यविकन्यायेन, व्याख्यातो ऽव्यविकन्यायः । इदं तावदर्थतत्त्वं, द्विगोर्लुगनपत्य इत्यत्र च वृत्तिकारेणाप्येवमेव व्याख्यातम्, इह तु तदनुसारेण गम्यमानत्वाचैवं विविच्य व्याख्यातं, यस्य तद्धितस्य लुगिष्यते सोपि द्विगोः पर इत्येतावता द्विगोः परस्येत्युक्तम् । 'पाञ्चलोहितिकं पाञ्चकलापिक[1]मिति' । पञ्च लोहित्यः परिमाणमस्य पञ्च कलापाः परिमाणमस्येति विग्रहे तद्धितार्थे समासः, तदस्य परिमाणमिति ठञ्, भस्याढे तद्धितइति पुंवद्भावाल्लोहिनीशब्दस्येकारनकार-

१ कापिलकमिति पु० २ पाठः ।

योर्निवृत्तिः, परिमाणविशेषस्य नामधेये एते। 'प्रत्ययान्तस्य विशेषणमसञ्ज्ञाग्रहणमिति'। न तु संनिहितस्यापि द्विगोः, असञ्ज्ञायामिति सप्तमीनिर्द्देशात्, वार्तिककारस्तु मन्यते द्विगुविशेषणमसञ्ज्ञाग्रहणं पञ्चलोहितपञ्चकलापशब्दावपि द्विगू कृततद्धितलुकावेव संज्ञे ततो नार्थोऽसञ्ज्ञायामिति प्रतिषेधेनेति, तदाह संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्येति, तस्याः संज्ञायाः लोप एव निमित्तमित्यर्थः। 'अध्यर्द्धशब्दः संख्येवेति'। संख्यावाच्येवेत्यर्थः। अध्यर्द्धस्याप्येकादिवत् परिच्छेदहेतुत्वात्, अत एवाध्यर्द्धेन क्रीतमध्यर्द्धकमिति संख्यालक्षणः कन् भवति, अध्यर्द्धकंसमित्यादौ तद्धितार्थे द्विगुश्च। 'क्व चिदिति'। कन्समासोत्तरपदवृद्धिभ्योऽन्यत्र। 'संख्यायाः क्रियाभ्यावृत्तिगणनइति'। यदा सकृत्फलां तां क्रियामभिनिर्वर्त्य[1] तामेव कुर्वन्नर्द्धं निवर्त्तते तदा कृत्वसुचोभावादध्यर्द्धं करोतीत्येव भवति ॥

"विभाषा कार्षापणसहस्राभ्याम्"॥ 'अध्यर्द्धसहस्रमिति'। शतमानविंशतिकेति विहितस्याणो लुक्, अलुक्पक्षे संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः, इदानीमेव ह्युक्तम् अध्यर्द्धशब्दः संख्येवेति। 'अध्यर्द्धसुवर्णमिति'। ठञो लुग् न तु ठकः, आर्हादित्यत्र क्रियानिमित्तकस्य परिमाणस्य ग्रहणाद् येषां तु रूढिपरिमाणस्य तत्र ग्रहणं तन्मते ठको लुक्। 'अध्यर्द्धसौवर्णिकमिति'। परिमाणान्तस्येत्युत्तरपदवृद्धिः, तत्र ह्युन्मानस्यापि ग्रहणं शाणप्रतिषेधात्, अध्यर्द्धे कार्षापणस्य द्विगौ सहस्रस्येत्येवमत्र यथासंख्यं नेष्यते ॥

"द्वित्रिपूर्वान्निष्कात्"॥ अध्यर्द्धपूर्वग्रहणमुत्तरार्थमनुवर्त्तते, इह तु न संबध्यते द्विगुग्रहणं तु संबध्यते द्वयोर्निष्कं त्रयाणां निष्कमिति षष्ठीसमासे माभूत्, अत्र च व्याख्यानमेव शरणम्, अन्यथाऽध्यर्द्धपूर्वाद् द्वित्रिपूर्वाच्च निष्कादिति समुच्चयो विज्ञायेत। 'द्विनैष्किकमिति'। प्राग्वतेष्ठञ्, परिमाणान्तस्येत्युत्तरपदवृद्धिः, द्वित्रिभ्यां निष्कादित्येव सिद्धे पूर्वग्रहणं चिन्त्यप्रयोजनम् ॥

[1] पुनरित्यधिकं २ पुस्तके।

"बिस्ताच्च" ॥ 'चकारेणानुकृष्यतइति'। तेन चानुकृष्टमुत्तरत्र नानुवर्त्ततइत्युत्तरत्रानुवृत्त्यभाव इति भावः, बिस्तशब्दः परिमाणवाची ॥

"विंशतिकात्खः" ॥ शतमानविंशतिकेत्यणि प्राप्ते तस्य च लुकि खोऽत्र विधीयते ॥

"खार्या ईकन्" ॥ खारी परिमाणमिति ठञि प्राप्ते तस्य च लुकि ईकन्विधीयते। 'केवला[1]च्चेति'। अध्यर्द्धपूर्वद्विगोरित्यधिकारात्केवलाया न प्राप्नोतीति वचनम्। अथाध्यर्द्धपूर्वेति न संबध्येत ततः केवलायामीकनश्चरितार्थत्वादध्यर्द्धपूर्वद्विगोर्लुक् प्राप्नोति, दीर्घोच्चारणं किमर्थं नेकनेवोच्यते सवर्णदीर्घत्वे सति सिद्धं, यस्येतिलोपः प्राप्नोति, इकारोच्चारणसामर्थ्यान्न भविष्यति, अन्यथा कनमेव विदध्यात्, केण इति ह्रस्वत्वे कृते सति सिद्धम्। अवग्रहः प्राप्नोति, न[2] लक्षणेन पदकारा अनुत्त्याः पदकारैर्नाम लक्षणमनुवर्त्त्यम् ॥

"पणपादमाषशताद्यत्" ॥ 'पद्भावोऽत्र न भवतीति'। पद्यत्यतदर्थइत्यनेन, किं कारणमित्याह। 'प्राण्यङ्गस्येति'। पादस्य पदाज्यातिगोपहतेष्वित्यत्र तावत्प्राण्यङ्गस्य पादस्य ग्रहणं तस्यैवाज्यादिभिर्गतिवचनैः संबन्धसद्भावात् पद्यतीत्यादावपि तस्यैवानुवृत्तिः। 'इह तु परिमाणमिति'। गृह्यतइति शेषः। पणमाषाभ्यां साहचर्यादिति भावः ॥

"शाणाद्वा" ॥ 'ठञोपवाद इति'। यद्यप्युन्मानवचनः शाणशब्दस्तथाप्याहादित्यत्र क्रियापरिमाणस्य ग्रहणादस्यापि पर्युदासाट्ठञ एव प्रसङ्ग इति भावः। 'शताच्चेति वक्तव्यमिति'। पूर्वेण नित्ये यति प्राप्ते वचनं, यदभावपक्षे सङ्ख्यालक्षणस्य कनो लुक् ॥

"द्वित्रिपूर्वादण् च" ॥ वार्त्तिके दर्शनात्सूत्रेष्वेतत्प्रक्षिप्तम्। 'त्रैरूप्यं भवतीति'। अण्येकं, यति द्वितीयं, ठञो लुकि तृतीयम् ॥

"तेन क्रीतम्" ॥ 'तेषामिति'। अस्य समर्थविभक्तय इत्यनेनैव संबन्धो न प्रत्ययार्थ इत्यनेन, नहि तेषां प्रत्ययानां प्रत्ययार्थो निर्दि-

---

१ केवलायाश्चेति २ पु॰ पाठः स एव मुद्रितमूलपुस्तकानुगुणः।
२ चेत्यधिकं २ पुस्तके।

श्यन्तइत्यन्वयो घटते । ओदनपाकं पचतीतिवद्वा कथं चिदन्वयः । 'तेनेति मूल्यादिति' । मूल्यभूतार्थाभिधायिनः करणे या तृतीया सा चेह समर्थविभक्तिरित्यर्थः । मूलेनानाम्यं मूल्यं, मूल्यं लाभ इत्युक्तम् । इह तु यन्मूलं यश्च लाभस्तदुभयं मिश्रितं मूल्यमित्युक्तम् । 'अन्यत्रेति' । अमूल्यादकरणे वा या तृतीया तत्रेत्यर्थः । 'अनभिधानादेवेति' । एवकारः पौनर्वचनिकः, किं च प्रस्थादयः शब्दा नियतपरिमाणानामर्थानां वाचका न मात्रयापि न्यूनाधिकभावे प्रवर्तन्ते, नहि यथाजलमिति प्रस्थेपि भवति, कुडवेपि भवति यथा वाग्निरिति [1]भ्राष्ट्राग्नावपि भवति, दावाग्नावपि भवति यथा वा एको व्रीहिः संपन्न इत्यादौ जात्यात्मना सर्वासां व्यक्तीनामैक्यं प्रतीयते तथा प्रस्थादिषु भवति, तस्मात्तेषु विभक्त्यभावे यावतस्ते वाचकास्तावदेव गम्यते, वाक्ये तु प्रस्थाभ्यां प्रस्थैरिति द्विवचनबहुवचनबलात्तावतोनेकस्यावगतिर्भवति । 'द्विकं त्रिकमिति' । अत्र हि प्रकृतेरेव वाच्ये द्वित्वबहुत्वे विभक्तिस्तु करणत्वमात्रमाचष्टे, सा च प्रकृतिर्वृत्तावपि विद्यते । 'नह्येकेन मुद्गेनेति' । एकया मुद्गव्यक्त्येत्यर्थः । जात्याख्यायां त्वेकवचनान्तादपि भवत्येव । ननु यद् निष्केण क्रीतं तस्य निष्को वस्नो भवति ततश्च सोस्यांशवस्नभृतय इत्येव सिद्धः प्रत्ययो नार्थ एतेन, एवं तर्हि यस्य शतं मूल्यं न भवत्यथ च तेन क्रीतं कार्यवशात्तदर्थमिदम् ॥

"तस्य निमित्तं संयोगोत्पातौ" । 'शुभाशुभसूचक इति' । तत्प्रयोजक इतिवत्षष्ठीसमासः । 'महाभूतानामिति' । पृथिव्यादीनाम् । 'दक्षिणाक्षिस्पन्दनमिति' । पाञ्चभौतिकशरीरे द्रव्यमेव च क्रियारूपेण परिणमतइति दक्षिणाक्षिस्पन्दनं महाभूतपरिणामः, तस्य च शुभस्य प्रति निमित्तत्वं ज्ञापकहेतुत्वाद् न तु कारकहेतुत्वात् । 'वातिकमिति' । शमनकोपने एवात्र प्रत्ययार्थौ न तु निमित्तं ताभ्यां विशेष्यते प्रकरणादिना च तयोरन्यतरावसायः, संनिपातो वातादीनां युगपदुद्भवः ॥

१ कारीषाग्नावि॰ २ पु॰ पाठः ।

"गोद्व्यचो ऽसंख्यापरिमाणाश्वादेर्यत्" ॥ 'ठञादीनामिति'। आदिशब्देन ठञो ग्रहणम् । अतद्गुणसंविज्ञानो बहुव्रीहिः, बहुवचनं तु ठञ एवैकस्य विषयबहुत्वमाश्रित्य कृतं, ठञोपवाद इत्यर्थः । किं पुनः कारणमेवं व्याख्यायते, संख्यापरिमाणाश्वादिवर्जिताद्गोद्व्यचष्ठञ एव प्राप्तत्वात्। 'ब्रह्मवर्चसादिति'। ब्रह्मणो वर्चो ब्रह्मवर्चसं वृत्तस्वाध्यायसंपत्, ब्रह्महस्तिभ्यां वर्चस इत्यच् समासान्तः ॥

"पुत्राच्छ च" ॥ कथं पुत्रीयः क्रतुरिति नहि क्रतुः संयोग उत्पातो वा भवति, संयुज्यतेनेति व्युत्पत्त्या क्रतुरपि संयोग एव, येन यागादिकरणेन पुरुषः फलेन संयुज्यते स यागादिरपि संयोगो न केवलं संबन्ध एवेत्यर्थः । एतेन पुरोडाशसत्रं लोक्यमित्यादिव्याख्यातम् ॥

"सर्वभूमिपृथिवीभ्यामणञौ" ॥ संयोगोत्पातौ प्रति यथासंख्यं न भवति, तयोः प्रत्ययार्थविशेषणत्वेन प्रकृतिभ्यां प्रत्ययाभ्यां चासंबन्धात् ॥

"तत्र विदित इति च" ॥ योगविभागो यथासङ्ख्यनिरासार्थ उत्तरार्थश्च ॥

"तस्य वापः" ॥ तस्येति वापापेक्षया कर्मणि षष्ठी न तु कर्त्तरि, तेन देवदत्तस्य वापः क्षेत्रमित्यादौ न भवति ॥

"तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते[1]" ॥ 'दीयतइत्येकवचनान्तं वृद्ध्यादिभिः प्रत्येकमभिसंबद्ध्यतइति'। तेन वृद्ध्यादीनां बहुत्वेपि बहुवचनं न भवतीतिभावः । प्रत्येकं संबन्धस्तु द्वन्द्ववर्त्तिनां पदानां बुद्ध्या निष्कर्षाल्लभ्यते, एतच्च दीयतइत्यस्य विशेषणस्य वृद्ध्युपक्रमत्वउक्तं, यदा तु यत्तत्प्रथमासमर्थं दीयते चेत्तद्भवतीत्येवमुपक्रम्यते पश्चात्तु किं पुनस्तद्दीयतइत्यपेक्षायां वृद्ध्यादयः संबद्ध्यन्ते तदा न किंचिदसमंजसाध्यम् । 'उत्तमर्णधनातिरिक्तमिति'! उत्तमर्णेन यद्दत्तं धनं तस्मादधिकमित्यर्थः, सञ्ज्ञा,वृद्धिस्तु न गृह्यते आयादिभिः साहचर्यात् । 'उपादानमूलातिरिक्तमिति'। पटादीनामुपादानं तन्त्वादि तस्य मूल-

१ आदीत्यधिकं ३ पुस्तके ।

मुत्पत्तिकारणं द्रव्यं तस्मादधिकं पटादि विक्रयेण यल्लभ्यते स लाभः, निर्वेशो भृतिः, रक्षानिमित्तको निर्वेशो रक्षानिर्वेशः संबन्धषष्ठ्या समासः, शुल्कग्रहणं प्रपञ्चार्थम्, तस्याप्यायविशेषत्वात्, तथा च ठगायस्थानेभ्य इति शुल्कस्थानादपि भवति शौल्कशालिक इति, यत्र ग्रामादौ वृद्ध्यादि दीयते तत्र प्रत्ययो विधीयमानः संप्रदाने न प्राप्नोतीत्यत आह । 'चतुर्थ्यर्थउपसङ्ख्यानमिति' । 'सिद्धन्त्विति' । विवक्षातः कारकाणि भवन्तीति संप्रदानस्यैवाधिकरणत्वेन विवक्षितत्वात्सिद्धमिष्टमित्यर्थः । क्व यथेत्याह । 'सममिति' ॥

"पूरणार्द्धाट्ठन्" ॥ 'पूरणवाचिन इति' । पूर्यते येनार्थः स पूरणस्तद्वाचिन इत्यर्थः, एतेन पूरणइत्यर्थस्येदं ग्रहणं न तु प्रत्ययस्येति दर्शयति, यदि तु पूरणग्रहणं स्वर्येत ततः स्वरितेनाधिकारगतिर्भवतीति तस्य पूरणे डडिति पूरणाधिकारविहिता डडादयः प्रत्यया गृह्येरन् यथा-गोस्त्रियोरित्यत्र स्त्र्यधिकारविहिताष्टाबादयः, ततश्च पूरणाद्भागे तीयादन्वित्यनन्ताच्च स्यात्, अर्थग्रहणे ततोपि भवति तदन्तमपि हि पूरणएवार्थे वर्त्तते, स्वार्थिकत्वादनः, तस्मादर्थग्रहणमेव न्याय्यम् । 'ठक्टिठनोरपवाद इति' । पूरणादार्हीयस्य ठकोपवादः । अर्द्धादप्यर्द्धाच्चेति वक्तव्यमिति टिठनः, स्त्रियां च विशेषः, टिठनि हि सति ङीप् स्यात्, ठनि तु टाप् भवति । 'अर्द्धशब्दो रूपकार्द्धस्य रूढिरिति' । रूपकं कार्षापणं तदीयस्य भागस्यार्द्धशब्दो वाचकत्वेन प्रसिद्ध इत्यर्थः । तेनार्द्धिक इति भागवत्सापेक्षत्वेनासामर्थ्यं नोद्भावनीयमिति भावः ॥

"भागाद्यच्च" ॥ 'भागशब्दोपीति' । न केवलमर्द्धशब्द एवेत्यपिशब्दार्थः ॥

"तद्धरति वहत्यावहति भाराद्वंशादिभ्यः" ॥ 'प्रकृतिविशेषणमिति' । प्रकृतिः प्रातिपदिकं तस्य विशेषणं, विशेषणप्रकारमेव दर्शयति । 'वंशादिभ्य इत्यादि' । 'वंशादिभ्य इति किमिति' । भारान्तादिति कस्मान्नोक्तमिति भावः । अत एव तदन्तं प्रत्युदाहरति । 'व्रीहिभारं वहतीति' । 'भारभूतेभ्यो वंशादिभ्य इति' । ननु वंशादयः

शब्दास्ते कथं भारभूता इत्यत आह । 'भारशब्दोऽर्थद्वारेण वंशादीनां विशेषणमिति'। भारभूतार्थाभिधायित्वाद्भारभूतेभ्यो वंशादिभ्य इत्युक्तमित्यर्थः । सूत्रे तु प्रत्येकं संबन्धादेकवचनम् ॥

"वस्नद्रव्याभ्यां ठन्कनौ" ॥ वस्नशब्देन मूल्यमुच्यते ॥

"संभवत्यवहरति पचति" ॥ 'प्रमाणानतिरेक इति'। आधारप्रमाणादाधेयप्रमाणस्यानाधिक्यमित्यर्थः । तदुपसर्जने च धारणे संभवतेर्वृत्तिरिति सकर्मकत्वम् । 'उपसंहरणमवहार इति' । आधारप्रमाणादाधेयप्रमाणस्य न्यूनतेत्यर्थः, तदुपसर्जने च धारणेऽवहरतेर्वृत्तेः सकर्मकत्वं, सूत्रे स्पष्ट उपसर्गः । 'नास्त्यत्र नियोग इति'। नियोगोऽवश्यंभावः । 'तत्पचतीति द्रोणादण् चेति'। पचतिग्रहणं संभवत्यवहरतीति निवृत्त्यर्थं, द्रोणपरिमिते च व्रीह्यादौ द्रोणशब्दस्तस्य[1] पाकसंभवात् ॥

"आढकाचितपात्रात्खोऽन्यतरस्याम्" ॥ 'ठञोऽपवाद इति'। न ठकः, आढकादीनां परिमाणत्वात्, पात्रं भाजनमप्यस्ति तस्य तु संभवत्यादिभिः संबन्धानुपपत्तेः, आढकाचितसाहचर्याच्च परिमाणस्यैव ग्रहणम् ॥

"द्विगोष्ठंश्च" ॥ 'द्व्याचितेति'। ठञो लुक्, अपरिमाणबिस्ताचितेति ङीपः प्रतिषेधः ॥

"कुलिजाल्लुक्खौ च" ॥ 'अन्यतरस्यांग्रहणानुवृत्त्या लुगपि विकल्प्यतइति'। तच्च लुक्खग्रहणाद्विज्ञायते, अन्यथा कुलिजाच्चेत्येव वक्तव्यं, द्विगोश्चेत्येव खोऽन्यतरस्यामिति च तत्र ठन्खाभ्यां मुक्ते पक्ते ठञ्, तस्याध्यर्द्धपूर्वेति लुक्, एवं रूपत्रये सिद्धे लुक्खग्रहणं कुर्वतः सूत्रकारस्य लुकोऽपि विकल्प इष्ट इति लक्ष्यतइति मन्यते, वार्त्तिककारस्तु ठञो नित्यं लुकं मन्यमानः पूर्वसूत्रवत् त्रैरूप्यमेवेच्छन् लुक्खग्रहणं प्रत्याचष्टे, कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावादिति ॥

---

१ एवेत्यधिकं २ पुस्तके ।

"सोऽस्यांशवस्नभृतयः" ॥ इह च शतं यस्य वस्नो भवति स तेन क्रीतो भवति तत्र तेन क्रीतमित्येव सिद्धं नार्थो वस्नग्रहणेन, नैतदस्ति। योग्यतामात्रेऽप्यस्येदं मूल्यमिति व्यवहारात् ॥

"तदस्य परिमाणम्" ॥ इह परिच्छेदहेतुमात्रं परिमाणं न सर्वतो मानमेव, उत्तरसूत्रे संख्यायाः परिमाणेन विशेषणात्। 'खारशतिक इति'। खारशब्दोऽकारान्तो वार्तिककारवचनात्साधुः, तेन हि तदस्य परिमाणमित्यत्र योगविभागः कर्त्तव्य इति दर्शयितुमुक्तम् अन्येभ्योऽपि दृश्यते खारशताद्यर्थमिति। 'वार्षशतिक इति'। यज्ञादौ परिमाणानि प्रत्ययः। 'षाष्टिक जीवितपरिमाणस्येति'। संवत्सरेषु षष्टिशब्दः, संवत्सरसंख्यया हि जीवितं प्रायेण परिच्छद्यते, जीवितपरिच्छेदद्वारेण तद्वतोऽपि षष्टिः संवत्सराः परिमाणमिति। तदस्मिन्परिमाणेनि प्रत्ययः। ननु यस्य षष्टिर्जीवितपरिमाणं षष्टिमसौ भृतो भवति तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम्, एवं च द्विषाष्टिक इत्यादौ नैवाध्यर्द्धपूर्वेति लुक्प्रसङ्गस्तस्यानार्हीयत्वात्, ततश्च समर्थविभक्तेः प्रत्ययार्थस्य च पुनरुपादानेन विधानमपि न कर्त्तव्यं, न च जीवितपरिमाणादन्यत्र पुनर्विधानेन लुगभाव इष्यते, एवं मन्यते तमधीष्ट इत्यत्र कालादिति वर्त्तते न च षष्ट्यादयः कालशब्दाः, अथ काले संख्येये वर्त्तमानत्वात्तेऽपि कालशब्दाः, रमणीयादिष्वतिप्रसङ्गः, रमणीयं कालं भूत इति। तस्माद्यः कालं न व्यभिचरति स एव कालशब्द इति। 'द्विषाष्टिक इति'। संख्यायाः संवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः ॥

"संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" ॥ 'परिमाणोपाधिकादिति'। नात्र रूढिपरिमाणं गृह्यते किं तर्हि क्रियाशब्दः, परिमीयते येन तत्परिमाणं, संख्ययापि च परिमीयतइति नासम्भवि विशेषणं, नन्वेवमप्यव्यभिचारादविशेषणं, नह्यपरिच्छेदिका संख्यास्ति। सत्यम्, इह तु प्रत्ययार्थस्य सङ्घादेर्यदा परिच्छेदिका संख्या तदा प्रत्ययो यथा स्यात् पञ्च गावः परिमाणमस्य पञ्चको गोसङ्घ इति, इह माभूत् पञ्च गावः स्वभूता अस्य ब्राह्मणसङ्घस्येति, नह्यत्र सङ्घस्येयत्तागम्यते, तस्मात्प्रत्य-

यार्थस्य यदा परिच्छेदिका संख्या तदा यथा स्यादिति विशेषणमर्थवद्भवति। 'तत्रेत्यादि'। इहादशभ्यः संख्याः संख्येये वर्तन्ते न तु संख्यानमात्रे तत्र य एव शकुनयः पञ्चत्वसंख्यायुक्ताः पञ्चन्शब्दवाच्यास्तएव पञ्च कशब्दस्यापि, ततश्च परिमाणपरिमाणिभावाभावात्स्वार्थएव प्रत्ययो वक्तव्यः, यदा तु वृत्तिविषये संख्यानमात्रवृत्तित्वं पञ्चादीनामाश्रीयते यथा द्व्येकयोरित्यत्र तदा सम्भवत्येव परिमाणी प्रत्ययार्थः पञ्चत्वसंख्या परिमाणमेषां पञ्चकाः शकुनय इति । 'पञ्चकमध्ययनमिति'। पूर्वं तु पञ्चकोधीतइति सम्पाठापेक्षया पुल्लिङ्गनिर्देशः, अधीतइति च कृत इत्यर्थः, यथौदनपाकं पचतीत्यौदनपाकं करोतीत्यर्थः । 'स्तोमे डविधिरिति'। सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठादिस्तुतिः स्तोमः । 'पञ्चदश मन्त्राः परिमाणमस्येति'। साम्ना स्तुवीत, एकं साम तृचे क्रियते इति स्तुतिविधिः, तत्र त्रिकस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्रा भवन्ति, सप्तदशसोमे अन्त्यायाः सप्तकृत्व आवृत्तिः, एकविंशे तृचस्य, डित्करणमेकविंशे तिलोपार्थं त्रयस्त्रिंशादौ टिलोपार्थं च, पञ्चदशः सप्तदश इत्यत्र तु नस्तद्धितइत्यनेनैव टिलोपः सिद्धः । 'शन्शतोर्डिनिरिति'। स्तोमइति न सम्बध्यते, अत्रापि डित्करणं शदन्तस्य टिलोपार्थम् । 'पञ्चदशिन इति'। पञ्चदशाहानि परिमाणमेषामिति डिनिः, एतेन त्रिंशिनो व्याख्याताः । 'विंशीनोङ्गिरस इति'। आङ्गिरसायास्यगौतमेत्यादिप्रवरभेदेन भिन्नानि विंशतिरवान्तरगोत्राणि परिमाणमेषामित्यर्थः । योगश्चायं पूर्वस्यैव प्रपञ्चः ॥

"पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्" ॥ 'पङ्क्त्यादयः शब्दा निपात्यन्तइति'। प्रकृतिनिर्देशस्त्वयं न भवति पङ्क्त्यादिभ्यः प्रकृतेर्थेधिकृतः प्रत्ययो भवतीति पञ्चम्या अनुपादानात्, पूर्वेणैव च सिद्धत्वात्, उत्तरेणं निपातनेन साहचर्याच्च, प्रत्ययनिर्देशोपि न भवति, ङ्याप्प्रातिपदिकात्प्रकृतेर्थे पङ्क्त्यादयः प्रत्यया भवन्तीति, लोके शास्त्रे च शताच्च ठन्यतावशतइत्यादौ केवलानां प्रयोगदर्शनाद्‌ यत्र समुदायः श्रूयते ऽवयवा अनुमीयन्ते तन्निपातनं, विप-

रीतो विधिः । 'पञ्चानामिति' । अर्थगतस्य बहुत्वस्य शब्दे समारोपाद्बहुवचनं, पञ्चशब्दस्य यर्थः । 'ठिलोपश्चिच्च प्रत्यय इति' । निपात्यतइत्यर्थः । अवयवनिपातननान्तरीयकत्वात्समुदायनिपातनस्य, यद्वा निपातनात्सिद्धमित्यस्य पुल्लिङ्गविपरिणामेनान्वयः, कुत्वं तु चकारञकारयोर्न निपात्यं चोः कुरित्येव सिद्धम् । 'पञ्च पदानीति' । पदशब्दः पादपर्यायः । 'पङ्क्तिश्छन्द इति' । तत्पुनः पदपङ्क्तिः, यस्य पञ्चाक्षराः पञ्च पादा भवन्ति । 'द्वयोर्दशतोरिति' । दशद्वयरूपसंख्येयमाचक्षाणस्य द्विशब्दस्येत्ययमत्रार्थो विवक्षितः, एवं त्रयाणां दशतामित्यादावपि द्रष्टव्यम् । 'शतिच्च प्रत्ययइति' । चित्करणमन्तोदात्तार्थम् । 'अपदत्वं चेति' । तेन जश्त्वचर्त्वे न भवतः, अत्र तदस्य परिमाणमिति वर्त्तत इत्युक्तं, द्वौ दशतौ परिमाणमस्येत्यादिश्च विग्रहो दर्शितः, यदा तु नानुवर्त्तते तदा द्विशब्दादेर्दशदर्थाभिधायिनः स्वार्थे प्रत्ययो निपात्यः, द्वौ दशतौ विंशतिः, त्रयोदशतस्त्रिंशद् इति, ततश्च स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्द्विशब्दादेरिव द्विवचनबहुवचनप्रसङ्गः, विंशत्यादिभिश्च दशतामभिधानमिति गवादिभिर्वैय्यधिकरण्यमेव स्याद् गवां विंशतिरिति, न तु विंशतिर्गाव इति सामानाधिकरण्यं नापि द्विगुः विंशतिगवमिति, तस्मादनुवर्त्त्यम्, अथास्येत्यनेन कः प्रतिनिर्दिश्यते परिमाणी, कः पुनरसौ भिन्नानि द्रव्याणि, द्वौ दशतौ परिमाणमेषां विंशतिरिति, यद्येवं विंशत्यादिभिर्द्रव्याणामभिधानमिति बहुवचनप्रसङ्गाद्विंशतिर्गाव इति न स्यात्, गवां विंशतिर्गोविंशतिरिति च न स्याद् व्यतिरेकाभावात् । अथास्मिन् पक्षे किञ्चिदिष्टमपि सिद्धम् अहोस्विद्दोषान्तमेवास्तीत्याह, इह वंशतिगवं त्रिंशत्पूलीति समानाधिकरणलक्षणो द्विगुः सिद्धः, तस्मान्न भिन्नानि द्रव्याणि परिमाणीनि, एतच्च सर्वेष्वेव विग्रहवाक्येष्वस्येत्येकवचनेन दर्शितं, कस्तर्हि परिमाणी, सङ्घः, द्वौ दशतौ परिमाणमस्य गोसङ्घस्य विंशतिरिति, एवमपि सिद्धं गवां विंशतिर्गोविंशतिरिति, विंशतिर्गावः विंशतिगवमिति तु न सिद्ध्यति तथा विंशतिशब्देन सङ्घस्याभिधानाद्विंशतिः परिमाणमस्य गोसङ्घस्य विंशतिस्त्रिशङ्काां

इवुन्, विंशकः सङ्घ इति न स्यात्, सङ्घान्तरस्य परिमाणिनो ऽसम्भवात्। अथोभयं परिमाणिभिन्ना द्रव्याणि तत्संघश्च, तत्र सङ्घपरिमाणिनि व्यधिकरणप्रयोगाः, द्रव्येषु तु परिमाणिषु सामानाधिकरणप्रयोगाः, तत्रैव विंशतिर्गावः परिमाणमस्य विंशको गोसङ्घ इति भविष्यतीत्युच्येत एवमपि विंशतिर्गाव इत्यत्र बहुवचनप्रसङ्गः, तथा सङ्घस्य परिमाणित्वे विंशतिर्गोसङ्घ इति प्राप्नोति, न चेष्यते, विंशक इत्येव हि तत्रेष्यते, एवं तर्हि द्वावत्र सङ्घौ स्तः, द्रव्याणामेकः द्रव्यवर्गयोर्दशतोश्चापरः, तत्र निपातनसामर्थ्याद्दशत्सङ्घे परिमाणिनि प्रत्ययः, सङ्घश्च समुदायमात्रं न प्राणिनामेव, किं हि निपातनादलभ्यं, तत्र दशत्सङ्घस्य विंशतिशब्देनाभिधानाद्गोसङ्घे विवक्षिते विंशतिः परिमाणमस्य विंशको गोसङ्घ इति च भविष्यति, विंशतिर्गोसङ्घ इति च न भविष्यति, गवां विंशतिर्गोविंशतिरिति च भविष्यति। ननु दशत्सङ्घस्य दशतौ गुणिनौ न गावस्तेन दशतोर्विंशतिरिति प्राप्नोति गवां विंशतिरिति तु न सिद्ध्यति, उच्यते, द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य च न पारमार्थिको भेदोऽस्ति केवलं बुद्ध्या परिकल्प्यते, ततश्च गवां दशतोश्च तात्त्विकभेदाभावाद्दशत्सङ्घमपि प्रति गवामपि गुणित्वमुपपद्यते व्यभिचाराभावात्तु दशद्भ्यां विंशतिर्न विशेष्यते गवादिभिरेव तु विशेष्यते यथा पटस्य शौक्ल्यमिति भवति न शुक्लस्य शौक्ल्यमिति व्यभिचाराभावात्, तद्वदत्रापि। एवं तावद्व्यधिकरणप्रयोगा उपपादिताः, विंशतिर्गाव इत्यादिकास्तु समानाधिकरणप्रयोगा उपपादनीयाः, धर्मवचना एते विंशत्यादयो गुणवचना इति शुक्लादिवद्भविष्यति यथा हि पटस्य शुक्लो गुण इति गुणमात्रे दृष्टः शुक्लशब्दो गुणगुणिनोरव्य[1]तिरेकविवक्षयां मतुब्लोपाद्वा सामानाधिकरण्ये भवति शुक्लः पट इति, एवं विंशत्यादयोऽपि, यद्येवं यथान्ये गुणवचना द्रव्यस्य लिङ्गसंख्ये अनुवर्तन्ते यथा शुक्लं वस्त्रं शुक्ला शाटी शुक्लः कम्बलः शुक्लौ शुक्ला इति, एवं विंशत्यादयोऽप्यनुवर्त्तेरन्, इह पुनर्विंशतिर्गावः विंशतिर्बलीवर्द्दाः विंशतिर्गोकुलानीति नित्यमेकवचनं स्त्रीलिङ्गं च भवति, शतशब्दात्तु नपुंसकत्वं

१ रभेद इति पाठः २ पुस्तके।

विंशती विंशतयः शते शतानीति तु प्रचयभेदविवक्षायामेकशेषः, अत्रोच्यते। यस्य धर्मस्य धर्मिणा सहाभेदः प्रतिपाद्यते स चेत्तेषु प्रत्येकपरिसमाप्तस्तदा तस्यापि धर्मिवद्भिन्नत्वाद् द्विवचनबहुवचने न भवतः, यथा शुक्लौ शुक्ला इति, शौक्ल्यं हि कम्बलेषु प्रत्येकपरिसमाप्तं, कोर्थः, एकैकस्मिन्नपि कम्बले शुक्लशब्दार्थः पुष्कलो न मात्रयापि न्यून इत्यर्थः। विंशतिगावं इत्यत्र तु विंशतिसंख्या न प्रत्येकपरिसमाप्ता किं तर्हि बहुष्विति, तद्रूपभेदाभावादेकवचनमेव भवति यथा गावो धनम् इन्द्राग्नी देवता वेदाः प्रमाणमिति, धिनोतेर्धनं प्रीतिहेतुः समुदितानां च गवां प्रीतिहेतुत्वं विवक्षितं नै[1]केकस्या इति धनमेकं गोभिर्विशेष्यते, तत्र धनाकारे भेदाभावाद्बहुवचनाभावः। इन्द्राग्नी देवतेति द्विवरैश्वर्यकर्मणो देवतासङ्घस्य च देवतात्वमेकं हविः प्रतीति द्विवचनाभावः, देवते इति तूच्यमाने प्रत्यकमैश्वर्यं प्रतीयेत ततश्च व्रीहियवयोरिव विकल्पः स्यात्, वेदाः प्रमाणमिति चतुर्णां समुदितानां वेदानामेकं प्रमाणत्वं विवक्षितमिति तस्मिन्नाकारे भेदाभावाद्बहुवचनाभावः, प्रत्येकं तु प्रमाणे वेदाः प्रमाणानीति भवत्येव, यद्येवं त्रयश्चत्वारः पञ्च षट् सप्तेत्यत्राप्येकवचनप्रसङ्गः, नहि त्रित्वादिकमपि प्रत्येकपरिसमाप्तम्, उच्यते। त्र्यादयो नित्यं संख्येयवचना न तु कदा चिदपि संख्यानमात्रवचना इत्येकेन धर्मेण व्यासज्यवृत्तिना सहानेकस्य धर्मिणो भेदप्रतिपादनाभावाद्धर्मिभेदाश्रयं बहुवचनमेव भवति, यद्यपि त्रित्वमित्यादौ संख्यानमात्रमपि निष्कृष्टं प्रतीयते त्र्यादिभिस्तु न प्रतीयते देवताशब्दस्तु यद्यपि निष्कृष्टदेवतात्वमाचष्टे तथाप्यग्निर्देवतेत्येकेनापि स भिन्नदेवतात्वमाचष्टे नानेकेनैव सर्वदा, त्र्यादयस्तु न क्व चिदप्येवमिति विशेषः। लिङ्गमपि लोकाश्रयत्वाद्यथादर्शितं व्यवतिष्ठते न तद्धितान्तत्वेनाभिधेयवदिति सर्वमनाकुलम्, एवं भाष्यकारमतेन व्याख्याय संप्रति वार्त्तिककारमतं दर्शयति। 'विंशत्यादय इति'। 'गुणशब्दा इति'। रूढिरूपा इति भावः। 'यथाकथंचिद्व्युत्पाद्या इति'। स्वरवर्णानुपूर्वीज्ञानार्थं न त्ववयवार्थप्रदर्शनाय तदाह।

---

१ केवलमित्यधिकं २ पुस्तके।

'नात्रावयवार्थाभिनिवेष्टव्यमिति'। अवयवार्थविषयोऽभिनिवेशो न कर्त्तव्य इत्यर्थः। स तु प्रतीतिपथं नारोहतीति परित्यज्यते। 'या चैषामित्यादि'। दर्शिता च गुणमात्रे गुणिनि च वृत्तिः, एतदपि सर्वं स्वाभाविकमेवेति दर्शितामुपपत्तिं स्थिरां मन्यते। 'सहस्रादयोऽप्येवञ्जातीयका इति'। गुणमात्रे गुणिनि च वर्त्तन्ते स्वलिङ्गसंख्यानुविधायिनश्चेत्यर्थः। 'तद्वदेव द्रष्टव्या इति'। स्वरवर्णानुपूर्वीज्ञानार्थं विंशत्यादिवद्व्युत्पाद्या इत्यर्थः। तद्यथा शतस्य दशतां सहभावः स्रच्व प्रत्ययः, क्व पुनरेते व्युत्पाद्याः, पृषोदरादिषु, उदाहरणमात्रं, प्रदर्शनमात्रमेतद्विंशत्यादीनामुपादानम्, इतिशब्दः समाप्तौ। अत्र वार्त्तिकमनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिष्विति ॥

"पञ्चद्दशतौ वर्गे वा" ॥ संघग्रहणे प्रकृते वर्गग्रहणं सूत्राध्ययनयोरनुवृत्तिर्माभूदिति, अप्राण्यर्थं च, संघशब्दस्य प्राणिविषयत्वात् ॥

"त्रिंशच्चत्वारिंशतोर्ब्राह्मणे सञ्ज्ञायां डुवुन्" ॥ 'न विषयसप्तमीति'। ब्राह्मणविषयश्चेत्प्रयोगो भवतीति नैवमत्रार्थः, तथा हि सति मन्त्रे भाषायां च प्रयोगो न स्यात्, ब्राह्मणादन्यस्य च सञ्ज्ञायां शङ्क्येत, एवं च ब्राह्मणसञ्ज्ञायामिति षष्ठीसमासेन निर्देष्टव्यं, तथा तु न कृतमित्येव, सूत्रे च ये ओकारादनन्तरं रेफमधीयते तेषां पञ्चम्यर्थे षष्ठीद्विवचनं, ये तु[1] न तेषां समाहारद्वन्द्वे पञ्चम्येकवचनम् ॥

"तदर्हति" ॥ अर्हति लब्धुं योग्यो भवतीत्यर्थः ॥

"छेदादिभ्यो नित्यम्" ॥ 'नित्यग्रहणं प्रत्ययार्थविशेषणमिति'। अथ यथा नित्यं क्रीडाजीविकयोरित्यत्र महाविभाषया प्राप्तस्य वाक्यस्य निवृत्त्यर्थं नित्यग्रहणं तथेहापि कस्मान्न भवति, दृष्टत्वात्, दृष्टत्वाच्च, दृश्यते च दृश्यते च छेदमर्हतीति, न च वाक्यनिवृत्त्यर्थमेव नित्यग्रहणं कर्त्तव्यं छेदादिभ्य इत्येवास्तु पूर्वेण सिद्धे पुनरारम्भो वाक्यनिवृत्त्यर्थो भविष्यति, यथा तर्हि त्रेर्मम्नित्यमित्यत्र स्वातन्त्र्यनि-

[1] तथा नाधीयतइति २ पुस्तके पाठः।

वृत्त्यर्थं नित्यग्रहणं तथेह कस्मान्न भवति, दृष्टत्वात्, दृष्टत्वाच्च, दृश्यते च स्वातन्त्र्यं दृश्यते च छेदादिषु पठितस्य सम्प्रश्नशब्दस्य स्वातन्त्र्यस्य प्रयोगो विधिनिमन्त्रणादिसूत्रे यथा, तर्ह्येकगोपूर्वादित्यत्र प्रत्ययान्तरस्य मतुपो निवृत्त्यर्थं नित्यग्रहणं तथेह कस्मान्न भवति, अप्राप्तत्वात्, नह्यत्र कस्यचित्प्रत्ययान्तरस्य प्राप्तिः, यथा तर्हि नित्यं कौटिल्ये गताविव्यत्रार्थान्तरनिवृत्त्यर्थं नित्यग्रहणं, गतिवचनाद्गतौ कौटिल्यएव न क्रियासमभिहारइति, तथेह कस्मान्न भवति, दृष्टत्वाद् दृश्यते ह्यर्थान्तरेपि यथायोगं छेदादिभ्य आर्हीयः प्रत्ययः, तस्माद्यथोक्तमेव प्रयोजनं नित्यग्रहणस्य । 'छेदं नित्यमर्हतीति' । ननु न कश्चित् पदार्थो नित्यं छेदमर्हति योपि वेतसादिश्छिन्नश्छिन्नः प्ररोहति सोपि न सदैवच्छेदनार्हः प्ररूढस्तु भवति, यस्तर्हि दस्युवंशादिर्नित्यं छेदनार्हः सप्रत्ययार्थ अपर आह। आभीक्ष्ण्ये नित्यशब्दो यथा नित्यप्रहसितादाविति। 'विराग विरङ्गं चेति'। विरागशब्दः प्रत्ययमुत्पादयति तत्सन्नियोगेन विरङ्गमादेशमापद्यते, विरागं नित्यमर्हति वैरङ्गिकः ॥

"शीर्षच्छेदाद्यच्च" ॥ 'प्रत्ययसंनियोगेनेति'। तथा च शिरःशब्देन विग्रहो दर्शितः, कथं तर्हि पूर्वमुक्तं शीर्षच्छेदशब्दाद् द्वितीयासमर्थादिति, न प्रयोगार्हे वाक्ये द्वितीयासमर्थता किं तर्हि यदुपमर्द्देन वृत्तिर्भवति तत्र प्रक्रियावाक्ये प्रत्ययौ द्वौ यच्च ठञ्च,एवं च प्रत्ययाभ्यां संनियोग इति द्विवचनान्तेन समासः ॥

"दण्डादिभ्यो यः" ॥ उपायविशेषो दण्डो हस्तालम्बश्च, इह दण्डादिभ्य इत्येतावत्सूत्रमनन्तरश्च यत्प्रत्ययो विधीयते, तथा च वध्यशब्दव्युत्पादनाय क्यब्विधावुक्तं हनो वध च तद्धितो वेति, यदि चात्र यद्विधीयते तत एव तदुपपद्यते तद्धितो वेति, कथं, क्यप्याद्युदात्तत्वं यत्यपि तद्धिते यतो नाव इत्याद्युदात्तत्वमेव, यदि त्वत्र यो विधीयेत ततः स्वरे विशेषादनुपपन्नमेतत्स्यात्, उत्तरसूत्रे चास्य यस्यैवानुवृत्तिः स्यान्न यतः, अथापि स्वरितत्वाद्यत एवानुवृत्तिरुच्यते एवमपि वृत्तिकारस्यैतद्वक्तव्यमापद्येत यदनुवर्त्तते नानन्तरो य इति, ये

त्विभत्रधमेधशब्दानां यदन्तानामाद्युदात्तानां छन्दसि प्रयोगाः, इभ्यान्न राजा वनान्यत्ति, तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति, अपां मेध्यं यज्ञियमित्याद्याः, ते दण्डादिभ्यो यविधानेप्युपपद्यन्ते, कथं, दण्डादिभ्यो य इत्यस्यावकाशो भाषायां छन्दसि, यदित्यस्य तु दण्डादिभ्योन्यो ऽवकाशः, दण्डादिभ्यश्छन्दस्युभयप्रसङ्गे परत्वाद्यद्भविष्यति, तस्मादेते प्रयोगा दण्डादिभ्यो यद्विधीयतइत्यत्रार्थे प्रमाणत्वेन नोपन्यसनीयाः ॥

"पात्राद्घंश्च" ॥ 'ठक्ठञोरपवाद इति'। तत्र ठकोपवादत्वमुपपादयति। 'पात्रं परिमाणमप्यस्तीति'। भाजनविशेषस्तु प्रसिद्ध एव तत्र ठकोपवादः, परिमाणवचने तु ठञ इत्यर्थः। 'पात्रिय इति'। पात्रपरिमितं तण्डुलादिकं यः स्थाल्यादिरर्हति सम्भवनधारणक्षमत्वात् स एवमुच्यते, येन वा भुङ्क्ते भोजनभाजनं संस्कारेण शुद्ध्यति ॥

"कडंकरदक्षिणाच्छ च" ॥ कड मदे,कडतीति कडः, कडं करोतीत्यत एव निपातनात्खच्, कडंकरं माषमुद्गादिकाष्ठमुच्यते, दक्षेरुत्साहकर्मणः करणे द्रुदक्षिभ्यामिनन् इतीनन् प्रत्ययः, दक्षिणा। 'चकाराद्यच्चेति'। घंस्त्वनन्तरोपि न समुच्चीयते य एव, स्वरितत्वात्। 'कडंकरीय इति'। यो बलीवर्द्दो दुर्जरमपि कडंकरं जरयितुं प्रभवति स[1] तदर्हतीत्युच्यते। 'अल्पाच्तरस्येत्यादि'। यद्वा यथासङ्ख्यमभिप्रेतं यस्माद्यदिष्टस्तं दण्डादिषु पठेत् ॥

"स्थालीबिलात्" ॥ 'छयतावनुवर्त्तेते इति'। पूर्वसूत्रेपि न यच्चकारेणानुकृष्टस्तथा सति घन एव प्रसङ्गात्, किं तर्हि स्वरितत्वात्, अतो न तस्यानुवृत्तिर्दुर्लभेति भावः। 'पाकयोग्या इत्यर्थ इति'। निष्फलीकृता इति यावत् ॥

"यज्ञर्त्विग्भ्यां घखञौ" ॥ 'यज्ञमर्हतीति'। स पुनर्यस्य विदुषो ऽर्थिनः शास्त्रेणापर्युदस्तस्य द्रव्यवतो यज्ञेऽधिकारः स वेदितव्यः। देश-

1 एवमुच्यत इति २ पु॰ पाठः।

स्यानैवंविधत्वादुचनम् । ‘यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानमिति’। ‘यज्ञकर्मार्हतीति’। यज्ञकर्मानुष्ठानयोग्य इत्यर्थः। ‘ऋत्विक्कर्मार्हतीति’। ऋत्विग्भवितुमर्हतीत्यर्थः ॥

“पारायणतुरायणचान्द्रायणं वर्तयति” ॥ पारायणमादित आरभ्यान्तादविच्छेदेन वेदाध्ययनं, तुरायणं संवत्सरसाध्यो हविर्यज्ञविशेषः, चान्द्रायणं तपोविशेषः, वर्त्तनं निष्पादनं तत्र पारायणं गुरुणा शिष्येण च निर्वर्त्यते, अन्यतरासंनिधावध्ययनक्रियाया अनिष्पादनात्,शिष्यएव त्विष्यते, तथा तुरायणमुभौ वर्तयतः, ऋत्विग्यजमानश्च, ऋत्विक् चरुपुरोडाशादि निर्वर्त्तयति,यजमानो देवतोद्देशेन द्रव्यं त्यजति, यजमान एव त्विष्यते, उभयत्र कस्मान्न भवत्यनभिधानात् ॥

“संशयमापन्नः” ॥ ‘सांशयिकः स्थाणुरिति’। स्थाणुर्वा पुरुषो वेत्येवंरूपस्य संशयस्य विषय इत्यर्थः। अनेनैतद्दर्शयति, यद्यपि द्वे अपि कर्तृकर्मणी संशयमापन्ने तथापि यद्विषयकः संशयस्तत्रैव प्रत्ययो भवति न कर्तरि पुरुषे ऽनभिधानादिति ॥

“योजनं गच्छति” ॥ ‘क्रोशशतयोजनशतयोरिति’। गुणेन नेति प्रतिषेधः सङ्ख्याया न भवति, अत एव निर्देशात्, शतसहस्रान्ताच्च निष्कादिति वचनाच्च। ‘ततोभिगमनमिति’। अत्र पञ्चम्यन्तात्प्रत्ययः ॥

“पन्थो ण नित्यम्” ॥ ‘नित्यग्रहणं प्रत्ययार्थविशेषणमिति’। वाक्यनिवृत्त्यर्थं तु न भवति पन्थादेशो हि प्रत्ययसन्नियोगेन विधीयमानो नैव वाक्ये संभवति, पथिन्शब्देन तु वाक्ये ऽनभिप्रेते पूर्वसूत्रएव नित्यग्रहणं कुर्यात्, यत्र पथिन्शब्दः श्रूयते, प्रत्ययान्तरनिवृत्त्यर्थमपि न भवति, पथः कनो विधानसामर्थ्यात्, प्रत्ययान्तरस्य प्राप्त्यभावात्। ‘पन्थानं नित्यं गच्छतीति’। नन्वयमर्थो न सम्भवति विश्रमस्यावश्यंभावित्वात्, सम्भवतु वा कथंचिदादित्यादौ तथापि न तत्रैवेष्यते, उदाहृतं हि पान्थो भिक्षां याचतइति, तस्मादाभीक्ष्ण्यं नित्यं परित्यागाभावो वा ॥

"उत्तरपथेनाहृतं च" ॥ 'चकारः प्रत्ययार्थसमुच्चयइति'। प्रत्ययार्थमात्रसमुच्चये न तु समर्थविभक्तियुक्तस्य वाक्यार्थस्येत्यर्थः, तस्य व्याख्यानइति चेतिवद् वाक्यार्थपरामर्शिन इतिशब्दस्याभावादिति भावः। तेन किं सिद्धं भवतीत्याह। 'अत्रापीति'। द्वितीयपक्षे चाक्रान्तेऽनाक्रान्ते च प्रकृत्यर्थे प्रत्ययः स्यात्, आक्रान्तएव तु भवति। 'वारिजङ्गलेत्यादि'। वार्यादीनि पूर्वपदानि यस्मिन्प्रातिपदिके तस्मात्पथिन्शब्दान्तादित्यर्थः। 'अजपथशङ्कुपथाभ्यां चेति'। पूर्वस्मिन्नेव वाक्ये ऽजशङ्कुशब्दौ पठितव्यौ तथा तु न कृतमित्येव। 'मधुमरिचयोरण् स्थलादिति'। स्थलशब्दोत्तरो यः पथिन्शब्दस्तदन्तान्मधुमरिचयोरभिधेययोरण् भवति। 'स्थलपथेनाहृतमिति'। गच्छत्यर्थे तु प्रत्ययो न दर्शितो मुख्यगमनासम्भवात्,। 'स्थलपथं मधुकमिति'। मधुमरिचयोरन्यतरनिर्णयायानुप्रयोगो न विरुद्धः ॥

"कालात्" ॥ स्वरूपग्रहणमिह न भवति, तमधीष्टो भृतो भूतो भावीत्यत्यन्तसंयोगे द्वितीयानिर्द्दुशान्मासाद्वयसीत्यादौ मासादीनां कालग्रहणेन विशेषणाच्च ॥

"तेन निर्वृत्तम्" ॥ तेनेति करणे तृतीया, निर्वृत्तं निष्पादितम् अन्तर्भावितण्यर्थे वृत्तिः ॥

"तमधीष्टो भृतो भूतो भावी" ॥ 'भावीति तादृश एवानागत इति'। स्वसत्तया व्याप्स्यमानकाल इत्यर्थः। 'ननु चेति'। यद्यपि क्व चित्कदा चिन्मासमध्यध्येषणं भरणं च क्रियते तथापि यावन्तं कालं क्रियते न तावतः प्रत्यय इष्यते ऽपि तु फलभूतक्रियाव्याप्यकालादिष्यते स चाध्येषणभरणाभ्यामव्याप्त इति द्वितीयानुपपत्तिरिति भावः। 'अध्येषणभरणे क्रियार्थे इति'। अध्यापनादिक्रियार्थं हि तयोः करणम्। 'फलभूतया क्रिययेति'। अध्यापनादिकया। 'ताभ्यामेव व्याप्त इत्युच्यतइति'। यथा चौरैराहृतमायिना दग्धे ग्रामे वक्तारो भवन्ति चौरैर्दग्धो ग्राम इति ॥

"मासाद्वयसि यत्खञौ" ॥ 'वयस्यभिधेयइति'। प्रत्ययार्थस्य तस्य विशेषणं वयः, तत्र विशिष्टाभिधाने विशेषणभूतं वयोऽप्यभिधेय-

मिति भावः । 'सामर्थ्यादिति' । नहि मासमधीष्टो भृतो वेत्युक्ते का चित्कालकृता शरीरावस्था गम्यते, भाविन्यपि नाञ्जसा गम्यते जातः कुमारो, मासं भावीत्यत्रापि पूर्णे मासे यावस्था सैव वयः, ततश्च तत्रापि भूतएव मासो वयः प्रतीतिहेतुरित्येतत्सामर्थ्यम् । खञो ञित्करणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च, मासीनाभार्यः ॥

"द्विगोर्यप्" ॥ प्राग्वतेः संख्यापूर्वपदानां तदन्तविधेरभ्युपगमात्पूर्वेण यत्खञोः प्राप्तयोर्यब्विधीयते, यपः पित्त्वादनुदात्तत्वं, तेन कालान्ते द्विगाविति पूर्वपदप्रकृतिस्वर एवावतिष्ठते ॥

"षण्मासाण्ण्यच्च" ॥ 'औत्सर्गिकोपि ठञिष्यतइति' । स कथमिष्यमाणोपि लभ्य इत्याह । 'स इति' । यदि चकारष्ठञः समुच्चयार्थः कथं तर्हि यब्भवतीत्याह । 'स्वरितत्वाच्चेति' । एतच्च व्याख्यानादेव लभ्यते ॥

"अवयसि ठंश्च" ॥ 'चकारोनन्तरस्य ण्यतः समुच्चयार्थ इति' । न तु पूर्ववत् ठञः समुच्चयार्थः, तथा च वार्त्तिकम् । अवयसि ठंश्चेत्यनन्तरस्यानुकर्ष इति ॥

"समायाः खः" ॥ 'सर्वत्रेति' । पूर्वत्र, अत्र परत्र च, तेन परिज्ञाप्यलभ्यकार्यसुकरमिति यावत् ॥

"रात्र्यहस्संवत्सराच्च" ॥ 'द्वैयह्निक इति' । अह्नष्टखोरेवेति नियमादसति टिलोपे ऽल्लोपोन इत्यकारलोपः, नन्वत्र राजाहःसखिभ्यष्टजिति परत्वाट्टचा भवितव्यं, न च महाविभाषया टचो विकल्पः, । बृहतीजात्यन्ताः समासान्ताश्चेति नित्येषु परिगणनात्, एवं तर्हि समासान्तविधेरनित्यत्वादत्र न भविष्यति ॥

"चित्तवति नित्यम्" ॥ यदि चित्तवति नित्यं लुग्भवति कथं द्वर्षस्याभविष्यतीत्यत्र वक्ष्यति द्वे वर्षे अधीष्टो भृतो वा कर्मकरिष्यति द्विवार्षिको मनुष्य इति, नहि नित्ये लुकि अधीष्टभृतयोरुत्पन्नस्य चित्तवति श्रवणमुपपद्यते, एवं तर्हि भूतएवोत्पन्नस्य प्रत्ययस्य लुगिष्यते न

सर्वत्र, एतच्च नित्यग्रहणाल्लभ्यते, आरम्भसामर्थ्यादेव हि नित्यो लुक् सिद्धस्तत्र नित्यग्रहणं विशिष्टेर्थे नित्यं लुग् यथा स्यात्स पुनर्विशिष्टोर्थो भूत एव व्याख्यानात्, तेनाधीष्टादौ पूर्वेण विभाषयैव लुग्भविष्यति ॥

"षष्टिकाः षष्टिरात्रेण पच्यन्ते" ॥ लघुत्वात्प्रथमातिक्रमे कारणाभावाच्च एकवचनेनैव निर्द्देशे कर्त्तव्ये बहुवचनेन निर्द्देशाद्विवक्षितं तदिति मन्यमानं प्रत्याह। 'बहुवचनमतन्त्रमिति'। तथा च वार्त्तिके षष्टिके सञ्ज्ञाग्रहणं कर्त्तव्यमित्येकवचनं प्रयुक्तं, प्रयोगबाहुल्यात्तु सूत्रे बहुवचनप्रयोगः, षष्टिरात्रेण पच्यन्तइत्यत्रार्थे निपात्यमानस्य षष्टिकशब्दस्य धान्यविशेषएव प्रयोगो यथा स्यान्मुद्गादिषु मा भूदित्येवमर्थं सञ्ज्ञाग्रहणं कर्त्तव्यमिति वार्त्तिककारेणोक्तं तदेत[1]न्निपातनादेव सिद्धमित्यभिप्रायेणाह। 'सञ्ज्ञैषेत्यादि' ॥

"वत्सरान्ताच्छश्छन्दसि" ॥ इद्वत्सरेदावत्सरशब्दौ पञ्चवर्षे युगे द्वयोर्वर्षयोः सञ्ज्ञे, एवं संवत्सरपरिवत्सरशब्दावपि ॥

"तेन परिजय्यलभ्यकार्य्यसुकरम्" ॥ परिजय्य इत्यस्य विवरणं शक्यते परिजेतुमिति, क्षय्यजय्यौ शक्यार्थइत्ययादेशः ॥

"तदस्य ब्रह्मचर्यम्" ॥ 'मासोस्य ब्रह्मचर्यस्येति'। यद्यप्यत्रात्यन्तसंयोगो गम्यते तथापि द्वितीया न भवति मासस्य प्रधानत्वात्, षष्ठीविषये च द्वितीया विधानात्। 'उभयथा हि[2] सूत्रप्रणयनादिति'। उभयोरप्यर्थयोः सूत्रकारेणैव सूत्रस्य व्याख्यातत्वादित्यर्थः। 'महानाम्न्यादिभ्य इति'। ब्रह्मचर्यस्य प्रत्ययार्थत्वात्सामर्थ्यात् षष्ठीसमर्थेभ्यः प्रत्ययः। 'महानाम्न्यो नाम ऋच इति'। महन्नाम यासां ता महानाम्न्यो विदामघवन्नित्याद्याः, नित्यं सञ्ज्ञाछन्दसोरिति ङीप् 'महानाम्नीश्चरतीति'। चरणमनुष्ठानं, तच्च क्रियाविषयमिति तत्सहचरिते व्रतं तच्छब्देनोच्यते, तत्र च स्वलिङ्गसङ्ख्यापरित्यागेनैव महानाम्नीशब्दो व्रते वर्त्ततइति महानाम्नीश्चरतीति विग्रहः। 'माहानामिक इति'। भस्याढे

१ तदेतदिति २ पुस्तके नास्ति।
२ हिर्नास्ति २ पुस्तके।

तद्धिते[1] पुंवद्भाव इति ङीपि निवृत्ते टिलोपः । 'अवान्तरदीक्षादिभ्यो डिनिरिति'। डित्करणमष्टाचत्वारिंशतष्टिलोपार्थम् । अन्यत्र यस्येति लोपेन सिद्धम् । 'अष्टाचत्वारिंशक इति'। वृत्तिविषये वर्षेषु संख्येयेषु अष्टचत्वारिंशच्छब्दो वर्त्तते प्रतिवेदं द्वादशवर्षाणि व्रतचरणाच्चतुर्षु वेदेष्वष्टाचत्वारिंशतं वर्षाणि व्रतं चरति ।'चातुर्मास्यानामिति'। अभिधेयबहुत्वाद्बहुवचनं, किमिदं चातुर्मास्यानामिति तत्राह । 'चतुर्मासाण्ण्यो यज्ञे तत्र भव इति'। 'चातुर्मास्यानीति'। संवत्सरसाध्यो हविर्यज्ञविशेषस्तस्य चत्वार्यवान्तरपर्वाणि तदपेक्षं बहुवचनम् । 'चातुर्मासीति'। तत्र भव इत्येवाण् सिद्धस्तस्य द्विगोर्लुगनपत्यइति लुकि प्राप्ते पुनरण् विधीयते, कालाट्ठञित्यस्य त्वप्राप्तिः समुदायस्याकालवाचित्वात्तदन्तविध्यभावाच्च, अपर आह, यथाकथं चित्कालवृत्तिभ्योपि ठञ दृष्टत्वाट्ठञ्येव प्राप्ते तस्य लुकीदमण्विधानमिति ॥

"तस्य च दक्षिणा यज्ञाख्येभ्यः"॥ यज्ञमाचक्षते यज्ञाख्याः, सोपसर्गादपि मूलविभुजादित्वादस्मादेव निपातनाद्वा कः । 'आख्याग्रहणमिति'। आङ्पूर्वस्य ख्याइत्यस्य धातोर्ग्रहणमित्यर्थः । आख्यग्रहणमिति ह्रस्वान्तपाठस्तु युक्तः । 'अकालवाचिनोपि यथा स्यादिति'। स्वरूपग्रहणं तु बहुवचननिर्द्देशादपि शक्यं निराकर्त्तुमिति भावः । नन्वेकाहादयः क्रतुशब्दा[2]स्तत्राहःशब्दः कालवाची न समुदायः कथन्तएव गृह्येरन्नत आह । 'प्राग्वतेरिति'। ननु याग्निष्टोमस्य दक्षिणा साग्निष्टोमे भवति तत्र बह्वचोन्तोदात्ताट्ठञ्, क्रतुयज्ञेभ्यश्चेति ठञ् सिद्ध्यति, न सिद्ध्यति, व्याख्यातव्यनाम्न इति तत्र वर्त्तते नामग्रहणाच्च व्याख्यातव्यतया लोके प्रसिद्धस्य यन्यस्य ग्रहणम्, किं च द्वयोर्वाजपेययोर्भवा द्वैवाजपेयिकी अत्र न प्राप्नोति तदन्तविधेरभावात्, सत्यपि वा तदन्तविधौ द्विगोर्लुगनपत्यइति लुक् प्राप्नोति, इह तु प्राग्वतेः संख्या-

१ इति पुंवद्भावेनेति पा॰ २ पुस्तके ।

२ नत्वहन् शब्दइति पा॰ २ पुस्तके ।

पूर्वपदानामिति तदन्तविधिश्चास्ति,लुक्च न प्राप्नोति, अप्राग्दीव्यतीयत्वादनार्हीयत्वाच्च ॥

"तत्र च दीयते कार्य्यं भववत्" ॥ 'हैमनमिति'। यद्यपि भववत्प्रत्यया भवन्तीत्युक्तं तथापि सर्वत्राण्च तलोपश्चेत्यण् प्रत्ययेतिदिष्टे तत्सन्नियोगशिष्टस्तलोपोऽपि भवति । 'वतिः सर्वसादृश्यार्थ इति'। कालेभ्यो भववदित्यत्रैतद् व्याख्यातम् । 'अग्निष्टोमे दीयते आग्निष्टोमिकं भक्तमिति'। यद्येवमग्निष्टोमस्य या दक्षिणा साग्निष्टोमे दीयते तत्र यज्ञाख्येभ्यो दीयतइत्यनेनैव सिद्धं, तथा यन्मासे कार्यं तन्मासे भवं भवति ततश्च कार्यग्रहणमनर्थकं तत्र भवेन कृतत्वात् । अत्राहुः । द्वयोर्मासयोः कार्यं द्वैमासिकमित्यत्रापि प्रत्ययो भवति, अत्र तदन्तविधेरभ्युपगमात्, कालाट्ठञित्यत्र तु न तदन्तविधिरस्ति, सत्यपि वा तदन्तविधौ द्विगोर्लुगनपत्यइति लुक् प्राप्नोति, अथानेनापि प्रत्यये सति लुक्कस्मान्न भवति यावता वतिः सर्वसादृश्यार्थ इत्युक्तं, सत्यं, प्रत्ययमात्रस्यातिदेशो न लुक इति, तदपरे न सहन्ते । वतिः सर्वसादृश्यार्थस्तत्र यथा भवे तदन्तविधिर्न भवति एवमत्रापि न भवितव्यम् एवं च कृत्वा तत्र च दीयतइत्यत्रापि तदन्तविधिर्न भवति, विभक्ते तु योगे भवत्येव, तत्र भववदित्यस्याभावात्, द्वयोर्वाजपेययोर्दीयते द्वैवाजपेयिकी, सूक्ष्मदृशामेष पन्थाः ॥

"व्युष्टादिभ्योऽण्" ॥ व्युष्टशब्दः कालवाची दिवसमुखे वर्त्तते तत्साहचर्यान्नित्यशब्दस्यापि कालवाचिनो ग्रहणं नाकाशादिवृत्तेस्तत्र चात्यन्तसंयोगे द्वितीया भवतीति सप्तम्यधिकारेऽपि द्वितीयान्तात्प्रत्ययः, नित्यं दीयते कार्यं वा नैत्यं, अणुप्रकरणेऽग्निपदादिभ्य उपसंख्यानमित्येतत्प्रत्याचष्टे । 'न वक्तव्यमिति'। न कर्त्तव्यमित्यर्थः । कथमित्याह । 'अत्रैव पठितव्यास्त[1]इति'। आदिशब्दः प्रकारवाच्याश्रयणीय इत्युक्तं भवति, अन्यथा तत्रैव पठेरन्, उपसंख्यानं वा क्रियेत, को विशेषः, अणुग्रहणमनर्थकं भववदित्यनुवर्त्तिष्यते, तेनाणेव भविष्यति, न चैवं

१ तइति २ पु॰ नास्ति ।

व्युष्टनित्यशब्दाभ्यां कालाट्ठञित्यस्य प्रसङ्गः, पूर्वेणैव ठञः सिद्धत्वात्, सत्यम्, आदिशब्दः प्रकारवाचीत्युक्तं तत्र यदि वृद्धेष्वप्येतत्कदा चित्प्रवर्त्तेत, तदा छः स्यात्, पठितेषु तु नास्ति दोषः ॥

"तेन यथाकथाचहस्ताभ्यां णयतौ" ॥ 'तृतीयासमर्थाभ्यामिति'। तृतीयार्थयुक्ताभ्यामित्यर्थः, तथा च यथाकथाचशब्दं प्रति वक्ष्यति तृतीयार्थमात्रं च सम्भवतीति, हस्तशब्दे तु तृतीयान्तत्वमेव सम्भवतीति प्रत्येकमर्थसंबन्ध इति, ननु यथासंख्यं प्राप्नोति तत्राह । 'यथासंख्यमत्र नेष्यतइति'। प्रत्ययौ तु प्रति यथासंख्यं भवत्येव, अत्र च व्याख्यानमेव शरणम्, 'तृतीयार्थमात्रं च सम्भवतीति' । अर्थस्तावत्सम्भवति यथाकथाच दत्तमित्युक्ते ऽनादरेण दत्तमिति प्रतीतेस्तावन्मात्रमेव सम्भवति, मात्रशब्दस्य व्यवच्छेद्यं दर्शयति । 'नन्विति'। यथाकथाचशब्दस्य वाक्यत्वात् प्रत्ययस्तु वचनसामर्थ्याद्वाक्यादपि भवति ॥

"सम्पादिनि" ॥ सम्पादिनीत्यत्र सम्पदेरर्थमाह । 'गुणोत्कर्षः सम्पत्तिरिति'। कर्णवेष्टकं कर्णाभरणम् । 'वस्त्रयुगेणेति' । कुमतिचेति णत्वम् ॥

"कर्मवेषाद्यत्" ॥ कर्म व्यायामः, वेषः कृत्रिम आकारः, ॥

"तस्मै प्रभवति सन्तापादिभ्यः" ॥ 'अलमर्थे चतुर्थीति'। अलमर्थे प्रभवतीत्यस्मिन्नुपपदे शेषविषये चतुर्थीत्यर्थः । 'सक्तुमांसौदनाद्विगृहीतादपीति' । अपिशब्दात्सङ्घातादपि साक्तुमांसिकः,औदनिकः, साक्तुमांसौदनिकः ॥

"कर्मण उकञ्" ॥ 'कार्मुकं धनुरिति'। अन्यत्र तु न भवत्यनभिधानात् ॥

"समयस्तदस्य प्राप्तम्" ॥ 'समर्थविभक्तिनिर्द्देश उत्तरार्थ इति' । इह तु समय इति निर्द्देशादेव प्रथमासमर्थविभक्तिर्लभ्यते, उत्तरार्थत्वादेव च समयशब्दस्य पुल्लिङ्गत्वेपि तदिति नपुंसकनिर्द्देशः, तदपेक्षया च प्राप्तशब्दस्यापि नपुंसकत्वम्, इह तु वाक्यभेदेन संबन्धः, यदाह । 'यत्तत्प्रथमासमर्थं प्राप्तं चेत्तद्भवतीति' ॥

"ऋतोरण्" ॥ 'उपवस्ता प्राप्तोस्येति'। उपवस्ता उपवासस्य कर्त्ता स प्राप्तोस्य औपवस्त्रमुपवासः, प्राशित्रं ब्रह्मभागः ॥

"छन्दसि घस्" । 'ऋत्विय इति'। सिति चेति पदत्वेन भत्वे निरस्ते ओर्गुणो न भवति ॥

"कालाद्यत्" ॥ 'काल्यस्ताप इति'। प्रातःकाले काल्यशब्दस्य व्युत्पत्त्यन्तरं मृग्यम् ॥

"प्रकृष्टे ठञ्" ॥ 'प्रकर्षेणेति'। प्रकृष्टशब्दे प्रकृत्यर्थस्य निष्कृष्य कथनमेतत्, एवं प्रकृष्टे प्रकर्षे। 'वर्त्तमानादिति'। प्रकर्षविशिष्टेर्थे वर्त्तमानादित्यर्थः। न त्वत्र नपुंसके भावे क्तो दर्शितः, कर्मणि क्तान्तोयं प्रकृष्यते स प्रकृष्ट इति, अन्यथा प्रकृष्टो दीर्घः कालोस्येति विग्रहो न घटेत। 'ठञ्ग्रहणं विस्पष्टार्थमिति'। अन्यथानन्तरस्य यतोनुवृत्तिराशङ्क्येत ॥

"प्रयोजनम्" ॥ प्रयुज्यतेनेनेति प्रयोजनं करणे ल्युट्, किं पुनस्तत्फलं, यथाहुः। यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनमिति, इन्द्रमह इन्द्रोत्सवः ॥

"विशाखाषाढादण्मन्थदण्डयोः" ॥ 'विशाखा प्रयोजनमस्येति'। विशाखाषाढशब्दौ रूढिरूपेण मन्थदण्डयोर्वर्त्तेते तयोर्यथाकथंचिद्व्युत्पत्तिः क्रियते, मंथो विलोडनदण्डः, तस्यैवाधारभूतो ऽवष्टाराख्यः काष्ठविशेष इत्यन्ये, उभयं मिलितमित्यपरे, आषाढो व्रतिनां दण्डः। 'अङ्गा प्रयोजनमस्येति'। अत्र करणं प्रयोजनम् ॥

"अनुप्रवचनादिभ्यश्छः" ॥ 'विशिपूरीत्यादि'। विश प्रवेशने, पूरी आप्यायने, पत्लृ गतौ, रुह बीजजन्मनि, एताः प्रकृतयो यस्यानस्य युवोरनाकाविति विहितस्य तस्माद्विद्यमानपूर्वपदाच्छ उपसंख्येयः, केवलस्यानस्य सपूर्वपदत्वासंभवात्सामर्थ्यात्तदन्तग्रहणम्। 'गृहप्रवेशनीयमिति'। एवं चानुप्रवचनादिषु संवेशनानुप्रवेशनान्वारोहणशब्दानां प्रपञ्चार्थः पाठः। 'स्वर्ग्यमिति'। ठञि प्राप्ते यद्विधिः। 'पुण्याहवा-

चनादिभ्य इति'। साहचर्यादभिधाने सिद्धे भेदविवक्षायां प्रत्ययश्रवणं मा भूदिति लुग्वचनम् ॥

"ऐकागारिकट् चौरे" ॥ 'एकागारं प्रयोजनमस्येति'। एकशब्दो ऽसहायवचनः, असहायं हि गृहं मुमूषिषतश्चोरस्य प्रयोजनं, ससहाये तु गृहे मोषितुं न शक्यते। 'एकागारं प्रयोजनमस्य भिक्षोरिति'। एकागारं चरेद्भैक्ष्यं तत्पुराणमुनेर्व्रतमिति शास्त्रादेकामेव यो भिक्षां गृह्णाति न द्वितीयां स एवमुच्यते, नन्वेवमप्येकागाराच्चोरे ठञेव नियमार्थं वक्तव्यः किं निपातनेन टकारेण वा प्रयोजनमत आह। 'टकारः कार्यावधारणार्थ इति'। अवधारणमेव दर्शयति। 'ङीबेव भवति न ञित्स्वर इति'। वृद्धिस्तु निपातनाद्भवत्येव, नन्वेवं ञित्स्वरनिवृत्तिरेव निपातनस्य प्रयोजनमिति चौरे नियमो नोपपद्यते, न, अनेकप्रयोजनत्वान्निपातनस्य, माभूद्वा नियमः, भिक्षौ कस्मान्न भवत्यनभिधानात्, यथा तु भाष्यं तथा ञित्स्वर एवेष्यते, तत्र हि सूत्रमिदं प्रत्याख्यातमेकागारान्निपातनानर्थक्यं ठञ्प्रकरणादिति, प्रयोजनमित्यत्र ठञ् प्रकृतस्तेनैवैकागारिकशब्दः सिद्ध इत्यर्थः। 'इकट्प्रत्ययमिति'। इदमपि प्रत्याख्यानेन विरुद्धम् ॥

"आकालिकडाद्यन्तवचने" ॥ 'आकालिकडिति निपात्यतइति'। समुदायविषयमुक्त्वा तत्रैव विभज्य निपातनं दर्शयति। 'समानकालशब्दस्येत्यादि'। सर्वेषामेव वाक्यानां निपात्यतइति वक्ष्यमाणेनैव सम्बन्धः। 'आद्यन्तयोश्चैतद्विशेषणमिति'। एतत्समानकालत्वमाद्यन्तयोर्विशेषणं निपात्यते आद्यन्तवचनइति सूत्रे श्रुतत्वादित्यर्थः। 'इकट् च प्रत्यय इति'। क्वार्थे, अस्येत्यधिकारात्षष्ठ्यर्थे, तदाह। 'समानकालावाद्यन्तावस्येति'। समानकालौ एककालावित्यर्थः, आदिर्जन्म, अन्तो विनाशः, न चोत्पादविनाशयोरेककालत्वं सम्भव इत्यव्यवहितकालत्वमेककालत्वं, निरन्तरे हि काले भेदाग्रहणात्स एव काल इति भवति प्रतिपत्तिः, तदाह। 'उत्पन्नानन्तरं विनाशीत्यर्थ इति'। आकालाट्ठंश्चेति वार्त्तिककारो मन्यते, न समानकालशब्दस्याकालशब्द आदेशो

निपात्यो नापीकट् प्रत्ययः, किं तर्हि आकालाट्ठंश्चेति सूत्रं कर्त्तव्यं, चकारः प्रकृतस्यैव ठञः समुच्चायार्थः, किमिदमाकालादिति, आवृत्तः कालोस्येत्याकालः, न च कालस्यावृत्तिः सम्भवतीत्ययमर्थो भवति उत्पत्तिकालेन समानो निरन्तरो यस्य विनाशकाल इति, एवं ह्युत्पत्तिकालएव विनाशोस्यावृत्त इति भवति प्रत्ययः, ततः स्वार्थे ठन्विधेय आद्यन्तवचने विषयइति । तत्र ठञ् पक्षे ङीबाद्युदात्तत्वं च भवति प्रत्ययान्तरनिपातने तु नाद्युदात्तत्वं सिद्ध्यति, तदाह । 'आकालनिपातनानर्थक्यं ठञ्प्रकरणादिति' । वृत्तिकारस्तु टकारोच्चारणात्प्रत्ययान्तरस्यैव निपातनं मन्यमानो ञित्स्वरं नेच्छति तन्मते निपातनापेक्षयां समुच्चयार्थश्चशब्दः, निपातनं च कर्त्तव्यम् । आकालशब्दाच्च ठनपि विधेय इति, आकालशब्दस्य चोक्त एवार्थः स्वार्थिकश्च ठन्, आद्यन्तविषया चा वृत्तकालता अपर आह । आवृत्तः काल इति तत्पुरुषोयं, ततोस्येत्यधिकारात्षष्ठ्यर्थे प्रत्यय इति, सर्वथानिपातनस्य ठनश्चैक एवार्थः समानकालावाद्यन्तावस्येति, अन्ये वर्णयन्ति, येषां वर्षादीनां यस्मिन्नेव काले मध्याह्नादावुत्पत्तिस्तस्मिन्नेव द्वितीयदिवसम्बन्धिनि विनाशश्च तान्याकालिकानि तस्मात्कालादनुवर्त्तन्तइति कृत्वा, तेषां ह्याद्यन्तयोरेक एव कालो भवति मध्याह्नादिरिति ॥

"तेन तुल्यं क्रिया चेद्वतिः" ॥ 'यत्तत्तुल्यं क्रिया चेत्सा भवतीति' । एतेन समानविभक्तिकत्वात्प्राधान्याच्च प्रत्ययार्थस्य विशेषणं क्रियाग्रहणमिति दर्शयति, निर्द्देशा[1]नुरोधे तु प्रथमनिर्द्दिष्टस्य प्रकृत्यर्थस्य विशेषणे भिन्नविभक्तिकत्वाद्वाक्यशेषोध्याहार्यः स्यात्, यत्तत् तृतीयासमर्थं क्रिया चेत्सा भवतीति, तुल्यमित्येतच्च प्रथमान्तं न [2]क्रियाविशेषणत्वेन द्वितीयान्तं, यदाह । 'तुल्यमित्येतस्मिन्नर्थइति' । तस्य विशेषणं क्रियाग्रहणं सामान्योपक्रमत्वात्तु हितं भक्षा इतिवत्तुल्यमिति नपुंसकनिर्द्देशः । 'ब्राह्मणेन तुल्यं वर्त्ततइति' ननु ब्राह्मणशब्देन जातिर्द्रव्यं वोच्येत न

१ क्रमेत्यधिकं २ पु॰ ।
२ त्वित्यधिकं २ पु॰ ।

ताभ्यां क्रियायास्तुल्यत्वमत्यन्तभेदात्, यत्र तु किंचित्सामान्यं कश्चिच्च विशेषः स एव विषयस्तुल्यतायाः, स्यादेतत्। ब्राह्मणमहर्चरितायामध्ययनादिकायां क्रियायां ब्राह्मणशब्दस्य वृत्तिः, ब्राह्मणेन तुल्यं वर्त्तते, कोर्थः यथा ब्राह्मणो वर्त्तते तथा वर्त्ततइत्यर्थः। वर्त्तनमध्ययनादिक्रियानुष्ठानं तेन युक्तमेव तुल्यत्वमिति. एवमपि मुख्ये सम्भवति गौणस्य ग्रहणमयुक्तं, कः पुनर्मुख्यः क्रियावाची पचत्यादीनां तावत्क्रियावाचीनामप्रातिपदिकत्वादसत्त्वभूतार्थाभिधायित्वाच्च तृतीयासमर्थत्वं न सम्भवति, अव्ययकृतान्तु कृत्वा हृत्वा कर्तुं हर्तुमित्येवमादीनां यद्यपि क्रियावाचित्वं तथा पञ्चकृत्वः कृत्वेति कृत्वार्थोत्पत्तिर्भवति तथाप्यसत्त्वभूतार्थाभिधायित्वा[१]त्तृतीयान्तत्वाभावः, घञादयश्च धात्वर्थस्य सिद्धतायां भवन्तः सत्त्वभूतार्थाभिधायिनो न क्रियावचनाः, अत एव हि तत्र कृत्वोर्थप्रत्ययाभावः, नहि भवति पञ्चकृत्वः पाक इति, भवति तु पञ्चपाका इति यथा पञ्चघटा इति भवति न तु भवति पञ्चकृत्वो घट इति, भोक्तुं पाक इत्यादौ धातुवाच्यक्रियापेक्षस्तुमुन्प्रत्ययः घृतपाकेन तुल्यस्तैलपाक इत्यादिरपि विषयो न भवति, । ननु पञ्चकृत्वः शयितव्यमिति कृत्वसुचो दर्शनाच्छयितव्यादयः क्रियावचनास्ततः किं राजशयितव्येन तुल्यं देवदत्तशयितव्यमित्यादिरवकाशः स्यात्, तथा स्यातव्येन तुल्यं गमनं मन्दत्वात्तथा नर्तितव्येन तुल्यं गमनं बहुविकारत्वादिति, तथा भोक्तुं पाक इत्यादौ यथा प्रकृतिवाच्यक्रियापेक्षस्तुमुन् भवति तथा घृतपाकेन तुल्यस्तैलपाक इत्यादौ वतिरपि स्यादिति सोप्यवकाशः, तदेवं प्रत्ययार्थविशेषणेपि क्रियाग्रहणे सामर्थ्यात्प्रकृत्यर्थोपि क्रियैव भवति नह्यक्रियया क्रिया तुल्या भवतीति क्रियावाचिभ्य एव वतिना भवितव्यं प्रकृत्यर्थविशेषणे सुतरामिति कथं क्तेशेन क्रियायां वर्तितेभ्यस्तेभ्यो ब्राह्मणादिभ्यः प्रत्ययः। उच्यते। येनोपमीयते यश्चोपमीयते यश्च तयोः साधारणो धर्म एतत्त्रयमप्यपेक्ष्योपमानोपमेयभावः प्रवर्त्तते, तत्र यदा क्रियोपमानत्वेन विव-

१ वाचित्वादिति पा॰ २ पु॰।

स्यते तदा सावश्यापेक्ष्यसाधारणधर्माधारत्वात्क्रियारूपतां हित्वा सत्त्वरूपतां प्रपद्यते ततश्च सामर्थ्याद्भूतपूर्वगत्याश्रयणं यस्यार्थस्य क्रियारूपतापूर्वमभूत् संप्रति क्रियारूपातिक्रमेण सत्त्वभावापन्नोपि तृतीयान्तवाच्यः परिगृह्यते तदेवं संप्रति मुख्यक्रियावाच्यसम्भवाद्भूतपूर्वक्रियारूपार्थवाचिनः शयितव्यादयोपि गौणा एव, गौणं च क्रियावाचित्वं ब्राह्मणादीनामपि सम्भवतीति तेभ्योपि भवति प्रत्ययः, तेषां तु न कस्यां चिदपि दशायां मुख्यक्रियावाचित्वमित्येतावांस्तु विशेषः, यदि तर्हि क्रिययोस्तुल्यत्वे प्रत्ययः ब्राह्मणाध्ययनेन तुल्यमध्ययनं करोति ब्राह्मणवदधीतइत्यन्यः साधारणो धर्मापेऽक्षणीयः स्यात् तस्माद् द्रव्ययोरेव तुल्यत्वे प्रत्ययः क्रिया तु साधारणो धर्म इति युक्तं, न युक्तमेवं हि यथा ब्राह्मणेन तुल्यः क्षत्रियोध्ययनेनेति द्रव्यनिष्ठमभिधानं तथा वत्यन्तेपि स्यात्, ततः किमव्ययसंज्ञा न प्राप्नोति, द्रव्यस्य लिङ्गसंख्यायोगित्वात्, स्वरादिषु पाठाद्भविष्यति, इहापि तर्हि प्राप्नोति, उपसर्गाच्छन्दसि धात्वर्थे य उद्वतो निवतो यासि, किं च पाठाद्भवतु संज्ञा लिङ्गसंख्याकारकशक्तियोगस्तु केन वार्यते स्वः पश्येत्यादिवत्, लौकिके च प्रयोगे क्रिययोरेव सादृश्यं प्रतीयते न तद्वतोर्द्रव्ययोः, यत्पुनरुक्तं साधारणो धर्मापेक्षणीयः स्यादिति, नैष दोषः । चन्द्रइव मुखमस्या इत्यादौ यथा शब्दानुपात्ता अपि कान्त्यादयः प्रतीयन्ते तथात्रापि सौष्ठवादयः प्रत्येष्यन्ते, तस्मात्सुष्ठूक्तं यत्तत्तुल्यं क्रिया चेत्सा भवतीति । 'गुणतुल्यइति' । गुणैस्तुल्य इति पूर्वसदृशेति तृतीयासमासः । 'पुत्रेण तुल्यः स्थूल इति'। पुत्रस्य यादृशं स्थौल्यं पितुरपि तादृशमित्यर्थः ॥

"तत्र तस्येव" ॥ किमर्थमिदमुच्यते न पूर्वेणैव सिद्धं, न सिद्ध्यति, तृतीयासमर्थात्तत्र प्रत्यय इह तु सप्तमीषष्ठीसमर्थात्, एवं तर्हि तुल्यार्थैरिति या तृतीया तयैव शब्दयोगे सर्वे विभक्त्यर्था व्याप्तास्तद्यथा ब्राह्मण इवाधीते ब्राह्मणेन तुल्यमधीयते ब्राह्मणमिव पश्यति ब्राह्मणेन तुल्यं पश्यति, ब्राह्मणेनेवाधीतं ब्राह्मणेन तुल्यमधीतं ब्राह्मणायेव ददाति ब्राह्मणेन तुल्यं ददाति, ब्राह्मणादिवाधीते ब्राह्मणेन तुल्यम-

धीते, ब्राह्मणस्येव क्षत्रियस्य स्वं ब्राह्मणेन तुल्यं क्षत्रियस्य स्वं ब्राह्मण इव क्षत्रिये वर्त्तते ब्राह्मणेन तुल्यं क्षत्रिये वर्त्ततइति, ततश्च तृतीयान्तादेव पूर्वसूत्रेण प्रत्ययो भविष्यति तथा च पूर्ववत्सन इति पञ्चम्यन्तादुतिर्दृश्यते[1]एवमपि न सिद्ध्यति, किं कारणं पूर्वत्र क्रियातुल्यत्वे प्रत्ययः तच्चावश्यं क्रियाग्रहणं कर्त्तव्यं गवा तुल्यो गवय इत्यादौ माभूदित्येवमर्थः । ततश्च द्रव्यगुणयोस्तुल्यत्वे वतिर्न स्यादिति षष्ठीसप्तम्यन्तादिवार्थेनेन विधीयते ॥

"तदर्हम्" ॥ 'तदिति द्वितीयासमर्थादिति' । अर्हशब्दः पचाद्यजन्तस्तद्योगे कर्मणि षष्ठ्या भवितव्यं, निपातनात्तु द्वितीया, अपर आह,विग्रहवाक्याभिप्रायमेतत्, यदा राजानमर्हतीत्येवं तिङन्तेन विगृह्यते तदा द्वितीया समर्थमिति, सूत्रे त्वर्हमिति कर्मोपपदादच्प्रत्ययः कृत इति, इह क्रियाग्रहणमनुवर्त्तते यत्तदर्हं क्रिया चेत्सा भवतीति, राजानमर्हति वृत्तं राजवद्वर्त्तते, इह न भवति राजानमर्हति छत्रं ब्राह्मणमर्हति दधीति, यद्येवं राज्ञा तुल्यं वर्त्ततइति विग्रहाश्रयणेन पूर्वेणैव वतिः सिद्धः, इह तर्हि राजवद्वर्त्तते राजेति भेदाभावेन तन्निबन्धनस्य सादृश्यस्याभावादप्राप्तौ वतिरनेन विधीयते, अत्रापि राजत्वेन ये प्रसिद्धा भरतादयस्तउपमानानीदानींतनानामिति सिद्धो वतिः, यदा तर्हि राजशब्दः सामान्यवचनः प्रसिद्धविशेषविषयो वा राजवदयं वर्त्तते भरत इति तदा सादृश्याभावादप्राप्तिः,[2]विनीतवदुपस्थितं चिच्छेद कृतहस्तवदिति विनीतानामिदं योग्यमुपस्थानं कृतहस्तानामिदं योग्यं छेदनमिति गम्यते न तु सादृश्यं, उक्तं च ॥

---

१ एवमपि न सिध्यति, किं कारणं पूर्वसूत्रे तुल्यस्य प्रतियोगिनि प्रत्ययः, अत एव च तत्र ब्राह्मणादिशब्दानां तद्गतायां क्रियायां वृत्तिर्दर्शिता । इह तु मथुरया तुल्यः पाटलिपुत्रे प्राकार इति न मथुरा प्रतियोगिनी किं तर्हि तद्गतः प्राकारः । इह च देवदत्तेन तुल्या यज्ञदत्तस्य दन्ता इति न देवदत्तः प्रतियोगी किं तर्हि तदीया दन्ता इति न पूर्वेण प्राप्तिः । नन्वत्रापि मथुरादेवदत्तशब्दाभ्यां तत्प्राकारो दन्ताश्च लक्षिष्यन्तइत्यधिकं २ पुस्तके ।

२ तथेत्यधिकं २ पुस्तके ।

युक्तमौपयिकं राज्ञ इत्यर्थस्य निदर्शनम् ।
उपमानविवक्षायां तदर्हमिति पठ्यते ॥

इति । यदा त्वेकमेव वस्तु अवस्थाभेदपरिकल्पितभेदमुपमानोपमेयत्वेन विवक्ष्यते तदा नार्थोनेन, तथा चेवशब्दस्य प्रयोगो दृश्यते राजेवायं राजा युध्यते वैय्याकरण इव वैय्याकरणो ब्रूते, रामरावणयोर्युद्धं रामरावणयोरिवेति, उक्तं ।

तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे ।
संभवत्युपमात्रापि भेदस्य परिकल्पनात् ॥ इति ।

"उपसर्गाच्छन्दसि धात्वर्थे" ॥ 'ससाधने धात्वर्थइति' । क्रियामात्रं धात्वर्थस्तत्कथं ससाधनइति लभ्यते, उच्यते, इहार्थग्रहणं न कर्त्तव्यं धाताविव्येव सिद्धं कथं पुनर्द्धेतो नामोपसर्गो वर्तेत शब्दे शब्दासंभवादर्थे वृत्तिर्विज्ञास्यते, यथा धातुसंबन्धइत्यत्र तत् क्रियते बहुव्रीहिर्यथा विज्ञायेत धातुर्धात्वर्थः क्रिया अर्थः प्रयोजनं यस्य साधनस्य तस्मिन्वर्त्तमानादिति ससाधने धात्वर्थइत्यस्याप्ययमेवार्थो धात्वर्थविशिष्टे साधनइति, न पुनः साधनविशिष्टे धात्वर्थइति, उपसर्गाश्च पुनरेवमात्मकाः यदुत श्रुतायां क्रियायां तामेव विशिषन्ति यथा आगच्छतीति, यत्र तु न श्रूयते तत्र क्रियाविशिष्टं साधनमाहुः, निष्कौशाम्बिरिति, तत्र यत्र क्रिया न श्रूयते तत्र यथा स्यादित्येवमर्थं धत्वर्थइत्युक्तम् । 'उद्गतानि निगतानीति' । वनानां विशेष्यत्वान्नपुंसकत्व,मुद्गतो निवतइति तु छान्दसं पुंस्त्वमिति मन्यते, यच्चास्माभिरुक्तं क्रिया गुणभूता साधनं प्रधानभूतं तत्रोपसर्गस्य वृत्तिरिति तदप्यनेन दर्शितं, साधनशब्देन शक्तिमद्द्रव्यमुच्यते न शक्तिमात्रमिति लिङ्गसङ्ख्यायोगादन्वर्थाव्ययसञ्ज्ञा न भवति ॥

"तस्य भावस्त्वतलो" ॥ तस्येदमित्यस्यापवादोयं, भावशब्दोयं भवतेश्चेति वक्तव्यमिति णप्रत्ययान्तोस्त्येवाभिप्राये यथायं भाव इति, अस्ति च पदार्थमात्रवचनो यथा विचित्रा हि भावशक्तय इति, अस्ति

च शृङ्गारादिषु स्थायीभावः सञ्चारीभाव इति, घञन्तस्तु भवत्यर्थे कर्तृवर्जिते च कारके वर्त्तते, भवतिश्चानेकार्थः, तद्यथा तत्र भव इति सत्तार्थः, धान्यानां भवन इत्युत्पत्त्यर्थः, इत्थंभूतइति प्राप्त्यर्थः, भूष्णुर्भूतिकाम इति समृद्ध्यर्थः, यस्य च भावेन भावलक्षणमित्यादौ धात्वर्थमात्रवचनः, वृत्तिकारोपदर्शितश्चापरः, ततश्च तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्ग इत्यत आह । 'भवतोस्मादित्यादि'। यस्माद्गोत्वादेर्हेतोर्गवादौ गौरित्येवमादिकमभिधानं प्रवर्त्तते गौर्गौरित्येवमादिश्चाभिचाकारः प्रत्ययो भवति सोर्थो गवादेः शब्दस्य प्रवृत्तिनिमित्तमिह भावशब्देनोच्यते, तत्र भवतोस्मादित्यर्थप्रदर्शनमेतत् न तु हेतौ केनचिद्घञ्विहितः, तस्माच्छ्रिणीभुवोनुपसर्गइति करणे घञ् द्रष्टव्यः, अभिप्रायादीनां चानभिधानान्न ग्रहणम्, उक्तं च यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति, गुणशब्देन यावान्कश्चित्पराश्रयो भेदको जात्यादिरर्थः स सर्व इह गृह्यते, यस्य भावादित्येतावत्युच्यमाने पुत्रस्य भावात्पितृशब्दस्य निवेश इति पितृत्वमिति पुत्रे प्रत्ययः स्यात्, पुत्रत्वमिति च पितरीतिगुणग्रहणं, भावाद् विद्यमानत्वात्, द्रव्यमिति विशेष्यभूतः सत्त्वभावापन्नोर्थ उच्यते, तस्मिन् शब्दनिवेशः शब्दस्य प्रवृत्तिः, स त्वतलोरभिधेय इत्यर्थः, तत्र ये रूपादयः शब्दा गुणमात्रवृत्तयस्तेभ्यो गुणसमवायिनि सामान्यविशेषे भावप्रत्ययो रूपत्वमिति, ये तु शुक्लादयो गुणगुणिवृत्तयो गुणगुणिनोरभेदोपचारान्मतुब्लोपाद्वा, तेभ्यो गुणवृत्तिभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः, गुणिवृत्तिभ्यस्तु गुणे, अणुमहद्दीर्घादयो नित्यं परिमाणिनि वर्त्तन्ते तेभ्यः परिमाणे गुणे भावप्रत्ययः, षत्वं णत्वमिति भिन्नवर्णव्यक्तिसमवेते सामान्यविशेषे प्रत्ययः, गवादयो यदा जातिमात्रवाचिनस्तदा तेभ्यः शब्दस्वरूपे प्रत्ययः, तथा ह्यर्थे जातौ शब्दस्वरूपमध्यस्यते यो गोशब्दः स शब्दार्थ इति, शब्दस्वरूपमेव तत्र प्रवृत्तिनिमित्तं नान्यत्, द्रव्यवाचिभ्यस्तु गवादिभ्यो जा[तौ] प्रत्ययः, समासकृत्तद्धितास्तु यद्यपि केवलं संबन्धं नाभिदधति तथा[पि] संबन्धिनि वर्त्तमानाः संबन्धं प्रवृत्तिनिमित्तमपेक्षन्तइति तेभ्यः संब[न्धे]

भावप्रत्ययः, तथा च राजपुरुषत्वमिति स्वस्वामिभावः संबन्धः प्रतीयते, पाचकत्वमिति क्रियाकारकसम्बन्धः, औपगवत्वमित्यादावपत्यापत्यिसंबन्धः, के चिदौपगवत्वमित्यपत्यप्रत्ययस्य जातिमभिधेयामिच्छन्ति तन्मते ऽर्थान्तरवृत्तिस्तद्धित उदाहार्यः, समासकृत्तद्धितेषु संबन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्य इति, रूढिशब्दा गोरखरसप्तपर्णलोहितशाल्यादयो जातिविशेषावच्छिन्नद्रव्यवाचिन इति तेभ्यो जातावेव भावप्रत्ययः, एवं कुम्भकारत्वं हस्तित्वमिति अभिन्नरूपाः, शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि तेभ्यो भावप्रत्ययो गुण एव भवति न तु संबन्धे गुणगुणिनोर्जातितद्वतोरिव सोयमित्यभिसंबन्धेन लोकनिरूढेन भेदसंबन्धस्य त्वभावात्, गुणवचनेभ्यो लुगिति लुग्विधानद्वारेणाभेदेनैव गुणिनामभिधानं न तु भेदाश्रया मत्वर्थीयोत्पत्तिरित्याख्यायते, ऽव्यभिचारिसंबन्धात् सतो भावः सत्तेति जातावेव भावप्रत्ययः, नहि सद्वस्तु सत्तासंबन्धं व्यभिचरतीति सत्तासंबन्धानपेक्षणाद् न संबन्धे प्रत्ययः, राजपुरुषयोस्तु संबन्धस्य कादाचित्कत्वात्तदपेक्षो राजपुरुषशब्दः स्वार्थमभिधत्तइति ततः संबन्धे प्रत्ययो युक्तः, तस्मात्सत्सु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या न तु सत्सत्तयोः संबन्धः समवायाख्यः, धवखदिरत्वमिति जातिद्वन्द्वाज्जातिसमुदायः, कुत्वमित्यादौ संज्ञास्वरूपे संज्ञिष्वथास्ते प्रत्ययः, अन्ये तु संज्ञासंज्ञिसंबन्धइत्याहुः । उक्तं च ।

जातिगुणाज्जातिगुणौ समासकृत्तद्धिताच्च संबन्धे ।
डित्यादेः स्वरूपे धवखदिराज्जातिसंघाते ॥

इति । इह तु नानात्वं सहत्वं यौगपद्यमित्यादौ वृत्तिविषये नानाशब्दो ऽसहभूतेर्थे वर्त्तते सहशब्दश्च सहभूते युगपच्छब्दोपि युगपद्भूते, ततोसहभावादौ भावप्रत्ययः, एवमन्यत्रापि यथासम्भवन्द्रष्टव्यम् । इह न ब्राह्मणस्य भाव इति युगपद्भावेन नञर्थेन च संबन्धे विवक्षिते पूर्वं नञ्समासः पश्चात्त्वतलौ, तेनाब्राह्मणत्वमब्राह्मणतेति सतिशिष्टत्वा-

त्वप्रत्यये प्रत्ययस्वरः, तलि लित्स्वरेण मध्योदात्तत्वं भवति, नाव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्। ननु परत्वात्त्वतलौ प्राप्नुतः, न वा सापेक्षत्वाद्ब्राह्मणार्थो ह्यत्र नञर्थमपेक्षते, नञ्समासोऽपि तर्हि न प्राप्नोति ब्राह्मणस्य भावापेक्षत्वात्, नैवं प्रधानमत्र ब्राह्मणपदमुत्तरपदार्थप्रधानो हि नञ्समासः, भवति च प्रधानस्य सापेक्षस्यापि समासः, यथा राजपुरुषोऽभिरूप इति, वा छन्दसि छन्दसि विषये क्वचित्पूर्वं त्वतलौ पश्चान्नञ्समासः, अयोनित्वाय अशिथिलत्वाय, अत्र नञ्स्वर एव भवति, क्वचिद्विपर्ययः, त्वतल्व्यतिरिक्ते भावप्रत्यये पूर्वं स एवेष्यते पश्चान्नञ्समासस्तेनाप्रथिमेत्यादौ सति शिष्टत्वान्नञ्स्वर एव भवति, अशौक्ल्यमित्यादौ च नञः प्रकृतावनन्तर्भावाच्छुक्लशब्दादौ वृद्धिः, पूर्वं नञ्समासे न नञ्पूर्वादिति प्रतिषेधात् ष्यञेव न स्यात्सत्यपि वा ष्यञि नञो वृद्धिः स्यात्, ज्ञापकात्सिद्धं, यदयं युवादिषु पुरुषासे हृदयासइति नञ्समासे विषयभूते भावप्रत्ययप्रतिषेधं शास्ति तज्ज्ञापयति त्वतलापवादप्रत्ययो नञर्थापेक्षादपि परत्वान्नञ्समासं बाधित्वा भवतीति॥

"आ च त्वात्"॥ 'प्रथिमेति'। तुरिष्ठेमेयस्सु टेरिति टिलोपः, र ऋतो हलादेर्लघोरिति ऋकारस्य रादेशः। 'पार्थिवमिति'। इगन्ताच्च लघुपूर्वादित्यण्। 'अपवादैरित्यादि'। इमनिजादींस्त्वतलोरपवादान्वक्ष्यति तैः सह समावेशो यथा स्यादित्येवमर्थमिदम्। ननु स्वरितत्वादेव त्वतलावनुवर्तिष्येते तेनापवादविषये भविष्यतः। तच्च। इत उत्तरवाक्यानां प्रत्ययनिर्देशेन निराकाङ्क्षत्वात्त्वतलोरपि पूर्वसूत्रे विधानादाकाङ्क्षाया अभावाच्चेच्छक्यं विज्ञातुमनुवर्तेते त्वतलाविति। 'कर्मणि च विधानार्थमिति'। येभ्य एव कर्मणि ष्यञादिविधिस्तेभ्य एव त्वतलावपि कर्मणि भवतो न तु ङ्याप्प्रातिपदिकमात्रात्। 'चकारो नञ्स्नञ्भ्यामपि समावेशार्थ इति'। अन्यथा स्त्रीपुंसाभ्यामित्यस्य विधित्वपक्षे प्राग्भवनाद्येऽर्थास्तानपेक्ष्य तत्रैव प्रदेशे नञ्स्नञोर्विधानादत्र प्रकरणे सन्निधानाभावाच्चेमनिजादिवत्समावेशासिद्धिः, परिभाषात्वेऽपि यथोद्देशपक्षे स्त्रीपुंसाभ्यामित्यत्रैव प्रकरणे नञ्स्नञोः सन्निधिर्न पुनरिमनिजादिमध्ये

कार्यकालपक्षेपि प्रागभवनाद्वयोर्थास्तत्र नञ्स्नञ्भ्यामुपस्थातव्यं तत्र यदि तावद्भावइत्यर्थविज्ञानमात्रएव नञ्स्नञोरुपस्थानं तस्य भावस्त्वतलौ स्त्रीपुंसाभ्यां भावे नञ्स्नञाविति तदस्मिन्प्रदेशे सन्निधानेप्या च त्वादित्यस्मात्पूर्वौ भवतः, अथ तूत्सर्गापवादविधानोपयोगविज्ञानानन्तरं नञ्स्नञोरुपस्थानं तदा ब्राह्मणस्त्व इत्यस्मात्परौ नञ्स्नञौ भवतः, सर्वथा आ च त्वादित्यस्मिन्प्रदेशे नाभ्यन्तरौ । गुणवचनब्राह्मणादिभ्यः कर्मणि चेत्यत्र कर्मणि नञ्स्नञोरुपस्थानं नाशङ्कनीयं, प्रकृतिविशेषसंबद्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण तस्यासंबन्धात्, अधिकारपक्षे तु प्रतिसूत्रमुपस्थानान्नञ्स्नञोरिमनिजादिष्वन्तर्भावादा च त्वादित्येव नञ्स्नञ्भ्यामपि समावेशः सिध्यति । अथ तत्राप्यर्थस्यैवावधित्वादर्थेष्वेवोपस्थानं ततोऽधिकारपक्षेपि नाभ्यन्तरत्वमिति सर्वथा चकारेणैव नञ्स्नञ्भ्यां समावेशो वाच्यः ॥

"न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः" ॥ अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति त्वतलोरयं प्रतिषेध इति भ्रान्तिं वारयति । 'इत उत्तरे ये प्रत्यया इति'। एतच्चा च त्वादिति संबन्धाल्लभ्यते । 'चतुरादीनीति'। चतुराद्यन्तांस्तत्पुरुषान्नञ्पूर्वानित्यर्थः । ननु पृथ्वादिभ्य इमनिज्वेत्यादिभिः परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते, न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते, तदन्तविधिश्च ग्रहणवता प्रातिपदिकेन प्रतिषिद्धः, यत्र तर्हि स्वरूपग्रहणं नास्ति पत्यन्ताद्यक्भवति, हायनान्तादण् भवति, इगन्ताच्च लघुपूर्वात्, योपधाद्गुरूपोत्तमाद्वुञिति, तत्र नञ्पूर्वात्तत्पुरुषादस्त्येव प्रसङ्गस्तद्दर्शयति । 'वक्ष्यति पत्यन्तपुरोहितादिभ्यो यगिति'। 'अपतित्वमपतितेति'। तत्त्वा च त्वादित्यधिकारइत्युक्तं ततश्च पत्यन्तेत्यनेनैव त्वतलोरप्यधिकृतयोर्विधानं, ततः किं, यक इव त्वतलोरप्ययं प्रतिषेधः प्राप्नोति, अस्त्वेवमधिकृतयोस्त्वतलोः प्रतिषेधस्तस्य भाव इत्यनेन पुनस्त्वतलौ भविष्यतो बाधकाभावात्, यदि पत्यन्तादिष्वेवास्योपयोगः पत्यन्तेत्यस्यैव पुरस्तादिदं पठितव्यं तदेवोत्तरत्राप्यनुवर्त्तिष्यते, एवं तर्ह्यत्र प्रदेशे प्रतिषे-

धाधिकारस्योपादानादिमनिजादीनामपि प्रतिषेधो विज्ञायते। ननु चोक्तं तदन्तविध्यभावादप्रसङ्ग इति, एवं तर्ह्येतज्ज्ञापयति अस्त्युत्तरत्र तदन्तविधिरिति, किमेतस्य ज्ञापने प्रयोजनं नञ्पूर्वाद्बहुव्रीहेरन्यपूर्वाच्च तत्पुरुषात्पृथ्वाद्यन्तादिमनिजादिः सिद्धो भवति, न विद्यन्ते पृथवो यस्य अपृथुः परमपृथुः। 'तस्य भाव इति'। नात्रेमनिजादिरिष्यते, अत एव वृत्तिकारेणापि नास्य पटवः सन्तीत्यपटुरित्यादि व्यावर्त्यं दर्शितं, तस्मादिहास्य करणे प्रयोजनं चिन्त्यम्, आचतुर्थमित्यादौ ब्राह्मणादित्वात्ष्यञ्॥

"पृथ्वादिभ्य इमनिज्वा" 'वावचनमणादिसमावेशार्थमिति'। इह ये इगन्ता लघुपूर्वाः पृथुमृदुप्रभृतयस्तेष्वणः समावेशः, चण्डखण्डादिषु गुणवचनेषु ष्यञः, बालवत्सादिषु वयोवचनलक्षणस्याञः, त्वतलोस्तु समावेश आ च त्वादित्येव सिद्ध इत्याह। 'त्वतलौ तु सर्वत्र भवत एवेति'॥

"वर्णदृढादिभ्यः ष्यञ् च"॥ 'वर्णविशेषवाचिभ्य इति'। स्वरूपग्रहणं तु न भवति यदि स्याद् दृढादिष्वेव वर्णशब्दं पठेत्, वर्णशब्दश्च रूपस्य वाचको न ब्राह्मणादीनां दृढादिभिर्गुणवचनैः साहचर्यात्, अत एव साहचर्याद्वर्णग्रहणात्पर्यायाणां ग्रहणं न भवति, कथं, दृढादयो हि गुणोपसर्जने द्रव्ये वर्तन्ते ऽतस्तत्साहचर्याद्वर्णशब्दा अपि तादृशा एव गृह्यन्ते, एवञ्च वर्णदृढादीनां गुणवचनत्वादेव सिद्धे पुनर्वचनमनिजर्थम्। 'श्रौचिती याथाकामीति'। ब्राह्मणादेराकृतिगणत्वात्ष्यञ् ङीष् हलस्तद्धितस्येति यलोपः। 'वेयातलाभमतिमनःशारदानामिति'। विशब्दादुत्तरे ये यातादयस्तदन्तानां समासानामनन्तरः ष्यञ् भवतीत्यर्थः। वियातत्वं, वियातता, वियातिमा वैयात्यं, विलाभत्वं विलाभता विलाभिमा वैलाभ्यं, विमतित्वं विमतिता विमतिमा वैमत्यम्, इगन्तत्वादणपि भवति, वैमतं, विमनस्त्वं विमनस्ता विमनिमा वैमनस्यं, विशारदत्वं विशारदता विशारदिमा वैशारद्यम्। 'समो मतिमनसोरिति'। सम उत्तरे ये मतिमनसी तयोः समासयोरनन्तरः ष्यञ् भवति, संमतित्वं संमतिता संम-

तिमा सांमत्यं, पूर्ववदण् सांमतं, संमनस्त्वं संमनस्ता संमनिमा सांमनस्यम् ॥

"गुणवचनब्राह्मणादिभ्यः कर्मणि च" ॥ 'कर्मशब्दः क्रियावचन इति'। न साधनकर्मवचनः, क्रियाया हि साधनं सम्भवति सत्त्वशब्दाश्च गुणवचनब्राह्मणादयोऽतस्तेषां नास्ति साधनकर्मणा संबन्धः, क्रियात्वात्मलाभाय तैर्युज्यते, कथं तर्हि कवेः कर्म काव्यं नहि तत्र क्रियाभिधीयते, किं तर्हि तत्कृतो ग्रन्थः । अत्राहुः । क्रियाकर्मण्येव प्रत्ययविधानमौपचारिकस्तु तत्कृते प्रयोग इति, अपर आह । सूत्रे यः कर्मशब्दो यश्च वृत्तौ क्रियाशब्दस्तदुभयमपि कर्मसाधनं कर्म क्रियाकार्यमित्यर्थः, तेन कृतिव्याप्ये साधनकर्मण्येव प्रत्यय इति । 'ब्राह्मणादिराकृतिगण इति'। अवृत्कृतत्वात् । एतदेवोपपादयति । 'आदिशब्दः प्रकारवचन इति' । किमर्थं तर्हि गुणवचनग्रहणं ब्राह्मणादीनां चानुक्रमणं, केषां चित्प्रपञ्चार्थं केषां चित्स्वार्थे प्रत्ययविधानार्थं केषां चिद्बाधकबाधनार्थम्, तत्र ब्राह्मणशब्दात्प्राणभृज्जातिलक्षणेऽञि प्राप्ते माणववाडवाभ्यां गोत्रलक्षणे वुञि, अर्हतो नुम् चेति नुमर्थः पाठः, अर्हः प्रशंसायामिति शतृप्रत्ययः, आर्हन्त्यं, चोरधूर्तयोर्मनोज्ञादित्वाद्वुञि प्राप्ते सोपि भवत्येव, आराधयादीनां चतुर्णां जनपदवाचित्वादञि कृते तस्य च कम्बोजादिभ्यो लुग्वचनमिति लुकि गोत्रवुञि प्राप्ते पाठः, एकभावादीनामन्यभावपर्यन्तानां स्वार्थे विधानार्थं तथा च वार्त्तिके प्रयोगः, आन्यभाव्यं तु कालशब्दव्यवायादिति, अक्षेत्रज्ञानीश्वरशब्दयोर्नञ्पूर्वादिति निषेधे प्राप्ते कुशलादीनां युवादित्वादणि प्राप्ते बालिशशब्दाद्वयोलक्षणेऽञि प्राप्ते राजशब्दस्य पुरोहितादित्वाद्यकि प्राप्ते गणपत्यधिपत्योः पत्यन्तलक्षणे यकि, शेषाणामलसादीनां पाठः प्रपञ्चार्थः । 'सर्ववेदादिभ्यः स्वार्थे इति'। सर्वे वेदाः सर्ववेदाः पूर्वकालेति समासः, सर्ववेदानधीतइत्यण्, सर्वसादेर्द्विगोश्च ल इति लुक्, सर्ववेद एव सार्ववेद्यः । 'चतुर्वेदस्योभयपदवृद्धिश्चेति' । चतुरो वेदानधीतइति तद्धितार्थे द्विगुः, अणो लुक्, चतुर्वेद एव चातुर्वैद्यः,

क्वचित्तु चातुर्वैद्यस्येति पाठः, तत्र सिद्ध्यइति शेषः, चतस्रो विद्या अधीतइत्यादि पूर्ववद् विद्यालक्षणकल्पसूत्रान्तादिति ठक्, पूर्ववल्लुक्, चतुर्विद्य एव चातुर्वैद्यः ॥

"स्तेनाद्यन्नलोपश्च" ॥ स्तेन चौर्ये, पचाद्यच् स्तेनः । 'नशब्दस्येति'। एतेन संघातस्येदं ग्रहणमिति दर्शयति, वर्णग्रहणे तु नकारलोपे कृते ऽकारस्य यस्येति लोपः, तस्य पूर्वविधौ स्थानिवद्भावादयादेशः प्राप्नोति, ननु संघातग्रहणेप्यलोन्त्यस्येत्यन्त्यस्य प्राप्नोति, सिद्धोन्त्यलोपो यस्येति चेति, तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति, नानर्थके ऽलोन्त्यविधिरनभ्यासविकारेष्विति च परिभाषां पठन्ति । 'स्तेनादिति योगविभागं कुर्वन्तीति'। भाष्ये ऽनुक्तमपि स्तैन्यशब्दस्य प्रयोगबाहुल्यादिदमुक्तम् ॥

"कपिज्ञात्योर्ढक्" ॥ इह कपिज्ञाती द्वौ भावकर्मणी चार्थौ द्वावेवेति संख्यातानुदेशः प्राप्नोति, एवं पत्यन्तपुरोहितादिभ्यो यक्, हायनान्तयुवादिभ्योण्, द्वन्द्वमनोज्ञादिभ्यश्चेत्यत्रेत्याशङ्क्याह । 'यथासंख्यं सर्वत्रैवात्र प्रकरणे नेष्यतइति'। तदर्थस्य स्वरितत्वस्याप्रतिज्ञानादिति भावः ॥

"पत्यन्तपुरोहितादिभ्यो यक्" ॥ 'राजासइति'। राजशब्दो ऽसेऽसमासे यकमुत्पादयति, राज्ञो भावः कर्म वा राज्यम्, असइति किम् । आधिराज्यं, ब्राह्मणादित्वात्ष्यञ्, यद्यपि तत्र राजशब्दः पठ्यते तथाप्ययमेवासइति प्रतिषेधो ज्ञापति अस्त्यत्र राजशब्दे तदन्तविधिरिति । एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वादसमासे विशेषविहितो यगेव भवति, अपर आह । ब्राह्मणादेराकृतिगणत्वादेव तदन्तात् ष्यञि सिद्धे राजशब्दस्य तत्र पाठो यका सह समावेशार्थ इति, तथा चावेष्ट्यधिकरणे शाबरभाष्यउक्तं तस्य कर्मणि ष्यञिति ॥

• "प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्" ॥ प्राणभृतः प्राणिनः, प्राणिग्रहणमेव न कृतं वैचित्र्यार्थं, प्राणभृद्ग्रहणात्तृणत्वं तृणतेत्यादौ न भवति, जातिग्रहणाद्देवदत्तत्वमित्यादौ न भवति, यस्त्विहेगन्तं लघुपूर्वं

तस्मात्परत्वादण् भवति तैत्तिरम्, उद्गात्रादिषु यत्त्वित्ववचनास्तेभ्यो हो-त्राभ्यश्छ इति छे प्राप्तेञ् विधीयते, सुष्ठुदुष्ठुभ्यां गुणवचनलक्षणे ष्यञि वधूशब्दादिगन्तलक्षणे ऽणि शेषेभ्यस्त्वतलोः प्राप्तयोः। 'सुभगं मन्त्रइति'। सुभगमित्येतच्छब्दरूपं मन्त्रविषये प्रयोगेऽञमुत्पादयति, महते सौभगाय, सर्वविधीनां छन्दसि विकल्पितत्वात्, हृद्भगसिन्ध्वन्त-इत्युत्तरपदवृद्धिर्न भवति, अत एव मन्त्रे क्वचिदञ् न भवति, सौभाग्य-मस्मै दत्वाय॥

"हायनान्तयुवादिभ्योऽण्"॥ हायनान्तास्त्वतलोः प्राप्तयो-रणविधानम्। 'यौवनमिति'। अन्नणीति प्रकृतिभावः, मनोज्ञादित्वाद्वु-ञपि भवति, स्थविरशब्दस्य वयोलक्षणे ऽञि प्राप्ते पाठः, होतृशब्द-स्याप्युद्गात्रादित्वादञ्येव। 'पुरुषासइति'। पुरुषशब्दो ऽसमासे ऽण-मुत्पादयति, पौरुषं, प्राणभृज्जातिवाचित्वादञ् प्राप्तः, मनुष्यजातिवचनो ह्यसौ न पुंस्शब्दपर्यायः पुल्लिङ्गवचनः स्त्रियामपि दर्शनात् तस्यामस्यां च पुरुषीश्च धेनुके दद्युरिति, असइति किम्, राजपुरुषत्वं, कमण्डलुश-ब्दस्येगन्तत्वादेवाणि सिद्धे त्वतलनिवृत्त्यर्थः पाठः। 'हृदयासइति'। हृदयशब्दोसमासेणमुत्पादयति, हृदयस्य भावो हार्दं, हृदयस्य हृल्लेख-यदण्लासेष्विति हृद्भावः। असइतिकिम्, अहृदयत्वं, ग्रहणवता प्राति-पदिकेन तदन्तविधिप्रतिषेधादेव सिद्धे समासप्रतिषेधश्चिन्त्यप्रयोजनः। कुशलादीनां तेत्रज्ञान्तानां ब्राह्मणादित्वात्ष्यञपि भवति। 'श्रोत्रियस्य घलोपश्चेति'। यदा श्रोत्रियंश्छन्दोधीतइत्यत्र छन्दसः श्रोतृभावो घश्च प्रत्यय इति पक्षस्तदा घलोपः, यदा तु वाक्यार्थे पदवचनमिति पक्ष-स्तदा घशब्देन य इति रूपं लक्ष्यते, क्वचित्तु यलोपश्चेति पाठस्तत्र यलोपे सङ्घातग्रहणं, वर्णग्रहणे त्वकारस्य यस्येतिलोपे सति इकारस्य यणादेशप्रसङ्गः, सङ्घातलोपे त्विकारस्य यस्येति लोपः, सर्वथा श्रोत्रि-यस्य भावः श्रौत्रमिति॥

"इगन्ताच्च लघुपूर्वात्"॥ 'लघुपूर्वग्रहणेन प्रातिपदिकसमुदायो विशेष्यसइति'। यद्येवं पूर्वशब्दोवयववचनो व्यवस्थावचनो वा, तत्राद्ये

पक्षे यस्य सर्वपूर्वो वर्णो लघुस्तस्मादेवेष्वण्प्रभृतिः स्यात्, द्वितीये तु पाण्डुप्रभृतिभ्योऽपि स्यात्, यदा लघुः पूर्वो भवतीत्याशङ्कायामवयववचन एव पूर्वशब्दः सोऽप्यवध्यपेक्ष एव प्रवर्त्तते तत्र कस्य चिदनिर्द्देशे सर्वपूर्वः प्रतीयते, इह तु संनिधानादिक एवेति दर्शयति,। 'लघुः पूर्वो यस्येत्यादि'। 'तेनेति'। लघुपूर्वेणेगन्तेन, अस्मिन्व्याख्याने ऽन्तग्रहणमतिरिच्यतइति लघुपूर्वेणेका प्रातिपदिकस्य विशेषणात्तदन्तविधेः सिद्धत्वात्। 'कथं काव्यमिति'। कावमिति भवितव्यमिति प्रश्नः॥

"योपधाद्गुरूपोत्तमाद्वुञ्"॥ 'त्रिप्रभृतीनामित्यादि'। एतच्चाणिञोरनार्षयोरित्यत्र व्याख्यातम्। 'सहायाद्वेति वक्तव्यमिति'। सूत्रेण नित्ये प्राप्ते विकल्पः॥

"द्वन्द्वमनोज्ञादिभ्यश्च"॥ यः यत्यन्तो द्वन्द्वस्तस्माद्वुञ् प्राप्तः यस्तु हायनान्तस्तस्मादण् प्राप्तः, अन्यस्मात्त्वतलौ, मनोज्ञादिष्वपि गुणवचनात् ष्यञ्. प्राप्तः, चोरधूर्त्ताभ्यामपि ब्राह्मणादित्वात् ष्यञेव, युवशब्दाद्युवादित्वादण्, शेषेभ्यस्त्वतलौ। 'अमुष्यपुत्रेति'। निपातनात्षष्ठ्या अलुक्॥

"गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु"॥ गोत्रवाचिन इति'। अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यते, अपत्यवाचिन इत्यर्थः। अपत्यप्रत्ययान्तादिति यावत्। अपर आह प्रवराध्याये पठितानां गोत्राणामिह ग्रहणमिति। 'चरणवाचिनश्चेति'। चरणशब्दः शाखाध्यायिषु पुरुषेषु रूढः, अनयोश्च गोत्रं च चरणैः सहेति जातित्वात्प्राणभृज्जातीत्यञ् प्राप्तः। 'प्रत्येकं भावकर्मणोरर्थयोरिति'। यथासंख्यं तु सर्वत्रैवात्र प्रकरणे नेष्यतइति पूर्वमेवोक्तम्। 'श्लाघादिषु विषयभूतेष्विति'। प्रत्ययार्थत्वं श्लाघादीनां न भवति, भावकर्मणोः प्रत्ययार्थयोरधिकृतत्वात्, नापि प्रत्ययार्थविशेषणं ये ते भावकर्मणी श्लाघादयश्चेत्ते भवत इति असम्भवात्, शब्दस्य प्रवृत्तिनिमित्तं हि भावः,न च गोत्रचरणशब्दानां श्लाघादयः प्रवृत्तिनिमित्तं नापि गोत्रचरणशब्दानां श्लाघादिकर्मत्वेन प्रसिद्धिः, तस्मात् श्लाघादिषु भावकर्मणोः साध्यतया

विषयभूतेष्वित्येवार्थः । 'तदवेतस्तत्प्राप्त इति' । इणः प्राप्त्यर्थत्वात् । 'तज्ज्ञो वेति' । अवपूर्वस्येणो ज्ञाने प्रसिद्धत्वात्, तच्छब्देन चेह गोत्रचरणयोर्भावकर्मणी प्रतिनिर्दिश्येते । 'गार्गिकयेति' । आपत्यस्य चेति यलोपः ॥

"होत्राभ्यश्छः" ॥ 'होत्राशब्द ऋत्विजां वाचक इति' । जुहोतेस्त्रन्, स्वभावतश्चायमृत्विक्ष्वपि स्त्रीलिङ्गः । 'अच्छावाकीयं ब्राह्मणाच्छंसीयमिति' । वेदे स्त्रीलिङ्गतापि दृश्यते, सोस्याच्छावाकीयांकुर्यादिति ॥

"ब्रह्मणस्त्वः" ॥ 'नेति वक्तव्यइति' । छप्रत्यये प्रतिषिद्धे तस्य भावस्त्वतलावित्येव प्रत्ययः सिद्धः, विभक्तेरनुच्चारणाल्लाघवं भवतीति भावः । 'यस्तु जातिशब्द इति' । होत्राभ्य इत्यनुवृत्तेः फलं दर्शयति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य प्रथमः पादः ॥

"धान्यानां भवने क्षेत्रे खञ्" ॥ धिनोतेः कृत्यल्युटो बहुलमिति कर्त्तरि ण्यत्, अस्मादेव निपातनादन्त्यस्य लोपः, इकारस्य चात्वं, धिनोतीति धान्यं, धान्यमसि धिनुहि देवानिति हि दृश्यते, धान्यानामिति भवनापेक्षया कर्त्तरि षष्ठी, भवनमित्यधिकरणे ल्युट्, क्षियष्ट्रन् क्षेत्रम् । 'भवति जायतेस्मिन्निति भवनमिति' । एतेनोत्पत्तिवचनोत्र भवतिर्गृह्यते न सत्तावचन इति दर्शयति । एतच्च क्षेत्रग्रहणाल्लभ्यते, क्षेत्रशब्दो हि तृणानां धान्यानां चोत्पत्त्याधारमाचष्टे, नहि धान्यानां सत्तां प्रति भूमिः क्षेत्रव्यपदेशमासादयति । 'मुद्गानां भवनं कुसूलमिति' । असति क्षेत्रग्रहणे सत्तावचनस्यापि भवतेर्ग्रहणं स्यादिति भावः, किं च भवनशब्दो गृहे रूढ इति मुद्गानां गृहमित्यत्रैव प्रसङ्ग इत्यपि शक्यते वक्तुं, यदि तर्हि क्षेत्रग्रहणमवश्यं कर्त्तव्यं तदेवास्तु किं भवनग्रहणेन, धान्यानामिति शेषलक्षणा षष्ठी क्षेत्रं प्रत्ययार्थः, न चैवं क्षेत्रशब्दस्यापि शरीरभार्याद्यनेकार्थत्वादतिप्रसङ्गः, धान्यसंबन्धादुत्पत्तिभूमिरेव प्रत्येष्यते, तदेतद्भवनग्रहणं चिन्त्यप्रयोजनम् ॥

"व्रीहिशाल्योर्ढक्" ॥ अत्रापि निर्देशादेव षष्ठी समर्थविभक्तिः, वृत्तिकारेण तु पूर्वानुसारेण गम्यमानत्वान्नोक्तम् ॥

"यवयवकषष्टिकाद्यत्" ॥ अत्र प्रत्ययार्थसामर्थ्यलभ्या षष्ठी समर्थविभक्तिः ॥

"विभाषा तिलमाषोमाभङ्गाणुभ्यः" ॥ 'खञि प्राप्ते वचनं पक्षे सोपि भवतीति'। युक्तं यदणुतिलमाषेभ्यः पक्षे खञपि भवतीति तेषां धान्यत्वात् उमाभङ्गयोस्त्वधान्यत्वादयुक्तं, धान्यान्येव हि चमकानुवाकेषु पठ्यन्ते व्रीहयश्च मे यवाश्च मे इत्यादीनि, तान्येव धान्यानि, न चोमाभङ्गावत्र पठ्येते अत आह। 'उमाभङ्गयोरपि धान्यत्वमाश्रितमेवेति'। न चमकानुवाको धान्यपरिगणनार्थः, तत्राधान्यानामप्यश्मादीनां पाठाद्, धान्यानामपि केषां चित् कोद्रवादीनामपाठात्, तस्मादन्यत एव धान्यनिर्णयः, तत्र शणसप्तदशानि धान्यानीति स्मृतिः, तत्र चोमाभङ्गे अपि पठिते तस्माद्युक्तमेव यत्ताभ्यामपि पक्षे खञ् भवतीति ॥

"सर्वचर्मणः कृतः खखञौ" ॥ 'तृतीयासमर्थादिति'। कृत इति प्रत्ययार्थे चर्मणः करणत्वात्सामर्थ्यलभ्या तृतीया समर्थविभक्तिः, सर्वशब्दस्य चर्मशब्देन समासं कृत्वायं निर्देशः, सर्वचर्मण इति समासश्च सामर्थ्ये सति भवति, ततश्चर्मशब्देनास्य संबन्ध इति कश्चिद्वाम्येत्तं प्रत्याह। 'सर्वशब्दश्चात्रेति'। कथं तर्हि समास इत्याह। 'तत्राचर्मिति'। अस्मादेव निपातनादिति भावः, किं पुनः कारणं सर्वशब्दः कृतेन संबध्यते न चर्मणेत्याह। 'सर्वश्चर्मणेत्यादि'। सर्वश्चर्मणा कृत इति योयं वाक्यार्थो ऽस्मिंस्तद्धितवृत्तिरिष्यते, यदि चर्मणा संबध्येत ततो यदि सर्वचर्मेति षष्ठीसमासस्ततः सर्वसंबन्धिना चर्मणा कृत इत्यर्थः स्यात्, अथ कर्मधारयस्ततः सर्वेण चर्मणा कृत इति न तु कृतस्य सर्वत्वमुभयथापि लभ्यते, तस्मात्कृतेनैव संबन्धो न्याय्य इति भावः ॥

"यथामुखसंमुखस्य दर्शनः खः" ॥ दृश्यतेस्मिन्दर्शन इत्यधिकरणे ल्युट्, कः पुनरसावित्याह। 'आदर्शादिरिति'। आदिशब्देन जला-

दिकं गृह्यते । 'प्रतिबिम्बाश्रय इति'। यो हि मुखादिप्रतिबिम्बस्याश्रयस्तत्र मुखादिकं दृश्यते मुखस्य सदृशं यथामुखं प्रतिबिम्बं, सादृश्यप्रतिषेधात्कथमत्र समासस्तत्राह । 'निपातनादिति'। भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः, तथा च मायामृगं प्रकृत्य भवति श्लोकः यथामुखीनः सीतायाः पुप्लुवे बहुलो भवन्निति, यथामुखं दर्शन इत्यव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत् सत्त्ववचनत्वात्कर्मशक्तियोगे सति दर्शनशब्दयोगे कृद्योगलक्षणा कर्मणि षष्ठी, तस्या नाव्ययीभावादित्यम्भावः, अत एव पूर्वमुक्तं यथा मुखशब्दात्संमुखशब्दाच्च षष्ठीसमर्थादिति, समं मुखं संमुखमिति समशब्दः सर्वशब्दपर्यायः, निपातनादन्त्यलोपस्संमुखस्येति कर्मणि षष्ठी प्रत्ययसन्नियोगेनान्त्यलोपनिपातनाचेदं प्रयोगार्हं किं तर्हि प्रक्रियावाक्यं संशब्दस्तु न समशब्दस्यार्थे दृश्यते । 'संमुखीन इति'। यत्रादर्शादौ सर्वं मुखं दृश्यते तदेवमुच्यते, कथं तर्हि संयुगे संमुखीनं तमुद्यन्तं प्रसहेत क इति, अभिमुखावस्थानात्साधर्म्याद्भविष्यति ॥

"तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति" ॥ 'परिशिष्टं प्रकृतिविशेषणमिति'। तत्र केवलानां पथ्यादीनां सर्वादित्वासम्भवात्प्रातिपदिकैरपि तैस्तदन्तविधिः, पञ्चम्यर्थे च प्रथमा द्वितीया वेत्याह । 'पथ्यङ्गकर्मपत्रपात्रान्तादिति' । 'सर्वपथीन इति'। पूर्वकालेत्यादिना समासः, ऋक्पूरब्धूरित्यकारः समासान्तः, तस्य पथ्यन्तसमासग्रहणेन ग्रहणात्पथ्यन्तमेव प्रातिपदिकमिति खप्रत्ययः ॥

"आप्रपदं प्राप्नोति॥ 'प्रपदमिति पादस्याग्रमुच्यतइति'। प्रारम्भः पदस्येति कृत्वा ।'तयोरव्ययीभाव इति'। आङ् मर्यादाभिविध्योरित्यनेन। 'द्वितीयासमर्थादिति'। क्रियाविशेषणे कर्मणि द्वितीया, आप्रपदं यथा तथा सर्वशरीरं प्राप्नोतीत्यर्थः'।'शरीरेणासंबद्धस्यापि पटस्य प्रमाणमाख्यायतइति'। 'योग्यत्वात्, योग्यो ह्यसावाप्रपदं शरीरं प्राप्तुं, व्याप्नोतीति प्रकृते प्राप्नोतीतिवचनमर्थभेदात्, संबन्धमात्रं प्राप्तिः, संबन्धः साकल्योपाधिको व्याप्तिः, आप्रपदमित्यत्र त्वभिविधौ व्याप्तिर्गम्यते न मर्यादायाम् ॥

"अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु" ॥ 'अनुदायामइति'। यस्य चायाम इति वा यथार्थे यदव्ययमिति वाऽव्ययीभाव इत्यर्थः। 'पदप्रमाणेत्यर्थ इति'। आयामे तावदयमेवार्थः सादृश्येपि तुल्यपरिमाणतया सादृश्यमित्ययमेवार्थो भवति। 'सर्वान्नीनो भिक्षुरिति'। प्रकारकार्त्स्न्ये सर्वशब्दः, यान्यन्नानि लभ्यन्ते उष्णानि शीतानि सरसानि विरसानि तानि सर्वाणि भक्षयतीत्यर्थः। अयनमय इति गमनमात्रमयशब्देनोच्यते तत्प्रतिषेधस्त्वनयशब्देनेत्याशङ्कामपनयति। 'अयः प्रदक्षिणमिति'। प्रदक्षिणं गमनमित्यर्थः, एवमनयः प्रसव्यं वामपर्यायगमनम्, एतच्च रूढिवशाल्लभ्यते रूढो ह्ययमयानयशब्दः शाराणां प्रदक्षिणप्रसव्यगमने, शृणन्त्येभिर्द्यूतकाराः परस्परमिति शाराः, द्यूतसाधनविशेषाः श्वान इति, येषां प्रसिद्धिः, कृत्यल्युटो बहुलमिति करणे घञ्, तत्राभिमुखयोः क्रीडतोः कितवयोर्यद्वैकं प्रति प्रदक्षिणं गमनं तदेवेतरं प्रति प्रसव्यमित्ययश्चासावनयश्च अयानय इति कर्मधारयः, अथ वा एकमेव प्रत्ययानयत्वं, कथं, वीथीभेदेन, चतस्रो वीथयः तत्रात्मीयाः शाराः परपार्श्वे स्थिताः प्रथमायां वीथ्यामात्मनः प्रदक्षिणं गच्छन्ति द्वितीयस्यां प्रसव्यमेवमुत्तरयोस्तत्र समाहारद्वन्द्वे लोकाश्रयत्वेन पुल्लिङ्गता, अपर आह। एकदेशद्वारेण गमनसमुदायस्यायानयव्यपदेशः, कृताकृतादिवत्समानाधिकरणसमास एवायमिति। प्रदक्षिणप्रसव्यगमनमात्रेऽपि नेष्यते किं तु विशेषइत्याह। 'प्रदक्षिणप्रसव्यगामिनामित्यादि'। यस्मिन् गतिविशेषे सति परैर्द्यूतकारसंबन्धिभिः पादानां स्थानापरपर्यायःणामसमावेशोऽनाक्रमणमनध्यासनम्, एतदुक्तं भवति, प्रदक्षिणप्रत्ययगामिनामात्मीयानां शाराणां संबन्धीनि यानि पदानि तानि परकीयैः शारैर्नाक्रम्यन्ते यस्मिन् गतिविशेषे सोयानय इति ससहायस्य शारस्य परैर्नाक्रम्यते पदम् असहायस्तु शारेण परकीयेन बाध्यते। 'अयानयं नेया इति'। नयतेर्द्विकर्मकत्वादप्रधाने कर्मणि द्वितीया प्रधाने कृत्यप्रत्ययः। 'फलकशिरसि स्थिता इत्यर्थ इति'। आरम्भकाले यत्र स्थाने शाराः स्थाप्यन्ते तच्छिरः, तत्र स्थितः शारः परपार्श्वादात्मपार्श्वं नेतव्यः, तत्रायश्चानयश्च भवति तेनासावयानयं नेयः, बद्धाभक्षयति-

नेयेष्विति निपातनात्तिङन्तस्य द्वन्द्वः, असमासपक्षे तु बहुत्यत्र प्रथमैकवचनं नेयेष्विति सप्तमीबहुवचनमित्यसमञ्जसमापद्येत ॥

"परोवरपरंपरपुत्रपौत्रमनुभवति" ॥ 'परस्योत्ववचनमिति'। परस्य शब्दरूपस्यादेरुत्वं निपात्यतइत्यर्थः, तत्राद्गुणः, अथ वा परशब्दस्य ओत्वं निपात्यते ऽन्त्यस्यालः, तत एङः पदान्तादतीति पूर्वरूपैकादेशः, परस्योत्वमिति प्राप्नोति शकन्ध्वादिषु पररूपं वक्तव्यमिति पररूपेण निर्देशः। 'परपरतराणां चेति'। चकारः पूर्वनिपातनापेक्षया समुच्चयार्थः, अर्थगतस्य बहुत्वस्य शब्दे समारोपाद्बहुवचनम्। 'तच्छब्दान्तरमेव द्रष्टव्यमिति'। अव्युत्पन्नमेव प्रबन्धस्य वाचकम्, अत एव स्त्रीलिङ्गमेकवचनं च, पारंपर्यमित्यपि तस्मादेव स्वार्थे ष्यञ् भवति। कथं परोवर्यवदिति, असाधुरेवायं खप्रत्ययसन्नियोगेन परोवरेति निपातनात् ॥

"अवारपारात्यन्तानुकामं गामी" ॥ 'गामीति'। 'गमेरिनिः चाङि णिच्चेति बहुलवचनात्केवलादपि णिनिर्भविष्यति। 'गम्यादय इति'। यद्यप्याङ्पूर्वो गमिर्गम्यादिषु पठ्यते तथापि बहुलवचनादेव णिनिरिव भविष्यत्कालत्वमपि भविष्यतीति भावः। 'अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीप्रतिषेध इति'। गत्यर्थकर्मणीत्यत्र यदुक्तं द्वितीयाग्रहणमपवादविषये विधानार्थं तेन कृत्प्रत्ययप्रयोगे षष्ठी न भवति ग्रामं गन्तेति तन्नाश्रितं प्रतिषेधे षष्ठीप्रसङ्गस्यैवाभावात्। 'अवारपारीण इति'। द्वन्द्वात्प्रत्ययः। अवारपारे तीरे, आहिताग्न्यादिषु प्रक्षेपादुभयं भवति, अवारपारे पारावारे इति। 'अत्यन्तमिति'। क्रियाविशेषणम्, एवमनुकाममिति, काम इच्छा, तस्य सदृशमनुकामं कामानुरूपं, यथार्थे यदव्ययमिति समासः ॥

"समांसमां विजायते" ॥ "समांसमामिति वीप्सेति'। द्रष्टव्येति शेषः, अत्र निर्देशे वीप्सा द्रष्टव्या, तेन द्विर्वचनमित्यर्थः, अथ वा वीप्सावाची समुदायो वीप्सा वीप्सावाचीत्यर्थः। 'सुबन्तसमुदायः प्रकृतिरिति'। प्रातिपदिकाधिकारेपि वचनसामर्थ्यात्। 'गर्भं धारयतीत्यर्थ इति'। दृश्यते च विजनिर्गर्भधारणे स विजायमानो गर्भणातताम्यदिति। 'पूर्वपदे सुपो

लुग्वक्तव्य इति,। अन्यथा तद्धिते उत्पन्ने यथोत्तरपदे लुग्भवति सुपो धातुप्रातिपदिकयोरिति तथा पूर्वपदेपि स्यात्। 'के चित्त्वित्यादि'। नन्व-त्यन्तसंयोगे द्वितीयया भवितव्यं तत्राह। 'गर्भविमोचने त्विति'। तत्र विमोचनेन कृत्स्नायाः समाया व्याप्त्यभावाद् द्वितीयाभाव इति भावः। 'यलोपमात्रमिति'। यकारमात्रलोपो न सर्वस्या विभक्तेरिति मात्रशब्द-स्यार्थः। 'परिशिष्टस्येति'। आम्शब्दस्यालुग्वक्तव्यः, ननु याटः सुब्भक्त-त्वात्सुब्लुकैव लोपः सिद्धस्तत्र यलोपवचनं नियमार्थं भविष्यति यकारस्यैव लोपो न तु सर्वस्य प्रत्ययस्येति तत्किमुच्यते लुग्वक्तव्य इति, एवं मन्यते यथैव निपातनात्पूर्वपदपरिशिष्टस्य लोपो न भवति एवमुत्तरपदेपि न स्यादिति। 'अनुत्पत्ताविति'। वाक्ये पूर्वोत्तरपदयोर्द्वयोरपि पक्षे यलोपो वक्तव्य-स्तेन द्वैरूप्यं सिद्धं भवति ॥

"अद्यश्वीनावष्टब्धे" ॥ अवष्टब्धविजनइत्येतयोर्यथाक्रमं विवर-णमासन्ने प्रसव इति, कथं पुनरवष्टब्धशब्दस्यासन्नमर्थ इत्याह। 'आवि-दूर्य हीति'। यद्यप्यालम्बनेपि षत्वं विधीयते तथापि विजनस्यालम्बन-त्वासम्भवादाविदूर्यमेवात्रार्थः, किं पुनरत्र निपात्यते अद्य श्वो वेति वार्थे समासः खप्रत्ययः, टिलोपस्त्वव्ययत्वादेव सिद्धः। 'अद्यश्वीना वड-वेति'। विजायतइत्यस्यानुकूलतया स्त्रीलिङ्गमुदाहृतं न पुनः सूत्रे स्त्रीलिङ्गनिर्द्देशः, अद्यश्वीनो गोसमूहः, अद्यश्वीनं गोमण्डलमित्यत्रापी-ष्टत्वात्तस्मात्सूत्रे ह्रस्वान्तस्याविभक्तिको निर्द्देशः। 'के चित्त्विति'। तेषां यथाभिधानं क्रियाध्याहारः। 'अवष्टब्धमात्रइति'। भवत्यासत्तिरपी-त्यर्थः। 'अद्यश्वीनं मरणमिति'। अद्य वा श्वो वा भविष्यतीत्यत्रार्थे प्रत्ययः ॥

"आगवीनः" ॥ 'गोराङ्पूर्वादिति'। गोशब्दान्तादाङ्पूर्वात्प्रा-तिपदिकादित्यर्थः। 'आ तस्य गोः प्रतिदानादिति'। प्रतिदानं प्रत्यर्प-णम्। एतेन वृत्तिविषये गोशब्दो गोः प्रतिदाने वर्त्ततइति दर्शयति। 'कारिणीति'। कृञ आवश्यके णिनिः। 'आगवीन इति'। आङ्मर्यादा-भिविध्योरित्यव्ययीभावे उपसर्जनह्रस्वत्वे च कृते खप्रत्ययः, ओर्गुणः ॥

"अनुगवलंगामी" ॥ 'अलंगामीति' । सुप्यजाताविति णिनिः । 'गोः पश्चादनुगविति' । पश्चादर्थे, ऽव्ययीभावः, उपसर्जनह्रस्वः । 'पर्याप्तमिति' । क्रियाविशेषणमेव । 'अनुगविति' । ततश्च द्वितीयान्तात्प्रत्ययः, कृद्योगलक्षणा तु षष्ठी क्रियाविशेषणाच्च भवति तद्यथा शोभनं पाचक इति ॥

"अध्वनो यत्खौ" ॥ 'द्वितीयासमर्थादिति' । यदा तिङन्तेन विग्रहो ऽध्वानं गच्छतीति तदा द्वितीयासमर्थत्वं, यदापि सूत्रोपात्तेन गामीत्यनेन विग्रहस्तदापि द्वितीयैव, कृद्योगलक्षणा षष्ठी न भवति अकेनोरिति प्रतिषेधात्, इहाध्वनो यच्चेति सिद्धं चकारात्खश्च, एवमुच्यमाने उत्तरसूत्रे चकारेणानन्तरो यदेवानुकृष्येत न चानुकृष्टः खः, अतो यत्खयोर्द्वयोरप्यनुवृत्त्यर्थं यत्खावित्युक्तम् ॥

"अभ्यमित्राच्छ च" ॥ 'अभ्यमित्रमिति' । लक्षणेनाभिप्रती आभिमुख्यइत्यव्ययीभावः, क्रियाविशेषणत्वात्कर्मणि द्वितीया ॥

"गोष्ठात्खञ् भूतपूर्वे" ॥ 'गावस्तिष्ठन्त्यस्मिन्निति गोष्ठ इति' । घञर्थे कविधानं स्थास्नापाव्यधिहनि युध्यर्थमित्यधिकरणे कः, अम्बाम्बगोभूमीति षत्वं, पूर्वं भूतो भूतपूर्वः, सुप्सुपेति समासः । 'तस्यैवेति' । गोष्ठशब्दस्यार्थद्वारकं च विशेषणत्वं न स्वरूपेण नहि भूतपूर्वाद्गोष्ठशब्दात्प्रत्ययो विधातुं शक्यते । 'गोष्ठो वर्त्ततइति' । सम्प्रति गवामवस्थानं दर्शयति ॥

"अश्वस्यैकाहगमः" ॥ एकाहेन गम्यतइत्येकाहगमः, ग्रहवृदृनिश्चिगमश्चेत्यपं बाधित्वा परिमाणाख्यायां सर्वेभ्य इति घञ् प्राप्नोति, उक्तं हि घञनुक्रमणमजपोर्विषयइति, अस्ति चात्र परिमाणाख्या, एकाहेन गम्यत इति परिच्छेदावगमाद्, अस्मादेव निपातनादप् द्रष्टव्यः, कर्तृकरणे कृताबहुलमिति समासः । 'अश्वस्येति' । कर्त्तरि षष्ठी । 'आश्वीनानि शतं पतित्वेति' । यावन्ति योजनान्येकाहेनाश्वेन गम्यते तावतां शतं गत्वेत्यर्थः ॥

"शालीनकौपीने अधृष्टाकार्ययोः" ॥ 'यथाकथञ्चिद्दिति' । नात्रावयवार्थेऽभिनिवेष्टव्यमित्यर्थः, अभिनिवेशे तु यः शालायामधृष्टो भार्याजितत्वादन्यत्र धृष्टः, यच्च कूपे अकार्यं मूत्रणादि कथं तस्याभिधानं प्राप्नोति, कथं तर्हि विवक्षितार्थं इत्याह । 'शालाप्रवेशमर्हतीति' । अन्यत्राप्रागल्भ्यादासितुमशक्तः शालामेव प्रवेष्टुमर्हतीत्यर्थः । 'कूपावतरणमिति' । यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणमर्हतीत्यर्थः । 'उत्तरपदलोपश्चेति' । वृत्तिविषये शालाकूपशब्दौ तत्कर्मिकायां क्रियायां वर्त्तेते इति गम्यमानत्वादप्रयोग एव लोपः । 'कौपीनं पापमिति' । पापसाधनत्वात्तु पुरुषलिङ्गं कौपीनशब्दः साधर्म्याद्वा, साधर्म्यं गोप्यत्वात्, तत्साहचर्याच्च तदाच्छादने वासः खण्डे, अपर आह कार्यशब्दे करोतिः क्रियासामान्यवचनः, तेन लज्जाहेतुत्वेनाद्रष्टव्यत्वात्पुरुषलिङ्गं कौपीनमस्पृश्यत्वाच्च तदाच्छादनमिति ॥

"व्रातेन जीवति" ॥ व्रातशब्दो लोके सङ्घमात्रवचन इह तु न तथेति दर्शयितुं भाष्यग्रन्थं पठति । 'नानाजातीया इति' । अनेन चैकजातीयक्षत्रियादिसङ्घनिराकरणम् । 'अनियतवृत्तय इति' । नियतवृत्त्यायुधजीविसङ्घनिषेधः । उत्सेधजीविन इत्येतद्व्याचष्टे । 'उत्सेधः शरीरमिति' । उच्छ्रायत्वात् । 'तदायस्येति' । आयासेर्ण्यन्ताल्ल्यप्, तेन सकर्मकत्वम्, अण्यन्तपाठे त्वन्तर्भावितण्यर्थत्वात्सकर्मकत्वं द्रष्टव्यं, शरीरायासेन भारवहनादिना जीवन्ति न तु बुद्धिभावेनेत्यर्थः । 'व्राता इति' । संघवचनोयमिह सङ्घेषु प्रयुक्तः, एवं भूतानां यः सङ्घस्तद्व्रातमित्यर्थः, एवमपि तथाभूतेन सङ्घेन ये जीवन्ति तत्र प्राप्नोति न चेष्यते तत्राह । 'तेषां कर्म व्रातमिति' । इदमर्थे छे प्राप्ते ऽस्मादेव निपातनादण् । 'यस्त्वन्य इत्यादि' । अनभिधानमत्र हेतुः ॥

"साप्तपदीनं सख्यम्" ॥ 'साप्तपदीनमिति निपात्यतइति' । किं पुनरत्र निपात्यते समर्थविभक्तिस्तृतीया, अवाप्यत इति प्रत्ययार्थः, सप्तभिः पदैरवाप्यतइति तद्धितार्थे द्विगुः समासः, सप्तपदशब्दात्खञ् । 'कथमिति' । सख्युर्भावः कर्म वा सख्यं तत्र व्युत्पादितस्य न सखिशब्देन

सामानाधिकरण्यमिति प्रश्नः, उपचारेणेत्युत्तरम्। 'गुणप्रधान इति'। गुणो भावः कर्म च भावः प्रवृत्तिनिमित्तत्वाद्गुणः, यस्य हि गुणस्य भावा-दिति कर्मापि हि सख्यशब्दवाच्यत्वाद्गुण इत्युक्तम्॥

"हैयङ्गवीनं सञ्ज्ञायाम्"॥ 'ह्योगोदोहस्य विकार इति'। दुह्यतइति दोहः क्षीरं, गोर्दोहो गोदोह इति षष्ठीसमासः, ह्यःशब्दस्य तेन सुप्सुपेति समासः, ततो विकारेऽनुदात्तलक्षणस्याञोऽपवादः, खञ्। 'घृतस्यैषा सञ्ज्ञेति'। घृतस्यापि न सर्वस्य किं तर्हि तस्यैवाविकृतगन्ध-रूपस्य, ह्यःशब्देन कालप्रत्यासत्तिप्रतिपादनाद् नवनीतं हैयङ्गवीनमुच्यते घृतशब्दोऽपि तत्रैव प्रयुक्तः॥

"तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ"॥ पाकः परि-णामः, मूलमुपक्रमः, तस्येदमित्यणादिषु प्राप्तेष्वयमारम्भः, जकारस्य प्रयोजनाभावादित्सञ्ज्ञाभावः॥

"पक्षात्तिः"॥ एकयोगशिष्टानामपि शब्दानां शब्दाधिकारपक्षे यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञायते तस्यैवानुवृत्तिर्भवति, तथा च दामहायनान्ताच्चेत्यत्र सङ्ख्याग्रहणमनुवर्त्तते नाव्ययग्रहणम्। अर्थाधि-कारपक्षे तु युगपदन्योन्यार्थाभिधायिनां द्वन्द्वविधानाद् द्वन्द्वार्थविच्छेदाच्च स्यादेकदेशानुवृत्तिः, पक्षस्य मूलं पक्षतिः, प्रतिपदि पक्षिणश्च पक्षमूले प्रयुज्यते॥

"तेन वित्तश्चुञ्चुप्चणपौ"॥ 'वितः प्रतीत इति'। वित्तो भोग-प्रत्यययोरिति निपातनात्, चुञ्चुप्चणपोश्चकारस्य यथेत्सञ्ज्ञा न भवति तथा चुटू इत्यत्रैव वृत्तिकारेणोक्तम्॥

"विनञ्भ्यां नानाञौ नसह"॥ 'नसहेति प्रकृत्यर्थविशेषण-मिति'। यदि प्रत्ययार्थः स्यात्ततो द्वौ प्रतिषेधौ प्रकृतमेवार्थं गमयत इति सहार्थ एव गम्येत न नसह अपि तु सहैवेति, तस्मात्प्रकृत्यर्थ एव भवति, एतच्च व्याख्यानाल्लभ्यते, यद्येवं सहेत्येव प्रत्ययार्थोऽस्तु विनञोः प्रति-षेधार्थत्वात्, विगद्भरथक इत्यादौ विशब्दस्यापि प्रतिषेधे वृत्तिर्दृष्टैव,

सत्यं, क्रियावाचिनो विशब्दात्सहार्थे प्रत्ययो विज्ञायेत विगतौ सह विकृतौ सहेति, नात्रो ञकारो वृद्ध्यर्थः स्वरार्थश्च ॥

"वेः शालच्छङ्कटचौ" ॥ क्व पुनरेते शालजादयो भवन्तीत्याह । 'ससाधनक्रियावचनादिति'। क्रियाविशिष्टसाधनवचनादित्यर्थः, एतच्चोपसर्गाच्छन्दसि धात्वर्थइत्यत्र प्रत्यपादि । 'उपसर्गादिति'। अन्यत्रोपसर्गसञ्ज्ञादर्शनाद्विषयान्तरेपि प्रादीनामभिधानम् । 'स्वार्थइति'। अनिर्दिष्टार्थत्वात् । 'विगते इति'। विगमनक्रियाकर्त्तरि वेर्वृत्तिं दर्शयति । 'तद्योगादिति'। विशालावयवयोगात्, व्युत्पत्तिपक्षे नान्या गतिरिति भावः । वस्तुगतिमाह । 'परमार्थतस्त्विति'। विशालत्वं विस्तीर्णत्वं नाम गुणस्तस्माद्गुणवचना एते, वक्ष्यमाणप्रत्ययापेक्षया बहुवचनं, ततश्च यद्गुणयोगाच्छृङ्गे वृत्तिस्तद्गुणयोगादेव गव्यपि वृत्तिः सिद्धेति भावः, तथा च विशालो देश इत्यपि दृश्यते ॥

"संप्रोदश्च कटच्" ॥ 'कटच्प्रत्ययो भवतीति'। पूर्ववत्ससाधनक्रियावचनेभ्यः स्वार्थे संकटः, संहतः, संबाध इत्यर्थः, प्रकटः, प्रज्ञातः प्रकाश इत्यर्थः, उत्कटः उद्भूतः, विकटः विकृतः । 'अलाबूतिलेत्यादि'। भङ्गाभ्य इति पाठः, भङ्गाशब्दष्टाबन्तः. अथालाबूप्रभृतिभ्यो रजस्यभिधेये कटच्प्रत्ययो भवति रजसो विकारत्वाद्विकारप्रत्ययानामपवादः, तत्रालाबूशब्दादोरञो मयड्वैतयोरिति मयटश्चापवादः, तिलोमाशब्दाभ्यां घृतादित्वादन्तोदात्ताभ्यामनुदात्तादेश्चेत्यञो मयटश्च, उमोर्णयोर्वेति वुञश्च, असंज्ञायां तिलयवाभ्यामिति मयटश्च । भङ्गायास्तृणधान्यानां च द्व्यषामित्याद्युदात्तत्वादणो मयटश्च । 'गोष्ठादय इति'। प्रयोगसमवायिप्रत्ययरूपं निर्दिष्टं, चकारस्तु स्वरार्थोनुबन्धव्यः, तथाहि । समासाश्रयेण भाष्य एतत्प्रत्याख्यातं समासे चान्तोदात्तत्वं भवति,सर्वत्रादिशब्दः प्रकारे । 'गवां स्थानमिति'। तस्येदमित्यत्रार्थे सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यदिति यति प्राप्ते गोष्टच्प्रत्ययः, अप्रसृतावयवः समूहः संघातः, प्रसृतावयवस्तु विस्तारः, उभावपि सामूहिकानामपवादौ । 'द्वित्वइति'। प्रकृत्यर्थस्य द्वित्वे द्योत्यइत्यर्थः । 'उष्ट्रगोयुगमिति'। द्वयं युगमित्यादिवद् द्व्यवयवसंघा-

भिधायित्वादेकवचनम् । एवं हस्तिषड्गवमित्यादावपि द्रष्टव्यम् । 'स्नेह इति'। स्निह्यन्त्यनेनेति स्नेहो द्रवरूप इङ्गुदादीनां विकारः, तत्र इङ्गुदशब्दो लघावन्तइत्याद्युदात्तः, ततस्तस्य विकार इत्यण् प्रत्ययः प्राप्तः, तिलशब्दादनुदात्तादेश्चेत्यञ् प्राप्तः सोपि त्विष्यते तिलानां विकारस्तैलमिति, तत्तर्हीदं बहु वक्तव्यं, नेत्याह, उपमानात्सिद्धं, कथं, गावस्तिष्ठन्त्यस्मिन्निति गोष्ठं तत्साधर्म्यादुष्ट्रादिस्थानमपि गोष्ठमित्युच्यते, तत्र विशेषप्रतिपत्त्यर्थमुष्ट्रादिभिर्विशेष्यते उष्ट्रगोष्ठं महिषगोष्ठं, मुख्यार्थप्रतिपत्तये गोभिरपि गोगोष्ठमिति, यथा गोपतिशब्दे स्वामिमात्रपरतया प्रयुक्ते गोभिरपि विशेषणं गवामसि गोपतिरेक इन्द्र, विद्मा हि त्वा गोपतिं शूर गोनामिति, तथा नानाद्रव्याणां रज्जुवीरणादीनां संघातः कटः, तत्साधर्म्यादन्योपि संघातः कटशब्देनोच्यते, स चाविप्रभृतिभिर्विशेषयिष्यते, एवं पटश्चाद्विस्तीर्णो ऽविसंघो ऽविपट इति, तथा युगशब्देन द्वयमुच्यते गवोर्युगं गोयुगं द्व्यात्मत्वसामान्यादन्यदपि युगलं गोयुगमित्युच्यते, तत उष्ट्रादिभिर्विशेष्यते मुख्यगोयुगप्रतिपत्तये गवापि, तथा षड्गावः समाहृताः षड्गवं, गोरतद्धितलुकीति टच्, पात्रादित्वाच्चपुंसकत्वं, तत्साधर्म्यादित्यादि पूर्ववत्, तथा तलविकारो मुख्यं तैलं तत्सादृश्याद् द्रवरूपं विकारमात्रं तैलं, तत इङ्गुदादिभिस्तिलैश्च विशेषणम्, एवं च कृत्वा तिलानां विकारस्तैलमित्यपि भवति, वाक्यारम्भे तु तैलचा बाधितत्वादञ् न स्यात्, अपर आह । यथा प्रकृष्टो वीणायां प्रवीण इति व्युत्पत्तिमात्रं क्रियते कौशलमेव त्वस्य निमित्तं, तथा च वीणायां प्रवीण इत्यपि भवति, तथा तिलानां विकारस्तैलमिति व्युत्पत्तिमात्रं द्रवरूपो विकारस्त्वस्यार्थः, तथा चेङ्गुदादिभिर्विशेषणसिद्धिरिति, तत्तु न रोचयामहे। नहि तैलमित्युक्ते द्रवरूपं विकारमात्रं प्रतियन्ति, शाकटच्शाकिनौ तु वक्तव्यावेव ॥

"अवात् कुटारच्च" ॥ 'अवकुटारमवकटमिति'। अवाचीनमप्रसिद्धमित्यर्थः ॥

"नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः" ॥ 'नमनं

नतमिति'। नपुंसके भावे क्तः, नीचैस्त्वमित्यर्थः। 'नासिकायाः संबन्धिनीति'। संबन्धश्च नमने कर्तृत्वेन, सूत्रे तु नंपुसके भावउपसंख्यानमिति कर्त्तरि षष्ठी, यद्वा शेषविज्ञानात्सिद्धमिति शेषलक्षणेव, अवटीटादिषु नासिकासाधने नमने वर्त्तमानादुपसर्गात्स्वार्थे प्रत्ययः, कथं तर्हि नासिका पुरुषश्च तथोच्यतइत्याह। 'तद्योगादिति'। टीटञष्टकारस्येत्संज्ञाभावश्चुटू इत्यत्रैव व्याख्यातः॥

"इनच्पिटच्चिकचि च"॥। 'ककारः प्रत्यय इति'। अकारो विवक्षितः, चकार एवकारइत्यादिवत् कारशब्दः, कप्रत्यय इत्यर्थः। 'तथा चोक्तमिति'। सूत्रे निशब्दस्य द्वावादेशौ द्वौ च प्रत्ययौ विहितावित्यादेशप्रत्ययत्रयविधानार्थमेतद्वार्त्तिककारेणोक्तम्। 'अस्य चक्षुषी इत्येतस्मिन्नर्थेइति'। यद्यपि चक्षुषी प्रकृत्यर्थविशेषणम्, अस्येति षष्ठ्यर्थे प्रत्ययः, तथापि क्लिन्नत्वस्य चक्षुर्गतत्वं प्रत्ययस्यैव द्योत्यमिति मत्वैवमुक्तम्। 'अस्येत्यनेनेति'। वाक्यैकदेशं प्रत्याचष्टे कस्मान्नार्थ इत्याह। 'चक्षुषोरेवाभिधानइति'। चक्षुषोर्वर्त्तमानात्क्लिन्नशब्दात्स्वार्थे प्रत्यय इत्यर्थः, कथं तर्हि पुरुषस्याभिधानमित्याह। 'तद्योगादित्यादि'। अर्शआदिषु स्वाङ्गाद्धीनादिति पठ्यते तेन मत्वर्थे ऽकारः॥

"उपाधिभ्यां त्यकन्नासन्नारूढयोः"॥ 'नियतविषयमिति'। पर्वतविषयम्। आसन्नारूढमिति समाहारद्वन्द्वः, आसन्नं समीपम्। आरूढमुच्चस्थानम्। 'सञ्ज्ञाधिकाराद्वेति'। तेनेत्वप्रतिषेधे त्यकन उपसङ्ख्यानमिति न वक्तव्यं भवति॥

"कर्मणि घटोऽठच्"॥ 'कर्मशब्दादिति'। पारिभाषिकस्य कर्मणो ग्रहणं न भवति घटतेरकर्मकत्वात्, मासं घटतइत्यादौ कालादिकर्मणां सम्भव एवेति चेद् एवमपीह समर्थविभक्तेः सप्तम्या असम्भवः। 'घटतइति घट इति'। पचाद्यच्। 'कर्मठ इति'। अकारोच्चारणाट्ठकारमात्रस्याप्रत्ययत्वादङ्गसञ्ज्ञां प्रति निमित्तत्वाभावात् ठस्येकादेशो न भवति॥

"तदस्य सञ्जातं तारकादिभ्य इतच्" ॥ तारकादिषु बुभुक्षा-पिपासाशब्दयोः किमर्थः पाठः, यावता सन्नन्तावेतौ, तथा च निष्ठायामिटि च कृते सिद्धं बुभुक्षितः पिपासित इति, सत्यं, कर्मणि सिद्धं बुभुक्षित ओदनः पिपासितमुदकमिति कर्तरि तु न प्राप्नोति बुभुक्षितो देवदत्तो पिपासितो देवदत्त इति, अनेन तु यस्य बुभुक्षापिपासे सञ्जाते तत्र प्रत्यय उत्पद्यते। पुष्पादीनां तर्हि किमर्थः पाठः, पुष्प विकसने, मूत्र प्रस्रवणे, द्रै स्वप्ने, निपूर्वः कठि शोके, उत्पूर्वः सुख दुःख तत्क्रियायां, व्रण गात्रविचूर्णने, एभ्यो ऽकर्मकत्वात्कर्तरि क्ते पुष्पितो मूत्रित इत्यादि सिद्धं, सत्यम्। भूते सिद्धं, वर्त्तमाने तु न सिद्ध्यति, अतो वर्त्तमानार्थस्तेषां पाठः, कथं पुनरनेन वर्त्तमाने भवति यावतात्रापि सञ्जातमिति भूते निष्ठा, एवं तर्हि गणे पुष्पादीनां पाठसामर्थ्यात्सञ्जातमित्यत्र भूतकालो न विवक्ष्यते। 'गर्भादप्राणिनीति'। गर्भशब्दादप्राणिन्यभिधेये इतच् भवति गर्भिताः शालयः, प्राणिनि तु गर्भिणी गौः ॥

"प्रमाणे द्वयसज्दघ्नञ्मात्रचः" ॥ 'यत्तत्प्रथमासमर्थं प्रमाणं चेत्तद्भवतीति'। अनेन प्रकृत्यर्थविशेषणत्वं प्रमाणस्य दर्शयति, यदि तु प्रत्ययार्थविशेषणं स्याद्यत्तदस्येति निर्दिष्टं प्रमाणं चेत्तद्भवतीति तदा प्रमाणस्य प्रमेयापेक्षत्वात्प्रमेयं प्रकृत्यर्थः स्यादन्यथा प्रकृत्यर्थविशेषणत्वे प्रमेयं प्रत्ययार्थः, ततश्चेह प्राप्नोति उदकं प्रमेयमस्योरोरिति, एतच्चायुक्तम्। अनियतप्रमेयविषयत्वात्प्रमाणानामेकेन विशेषणस्यान्याय्यत्वात् प्रमेयस्य तु नियतप्रमाणत्वप्रतिपादनायोरुमात्रादयः शब्दाः प्रयुज्यन्ते। 'प्रथमश्च द्वितीयश्चेति'। ऊर्ध्वावस्थितेन येन मीयते तदूर्ध्वमानमवादि, तत्र केचिदाहुः, आयाममानमेव प्रमाणं सूत्रे गृह्यते तिर्यङ्मानमेव चायाममानं ततश्चोर्ध्वमानेऽप्राप्तौ द्वयसज्दघ्नचौ प्रमाणादपकृष्येह विधीयेते इति, अपर आह। ऊर्ध्वावस्थितेनापि येनायामः परिच्छिद्यते तदप्यायाममानत्वात्प्रमाणमिति सूत्रे गृह्यते, वचनं तूर्ध्वमानएव यथा स्यातां तिर्यङ्माने मा भूतामिति नियमार्थमिति। अन्यस्त्वाह। परिच्छेदकमात्रं प्रमाणमिह गृह्यतइति तत्रापि नियमार्थ-

मेतत्। 'मात्रच्पुनरविशेषेणेति'। यद्यायाममानवाच्येवायं सूत्रे प्रमाण-शब्दस्तदोन्मानपरिमाणयोरप्राप्तो मात्रज् विधीयते ऽथ तु परिच्छेद-कमात्रं प्रमाणं ततो न्यायप्राप्तानुवादोयम्। 'प्रस्थमात्रमित्यपीति'। अपि-शब्दादूरुमात्रमित्यपि भवति। 'प्रमाणे ल इति'। लुक एषा पूर्वाचार्यसञ्ज्ञा। 'प्रमाणमिति ये प्रसिद्धा इति'। प्रमाणशब्दा एतइति ये प्रसिद्धा दिष्टिवितस्त्यादय इत्यर्थः। 'शमः दिष्टिर्वितस्तिरिति'। अत्र मात्रचो लुग् इतरयोरसम्भवात्। शमादीनामनूर्ध्वमानत्वाद् द्विगोर्नित्यमिति द्विगो-रप्रमाणत्वात्तदन्तविध्यभावाच्च पूर्वेणाप्राप्तो लुग्विधीयते। 'नित्यग्रहणं किमिति'। नात्र विकल्पः प्रकृत इति प्रश्नः। 'संशये श्राविणं वक्ष्यतीति'। श्रवणं श्रावः, कृत्यल्युटो बहुलमिति घञ्, सोस्यास्तीति श्रावी, प्रमाणपरि-माणाभ्यां सङ्ख्यायाश्चापि संशयइति वक्ष्यमाणस्य मात्रचः प्रमाणे ल इत्यनेन लुङ्न भवति परत्वाद् अतोसौ श्रावी, अस्य द्विगावपि श्रवणे प्राप्ते लुग्विधी-यतइत्यर्थः, द्वौ शमौ प्रमाणमस्य द्विशमः, कथं पुनरत्र संशये मात्रच उत्पत्तिः, तदन्तविधिना, एतदेव लुग्वचनं ज्ञापकमस्त्यत्र तदन्तविधिरिति, प्रकरणादिवशादस्य निश्चयसंशयविषयता प्रयोगस्यावसेया। 'स्तोमे डड्व-क्तव्य इति'। अत्रायाममानस्यासम्भवात्परिच्छेदोपाधिकायाः सङ्ख्यायाः स्तोमेभिधेये डट्प्रत्ययः, डित्करणमेकविंश इत्यत्र तिशब्दस्य लोपार्थं त्रय-स्त्रिंशादौ टिलोपार्थं च, पञ्चदशादौ नस्तद्धित इत्येव सिद्धं पञ्चदशम-न्त्राः परिमाणमस्य पञ्चदशः स्तोमः, सप्तदशी रात्रिरिति, स्तोमसाह-चर्याद्रात्र्यादौ स्त्रियां वृत्तिः, टित्वान्ङीप्, तदस्य परिमाणं, सङ्ख्यायाः सञ्ज्ञे-त्यत्र तु स्तोमे डो विहितस्तत्र टाब् भवति यद्यस्ति प्रयोगः, अथ तु नास्ति ततोस्यैव स प्रपञ्चः। 'शन्शतोर्डिनिर्वक्तव्य इति'। एवं च छन्दसि च भाषायां च डिनेर्विधानात्सङ्ख्यायाः सञ्ज्ञासङ्घेत्यत्र शन्शतोर्डिनिश्छन्द-सीति वचनं प्रपञ्चार्थमेव। 'विंशिनोङ्गिरस इति'। प्रवरभेदेन विंशतिर्भेदा उच्यन्ते, तत्र विंशतिशब्दात्सङ्ख्यानमात्रवाचिनः सङ्ख्येये प्रमेये डिनिः, तिविंशतेर्डितीति लोपः, यस्येति लोपश्च। 'प्रमाणपरिमाणाभ्यामिति'। रूढिशब्दावेतौ भेदेनोपादानात्। 'शममात्रमिति'। शमः प्रमाणमस्य स्याच्च

वेत्यत्रार्थे मात्रच्। 'पञ्चमात्रा इति'। पञ्च स्युर्न वेति संशय्यमानार्थवाचिनः स्वार्थे प्रत्ययः, यद्वा वृत्तिविषये द्व्येकयोरित्यादिवत्सङ्ख्यानमात्रवाचिनः षष्ठ्यर्थे प्रत्ययः, पञ्चत्वसङ्ख्या प्रमाणमेषां स्याद्वा न वेति पञ्चमात्राः। 'तावदेवेति'। तत्परिमाणमस्य धान्यादिस्तावत्, ततः स्वार्थे प्रत्ययः, उत्तरसूत्रे तु भावःसिद्धश्च डावतोरित्यर्थान्तरे वक्ष्यते॥

"पुरुषहस्तिभ्यामण् च"॥ 'हास्तिनमिति'। इनण्यनपत्य-इति प्रकृतिभावः। 'द्विगोर्नित्यं लुगिति'। नायं प्रमाणे लो द्विगोर्नित्यमित्य-स्यानुवादः, पुरुषहस्तिनोः शमादिवत्प्रमाणत्वेनाप्रसिद्धत्वात्, अत एव पुरुषद्वयसमित्यादौ प्रमाणे ल इति लुङ् भवति, अन्यथाणो विधान-सामर्थ्याल्लुगभावेपि द्वयसजादीनां स्यादेव, तस्मादपूर्वोत्र लुग्विधीयते, स च द्वयसजादीनां नाणः, ग्रहणवता प्रातिपदिकेन तदन्तविधिप्र-तिषेधाद् द्विगोरणः प्राप्त्यभावात्। 'द्विपुरुषीति'। पुरुषात्प्रमाणेन्यतर-स्यामिति ङीप्॥

"यत्तदेतेभ्यः परिमाणे वतुप्"॥ 'यावानिति'। आ सर्वनाम्न इत्यात्वम्। उगिदचामिति नुम्, अत्वसन्तस्येति दीर्घः, हल्ङ्यादि-संयोगान्तलोपौ. प्रमाणपरिमाणयोरेकत्वं मत्वा यश्चोदयेत्परिमाणग्रहण-मनर्थकं प्रमाणाधिकारादिति तं प्रत्याह। 'प्रमाणइति वर्तमान—इत्यादि'। स पुनरनयोर्भेदः परिमाणं तु सर्वतः, आयामस्तु प्रमाणं स्यादिति पूर्वमेव व्याख्यातः। 'डावताविति'। इहास्माभिर्वतुपं विधाय आ सर्वनाम्न इत्यात्वं विहितं, पूर्वाचार्यास्तु डावतुं विदधिरे तदपेक्षोयं निर्देशः, विशिष्यतइति विशेषः, तस्य भावो वैशेष्यम्, अर्थवैशेष्यादर्थभे-दात्परिमाणस्य प्रमाणात्पृथङ्निर्देशः, उच्यते क्रियतइत्यर्थः। स्यादेतत्, यद्यपि प्रमाणपरिमाणशब्दयोरर्थो भिद्यते तथापि प्रमाणग्रहणमेवानुवर्त्त्यं तदुपाधिकेभ्य एव वतुब्विधेयः, तत्रायमप्यर्थः, इदमपि सिद्धं भवति यावानध्वा यावती रज्जुरिति, अत्र ह्यायाममानं गम्यते, ये तु परिमाणे प्रयोगाः यावान् धान्यराशिरित्यादयस्तेप्युपमानाद्भविष्यन्ति, यथा सिद्धान्ते यावानध्वा यावती रज्जुः यावत्कृत्वो भुङ्क्तइत्यादय इति

तत्राह । 'मात्राद्यप्रतिघातायेति' । यदि यथोक्तं क्रियेत ततो डावतुर्विशेषविहितत्वात्सामान्यविहितान्मात्रजादीन्बाधेत, परिमाणग्रहणे तु सति भिन्नोपाधिकत्वाद्बाध्यबाधकभावाभावस्तेन तन्मात्रं यन्मात्रमित्यादि प्रमाणे सिद्धं भवतीति । 'भावः सिद्धश्चेति' । तत्परिमाणमस्य तावद्धान्यं राशीकृतं तावत्प्रमाणमस्य कुड्यादेस्तावन्मात्रं यावद्राशीकृतस्य धान्यस्य दैर्घ्यं तादृगस्यापीत्यर्थः, तदेवं भिन्नविषयत्वे सति वत्वन्तान्मात्रादयः सिद्ध्यन्ति, एकविषयत्वे तु वतुपैव विशिष्टस्य प्रमेयस्योक्तत्वात्तदन्तान्मात्रादयो न स्युः, यस्य हि तावत्प्रमाणं तस्य तत्प्रमाणमिति तावच्छब्दस्यैव तत्रापि प्रयोगः स्याद्, अन्यथा हि मात्रजादिप्रत्ययमालाप्रसङ्गः । 'सादृश्यइति' । विषयनिर्द्देशोयं सदृशस्तु प्रत्ययार्थः ॥

"किमिदंभ्यां वो घः" ॥ 'कियानियानिति' । इदं किमोरीश्की, यस्येति लोपः । 'एतदेवेति' । आदेशविधानान्यथानुपपत्त्या प्रत्ययोनुमीयते । 'योगविभागेन वेति' । एवं प्रतिपादिते लाघवं भवति, आदेः परस्येत्येव सिद्धे व इति वचनमादेशप्रतिपत्त्यर्थमितरथा हि घः प्रत्ययान्तरं विज्ञायेत ॥

"किमः सङ्ख्यापरिमाणे डति च" ॥ 'सङ्ख्यायाः परिमाणमिति' । करणस्य कर्तृत्वविवक्षया कृद्योगलक्षणा कर्त्तरि षष्ठी, परिमितिः परिमाणम् । 'सङ्ख्या परिच्छेद इति' । सङ्ख्या यं परिच्छेदं करोति तत्रेत्यर्थः । 'तस्य च वकारस्य घकार इति' । वो घ इत्यनुवृत्तेः । ननु का सङ्ख्या परिमाणमेषामित्यत्र किंशब्दः परिच्छेदिकायां सङ्ख्यायां वर्त्तते न पुनः परिच्छेदे तत्राह । 'पृच्छ्यमानत्वादिति' । परिच्छेदकत्वविशिष्टा सङ्ख्या पृच्छ्यते का सङ्ख्या परिच्छेदिकैषामिति तत्र परिच्छेदस्यापि पृच्छ्यमानाकारान्तर्भावात्सङ्ख्यापरिच्छेदे वर्त्तमानादित्युक्तमित्यर्थः । अपर आह । सङ्ख्याया इति कर्मणि षष्ठी, सङ्ख्यापरिच्छेदार्थप्रश्ने वर्त्तमानः सङ्ख्यापरिच्छेदे वर्त्ततइत्युच्यते, सङ्ख्यायां परिच्छेत्तुमिष्टायां यः प्रश्नस्तत्र वर्त्तमानादित्यर्थ इति, कति । षड्भ्यो लुगिति जसो लुक्, अथैकवचनद्विवचने कस्मान्नोदाहृते, उच्यते, सङ्ख्याप्रश्ने वर्त्तमानात्किमः

प्रत्ययः प्रश्नश्चानिर्ज्ञाते, अनिर्ज्ञानं च बहुष्विति वृत्तौ बहुवचनमेव भवति, उक्तं च अनिर्ज्ञातेर्थे बहुवचनं प्रयोक्तव्यमिति, कथं तर्हि कियान् कियन्ताविति, नात्र सङ्ख्याप्रश्ने किंशब्दः किं तर्हि परिमाणमात्रप्रश्ने, सङ्ख्याप्रश्ने तु तत्रापि बहुवचनमेव भवति कियन्तो ब्राह्मणा इति, यदीया च सङ्ख्या पृच्छ्यते तत्र प्रत्ययास्तेन का सङ्ख्या परिमाणस्य वर्गात्रयवगतसङ्ख्याप्रश्ने कति वर्गइति न भवति, अवयवेष्वेव हि तदा प्रत्ययेन भाव्यं कति गावोस्मिन्वर्गइति, सङ्ख्यसङ्ख्येनोरभेदविवक्षायां तु कति गावोऽयं वर्ग इति, न तु व्यवस्थितसङ्ख्यासंबन्धे वर्गे, वर्गसङ्ख्याप्रश्ने तु कति वर्गा इति भवति । 'अथ वेत्यादि' । अस्मिन्पक्षे सङ्ख्यापरिमाण इति कर्मधारयः, निपातनाच्च विशेषणस्य परनिपातः, करणसाधनश्च परिमाणशब्दः, एवमात्मिकेत्यस्य विवरणम् 'परिच्छेदस्वभावेति' । 'यत्रापरिच्छेदकत्वेन विवक्ष्यतइति' । परिच्छेदकत्वेन न विवक्ष्यतइत्यर्थः । तथैव वा पाठः । क्व पुनरेवं न विवक्ष्यतइत्याह । 'क्षेपे हीति' । 'केयमेषामिति' । केयमीदृशानां दशत्वसंख्या येषाम् ।

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥

इति, एवं संख्येयद्वारेण संख्यायां क्षेपः, प्रकृतः परिमाणशब्दो रूढिशब्दत्वात्संख्यया परिसम्बन्द्धुं नार्हतीति परिच्छित्तिमात्रवचनः पुनरिहोपात्तः ॥

"संख्याया अवयवेतयप् ॥ इहास्येन्यधिकारात्संख्याया अवयवे वर्त्तमानायाः स्वार्थे तावत्प्रत्ययो न भवति अवयवस्वामिनि तु प्राप्नोति, पञ्च अवयवा अस्य देवदत्तस्येति तत्राह । 'अवयवावयविनः संबन्धिन इति' । अवयवशब्दस्य संबन्धिशब्दत्वाद्यं प्रत्यवयवत्वं तत्रैवावयविनि प्रत्यय इत्यर्थः । यथा द्वयसजादिषु प्रमाणे प्रकृत्यर्थे प्रमेयः प्रत्ययार्थस्तद्वत् । 'चतुष्टयीति' । रेफस्य विसर्जनीये तस्य सत्वे ह्रस्वात्तादौ तद्धितइति षत्वं, टिड्ढाणञिति ङीप् ॥

"द्वित्रिभ्यान्तयस्यायज्वा" ॥ ननु तयः प्रकृतः सोनुवर्त्तिष्यते, द्वित्रिभ्यामिति पञ्चमी तस्मादित्युत्तरस्येति तस्य षष्ठ्यन्ततां सम्पादयिष्यति तत्किं तयस्येत्यनेन, तत्राह । 'तयब्ग्रहणमित्यादि'। असत्यामपेक्षायामनुवृत्तिः षष्ठीप्रकॢप्तिश्च दुर्ज्ञानेति भावः । अथ प्रत्ययान्तरे को दोषः । त्रयी गतिरिति तयन्निबन्धन ईकारो न स्यात्, प्रथमचरमतयेति चैष विधिर्न स्याद् द्वये द्वया इति, क्वचित् तत्र को दोष इत्यादि वृत्तावेव पठ्यते । 'चकारः स्वरार्थ इति'। तेन स्थानिवद्भावेनानुदात्तत्वं न भवति ॥ ·

"उभादुदात्तो नित्यम्"॥ 'उदात्तवचनसामर्थ्यादिति'। अन्तोदात्तत्वस्य चित्स्वरेणैव सिद्धत्वात्, सर्वोदात्तत्वं तु न भवति, अनुदात्तं पदमेकवर्जमिति वचनात्, नापि हे उभयेत्यत्रामन्त्रितानुदात्तत्वमुभयेत्यत्र चामन्त्रिताद्युदात्तत्वं बाधितुमुदात्तवचनं पुरस्तादपवादन्यायेन चित्स्वरस्यैव बाधनात् । 'उभशब्दो यदि लौकिकी संख्येति'। उभावित्युक्ते द्वाविति प्रतीतेः । 'अथ न संख्येति'। कृत्वसुजादिसंख्याकार्यादर्शनात् एक उभौ त्रय इत्येवं लोके गणनाऽदर्शनाच्च । 'तस्य नित्यमयजादेश इति'। अथ प्रत्ययान्तरमेवायः कस्मान्नाश्रितः, तत्रायमप्यर्थः, उदात्त इति न वक्तव्यं भवति प्रत्ययस्वरेणैव सिद्धं, यच्च सर्वनामसंज्ञायामुक्तमुभयशब्दस्य जसि सर्वादिपाठान्नित्या संज्ञा भवति न प्रथमचरमतयेति विभाषा व्यवस्थितविभाषाविज्ञानात्पूर्वविप्रतिषेधाद्वेति, तदप्ययत्नसिद्धं भवति, कथं, नह्ययं तयप आदेशः । सत्यम् । उभयीत्यत्र तु तयन्निबन्धन ईकारो न स्यात्, यदि तु ङीब्विधौ मात्रजित्ययचश्चकारेण प्रत्याहारग्रहणं ततः प्रत्ययान्तरत्वेप्ययचः सिद्ध ईकारः, उदात्तग्रहणं नित्यग्रहणं च शक्यमकर्त्तुं, ङीब्विधौ च तयपो ग्रहणम्, अथ वा दघ्नज्मात्रचोरपि तत्र ग्रहणं शक्यमकर्त्तुं द्वयसजित्येवायचश्चकारेण प्रत्याहारोस्तु, तत्तु तथा नाश्रितमित्येव । 'उभयो मणिरिति'। उभौ पीतलोहिताववयवावस्येत्यवयवद्वित्वनिबन्धनो ऽवयविनो व्यपदेशः । 'उभये देवमनुष्या इति'। वर्गद्वयापेक्षमतिरोहितभेदानां वर्गिणामिदमभिधानम् ॥

"तदस्मिन्नधिकमिति दशान्ताड्डः"॥ अस्मिन्नधिकं यस्मादधिकमिति च निर्द्देशादधिकशब्दयोगे सप्तमीपञ्चम्यौ भवतः, अधिका खारी द्रोणेनेति कर्त्तरि तृतीयापि भवति। 'दश अधिका अस्मिन् शतइति'। व्यपदेशिवद्भावोपि प्रातिपदिकेन प्रतिषिद्धः। 'प्रत्ययार्थेन चेत्यादि'। प्रकृतिप्रत्ययार्थयोस्तुल्यजातीयत्वे प्रत्यय इत्यर्थः। न्यायसिद्धश्चायमर्थः। तथाहि। वाक्ये तावदेकादश अधिका अस्मिन् गोशते इति शतविशेषणत्वेनाप्युपात्ता गावः सन्निधानात्प्रकृत्यर्थमपि स्पृशन्ति, वृत्तावप्येकादशं गोशतमित्युक्ते प्रकृत्यर्थतया गावः सन्निहिता एव प्रतीयन्ते, यत्र तु विजातीयसङ्ख्येयवाची शब्दः प्रयुज्यते तत्र शब्दसंनिहितेन तेनान्यदर्थं सन्निहितं बाध्यते, न च वृत्तौ तादृशेन शब्देन प्रकृत्यर्थः शक्यो [1]विशेषयितुं, प्रत्ययार्थनैकार्थीभूतत्वात्, यथा वृद्धस्यौपगव इति। 'शतसहस्रयोश्चेष्यतइति'। इयमिष्टिरेव। 'इतिकरणो विवक्षार्थस्तत इदं सर्वं लभ्यतइति'। यद्यपि पूर्वार्थो न्यायादेव लभ्यते तथापि शतसहस्रयोश्चेष्यतइत्ययमर्थ इतिकरणादेव लभ्यतइति लाघवाय साधारणो हेतुरुपदिष्टः। 'कथमित्यादि'। शते सहस्रे चाभिधेये प्रत्ययो भवन्नत्र न प्राप्नोति, अत्र हि सङ्ख्यान्तरमधिकं शतसहस्रं नाम न शतं सहस्रं वेति भावः। अत्रापि शतसहस्रयोरेवान्यतरस्य प्रत्ययार्थत्वं न सङ्ख्यान्तरस्येत्याह। 'शतानामिति'। 'सहस्राणां वा शतमिति'। अत्रापि पक्षे सङ्ख्याया अल्पीयस्या इति द्वन्द्वे चाद्वन्द्वे च स्मरणाच्छतस्यैव पूर्वनिपातः, तत्र पूर्वस्मिन्विग्रहे शतानि सङ्ख्यायन्तइति तान्येव प्रकृत्यर्थः, एकादश शतान्यधिकान्यस्मिन्नेकादशं शतसहस्रमिति, उत्तरत्र तु सहस्राणां सङ्ख्येयत्वात्तान्येव प्रकृत्यर्थः, एकादशसहस्राण्यधिकान्यस्मिन्नेकादशं शतसहस्रमिति प्रकरणादिवशाच्च शतानां सहस्राणां वा सङ्ख्येयत्वावसायः, उक्तमेवार्थं श्लोकेन दर्शयति। 'अधिके समानजातावित्ति'। प्रत्ययार्थसम्बन्धिन्या जात्या प्रकृत्यर्थस्य जातौ समानायां सत्यामधिकेर्थे वर्त्तमानात्प्रत्यय इत्यर्थः। यद्वा समानजातावित्ति बहुव्रीहिः,

१ विशेष्टुमिति २ पु॰ पा॰

जात्यन्तलक्षणस्तु डो न भवति भाष्यप्रयोगात् । प्रत्ययार्थेन समानजातीयेर्थे वर्त्तमानादित्यर्थः । 'इष्टमिति' । प्रत्ययाख्यं कार्यम् । एकादशं शतसहस्रमित्यत्र निर्वाहार्थमाह । 'यस्य संख्येति' । शतानि सहस्राणि संख्यायन्तइत्युक्तम्, अधिके समानजाताविति च, तेन यस्य संख्या यज्जातीयं संख्यायते, सामान्यापेक्षमेकवचनं तदाधिक्ये तज्जातीयस्याधिक्ये स कर्त्तव्यो मतो मम, एतच्चोदाहरणएव व्यक्तीकृतं नात्र किं चिदपूर्वमुक्तम् ॥

"शदन्तविंशतेश्च" ॥ अन्तग्रहणमनर्थकं केवलस्य शतः प्रातिपदिकस्याभावात् । प्रत्ययग्रहणपरिभाषया तदन्तविधिर्भविष्यति, पङ्क्त्यादिसूत्रे त्रिंशदादीनांशत्प्रत्ययान्तत्वेन निपातितत्वात्तत्राह । 'शद्ग्रहणेन्तग्रहणमिति' । प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति तदादिनियमः स्यात्, अस्मिंस्त्वन्तग्रहणे सति यावतः समुदायस्यान्ते शच्छब्दस्तावतो ग्रहणं भवति, । 'संख्याग्रहणं चेति' । संख्याया अवयवे तयबित्यतः संख्याग्रहणमनुवर्त्तनीयमित्यर्थः, तेन संख्यावाचिनः शदन्तात्प्रत्ययो भवतीत्यर्थः, एकत्रिंशदादयश्च संख्यान्तरस्य वाचका न तु समुदायस्य, तेन तेषामपि ग्रहणं, गोत्रिंशदादयश्च न संख्यावचना इति तेषामग्रहणम् । 'विंशतेश्चेति' । विंशतिशब्दानन्तरमन्तशब्दः पठितव्य इत्यर्थः, अन्यथा ग्रहणवतेति निषेधात्तदन्ताच्च स्यात् ॥

"संख्याया गुणस्य निमाने मयट्" ॥ 'तदस्य संजातमित्यत इति' । तत्र तावत्तदस्येति समुदायस्य स्वरितत्वं प्रतिज्ञातमनुवृत्तं च बहुषु योगेषु । तदस्मिन्नधिकमित्यत्र तु पुनस्तच्छब्दोपादानाच्च संबद्धातइत्येतावत्, इह तु प्रतिबन्धाभावात्स एव समुदायो ऽनुवर्ततइत्यर्थस्तेन तदस्मिन्नित्यस्यैव तच्छब्दस्यानन्तर्यादनुवृत्तिर्युक्ता, अस्मिन्नित्यनेन विच्छिन्नत्वादस्येत्यनुवृत्तिश्चायुक्तेति न चोदनीयम्, 'निमानं मूल्यमिति' । मेङ् प्रणिदानइत्यस्मान्निपूर्वात्करणे ल्युट्, निमीयते क्रीयतइत्यर्थः । 'गुणस्येति' । कर्मणि षष्ठी । 'सोऽपि सामर्थ्यादिति' । गुणशब्दोपि सापेक्षं रूपमाचष्टे, तथाहि, द्विगुणं त्रिगुणमित्युक्ते किंचिदपेक्ष्येति गम्यते, तत्र निमेयस्य

गुणत्वं सन्निहितं निमानमपेक्ष्येत्येतत्सामर्थ्यम्। 'यवानां द्वौ भागाविति'। यद्यपि तुल्यमुभयत्रापि स्वत्यागः परकीयस्य ग्रहणं तथापि क्वचित्काचित्प्रसृततरा गतिः, तद्यथा समाने त्यागे धान्यं विक्रीणीतइत्युच्यते न कश्चिदाह कार्षापणौ विक्रीणीतइति, तेन यवभागयोरेव निमानत्वं नोदश्विद्भागस्य, देशकालापेक्षो वा निमाननिमेयभावः, निमानस्य च निमेयापेक्षत्वान्निमेयं प्रत्ययार्थः, एकगुणस्योदश्वितो द्विगुणा यवा मूल्यमित्यर्थः, तद्यथा प्रस्थस्योदश्वितो द्वौ प्रस्थौ यवाः द्विमयमुदश्विद्यवानामिति, भागविशेषप्रतिपत्त्यर्थं प्रकृत्यर्थविशेषणस्य यवादेः प्रयोगः, द्विशब्दश्च वृत्तिविषये भागयोरेव संख्येययोर्वर्त्ततइति संबन्धिशब्दत्वेन नित्यसापेक्षत्वात्तद्धितवृत्तिरविरुद्धा, कथं पुनः प्रत्ययान्तस्योदश्विच्छब्देन सामानाधिकरण्यं, यावतोदश्विद्भागे प्रत्ययो विहितो नोदश्विति तत्राह। 'भागेपि तु विधीयमान इति'। अत्र चाभिधानस्वाभाव्यं हेतुः, अपर आह, यत्रोदश्वितो भागो द्विगुणैर्यवैः क्रीयते तत्रार्थात्समुदायोपि द्विगुणैर्यवैः क्रीतो भवति बहुभिरेकेन वा तदपेक्षं सामानाधिकरण्यमिति। गुणस्येति चैकत्वं विवक्षितमित्येतदर्थमेव हि गुणनिमानइति लघुरपि निर्द्देशो न कृतः,। द्वौ भागौ यवानां त्रय उदश्वित इति'। न तावद्भूयसश्च वाचिकाया इत्युक्तमिति मत्वेदमुदाहृतं, न त्वत्र द्विशब्दो भूयसो वाचकः, यद्वा उदाहरणदिगियन्दर्शिता त्रयो यवानां द्वावुदश्वित इति दर्शयितव्यं, निमाननिमेयभावस्य विपर्ययो वा द्रष्टव्यः। 'भूयसश्चेति'। प्रत्ययार्थात्प्रकृत्यर्थस्य भूयसो या वाचिका संख्या ततः प्रत्यय इत्यर्थः। 'इह न भवतीति'। निमाननिमेययोः साम्यविषये न भवतीत्यर्थः। अन्यथा गुणस्येत्येकत्वविवक्षायामपि स्यादेव प्रसङ्गः, कुतस्तर्हि न भवत्यनभिधानात्, बहोर्लोपो भू च बहोरिति भूयःशब्दस्य व्युत्पादितत्वात्प्रकृत्यर्थस्य बहुतरत्वे सति प्रत्ययेन भाव्यं, ततश्च द्विशब्दाच्च स्यादित्याशङ्क्याह। 'भूयस इति चेति' 'गुणशब्द इत्यादि'। नह्ययं भागमात्रवचनः किं तर्हि समानतामपि तस्य भागस्य ब्रूते। 'निमेये चापि दृश्यते इति'। कथं तल्लभ्यते, तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेन, द्वे अत्र

वाक्ये तत्रैकं व्याख्यातं द्वितीये निमानमिति, कृत्यल्युटो बहुलमिति कर्मणि ल्युट्। 'गुणस्येति'। करणस्य कर्तृत्वविवक्षायां कर्तरि षष्ठी, निमेयस्य निमानापेक्षत्वान्निमानं प्रत्ययार्थः, परिशिष्टं सर्वं पूर्ववत्, संख्याया इति किम्। यवभागौ निमानमुदश्विद्भागस्य द्विवचनान्ताद्यव-भागशब्दात्प्रत्ययो न भवति। 'व्रीहियवाविति'। अत्रोदश्वित एव निमानं द्वौ न तद्भागस्य तेन द्विमयमुदश्विद् व्रीहियवाविति न भवति। 'द्विगुणं तैलं पच्यते क्षीरेणेति'। क्षीरसंबन्धिनौ द्वौ गुणावस्मिंस्तैले तत्तेनैव सुभगं सह क्षीरेण पच्यतइत्युच्यतइति ॥

"तस्य पूरणे डट्"॥ तस्येत्येकत्वमविवक्षितम्। एकस्य पूरणासम्भ-वात्, तेन द्व्यादिभ्यो द्विवचनबहुवचनान्तेभ्यः प्रत्ययः। 'पूर्यतेनेनेति पूरण-मिति'। करणे ल्युट्। 'पूर्यतेइति'। ण्यन्तात्कर्मणि यक्, न प्रकृत्यन्तरात् कर्तरि श्यन्, यदि संख्यावाचिनः शब्दात्पूरणे प्रत्ययो भवति इहापिप्राप्नोति पञ्चानामन्यतोलब्धपञ्चसंख्यानामुष्ट्रिकाणां पूरणो घट इति तत्राह। 'येनेति'। संख्येत्यस्य विवरणम्। 'संख्यानमिति'। इह संख्यावाचिनः प्रत्ययो विधीयते तत्र प्रत्यासत्त्या यस्य संख्यावाचिनो यत्प्रवृत्तिनिमित्तं संख्यानं पञ्चत्वादि तस्य पूरणइति विज्ञायते न तु विप्रकृष्टं पञ्चादिश-ब्दवाच्यानन्तर्भूतं यथातिशायने तमबिष्ठनौ कुत्सितइत्यादाविति भावः। 'एकादशानां पूरणइति'। यथा वैयाकरणपाश इत्यत्र प्रवृत्तिनिमित्त कुत्सायामपि याप्यो वैयाकरण इति विग्रहो न तु याप्यं वैयाकरणत्व-मिति तथेहापि संख्यानपूरणे विवक्षिते संख्येयवाचिनापि विग्रहो न विरुध्यते। 'एकादश इति'। पुनर्गणनायां क्रियमाणायां चरमबुद्धि-स्थेन येनैकादशत्वसंख्या पूर्यते स इति वेदितव्यः, एवं च व्युत्क्रमेणाष्टा-ध्यायेषु गण्यमानेषु समर्थः पदविधिरित्यध्यायो यदा चरमं गण्यते तदा निर्माणद्वितीयस्यापि गणनाक्रमेणाष्टमत्वव्यपदेशो भवत्येव, ननु प्रकृत्य-र्थव्यतिरिक्तेन प्रत्ययार्थेन भवितव्यम् इह त्वेकादशस्वन्तर्भूत एकादशानी-यन्तामित्युक्ते एकादशस्याप्यानयनात्, सत्यं, समुदायावयवयोस्तु भेदात्स-मुदायः प्रकृत्यर्थो ऽवयवः प्रत्ययार्थो यथा वृक्षस्यावयवो वार्क्षी शाखेति ॥

"नान्तादसंख्यादेर्मट्" ॥ 'डटो मडागमो भवतीति'। कथं पुनरयमागमः शक्यो विज्ञातुं, नात्रागमी निर्द्दिष्टः, यदपि प्रकृतं तदपि प्रथमान्तं षष्ठीनिर्द्दिष्टेन चेहार्थात आह। 'नान्तादिति'। पञ्चमीग्रहणं तावदनुवर्तते न च तस्य विधानार्थानुवृत्तिः, पूर्वमेव विहितत्वात्, न च विशेषविहितेन मटा बाधप्रसङ्गे विधानार्था डटोऽनुवृत्तिः, एवं हि प्रकृतस्य समुच्चयार्थश्चकारः क्रियेत मट् चेति, यथान्यत्र ततोनुवृत्तिसामर्थ्यात्षष्ठीप्रक्लृप्तात्रागमित्वमेव विज्ञायते, कः पुनर्मटः प्रत्ययत्वे आगमत्वे वा विशेषो यावता तदेव रूपं स एव स्वरः, सत्यं, डटि मटि च नास्ति विशेषः, विंशत्यादिभ्यस्तमडन्यतरस्यामित्ययं तु तमडादि प्रत्ययः स्यादाद्युदात्तः स्याद् आगमत्वेनागमानुदात्तत्वं भवति न तु प्रत्ययस्वर इति विंशतितम इत्यस्यान्तोदात्तत्वं भवति। 'एकादश इति'। नायं संख्यासमुदायः किं तर्हि संख्यान्तरमेव, अत एवात्र डड्भवति, अन्यथा सोपि न स्यात्, नहि संख्यासमुदायः संख्याग्रहणेन गृह्यते यथा जनपदसमुदायो जनपदग्रहणेन काशिकोसलीयाः, अथाप्ययं संख्यासमुदायस्तथापि संख्याग्रहणेन तत्समुदायो गृह्यतइति ज्ञापनार्थमेवासंख्यादेरिति वक्तव्यं, तेन सर्वमेव संख्याकार्यमेकादशादीनामपि भवति ॥

"षट्कतिकतिपयचतुरां थुक्" ॥ 'तदिह सप्तम्या विपरिणाम्यतइति'। यदि पूर्ववत्षष्ठ्या विपरिणाम इष्टः स्यात्पञ्चम्या निर्द्दिशेत् षष्ठ्यानिर्द्देशात्नुषषादीनामेवागमित्वं विज्ञायते, ततश्चानुवृत्तस्य डटोर्थात्सप्तम्याविपरिणाम इत्यर्थः, एवं च कृत्वा षष्ठाष्टमाभ्यां द्वितीयतृतीयचतुर्थेति निर्द्देश उपपद्यते। 'कतिपयशब्दो न संख्येति'। यद्यप्यसावनियतप्रचयरहितं बहुत्वमाचष्टे तथापि लोके संख्यात्वेन न प्रतिद्धो यथा द्वित्राः पञ्चषा इति शास्त्रेपि नैवास्य संख्यासंज्ञा विहिता, कथं तर्हि डट्प्रत्यय इत्याह। 'तस्येति'। किं पुनस्थुग्विधीयते न पञ्चमीनिर्द्देशेन प्रकृतस्यडेव विधीयेत नैवं शक्यम् इह षष्ठ इति जश्त्वं प्राप्नोति, चतुर्थ इति रेफस्य विसर्जनीयस्तस्य च सत्वं प्राप्नोति, षटः परादित्वेन पूर्वस्य पदत्वात्, यदि पुनः पूर्वसूत्रे थुगेव विधीयेत नैवं शक्यं पञ्चथः सप्तथः

नलोपो न स्यात्, इह लिङ्गविशिष्टपरिभाषया कतिपयशब्दादावन्तादपि थुग्भवति तत्र भस्याढे तद्धितइति डटि विषयभूतएव पुंवद्भावः, कतिपयानां पूरणी कतिपयथीति भवति,। 'चतुरश्छयताविति'। छयद्भ्यां डट् न बाध्यते डटि परतस्थुग्विधानात्। 'आद्यक्षरलोपश्चेति'। अच्सहितं व्यञ्जनमक्षरशब्देनोच्यते, अच्सहितस्यादेर्व्यञ्जनस्येत्यर्थः, व्यञ्जनसहितान्वचने त्वक्षरशब्दे द्विर्वचनन्यायेन तकारस्यापि लोपः स्यात्॥

"बहुपूगगणसङ्घस्य तिथुक्"॥ अत्रापि षष्ठीनिर्द्देशाद्बह्वादीनामेवागमित्वं पूगसङ्घयोरित्यादिरेक एव ग्रन्थः। इह बह्वीनां पूरणीति पूर्ववड्डुट्प्रत्ययः पुंवद्भावश्च॥

"वतोरिथुक्"॥ अत्रापि पूर्ववद्वत्वन्तस्यैवागमित्वम्। इह तावतीनां पूरणी तावतिथीति लिङ्गविशिष्टपरिभाषया प्रत्ययः पुंवद्भावश्च, कथं पुनरत्र लिङ्गविशिष्टपरिभाषा यावता प्रातिपदिकस्वरूपग्रहणे सा भवतीत्युक्तं, यत्रापि प्रातिपदिकविशेषणं स्वरूपेणोपादीयते तत्रापि सा भवति यथा तृजकाभ्यां कर्त्तरि अपां स्रष्टेति, इहापि वतोरिति विशेषणं स्वरूपेणोपादीयते तेन भवत्येव लिङ्गविशिष्टस्य ग्रहणम् उक्तं च, बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादिति॥

"द्वेस्तीयः"॥ 'तीयप्रत्ययो भवतीति'। डटो द्विशब्दस्य चादेशो न भवति द्वितीयेति निर्द्देशात्, यद्येवं तस्मादेव निर्द्देशान्न सिद्धमस्य साधुत्वं, सिद्धन्तु साधुत्वं पूरणार्थस्तु कथं लभ्यते, किं च तदाश्रयणे प्रकृतिप्रत्ययविभागाभावात्प्रातिपदिकस्वरेणान्तोदात्तत्वं स्यात्, अबाधकान्यपि निपातनानि भवन्तीति पक्षे डटः प्रसङ्गश्च॥

"त्रेः सम्प्रसारणं च"॥ 'अण इति तत्रानुवर्त्ततइति'। ढ्रलोपे पूर्वस्य दीर्घो ऽण इत्यतः, एवमपि यदि परेण णकारेण प्रत्याहारः स्यात्पुनरपि स्यादेव दीर्घः, स तु न तथेत्याह। 'पूर्वेणेति'। एतच्च लणित्यत्रैव प्रतिपादितं, त्रेस्तृ चेति नोक्तं प्रत्ययो मा विज्ञायीति॥

"विंशत्यादिभ्यस्तमडन्यतरस्याम्"॥ 'विंशत्यादिभ्यः परस्येति'। कथं पुनर्डुस्तीय इति तीयप्रत्ययेन विच्छिन्नस्य इट आगमित्वं शक्यं विज्ञातुं तत्राह । 'पूरणाधिकारादिति'। सत्यं डट्प्रत्ययो विच्छिन्नः पूरणार्थस्तु न विच्छिन्नः सोनुवर्त्तते तेन पूरणे यो विहितः स आगमी विज्ञायते, न च डटो ऽन्यो विंशत्यादिभ्यः पूरणे विहितोस्ति, कः पुनः पङ्क्त्यादिसूत्रनिर्द्दिष्टानां ग्रहणे सति दोषस्तत्राह । 'तद्ग्रहणे हीति'। स्यादेतत्तदन्तविधिना एकविंशतिप्रभृतिभ्योपि भविष्यतीति तत्राह । 'ग्रहणवतेति'। ननु यदयं षष्ट्यादेश्चासंख्यादेरित्याह तज्ज्ञापयति भवति पूरणप्रकरणे तदन्तविधिरिति, तेनैकविंशतिप्रभृतिभ्योपि भविष्यति, अस्त्वेतत्केवलेभ्यस्तु न स्यात्, अतदन्तत्वात्, व्यपदेशिवद्भावेन भविष्यति, व्यपदेशिवद्भावोप्रातिपदिकेन । 'एवं चेत्यादि'। लौकिकानां विंशत्यादीनां यदीदं ग्रहणं तदा षष्ट्यादेश्चेत्यत्रापि लौकिकानामेव षष्ट्यादीनां ग्रहणं ततश्चैकषष्टिप्रभृतिभ्यो नित्यस्य तमटः प्रसङ्गे ऽसंख्यादेरिति पर्युदासो युज्यतएव न कथं चिच युज्यते, ऽनिष्टलेशस्याभावात्, सूत्रसंनिविष्टानां तु ग्रहणे तदन्तविधिज्ञापनार्थं पर्युदासो युज्यते केवलं न तु युज्यतएव केवलानामप्रसङ्गादिति तावद्वृत्तेरर्थः, यथा तु भाष्यं तथा सूत्रसंनिविष्टानां ग्रहणं ज्ञापनाच्च तदन्तविधिरिति स्थितं, न च केवलानामप्रसङ्गस्तदन्तानामपि भवतीति ज्ञापनशरीरं न तु तदन्तानामेव भवतीति, यदि वा यत्र प्रातिपदिकस्य श्रुतिरस्ति ग्रहणवता प्रातिपदिकेन व्यपदेशिवद्भावोप्रातिपदिकेनेति तदुभयमपि न प्रवर्त्ततइति सामान्येन ज्ञापनम्, एवं च कृत्वेदमपि सिद्धं भवति एकाचविंशतेः पूरणः एकाचविंशतितम इति, भवति ह्येतत्सूत्रसंनिविष्टविंशत्यन्तं संख्यादि संख्यावाचि च लौकिकानां तु ग्रहणे नैतत्सिध्यति, विंशतेः प्राग्भावित्वादस्यासंख्यायाः॥

"नित्यं शतादिमासार्धमाससंवत्सराच्च"॥ मासादय इत्यादिर्विज्ञायतइत्यन्त एको ग्रन्थः, अथ शतादिग्रहणं किमर्थं यावता षष्ट्यादेश्चेति वक्ष्यमाणेनैव सिद्धं तत्राह । 'षष्ट्यादेरित्यनेनैवेति'। यदि तेन स्याद् एकशतादिभ्यो न स्याद् असंख्यादेरिति प्रतिषेधात्॥

"षष्ठ्यादेश्चासंख्यादेः" ॥ 'संख्यादेस्तु विकल्प एव भवतीति'। नह्ययं विकल्पस्यापि प्रतिषेधः, पर्युदासो ह्ययं संख्यादेर्न विधिर्न प्रतिषेधः, यदि केन चित्प्राप्नोति भवत्येव, पूर्वेण च प्राप्नोति, प्रसज्यप्रतिषेधे ह्यनन्तरा प्राप्तिः प्रतिषिध्यते न व्यवहिता ॥

"मतौ छः सूक्तसाम्नोः" ॥ 'मताविति मत्वर्थ उच्यतइति'। साहचर्याद् मुख्यस्य ग्रहणं न भवति, कथं हि मतुरभिधेयः स्याच्छब्दस्य शब्दः। 'मत्वर्थग्रहणेनेत्यादि'। समर्थविभक्तिः प्रथमा प्रकृतेरर्थद्वारकं विशेषणम्, अस्तित्वं प्रत्ययार्थः, अस्यास्मिन्निति च तत्र यद्यपि प्रत्ययार्थो मतोरभिधेयमितरदनभिधेयं तथापि साहचर्यमविशिष्टमिति सर्वमेतदाक्षिप्यते संनिधाप्यते उपस्थाप्यतइत्यर्थः। अथ वा प्रधानवशवर्तित्वाद्गुणानां प्रधाने प्रत्ययार्थे उपस्थापिते समर्थविभक्त्यादिकमपि गुणभूतमुपस्थाप्यतएव आचमनादिवत्, यथा ब्राह्मणा भोज्यन्तामित्युक्ते ऽनुक्ता अप्याचमनादयोङ्गभूता आक्षिप्यन्ते। इहास्यवामइत्यस्मिन्नस्तीति षष्ठीप्रथमयोरुपलम्भादनेकपदसमुदायोयं, ततश्चार्थवत्समुदायानां समासग्रहणं नियमार्थमिति प्रातिपदिकसंज्ञाया अभावादेवंविधेभ्यः प्रत्ययो न प्राप्नोतीत्यत आह। 'अनुकरणशब्दश्चेति'। 'स्वरूपमात्रप्रधान इति'। नात्र तदानीमुच्चरितमनुकरणस्वरूपं विवक्षितं किं तर्हि अनुकार्यस्वरूपं, मात्रशब्दो बाह्यार्थव्यवच्छेदार्थः, एतदुक्तं भवति यथा गवादयः शब्दाः सास्नादिमदाकृतिमर्थं प्रत्याययन्तस्तेनार्थेन तद्वति मतुपमुत्पादयन्ति गोमान्वृक्षवानिति, तथानुकरणशब्दाः प्रथमासमर्थाः स्वेनानुकार्येण तद्वतिच्छप्रत्ययमिति, तत्रानुकरणशब्दा इत्यनेन पदसमुदायत्वं निरस्यति, अनुकार्यो हि पदसमुदायो न त्वनुकरणं, किं पुनरन्यदनुकार्यमनुकरणं च, ननु रूपभेदो नोपलभ्यते, यद्यप्येवं तथाप्यर्थभेदाद्भेदः, अनुकार्यस्य बाह्योर्थो ऽनुकरणस्य तु तदेवानुकार्यम्, अत एवास्यवामीयमित्यादौ विभक्त्यर्थाप्रतिपादनात्सुप्त्वाभावात्स्यशब्दादीनां लुङ् भवति, ये चाम्नायशब्दानां नियमाः श्मशाने नाध्येयं चतुर्दश्यां नाध्येयं शूद्रस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणमित्येवमादयस्तेप्यनुकरणेषु न भवन्ति,

अस्यवामीयमिति हि सर्वत्र सर्वदा सर्वेषां च सकाशे प्रयुज्यते तस्मादन्ये ऽनुकरणशब्दा अनुकार्यशब्दाश्च स्वरूपमात्रप्रधाना इत्यनेन त्वर्थवत्त्वमाह । 'अनेकपदादपीति' । अनेकं पदं यत्र समुदाये तस्मादपीत्यर्थः । परप्रसिद्ध्या चैवमुच्यते, यम्भवाननेकपदसमुदायं मन्यते तस्मादपीत्यर्थः । न त्वत्र वस्तुतो ऽनेकपदत्वमस्ति अस्यवामीयमिति, अस्य वामस्येति वेदे यत्पदद्वयं पठितं तदेकदेशस्यास्यवामशब्दस्य छप्रत्ययप्रकृतिरस्यवामशब्दः प्रतिपादक इत्यर्थवत्त्वं पदसमुदायत्वाभावाच्च प्रातिपदिकत्वे सति प्रत्ययः, किं पुनरत्र छप्रत्ययप्रकृतेरनुकरणत्वे प्रमाणं, छप्रत्यय एव, नह्यसावनुकरणत्वमन्तरेण सम्भवति तस्मादितिशब्दवच्छप्रत्ययोऽप्यनुकरणत्वे प्रमाणम् ॥

"अध्यायानुवाकयोर्लुक्" ॥ 'केन पुनरिति' । सूक्तसाम्नोरेव छो विहित इति प्रश्नः । 'इदमेवेति' । नह्यसतो लुग्विधानमुपपद्यते । 'विकल्पेन चेति' । तत्कथं मतुप्प्रकरणएवास्मिन्सूत्रे कर्तव्ये तदत्र छस्य लुग्विधानं तस्मात्प्राप्तिको लुगनुमीयते । अत्र केचिदाहुः । अनुवाकसाहचर्याद्वैदिकोऽध्यायो गृह्यतइति । अन्ये पुनः पौरुषेयग्रन्थविशेषस्याप्यध्यायस्य ग्रहणमिच्छन्ति । तथा च दीर्घजीवितीयमध्यायं व्याख्यास्याम इत्यादिवैद्यकग्रन्थेषु दृश्यते ॥

"तत्र कुशलः पथः" ॥ 'पथि कुशल इति' । आयुक्तकुशलाभ्यां चासेवायामिति सप्तमी, कौशलस्य क्रियाविषयत्वात्पथिन्शब्देन गमनादिका तद्विषया क्रिया लक्ष्यते, योगश्चायं कृतलब्धक्रीतकुशला इत्यणोऽपवादः ॥

"आकर्षादिभ्यः कन्" ॥ आकषत्यस्मिन्सुवर्णादिकमित्याकषः, पुंसि संज्ञायामिति घः, हलश्चेति घञ् तु न भवति, प्रायग्रहणानुवृत्तेः, यथा निकष इति, ये त्वाकर्षादिभ्य इति सरेफं पठन्ति तेषामाकृष्यते ऽस्मिन्निति घञि रूपम् । 'त्सरुक इति' त्सर छद्मगतौ । भृमृशीत्यादिनौणादिक उप्रत्ययः, त्सरुः खड्गग्रहणप्रदेशः, एतदर्थं प्रत्ययान्तरकरणमिवर्णान्तार्थं च, अकारान्तेष्वाकर्षादिषु प्रकृतेन वुनापि सिद्धम् ॥

"धनहिरण्यात् कामे"॥ 'काम इच्छेति'। कामयिता तु न गृह्यते ऽनभिधानात् ॥

"स्वाङ्गेभ्यः प्रसिते"॥ 'प्रसितः प्रसक्त इति'। षिञ् बन्धने कर्मणि क्तः, यो यत्र प्रसक्तः स तत्र प्रकर्षेण बद्ध इव भवतीत्युपमानादिदमभिधानम्। 'केशेषु प्रसित इति'। प्रसितोत्सुकाभ्यां तृतीया चेति सप्तमी। 'केशादिरचनायामिति'। केशादिस्थायां रचनायां केशादिशब्दस्य वृत्तिं दर्शयति, एतच्च क्रियाविषयत्वात्प्रसक्तेर्लभ्यते। 'बहुवचनमित्यादि'। स्वरूपविधिनिरासार्थं तु बहुवचनं न भवति, अद्रवमित्यादिना स्वाङ्गस्य परिभाषितत्वेन स्वरूपग्रहणासंभवात् ॥

"उदराट्ठगाद्यूने"॥ 'आद्यूनो विजिगीषुरिति'। दिवोविजिगीषायामिति तत्र निष्ठानत्वविधानात्। 'उदरक इति'। उदरपरिमार्जनादौ प्रसित उच्यते ॥

"सस्येन परिजातः"॥ 'सस्यशब्दो गुणवाचीति'। न धान्यवाची अनभिधानात्, के चित्तु शंसिदुहिगुहिभ्यो वेति क्यबन्तं शस्यशब्दं पठन्ति, सस्येनेति कर्त्तरि तृतीया, परिगतो जातः परिजातः, प्रादयो गताद्यर्थे प्रथमयेति समासः, समन्तात्संबद्धः परिगतस्तत्र सस्यस्य कर्तृत्वं तदाह। 'यो गुणैः संबद्धो जात इति'॥

"अंशं हारी"॥ 'तत्र षष्ठीप्रतिषेधादिति'। अकेनोर्भविष्यदाधमर्ण्ययोरित्यनेन। ननु तत्र भविष्यदधिकारविहितस्याकस्य ग्रहणं, सत्यम्। इनस्त्वविशेषेण ग्रहणमस्मादेव द्वितीयानिर्देशात् ॥

"तन्त्रादचिरापहृते"॥ तन्यन्ते तन्तवोस्मिन्निति तन्त्रं तन्तुवायशलाका, तन्त्रयतेर्वा एरचि णिलोपः। 'अचिरापहृत इति'। अचिरः कालोपहृतस्येति कालाः परिमाणिनेति समासः। 'पञ्चमीसमर्थादिति'। अपहृतयोगे ऽपादाने पञ्चमी ॥

"ब्राह्मणकोष्णिके संज्ञायाम्"॥ 'कन्प्रत्ययान्तौ निपात्येते इति'। किं पुनरत्र निपात्यते, ब्राह्मणशब्दादायुधजीव्युपाधिकात्प्रथ-

मान्तात्सप्तम्यर्थे कन्प्रत्ययः, अवशब्दादल्पत्वोपाधिकात्सप्तम्यर्थएव कन्प्रत्ययः, अवशब्दस्योत्वमादेशस्तदाह । 'यवायुधजीविन इत्यादि' ॥

"शीतोष्णाभ्यां कारिणि" ॥ शीतं करोति स शीतकः, यश्चोष्णं करोति स उष्णकः, किं चातः, तुषारे आदित्ये च प्राप्नोति, शीतोष्णशब्दयोर्हि स्पर्शविशेषो मुख्योर्थः, तं च तावदवश्यं कुरुत इव मुख्यार्थग्रहे दोषं दृष्ट्वा गौणार्थयोर्ग्रहणमिति दर्शयन्नाह । 'क्रियाविशेषणादिति' । तत्र शीतोष्णशब्दयोरुपमानाद्वृत्तिः शीतमिव शीतं, मन्दकरणमित्यर्थः । शीतं हि मन्दतायुक्तं, सति शीते कार्यकरणे पाटवाभावात्, एवमुष्णमिवोष्णं पटुकरणं शीघ्रकरणमित्यर्थः, एवं क्रियाविशेषणाभ्यां प्रत्ययः । 'द्वितीयासमर्थादिति' । कृद्योगलक्षणा तु षष्ठी क्रियाविशेषणान्न भवतीति प्रागेवोक्तं, मुख्यार्थवृत्तिभ्यां तु प्रत्ययो न भवत्यनभिधनात् ॥

"अधिकम्" ॥ 'अध्यारूढशब्दस्येति' । यदि पुनरधिशब्दात्ससाधनक्रियावचनात्कन्निपात्यते तदा कर्तृकर्मणोरन्यतरस्यैवाभिधानं प्राप्नोति । 'अध्यारूढशब्दस्तूभयार्थ इति' । तस्यैवेदमङ्गीकृतसाधनभेदं निपातनमुचितमिति भावः । 'अधिको द्रोणः खार्यामधिका खारी द्रोणेनेति' । यथैतत्प्रयोगद्वयमुपपद्यते तथा दर्शयति । 'कर्त्तरि कर्मणि चाध्यारूढशब्द इति' । गत्यर्थाकर्मकेत्यादिना रुहेः कर्त्तरि कर्मणि च क्तो विहितो निपातनसामर्थ्याच्च सकृदुपात्तोप्यङ्गीकृतसाधनभेदः संगृह्यते, तत्र यदा कर्त्तरि तदा तत्राभिहितत्वात्प्रथमैव भवति न तृतीया, यदा तु कर्मणि तदा कर्त्तुरनभिहितत्वात्तृतीया, कर्मणस्त्वभिहितत्वात्प्रथमा, यदा च कर्त्तरि क्तस्तदा कर्मणोनभिधानादध्यारूढशब्दयोगे यथा द्वितीया भवति अध्यारूढो द्रोणः खारीमिति, ग्रामङ्गत इतिवत् तथाधिकशब्देनापि योगे द्वितीयायां प्राप्तायां यस्मादधिकं तदस्मिन्नधिकमिति च निर्द्देशात्पञ्चमीसप्तम्यौ भवतः ॥

"अनुकाभिकाभीकः कमिता" ॥ सूत्रे समाहारद्वन्द्वे लिङ्गव्यत्ययः, अनुशब्दादभिशब्दाच्च ससाधनक्रियावचनात्स्वार्थे कन्निपात्यत-

इत्याह । 'अनुकामयते ऽनुक इति' । अभिकामयतइत्येतद्गम्यमानत्वान्नोक्तम् ॥

"पार्श्वेनान्विच्छति" ॥ 'अनृजुरुपायः पार्श्वमिति' । तिर्यगवस्थानात्पार्श्वं तावदनृजु तद्वदन्योऽप्यनृजुरुपाय एवमुच्यतइत्यर्थः, य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुना ऽन्विच्छति स पार्श्वकः, कुत्सितो मार्गः कुसृतिः, जालमानायः, ताभ्यां चरतीति कौसृतिको जालिकः ॥

"अयःशूलदण्डाजिनाभ्यां ठक्ठञौ" ॥ 'तृतीयासमर्थाभ्यामिति' । निर्देशादेव तृतीया हीयं न पञ्चमी पूर्वेण साहचर्यात् । 'तीक्ष्ण उपायो ऽयःशूलमिति' । यथायःशूलं तीक्ष्णं तथान्योपि तीक्ष्ण उपायोयःशूलमित्युपचारादुच्यतइत्यर्थः । 'दम्भो दण्डाजिनमिति' । दम्भसाधनत्वात्, दम्भवन्तो हि प्रायेण दण्डमजिनं च धारयन्ति । 'तेनेति' । दम्भेन दण्डाजिनं तु धारयतु मा वा ऽदीधरदित्यर्थः, सर्वत्र मुख्यार्थाग्रहणेऽनभिधानमेव हेतुः ॥

"तावतिथं ग्रहणमिति लुग्वा" ॥ यथा तस्यापत्यमित्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथा तावतिथमिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः । 'पूरणप्रत्ययस्य चेति' । न तु कनः लुग्वाग्रहणानर्थक्यप्रसङ्गात्, महाविभाषाधिकाराद्विकल्पेन कन उत्पत्तेः, पञ्चमं ग्रहणं पञ्चमकं ग्रहणमिति रूपद्वयस्य सिद्धत्वात्, तथा च वार्त्तिकं, तावतिथं ग्रहणमिति लुग्वचनानर्थक्यं विभाषाप्रकरणादिति, अतो लुग्वाग्रहणं कुर्वतः सूत्रकारस्य पूरणप्रत्ययस्य वा लुग्विधीयतइति पक्षो लक्ष्यते । 'द्वितीयेन रूपेण ग्रन्थं गृह्णातीति' । अत्र ग्रहणे द्वितीयस्य करणत्वं प्रदर्शयितुमिदं वाक्यं, वस्तुतस्तु द्वितीयं ग्रहणं देवदत्तस्येति विग्रहीतव्यम् । 'द्विकं ग्रहणमिति' । ग्रहीतर्यपि प्रत्ययो वक्ष्यते, तेन प्रकृत्युपाधिभूतस्य ग्रहणस्य नियमेनाप्रतीतेर्ग्रहणशब्दप्रयोगः, द्विकं रूपं देवदत्तस्येत्येव तु नोदाहृतं स्वच्छन्दतो हि वचसां प्रवृत्तिः । 'चतुष्क इति' । संनियोगशिष्टपरिभाषया डटि निवृत्ते थुकोपि निवृत्तिः, रेफस्य विसर्जनीयः, इदुदुपधस्येति षत्वम् । 'तावतिथेनेति' । स्वार्थे प्रत्ययो विधीयमानो ग्रहीतरि

न प्राप्नोतीति वचनम्। 'नित्यं च लुँकं वक्ष्यामीति'[1]। 'षट् इति'। रूपशब्दस्य वाक्ये प्रयुक्तस्यापि वृत्तौ गम्यमानत्वादप्रयोगः, पदत्वाज्जशत्वचर्त्त्वे, इह यः षष्ठेन रूपेण गृह्णाति षड्भिरसौ रूपैर्गृह्णाति, ततः किं, सङ्ख्यायास्तेन गृह्णातीत्येव वक्तव्यम्, एवं हि लुग्वेति न वक्तव्यं भवति, नैवं शक्यम्। एवं ह्युच्यमाने इहापि प्राप्नोति एकेन रूपेण गृह्णातीति, पूरणप्रत्ययस्त्वेकशब्दान्नास्ति तेन षष्ठ्यविषयमेव ग्रहणं विज्ञायतइति, तेनेह न भवति, द्वितीयो हस्तो ग्रहणो दण्डस्येति॥

"स एषां ग्रामणीः'॥ इह त्वत्को मत्को वा विजय इत्यादावनेन कन्, त्वं ग्रामणीरस्य त्वत्कः, अहं ग्रामणीरस्य मत्कः, प्रायेण त्विदमर्थमात्रे प्रयुज्यते॥

"शृङ्खलमस्य बन्धनं करभे"॥ ननु न शृङ्खलमात्रेण करभो बध्यते किं तर्हि रज्ज्वा कीलेन च, तस्माच्छृङ्खलमस्य बन्धनमिति न युक्तं वुक्तम्, एवं तु वक्तव्यं शृङ्खलवदस्य संबन्धनं करभे लुक्च मतोरिति, तत्राह। 'यद्यपीति'। अस्तु रज्ज्वादेरपि करणत्वं शृङ्खलस्यापि करणत्वमस्त्येव तदन्तरेण बन्धनस्यानिर्वृत्तेरित्यर्थः॥

"उत्क उन्मनाः"॥ 'उच्छब्दात्ससाधनक्रियावचनादिति'। साधनं मनः, क्रिया गमनम्, उद्गते मनसि वर्त्तमानादित्यर्थः। 'तद्गतीति'। उद्गतं मनो यस्य तस्मिन्नित्यर्थः। उत्सुक उत्कण्ठितः॥

"कालप्रयोजनाद्रोगे"॥ 'अर्थलभ्येति'। अर्थः सामर्थ्यं, तेन लभ्या, तत्र काले सप्तमी समर्थविभक्तिः, भवो हि तत्र प्रत्ययार्थः, प्रयोजने तृतीया, जनितो हि तत्र प्रत्ययार्थः। फले तु प्रयोजने प्रथमा, प्रयोजनं कारणं रोगस्य फलं चेत्युभयमपि प्रयोजयतीति प्रयोजनमुच्यते, यदि तर्हि कारणमपि प्रयोजनमुच्यते कालग्रहणमनर्थकं, कथं, योसौ द्वितीयेह्नि भवो ज्वरस्तस्य द्वितीयमप्यहः कारणम्, अहरन्तरे तदनुत्पत्तेः। सत्यं, सदपि कारणत्वं यदा न विवक्ष्यते तत्र भव इत्येव तु विवक्ष्यते तदापि यथा स्यादित्येवमर्थं कालग्रहणम्। 'द्वितीयेह्नि भव इति'। सामान्यशब्दस्यापि द्विती-

[1] मुद्रितमूलपुस्तके तु नित्यं च लुगिति पाठः।

यशब्दस्यार्थप्रकरणादिना वृत्तिविषये कालेपि वृत्तेः कालशब्दत्वं, किं पुनः कारणं साक्षात्कालवाचिभ्यो मासादिभ्यः प्रत्ययो न भवति द्वितीयादिभ्यश्च भवति, तत्रापि सप्तमीसमर्थेभ्यो भवार्थएव भवति कारणवाचिनस्तृतीया-समर्थात्फलवाचिनस्तु प्रथमासमर्थात्, नह्येतत्सर्वं सूत्राक्षरैरुपात्तं तत्राह । 'उत्तरसूत्रात्सञ्ज्ञाग्रहणमिहानुकृष्यतइति' । सिंहावलोकितन्यायेन, यथा सिंहा धावन्तः पृष्ठतोवलोकयन्ते, अपर आह । उत्तरसूत्रे योगविभागः, तदस्मिन्नन्नं प्राये, ततः सञ्ज्ञायां, यदेतदनुक्रान्तं तत्सञ्ज्ञायां द्रष्टव्य-मित्यर्थः, सञ्ज्ञाग्रहणमुभयोः शेषः, एतदेव चानुकर्षणं विवक्षितम् ॥

"तदस्मिन्नन्नं प्राये सञ्ज्ञायाम्" ॥ अन्नमभ्यवहार्यम्, अद्यते स्मेति कृत्वा, गुडामिश्रा अपूपा गुडापूपाः, कृसरस्तिलौदनः, तिलक्षोद इत्यन्ये, त्रिबिलोपूपस्त्रिपुटः, वटकेभ्य इनिरिति कनि प्राप्ते वचनं, ननु सञ्ज्ञा-ग्रहणात्कन्न भविष्यति तस्मिँश्चासति मत्वर्थीय इनिर्भविष्यति, न सिद्ध्यति, सप्तम्यां च न तौ स्मृताविति वचनात् ॥

"कुल्माषादञ्" ॥ कुल्माषा मुद्गाः ॥

"श्रोत्रियंश्छन्दोधीते" ॥ 'वाक्यार्थ इति' । वाक्यार्थग्रहणेन तदाश्रयश्छन्दोध्यायी पुरुष उपचारादुच्यते, कुतः, मुख्यो हि वाक्यार्थः क्रियारूपः संबन्धरूपो वा स चासत्त्वभूतः, श्रोत्रियशब्दस्तु सत्त्वभूता-र्थाभिधायी, तस्मिन्वाक्यार्थे ऽविद्यमानप्रकृतिप्रत्ययविभागः श्रोत्रिय-शब्दो निपात्यतइत्यर्थः, अथ कथमस्मिन्पक्षे स्वरसिद्धिः, यावता नकार इद्यस्य तत्र परतः स्वरो विधीयते, न चात्रैवं व्यपवर्गोस्ति, मा भूद्व्य-पवर्गो नित्करणसामर्थ्यात्तदभावेपि भविष्यति, यद्वा नितीति कर्मधार-योयं नश्चासाविच्च नित्, तत्र परत इति । 'कथमित्यादि' । छन्दसः श्रोत्रभावो घन् च प्रत्ययः, छान्दस इति न सिद्ध्यति, घना ऽणो बाधित-त्वात् श्रोत्रभावेन च छन्दःशब्दस्य निवर्तितत्वादिति प्रश्नः । 'वाग्र-हणमनुवर्ततइति' । अपर आह । यश्छन्दोधीते तदर्थं चानुतिष्ठति तत्र श्रोत्रियशब्दः, अध्येतृमात्रे तु छान्दसशब्द इत्यर्थभेदान्नास्ति बाध्य-बाधकत्वमिति । एकां शाखामधीत्य श्रोत्रियो भवतीति धर्मशास्त्रम् ॥

"आद्धमनेन भुक्तमिनिठनौ" ॥ 'आद्धशब्दः कर्मनामधेयमिति'। श्रद्धया निष्पाद्यस्य पित्र्यस्य कर्मणः आद्धशब्दः सञ्ज्ञा, श्रद्धास्मिन्नस्तीति प्रज्ञाश्रद्धार्चावृत्तिभ्यो ण इति णः। 'तत्साधने द्रव्यइति'। मुख्य-आद्धस्य भोजनासम्भवात्। 'समानकालग्रहणमिति'। भुजिना समाने काले प्रत्ययान्तस्य प्रयोगो यथा स्यात्, यद्यपि भुजिक्रिया कतिपयक्षणसाध्या तथापि यावन्तं कालं तदाशिनस्तृप्तिशेषस्तल्लिङ्गं चानुवर्त्तते तावत्समानकालः, स च प्रायोवृत्त्या ऽद्यतन एवेति तस्मिन्नेव प्रत्ययान्तस्य प्रयोगः, यदा तु कस्य चिद्दुर्बलस्य द्वितीयेऽप्यह्नि भुक्तमपरिणतं तदा प्रयोगाभावः। तदिदमाह। 'अद्य भुक्ते श्वः आद्धिक इति प्रयोगो मा भूदिति'॥

"पूर्वादिनिः" ॥ 'पूर्वं गतमनेनेत्यादि'। क्रियाविशेषणाद् द्वितीयान्तात्प्रत्ययः ॥

"सपूर्वाच्च" ॥ 'विद्यमानं पूर्वमस्मिन्निति सपूर्वमिति'। तेन सहेति तुल्ययोगइत्युपाधिवचनस्य प्रायिकत्वाद्विद्यमानवचनस्यापि समासः, पूर्वशब्दोवयववचनः, न च शब्दान्तरं पूर्वशब्दस्यावयव उपपद्यते, पकारस्त्वव्यभिचारी तेन प्रातिपदिकस्यैतद्विशेषणं सपूर्वं यत्प्रातिपदिकमिति, एवं च पूर्वशब्दोपि तस्यैव विशेषणं, विशेषणेन च तदन्तविधिरित्याह। 'तस्य पूर्वशब्देन तदन्तविधिरिति'। 'सपूर्वादित्यादि'। यद्यपि पूर्वशब्दान्तं प्रातिपदिकं सपूर्वमेव तथापि असति सपूर्वग्रहणे तदन्तविधिर्न लभ्यतइति सपूर्वादित्युक्तम्। 'कृतपूर्वी कटमिति'। कर्तृकर्मणोः कृतीत्यत्रायं प्रयोग उपपादितः। 'योगद्वयेनेत्यादि'। यदि व्यपदेशिवद्भावोप्रातिपदिकेनेत्येषा परिभाषा न स्यात् पूर्वादिनिः सपूर्वादित्येकमेव योगं कुर्यात्, व्यपदेशिवद्भावात्केवलादपि भविष्यति किं योगद्वयकरणेन, अत्र चकारः कर्त्तव्यो न भवति, यदि च ग्रहणवता प्रातिपदिकेनेत्येषा परिभाषा न स्यात्पूर्वादिनिरित्येतावदेव ब्रूयात् तदन्तविधिना सपूर्वादपि भविष्यतीति किं द्वितीयेन योगेन, तदिह योगद्वयेन परिभाषाद्वयं ज्ञाप्यते ॥

"छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि" ॥ अत्र पर्यवस्था-

पृशब्दात्स्वार्थे इनिप्रत्ययोवस्यानृशब्दस्य च पन्थि परि इत्येतावादेशौ निपात्येते, भाषायां तु परिपन्थिशब्दस्यासाधुः प्रयोगः ॥

"अनुपद्यन्वेष्टा" ॥ पदस्य पश्चादनुपदं, पश्चादर्थेऽव्ययीभावः, अन्वेष्टरीनिप्रत्ययो निपात्यते । 'अनुपदी गवामिति'। पदापेक्षया षष्ठी, गोपदस्य पश्चादन्वेषणं गवामेव हिरण्यादावन्वेष्ये न भवति, पदाभावात्, यदि त्वन्वेष्टशब्दात्स्वार्थे इनिप्रत्ययः एष्टृशब्दस्य च पदशब्द आदेशो निपात्येत, यदि वा श्रोत्रियवद्विद्यमानप्रकृतिप्रत्यमन्वेष्टरि निपात्येत ततो गवामिति षष्ठी न प्राप्नोति, कृतपूर्वी कटम् अनुको भार्यामभिको दासीमितिवत् द्वितीया प्राप्नोति, हिरण्यादौ चान्वेष्ये ऽनुपदी हिरण्यमिति, तस्माद्यथोक्तमेव साधीयः ॥

"साक्षाद् द्रष्टरि संज्ञायाम्" ॥ 'साक्षाच्छब्दोऽव्ययमिति'। तेन प्रकृतिवदनुकरणं भवतीति सूत्रे पञ्चम्या अलुक्, उदाहरणे चाव्ययानां भमात्रइति टिलोप इति भावः। 'संज्ञाग्रहणादित्यादि'। त्रिभिः साक्षाद् दृष्टं भवति यश्च ददाति यस्मै च दीयते यश्च पार्श्वे स्थितः पश्यति, तत्र सर्वत्र प्रत्ययः प्राप्नोति, संज्ञाग्रहणादुत्तमर्णाधमर्णयोर्न भवतीत्यर्थः ॥

"क्षेत्रियच् परक्षेत्रे चिकित्स्यः" ॥ क्षि निवासगत्योरित्यस्माद्यथायोगमधिकरणादौ ष्ट्रन् क्षेत्रम् । 'परक्षेत्रं जन्मान्तरशरीरमिति'। आत्मनो निवासस्थानत्वात्क्षेत्रं, परं च तत्क्षेत्रं चेति कर्मधारयः, तत्र चिकित्स्यः प्रतिकार्योऽपनेय इत्यर्थो न तु तत्र भिषजितव्य इति । यदाह । 'नामृतस्येति'। 'अथ वेति'। समुच्चय एवात्र विवक्षितो न तु विकल्पः । वक्ष्यति सर्वं चैतत्प्रमाणमिति, अत्र परस्य क्षेत्रमिति षष्ठीसमासः, एवमुत्तरयोः । 'चिकित्स्य इति'। कृत्यः शक्यार्थे, पूर्वत्र तु कर्ममात्रे, उत्तरयोरर्हार्थे । 'सस्यार्थइति'। अनेन क्षेत्रस्य परकीयत्वमाह । 'परदाराः परक्षेत्रमिति'। कर्मणि ष्ट्रन्, क्षेतव्याः गन्तव्याः, उपगमनार्हा दाराः क्षेत्रम् । 'तत्रेति'। तस्मिन्विषये । 'निगृहीतव्यइति'। दण्डादिना ॥

"इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा"॥ 'अन्तोदात्त इति'। इन्द्रियजित्येतत्साहचर्यात्। 'रूढिरेवेति'। किमत्र प्रमाणमित्याह। 'तथा चेति'। नहि यौगिकेषु व्युत्पत्तेरनियमो भवति। 'इन्द्र आत्मेति'। कार्यकारणसङ्घातं प्रतीश्वरत्वात्, विज्ञायते च तमिन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेणेति। 'करणेनेति'। हेतुगर्भविशेषणं, यथा पुनरयं हेतुस्तथा दर्शयति। 'नाकर्तृकमिति'। इतिकरणो हेतौ, न हि वाश्यादिकरणमनधिष्ठितं कर्त्रा प्रवर्तते। 'इन्द्रेण दृष्टमिति'। दृष्टं ज्ञातं, तथा च कार्यकारणसंघातं प्रस्तुत्य भवति वादः स एतमेव पुरुषं ब्रह्मततमपश्यदिदमदर्शमित्यादि, कथं पुनश्चक्षुरादिकमात्मना सृष्ट-मित्याह। 'तत्कृतेनेति' शुभं कर्म विहितं, प्रतिषिद्धमशुभं, तदुभयं मिलितं कारणानामुत्पादकम्, इष्टानिष्टानां रूपादीनां चक्षुरादिभिरुपलम्भात्। 'यथायथमिति'। यो यस्य विषयः, चक्षुषो रूपं, घ्राणस्य गन्ध इत्यादि, तद्ग्रहणायेत्यर्थः। 'अन्यथापि कर्त्तव्येति'। तद्यथा इन्द्रेण दुर्जय-मिति। 'प्रत्येकमभिसंबध्यमान इति'। हेतुगर्भं विशेषणं, यस्मात्प्रत्येक-मभिसंबध्यते तस्मादित्यर्थः॥

"तदस्यास्त्यस्मिन्निति मतुप्"॥ 'अस्यास्मिन्निति'। 'प्रत्ययार्थाविति'। ननु च यद्यस्य भवति तस्मिन्नपि तद्भवति, यच्च यस्मिन् भवति तस्यापि तद्भवति, यथा वृक्षस्य शाखा वृक्षे शाखेति, तत्रान्यतरनिर्देशेनैव सिद्धं किमर्थमुभावर्थौ निर्दिश्येते, नैतयोरवश्यम्भावी समावेशः, तथा हि। षष्ठ्यर्थमात्रनिर्देशे यत्राधिकरणं तेनैव रूपेण विवक्ष्यते न तज्जन्यः शेषसंबन्धः, यथा वृक्षा अस्मिन्पर्वते सन्तीति न तत्र प्रत्ययः स्यात्, नह्यत्र क्रियाकारकपूर्वकः शेषसंबन्धो दृश्यते वृक्षैः पर्वतस्यानारम्भात्, नावयवावयविभावः, आनन्तर्यादिसंबन्धस्तु सम्भवति, न तु तत्र मत्वर्थीयो भवत्यनभिधानात्, तथा केवलसप्तम्यर्थनिर्देशे कारकान्तरपूर्वः संबन्धो न गृहीतः स्यात् ततश्च पुत्रवान्, गोमानित्यादौ न स्यात्, उत्पादनप्रतिग्रहादिक्रियाविषयकर्तृत्वजन्योह्यत्र संबन्धो नाधारपूर्वकः, देशान्तरगतेपि पुत्रादौ तद्वानिति व्यपदेशस्य भावात्, सामीपिकस्याप्यधिकरण-

स्यासम्भवः। स्यादेतत्। पुत्रस्य पित्रधीनत्वाद्गवां च स्वाम्यधीनत्वाद्गुरौ वसतीतिवदधिकरणं भविष्यति, करणसंज्ञायां हि तमब्ग्रहणेन कारकप्रकरणे प्रकर्षस्यानाश्रयणाद्गौणस्याप्याधारस्याधिकरणसंज्ञा भवत्येवेति, भवत्वेवमधिकरणसंज्ञा मत्वर्थीयस्तु मुख्यएवाधिकरणे स्यात्, वृक्षवान्पर्वतो गोमाञ्जनपद इत्यादौ, न गौणे पुत्रवान् गोमान्देवदत्त इत्यादौ, न ह्यत्र गौणग्रहणस्य लिङ्गमस्ति, तस्मादुभयोरपि निर्देशः कर्तव्यः। 'अस्तीति प्रकृतिविशेषणमिति'। अर्थद्वारेणेति द्रष्टव्यम्। ननु सम्भवे व्यभिचारे च विशेषणविशेष्यभावो भवति नीलोत्पलवत्, न च सत्तां पदार्थो व्यभिचरति तामन्तरेण पदस्योच्चारयितुमप्यशक्यत्वात्। तथाहि। यावद्बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावस्तेन बुद्धिसत्तासमाविष्टमर्थं शब्दो गोचरयति, तस्यैव बहिस्सत्त्वासत्त्वप्रतिपादनाय वृक्षोऽस्ति वृक्षो नास्तीति प्रयोगः, यदि बाह्यसत्तासमाविष्टं वस्तु वाच्यं भवेत् तदा विरोधपौनरुक्त्याभ्यां प्रयोगो न भवेदयम्, एवमेवात्यन्तासतोपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य तद्वाचिशब्दप्रयोगः, तस्माद्बुद्ध्युपारूढोपचरिता सत्ता शब्दप्रयोगस्य निमित्तमिति न तां पदार्थो व्यभिचरति, तदुक्तं न सत्तां पदार्थो व्यभिचरतीति, कस्य चित्पदस्यार्थः सत्त्वेवं विधां सत्तां न व्यभिचरतीत्यर्थः, इदन्तर्हि प्रयोजनं या सम्प्रति सत्ता मुख्या वर्तमानलक्षणा बाह्या तस्यां यथा स्याद् भूतभविष्यतोर्या सत्तातीतानागतवस्तुपरामर्शिन्या बुद्ध्योत्प्रेक्षितोपचरितरूपा तस्यां मा भूत्, तेन गावोस्यासन् गावोस्य भवितार इत्यत्रार्थे गोमानिति प्रयोगाभावः। यद्येवं विद्यमानएव देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय गोमानासीत् गोमान्भवितेति प्रयुज्यते तत्र प्रकृत्यर्थस्य सम्प्रति सत्ताया अभावात्प्रत्ययाप्रसङ्गः, नैष दोषः। नात्र साक्षाद्गवां सत्ता कथ्यते किं तर्हि गोमत एषा सत्ता कथ्यते, यदि पुनर्गवां सत्ता कथ्येत यथेहास्तेः प्रयोगो न भवति गावोस्य सन्ति गोमानिति प्रत्ययेनैव प्रकृत्यर्थोपाधेः प्रतीतत्वात् तथेहापि न स्यात् गोमानासीद्गोमान्भवितेति, सत्यपि वा प्रयोगे यथेह बहुवचनं भवति गावो-

स्यासन् गावोस्य भवितार इति एवमिहापि स्याद्गोमानासीद्गोमान्भवितेति, तस्मान्नैषा गवां सत्ता कथ्यते किं तर्हि गोमत्सत्तैषा कथ्यते, तत्र यद्यपि यो गोमान्स विद्यते गोमत्ताख्यं तु तस्यातीतमनागतं वेति भूतभविष्यत्प्रयोगः, यथेश्वरोयमासीद्दरिद्रोयं भविष्यतीति तत्रार्थात्प्रकृत्यर्थस्याप्यतीतानागतत्वप्रतीतिर्भवति सा वाक्यार्थवशादुपजायमाना बहिरङ्गेति नान्तरङ्गं शब्दसंस्कारं निवर्तयति यथा ग्रामं न गच्छतीति तदेवं सम्प्रति सत्तायां यथा स्याद्भूतभविष्यत्सत्तायां मा भूदित्येवमर्थमस्तीत्युच्यतइति स्थितम्। ननु च यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तिर्भवतिपरः प्रथमपुरुषोऽप्रयुज्यमानोपि गम्यते ततश्च गावोस्य गावोस्मिंचित्युक्ते किमित्यपेक्षायां सन्तीति गंस्यते नार्थोऽस्तिग्रहणेन, न सार्वत्रिकमेतत्। यदा खलु गावोस्य नान्यस्य गावोस्मिन्नान्यस्मिंचित्येवं विवक्षा न तदास्तित्वं प्रतीयते, तस्मादस्तीति वक्तव्यम्। अथ क्रियमाणेप्यस्तिग्रहणे इह कस्मान्न भवति गावोस्य सन्त्यनन्तरा इति, सापेक्षत्वेनासामर्थ्यात्, इह कस्मान्न भवति चित्रगुः शबलगुरिति, बहुव्रीहिणोक्तत्वात्, वाक्ये तु चित्रा गावोस्य सन्तीति प्रत्येकमसामर्थ्यान्न भवति, समुदायास्त्वप्रातिपदिकत्वात्, इह तु पञ्च गावोस्य सन्ति पञ्चगुः दशगुरिति तद्धितार्थइति द्विगुश्च प्राप्नोति बहुव्रीहिश्च तत्र चित्रगुरित्यादौ सावकाशं बहुव्रीहिं संख्यावाचिषु द्विगुर्बाधेत ततश्च तद्धितार्थे विषयभूते विहितेन द्विगुना ऽनुक्तस्तद्धितार्थ इति यथेह तद्धितो भवति द्वैमातुरः पाञ्चनापितिरिति, द्विगोर्लुगनपत्य इति लुगपि प्राग्दीव्यतीयस्य विधीयते तेन मतुपो लुगलभ्यः, तस्मात्तद्धितार्थइत्यत्र यदुक्तं सर्वत्र मत्वर्थे प्रतिषेध इति तदेवात्र शरणम्। 'भूमेत्यादि'। अस्तिविवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयभूतेषु भवन्तीत्यर्थः। बहूनां भावो भूमा, तत्र भूम्नि गोमान् यवमान् बहुत्वं चाभिधानवशाद्विशिष्टमेवाश्रयणीयं, यदाह, यावतीभिः खल्वपि गोभिर्वाहदोहप्रसवाः कल्पन्ते तावतीषु सत्ता कथ्यते कस्य चिच्चतसृभिरपि कल्पन्ते कस्य चिच्छतेनापि न कल्पन्तइति, एवं च यवमानिति त्रिप्रभृतिषु बहुत्वसद्भावेपि न भवति, इह यवमतीभिर्द्भिर्यूपं

प्रोच्यतीति जातिमात्रसंबन्धो विवक्षित इति भूमाभावेपि भवति, भूमादिग्रहणं त्वभिधानस्वभावप्रदर्शनार्थं, निन्दायां ककुदावर्तिनी कन्या, प्रशंसायां रूपवान्, नित्ययोगे क्षीरिणो वृक्षाः, अतिशायने उदरिणी कन्या, संसर्गे संसर्गः संयोगः दण्डी संसक्तदण्ड उच्यते, गृहावस्थिते तु दण्डे दण्डीति न भवति, क्वचिद्वृत्तौ ग्रन्थः 'अस्तिविवक्षायामस्तिमानिति' तत्र भूमादिष्वस्तिविवक्षायां च भवन्ति मतुबादय इति समुच्चयो व्याख्येयः, अस्तिशब्दो विभक्तिप्रतिरूपको निपातः कर्तृविशिष्टसत्तावाची, नैवास्तेर्लट्, प्रत्ययान्तरमपि दृश्यते अस्तित्वमस्तितेति, अव्यभिचारादस्तिसामानाधिकरण्यं नास्तीत्यस्तिविवक्षायां प्रत्ययो विधीयते, एतच्च सूत्रे ऽस्तीति तन्त्रेण लुप्तपञ्चमीकप्रकृतिनिर्देशाश्रयणाल्लभ्यते, अस्तिमानिति च वृत्तिविषये कर्तृविशेषे धनेऽस्तिशब्दो वर्तते, नहि कर्तृसामान्येन प्रत्ययार्थस्य विशेषणं संभवति, सर्वस्यैव हि सर्वदा यत्किञ्चिदस्ति। 'गुणवचनेभ्य इति'। अत्र शुक्लादय एवाभिव्यक्तरूपा गुणे तद्वति च वर्तमाना गृह्यन्ते न तु सर्वदा गुणमात्रवचना रूपादयः, तत्र यद्यप्यभेदोपचारादेव शुक्लः पट इत्यादिसिद्धिस्तथापि पटस्य शुक्ल इति भेदविवक्षाया अपि दर्शनात्पक्षे मतुप उत्पन्नस्य श्रवणप्रसङ्गाल्लुग्वक्तव्य इति॥

"रसादिभ्यश्च॥ 'न पूर्वेणैवेति'। नशब्दस्य काक्वा प्रयोगात्सिद्ध एवेत्यर्थः, नन्वर्थे वा नशब्दो द्रष्टव्यः। 'अन्ये इति'। अत इनिठनावित्यादयः। 'कथमिति'। अन्यनिवृत्त्यर्थं पुनर्वचने रूपिणीत्यादि न सिद्ध्यतीति भावः। 'प्रायिकमिति'। प्रयोगबाहुल्याबाहुल्येनास्यान्यनिवृत्तिः प्रयोजनमित्यर्थः। ततः किमित्याह। 'क्वचिदिति'। कथं पुनः प्रायिकत्वमित्याह। 'इतिकरण इति'। तेन यत्र मतुबन्तादेव लोकस्य विवक्षा भवति तत्रैवानेनान्यनिवृत्तिः क्रियते न सर्वत्रेत्ययमर्थो भवति, एतच्च गुणादिति गणपाठमनपेक्ष्योक्तं तदपेक्षायां त्वाह। 'अथ वेति'। अत्र गणे गुणादिति पठ्यते तच्च रसादीनां सर्वेषां प्रत्येकं विशेषणं न स्वतन्त्रं नाप्येकाच इत्यनेन समानाधिकरणम्। 'तेन ये रसनेन्द्रियादिग्राह्या गुणा इति'। आदिशब्देन चक्षुरादिपरिग्रहः। 'तेषामेवायं

पाठ इति'। तेभ्य एवानेनान्यनिवृत्तिः क्रियते। 'रूपिणी रूपिकः शोभायोग इति'। ननु शोभापि गुणस्तथा भावः सत्यं, गुणादिति विशेषणसामर्थ्यात्प्रसिद्धतराणां रसनादीन्द्रियग्राह्याणां गुणानां पाठः। 'भावयोग इति'। भावा रतिहासादयो नाट्यधर्माः, भाष्ये तूर्वशी वै रूपिण्यप्सरसां स्पर्शिको वायुरिति दर्शनाद्यथाभिधानं प्रत्ययान्तरमपि भवति तेन नियमस्यानिष्टत्वात्सूत्रमिदं प्रत्याख्यातम्, एकाच इत्यत्र गुणादिति नापेक्ष्यते स्ववान् खवान् ॥

"प्राणिस्थादातो लजन्यतरस्याम्"॥ 'चूडाल इति'। चूडा शिखा न त्वापीडाख्योलङ्कारः, एवं कर्णिकापि न कर्णालङ्कारः किं तर्हि तत्सदृशः प्राण्यङ्गविशेषः। प्राण्यङ्गादेव हीष्यते। 'शिखावान्दीप इति'। प्रत्युदाहरणदिगियं दर्शिता, शिखाशब्दस्य व्रीह्यादिपाठाल्लचोप्रसङ्गात्, चूडावान्वृत्त इति प्रत्युदाहार्यम्। 'प्राण्यङ्गादिति वक्तव्यमिति'। एतच्चेतिकरणानुवृत्तेर्लभ्यते। 'चूडालोसीति'। असीत्यस्य तिङ्ङतिङ इति निघातः, चूडालशब्दात्सुः, रुत्वम्, अतो रोरप्लुतादप्लुतइत्युकारः, स च हलां स्वसनधर्मत्वादनुदात्तः, पूर्वेणाद्गुणः, एकादेश उदात्तेनोदात्तः, तत एङः पदान्तादतीति पूर्वरूपत्वमेकादेशः, तस्य स्वरितो वानुदात्ते पदादाविति स्वरितः प्राप्नोति, चित्करणसामर्थ्याच्च भवति, यद्येवं चूडालग्रामन्त्रिताद्युदात्तत्वे शेषनिघातो न स्यात्, हे चूडाल आमन्त्रितनिघातो न स्यात्, चूडालत्वमित्यादौ च प्रत्ययस्वरे शेषनिघातः, यदीष्यते वक्तव्योत्र परिहारः, अथ नेष्यते प्रयोजनमेवैतच्चित्स्वरस्य भविष्यति ॥

"सिध्मादिभ्यश्च"॥ 'अन्यतरस्यांग्रहणेन मतुप्समुच्चीयतइति'। अनेकार्थत्वान्निपातानामन्यतरस्यांग्रहणमिह समुच्चये वर्त्ततइत्यर्थः, तथा च वार्त्तिकं लजन्यतरस्यामिति समुच्चयइति। 'न तु प्रत्ययो विकल्प्यतइति'। यथान्यत्रान्यतरस्यांग्रहणं विकल्पार्थं न तथात्रेत्यर्थः, किमेवं सति सिद्धं भवति तत्राह। 'तस्मादिति'। विकल्पार्थेन्यतरस्यांग्रहणे लचा मुक्ते यथाप्राप्तमेव स्यात् ततश्चाकारान्तेभ्य इनिठनौ स्यातां समुच्चयार्थे

प्रकृतौ मतुबेव समुच्चीयतइति न दोषः, कथं पुनर्ज्ञायते समुच्चयोऽत्रार्थो न विकल्पोऽर्थ इति, ज्ञापकात्, यदयं पिच्छादींस्तुन्दादींश्च पृथक् पठति, कथं कृत्वा ज्ञापकम्, इह तुन्दादिभ्य इलच्चेति चत्वारः प्रत्यया इष्यन्ते इलच् इनिठनौ मतुबिति, तत्र यद्यन्यतरस्यांग्रहणं विकल्पार्थं स्यात्पिच्छादिभ्योऽपि प्रत्ययचतुष्टयं स्यात्, कथम्, इलचो विकल्पितत्वादिनिठनौ तयोरपि विकल्पितत्वान्मतुबिति ततश्च तुन्दादिष्वेव पिच्छादयः पाठ्याः पिच्छादिषु वा तुन्दादयः, पृथक्पाठाद्विज्ञायते ऽन्यतरस्यांग्रहणेन मतुप्समुच्चीयते न यथाप्राप्तमभ्यनुज्ञायतइति, एवं हि पिच्छादिभ्यः प्रत्ययद्वयम् इलच्च मतुप् च, तुन्दादिभ्यश्चत्वार इति पृथक्पाठोऽर्थवान्भवति । ननु च तुन्दादिभ्यो ऽनकारान्तेभ्योऽपीनिठनाविष्येते पिच्छादिभ्यस्त्वकारान्तेभ्य एव, तत्र यदि तुन्दादिषु पिच्छादयः पठ्येरन् तदा पिच्छादिभ्योऽप्यनकारान्तेभ्य इनिठनौ स्याताम्, अथ पिच्छादिषु तुन्दादयः पठ्येरन् तदा तुन्दादिभ्योऽप्यनकारान्तेभ्य इनिठनौ न स्याताम्, यत्तर्हि कानि चिदकारान्तानि पिच्छादिषु पठति कानि चित्तुन्दादिषु तद्यथोक्तस्यार्थस्य ज्ञापकं भविष्यति, तथा केशाद्वोऽन्यतरस्यामिति न वक्तव्यं प्रकृतान्यतरस्यांग्रहणानुवृत्त्या इनठन्मतुपां सिद्धत्वात्, तदिनिठनोः प्राप्त्यर्थं क्रियमाणं पूर्वस्यान्यतरस्यांग्रहणस्य समुच्चयार्थत्वं ज्ञापयति। 'पार्ष्णिधमन्योर्दीर्घश्चेति'। पार्ष्णीलः धमनीलः। 'वातदन्तबलललाटानामूङ् चेति'। वातादिभ्यो लज् भवति तस्य च लच ऊङागमो भवति वातूलः दन्तूलः बलूलः ललाटूलः। 'जटाघटाकलाः क्षेप इति'। एते शब्दाः क्षेपे गम्यमाने लचमुत्पादयन्ति । जटाल इत्यादि । क्षेप इति किं, जटावांस्तापसः । 'क्षुद्रजन्तूपतापयोश्चेति'। क्षुद्रजन्तुरानकुलात्, उपतापो रोगः, । 'विपादिकाल इति'। पादस्फोटो विपादिका, सिध्मगडुशब्दयोरनुपतापार्थः पाठः ॥

"वत्सांसाभ्यां कामबले" ॥ 'कामवति बलवति चेति'। मत्वन्तनिर्देशेन कामबलशब्दयोरर्शआद्यच्प्रत्ययान्ततां दर्शयति । ननु च वत्सांसशब्दौ वयोविशेषे प्राण्यङ्गविशेषे च रूढौ न कामबलयोस्तत्कथं ता-

भ्यां लजन्ताभ्यां कामवान् बलवांश्चोच्यतइत्यत आह । 'वृत्तिविषयइति'। कुत एतज्ज्ञायतइत्याह । 'नह्यत्रेति' । वाक्ये योनयोः प्रसिद्धोर्थः स वृत्तौ नास्तीत्यर्थः । यस्त्वस्ति तं दर्शयति । 'वत्सलइति'। 'स्नेहवानुच्यतइति' । स्नेहो रागः कामः । सर्वत्रैवात्र प्रकरणे मतुप्समुच्चीयतइत्यत्रापि मतुपा भवितव्यमिति शङ्कामपनयति । 'न चेति' । अनेनैव हेतुना वाक्यमपि न भवति, अत्र वत्सांसशब्दौ द्वौ, अस्यास्मिन्निति च प्रत्ययार्थावपि द्वावेव, तथापि यथासंख्यं न भवति, कथम्, अजाद्यदन्तं लघ्वक्षरं पूर्वं निपततीत्यंसबलशब्दयोः पूर्वनिपाते प्राप्ते परनिपातलक्षणव्यभिचारचिह्नात् । एवं सर्वत्रैवात्र प्रकरणे द्रष्टव्यम् ॥

"लोमादिपामादिपिच्छादिभ्यश्शनेलचः" ॥ 'अङ्ग कल्याणइति'। अङ्ग इत्येतत्कल्याणविशिष्टेर्थे वर्त्तमानं प्रत्ययमुत्पादयति, कल्याणान्यङ्गान्यस्या अङ्गना, स्त्रिया एवाभिधानं, कल्याणइति किम्, अङ्गवती । 'शाकीपलालीदद्रवां ह्रस्वत्वं चेति' । शाक्यादीनां नप्रत्ययो भवति ह्रस्वत्वं च, शाकिनं, पलालिनं, महच्छाकं शाकी, नानाजातीय एकसमाहारो वा, पलालक्षोदः, पलाली, भिद्यानि वा शालिकोद्रवादिपललानि । दरिद्रातेर्यालोपश्चेति दरिद्रातेर्लकारः प्रत्ययो भवति रिकाराकारयोश्च लोपः । दद्रूः, त्वग्रोगविशेषः, स यस्यास्ति स दद्रुणः । 'विष्वगिति' । विष्वक्शब्दाणप्रत्ययो भवति उत्तरपदलोपश्च स चाकृतसन्धेरकृतसन्धिकार्यस्य, अकृतयणादेशस्येत्यर्थः, विषु नाना अञ्चन्तीति विष्वञ्चि,तान्यस्य सन्तीति विषुणः, विषुवदाख्यः कालस्तस्य हि नानागतीनि दिनानी सन्ति, तदाश्रयत्वाद्दिवसान्तराणां न्यूनाधिकभावस्य, तथा मृत्युर्वायुरनवस्थितप्रकृतिर्मनुष्यादिश्च विषुणस्तत्र वृत्तिविषये गमनक्रियान्तर्भावाद्विष्वग्गमनमस्यास्तीत्येवं वाक्यादेरभिधानमिच्छन्ति, यदि तु कृते यणादेशे उत्तरपदलोपः स्याद् वलि लोपे सति विष्ण इति प्राप्नोति । 'लक्ष्म्या अच्चेति'। लक्ष्मीशब्दाणप्रत्ययो भवति अकारश्चान्तादेशः, लक्ष्मीरस्यास्ति लक्ष्मणः। 'जटाघटाकलाः, क्षेपइति' । जटादयः क्षेपे गम्यमाने इलचमुत्पादयन्ति, जटिलः, घटिलः, कलिलः, क्षेपादन्यत्र जटावान् ॥

"प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः" ॥ सूत्रे वृत्तिशब्दो वार्तिके दर्शनात्प्रक्षिप्तः । वृत्तिर्विच्छेदप्रतिविधानादि, प्रज्ञाग्रहणं किमर्थं, प्राज्ञ इत्येतद्रूपं यथा स्यात्, प्रज्ञादिभ्यश्चेत्यणि कृते सिद्धमेतत्, प्रज्ञ एव प्राज्ञः, यस्य हि प्रज्ञास्ति स प्रजानाति । सत्यं, स्त्रियां त्वणि ङीब् भवति, प्राज्ञी, अस्मिंस्तु णे टाबेव भवति,प्राज्ञा । इह तु गुणभूतया क्रियया व्याकरणादीनां संबन्धे णाणोरुभयोरपि व्याकरणं प्राज्ञ इति भवति, यथा कृतपूर्वी कटमिति तद्धितप्रयोगे हि षष्ठी न भवतीत्युक्तम् ॥

"तपस्सहस्राभ्यां विनीनी" विनीन्योरिकारो नकारस्येत्संज्ञा मा भूदिति । केचित्तु विनीनाविति‌ईकाराकारौ पठन्ति, नकारान्तपाठे त्वित्संज्ञा प्राप्नोति । 'प्रत्ययार्थयोस्त्वित्यादि' । यथा त्वनिष्यमाणमपि यथासंख्यं न भवति तथा पूर्वमेवोक्तम् । 'असन्तत्वादित्यादि' । तपःशब्दादस्मायामेधेत्यादिना विनिप्रत्यये सिद्धे सहस्रशब्दादपि अत इनिठनाविती‌निप्रत्यये सिद्धे यत्पुनरिदं विधानं तद्वक्ष्यमाणेनाणा बाधा मा भूदित्येवमर्थम् । 'अणेति' । हेतौ तृतीया, कर्तरि तु कृद्योगलक्षणा षष्ठी न प्राप्नोति, उभयप्राप्तौ कर्मण्येवेति नियमात्तृतीया भविष्यति, विनीन्योर्बाधा मा भूदिति कर्मणोपि गम्यमानत्वात्, यथा येनादर्शनमिच्छतीति । नैतदस्ति । अकाकारयोः प्रयोगे नियमस्य प्रतिषेधात्, तस्माद्धेतावेव तृतीया, घञन्तो वा बाधशब्दः पठनीयः । 'सहस्रशब्दाट्ठनपि बाध्यत इति' । बाधा तु ठन इनणोः प्रतिपदविधानात् ॥

"अण् च" ॥ 'अणप्रकरणइत्यादि' । प्रकरणं प्रस्तावः काण्डं वा । ज्योत्स्नादिराकृतिगणः । न तु ज्योत्स्नातमिस्रेत्यादिसूत्रे पठितानां ग्रहणम् । 'ज्यौत्स्नः पक्ष इति' । स पुनः पूर्वः पक्षः, तत्र हि पञ्चदशस्वपि तिथिषु ज्योत्स्ना भवतीति कृत्स्नः पक्षो ज्योत्स्नया व्याप्यते, एतेन तामिस्रो व्याख्यातः, तमःसमूहस्तामिस्रं मत्वर्थीयो रस्तत्र ह्यवयवभूतानि तमांसि विद्यन्ते तद्यस्मिन्नस्ति स तामिस्रोपरः पक्षः, तमिस्रा रात्रिर्यस्मिन्निवक्ष्यतरति वा तामिस्रः, नरकविशेषस्यैषा संज्ञा, कुण्डलार्हः कौण्डलस्तत्र

यथाकथञ्चिन्मत्वर्थीय उपपाद्यः, यस्तु संसक्तकुण्डलः स कुण्डली भवति, अयं च नियम इतिकरणानुवृत्तेर्लभ्यते ॥

"सिकताशर्कराभ्यां च" ॥ 'शार्करं मध्विति'। शर्करा माधुर्यं न तु गुडः, मधुनि तस्याभावात् । 'अदेश इहोदाहरणमिति'। देशे विशेषस्य वक्ष्यमाणत्वात् ॥

"देशे लुबिलचौ च" ॥ 'मतुप् चेति'। अन्यतरस्यांग्रहणेन मतुपः सर्वत्र समुच्चयात् । 'सिकता देश इति'। लुपि युक्तवद्भावः। 'देश इति किमिति'। एतेन योगविभागोऽपि पर्यनुयुक्त एव भवति, तेन सिकताशर्कराभ्यां लुबिलचौ चेत्येव कस्मान्न कृतमित्यर्थः ॥

"दन्त उन्नत उरच्" ॥ 'दन्तशब्दादुन्नतोपाधिकादिति'। सूत्रे तु पञ्चम्यर्थे प्रथमा सप्तमी वा । 'दन्ता उन्नता अस्य दन्तुर इति'। हिमशिलाशर्करादन्तुराणीत्यादयो लक्षणाप्रयोगाः ॥

"ऊषसुषिमुष्कमधो रः" ॥ समाहारद्वन्द्वे सौत्रः पुल्लिङ्गनिर्देशः। सुषिमधुभ्यां मतुपि प्राप्ते इतराभ्यामिनिठनोश्च रो विधीयते, ऊषा इरिणपांसवः, सुषिश्छिद्रं, मुष्कावण्डौ, मधु माधुर्याख्यो रसविशेषः, न माक्षिकं माध्वीकं वा, अनभिधानात्, एवं च मध्विदं मधुरमिति मधुन्यपि प्रयोगोपपत्तिः, इह च न भवति मध्वस्मिन् घटे विद्यत इति। 'प्रकरणादिति'। प्रकरणं प्रस्तावः। 'कण्ठविवरं महदिति'। गर्दभे व्युत्पत्तिं दर्शयति, तेनाण्ये त्वव्युत्पन्नः खरशब्दः, मुखरो वाचालस्तस्य हि सर्वस्मिन्वक्तव्ये मुखमस्ति, वक्तव्यावक्तव्यविवेकाभावान्मुखं वागिन्द्रियम्। 'हस्तिहनुः कुञ्जशब्देनोच्यत इति'। वृत्तिविषये, एतच्च सम्भवदवयवार्थः किमिति त्यज्यत इत्यभिप्रायेणोक्तं, जातिशब्दस्तु कुञ्जरशब्दो हस्तिशब्दवत्। 'नगरमिति'। नगा वृक्षाः पर्वताश्च । अयमपि जातिशब्द एव, तथा च नगरी जातिलक्षणो ङीष् भवति । नगशब्दोयमश्मादिषु पठ्यत इति वुञ्छणादिसूत्रेणास्य सिद्धत्वात्तस्माद्रो न वक्तव्यः । 'पाण्डुरमिति'। पाण्डुः शुक्लो वर्णस्तद्वत्पाण्डुरं, पाण्डुरशब्दस्त्वव्युत्पन्न एव शुक्लमात्रे गुणिनि च वर्तते ॥

"द्युद्रुभ्यां मः" ॥ द्युशब्दोऽव्युत्पन्नं प्रातिपदिकमुकारान्तम् । 'रूढिषु च मतुप् न विकल्प्यत इति'। तदर्थस्य मतुपाभिधातुमशक्यत्वात् ॥

"केशाद्वोऽन्यतरस्याम्" ॥ 'मतुप्समुच्चयार्थं तदित्युक्तमिति'। एतच्च सिध्मादिभ्यश्चेत्यत्रैव व्याख्यातम् । 'वप्रकरणइति'। प्रकरणं प्रस्तावः, मणिवो नागविशेषः, हिरण्यवो निधिविशेषः, कुञ्जरविशेष इत्यन्ये । 'बिम्बावः कुरराव इति'। अन्येषामपि दृश्यतइति दीर्घः । 'राजीव इति'। कृदिकारादक्तिन इति ङीषन्तात्प्रत्ययः । 'अर्णव इति'। अर्णउदकम् अर्त्तेरसुवुट् च । 'छन्दसीवनिपौ चेति'। चकाराद्वश्च, अन्यतरस्यांग्रहणानुवृत्तेस्तु मतुप्, तदाह । 'वश्च मतुप् चेति'। 'रथीरिति'। रथोऽस्यास्तीत्यर्थः । 'सुमङ्गलीरिति'। सुष्ठु मङ्गलं, सुः पूजायामिति प्रादिसमासः, ततोनेन मत्वर्थीय ईकारः, लाघवाद्बहुव्रीहिणा भवितव्यमिति न्यायश्छान्दसत्वादनाश्रितः । 'मघवानमिति'। मघं धनं तदस्यास्तीति वनिप्, मतुपि तु मघवच्छब्दः, किमर्थं तर्हि मघवा बहुलमिति तत्रैव वक्ष्यामः । 'उद्वा चेति'। उच्छब्दादुद्गताभिधायिनो वप्रत्यये टाप् । 'उद्वतीति'। मतुपो मय इति वत्वं, ङीप् । 'मेधारथाभ्यामिति'। इदमपि छन्दोविषयम् ॥

"गाण्ड्यजगात् संज्ञायाम्" ॥ 'गाण्डीवं धनुरिति'। अर्जुनस्य । 'अजगवं धनुरिति'। पिनाकमेतत् । 'उभयथा सूत्रं प्रणीतमिति'। तन्त्रन्यायाश्रयेण, प्रयोगश्चोभयथापि भवति गाण्डीवी कनकशिलानिभं भुजाभ्याम्, अधिरोहति गाण्डिवं महेषाविति च, संज्ञाग्रहणस्यैव प्रपञ्चः ॥

"रज:कृष्यासुतिपरिषदो वलच्" ॥ 'आसुतीवल इति'। षुञ् अभिषवे, क्तिन्, आसुतिरभिषवः, । 'परिषद्वल इति'। परितः सीदन्तीति परिषत्, सत्सूद्विषेत्यादिना क्विप्, सदिरप्रतेरिति षत्वं, पर्षच्छब्दमन्ये पठन्ति, शृदिभसोदिः, बाहुलकात्पृषेरपि भवति, पर्षद्वा दशावरेति हि दृश्यते, पार्षदकृतिरेषा तत्र भवतां, सर्ववेदपार्षदं हीदं शास्त्र-

मिति च भाष्ये, पर्वतुला मत्स्राप्सैरागतैः कठकाश्रमादिति च भट्टि-काव्ये, परिषच्छब्दस्तु प्रसिद्ध एव, सहस्रशः समेतानां परिषत्त्वं न विप्र-तद्ंति मनुः । अत्र च सूत्रे उभयोरपि ग्रहणमिति उभयथा सूत्रप्रणय-नात् । 'भ्रातृवल इति' । वलइत्यत्राण्ग्रहणानुवृत्तेर्दीर्घाभावः, पुत्रवल उत्साहवल इत्यत्र त्वसंज्ञयां दीर्घाभावः, संज्ञायां तु दीर्घत्वं, वल इत्यत्र हि वनगिर्योः संज्ञायामित्यतः संज्ञायामित्यनुवर्त्तते ॥

"दन्तशिखात्संज्ञायाम्" ॥ दन्तावलो गजः, दन्ती दन्तावलो हस्तीत्यमरसिंहः । 'शिखावलं नगरमिति' । ननु देशे शिखाया वलज्विति चातुरर्थिकेनैव सिद्धं तच्चावश्यं कर्त्तव्यं, निर्वृत्ताद्यर्थं, सत्यम् । इहापि शिखाग्रहणमदेशार्थमवश्यं कर्त्तव्यम्, इहापि यथा स्यात् शिखावलः स्थूणेति, यत्रैवंविधा संज्ञा भवति तत्र देशे मत्वर्थे परत्वादनेनैव लज्युक्त इति मत्वा शिखावलं नगरमित्युदाहृतम् ॥

"ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" ॥ 'ज्योत्स्ना चन्द्रप्रभेति' । तत्रावयवभूतं ज्योतिरस्तीति मत्वर्थोपपत्तिः, एतेन तमःसमूहे तमिस्रशब्दो व्याख्यातः, निघण्टुषु तु तमःपर्यायस्तमि-स्रशब्दः पठितः, तत्र समूहसमूहिनोरभेदोपचारः । 'स्त्रीत्वमतन्त्रमिति' । व्याख्यानमत्र शरणम् । 'शृङ्गादिनच्प्रत्यय इति' । यद्यपि सूत्रे चकारो-नुच्चारितस्तथाप्यन्तोदात्तस्योच्चरणादेवं कल्प्यते । 'ऊर्जस्यासुगागम इति' । ऊर्जस्वतीः, पयस्वतीः, ऊर्जस्वत्पयस्वदित्यसुनन्तान्मतुप् दृश्यते, इह त्वनाश्रयणे हेतुर्मृग्यः । सूत्रे ऊर्जस्विन्गोमिन्निति नान्तत्वाभि-व्यक्त्यै नलोपो न कृतः ॥

"अत इनिठनौ" ॥ 'अकारान्तादिति' । स्वरूपग्रहणं तु न भवति, अच्छब्दान्तात्कुर्वत्पचदित्येवमादेरिति रसादिभ्यः पुनर्वचनात्तद्ग्र-नेन प्राप्तयोरिनिठनोर्बाधनार्थमित्युक्तम् । 'तपरकरणं किमिति' । व्रीह्यादिषु मालादीनामाकारान्तानां पाठो नियमार्थो भविष्यतीति प्रश्नः । किमाकारान्तविषयो नियम उत स्त्रीप्रत्ययान्तविषय आहो-

स्विदावन्तविषय इति संदेहसम्भवादवश्यं कर्त्तव्यं तपरकरणमित्युत्तरे-भिप्रायः। 'एकाचराद्विति'। रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थमित्युक्तं, तत्र चैकाच इति पठितं, तेनैतत्सिद्धम्। 'कार्यीति'। कार्यशब्दात्कृदन्तात्प्रत्ययः। 'तन्दुलीति'। जातेः॥

"व्रीह्यादिभ्यश्च"॥ 'शिखादिभ्य इति'। शिखादयोऽत्रैव वक्ष्यन्ते। 'इकन्यवखलादिष्विति'। विषयसप्तम्येषा, एतेष्वत्रैव वक्ष्यन्ते। 'इकन्निति'। ठनित्यर्थः, पूर्वाचार्यप्रक्रियापेक्षस्त्विकन्निति निर्देशः श्लोकपूरणार्थः। 'परिशिष्टेभ्य उभयमिति'। एतच्च सर्वमितिकरणानुवृत्तेर्लभ्यते। 'एवं सर्वीति'। विपर्ययस्तु न भवति तत्र स्वरूपग्रहणमिहार्थग्रहणमिति, असंजातविरोधित्वेनात्रैव स्वरूपग्रहणस्य युक्तत्वात्। 'शीर्षान्नञ इति'। नञः परो यः शीर्षशब्दस्तस्मादिनिठनौ भवतः, अशीर्षी अशीर्षिकः, न विद्यते शिरो यस्य स एवमुच्यते, अचि शीर्ष इति शिरसः शीर्षभावः, वाक्येपि तस्यैव भाविनो निर्देशः॥

"तुन्दादिभ्य इलच्च" 'स्वाङ्गाद्विवृद्धादिति'। विवृद्ध्युपाधिकात्स्वाङ्गवाचिन इलजादयो भवन्ति, विवृद्धौ कर्णावस्य कर्णिलः, कर्णी, कर्णिकः, कर्णवान्॥

"एकगोपूर्वाट्ठञ् नित्यम्"॥ 'एकशतमस्यास्तीति'। एकं च तच्छतं चेति पूर्वकालेत्यादिना कर्मधारयः, षष्ठीतत्पुरुषाद्बहुव्रीहेर्द्वन्द्वाच्च न भवत्यनभिधानात्, इतिकरणानुवृत्तेश्च। 'कथमिति'। एकगोशब्दस्याप्यनकारान्तत्वात्प्रश्नः। 'समासान्ते कृतइति'। गोरतद्धितलुकीति टचि। 'कथमिति'। इवर्णान्त एव शकटिशब्दोस्तीति मन्यमानस्य प्रश्नः, अनभिधानादेव एकविंशत्यादिभ्यो न भविष्यति किमत इत्यस्यानुवृत्त्या तत्राह। 'अवश्यं चेति'। 'एवमाद्यर्थमिति'। एवमादि यत्सूत्रं तदर्थमित्यर्थः, ततः परे तु ये योगा वातातीसाराभ्यामित्येवमादयस्तेष्वत इत्यस्योपयोगो नास्तीति। 'नित्यग्रहणमित्यादि'। अन्यथान्यतरस्यांग्रहणेन सर्वत्रैवात्र प्रकरणे मतुप्समुच्चयादत्रापि प्रसङ्गः। 'एकेन वेति'। यद्य-

वश्यं समर्थयितव्यमिति भावः, तत्र सुप्सुपेति समासः, कथमेकदण्डीति, एकदेशिनैकाधिकरणादिति निर्द्देशो ज्ञापयति इनिरपि क्वचिद्भवतीति ॥

"शतसहस्रान्ताच्च निष्कात्" ॥ निष्कादित्येतद्गुणभूताभ्यामपि शतसहस्राभ्यां संबध्यते न तदन्तेनेत्याह । 'तौ चेदिति' । 'सुवर्णनिष्कशतमित्यादि' । यत्र निष्कशब्दः पूर्वपदं न भवतीत्यर्थः । अन्तग्रहणं किम् । निष्काच्छतसहस्राभ्यामित्युच्यमाने संदेहः स्यात् किं पूर्वपदं किमुत्तरपदमिति ॥

"रूपादाहतप्रशंसयोर्यप्" ॥ 'रूप्या दीनारा इति' । पुरुषाद्याकारचिह्नितौ सुवर्णपरिमाणविशेषौ व्यवहाराय कल्पितौ दीनारकार्षापणौ । 'निघातिकाताडनादिनेति' । तीक्ष्णाग्रा आयसी शलाका निघातिका, यया पुरुषाद्याकारं सुवर्णादौ सुवर्णकारा उद्भावयन्ति, कृत्यल्युटो बहुलमिति करणे ण्वुल्, निहन्यतेनया निघातिका तया यत्ताडनं तदादिना, आदिशब्देन मुद्राप्रतिमुद्रणादि गृह्यते, क्वचिन्निघातिकाताडनेन पुरुषाद्याकार उद्भाव्यते क्वचिन्मुद्रया प्रतिमुद्र्यते दीनारादिषु । 'तदाहतमित्युच्यत इति' । आहननेन निष्पादितत्वात् । प्रायेण केदारशब्दः पठ्यते, तस्यैवंविधेर्यं प्रसिद्धिर्मृग्या । 'हिम्याः पर्वता इति' । हिमवान् तत्पर्यन्तवर्तिनश्च भूम्नि यप् । गुण्या गुणवन्तः । इनिरपि दृश्यते गुण्यगुण्य इति न व्यजीगणत् ॥

"अस्मायामेधास्रजो विनिः" ॥ 'मतुप् सर्वत्र समुच्चीयत एवेति' । पूर्वं नित्यग्रहणेनान्यतरस्यांग्रहणं तत्रैव न संबध्यते इह तु संबध्यत एवेत्येवशब्दस्यार्थः । तथा च तसौ मत्वर्थ इत्यत्र पयस्वान् यशस्वानिति भाष्य उदाहृतम् । 'पयस्वीति' । तसौ मत्वर्थ इति भत्वाज्जश्त्वाभावः ॥

"बहुलं छन्दसि" ॥ 'अष्ट्री वीति' । अश्नोतेर्ष्ट्रनि अष्ट्रा, दंष्ट्रापर्यायोऽयं मन्त्रेषु प्रयुज्यते अष्ट्रां पूषा शिथिरामुद्वरीवृजत् । शुनमष्ट्रा व्यचरत्कपर्दीति, तत्रास्मादेव पाठाट्टाप् । 'द्वयोभयहृदयानीति' । अन्येषां स्वत एव दीर्घत्वात् । हृदयाच्चालुरन्यतरस्यामित्यन्यतरस्यांग्रहणेनेनिठनौ प्राप्येते चका-

रस्य चुटू इतीत्संज्ञा। एवमुत्तरत्रापि, चान्ते तु चकारो नैवास्ति। 'हिम।च्चेलुरिति'। इकारादिः प्रत्ययः। 'बलाद्गूलजिति'। सिध्मादिषु मत्वर्थे वलूलवातूलयोः मकारान्तरेण व्युत्पत्तिर्दर्शिता। 'पर्वमरुद्भ्यां तप्निति'। चानुदात्तार्थो नकारः, मरुतो नाम राजा, यत्रेदं श्रूयते मरुतःपरिवेष्टारो मरुतस्यावसन् गृहइति, उपसर्गसंज्ञायां तु मरुच्छब्दस्योपसंख्यानादच उपसर्गात्त इति तत्वमनजन्तत्वेपि भवति, मरुत एनं देयासुर्मरुत इति व्युत्पत्तिर्दर्शिता, तत्र तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरः प्राप्नोति, मरुच्छब्दो मृग्रोरुतिरिति उतिप्रत्ययान्तत्वादन्तोदात्तस्तत्रोपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वं द्रष्टव्यम् ॥

"ऊर्णाया युस्" ॥ 'ऊर्णायुरिति'। पदत्वाद्भस्येति लोपो न भवति ॥

"वाचो ग्मिनिः" ॥ 'वाग्मीति'। चकारस्य कुत्वजश्त्वे, तत्र द्वयोर्गकारयोः श्रवणं भवति, अथ मिनिरेव कस्मान्नोच्यते, तत्रापि हि कुत्वजश्त्वयोर्वाग्मीति सिद्ध्यत्येव, ननु चैवमेको गकारः स्यात्, न चानचि चेति द्विर्वचनं दीर्घादाचार्याणामिति प्रतिषेधात्। अथापि द्वयोरेकस्य वा श्रवणे विशेषो नास्तीत्युच्येत, एवमपि यरोनुनासिके प्रत्यये भाषायां नित्यवचनमिति नित्यमनुनासिकः प्राप्नोति यथा वाङ्मयं त्वङ्मयमिति ॥

"आलजाटचौ बहुभाषिणि" ॥ 'यो हि सम्यग्भाषतइति'। बहूपीति भावः ॥

"स्वामिन्नैश्वर्ये" ॥ 'स्वशब्दादैश्वर्यवाचिन इति'। अन्यत्रात्मात्मीयज्ञातिधनवाचिनोपि स्वशब्दस्यैतद्वृत्तिविषये ऐश्वर्यवाचित्वं स्वभावतो भवति, तेन धनवाचिर्धनो वेशिता स्वामीत्युच्यते, न स्वयं धनवचनः, तथा च धनस्य स्वामीत्यपि भवति, अन्यथा मतुप आमिनचा बाधप्रसङ्गः, अन्यतरस्यांग्रहणेन मतुप्समुच्चयेपि धनस्य स्वामीतिवद् धनस्य स्ववानित्यपि प्राप्नोति, तस्मादैश्वर्यवचनः स्वशब्दो न धनादिवचन इति स्थितं, धनयोगादैश्वर्यमित्यपि नास्ति वागादिविषयेपि दर्शनात्, वाचस्पतिः वाचः स्वामीति, न च तत्र धनत्वप्रसिद्धिरस्ति ॥

"अर्शआदिभ्योऽच्" ॥ 'स्वाङ्गाद्धीनादिति'। हीनं विकलं, हीनस्वाङ्गवाचिनोऽच् भवति, खञ्जः पादोऽस्यास्तीति खञ्जः । काणं चक्षुरस्यास्तीति काणः, कथं कुणिर्हस्तोऽस्यास्ति कुणिरिति, अभेदोपचारात्, खञ्जादिष्वपि तर्हि तथैव भविष्यति, इदं तर्हि प्रयोजनं भेदविवक्षायां मतुब्माभूदिति, अथ कुणिशब्दान्मतुप् कस्मान्न भवति अनभिधानात्, खञ्जादिभ्योऽपि तर्ह्यनभिधानादेव मतुन्न भविष्यति, अन्तोदात्तार्थं तु, ये आद्युदात्ता हीनस्वाङ्गवाचिनस्तेष्वन्तोदात्तत्वं यथा स्याद् यदि संभवति। 'वर्णादिति'। वर्णवाचिनः शुक्लशब्दादच्प्रत्ययो भवति. शुक्लोऽस्यास्तीति शुक्लः पटः, गुणवचनेभ्यो मतुपो लुग्वक्तव्य इति सिद्धम्, अन्तोदात्तार्थं तु, ये आद्युदात्ता वर्णवाचिनस्तेषु तद्वत्यन्तोदात्तत्वं यथा स्यात् । अपर आह, गुणवचनेभ्योऽयं तद्वति प्रत्ययो विधीयते तेन शुक्लाः प्रासादा अस्मिन्नगरे शुक्लं नगरमिति भवतीति ॥

"द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः" ॥ 'तद्विषयेभ्य इति'। तच्छब्देनोपतापो गर्ह्यं च प्रत्यवमृश्यते न द्वन्द्वः, तस्यैव तद्विषयत्वासंभवात् । 'प्राणिस्थार्थवाचिभ्य इति' । इदं तु सर्वेषां ग्रहणम् । 'चित्रललाटिकावतीति'। नियतद्रव्यविवक्षायां जातिरप्राणिनामित्येकवद्भावाभावाट्टापः श्रवणम् । 'सिद्धे प्रत्ययइति'। अत इनिठनावित्यनेन । 'ठनादिबाधनार्थमिति'। आदिशब्देन मतुपो ग्रहणम् ॥

"वातातिसाराभ्यां कुक् च" ॥ 'वातातिसारयोरुपतापत्वादिति'। अतिसारसाहचर्याद्वातस्यापि व्याधेरेव ग्रहणं न वायोरिति भावः। 'सिद्धे प्रत्ययइति' । इनावेवेत्यर्थः । रोगे चायमिष्यतइति क्वचित्पठ्यते तत्रोक्तो हेतुः ॥

"वयसि पूरणात्" ॥ 'मासः संवत्सरो वेति'। प्रकरणादिवशात्पञ्चमादिशब्दस्य काले वृत्तिः, ततश्च वयसि द्योत्यइति विशेषणं तत्रोपपन्नमिति भावः ॥

"सुखादिभ्यश्च" ॥ 'इनिप्रत्ययो नियम्यतइति'। पूर्वसूत्रे इनिरेव भवतीति नियमस्वरूपं दर्शितम्, इहापि तथैव नियमः, नन्वेवं यत

एवकारस्ततोऽन्यत्रावधारणमिति सुखादय एव नियता भवन्ति तत्कि-मुच्यते इनिप्रत्ययो नियम्यतइति, अन्यनिवृत्तिविशिष्टं व्यवस्थापन-मत्र नियम इत्यदोषः । 'मतुब्बाधनार्थं वचनमिति' । न तु ठन्बाधनार्थं, शिखादिभ्य इनिर्वाच्य इत्यनेनैव ठनो निवृत्तत्वादिति भावः ॥

"धर्मशीलवर्णान्ताच्च" ॥ 'ब्राह्मणवर्णीति' । ब्राह्मणानां वर्णो जातिस्तद्वान् ब्राह्मणवर्णी ब्राह्मण एव ॥

"हस्ताज्जातौ" ॥ 'इनिप्रत्ययो नियम्यतइति' । मत्वर्थसंभव-मात्रेणात्र प्रकरणे नियमवाचो युक्तिः, परमार्थतस्तु विधिरयं, कथं, गजश-ब्दवज्जातिशब्दोऽयं नात्र मत्वर्थगन्धोऽस्ति, तथा च विहस्तेऽपि गजे हस्तीति भवति जातिसद्भावात्, हस्तसंबन्धविवक्षायां च हस्तिन्यपि मतुब् भवति हस्तवान् हस्ती हस्तवान्पुरुष इतिवत्, एवमुत्तरेष्वपि योगेषु द्रष्टव्यं, हस्तग्रहणं चोपलक्षणार्थं मन्यते, तेन दन्ती विषाणी केसरीत्यादि सिद्धं भवति ॥

"वर्णाद्ब्रह्मचारिणि" ॥ 'ब्रह्मचारीति' । 'त्रैवर्णिकोऽभिमत इति'। यद्यपि गुरुकुलवासिनि प्रथमाश्रमे ब्रह्मचारिशब्दः प्रसिद्धस्तथापीह लक्ष्यानुरोधात्त्रैवर्णिकमात्रमभिमतो न त्वाश्रम इत्यर्थः, तस्य कादाचित्कं ब्रह्मचर्ययोगं दर्शयति । 'स हीति' । ब्रह्म चरतीति ब्रह्मचारी, ब्रह्म वेदः, इह तु तदध्ययनार्थो नियमविशेषोऽभिमत इत्याह । 'नियममिति' । तत्र ब्रह्मचारीति, व्रतइति णिनिः, ब्रह्मचारिशब्दस्य मुख्यार्थपरित्यागेन त्रैवर्णिकमात्रपरत्वे कारणमाह । 'ब्राह्मणादयस्त्रयो वर्णा इति' ॥

"पुष्करादिभ्यो देशे" ॥ 'अर्थीति' । असंनिहितार्थोऽस्येत्यर्थः, कालतश्चासंनिधिर्न देशतः, तत्र विरोधादस्तीति न संबध्यते, ततश्चाप्राप्त एवेनिर्विधीयते, तक्रकौण्डिन्यन्यायेन च सत्तोपाधिकादिनेरभावः । 'अर्थवा-निति' । सन्निहितार्थ उच्यते । 'तदन्ताच्चेति' । ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधादयमारम्भः । 'धान्यार्थीति' । धान्यरूपोऽर्थोऽसंनिहि-तोऽस्येत्यर्थः, कर्मधारयादिनिः, नन्वर्थयतेर्णिनिनैतत्सिद्धं धान्यमर्थयते धान्यार्थी, एवमपि णिनीति पूर्वपदप्रकृतिस्वरः प्राप्नोति, एवं तर्हीदं स्यात्

अर्थनमर्थः प्रार्थना सा यस्यास्ति सोर्थी, धान्यस्यार्थी धान्यार्थः, धान्यप्रार्थना, सा यस्यास्ति स धान्यार्थीति, एवं च कृत्वेदमपि सिद्धं भवति अर्थिकः प्रत्यर्थिक इति, अर्थाच्चासन्निहितइति तूच्यमाने इनेरेव विधानाट्ठन्न स्यात्, एकाक्षरात्कृतो जातेरिति प्रतिषेधो नित्यः, तेन कार्यो कार्यिक इतिवद् इनिठनौ भविष्यतः, मतुबनभिधानान्न भविष्यति, न च धनवाचिनोर्थशब्दात्सन्निहितादपीनिठनोः प्रसङ्गः, अनभिधाना,देवमर्थाच्चासन्निहितात्तदन्ताच्चेति न वक्तव्यमिति स्थितम् ॥

"बलादिभ्यो मतुबन्यतरस्याम्" ॥ 'अन्यतरस्यांग्रहणेनेत्यादि'। पूर्ववत्समुच्चये तस्य वृत्तेः, चकार एव तु न कृतः, किं कुर्मः, यदि तु विकल्पार्थेनानेन प्रत्ययो विकल्प्येत ततो मतुपा मुक्ते यथाप्राप्तमिनिठनौ द्वावपि स्यातां, नन्वेवं सति सूत्रारम्भोनर्थकः स्यात्, विनाप्यनेन प्रत्ययत्रयस्य सिद्धत्वात् तत इनिरेव भविष्यति, कुतो नु खल्वेतद् इनिरेव भविष्यति न पुनष्ठनेव स्यादिति, तस्मात्समुच्चयः ॥

"सञ्ज्ञायां मन्माभ्याम्" ॥ 'प्रथिमिनी दामिनीति'। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन चेति तदन्तविधिः, नस्तद्धित इति टलोपः ॥

"कंशंभ्यां बभयुस्तितुतयसः" ॥ 'कंशमिति मकारान्ताविति'। कशब्दः सुखब्रह्मयुब्रह्मस्तकवाचक इत्यकारान्तः कशब्दो यद्यपि प्रसिद्धः, मकारान्तोपि क्वचिदस्तीति, प्रदर्शनार्थं मकारान्तावित्युक्तम्। 'उदकसुखयोर्वाचकाविति'। न यथासंख्यं किं तर्हि यथासंभवं, कमित्युदकसुखयोर्वाचकं, शमिति सुखस्य, अल्पाच्तरमिति सुखस्य पूर्वनिपातः प्राप्तो न कृतः सूत्रकारेणैव तत्र व्यभिचरितत्वात्, उदाहरणेष्वनुस्वारपरसवर्णौ, तत्र यकारवकारयोः सानुनासिकौ यकारवकारौ ॥

"अहंशुभयोर्युस्" ॥ 'अहमिति शब्दान्तरमेवेति'। ननु नात्र कश्चिच्छब्दः प्रकृतो यदपेक्षं शब्दान्तरत्वं स्यात्, सत्यं, त्वाहौ सावित्यस्मदादेशोहंशब्दः प्रसिद्धिवशाद्बुद्धिस्थो निर्दिष्टप्रायः, तदपेक्षं शब्दान्तरत्वम्, अहङ्कारे वर्ततइत्यनेनार्थभेदमाह, गर्वाभिमानो ऽहङ्कारः।

'अहंयुः शुभंयुरिति'। पूर्ववदनुस्वारपरसवर्णौ, ऊर्णाया युसित्यत्र येऽकन्दसीति नानुवर्तयन्ति तेषामत्रैवोर्णाग्रहणं कर्त्तव्यम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य द्वितीयः पादः ॥

"प्राग्दिशो विभक्तिः" ॥ 'विभक्तिसञ्ज्ञास्ते वेदितव्या इति'। विभक्तिरिति शब्दः संज्ञा येषां ते तथोक्ताः। ननु विभक्तिशब्दः पूर्वमेव सुप्तिङां संज्ञात्वेन विनियुक्तः, संज्ञा च प्रदेशेषु संज्ञिनं प्रत्याययति न स्वरूपम्, अतः सुप्तिङामेव संज्ञात्वं युक्तं न विभक्तिशब्दस्य, सत्यं, सुप्तिङस्तु संज्ञा भवन्तः प्रत्येकं समुदिता वा भवेयुः, न तावत्प्रत्येकम्, अनेकसंज्ञाकरणे प्रयोजनाभावात्, नापि समुदिताः, गौरवादनावृत्तेश्च, आवर्तिन्यो हि संज्ञा भवन्ति, न च समुदाय आवर्तते, अपर आह। यथा किकिनौ लिट् चेति लिड्वद्भावो विधीयते तथात्रापि विभक्तिवद्भावो विधीयतइति, सुप्तिङां तु विधानमत्र नाशङ्कनीयं पूर्वमेव विहितत्वात्। 'त्यदादिविधय इति'। त्यदादीनां यानि कार्याणि त्यदादित्वप्रयुक्तानि स्वरूपप्रयुक्तानि वा ते त्यदादिविधयः, उपलक्षणं चैतत्, दानीमो मकारस्य न विभक्तौ तुस्मा इतीत्संज्ञाप्रतिषेधोऽपि प्रयोजनम्। 'ततः यत इति'। त्यादादीनाम इत्यत्वम्, अत्र सकारस्यानन्त्यत्वादेवेत्संज्ञाभावः। 'कुत इति'। कुति होरिति कुभावः, कदेति किमः कादेशः, क्वेत्यत्र क्वातीति क्वभावः। 'इहेति'। इदमो हः, इदम इश्, अत्र प्रत्ययस्वरेणैव सिद्धमुदात्तत्वं तस्मादित इत्येवोदाहरणं विभक्तिस्वरस्य, अन्यथा लितीति प्रत्ययात्पूर्वमुदात्तं स्यात्। ननु च मध्येऽपवादा इति न्यायादनुदात्तौ सुप्पितावित्यस्यैव विभक्तिस्वरोऽपवादो न लित्स्वरस्य, लित्स्वर एव तु विभक्तिस्वरं परत्वाद्बाधेत, नैष दोषः नात्राकृते लित्स्वरे विभक्तिस्वरः प्राप्नोति किं कारणम्, अन्तोदात्तादिति वर्त्तते, तत्र निमित्तमेव लित्स्वरो विभक्तिस्वरस्य, यद्यप्यूडिदमित्यत्र सावेकाच इत्यतस्तृतीयादिग्रहणमनुवर्त्तते तथाप्यापञ्चमाध्यायपरिसमाप्तेर्यावान्प्रत्ययो विभक्तिसंज्ञकः सर्वोऽसौ तृतीयादिरिति तसिलादयोऽपि तृतीयादि-

ग्रहणेन एह्यन्तएव। 'अतः परमित्यादि'। एतत्समर्थानां प्रथमाद्वेत्यत्रैव व्याख्यातम्। 'वावचनं त्वनुवर्त्ततएवेति'। तस्य पृथक्स्वरितत्वात्। अथ सुपः विभक्तिश्चेत्यत्रैव प्राग्दिशश्चेत्युच्येत, नैवं शक्यम्, एवं ह्युच्यमाने न ज्ञायते कुत आरभ्य प्राग्दिशीया इति, बहवश्च दिक्शब्दा दिगादिभ्यो यदित्येवमादयः, ततश्चावधिरपि न निश्चितः स्यात्, किं सर्वनामबहुभ्य इत्यादेश्च कार्यस्य विषयनियमार्थं पुनरिह प्राग्दिश इति वाच्यमेव स्यात्, यदि पुनरिहैव सुप्तिङौ चेत्युच्येत, एवमपि तिङस्त्रीणित्रीणीत्यत्र तिङ्ग्रहणं सुप इति च तत्र वक्तव्यं पुरुषवचनसंज्ञार्थं, तत्र नास्ति विशेषः॥

"किंसर्वनामबहुभ्योऽद्व्यादिभ्यः"॥ अधिकारोयं परिभाषा वेति दर्शयति। 'प्रत्ययो वेदितव्य इति'। द्वाभ्यां द्वयोरित्यत्र तसिल्त्रलौ न भवतः। प्रकृतिपरिसंख्यानं प्रकृतिपरिगणनम्। 'वैयाकरणपाश इति'। अस्तात्यादयो ग्रहणवन्तो विधीयन्तइति प्रकृतिपरिसंख्यानस्य तत्रासंभवाद्व्यवहितोपि पाशप् प्रत्युदाहृतः। 'द्व्यादिपर्युदासादिति'। यदि पुनरयं द्व्यादिभ्यः प्राक् किं पठ्येत, नैवं शक्यमेकशेषे हि दोषः स्यात्, त्यदादीनां यद्यत्परं तत्तच्छिष्यते, त्वं च कश्च कौ, भवांश्च कश्च कौ, 'बहुग्रहणे संख्याग्रहणमिति'। कथमिह सर्वनामसंज्ञया संज्ञिनो निर्दिश्यन्ते, तैः साहचर्याद् बहुशब्दस्यापि संज्ञिनो ग्रहणं यस्य बहुगणवतुडतिसंख्येति संख्या संज्ञा विहिता, न च तत्र वैपुल्यवाचिनो ग्रहणमित्यत्रापि तस्य ग्रहणाभावः॥

"इदम इश्"॥ 'शकारः सर्वादेशार्थ इति'। अन्यथा विशेषविहितत्वात्त्यदाद्यत्वं बाधित्वालोन्त्यस्येति मकारस्येत्वे हलि लोपे च इत एहेत्यनिष्टं रूपं स्यात्॥

"एतेतौ रथोः"॥ 'इशोपवाद इति'। भावे घञ्, इशो बाधनमेताभ्यां क्रियतइत्यर्थः। योगापेक्षं त्वेकवचनम्, अयं योग इशोपवाद इत्यर्थः, आदेशाभ्यां वा प्रत्येकमभिसंबन्धादेकवचनं, यथा भृशादिभ्यो

भुव्यच्चेरिति, इशोपवादाविति वा पठितव्यम्। 'रेफे ऽकार उच्चारणार्थ इति'। अकारवतो रेफस्य प्राग्दिशीयस्याभावात् ॥

"एतदोश्" ॥ 'शकारः सर्वादेशार्थ इति'। अन्यथालोन्त्यस्येत्यन्त्यस्य स्यात्। ननु चान्त्यस्य त्यदाद्यत्वेनैव सिद्धमत्वं, कृते तर्हि तस्मिन्नकारस्याकारः प्राप्नोति, अकारस्य अकारवचने प्रयोजनाभावात्सर्वादेशो भविष्यति, अस्त्यन्यदकारस्याप्यकारवचने प्रयोजनं, किं, योन्यो विधिः प्राप्नोति स माभूदिति, कः पुनरसौ, लितीति स्वरः, यथा मो राजि समः क्वाविति मकारस्य मकारवचनमनुस्वारबाधनार्थम्। 'योगविभाग इति'। अशो बाधनार्थः। 'थमुप्रत्ययः पुनरिति'। अन्यथा य इवासावविशेषविहितस्थकारादिः प्रकारवचने थालिति तत्रैव स्यात्, स तर्ह्युपसंख्येयः, नेत्याह इदमो थकारादिं विशेषयिष्याम इदमो यस्थकारादिस्तत्रेति, स च थमुरेव, ततश्चास्मादेव ज्ञापकात्थमुर्भविष्यति, तेन च थाल् बाध्यते, भाष्ये त्वेतदोनिति नकारान्त आदेश इति स्थितं, स चानेकाल्त्वात्सर्वादेशः, ततः स्थानिवद्भावात्प्रातिपदिकत्वे सति नलोपः। अतः, अत्र ॥

"सर्वस्य सोन्यतरस्यां दि" ॥ दीति दकारादियं सप्तमी, तत्र यस्मिन्विधिरिति तदादेर्ग्रहणं विज्ञायतइत्याह। 'दकारादौ प्रत्यये परत इति'। 'सर्वदा ब्राह्मणीति'। किमर्थं स्त्रीलिङ्गोपन्यासः, यो हि मन्यते दीति दाशब्दादियं सप्तमी न तु दकारात् तत्र क्त्वो ल्यप् हलः श्न इत्यादिवदातो लोप इति, तं प्रति दाशब्दः प्रत्युदाहृतः, एवमपि लाक्षणिकत्वादत्र दाशब्दस्य न भविष्यति, एवं तर्हि विजन्तमेतद् द्रष्टव्यम्, एवं च कृत्वा पुल्लिङ्गमप्युदाहरणं भवत्येव ॥

"पञ्चम्यास्तसिल्" ॥ 'तसिल्प्रत्ययो भवतीति'। यदि पुनः पञ्चम्याः सप्तम्या इति षष्ठ्याश्रयेण पञ्चम्यादीनां तसिलादय आदेशा विज्ञायेरन् सुब्लुक्स्वरगुणदीर्घत्वैत्वौत्वस्मायादिविधिप्रतिषेधः। सुब्लुक्, अव्ययात्त्यप्, ततस्त्यः, तत्रत्यः, सुपो धातुप्रातिपदिकयोरिति तसिल्लोलुक् प्राप्नोति। स्वरः, तदा यदा, अनुदात्तौ सुप्पिताविति अनुदात्तत्वं

प्राप्नोति, गुणः, कुतः घेर्ङितीति गुणः प्राप्नोति । दीर्घत्वं तर्हि अतो दीर्घो यञि सुपि चेति दीर्घत्वं प्राप्नोति । एत्वं, तेषु तत्र, बहुवचने झल्येदित्येत्वं प्राप्नोति । औत्वं, कस्मिन्कुत्र, औत् अच्च घेरित्यौत्वं प्राप्नोति । स्मायादि, तस्मात्ततः, तस्मिन् तत्र, ङसिङ्योः स्मात्स्मिनाविति स्मात्स्मिनौ प्राप्नतः । तस्मात्पञ्चम्याः सप्तम्या इति पञ्चमी । तसिलादयश्च प्रत्यया इति युक्तम्, अत एवेतराभ्य इति पञ्चमीनिर्देशः, इतरथा इतरासामिति वक्तव्यं स्यात्, यदि तर्हि तसिलादयः प्रत्यया नादेशास्तसेश्चेति तस्यतेर्धातोरपि पञ्चम्यन्तात्परस्य प्राप्नोति तस्मात्तस्यति यस्मात्तस्यतीति, आदेशपक्षे तु न दोषः, प्रतियोगे पञ्चम्यास्तसिः, अपादाने चाहीयरुहोरित्यत्राप्यादेशत्वात्पञ्चम्यादेशस्य तसेस्तसिलादेशविधानात् । प्रत्ययपक्षेऽपि न दोषः, तसेरितीकारो विवक्षितः, तेन धातोर्न भविष्यति ॥

"तसेश्च" ॥ 'तस्य तसेरिति' । परत्वात्कृतस्य तसिलोवकाशः कुतोवहीयते कुतोवरोहतीति, तसेस्तु ग्रामत आगच्छतीत्यादिः, कुत आगच्छतीत्यादावुभयप्रसङ्गे परत्वात्तसिर्भवति तस्यानेन तसिलादेशः । 'तसेस्तसिलवचनं स्वरार्थमिति' । लित्करणस्योक्तं प्रयोजनम् । 'विभक्त्यर्थं चेति' । विभक्तिसंज्ञार्थं चेत्यर्थः । अन्यथा परत्वात्तसौ कृते तस्याप्राग्दिशीयत्वाद्विभक्तिसंज्ञाया अभावात्त्यदाद्यत्वं न स्यादिति रूपमेव न सिद्ध्येत् ॥

"पर्यभिभ्यां च" ॥ 'सर्वोभयार्थे वर्तमानाभ्यामिति' । अत्र चाभिधानस्वाभाव्यं हेतुः, तेनेह न भवति परिषिञ्चति अभियातीति, उपर्यर्थे परिराभिमुख्येभिः, इह त्वोदनं परिषिञ्चतीति सर्वतो भावेपि वावचनानुवृत्तेः पक्षे तसिलभावः । 'सर्वत उभयत इति' । सप्तम्यन्ताभ्यामाद्यादित्वात्तसिः ॥

"किमोत्" ॥ तकारस्य न विभक्तौ तुस्मा इतीत्संज्ञाप्रतिषेधो न भवति, अनित्यत्वात्, अनित्यत्वं तु इदमः स्थमुरिति थम उकारान्तकारस्येत्संज्ञापरिहारार्थाज्ज्ञायते, दानीमस्तु मकारस्य भवत्येव प्रतिषेधः,

अनित्यत्वं हि ज्ञाप्यते न पुनस्तद्धितत्वस्याभावः। 'उत्तरसूत्रादिति'। किमोद्धेति सूत्रं पठितव्यम्, ह च छन्दसीत्यत्र चकारेण त्रतलोः समुच्चयादिष्टसिद्धिरिति तेषां भावः, भागवृत्तिकारस्तु भाषायामेतदिच्छति ॥

"इतराभ्योऽपि दृश्यन्ते" ॥ 'पञ्चमीसप्तम्यपेक्षमितरत्वमिति'। तयोरनन्तरनिर्दिष्टत्वात्। 'प्राक्कविध्यर्थमिति'। प्राग्दिकोयं विधिर्यथा स्यादित्येवमर्थमित्यर्थः, तेन किं सिद्धं भवतीत्याह। 'तेनेति'। 'स भवान् ततो भवानित्यादि'। अयं भवानिह भवानित्यादि इत्येतदुदाहरणं, को भवान् क्व भवानित्यादयः। 'दीर्घायुः प्रभृतिष्विति'। नित्यं समासइति स्वत्वं न भवति उत्तरपदस्थत्वात्, इसुसोः सामर्थ्यइति विकल्पोऽपि न भवति व्यपेक्षायास्तत्राश्रयणात्।

"सर्वैकान्यकिंयत्तदः काले दा" ॥ 'सप्तम्या इति वर्ततइति'। स्वरितत्वात्, 'न त्वितराभ्य इति,' विपर्ययात् ॥

"इदमो र्हिल्" ॥ 'लकारः स्वरार्थं इति'। यथा ह्योत इत्यत्र ऊडिदमित्यादिना स्वरो भवति तथेह न भवति, लित्त्वस्याचरितार्थत्वात्, तसिलस्तु लित्त्वमिदमोऽन्यत्र चरितार्थम् ॥

"अधुना" ॥ 'इदमोऽश् भावो धुना च प्रत्यय इति'। तत्रोडिदमित्यादिना विभक्तिस्वरः, स चादेः परस्येत्यादेर्भवति, भाष्ये त्वधुनाप्रत्यय आश्रितः, तत्रेदम इशो यस्येति लोपः, निपातनाच्च मध्योदात्तत्वम् ॥

"तदो दा च" ॥ 'दावचनमिति'। अपर आह अदाप्रत्ययोयं न दाप्रत्यय इति, तत्राद्युदात्तत्वं पक्षे भवति ॥

"तयोर्दार्हिलौ च च्छन्दसि" 'तयोरिति'। प्रातिपदिकनिर्देशः, व्यत्ययेन पञ्चम्याः स्थाने षष्ठी ॥

"सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" ॥ 'अहन्यभिधेय इति'। सप्तम्यन्तस्याहन्शब्दस्यार्थ इत्यर्थः, तद्दर्शयति। 'समानेऽह्नि सद्य इति'। एवं

संवत्सरेऽभिधेयइत्यादिष्वपि द्रष्टव्यम् । उभयोरह्नोरुभयेद्युरिति पाठः । प्रायेण तु उभयस्मिन्नहनीति पठ्यते, तत्रोभे अहनी अवयवौ यस्य समु[1]दायस्य तदहर्द्वयमुभयमहरित्युक्तम् ॥

"प्रकारवचने थाल्" ॥ 'सामान्यस्य भेदको विशेषः प्रकार इति' । यथा ब्राह्मणसामान्यस्य माठरा[2]दयः, अनेनैतद्दर्शयति, यद्यपि सादृश्यमपि प्रकारः, यथा प्रकारे गुणवचनस्येत्यत्र वक्ष्यति प्रकारो भेदः सादृश्यं च, तदिह सादृश्यं प्रकारो गृह्यतइति, तथापि नेह सादृश्यं गृह्यते ऽनभिधानादिति । 'तेन प्रकारेण तथेति' । प्रथमान्तात्तु न भवति स प्रकारस्तथेति, अनभिधानादेवेति भावः, किंसर्वनामबहुभ्यो विशेषविहितेन थाला सामान्यविहितस्य जातीयरो बाधप्रसङ्ग इत्याशङ्क्याह । 'जातीयरोपीति' । सत्यं जातीयरोपीदृशमेव लक्षणं प्रकारवचने जातीयरिति, कथं तर्ह्यबाधोत आह । 'स त्विति' । अर्थभेदाद्भेद इत्यर्थः । एवं च कृत्वा प्रकारमात्रे थालं विधाय तदन्तात्प्रकारवति जातीयरं प्रयुञ्जते तथाजातीयो यथाजातीय इति ॥

"किमश्च" ॥ योगविभाग उत्तरत्र किम एवानुवृत्तिर्यथा स्यादिदमो माभूदिति ॥

"दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" ॥ दिशां शब्दाः दिक्शब्दाः, षष्ठीसमासः । 'दिशां ये वाचकास्ते दिक्शब्दा इति' । दिशां ये वाचकत्वेन दृष्टास्तइह दिक्शब्दा विवक्षिता इति न तु दिशमभिदधाना एवेत्यर्थः । 'तेभ्य इति' । यद्यपि पूर्वादिशब्दा दिशि वर्त्तमानाष्टाबन्ताः, देशकालयोस्तु प्रकृत्यन्ता इति रूपभेदस्तथापि टापः स्वार्थिकत्वाद्वाचकरूपे भेदाभावात्तएव दिक्शब्दा देशकालयोर्वर्त्तन्तइति वाचो युक्तेर्नास्ति विरोधः, ये त्वर्थभेदे शब्दभेदं मन्यन्ते तेषां सादृश्यनिबन्धनस्तेभ्य इति व्यपदेशः, कथं पुनर्दिक्शब्दा देशकालयोर्वर्त्तन्ते, स्वभावात्, पूर्वादयो हि दिशामिव देशकालयोरपि स्वभावादेव

[1] समुदायस्येति नास्ति २ पुस्तके ।
[2] काठकेत्यधिकं २ पु· ।

वाचकाः, कथं तर्हि त्रिषु वर्त्तमाना दिशैकया व्यपदिश्यन्ते दिक्शब्देभ्य इति, को दोषः, अन्वयेन ह्ययं व्यपदेशो न तु दिशामेव ये शब्दा इत्यवधारणेन। अथ देशकालयोरन्यतरेण कस्मान्न व्यपदिश्यन्ते, शिंशपाचोद्यमेतत्, किं च दिशां निर्देशे लाघवं भवति, दिक्शब्दस्योपलक्षणात्वात्पुनर्दिग्ग्रहणम्, अन्यथा देशकालवृत्तिभ्य एव स्यान्न दिग्वृत्तिभ्यः, इह सप्तम्यादीनां विभक्तीनामर्थानां दिगादीनां च साम्यात्संख्यातानुदेशः स्यादिति तत्राह। 'यथासंख्यमत्र नेष्यतइति'। अस्वरितत्वात्। 'पुरस्तादधस्तादिति'। पूर्वाधरशब्दयोरस्ताति चेति पुर अध इत्येतावादेशौ। 'ऐन्द्र्यां दिशि वसतीति'। 'ऐन्द्रीशब्दोयम् इन्द्रसंबन्धिस्त्रीलिङ्गवस्तुमाचष्टे, दिक्शब्दसंनिधौ तु दिशि वर्त्ततइति न दिक्शब्दः, किं च दिक्शब्देभ्य इत्येतस्मिन्नसति ये देशवाचिनः पञ्चालादयो ये च कालवाचिनो मासादयस्तेभ्योपि प्रसङ्गः, अस्मिंस्तु सति दिक्शब्दा एव ये देशकालयोर्वर्त्तन्ते तेभ्य एव भवति। 'दिग्देशकालेष्विति किमिति'। दिक्शब्देभ्य इतिशब्दग्रहणाद्दिशि दृष्टः शब्दो दिक्शब्द इति व्युत्पत्त्या देशकालवृत्तिभ्योपि सिद्धः प्रत्ययः, दिक्शब्दात्सूत्तरपदेति पञ्चमीवदिति मत्वा प्रश्नः। 'पूर्वस्मिन्गुराविति'। पूर्वशब्दोत्र दिगादिसंबन्धाद्गुरौ वर्त्तते न दिगादिषु॥

"दक्षिणोत्तराभ्यामतसुच्" ॥ किमर्थमतसुजुच्यते न तसुजेवोच्येत, तत्रायमप्यर्थः, स्वरार्थश्चकारो न कर्त्तव्यो भवति, प्रत्ययस्वरेणैव सिद्धं, का रूपसिद्धिः, दक्षिणोत्तरशब्दावकारान्तौ। यदा तर्हि दिशि वर्त्तमानौ टाबन्तौ भवतस्तदा यस्येति लोपेन टापो निवृत्तिर्यथा स्यादित्येवमर्थोकारः, सिद्धात्र टापो निवृत्तिः, कथं, तसिलादिष्वाकृत्वसुच इति पुंवद्भावात्। ननु च समानायामाकृतौ भाषितपुंस्कस्य तेन पुंवद्भावः, आकृत्यन्तरे चैतौ भाषितपुंस्कौ, कथं, दिशि वर्त्तमानाः पूर्वादयो निमित्तान्तरनिरपेक्षा देशकालयोस्तु व्यवस्थापेक्षाः, कथं तर्हि दिशि वर्त्तमानानां सर्वनामसंज्ञा भवति, यावता व्यवस्थायामित्युच्यते। अत्राहुः। यद्यपि दिशि वर्त्तमानानां व्यवस्था न प्रवृत्तिनिमित्तं, वस्तुतस्तु

व्यवस्था विद्यतइति भवत्येव संज्ञा, व्यवस्थायामिति हि विषयो निर्दिश्यते न तु प्रवृत्तिनिमित्तं, तथा चोत्तराः कुरव इत्यत्र निरूढत्वाद्व्यवहारस्य प्रयोक्तृभिरनपेक्ष्यमाणाया अपि वस्तुतो व्यवस्थायाः सद्भावात्सर्वनामसंज्ञाप्रसङ्गे ऽसंज्ञायामिति प्रतिषेधः कृत इति, तदेवमाकृतिभेदात्तसिलादिष्विति पुंवद्भावो न सिद्ध्यति, एवं तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंवद्भावो भविष्यति, यथा दक्षिणोत्तरपूर्वाणामित्यत्र, तस्माचार्थोकारकरणेनेत्यत आह । 'अकारो विशेषणार्थं इति' । षष्ठी तसर्थप्रत्ययेनेत्युच्यमाने ततो ग्रामादागत इति तसिलापि योगे षष्ठी स्यात्, उपपदविभक्तेः कारकविभक्तिर्बलीयसी, इह तर्हि ततो ग्रामादन्य इत्यन्यादियोगे या पञ्चमी तां बाधित्वा षष्ठी स्यात्, निरनुबन्धकग्रहणे न सानुबन्धकस्येत्येवं तसिलादियोगे न भविष्यति, यस्तर्हि निरनुबन्धकः प्रतियोगे पञ्चम्यास्तसिः, तेनैकदिक् तसिश्च, तत्र मा भूत्, अर्जुनतः प्रत्यभिमन्युः, सुदामतो विद्युदिति ॥

"अञ्चेर्लुक्" ॥ 'अञ्चत्यन्तेभ्य इति' । केवलेभ्यो लिङ्गविशिष्टेभ्यश्च । 'स्त्रीप्रत्ययो ऽपि निवर्त्ततइति' । एवं चाकारलोपः, चाविति दीर्घत्वं च नास्तीति, प्रागित्यत्र सवर्णदीर्घत्वं प्रत्यगित्यत्र यणादेशः ॥

"पश्चात्" ॥ 'अपरस्य पश्चभाव इति' । केवलस्य लिङ्गविशिष्टस्य च । 'दिक्पूर्वपदस्य चेति' । दिग्वचनः पूर्वपदं यस्य तथोक्तः । 'दक्षिणपश्चादिति' । दक्षिणस्या अपरस्याश्च दिशो यदन्तरालमिति दिङ्नामान्यन्तरालइति बहुव्रीहिः, दक्षिणापरा तस्यां वसतीत्यातिप्रत्ययः, अपरस्य च पश्चभावः । 'अर्द्धोत्तरपदस्य चेति' । अपरस्य चेत्येव । 'विनापि पूर्वपदेनेति' । अपरस्यार्द्धोत्तरपदस्येति संबन्धः ॥

"उत्तराधरदक्षिणादातिः" ॥ 'आतिप्रत्ययो भवतीति' । दक्षिणोत्तराभ्यामतसुजपि भवति, अधरशब्दादस्तातिरपि, अस्ताति चेत्यधरशब्दस्याधादेशविधानाल्लिङ्गात्, अत्र चोत्तरादीनां सप्तम्यादीनां च

१ प्रयोगस्येति २ पु॰ । पा॰ ।

साम्ये सत्यपि पूर्ववद्यथासंख्याभावः, अस्तातिसूत्तरादीनां न संभवति, दक्षिणाशब्दस्य काले वृत्त्यसंभवात् ॥

"एनबन्यतरस्यामदूरे ऽपञ्चम्याः" ॥ 'अदूरे चेत्यादि'। यद्य-प्यवध्यवधिमान् वा सूत्रे न श्रूयते तथापि दिक्शब्दानामवध्यपेक्षा प्रवृत्तिर्भवति, अवधिश्चावधिमन्तमपेक्षतइति सामर्थ्यादेव विशेषो लभ्यते, तत्र देशकालयोरवध्यपेक्षायां न विवादो, दिशि तु विवदन्ते। 'प्राग-सेरिति'। असिपुरधवश्चैषामित्यस्मात्। 'दिक्शब्दमात्रादिति'। तेन पूर्वेण वसतीत्याद्यपि भवति, अञ्चत्यन्तात्तु न भवति व्यवस्थितविभा-षाविज्ञानात्, अस्तु वा तदन्तादपि, अञ्चतेर्लुगीत्यनुवृत्तेर्लुग्भविष्यति। 'पकारः स्वरार्थ इति'। एनपा द्वितीयेति विशेषणार्थस्तु न भवति, अस्त्वेनेनेति, अतसर्थप्रत्ययेनेत्यनुवृत्तेर्द्वितीयाटौःस्वेन इत्यस्यात्र ग्रहणं न भविष्यति ॥

"दक्षिणादाच्" ॥ 'चकारो विशेषणार्थ इति'। अन्यथा वाक्य-स्मरणयोर्य आकारो ऽननुबन्धकस्तेनापि योगे पञ्चमी स्यात्, यद्यप्यञ्चू-त्तरपदेनाहिना च साहचर्यादतसर्थस्याकारस्य ग्रहणं स्यात्तथापि पश्चा-च्छब्द आकारान्तो निपातित इति तेनापि योगे पञ्चमी स्यात्, छान्दसः पश्चाशब्दः, दृष्टानुविधिश्छन्दसि भवति, असंदेहार्थं तर्हि, अञ्चूत्तरपदा-हियुक्तइति सुच्यमाने आकारप्रश्लेषो व्याख्यातव्यः स्यात्, अञ्चूत्तर-पदाद्याद्युक्तइति सूत्रं करिष्यते, तस्माद्दक्षिणासीत्यत्र स्वरितो वानुदात्ते पदादाविति विधिर्माभूदिति चकारस्य प्रयोजनं वाच्यम् ॥

"आहि च दूरे" ॥ 'चकारादाच्चेति'। अन्यथा दूरे विवक्षिते विशेषविहित आहिरेव स्यात् ॥

"उत्तराच्च" ॥ 'आजाही प्रत्ययौ भवत इति'। यद्यप्याहिर-नन्तरस्तथापि चकारेण व्यवहितस्यापि आचः समुच्चय इति भावः ॥

"पूर्वाधरावराणामसिपुरधवश्चैषाम्" ॥ आनन्तर्ययोगे षष्ठी, असीत्यविभक्तिको निर्देशः, एषामिति वचनं विस्पष्टार्थं, संनिधानाद्धि पूर्वादय एव स्थानिनः शक्या विज्ञातुम् ॥

"अस्ताति च" ॥ अस्तातीति सप्तम्यन्तम् । 'असिप्रत्ययेनेति' । अधरशब्दादातिनापि ॥

"विभाषाऽवरस्य" ॥ 'अवित्ययमादेशो भवतीति' । कथं पुनर्बहुष्वादेशेषु प्रसक्तेष्वयमेव भवतु, अस्यैवानुवृत्तेः, अथ वावरस्य यदुक्तं तदस्ताती विभाषा भवतीति विज्ञास्यते ॥

"संख्याया विधार्थे धा" ॥ 'विधा प्रकार इति' । गृह्यतइति वक्ष्यमाणेन संबन्धः, यद्यप्योदनपिण्डोऽपि विधाशब्देनोच्यते तथापीह प्रकार एव गृह्यतइत्यर्थः । एतेन एका गोविधेत्यादौ न भवति, एतच्चार्थग्रहणाल्लभ्यते, इह हि विधायामिति वक्तव्ये यदर्थग्रहणं कृतं तस्यैतत्प्रयोजनं विधाशब्दो यत्रार्थे प्रसिद्धतरस्तस्य ग्रहणं यथा स्यात्, यथा च त्रिविधं बहुविधमित्यादौ प्रकारे प्रसिद्धो विधाशब्दो न तथौदनपिण्डे, सूत्रे च विधाशब्दस्यार्थो विधार्थ इति षष्ठीसमासः, एवं वृत्तावपि, स च क्रियाविषय इति, एतच्चाभिधानस्वभावाल्लभ्यते, तदयमर्थ इत्याह । 'क्रियाप्रकार इति' । कथं तर्हि नवधा द्रव्यं, बहुधा गुणाः, एकविंशतिधा बाहृच्यं, नवधाथर्वणो वेद इति, अत्रापि हि सर्वत्र क्रियाप्रतीयते, उपदिश्यतइति भवतीति वा, द्विधा गच्छतीत्यादावेकस्या एव गमनक्रियाया अवान्तरप्रकारभेदः प्रतीयते, एकधा भुङ्क्तइत्यत्र तु प्रकारैक्यप्रतिपादनेन तन्निवृत्तिः, एकः पाक इत्यादौ तु पाकव्यक्तेरेकत्वं विवक्षितं न त्ववान्तरप्रकारभेदाभावेनैकप्रकारत्वमिति धाप्रत्ययाभावः, तद्विवक्षायां तु भवत्येव एकधा पाक इति, पञ्च पाका इत्यादौ च भिन्ना एव पाका विवक्षिता न त्वेकस्य प्रकारवत्त्वं, तद्विवक्षायां तु तत्रापि भवितव्यमेव पञ्चधा पाका इति ॥

"अधिकरणविचाले च" ॥ 'अधिकरणं द्रव्यमित्यादि' । जात्यादीनामाधारत्वात्, विचालनं विचालोऽन्यथाकरणं, णिजन्तादेरच्, तच्चेह संख्यासंनिधानात्संख्यान्तरापादनेनेत्याह । 'तस्य विचालः संख्यान्तरापादनमिति' । 'एकं राशिं पञ्चधा कुर्विति' । पञ्च राशीन्कुर्वित्यर्थः । नात्र प्रकारभेदो गम्यते नतरां क्रियाविषय इति सूत्रारम्भः, तत्र

द्रव्यस्यापि स्वभावाद्धाप्रत्ययान्तेनासत्त्वरूपेण प्रतिपादनमित्यव्ययत्वं यथा सुदामतो विद्युदिति तसन्तस्य ॥

"एकाद्धो ध्यमुञन्यतरस्याम्" ॥ 'एकाद्विति'। शब्दप्रधानत्वात्सर्वनामकार्याभावः । 'एकधा राशिं कुर्विति' । अधिकरणविचालउदाहरणम् । 'ऐकध्यं भुङ्क्ष्व इति'। विधार्थे । 'प्रकरणादेव लब्ध इति' । कस्मिन् लब्धे, धाप्रत्ययस्य स्थानित्वे, इह हि पूर्वसूत्राद्धाग्रहणमनुवर्त्तते, स च पूर्वमेव विहित इति विधानासंभवात् स्थानित्वमेव विज्ञास्यते। 'विधार्थे विहितस्यापि यथा स्यादितिस्य'। ध्यादेशाभावोप्येतदर्थमेवाश्रितः, प्रत्ययान्तरेष्वस्मिन्दोषाभावात्, किं पुनः कारणं त्रिधार्थे विहितस्य तस्य न स्यादत आह। 'अनन्तरस्यैव हीति' । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति भावः ॥

"द्वित्र्योश्च धमुञ्" ॥ 'मतिद्वैधानीति' । एकशेषेण बहुवचनं, क्वचित्पथिद्वैधानीति पाठः, धमुञन्तस्यालिङ्गसंख्यत्वेपि तदन्तात्स्वार्थे विहितस्यापि ऽस्य स्वभावाल्लिङ्गसंख्यायोगस्तेनाव्ययत्वं न भवति ॥

"एधाच्च" ॥ योगविभागो यथासंख्यनिरासार्थः ॥

"याप्ये पाशप्" ॥ याप्यशब्दो ऽयमस्त्यपादानसाधनो यापितास्माद्गुणा इति याप्यः कुत्सितः, अस्ति कर्मसाधनो यापयितव्यो याप्यो देशान्तरं प्रापयितव्यः, शरीराद्वा ऽपनेतव्यः, अशक्यप्रतीकारो याप्यो व्याधिः, तत्रेहाभिधानशक्तिस्वभावादाद्यस्य ग्रहणमित्याह। 'याप्यः कुत्सित उच्यतइति'। 'तत्र कस्मान्न भवतीति'। व्याकरणे प्रवीणस्यापि दुःशीलत्वेन कुत्सितत्वाद्भवितव्यमेवेति भावः । 'यस्य गुणस्येति' । गुणो विशेषणं, द्रव्यं विशेष्यम् । 'तस्य कुत्सायां प्रत्यय इति' । इतरथान्तरङ्गत्वाल्लभ्यते, प्रवृत्तिनिमित्तं हि प्रत्यासन्नं शब्दवाच्यत्वात्, धर्मान्तरं तु तत्र वस्तुतः सदपि न शब्देन स्पृश्यते, यत्र तु प्रवृत्तिनिमित्तस्य कुत्सनं न संभवत्यसको देवदत्तक इत्यादौ तत्र सहचरितगुणक्रियाकुत्साश्रयः प्रत्ययो भवत्येव, एवं च देवदत्तपाश इत्यत्रापि सत्त्वाभिधाने भवति, कुत्सितइत्यात्रैवायं न विहितस्तिङन्तादपि प्रसङ्गात् ॥

"पूरणाद्भागे तीयादन्" ॥ पूरणार्थविहितत्वात्तीयप्रत्यय एव पूरणशब्देनोक्त इत्याह । 'पूरणप्रत्ययो यस्तीय इति' । 'स्वार्थे वचनमिति' । भागे नित्स्वरेणाद्युदात्तत्वं यथा स्यात्, रूपे तु नास्ति विशेषः। 'पूरणग्रहणमुत्तरार्थमिति'। नेहार्थं, कुत इत्यत आह। 'नहीति'। ननु चायमस्ति मुखपार्श्वतसोर्लोपः, मुखतीय इति, तत्राह । 'मुखतीयादिरनर्थक इति' । मुखतीयादौ यस्तीयशब्दः सोनर्थक इत्यर्थः ॥

"प्रागेकादशभ्योऽच्छन्दसि" ॥ 'प्रागेकादशभ्यः संख्याशब्देभ्य इति'। एकादशशब्दात्प्राञ्चो ये संख्याशब्दास्तेभ्य इत्यर्थः, एकादशभ्यः प्राचीनेषु संख्येयेषु ये संख्याशब्दास्तेभ्य इति वा ॥

"षष्ठाष्टमाभ्यां ञ च" ॥ यथासंख्यमत्र न भवति, अन्यतरस्मादनः पूर्वेणैव सिद्धत्वात् ॥

"मानपश्वङ्गयोः कन्लुकौ च" ॥ मानं व्रीहिपरिमितं सुवर्णम् । 'अष्टमो भाग इति'। कस्य पुनरत्र लुगित्याह । 'ञस्य लुगनो वेति'। अष्टन्शब्दाद्भागे तयोरेव विहितत्वात्, लुग्वचनं किं, यावता महाविभाषयैव पक्षे ञानोरभावः सिद्धः, ज्ञापनार्थं तु, एतज्ज्ञापयति पूर्वसूत्रे ञानौ नित्याविति ॥

"एकादाकिनिच्चासहाये" ॥ 'आकिनिचः कनो वेति'। तयोरेवानेन सूत्रेण विधानात्, एकधेत्यादौ तु सूत्रान्तरविहितस्य लुङ् न भवति, असंनिधानात् । 'संख्याशब्दनिरासार्थमिति'। अन्यथा प्रसिद्धत्वात्संख्याप्रकरणाच्च तस्यैव ग्रहणं स्यात्, अस्तु को दोषस्तत्राह । 'तदुपादाने हीति'। 'द्विबह्वोरिति'। द्वित्वे बहुत्वे चेत्यर्थः, नहि द्वयोर्बहुषु वा एकत्वसंख्यास्ति, असहायत्वं तु परस्परव्यतिरिक्तसहायाभावेन बहूनामपि भवति, इह आकिनिजेवायं वक्तव्यः, सवर्णदीर्घत्वे सिद्धमिष्टं, यस्येति लोपश्चाकारोच्चारणसामर्थ्यान्न भविष्यति, न चावग्रहनिवृत्त्यर्थोऽकारः, नहि लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम् ॥

"भूतपूर्वे चरट्" ॥ 'भूतपूर्वशब्द इत्यादि'। केवलभूतशब्दः पीतन्येपि वर्तते भूतमियं ब्राह्मणीति, सत्येपि वर्तते भूतवादीति, अत्र

भूतशब्दो विद्यमानवचन इत्यन्ये, पूर्वशब्दश्च दिग्देशयोरपि वर्त्तते, तस्मादन्यतरोपादाने विवक्षितोर्थो न गम्यत इत्युभयोरुपादानम् । 'चाञ्चवर इति' । यथात्र चकारस्येत्संज्ञा न भवति तथा चुटू इत्यत्र प्रतिपादितं, गोष्ठात्खञित्यत्रैव नोक्तं, विशेषविहितेन खञा चरटो बाधा मा भूदिति, संनिधौ हि बाध्यबाधकभावो न कालभेदे ॥

"षष्ठ्या रूप्य च" ॥ इह षष्ठ्याः शेषविषये विधानात्तदन्तव्यवच्छेदकत्वाद्विशेषणमप्रधानं, यत्पुनः षष्ठ्याक्षिप्तं संबन्धिमात्रं तद्व्यवच्छेद्यत्वाद्विशेष्यं प्रधानं, प्रधानेतरसंनिधौ च प्रधाने कार्यसंप्रत्ययो भवतीति प्रत्ययस्तावत्तत्रैव विज्ञायते, ततश्च भूतपूर्वग्रहणमपि तस्यैव विशेषणमित्याह । 'षष्ठ्यन्तात्प्रत्ययविधानइति' । हेतुगर्भं चेदमभिधानं, यस्मात् षष्ठ्यन्तात्प्रत्ययविधानं तस्मादिति । 'संप्रतीति' । यद्यपि[1] पूर्वं ङ्याप्प्रातिपदिकेनैव संबद्धमासीदिदानीं त्वेवमित्यर्थः । तच्च विधानइति सप्तम्यन्तस्य संप्रतीत्यस्य च पौनरुक्त्यं मन्यमाना विधानशब्दमधिकरणसाधनं सूत्रपरं व्याचक्षते ॥

"अतिशायने तमबिष्ठनौ" ॥ 'अतिशयनमतिशायनमिति' । भावे ल्युट्, यद्यप्यनन्तरमेव वक्ष्यति निपातनाद्दीर्घत्वमिति तथाप्यबाधकान्यपि निपातनानि भवन्तीत्यदीर्घणाप्यर्थकथनमुपपद्यते । अन्ये त्वतिशयोतिशायनमिति पठन्ति, अतिशायनं प्रकर्ष इत्येवान्ये । 'प्रकर्ष इति' । यद्यपि केवलः शेतिः स्वप्ने वर्त्तते तथाप्यतिपूर्वस्य प्रकर्षे वृत्तिः ॥

उपसर्गवशाद्धातुरर्थान्तरविलासकृत् ।
विहाराहारसंहारप्रहारपरिहारवत् ॥
प्रकर्षश्चात्र नाधिक्यं किं तर्ह्यतिशयो मतः ।
सकर्मको ह्ययं शुक्लमतिशेतइतीष्यते ॥

'निपातनादिति' । यदिदमस्मिन्सूत्रे दीर्घोच्चारणं तदेव निपातनं, सौत्रो निर्देश इत्येष परिहारोत्र नोद्भितः, यस्मात्सूत्राद्भु-

१ यद्यपि पूर्वसूत्रव्यापारकाले भूतपूर्वग्रहणं नैवमासीदिदानीमेवमित्यर्थ इति २ पु॰ पा॰ ।

हिरपि प्रयोगोऽस्याभ्युपेयते। एतदर्थमेव च लघुरपि प्रकर्षशब्दो नोपात्तः। 'प्रकृत्यर्थविशेषणं चैतदिति'। न प्रकृत्यर्थो ऽतिशायने वर्त्तमानादिति, तथा हि सति अतिशयप्रकर्षादिभ्य एव स्यात्, नापि प्रत्ययार्थः, तथा हि सति आढ्यस्यातिशयनमाढ्यतममिति स्यात्, आढ्यस्येति कर्मणि कर्त्तरि वा षष्ठी, उभयथाप्याढ्यतमो देवदत्त इति सामानाधिकरण्यं न स्यात्, नापि प्रत्ययार्थविशेषणम्, अन्यस्य कस्य चित्प्रत्ययार्थस्यानिर्द्देशात्, नापि प्रकृतेरेव विशेषणम्, अतिशायविशिष्टान्ङ्याप्प्रातिपदिकादिति, प्रत्ययद्योत्यमतिशायनं प्रकृत्यभिहितस्य प्रधानस्यैवार्थस्य विशेषणं युक्तं न त्वर्थाभिधानं प्रति व्यस्य गुणभूतस्य शब्दस्य, यदा त्वसावगुणभूतस्तदा भवत्येव प्रकर्षयोगः, उच्चतरः शब्दो नीचतरः शब्द इति, ननु शुक्लादिवदेतत्स्यात्, तद्यथा शुक्लतरः पट इति गुणभूतस्यापि शौक्ल्यस्य प्रकर्षो द्रव्यप्रकर्षहेतुस्तथा शब्देप्यस्तु। विषम उपन्यासः। शौक्ल्यादयो हि द्रव्यसमवेताः, युक्तं यत्स्वयं प्रकृष्टा द्रव्यं प्रकर्षयन्ति, शब्दस्तु न तथेति कथं तत्प्रकर्षेण द्रव्यं प्रकृष्यताम्। 'ङ्याप्प्रातिपदिकादिति'। प्रकृतेरिदमुपलक्षणं, सुबन्तात्तु प्रत्ययः, उक्तं हि प्रियकुत्सनादिषु ततः प्रवर्त्तते ऽसौ विभक्त्यन्त इति, घकालतनेषु कालनाम्न इत्यलुग्विधानमप्येवमेवोपपद्यते। 'स्वार्थ इति'। यद्येवं कुमारितमेत्यव्यतिरिक्तं वय इति कृत्वा वयसि प्रथम इति ङीप् प्राप्नोति, कुमारशब्दादुत्पद्येन ङीपावयोर्विशिष्टस्यार्थस्य स्त्रीत्वं द्योतितमिति ङीन्न भविष्यति, तरबन्तात्तु स्त्रीत्वमात्राभिव्यक्तये टाब् भविष्यति, कुमारितम इति युज्यमाने कुटीरः शमीर इतिवल्लिङ्गान्तरं गम्येत, यद्वा नात्र प्रज्ञ एव प्राज्ञः याव एव यावक इत्यादिवदत्यन्तस्वार्थिकत्वं विवक्षितं किं तर्हीषच्छुक्ले शुक्लतरे च गुणयोगस्य भावात् शुक्लशब्द एव प्रवर्त्तितुमर्हति, औपगवादौ तु नैवमित्येतावता स्वार्थिकत्ववाचो युक्तिः, परमार्थतस्त्वस्मिन्प्रयोगे

२ स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह, समवेतसमवेतस्य च वचने लिङ्गं संख्यां विभक्तिं चाऽभिधाय तान् विशेषान् अपेक्षमाणः कृतमात्मानं, प्रियकुत्सनादिषु ततः प्रवर्तते ऽसौ विभक्त्यन्त इति २ पु० पाठः।

प्रकृष्टे शुक्ले शुक्लशब्दस्य प्रवृत्तिरित्ययमंशः प्रत्ययप्रसादेनैव लभ्यते, ततः किं, कुमारशब्दस्य वयःप्रवृत्तिनिमित्तं तमबन्तस्य तु तद्गतः प्रकर्ष इति कुतोऽत्र ङीपः प्रसङ्गः, तदिदमुक्तं, प्रकृत्यर्थविशेषणं च स्वार्थिकानां प्रात्यं भवतीति, अत्रापि यद्यपि तस्मिन्द्रव्ये बहवो गुणाः सन्ति तथापि यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशः प्रत्यासत्तेस्तत्प्रकर्षोऽश्रयः प्रत्ययः, तद्यथा शुक्लादिभ्यो गुणप्रकर्षे पाचकादिभ्यः क्रियाप्रकर्षे जातिशब्देभ्यस्तु जातेः, सर्वत्रैकरूपत्वेन प्रकर्षाभावात्तत्सहचरिता ये वाहदोहादयो धर्मास्तत्प्रकर्षे प्रत्ययः, तद्यथा गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च, गौरियं या समांसमां विजायते, गोतरेयं या सामांसमीं विजायते स्त्री वत्सा च, अश्वोऽयं यश्चत्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ गच्छतीति, एतेन संख्यापरिमाणप्रमाणोन्मानशब्दा व्याख्याताः, नहि स्वतो भवति, द्वितरः प्रस्थतरः वितस्तितरः सुवर्णतरमिति, सर्वथा धर्मद्वारको द्रव्यस्य प्रकर्षो न स्वतः, यथा शुक्लगुणयोगात्पटस्य शुक्लव्यपदेशस्तथा प्रकर्षव्यपदेशोऽपि, तत्प्रकर्षादेवेत्यर्थः, उक्तं च ॥

द्रव्यस्याव्यपदेश्यस्य य उपादीयते गुणः ।
भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥

इति । 'अव्यपदेश्यस्येति' । धर्मयोगमन्तरेण स्वरूपेण व्यपदेष्टुमशक्यस्येत्यर्थः । तदेवमतिशायनशब्दो भावसाधनः प्रकृत्यर्थविशेषणं च स्वार्थिकश्च प्रत्यय इति स्थितम् । अत एव प्रकृतितो लिङ्गवचनानि भवन्ति, यदि तु कर्तृसाधनः स्यात् तदा यदि प्रकृत्यर्थस्ततोऽतिशायनातिशायकातिशयितृप्रभृतिभ्य एव स्यात् तत्रापि स्वार्थे न प्रवृत्तिनिमित्तप्रकर्षे, अथ प्रत्ययार्थस्ततः सामर्थ्यलभ्या समर्थविभक्तिः, सा च यदि तिङन्तेन विग्रहस्तदा द्वितीया शुक्लमतिशेते शुक्लतर इति, अथ कृदन्तेनातिशायनशब्देन तदा षष्ठी शुक्लस्यातिशायनः शुक्लतर इति, तथा च कालीमतिशेते कालः कालितर इति प्राप्नोति, कालमतिशेते काली कालतरेति प्राप्नोति, इह च गर्गानतिशेते गार्ग्यः गर्गतर इति प्राप्नोति,

तथा गार्ग्यमतिशेरते गर्गाः गार्ग्यतरा इति प्राप्नोति, अथ करणसाधनस्तत्रापि प्रकृत्यर्थश्चेद्येन गुणेनातिशेते तद्वाचिनः शौक्ल्यादेरेव स्यात्, शौक्ल्येन हि शुक्लः शुक्लान्तरमतिशेते, प्रत्ययार्थे तु शुक्लादिशब्दादतिशायने गुणे प्रत्ययः प्राप्नोति, गुणिसामानाधिकरण्यं न स्यात् शुक्लतरः पट इति, अथ ण्यन्तात्कर्तरि ल्युड् अतिशाययतीत्यतिशायन इति, एवमपि स एव दोषो यः करणपक्षे, गुणा हि गुणिनं प्रयुञ्जते, अस्माभिः प्रकृष्टैस्त्वं सजातीयमतिशेष्वेति, ततश्च प्रकृत्यन्तात्करणे ल्युटि यो दोषः स एवात्रापि भवति, अथ शेतिरवस्थानार्थः पक्वाशयो जलाशय इतिवत् ततोयमर्थः स्यात् गुणा गुणिनि शेरते अवतिष्ठन्ते तान्गुण्यतिशययति आत्मन्यतिशयेनावस्थापयतीति, ततश्च स एव दोषो यः प्रकृत्यन्तात्कर्तरि ल्युटि, अतिशायनशब्दश्च प्रकृत्यन्तो न साधितः स्यात्, तस्माद्वृत्तिकारोपदर्शित एवार्थो न्याय्यः। 'पटिष्ठ इति'। तुरिष्ठेमेयस्सु, टेरिति टिलोपः। 'गरिष्ठ इति'। प्रियस्थिरेत्यादिना गुरुशब्दस्य गरादेशः, प्रकर्षप्रत्ययान्तादपरेण प्रकर्षप्रत्ययेन न भवितव्यमेकेनैव प्रकर्षस्य द्योतितत्वादिति मन्यमानं प्रत्याह। 'यदा चेति'। 'आतिशायिकान्तादिति'। अतिशये भव आतिशायिकः, आध्यात्मादित्वाट्ठञ्, अनुशतिकादित्वादुभयपदवृद्धिः। 'श्रेष्ठतमायेति'। प्रशस्य श्रः, अत्र प्रकर्षरहितप्रतियोग्यपेक्षया यः प्रकर्षस्तत्रेष्ठन्विहितः, तमप्प्रत्ययस्तु प्रकर्षवत्प्रतियोग्यपेक्षया यः प्रकर्ष इष्ठन्प्रत्ययेनाद्योतितस्तस्मिन्नित्यपौनरुक्त्यं, प्रत्ययद्वयस्य विधीयमानप्रत्ययभेदाच्च द्वे एते वाक्ये, तत्रैकेनेष्ठन् अपरेण तदन्तात्तमप्, तेनैतच्च चोदनीयं, यथा सनन्तान्न सन् भवति तद्विधानवेलायां तदन्तस्य धातोरभावात्, तथा प्रकर्षप्रत्ययान्तादपरेण प्रकर्षप्रत्ययेन न भवितव्यमिति। भाष्ये तु प्रकर्षप्रत्ययान्तादपरः प्रकर्षप्रत्ययो नैव भवतीति स्थितं, तत्कथं न तावत्तरबन्तादपरस्य प्रसङ्गः, यत्र हि त्रयाणामेकः शुक्लः द्वितीयः किंचित्प्रकृष्टः तृतीयश्चात्यन्तं तत्र किल प्रसङ्गः शङ्क्यते, तत्र द्वितीयस्य सदप्युत्कृष्टत्वं तृतीयसंनिधावकिंचित्करं राजसंनिधाविवामात्यस्येति, द्वितीयात्तावत्तरप् भवति तृतीयादपि न भवति

तस्मिन्नेव प्रयोगे त्रयाणामपेक्षितत्वेन द्विवचनोपपदत्वाभावात्, एतेनेय-सुन्व्याख्यातः, नापि तमबन्तादपरस्य प्रसङ्गः, यत्र हि चतुर्णां द्वौ शुक्लौ तृतीयः किंचिदुत्कृष्टः चतुर्थस्त्वात्यन्तं तत्र किल प्रसङ्गः शङ्क्यते तत्र तृतीयस्य सदप्युत्कृष्टत्वं चतुर्थसंनिधौ पूर्ववदकिंचित्करं चतुर्थात्तु तमबेव भवति, एतेनेष्ठन्व्याख्यातः, कथं तर्हि श्रेष्ठतमाय कर्मणइति, छान्दसत्वात्स्वार्थिकस्तमब् द्रष्टव्यः, युधिष्ठिरः श्रेष्ठतमः कुरूणामिति त्वन्याय्यमेव मन्यते ॥

"तिङश्च" ॥ 'पचतितमति'। किमेतिङव्ययेत्यादिनाम्प्रत्ययः। 'गुणवचने तस्य नियतत्वादिति'। अत एव सूत्रार्थकथनवेलायामपि तयप् प्रत्ययो भवतीत्युक्तं, न चानुवृत्तिसामर्थ्यान्नियमस्य बाधः, तमब्विधानेऽप्यनुवृत्तेरुपपन्नत्वात् ॥

"द्विवचनविभज्योपपदे तरबीयसुनौ" ॥ 'द्वयोरर्थयोर्वचनं द्विवचनमिति'। करणे ल्युट्, कर्मणि षष्ठ्याः समासः, येन पदेन द्वावर्थावुच्येते तद् द्विवचनमित्यर्थः, एतेनान्वर्थस्य द्विवचनस्येदं ग्रहणं न पारिभाषिकस्येति दर्शयति, पारिभाषिकस्य हि ग्रहणे ऽस्माकं च देवदत्तस्य च देवदत्तोभिरूपतर इत्यत्र न स्यात्, अन्वर्थग्रहणे तु भवति, तथा हि अस्माकमित्यनेनैकोर्थ उच्यते, अस्मदो द्वयोश्चेत्येकस्मिन्नेवार्थे बहुवद्भावविधानाद्देवदत्तस्य चेत्यनेनापि द्वितीयोर्थ उच्यतइति भवत्येतदन्वर्थं, द्विवचनमुपपदं, विभक्तव्यः, पृथक्कर्तव्यः, स चातिशय्यमानस्तस्य चोपपदत्वं नातिशयितुस्ततः प्रत्ययविधानात्, अपर आह। आढ्यादेरतिशयितृविशेषणात्प्रत्ययो विधीयते नातिशयितुर्माधुरादेरिति तस्याप्युपपदत्वमविरुद्धं पृथक्कारोपि तस्याप्यविशिष्ट इति। 'निपातनाद्यदिति'। ऋहलोर्ण्यदिति ण्यतोपवादः, तेन विभाज्यमिति नैव भवति, विभाज्यशब्दस्य तु स्मृतिषु प्रयुक्तस्य साधुत्वं चिन्त्यं, द्व्यर्थे विभज्ये चोपपदइति सूत्रे तु द्विवचनं च विभज्यं च द्विवचनविभज्यं तच्च तदुपपदं चेति कर्मधारयात्सप्तमी, अन्वर्थं चोपपदमुपोच्चारितं पदमुपपदमिति, तच्च विग्रहवाक्यएव प्रयुज्यते, वृत्तौ तु गतार्थत्वान्नावश्यं प्रयुज्यते, एवं चोप-

पदग्रहणं स्पष्टार्थं, इह द्वे उपपदे द्वे च प्रकृती ङ्याप्प्रातिपदिकात्ति-ङश्चेति, प्रत्ययावपि द्वावेव, ततश्च यथासंख्यप्रसङ्ग इत्यत आह । 'यथासंख्यमिति'। दृष्टिरेवम् । 'अयमनयोरिति'। अनयोरित्येत-दत्र द्व्यर्थमुपपदम्। 'पटीयानिति'। पूर्ववट्टिलोपः, उगित्वान्नुम्, सान्त-महत इति दीर्घत्वं, हल्ङ्यादिसंयोगान्तलोपौ । 'माथुरा इत्यादि'। किं पुनरत्र विभज्यं पाटलिपुत्रका इत्याह, तथा च तत्र पञ्चमी विभक्तेरिति पञ्चमी भवति, यद्यप्यत्रापि माथुराणामेको राशिः पाट-लिपुत्रकाणां चापर इति राश्यपेक्षं द्व्यर्थत्वमस्ति तथापि नासौ शब्देनो-पादीयते, प्रत्युतावयवभेद एव, अत एव बहुवचनम्, इह च माथुराः पाटलिपुत्रकेभ्यः सांकाश्यकेभ्यश्चाभिरूपतरा इति न राश्यपेक्षमपि द्व्यर्थ-त्वमस्ति, तस्माद्विभज्योपपदग्रहणं कृतम्, इह दन्तोष्ठस्य दन्ताः स्निग्धतराः पाणिपादस्य पाणी सुकुमारतरावित्यत्र तरप् प्राप्नोति, किं कारणं समा-हारस्यैकत्वात्, न च गुणभूतवर्णिपदार्थाश्रयः प्रत्ययः, तेषां बहुत्वात्, द्वाविमद्वन्ताः, द्वावोष्ठौ । अत्राहुः । वृत्तावभेदैकत्वसंख्यामुपाददते वर्णिपदानि, ततश्च भेदपरित्यागादभेदैकत्वसंख्यायाश्चोपादानाद् एवं-भूतदन्तोष्ठलक्षणार्थद्वयाश्रयः प्रत्यय इति, इतरेतरयोगद्वन्द्वे त्ववयवार्थ-भेदसद्भावाद्व्यर्थता नास्तीति तरप् भवति, प्रतन्यवेधानां प्रता दीर्घ-तमा इति विभज्योपपदाश्रयोऽपि न भवति, कथं, प्रतियोग्यपेक्षत्वात्प्र-कर्षस्य, सामर्थ्यलभ्ये विभागे विभज्योपपदग्रहणमवधारणार्थं विभाग एव यत्र शब्देन प्रतिपाद्यत इति, इह तु निर्द्धारणाश्रयनिर्द्देशो निर्द्धा-र्यमाणस्यापि साधारण इति न विभाग एव केवलः किं त्वविभागोऽपि, एतेन पञ्चमी विभक्तेरिति पञ्चमी व्याख्याता, इह पटुर्वान्पटुरासीत्पटु-तरश्चैवम इत्येकस्यापि धर्मिणो गुणभेदेन द्वित्वाध्यारोपात्प्रतियोग्य-पेक्षः प्रकर्षस्तदाश्रयश्च प्रत्ययः, व्यपदिशन्ति चान्य एवासि संवृत्तः कश्चित्स एवासि धनंजयस्त्वमिति ॥

"अजादी गुणवचनादेव" ॥ एवकारः किमर्थः, नियमो यथा विज्ञायेत, अन्यथा प्रकर्षे ऽजाद्योर्विधानादप्रकर्षे विधिः स्यात्, अतिशा-

यनइत्यनुवर्तिष्यते, तत्रैव पुनर्वचनं नियमार्थं भविष्यति नार्थ एवकारेण, तत्राह । 'एवकार इष्टतोवधारणार्थ इति' । असति ह्यस्मिन्विपरीतोपि नियमः संभाव्यते, अजाद्यी एव गुणवचनादिति, तत्र को दोषः, गुणवचनाद्धृज्ज्वनादी न स्यातां तस्याजाद्योर्नियतत्वात्, यत एवकारस्ततोन्यत्रावधारणमिति । अजाद्योश्चानियतत्वादगुणवचनादपि तयोः प्रसङ्गः, इदमतिबहु क्रियते अजादी गुणवचनादेवेति, एवं तु वक्तव्यमति-शायने तमप्, गुणवचनादिष्ठन्, द्विवचनविभज्योपपदर्येयसुन्, गुणवचनादित्येव, ततस्तरप् च, गुणवचनादिति निवृत्तं, सत्यं, प्रशस्यस्य श्र इत्येवमाद्यर्थं त्वजादी इत्युक्तम्, एवं तर्हि प्रशस्यस्य श्रोजाद्योरित्येवास्तु, एवमपि ह्येवकारो न वक्तव्यो भवति, त्वत्पक्षेपि तरप् चेति चकारः क्रियते तत्तुल्यं भवति ॥

"तुश्छन्दसि" ॥ 'पूर्वेणेत्यादि' । नियमबाधेन प्रकृत्यन्तरस्याप्यनुज्ञानमात्रं क्रियते न त्वपूर्वो विधिरित्यर्थः, तेनोपाधिसंकरो न भवति । 'करिष्ठ इति' । कर्तृशब्दात्तृन्नन्तादिष्ठन्, अत एव कर्मणि द्वितीया भवति, तृजन्तादेव वा भवतु, द्वितीया तु कृतपूर्वीकटमितिवद् द्रष्टव्या । 'दोहीयसीति' । लिङ्गविशिष्टपरिभाषया दोग्धीशब्दात्प्रत्ययः । भस्याढे तद्धिते पुंवद्भावेन ङीपो निवृत्तिः, यद्वा सिद्धश्च प्रत्ययविधाविति वचनान्ङीपि निवृत्ते दोग्धृशब्दादेव प्रत्ययः, ततस्तुरिष्टेमयःस्विति तृचि निवृत्ते निमित्ताभावाद्धत्वजश्त्वयोरपि निवृत्तिः ॥

"प्रशस्यस्य श्रः" ॥ 'अजाद्योः प्रत्यययोः परत इति' । ननु चाजादी इति प्रथमान्तं प्रकृतं न सप्तम्यन्तं तत्कथमयमर्थो लभ्यतइत्यत आह । 'अजादी इति' । 'प्रकृतस्येत्यादि' । प्रकृतस्य या विभक्तिः प्रथमा सा सप्तमीरूपेण विपरिणम्यते ऊह्यतइत्यर्थः । 'एवं तर्हीत्यादि' । यत्र यावेव संभवतस्तरप्तमपौ तयोरेव परतो ऽयमादेशः कस्मान्न भवति, नैवं भवितुमर्हति, अजादी इत्यनुवृत्तिसामर्थ्यात्, अथाचैवाजाद्योर्विधिः कस्मान्न विज्ञायते, प्रशस्यशब्दादजादी भवतः श्रश्चास्यादेश इति, तत्रायमप्यर्थो विभक्तिविपरिणामो न कर्त्तव्यो भवति, नैवं शक्यं, तरप्त-

मपो हि न स्यातां, विशेषविहिताविष्ठन्नादी बाधेयाताम्, उपाधीनां च संकरः स्यात् इष्ठन्विषये ईयसुन् तद्विषये चेष्ठन्निति। 'तद्विषयइति'। स प्रशस्यशब्दो विषयो यस्य स तद्विषः, सप्तम्यन्तपाठे तु स एव विषयस्तत्रेत्यर्थः। 'नियमो न प्रवर्त्ततइति'। नियमाप्रवृत्तिज्ञापनद्वारेणाजादिभावो ज्ञाप्यते न तु साक्षादित्यर्थः, अन्यथा पुनरजज्ञोर्बाध उपाधिसंकरश्च स्यात्, उक्तेन प्रकारेण स्वशास्त्रेणैवाज्ञोर्विधानाचैतद्दोषद्वयमपि भवति, कथं पुनर्यथाश्रुतसंबन्धसंभवेपि विपरिणामः शक्य आश्रयितुं, शृणु, अजाद्योर्विधिरिष्टश्चेत्पञ्चम्या निरदेक्ष्यत्। किं चैवं संनियोगार्थश्चकारोप्यकरिष्यत। 'टिलोपयस्येतिलोपाविति'। यस्येतीत्यनेन लोपो यस्येतिलोपः, कर्तृकरणे कृता बहुलमिति समासः, तत्रानुकरणत्वादस्य वामीयमित्यादिवद्विभक्तेर्लोपः, आनुपूर्व्यस्त्वनाक्षत्वाच प्रतिबिध्यते॥

"ज्य च॥ योगविभाग उत्तरत्र ज्यादेश एव यथा स्यात् श्रादेशो माभूदिति। 'अयमनयोरिति'। अतिशयेन प्रशस्यइति विपरिणामेनापेक्ष्यते, न पुनरन्तरेणैकवन्यता, एवं सर्वत्र॥

"वृद्धस्य च"॥ स्वरूपस्य ग्रहणं न तु वृद्धिर्यस्याचामादिरिति पारिभाषिकस्येत्याह। 'वृद्धशब्दस्येति'। अत्र च व्याख्यानमेव शरणम्। 'तयोश्चेत्यादि'। यत्पूर्वमुक्तम् एवमुत्तरेष्वपि योगेषु विज्ञेयमिति तदेवानेन स्मारितम्। 'वचना[१]त्पक्षे सोपि भवतीति'। ननु च वर्षादेशस्येमनिजवकाशः स्यात्, न, वृद्धशब्दादिमनिचो भावात्, यद्येवं वर्षादेशोपीहैव वक्तव्यः, वृद्धस्य वर्षिश्चेति, एवं हि द्विर्वृद्धग्रहणं न कर्त्तव्यं भवति, सत्यं, तथा तु न कृतमित्येव, अपर आह इष्ठनीयसुनोरिवेमनिचोपि सद्भावः कल्प्यते, तेन वर्षिमेत्यपि भवति, तस्य मते वर्षादेशस्येमनिचि चरितार्थत्वादिष्ठनीयसुनोरनेन ज्यादेश एव प्राप्नोति, तस्माद्वावास्ययोः कन्यतरस्यामित्यत्रेदमनुवर्त्तते तेन ज्यादेशेन मुक्ते पक्षे वर्षादेशः॥

"अन्तिकबाढयोर्नेदसाधौ"॥ 'निमित्तयोर्यथासंख्यमिह नेष्यतइति'। अजाद्योरिति प्रकृतयोरिष्ठनीयसुनोर्ग्रहणात्तयोश्च क्रमेणापदे-

१ मुद्रितमूलपुस्तके वचनसामर्थ्यादिति पाठः।

शादजहत्क्रमयोरेव प्रतीतेर्यथासंख्यप्रसङ्गं मन्यते, कस्मात्पुनरिष्यमाणमपि न भवति, विपरीतक्रमस्यापि संभवात् । तथाहि । क्रयोरज्ञाक्षेरित्यपेक्षायामानन्तर्यादीयसुंस्तावत्प्रतीयते, द्विवचनानुरोधात्त्विष्ठन्नपीत्येवमपि क्रमः संभवति, तदनयोः क्रमयोर्नान्यतरः क्रमो निर्द्धारयितुं शक्य इत्यनाश्रयणमेव तयोर्युक्तम् ॥

"युवाल्पयोः कनन्यतरस्याम्" ॥ युवेति न संज्ञायूनो ग्रहणं किं तर्हि स्वरूपस्य, अल्पसाहचर्याद्व्याख्यानाच्च, अन्यतरस्यांग्रहणमल्पशब्दार्थं, युवशब्दस्य तु स्थूलदूरयुवेतिवचनात्सिद्धो विकल्पः । 'यविष्ठ इति' । स्थूलदूरादिसूत्रेण यणादिपरं लुप्यते पूर्वस्य च गुणः । 'कनीयानिति' । प्रकरणादिवशाद्युवाल्पयोरन्यतरावसायः, प्रकृत्यैकाजिति प्रकृतिभावाट्टिलोपो ऽल्लोपेन इत्यल्लोपश्च न भवति ॥

"विन्मतोर्लुक्" ॥ विन्मतोरित्युत्सृष्टानुबन्धयोर्विनिमतुपोर्द्वन्द्वात्षष्ठीद्विवचनम् । अथ विन्ग्रहणं किमर्थं, यावता येभ्यो विन् तेभ्यो मतुबपि भवति, तस्यैव लुकि स्रजिष्ठ इत्यादि सिद्धं, न च विन इष्ठनीयसुनोः श्रवणप्रसंगः, तदन्तात्तयोरभावात्, अस्मादेव हि लुग्वचनाद्विनन्तात्तयोर्भावो ज्ञाप्यते, यदा तर्हि विन्नन्तात्तत्करोति तदाचष्ट इति णिच् क्रियते, तदा विनः श्रवणं मा भूदित्येवमर्थं विनो लुग्वचनं, स्रग्विणमाचष्टे स्रजयति ॥

"प्रशंसायां मतुप्" ॥ 'प्रकृत्यर्थविशेषणं चैतदिति' । प्रत्यार्थत्वे तु वैयाकरणस्य प्रशंसा वैयाकरणरूप इति प्राप्नोति, वैयाकरणरूपो देवदत्त इति सामानाधिकरण्यं न स्यात्, तस्मात्प्रकृत्यर्थविशेषणं प्रशंसाविशिष्टेभ्य इति, स पुनः प्रशस्तो न तु प्रशंसिता, अनभिधानात् । 'स्वार्थ इति' । यद्येवं कुमारीरूपेत्यत्रानतिरिक्तं वय इति कृत्वा ङीप् प्राप्नोति, नैष दोषः । कुमारीशब्दादुत्पन्नेन ङीपा वयोविशिष्टार्थगतस्य स्त्रीत्वस्य द्योतितत्वाद्रूपबन्तस्य स्त्रीत्वमात्रमभिव्यङ्क्तुं टाबेव क्रियते, न च ङीपैव तदभिव्यक्तमिति टापो ऽप्रसंगः, कुमारीरूपइत्युच्यमाने हि कुटीरादिवल्लिङ्गान्तरं प्रतीयेत, यद्वा प्रवृत्तिनिमित्तभेदान्ङीपो ऽप्रसङ्गः, कुमारश-

ब्दस्य वयो निमित्तं, रूपवन्तस्य तु तद्गता प्रशंसा, तदाह । 'स्वार्थिक-श्चेत्यादि'। अत्रापि प्रवृत्तिनिमित्तस्य प्रशंसायामयं प्रत्ययः, तेन यो व्याकरणे ऽनिपुणः प्रशस्तश्च वंशशीलादिना तत्र वैयाकरणरूप इति न भवति, क्वचित्तु सहचरितधर्मप्रशंसायामपि भवति, गोरूपोऽयं यः सम्यग्वहतीति, अथ कथं वृषलादिशब्देभ्यः प्रत्ययः, ते हि सदा निन्दावचनाः, तदभिधेयानां काकादिवन्निकृष्टत्वादत आह । 'प्रकृत्यर्थस्येति' । वैशिष्ट्यं परिपूर्णता, तस्मिन्सति प्रशंसा भवति, तथा च वृषलादिशब्दा अपि स्वार्थस्य पूर्णत्वे सति प्रशंसाविशिष्टएवार्थे प्रवर्त्तन्तइति तेभ्योपि सिद्धः प्रत्यय इति भावः । 'वृषलरूप इति' । यद्यप्ययं जातिवचनः, जातेश्च न्यूनत्वं पूर्णत्वं वा न भवति तथापि सहचरितधर्माल्पत्वबहुत्वापेक्षं न्यूनत्वं पूर्णत्वं च द्रष्टव्यं, यद्वा गुणसमुदाये शब्दप्रवृत्तेः शब्दार्थस्यैवैतदुभयं भवति । 'यः पलाण्डुनेति' । सहयोगे तृतीया, कश्चिद्वृषलः पलाण्डुं भक्षयति कश्चित्सुरां पिबति यस्तूभयं करोति तस्य परिपूर्णवृषलत्वं, तथा चोरशब्दार्थस्यापि सुगुप्तवस्त्वपहरणेन परिपूर्णता भवति । 'अक्ष्णोरप्यञ्जनं हरेदिति' । संभावने लिङ्, एवंविधमप्यस्य चौर्यं संभवतीत्यर्थः । अक्ष्णोरञ्जनं हरतु वा मा वाहार्षीत्, नन्वेवमपि यदा निन्दाप्रतिपादनाय वृषलरूप इत्यादि प्रयुज्यते तदा न सिद्ध्यति, निन्दैव हि तदा प्रकृत्यर्थस्य वैशिष्ट्याद्भवति, तस्मात्प्रशंसाग्रहणमपनीय वैशिष्ट्यग्रहणमेव कर्त्तव्यं, यदाह, सिद्धं तु प्रकृत्यर्थस्य वैशिष्ट्यवचनादिति, वृत्तिकारस्तु मन्यते चोररूपोयमित्यादौ प्रशंसैव शब्दार्थः, निन्दाप्रतीतिस्तु वाक्यनिबन्धनेति, दृश्यते च प्रशंसापराणामपि निन्दापरत्वं यथा राक्षस इति पौरुषातिशयप्रशंसावचने प्रशंसा गम्यते निर्घृणत्वप्रतिपादने तु निन्दा । 'पचतोरूपं पचन्तिरूपमिति' । नन्वत्र द्विवचनबहुवचनप्रसङ्गः, स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्त इति कृत्वा, तत्राह । 'क्रियाप्रधानमाख्यातमिति' । यद्यप्याख्यातस्य क्रियासाधनपुरुषसंख्याकालोपग्रहरूपोनेकोर्थस्तथापि तेषु तस्य क्रियैव प्रधानमर्थः, कथं

ज्ञायते यत् क्रियां पृष्टस्तद्[1]न्तेनाचष्टे, देवदत्तः किं करोति पचतीति । ननु च द्रव्यमपि पृष्टस्तिङन्तेनाचष्टे यथा क एष देवदत्तो यः पचतीति, युक्तमत्र य इति हि पदान्तरेण द्रव्योपलक्षणाय गुणभावं क्रिया नीयते, अत एव केवलेनाख्यातेन प्रतिवचनाभावः, नहि भवति को देवदत्तः, पचतीति, तस्मात् क्रियाप्रधानमाख्यातं, तिङन्तोपात्तार्थापेक्षं च क्रियायाः प्राधान्यमुच्यते, व्रीहिनवहन्तीत्यादौ तु द्रव्यसंस्कारार्थत्वाद्वघातादेर्व्रीह्यपेक्षमप्राधान्यमस्त्येव, अपर आह । अत्राप्यवघातादेरेव शाब्दं प्राधान्यं, साध्यत्वात्, न तु व्रीह्यादेः साधनत्वात्, आर्थं तु तस्य प्राधान्यमिति । 'एका च क्रियेति' । निवृत्तभेदा सर्वत्र क्रियाख्यातेषु गम्यते, कथं तर्हि द्विवचनबहुवचने भवतः, पचतः पचन्तीति, नैते क्रियाभेदापेक्षे द्विवचनबहुवचने किं तर्हि साधनभेदापेक्षे, अत एव भवद्भिरास्यतइत्यादौ केवलक्रियावचने द्विवचनबहुवचनाभावः, न च कर्तृभेदः क्रियाभेदेन व्याप्तः, एकफलोद्देशेन प्रवृत्तामेकामेव पाकव्यक्तिं बहुष्वपि कुर्वत्सु भवन्तः पचन्ति, भवद्भिः पच्यतइति दर्शनात्, तस्मादाख्यातवाच्या क्रियैकेति सिद्धं, तेन रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भवतः । अथ यथा तिङन्ते साधनभेदाश्रये द्विचनबहुवचने भवतस्तथा रूपबन्तादपि कस्मान्न भवतः, उक्तोत्तरमेतत्, क्रियाप्रधानमाख्यातमिति, स्वार्थिकस्य हि प्रकृतितो लिङ्गवचनप्राप्तिः, तत्र च क्रियाप्रधानभूता सा चैका, ततश्च प्रधानभूतप्रकृत्यर्थानुरोधेन भवद्वचनमेकवचनमेव भवति, पचतिरूपमित्यादावपि कर्तुः संख्याऽभिधीयते, सुपा तु क्रियाया एकत्वम्, अथ वा तिङोक्तत्वाद्रूपप्प्रत्ययान्ताद् द्विवचनबहुवचने न भविष्यतः, एकवचनं तु भविष्यति तस्यौत्सर्गिकत्वात्, एकवचनमुत्सर्गः करिष्यतइति, एतच्च तत्रतत्र व्याख्यातं, यदि तर्हि क्रियाप्रधानमाख्यातं नपुंसकलिङ्गमपि रूपबन्तस्य न स्यात्, क्रियाया असत्त्वभूतत्वेन लिङ्गाभावादत आह । 'नपुंसकलिङ्गं त्विति' । अथ तमबादेः रूपपश्च को विषयविभागः, यावता ऽतिशायनमपि पूजानिन्दाविषयं पटुतमः पापीया-

१ तिङन्तेनेति २ पु॰ पा॰ ।

निति, रूपप्प्रत्ययोप्युभयविषयः, पटुरूपश्चोररूप इति । उच्यते । अतिशायनं समानगुणप्रतियोग्यपेक्षं, वैशिष्ट्यं तु तन्निरपेक्षमिति स्पष्ट एव विषयभेदः ॥

"ईषदसमाप्तौ कल्पब्देश्यदेशीयरः" ॥ 'संपूर्णतेति' । प्रवृत्तिनिमित्तस्य पौष्कल्यमित्यर्थः । पदार्थशब्देन पर्यवसानभूमिर्विवक्षिता । 'प्रकृत्यर्थविशेषणं चैतदिति' । न प्रत्ययार्थः, यदि तथा स्याद् गुडस्येषदसमाप्तिर्द्राक्षाया गुडकल्पा द्राक्षाया इति स्यात्, गुडकल्पा द्राक्षेति द्रव्येण सामानाधिकरण्यं न स्यात्, एकवचनमेव च स्यात्, इष्यते चाभिधेयवल्लिङ्गवचने स्यातामिति, तस्मात्प्रकृत्यर्थविशेषणम् । 'स्वार्थे इति' । न च कुमारिकल्पेत्यत्राप्यनतिरिक्तं वय इति ङीपः प्रसङ्गः, नहि कल्पबन्तस्य वयःप्रवृत्तिनिमित्तं किं तर्हि तद्गतेषदसमाप्तिः, ईषदसमाप्तः पटुः पटुकल्पो मृदुकल्प इति, ननु च योऽर्थ एतावानेवेति परिज्ञातस्तस्य समाप्तिर्वा भवत्यसमाप्तिर्वा, न च पाटवादिगुण एतावानिति निर्ज्ञातः, यावत्तावदपि हि पाटवं भवत्येव तत् कथमस्येषदसमाप्तिः, एतेन जातिशब्दा व्याख्याताः, नहि तेऽनुक्तपरिमाणमर्थमाचक्षते, इदं तु युक्तमुदाहर्तुं कृतकल्पं भुक्तकल्पमिति, धात्वर्थो हि फलावच्छिन्नो व्यापारनिचयोऽनुक्तपरिमाणः, नन्वत्रापि भूते क्तः, फलनिष्पत्तौ च धात्वर्थो भूतो भवति, भूतस्य च तस्य कुत ईषदसमाप्तिः, यदा तर्हि क्रियैकदेशापवर्गाश्रयो भूते क्तस्तदोदाहरणं कृतकल्पं वस्त्रमिति, तथा च कृतादय एकदेशकरणाश्रया प्रयोगा दृश्यन्ते, यदा भविष्यत्कालाया ईषदसमाप्तायाः क्रियाया आशंस्यमानत्वादाशंसायां भूतवच्चेति भविष्यति क्तप्रत्ययः, तदापि भवत्युदाहरणम्, एवं जीतः क्तः, मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमानविषयक्तान्तादपि युक्तः प्रत्ययः, पूजितकल्पं जातकल्पमिति, तथा तिङन्तमपि कालत्रयविषयं भवत्युदाहरणं, पचतिकल्पं पक्ष्यतिकल्पम् अपाक्षीत्कल्पमिति, गुणवचनं त्वयुक्तं, तदपि युक्तं, ननु चोक्तं यावत्तावदपि पाटवं भवत्येव नास्येषदसमाप्तिरिति, नैतदस्ति, लोकत एव गुणस्यापीयत्ताया निर्ज्ञातत्वात्, लोके हि पटुरयमित्युच्यते, यो लघुनैवोपायेन साध्यार्थान्साध-

यति यस्तु न तथा साधयति किं त्वीषदूनं स पटुकल्पः, तद्विपर्ययेण मृदुमृदुकल्पौ व्याख्यातौ, जातिवचने कथं, गुडकल्पा द्राक्षा तैलकल्पा प्रसन्नेति, उच्यते । गुडगतमाधुर्याश्रयेण द्राक्षायां गुडत्वारोपाद्गुडजात्यभावाच्च ईषदसमाप्तं गुडत्वं द्राक्षायाः, तथा गुडकल्पो गुड इत्यपि भवति, कथं पुनः स एवेषदसमाप्तः संभवति, गुणहानेः, यावन्माधुर्यं गुडस्य प्रसिद्धं न तावत्पुराणत्वादिदोषोपहतस्य, तेनासावीषदसमाप्तो गुड इत्युच्यते ॥

"विभाषा सुपो बहुच्पुरस्तात्तु" ॥ 'ईषदसमाप्तिविशिष्टेऽर्थे वर्त्तमानादिति'। ल्यब्लोपपञ्चमी, एवंभूतं सुबन्तं प्रकृतित्वेनाश्रित्येत्यर्थः । सूत्रे तु सुप इति षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी । 'स च पुरस्तादेवेति'। एतेनानेकार्थत्वान्निपातानां तुशब्दोऽवधारणे वर्त्ततइति दर्शयति, असति तु तुशब्दे प्रत्ययात्पूर्वत्वस्यापि विधेयतया प्राधान्याद्विभाषाग्रहणेन संबन्धः स्यादिति भावः । भाष्यकारस्तु मन्यते, उदश्वितोऽन्यतरस्यामित्यादौ यथा परत्वं न विकल्पते तत्कस्य हेतोः, प्रत्यय एव परत्वविशिष्टो विधीयते, तत्र विशेषणस्य गुणत्वाद्विकल्पेन न संबन्धः, गुणानां च परार्थत्वादिति न्यायात्, तद्वदिहापि विभाषाग्रहणेन बहुजेव संभंत्स्यते न पुरस्तादित्येतत्, तुशब्दस्य त्ववधारणार्थस्यान्यदेव प्रयोजनं पुरस्तादेव सर्वं भवतीति, तेन लिङ्गसंख्ये अपि प्राक्प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव भवतः, प्रयोगश्च प्राक् प्रकृतेर्भवतीति, तेन बहुगुडो द्राक्षा, लघुर्बहुतृणं नर इति प्रकृतिवल्लिङ्गम्भवति नाभिधेयवत्, एवं च बहुगुडेति स्त्रीलिङ्गपाठः प्रमादजो द्रष्टव्यः, इतरथा भाष्यविरोधात् । ननु च स्वार्थिकत्वादेव प्रकृतितो लिङ्गवचने भविष्यतः, एवं तर्ह्येतज्ज्ञापयति ईषदसमाप्तौ ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गवचने भवत इति, तेन गुडकल्पा द्राक्षा तैलकल्पा प्रसन्नेति सिद्धं भवति । 'चित्करणमन्तोदात्तार्थमिति'। तच्चान्तोदात्तत्वं सप्रकृतेः समुदायस्य भवति न बहुचः, चितः सप्रकृतेर्बह्वकजर्थमिति वचनात्, यद्येवं बहुपटव इति सुबन्तस्य पुरस्तादुत्पत्तौ जस उदात्तत्वं प्राप्नोति,

स्यादेवं यदि प्रागुत्पन्नो जसवतिष्ठेत, इह तु बहुच्युत्पन्ने समुदायस्येष-दसमाप्तिलक्षणेनार्थवत्त्वात्प्रातिपदिकत्वे सति सुपो धातुप्रातिपदिक-योरिति लुकि पुनरपरो जसुत्पद्यते तस्य च प्रकृत्यनेकदेशत्वाच्चोदात्तत्वं, ननु समासग्रहणस्य नियमार्थत्वात्प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिक-संज्ञा न प्राप्नोति, ज्ञापकात्सिद्धं, यद्युयमप्रत्ययइति प्रतिषेधं शास्ति तज्ज्ञापयति भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न तु समा-सग्रहणेन व्यावृत्तिरिति । 'विभाषावचनादित्यादि' । अन्यथा तिङ-न्तेषु सावकाशाः कल्पबादयः सुबन्ते विशेषविहितेन बहुचा देशभेदेऽपि समानार्थेन बाध्येरन् । 'सुब्ग्रहणमित्यादि' । अन्यथा तिङश्चेत्य-धिकारात्कल्पबादिवद्बहुजपि तिङन्तस्यापि पुरस्तात्स्यात्, प्रातिपदिक-निवृत्त्यर्थं तु सुब्ग्रहणं न भवति, विशेषाभावात् । ननु चायमस्ति विशेषो बहुसेचो बहुसेचः सुबन्तादुत्पत्तौ सत्यां सात्पदाद्योरिति षत्वनिषेधः सिद्ध्यति प्रातिपदिकात्तूत्पत्तौ षत्वप्रसङ्गः, नैष दोषः । सुबन्तादप्युत्प-त्ताववश्यमत्र कुत्वनिषेधार्थो यत्नः कर्तव्यः स एव प्रातिपदिकादुत्पत्तौ षत्वनिषेधार्थः करिष्यते । स च[1] न लुमताङ्गस्येत्यत्रैव दर्शितः, इह तरप्तमपोरवकाशः प्रकर्षस्य वचनमीषदसमाप्तेरवचनं पटुतरः पटुतमः, कल्पबादीनामवकाश ईषदसमाप्तेर्वचनं प्रकर्षस्यावचनं पटुकल्पो मृदुकल्पः, उभयवचना[2]दुभयप्रसङ्गे परत्वात्कल्पबादिषु कृतेषु प्रकर्ष-द्योतनाय पुनः प्रसङ्गविज्ञानात्तदन्तात्तरप्तमपो भवतः पटुकल्पतरो मृदुकल्पतर इति, यदि तदन्ताद्भवन्तो यत्प्रधानस्तदन्तस्तत्प्रकर्षं प्राप्नुतः, किंप्रधानश्च तदन्तः, ईषदसमाप्तिप्रधानः, प्रकृत्यर्थप्रकर्षं चेष्यते, नैष दोषः, नेषदसमाप्तेः प्रकर्षः सम्भवति, नहीषदर्थस्यासमा-प्तेर्वा प्रकर्षे ईषदसमाप्तिर्भवति ॥

"प्रकारवचने जातीयर्" ॥ 'तस्य वचनइति' । वचनं द्योत-नम् । 'सुबन्तादिति' । अत्रापि तिङ्निवृत्त्यर्थं सुप इत्यनुवर्ततइति

१ यत्न इत्यधिकं २ पुस्तके ।
२ उभयवचने इति २ पु॰ पा॰ ।

दर्शयति । 'प्रकारवति चायमिति' । तेन विषयभेदाद्विशेषविहितेनापि थाला जातीयरो बाधा न भवति थालन्ताच्च जातीयर् सिद्धो भवतीति भावः, स्वभावश्चात्र हेतुः ॥

"प्रागिवात्कः" ॥ 'तिङन्तादयं प्रत्ययो नेष्यतइति' । तदर्थमत्र सुप इत्येव संबन्धनीयमिति भावः । 'अकजिष्यतइति' । तदर्थं तत्र सुपस्तिङश्चेत्युभयमपि संबन्धनीयमिति भावः, कथं पुनरनुवर्त्तमानं शक्यमसंबद्धुं तत्राह । 'तिङश्चेत्यनुवृत्तमिति' । अत्र च व्याख्यानमेव शरणम् । इह प्राक्कुत्स्या इति वक्तव्यं नहि कुटीशमीशुण्डाभ्यो र इत्यारभ्यास्योपयोगः प्रत्ययान्तरैरवष्टब्धत्वात्, उत्तरार्थं त्वियतोवधेर्वक्तव्यं वा बहूनामित्यत्र हि वावचनमकजर्थमेवमपि प्राक्कन इति वक्तव्यम् अवक्षेपणे कनित्ययमवधिः, कुतो नु खल्वेतद्द्वयमेव कनवधिर्न पुनर्ह्रस्वे सञ्ज्ञायां कन् कुत्सिते सञ्ज्ञायां कनित्येतयोरन्यतरोवधिः स्यात् ॥

"अव्ययसर्वनाम्नामकच् प्राक् टेः" ॥ 'कस्यापवाद इति' । ननु च विरोधे सति बाध्यबाधकभावो भवति काकचोश्च देशभेदान्नास्ति विरोधस्तत्कथं तस्यापवादः, नावश्यं देशकृत एव विरोधः किं तर्ह्यर्थकृतोपि, काकचोश्च प्रयोजनमेकमज्ञाताद्यर्थद्योतनं नाम तस्मिन्नकचा कृते प्रयोजनाभावात्को न भविष्यति । 'सर्वके इति' । अकचस्तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणाज्जसः शी भवति, के तु सति न स्यात् । 'द्वयमपीहानुवर्त्ततइति' । यद्येवं सर्वत्र सुबन्तस्य प्रातिपदिकस्य च प्राक् टेः प्रत्ययप्रसङ्गस्तत्राह । 'तत्रेति' । 'क्वचित्प्रातिपदिकस्येति' । ओकारसकारभकारादौ विभक्तौ । 'क्वचित्सुबन्तस्येति' । उक्तादन्यत्र विभक्तौ । 'त्वयकीति' । अकचो द्वितीयोकार उच्चारणार्थः, चित्करणं तु समुदायस्यान्तोदात्तार्थं, चितः सप्रकृतेर्बह्वकजर्थमिति वचनात्, इदमेव चित्करणं लिङ्गं सप्रकृतेश्चितोन्तोदात्तत्वं न चिन्मात्रस्येति । 'तूष्णीमः कामिति' । यथा सम्भवमज्ञातादिष्वर्थेषु, मकारो देशविध्यर्थः, अन्त्यादचः परः काम् भवति आज्ञाताद्यर्थाविवक्षायां तूष्णीमित्येव भवति । 'शीले क इति' । शीलं स्वभावो नियमश्च

अज्ञाताद्यपवादः, शीलं तूष्णीं स्वभावाच्च तद्वांस्तूष्णीक इत्युच्यते न तच्छीलमात्रम् ॥

"कस्य च दः" ॥ 'न सर्वनामग्रहणमिति' । तिङ्ग्रहणं चेति द्रष्टव्यं, हेतोस्तुल्यत्वात्, अधोक् अवक् इत्यादावसिद्धं कुत्वं, शक्नोतिप्रभृतेर्यङ्लुकि लटि तिपीडभावे हल्ङ्यादिलोपे अशाशगित्यादौ छान्दसो यङो लुक्, छन्दसि च दृष्टानुविधानम् । 'धिगिति' । ककारान्तत्वमव्ययस्य दर्शयति ॥

"अज्ञाते" ॥ अज्ञातइति सामान्येनोच्यते न च सर्वथाऽविज्ञाते शब्दप्रयोग एव सम्भवति न खल्वश्व इत्यज्ञानवश्वशब्दं प्रयोक्तुमर्हति तस्माद्विशेषस्य ग्रहणमित्याह । 'अज्ञातविशेषो ज्ञात इति' । विशेषमेव दर्शयति । 'स्वेन रूपेणेति' । विशेषरूपेणेत्यस्य विवरणं कस्यायमश्व इत्यादि । इहाज्ञातः प्रकृष्टः पटुरित्यर्थद्वयविवक्षायां परत्वादनेन के कृते तमबपि प्राप्नोति तत्र पूर्वविप्रतिषेधेन तमपि कृते पश्चात्कः पटुतमक इति भवति, इह च कुत्सितार्द्धपिप्पल्या इति विवक्षायां पूर्वं समासः पश्चात्कः, अर्द्धपिप्पलीकेति भवति, एतेन कल्पबादयो व्याख्याताः, आह च कविधेस्तमबादयः पूर्वविप्रतिषिद्धम् एकदेशिप्रधानश्च समास इति, इह तु छिन्नकतरमित्यत्यन्तगतोक्तादिति परत्वात्कनि कृते तरब् भवति, कदा चिद् द्वन्द्वः पुत्रकन्यकाधको पुत्रकन्यकाधका इति वा ॥

"कुत्सिते" ॥ 'प्रकृत्यर्थविशेषणं चैतदिति' । प्रकृत्यर्थस्यैतं विशेषणं न तूपलक्षणमित्यर्थः । उपलक्षणत्वे हि यः कुत्सितस्तत्र वर्तमानादिति विज्ञायमाने एवं घृतकमिदं तैलकमित्यचेदंशब्दादपि प्राप्नोति, विशेषणत्वे त्वङ्गीकृतकुत्सात्प्रत्ययो न त्वनुपात्तकुत्सात् कुत्सितसमानाधिकरणत्वात्, प्रत्ययार्थत्वे तु प्रकृतिप्रत्ययो प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति प्रकृत्यर्थस्य विशेषणत्वं कुत्सितस्य विशेष्यत्वं प्राप्नोति, विपर्ययश्च लोके गम्यते, तस्मात्प्रकृत्यर्थविशेषणमिति सूक्तम् । 'अश्वक इति' यो ऽयम् एव कर्तृ तस्याधां क्रियां

सुष्ठु न करोति स एवमुच्यते, स्वार्थिकेषु हि यत्र प्रवृत्तिनिमित्तस्य विशेषणासम्भवस्तत्राभिधेयसहचरितधर्मान्तराश्रयः प्रत्ययो भवतीत्युक्तम्, एवं च देवदत्तको डित्थक इत्यपि भवति यस्तत्साध्यमर्थं सम्यङ्नानुतिष्ठति, सम्भवे त्विहापि शब्दोपात्तधर्माश्रयैव कुत्सा, तद्यथा पटुकः पण्डितक इति स्वार्थे कुत्सा, प्राप्य गाण्डीवधन्वानं विद्धि कौरवकान् स्त्रियं इति लिङ्गकुत्सा, कौरवकानिति किमेते ऽर्जुनसंनिधौ पुमांस इत्यर्थः, क्वचित्सङ्ख्याकुत्सा यथेदमेकमेव शतकमिति, शतभरणे यद्दुःखं तदेकस्यैव भरणादिति शतत्वरूपेण कुत्सा, सर्वथाङ्गीकृतकुत्सात्मप्रत्ययः, अथेह कथं प्रत्ययः कुत्सितक इति, कथञ्च न स्यात्, स्वशब्देनोपात्तत्वात्कुत्साया अनुकम्पादावर्थान्तरे भविष्यति। अथ वा कुत्सितस्य यत्कुत्सनं तत्र प्रत्ययः कुत्सितत्वं यदा कुत्स्यते नास्य सम्यक्कुत्सितत्वमिति तदेत्यर्थः, यथा प्रकर्षस्य प्रकर्षे प्रकृष्टतम इति तमप्प्रत्ययो भवति तद्वदत्रापि, एतेनानुकम्पितशब्दादनुकम्पायां प्रत्ययो व्याख्यातः॥

"अनुकम्पायाम्"॥ 'कारुण्येनेति'। करुणैव कारुण्यम्। 'अभ्युपपत्तिरिति'। अनुग्रह उपकार इति यावत्। परस्येति कर्मणि षष्ठी। 'तस्यां गम्यमानायामिति'। अनेन प्रयोक्तृधर्मोनुकम्पा श्लाघावद् न तु प्रशंसादिवत्प्रकृत्यर्थविशेषणमिति दर्शयति, अन्ये तु प्रकृत्यर्थविशेषणमेव मन्यन्ते तथा चाजिनान्तस्येत्यादिषु विग्रहं दर्शयिष्यति अनुकम्पितो व्याघ्राजिनः, अनुकम्पितो बृहस्पतिदत्तः, अनुकम्पितः शेवलदत्त इति, न च प्रयोक्तृधर्मस्य विग्रहे दर्शनमस्ति। 'स्वपितकि श्वसितकीति'। अदादित्वाच्छपो लुक्, रुदादिभ्यः सार्वधातुक इतीट्॥

"नीतौ च तद्युक्तात्" ॥ 'सामदानादिरिति'। आदिशब्देन भेददण्डयोर्ग्रहणं, यद्यनुकम्पायां तौ सम्भवतः, अभ्भवेपि नीतिस्वरूपप्रदर्शनपरं द्रष्टव्यम्। 'एहकीति,। आङ्पूर्वादिणो लोट् सिपो हिः। 'इ९णेत्यादि'। अनुकम्पायां हि विधीयमानः प्रत्ययः प्रत्यासत्तेरनुकम्प्यमानादेव युक्तो विधातुं तस्य हि अनुकम्पासंबन्धः प्रत्यासन्नस्तद्विषयत्वादनुकम्पायाः, तेन व्यवहितावीत्युपायाद्दानादेर्न स्याद्, अतद्विषय-

स्यादनुकम्पायाः, धानाशब्दः स्त्रीलिङ्गः, ततः के विहिते केण इति ह्रस्वत्वे च स्वार्थिकानां प्रकृतिवल्लिङ्गं भवतीति कप्रत्ययान्तादापि कृते प्रत्ययस्थादितीत्वेन भवितव्यं, प्रायेण तु हन्त ते धानका इति पठ्यते तत्र लिङ्गातिवृत्तिर्द्रष्टव्या ॥

"बह्वचो मनुष्यनाम्नष्ठज्वा" ॥ प्रकरणमपेक्ष्यते न त्वनन्तरमित्याह । 'अनुकम्पायां नीतौ च तद्युक्तादिति वर्ततइति' । 'भद्रबाहुक इति'। नामग्रहणस्येदं प्रत्युदाहरणं, यौगिकोऽयं भद्रौ बाहू यस्येति, मनुष्यग्रहणस्य तु स्तम्बेरमादिः प्रत्युदाहरणम्, अपर आह भद्रबाहुरिति चतुष्पाज्जातिविशेषो मनुष्यग्रहणस्य प्रत्युदाहरणं, नाम ग्रहणस्य त्वोपगवादिः प्रत्युदाहरणमिति ॥

"घनिलचौ च" ॥ 'चकारादयथाप्राप्तं चेति'। ननु च ठच् पूर्वेण विहितः, वावचनात्कोपि, कात्र चकारेणाभ्यनुज्ञेति चिन्त्यं, योगविभागोपि चिन्त्यप्रयोजनः ॥

"जातिनाम्नः कन्" ॥ ये शब्दा जात्यन्तरे प्रसिद्धा मनुष्येषु नामत्वेन विनियुक्तास्तद्ग्रहणोदाहरणं, जातिरेव नाम जातेर्वा नाम जातिनाम । 'व्याघ्रिय इति'। अनेकार्थत्वान्निपातानामनुवृत्तस्य वाशब्दस्य समुच्चयार्थत्वाद्घनिलचौ भवतः, ये तु विकल्पार्थमेव वाशब्दं मन्यन्ते ते कं प्रत्युदाहरन्ति व्याघ्रकाः सिंहका इति, स्वरे विशेषः, घनिलचोस्तु शरभिल इत्याद्युदाहरणम् ॥

"अजिनान्तस्योत्तरपदलोपश्च" ॥ 'व्याघ्राजिनो नाम कश्चिदिति'। व्याघ्रस्येवाजिनमस्येति कृत्वा, अजिनलोपश्चेत्युच्यमाने महदजिनं महाजिनं व्याघ्रस्येव महाजिनमस्य व्याघ्रमहाजिनः सोनुकम्पित व्याघ्रक इत्यत्र महच्छब्दस्य लोपो न स्यात् तस्मादुत्तरपदग्रहणं, लोपश्चायं सर्वापहारी उत्तरपदग्रहणात् ॥

"ठाजादावूर्ध्वं द्वितीयादचः" ॥ ठाजादाविति समाहारद्वन्द्वे सौत्रः पुल्लिङ्गनिर्देशः, आदिग्रहणं चिन्त्यप्रयोजनं अस्मिन्विधिस्तदादावित्येव सिद्धम् । 'अस्मिन्प्रकरणइति'। प्रत्यासत्त्या तयोरेव

बुद्धौ संनिधानादिति भावः । ऊर्ध्वमिति प्रथमान्तस्याध्याहार्यो-न्वय इत्याह । 'ऊर्ध्वं यच्छब्दरूपं तस्येति' । द्वितीयादिति पञ्चम्या षष्ठी प्रकल्प्यते प्रथमा तु निर्देशार्थैव । सुपां सुलुगिति वा षष्ठीस्थाने प्रथमा भवतीति, ऊर्ध्वग्रहणमनर्थकं तस्मादित्युत्तरस्येत्यूर्ध्वस्यैव भविष्यति, तत्राह । 'ऊर्ध्वग्रहणं सर्वलोपार्थमिति' । अन्यथादेः परस्येति द्वितीयादचो यः परस्तस्यादेरेव लोपः स्यादूर्ध्वग्रहणसामर्थ्यात्तु सर्वमेवोर्ध्वं लुप्यते, ठग्रहणमनर्थकम्, इकादेशे कृते ऽजादावित्येव सिद्धमत आह । 'ठग्रहणमिति' । अकृतएवेकादेशे ठावस्थायामेव लोपो यथा स्याद् इत्येवमर्थं तावट्ठग्रहणं, किमेवं सिद्धं भवति, उको द्वितीयत्वे सति परस्यांशस्य लोपे कृते इसुसुक्तान्तात्क इति कादेशः सिद्धो भवति, तदेतत्स्यात् इकादेशे कृतेऽजादिलक्षण एव लोपोऽस्तु, इकादेशस्य स्थानिवद्भावादुग्रहणेन ग्रहणादुकः परत्वेन कादेशो भविष्यति तत्राह । 'अजादिलक्षणे हीति' । ठगादिषु यदि वर्णमात्रं प्रत्ययः, अकारस्तूच्चारणार्थः, ततष्ठस्य क इत्यत्रापि वर्णस्यैव ठस्य स्थानित्वं, ततश्चाल्विधित्वात्स्थानिवद्भावो नोपपद्यते, सङ्घातस्य तु प्रत्ययत्वे तत्रापि सङ्घातस्य ग्रहणं, तत्र यद्यप्युपपद्यते स्थानिवद्भावस्तथापि संनिपातपरिभाषया कादेशो न स्यादेव, अजादेः प्रत्ययस्य प्रकृत्या यदानन्तर्यं तत्कृतं ह्युकः प्रत्ययेनानन्तर्यं तत्कथं तस्याजादित्वं विहन्यात्, अत एव मथितं पण्यमस्य माथितिक इत्यत्र यस्येतिलोपे कृते सत्यपि तकारेण प्रत्ययस्यानन्तर्ये कादेशो न भवति तस्माट्ठग्रहणं कर्तव्यं, किञ्च यदा चित्रभानुप्रभृतिभ्यष्ठज्विधीयते तदेकादेशाभावादजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहणम् । 'चतुर्थादच इति' । एवं संग्रहश्लोके नास्ति क्वाचित्कं चैतत्, । 'अनजादौ विभाषा लोपो वक्तव्य इति' । द्वितीयादच ऊर्ध्वस्येत्येव । लोपः पूर्वपदस्यचेति श्लोकवार्तिकं तस्योपस्कारः । 'ठाजादावनजादौ च वक्तव्य इति' । तत्र ठाजादौ पूर्वोत्तरयोरन्यतरस्य नित्यं लोपः, अनजादौ विकल्पः । 'उवर्णाल्ल इति' । लोपस्य ल इति पूर्वाचार्यसंज्ञा, तत्रादेः परस्येतीकारलोपः । 'तदादेरिति' । सन्ध्यक्षरात्परस्य लोपे प्राप्ते तत

आरभ्य लोपार्थं वचनम् । 'एकाक्षरपूर्वपदानामिति' । अक्षरशब्दोऽय-मचि वर्तते व्यञ्जनसहिते केवले वा द्वितीयादच ऊर्ध्वस्य लोपे प्राप्ते तेन सह लोपार्थं वचनम् । 'वागाशीरिति' । वाचि आशीर्यस्य स वागाशीः । 'वाचिक इति' । अत्र यदि द्वितीयादच ऊर्ध्वस्य लोपः स्यात्तदा ऽकृतव्यूहाः पाणिनीया इति परिभाषया कुत्वजश्त्वयोर्निवृत्तौ वाच्-आ-इक इति स्थिते आकारस्य यस्येतिलोपेन निवृत्तावपि तस्य स्थानिवद्भावादाकारान्तस्य भसञ्ज्ञायां त्वन्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदसञ्ज्ञा, सा चकारान्तस्येति भिन्नावधिकत्वाद्भसञ्ज्ञया पदसञ्ज्ञा न बाध्येत, ततश्च कुत्वजश्त्वयोः कृतयोर्वागिक इति स्यात्, उत्तरपदलोपे तु तस्यानजादेशत्वात्स्थानिवत्त्वाभावात्तुल्यावधिकया भसञ्ज्ञया पदस-ञ्ज्ञायास्तद्धिताश्रयायास्तावदपवादत्वाद्बाधः, या त्वन्तर्वर्त्तिनीं विभक्ति-माश्रित्य सुबन्तं पदमिति पदसञ्ज्ञा तस्या अपि एकसञ्ज्ञाधिकारात्पर-त्वाच्च बाध इति सिद्धमिष्टम् । 'कथमिति' । अत्राप्युत्तरपदलोपे कृते भसंज्ञया पदसंज्ञाया बाधितत्वाज्जश्त्वं न स्यादिति प्रश्नः । 'वच इति' । सोऽत्र एवात्र लोप इष्यते न त्वौपसंख्यानिक इत्यर्थः । संवत्सरश्लोकवृत्तौ तथाशब्दानन्तरं वाशब्दः पाठ्यः, न त्वेव-शब्दः, स च पूर्वत्रापि यथेष्टं सम्बन्धनीयः, दृष्टं च पूर्वमेव दर्शितम् । अत्र चोदयति सञ्ज्ञाशब्दस्यैकदेशे लुप्ते कथं सञ्ज्ञिनोऽवगमः, नहि देव इति वा दत्त इति वा सञ्ज्ञा कृता किं तर्हि देवदत्त इति । अत्राहुः । एकदेशेन समुदायोऽनुमीयते विषाणेनेव गौः, सोऽनुमितोऽर्थस्य वाचक इति । ननु चोच्चार्यमाण एव शब्दोऽर्थं प्रत्याययति न प्रतीय-मानः, नेत्याह, स्मृत्यनुमिता श्रुतिः किं नार्थं प्रत्याययति प्रत्याहारेषु वा मध्यवर्त्तिनो वर्णाः किं सवर्णांश्च प्रत्याययन्ति, किं वार्त्तिकैरपभ्रं-शैः साधवः स्मारिता यथा शब्दाः प्रत्याययन्त्यर्थं तथात्रापि भविष्यति, समुदाये सञ्ज्ञात्वेन विनियुज्यमानेऽवयवानामपि सञ्ज्ञात्वमनुनिष्पद्यते, किमर्थं तर्हि लोपो विधीयते पदानामेव सञ्ज्ञैकदेशभूतानां साधुत्वं यथा स्याद्वर्णानां मा भूदिति । उक्तं च

तुल्यायामनुनिष्यन्तो ज्येद्राषा इत्यसाधवः ।
नह्यन्वाख्यायके शास्त्रे दत्तादिवदनुस्मृतिः ॥

"शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्" ॥ 'शेवलादीनामित्यादि' । योयं शेवलादीनां तृतीयादच ऊर्ध्वस्य लोप उच्यते सोऽकृतसन्धीनामेव वक्तव्यः सन्धीयतेनेनेति संहिताकार्यमुच्यते ॥

"ह्रस्वे" ॥ यद्यपि वंशादिष्वल्पत्वह्रस्वत्वयोः समावेशो दृष्टस्तथापि घृतादिषु द्रवद्रव्येषु न कश्चिदाह ह्रस्वं घृतं ह्रस्वं तैलमिति तथा विस्तीर्णेष्वायामहीनेषु ह्रस्वः पट इत्युच्यते न कश्चिदाह अल्पः पट इति, तस्मादुभयनिर्देशोल्पे ह्रस्व इति ॥

"कुत्वाडुपच्" ॥ 'कतूरित्यावपनस्याख्येति' । यद्यप्यावपनमात्रस्याख्या तथापि डुपच्प्रत्ययान्तस्वभावादुक्तम् । चर्ममयं स्नेहभाजनमुच्यतइति ॥

"वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे" ॥ तनुत्वइति सामान्याभिधानात्कार्श्येपि प्रत्ययप्रसङ्गस्तत्राह । 'यस्य हि गुणस्येति' । एतच्च प्रत्यासत्तेर्लभ्यते प्रत्यासन्नं हि शब्दस्य प्रवृत्तिनिमित्तम् । 'प्रथमवया वत्स इति' । प्रथमं वयो वत्सशब्दस्य प्रवृत्तिनिमित्तमित्यर्थः । 'तस्येति' । गुणभूतमपि वयोत्र परामृश्यते तस्य प्रथमस्य वयस इत्यर्थः । 'द्वितीयवयःप्राप्तिरिति' । द्वितीयं हि वयः प्राप्नुवतो वत्सस्य प्रथमं वयोल्पशेषं भवति । 'तरुण इति' । द्वितीयवया इत्यर्थः । तस्य तनुत्वमित्यादि पूर्ववत् । 'अन्यपितृकतेति' । गर्द्दभपितृकतेत्यर्थः, गर्द्दभेन त्वश्वायामुत्पादितोश्वतर उच्यते । 'अनड्वानिति' । अनसो वोढेत्यर्थः, अनसि वहेः क्विप्, डश्चानसः ॥

"किंयत्तदोर्निर्द्धारणे द्वयोरेकस्य डतरच्" ॥ द्वयोरेकस्य निर्द्धारणे डतरज्भवतीत्युच्यते तत्रेहापि प्राप्नोति कयोरन्यतरो देवदत्तः, ययोरन्यतरस्तयोरन्यतर इति, किमादीनां समुदायवाचित्वेपि निर्द्धार-

शस्य गम्यमानत्वादत आह । 'निर्द्धार्यमाणवाचिभ्य इति' । एतत्त्वा-भिधानस्वभावाल्लभ्यते । 'क्रियया गुणेन सञ्ज्ञया वेति' । जात्या वेत्यपि द्रष्टव्यं, कतरो भवतोः कठ इत्यादेरपि सम्भवात् । 'समुदायान्निर्द्धारणविभक्तिरिति' । सा पुनः षष्ठी न सप्तमी, वा बहूनामिति दर्शनात् । 'एकस्येतीति' । 'निर्द्धार्यमाणनिर्द्देश इति' । ननु च द्वयोरेकस्यैव निर्द्धारणं सम्भवति नार्थ एतेन, नैतदस्ति, एकस्येत्यनुच्यमाने द्वयोरिति कर्मणि षष्ठी विज्ञायेत ततश्चास्मिन् ग्रामे कौ देवदत्तयज्ञदत्तावित्यत्रापि प्राप्नोति तस्मादेकग्रहणम् ॥

"वा बहूनां जातिपरिप्रश्ने डतमच्" ॥ 'जातिपरिप्रश्नविषयेभ्य इति' । जातिपरिप्रश्नौ यथासम्भवं विषयौ येषां ते तथोक्ताः, सूत्रे पुनः समाहारद्वन्द्वः, संनिधानाच्च परिप्रश्नोऽपि जातेरेव विज्ञायते यथा गुणो यङ्लुकोरित्यत्र यङ् च यङ्लुक्चेति, एवं च कृत्वा जातिपरिप्रश्नग्रहणं किम एव विशेषणं जातिग्रहणं तु सर्वैरपि संबध्यत इति वक्ष्यमाणमुपपद्यते, षष्ठीसमासे तु गुणभूतस्य जातिग्रहणस्य निष्कृष्य संबन्धोऽनुपपन्नः स्यात्, परिप्रश्नग्रहणं तैर्पानवृत्त्यर्थम् । 'वावचनमकजर्थमिति' । कथं तर्हि वाक्यस्य सिद्धिस्तत्राह । 'महाविभाषेत्यादि' । 'किमोऽस्मिन्विषयइति' । द्वयोरेकस्य निर्द्धारणउक्तो बहूनामेकस्य निर्द्धारणे न स्यादिति वचनं, कथं पुनरिष्यमाणोऽपि लभ्यते तत्राह । 'तत्रेत्यादि' । ननु कतरो भवतोः कठ इति द्वयोरेकस्य निर्द्धारणेऽपि जातिपरिप्रश्नस्य सम्भवात्तानेन वचनेन बहूनामेकस्य निर्द्धारणे डतरच् शक्यो ज्ञापयितुम्, एवं तर्हि समासविधौ कतरकतमौ जातिपरिप्रश्ने साधू भवत इत्यपि व्याख्येयमिति मन्यते, अजातिपरिप्रश्नेऽपि किमो डतमज् भवति कतमो भवतोर्देवदत्त इति, कथं, कतरकतमावित्यत्र जातिपरिप्रश्नग्रहणात्, यदि हि कतमशब्दो जातिपरिप्रश्नादन्यत्र न स्यात्ततस्तत्साहचर्यात्कतरशब्दोऽपि तदर्थ एव गृह्येत इत्यनर्थकं तत्स्यात् ॥

"एकाच्च प्राचाम्" ॥ 'डतरज्डतमचावित्येताविति' । कथं

पुनर्व्यवहितस्य डतरचोनुवृत्तिरित्याह । 'चकार इति' । डतमचस्त्वनन्तरत्वादेवानुवृत्तिरिति भावः । स्वस्मिन्विषयइति यदुक्तं तदेव विवृणोति । 'द्वयोर्निर्धारणइति' । एतच्च द्वयोरेकस्य डतरच् बहूनां डतमजित्यनुवृत्तेर्वाक्यभेदेन च संबन्धाल्लभ्यते ॥

"अवक्षेपणे कन्" ॥ अवक्षेपो निन्दा । 'व्याकरणकेनेति' । यद्यपि व्याकरणं स्वतोवक्षेपणं न भवति प्रत्युत वेदाङ्गत्वात्प्रशंसनं तथापि यस्य तदवलेपमावहति तस्यावक्षेपणं भवत्येव । 'याज्ञिक्येन नामेति' । याज्ञिकानामाम्नायो याज्ञिक्यं कल्पसूत्रादि । परस्येत्यादिना कुत्सितइत्यस्यास्य च कनो विषयविभागं दर्शयति ॥

"इवे प्रतिकृतौ" ॥ इवार्थः सादृश्यमिति' । कन् प्रत्ययस्तु स्वभावात्सदृशे भवति न सादृश्यमात्रे यथा प्रकारेपि विहितो जातीयर् प्रत्ययस्तद्वति भवति । 'तद्विशेषणं प्रतिकृतिग्रहणमिति' । प्रतिकृतिविषयं यत्सादृश्यं तत्र प्रत्ययो यथा स्यात्, कोर्थः, प्रतिकृतिस्वरूपं यत्सदृशं तत्रेत्यर्थः । 'अश्व इवायमश्वप्रतिकृतिरिति' । अश्वप्रतिकृतिरूपोश्वसदृशोयं पदार्थ इत्यर्थः । 'अश्वक इति' । केचिदाहुः । अश्वशब्दोश्वएव वर्तते कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृशइतिस्वार्थिकोयं न भवतीति । अपर आह । सादृश्यनिबन्धनादभेदोपचाराद्गौर्वाहीक इतिवद् अश्वशब्द एव प्रतिकृतौ वर्त्तते प्रत्ययस्तु तस्यैवोपचारस्य द्योतक इति । 'गौरिव गवय इति' । गवयो गोर्न प्रतिकृतिः, तृणचर्मकाष्ठादिनिर्मितं हि प्रतिच्छन्दकं प्रतिकृतिः, न चैवं गवयः ॥

"लुम्मनुष्ये" ॥ चञ्चा तृणपुरुषस्तत्सदृशो मनुष्यश्चञ्चा, लुपि युक्तवद्भावः, मनुष्यलुपि प्रतिषेध इत्येतत्तु विशेषणविषयम् ॥

"जीविकार्थे चापण्ये" ॥ 'वासुदेवः शिव इत्यादि' । याः प्रतिमाः प्रतिगृह्य गृहाद्गृहं भिक्षमाणा अटन्ति ता एवमुच्यन्ते, ता हि जीविकार्था भवन्ति, देवलका अपि तएव भिक्षवोभिप्रेताः, यास्त्वायतनेष्वभ्युदयनिश्रेयसार्थं प्रतिष्ठाप्यन्ते पूज्यन्ते च तास्वर्चासु पूजार्थास्विति वक्ष्यमाणेन लुग् भवति ॥

"देवपथादिभ्यश्च" ॥ 'आदिशब्दः प्रकारे इति'। तेन किं सिद्धं भवतीत्याह । 'आकृतिगणोऽयमिति'। अर्चासु प्रतिमासु पूजनार्थासु गृहेष्वायतनेषु वा याः पूज्यन्ते तासु, चित्रकर्मध्वजाभ्यां तद्गताः प्रतिकृतयो लक्ष्यन्ते ॥

"समासाच्च तद्विषयात्" ॥ 'तदित्यनेन प्रकृत इवार्थो निर्दिश्यतइति'। छप्रत्ययस्तु प्रधानतया प्रकृतोपि न परामृश्यते, अनेनैव तस्य विधानात्, समासस्य तद्विषयत्वानुपपत्तेः। 'अपरस्मिन्निवार्थ एवेति'। एवकारः पौनर्वचनिकः, शस्त्रीश्यामादौ स्विक इवार्थः समासेन्तर्भूत इति छो न भवति। 'अजाकृपाणीयमिति'। अजाया गच्छन्त्याः कृपाणेनाधःपतता यथा वधस्तत्सदृशमित्यर्थः। 'अन्धकवर्त्तिकीयमिति'। वर्त्तिका शकुनिविशेषः, तस्या अन्धहस्ते पतनं ग्रहणं च यादृच्छिकं तादृगित्यर्थः। 'अतर्कितोपपन्नमिति'। अचिन्तितोपपन्नं यादृच्छिकमित्यर्थः। चित्रीकरणं विस्मयकरणम् 'कथमिति'। सामान्येनायमर्थः कथमुच्यतइत्यर्थः। 'समासश्चायमित्यादि'। किं पुनः कारणं ज्ञापकात्समाससद्भावः प्रतिपाद्यतइत्यत आह। 'नह्यस्येति'। 'स च एवंविषय एवेति'। छप्रत्यविषय एवेत्यर्थः। अनन्यत्र भावो विषयार्थः, तेन स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च न भवति ॥

"एकशालायाष्ठजन्यतरस्याम्"। अनेकार्थत्वान्निपातानामन्यतरस्यांग्रहणमिह समुच्चयार्थं न विकल्पार्थमित्याह । 'अन्यतरस्यांग्रहणेनेत्यादि'॥

"कर्कलोहितादीकक्"। 'स्वयमलोहित इत्यादि'। उपाश्रय उपादानभूतो लाक्षादिः ॥

"प्रत्नपूर्वविश्वेमात्थाल् छन्दसि" ॥ इमशब्द इदमा समानार्थः प्रकृत्यन्तरम् ॥

"पूगाञ्ञ्योऽग्रामणीपूर्वात्" ॥ 'पूगवाचिन इति'। स्वरूपग्रहणं तु न भवति अग्रामणीपूर्वादिति वचनात्, पूर्वशब्दो ह्यवयववचनः,

न च पूगशब्दस्य ग्रामणीवचनो देवदत्तादिशब्दः पूर्वावयव उपपद्यते। 'लोहध्वजा इति'। व्यादयस्तद्राजा इति तद्राजसंज्ञा, तद्राजस्य बहुष्विति लुक्। 'देवदत्तका इति'। स एषां ग्रामणीरिति कन्, अत्र देवदत्तशब्दो ग्रामणीवचनः पूर्वावयवः, समुदायः पूगवचनः॥

"व्रातच्फञोरस्त्रियाम्"॥ उत्सेधजीविसंघं व्रातस्य पूगाद्विशेषः। 'कौञ्जायनीति'। गोत्रे कुञ्जादिभ्यश्च्फञ्, गोत्रं च चरणैः सहेति जातित्वान्ङीष्॥

"आयुधजीविसङ्घाञ् ञ्यड्वाहीकेष्वब्राह्मणराजन्यात्"॥ यदा वाहीकशब्दः पुरुषेषु वर्त्तते तदा वाहीकेष्विति निर्द्धारणे सप्तमी, यदा तु देशे तदाऽधिकरणे। 'ब्राह्मणे तद्विशेषग्रहणमिति'। स्वरूपग्रहणं तु न भवति ब्राह्मणशब्दवाच्यस्यायुधजीविसङ्घस्य वाहीकेष्वभावात्। 'राजन्ये तु स्वरूपग्रहणमिति'। तद्वाच्यस्यैव भावात्। 'तेनास्त्रियामिति नानुवर्त्ततइति'। तेन स्त्रियामपि कौण्डी वृती चौड्री मालवीति भवति, हलस्तद्धितस्येति यलोपः॥

"दामन्यादित्रिगर्तषष्ठाच्छः"॥ दामन्यादित्रिगर्तषष्ठादिति समाहारद्वन्द्वः, दामन्यादेरायुधजीविसङ्घात्त्रिगर्तषष्ठाच्चायुधजीविसङ्घादित्यन्वयः, त्रिगर्तषष्ठादित्यस्यार्थमाह। 'येषामिति'। अन्तरंगं। अन्तर्गणाः, ते पुनः के इत्याह। 'तेषु चेयं स्मृतिरिति'। त्रिगर्त्तषष्ठाः स्मर्यन्ते ज्ञाप्यन्ते ऽनयेति स्मृतिः, स पुनराहुस्त्रिगर्तषष्ठानित्यादिः श्लोकः। अत्र जानकयस्त्रिगर्त्तवर्गास्तेषु च त्रिगर्त्तषष्ठेषु, प्रथमपञ्चमौ शिअप्रत्ययान्तौ, शेषास्तु इञन्ताः, केचित्त्वतद्धितान्तमेव पञ्चमं ब्रह्मगुप्तशब्दं पठन्ति॥

"पर्श्वादियौधेयादिभ्योऽणञौ"॥ 'पार्शव इत्यादि'। पर्शु, रक्षस्, असुर, इत्येते जनपदशब्दाः, तत्राकारान्ताद्बहुष्वपत्येषु जनपदशब्दात्तत्रियादञित्यञ्, इतराभ्यां द्व्यञ्मगधेत्यादिनाण्, तद्राजत्वाल्लुक् पुनः सङ्घविवक्षायामनेनाण्। 'यौधेय इति'। युध्यतेसौ, युधेरिगुपधलक्षणः कः, युधा तस्या अपत्यं स्त्रीव इति ढक्, तदन्तात्सङ्घरूपविवक्षायामनेनाञ्. यौधेय इत्याद्युदात्तं भवति, तथा यौधेयस्याङ्को लक्षणं वा यौधेय इति

सङ्घाङ्कलक्षणेष्वञ्लक्षणोऽण् भवति, एतेन यौधेयादिषु ये ठगन्तास्ते सर्वे व्याख्याताः, यौधेयादीनामस्मिन्प्रदेशे न पाठः, पठिता हि ते चतुर्थे न प्राच्यभार्गादियौधेयादिभ्य इत्यत्र ॥

"अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्" ॥ अभिजयतीत्यभिजित्, वेत्तीति विदः, इगुपधलक्षणः कः, तान्बिभर्त्ति विदभृत्, अन्ये मत्वन्ताः। 'अभिजिदादिभ्योऽणन्तेभ्य इति'। सूत्रेऽभिजिदादय एवाणीति विशेषणसमासः, अभिजिदादिप्रकृतयश्चाणन्ता अभिजिदादय उच्यन्ते। 'गोत्रप्रत्ययस्येति'। अपत्यप्रत्ययस्येत्यर्थः। 'आभिजितो मुहूर्त्त इति'। नक्षत्रेण युक्त इत्यण्, उत्तरस्य सास्यदेवेति। इहाभिजित्यस्यायम् आभिजितक इति गोत्रचरणाद्वुञ् भवति, आपत्यस्येति यलोपः, गोत्रप्रत्ययान्ताद्ध्ययमिष्यते, तेन स्वार्थिकत्वादयमपि यञ् गोत्रप्रत्यय एव भवति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य तृतीयः पादः ॥

"पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च" ॥ आदिशब्दोऽयमवयववाची न तु व्यवस्थावाची संख्याया इति पञ्चमीनिर्द्देशेनैव सिद्धेः, न च संख्यावचनः शब्दः पादशतशब्दयोरवयव उपपद्यतेऽनारम्भकत्वात्, तस्मात्संख्यादेरिति वचनादिह ग्रहणवतापि प्रातिपदिकेन तदन्तविधिर्विज्ञायत इत्याह। 'पादशतान्तस्येति'। आनन्तर्यलक्षणा चेयं षष्ठी वुन्विधौ, लोपविधौ तु स्थानषष्ठी। 'तत्संनियोगेन चेति'। चकारस्य संनियोगार्थकत्वात्। 'अनैमित्तिकत्वार्थमिति'। निमित्ते भवो नैमित्तिकः, अध्यात्मादिः। 'यस्येतिलोपः परनिमित्तक इति'। ईति तद्धिते च परतो लोपविधानात्। 'पद्भावो न स्यादिति'। पाच्छब्दो हि तत्र स्थान्युपात्तः स्थानिवत्त्वे च सति पादशब्दान्तमङ्गं भसंज्ञं भवति न पाच्छब्दान्तमिति पादायेत्यादिवदत्रापि पद्भावो न स्यात्। 'अस्य त्वनैमितिकत्वादिति'। नह्यत्र वुन्निमित्तं सहविधानात्। 'द्विपदिकामिति'। तद्धितेन द्योतितत्वाद्वीप्सायां द्विर्वचनं न भवति। 'तद्धितार्थ इति समास इति'। प्रकृत्यु-

पाधिरपि वीप्सा वुना द्योत्यतइति तद्धितार्थो भवति। 'द्वौ पादौ ददातीति'। उत्तरसूत्रे वक्ष्यति दानं व्यवसर्गइति, अवीप्सार्थोयमारम्भ इति च, तस्माद्भवितव्यमत्र वुना, [illegible]यान्तरं प्रत्युदाहर्त्तव्यं द्वौ पादौ लभतइत्यादि। अपर आह। दण्डितो व्यवसृजतीति प्रयोग एवोत्तरो ऽविधिरिति, यद्वा परस्वत्वापादनं दानं व्यवसर्गः, इह तु समर्पणमात्रे ददातिर्वर्त्तते; यथा रजकस्य वस्त्रं ददातीति। 'अन्यत्रापि दर्शनादिति'। द्वौद्वौ माषौ ददातीत्यादौ त्वनभिधानादतिप्रसङ्गाभावः॥

"दण्डव्यवसर्गयोश्च"॥ 'दण्डनं दण्ड इति'। दमु उपशमनइत्यस्माद्भावे जमन्ताड्डः, दण्डतेर्वा चुरादिण्यन्तादेरच्, यद्यपि दण्डशब्दः करणसाधनो यष्टावपि वर्त्तते तथापि तस्य ग्रहणं न भवति, धात्वर्थेन व्यवसर्गेण साहचर्यात्, अत्राप्युदाहरणे तद्धितार्थइति समासः स्त्रीलिङ्गस्तद्धितार्थः, उक्तं च स्वभावाच्च वुन्प्रत्यय स्त्रियां वर्त्ततइति, प्रकृत्यर्थ एव वा तद्धितार्थः, स्वार्थिकत्वाद् वुनः। 'अवीप्सार्थोयमारम्भ इति'। कथं तर्हि दाने वीप्सायां वुन्पूर्वसूत्रउदाहृतः, यावता नाप्राप्ते वीप्सायां वुन्यारभ्यमाणो ऽवीप्सावुनेतयोरर्थयोस्तस्य बाधकः प्राप्नोति यथा मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तो भूतक्त[1]स्य, यथा चावृद्धादपीत्यपिशब्दः क्रियते, इहापि तर्हि चकारः क्रियते, तेनाधिकविधिरयमबाधकः, एवमपि परत्वादनेनैव दाने वीप्सायां वुन्युक्तः, सत्यम्, अविशेषात्तु पूर्वत्रोदाहृतः, यद्वा दानस्य पदान्तरवाच्यत्वादेष वुन्बहिरङ्गः, वीप्सायास्तु तद्धितद्योत्यत्वात्पूर्वो वुचन्तरङ्गः॥

"स्थूलादिभ्यः प्रकारवचने कन्" 'प्रकारवचने द्योत्यइति'। प्रकारे द्योत्यइत्यर्थः, यथौदनं पचतीत्यत्रैवार्थे ओदनपाकं पचतीति, यद्वा प्रकार उच्यते स्थूलादिभिरिति द्योतनायेत्यर्थः, प्रकारवाचिभ्यः स्थूलादिभ्यः कन् भवति तदेव प्रकारवचनत्वं द्योतयितुमिति यावत्। 'जातीयरोपवाद इति'। तेनायमपि तद्वदेव प्रकारवति

१ क्तेति नास्ति २ पु०।

भवति न प्रकारमात्रइत्युक्तं भवति, प्रकारो भेदः सादृश्यं च, उभयत्रापि यथाभिधानं कन् भवति, वृत्तौ तु प्रकारो भेद इत्युपलक्षणम्। 'चञ्चद्बृहतोरिति'। एतावपि स्थूलादिषु पठितव्यावित्युक्तं भवति। 'चञ्चत्क इति'। चञ्चतिश्चलनकर्मा चञ्चत्प्रकारश्चञ्चत्त्वेन कश्चिद्विशेष उच्यते, तथा बृहद्विशेषो बृहत्कः, अपर आह, सादृश्येऽत्र कन्, अचञ्चन्नपि यश्चञ्चन्निव लक्ष्यते स्पन्दमानप्रभावत्वाच्चञ्चत्को मणिः, अबृहन्नपि यः प्रभूतप्रभया बृहन्निव लक्ष्यते स बृहत्क इति। 'चञ्चक इति'। चञ्चा तृणमयः पुरुषस्तत्सदृशश्चञ्चकः, केण इति ह्रस्वः। 'स्थूलाणुमाषेष्विति'। स्थूल अणु माष इषु इति चतस्रः प्रकृतयः। 'कृष्णतिलेष्विति'। कृष्णप्रकारास्तिलाः कृष्णकाः, यवकाः यवसदृशाः। 'पाद्मकालावदाताः सुरायामिति'। पाद्मिका कालिका अवदातिका सुराविशेषा एते। गोमूत्रकं गोमूत्रप्रकारं गोमूत्रवर्णमाच्छादनं, यद्वा विन्यासविशेषो गोमूत्रं, तत्सदृशं तु गोमूत्रकं, यत्र तु शुक्लकृष्णादिवर्णविन्यासः। सुरावर्णोऽहिः सुरकः पूर्ववद्ध्रस्वः। जीर्णप्रकारः जीर्णकल्पाः शालयो जीर्णकाः। जातीयरोऽनन्तरमेवायं कन् विधेयः, एवं हि पुनः प्रकारवचनइति न वक्तव्यं भवति, इह तु करणेऽज्ञातः स्थूलप्रकार इति प्रकारस्याज्ञातादीनां च युगपद्विवक्षायां परत्वादनेन कनि कृते पुनः प्रसङ्गविज्ञानादज्ञातादिद्योतनाय पुनः को भवति, तत्र तु करणे परत्वात्के कृते कन्न स्याच्छब्दान्तरत्वात्, सत्यपि वा कनि स्थूलककः इत्याद्युदात्तं स्यात्॥

"अनत्यन्तगतौ क्तात्"॥ 'अशेषसंबन्ध इति'। क्तप्रकृतिवाच्यया क्रियया साधनस्य व्याप्तिरित्यर्थः। 'भिन्नकमिति'। 'ईषद्भिन्नमित्यर्थः'। 'भिन्नमिति'। यदशेषं भिदिक्रियया व्याप्तं घटादि तदभिधीयते, इहानत्यन्तगतेः प्रकर्षस्य च युगपद्विवक्षायां पूर्वविप्रतिषेधेन पूर्वमातिशायिक इष्यते तदन्तात्कन्वक्तव्यः, अकान्तत्वाद्धि न प्राप्नोति, भिन्नतरकं छिन्नतरकमिति, आह च अनत्यन्तगतौ क्तान्तात्तमबादयः पूर्वविप्रतिषिद्धं तदन्ताच्च स्वार्थे कन्वचनमिति, स्वार्थः पुनरनत्यन्तगतियुक्त एव न शुद्धः, तथा हि सति अनत्यन्तगतिद्योतिता न स्यात्॥

"न सामिवचने" ॥ साम्यर्थ उच्यतेनेन तत्सामिवचनम् । 'सामिवचनउपपदइति'। उपोच्चारितं पदमुपपदं, तच्च समासावयवभूतं सत्केवलं गृह्यते । 'सामिकृतमिति' । सामीतिसमासः । 'अर्द्धकृतं नेमकृतमिति'। विशेषणसमासो बहुव्रीहिर्वा । 'प्रकृत्यभिहितत्वादिति'। का पुनरत्र प्रकृतिरभिप्रेता न तावत्समासोऽक्तान्तत्वात्, नहि सामिकृतादयः क्तान्ताः प्रत्ययग्रहणे तदादिनियमात्, न च कृद्ग्रहणपरिभाषया क्तान्तत्वं, साम्यादीनामगतित्वादकारकत्वाच्च, अथ यदत्र क्तान्तं सा प्रकृतिः, तदपि न, नहि समासे एकार्थीभूतस्य पृथक् प्रकृतित्वमुपपद्यते, अथ वाक्यगतः कृतादिशब्दः प्रकृतिः, एवमपि प्रकृत्यभिहितत्वादित्यनुपपन्नम्, एवं तु वक्तव्यम्, उपपदेनाभिहितत्वादिति । अत्राहुः । वाक्यगतात्कृतादिशब्दात्समासावयवाद्वा प्रसङ्गः शङ्क्यते, यदुक्तं प्रकृत्यभिहितत्वादित्यनुपपन्नमुपपदेनाभिहितत्वादिति वक्तव्यमिति, सत्यं, शब्दान्तरोपलक्षणं प्रकृतिग्रहणं प्रकृतिर्वा भवतु उपपदं वा कन्व्यतिरिक्तेन शब्दान्तरेणाभिहितत्वाद् द्योत्याभावात्कनः प्रसङ्गो नास्तीत्यर्थः। यदप्युक्तं समासएकार्थीभूतस्य पृथक्प्रकृतित्वासम्भव इति, तदपि न, प्रकृत्यर्थस्य प्रत्ययार्थेनैकार्थीभावे सति प्रकृतित्वं, न चार्थान्तरेणैकार्थीभूतस्य प्रत्ययार्थेनैकार्थीभावः सम्भवतीति किल प्रकृतित्वासम्भवः स्यात्, न चात्र प्रत्ययस्य द्योत्यं वाच्यं वार्थान्तरमस्ति येन सहैकार्थीभावः प्रार्थ्येत, तस्मादुपपन्नमेकार्थीभूतस्यापि प्रकृतित्वम् । अत एव वृत्तौ समास उदाहृतः । 'केन पुनरिति'। स्वार्थमात्रे कन्विधेः प्रत्यक्षेणादर्शनात्प्रश्नः, अनुमास्यतइत्युत्तरम् । 'यदेतदुच्यन्तइति'। भाष्यकारैः, उच्यतइति प्रयुज्यतइत्यर्थः, भाष्यकारप्रयोग उपपन्नो भवतीति यावत्, साक्षिस्थानीयश्च भाष्यकारप्रयोगो न पुनरन्यत्र स्वार्थे कन् न भवतीति ॥

"बृहत्या आच्छादने" ॥ बृहतिका प्रावारः ॥

"अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदात्खः" ॥ 'अविद्यमानानि षडक्षीणि यस्मिन्निति बहुव्रीहिरिति'। अक्षिशब्दोत्र श्रोत्रे-

न्द्रिये वर्त्तते बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्, मन्त्रो मन्त्रणं, यद् द्वाभ्यामेव क्रियतइति, त्रिभिस्तु क्रियमाणः षडक्षो भवति, चतुःप्रभृतिभिस्तु क्रियमाणस्य यद्यप्यष्टाक्षत्वादि सम्भवति तथाप्यवर्जनीयरूपेण षडक्षत्वमपि भवति, तस्माद्द्वाभ्यामेव क्रियमाणो ऽषडक्षीणो भवति । 'आशिता इति'। अश्नोतेराङ्पूर्वादाशितः कर्त्तेति ज्ञापकात्कर्त्तरि क्तः । यद्वा णयन्तात्कर्मणि । 'आशितं गवीनमरण्यमिति' । प्रभूतयवसमित्यर्थः । अलंकर्मीणः, कर्मणे पर्याप्तः । अलंपुरुषीणः, प्रतिमल्लादिः । 'अधिशब्दः शौण्डादिषु पठ्यतइति' । तत्राधिरीश्वरइत्यधेः कर्मप्रवचनीयत्वाद्यस्य चेश्वरवचनमिति सप्तम्यन्ता राजादयो ऽधिना समस्यन्ते, वाक्यमपि भवति राजन्यधि राजाधीनमिति, यथाधि ब्रह्मदत्ते पञ्चाला इति, अधिशब्दश्च वृत्तिविषये ईशितव्ये वर्त्तते । अपर आह । अधिकरणएषा सप्तमी, वृत्तिविषये च ससाधनक्रियावचनोधिर्न तु वाक्यइत्यस्वपदेन विग्रहः, राजन्यधिकृतं राजाधीनम्, राजायत्तमित्यर्थ इति । 'उत्तर[1]सूत्रे विभाषाग्रहणादिति'। द्वयोर्विभाषयोर्मध्ये नित्या विधय इति न्यायात् । 'तमादय इति' । अतिशायने तमबिष्ठनावित्यादयः ।'प्राक्कन इति'। अवक्षेपणे कन्नित्यस्मात् शुक्ल इत्युक्ते सामान्यशब्दत्वात्प्रकर्षस्यानवगमात्तत्तदुपाधिद्योतनायावश्यं प्रयोज्यास्तमबादय इति नित्याः, अतिशयेन शुक्ल इत्यादिकं तु वाक्यं भवत्येव, पदान्तरद्योत्यत्वादतिशयस्य । 'ज्यादय इति' । पूगाञ्ञ्योऽग्रामणीपूर्वादित्यादयः । 'प्राग्वुन इति' । पादशतादिसूत्रविहितात्, तस्य तु पुरा विग्रहो दर्शित एव । 'आमादय इति' । किमेत्तिङव्ययघादामित्यादयः, तत्प्रकृतवचने मयडित्यतः प्रागित्यर्थः । 'बृहती जात्यन्ता इति' । बृहतीशब्देन बृहत्या आच्छादनइति विहितः कनुपलक्ष्यते, जात्यन्तशब्देनापि जात्यन्ताच्छ बन्धुनीति विहितश्छः, बहुवचननिर्देशादेतत्सूत्रविहितस्य खस्य पाशबादीनां च ग्रहणं, यो हि वैयाकरणपाशादिशब्देभ्योर्थः प्रतीयते नासौ जातु चित् वैयाकरणादि-

१ उत्तरत्रेति मुद्रितमूलपुस्तके पाठः ।

सामान्यशब्देभ्यः प्रतीयतइति तेभ्यि तमबादिवच्चित्या एव । 'समासा न्ताश्चेति' । समासान्ता इत्यधिकृत्य विहिताः ॥

"विभाषाञ्चेरदिक्स्त्रियाम्" ॥ दिक् चासौ स्त्री चेति दक्स्त्री तत्र प्रतिषेधो न तु दिशि स्त्रियां च, स्त्रीलिङ्गैकवचननिर्द्देशात्, उदाहरणेष्वच इत्यकारलोपे कृते चाविति दीर्घः, उदीचीनमित्यत्र तूद ईदितीत्वम् । 'दिग्ग्रहणं किमिति'। अञ्चत्यन्तः स्त्रियां वर्तमानो दिश्येव वर्ततइति प्रश्नः । 'प्राचीना ब्राह्मणीति' । क्रियानिमित्तको देशकालनिमित्तको वा ब्राह्मण्यां स्त्रियां वर्त्तते न दिशीति प्रतिषेधाभावः । 'स्त्रीग्रहणं किमिति' । दिग्वृत्तिरञ्चत्यन्तः स्त्रीलिङ्ग एवेति मन्यते । 'प्राचीनं दियमणीयमिति' । प्राचीनशब्दाद्दिग्वाचिनः प्रथमासमर्थाद् दिक्शब्देभ्य इत्युत्पन्नस्यास्तातेरञ्चेर्लुगिति लुक्, ङीपोपि लुक् तद्धितलुकीति लुक्, ततस्तद्धितश्चासर्वविभक्तिरित्यव्ययत्वात्स्त्रीलिङ्गाभावः, खे तु कृते स्वभावादेव नपुंसकत्वम् ॥

"जात्यन्ताच्छ बन्धुनि" ॥ 'बध्यतेस्मिन्निति बन्धु इति'। शस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्यधिकरणउप्रत्ययः, बध्यते नियम्यते स्वतन्त्रीक्रियत इत्यर्थः । एतेन क्रियाशब्दस्येदं ग्रहणं न जात्यादिषु रूढस्याप्तपर्यायस्य बन्धुशब्दस्येति दर्शयति । एतच्च नपुंसकनिर्द्देशादवसीयते, आप्तपर्यायस्तु पुल्लिङ्गः । 'येन ब्रह्मणत्वादिजातिर्व्यज्यतइति' । व्यक्त्यधीना हि जातेरभिव्यक्तिः, नहि स्वातन्त्र्येण जातुचिज्जातिरुपलभ्यते, एतदेवाभिप्रेत्य बध्यतेस्मिन्निति बन्धित्युक्तम् । 'ब्राह्मणजातीय इति' । भावप्रधानोत्र ब्राह्मणशब्दो द्व्येकयोरितिवत्, तेन बहुव्रीहिः । 'बाह्मणादिरेवोच्यतइति' । ब्राह्मणत्वजात्याधारो द्रव्यात्मकः पिण्ड उच्यतइत्यर्थः । 'ब्राह्मणजातिरिति' । षष्ठीसमासः कर्मधारयो वा ॥

"स्थानान्ताद्विभाषा सस्थानेनेति चेत्"॥ 'सस्थानेन चेदिति'। करणएषा तृतीया, सस्थानेन सस्थानशब्दवाच्येनार्थेन तुल्यपर्यायेण स्थानान्तं यद्यर्थवद्भवति एवं प्रत्ययो भवति नान्यथेत्यर्थः । 'सस्थान

इति तुल्य उच्यत इति'। स्थानत इति शेषः, स्थानं प्राप्तिः संबन्धविशेषः, पदमिति यस्य प्रसिद्धिः कथं पुनः सस्थानशब्देन तुल्य उच्यतइत्याह । 'समानं स्थानमस्येति' । यस्य समानं स्थानं स सस्थान इत्युच्यते, यश्चैवंविधः स यदपेक्षया तस्य समानं स्थानं तेन तुल्यो भवति, तत्र शब्दभेदेपि वस्तुवृत्तेन सस्थानशब्दस्य तुल्यो वाच्यो भवति, सभावः पुनरत्र ज्योतिर्जनपदादिसूत्रेण । 'पितृस्थानीय इति'। पितुरिव स्थानमस्येति बहुव्रीहिः । 'गोस्थानमिति' । तिष्ठत्यस्मिन्निति स्थानं देशः । 'न तु तत्पुरुष इति' । समानं च तत्स्थानं चेत्येवं रूपस्तत्पुरुषः, सस्थानशब्दो नार्थमुपस्थापयति, यद्युपस्थापयेत् तुल्यं च तत्स्थानं च तुल्यस्थानमित्यादेः कर्मधारयादपि प्रत्ययः स्यात्, अथ बहुव्रीहेस्तुल्यस्थानशब्दात्सस्थानशब्दाद्वायं प्रत्ययः कस्मान्न भवति, कः पुनराह न भवतीति नेष्यते इति करणादेव तु न भविष्यति । 'चेच्छब्दः संबन्धार्थ इति'। चेच्छब्दे सति विभक्तिविपरिणामेनाध्याहारेण वा वाक्यपर्यवसानेन च संबन्धो भवति, असति तु तस्मिन्पञ्चम्यन्तेन तृतीयान्तस्य संबन्धोनुपपन्नः स्यात् ॥

"किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे" ॥ 'किम एकारान्तादित्यादि' । अर्थप्रदर्शनपरमेतत्, सूत्रे तु षष्ठीसमासः, योगविभागाद्वा पञ्चमीसमासः । 'यद्यपीति' । द्रव्यं विशेष्यं पर्यवसानभूतं, तस्य स्वरूपेण प्रकर्षो नास्ति, प्रवृत्तिनिमित्तद्वारक एव तु तस्य प्रकर्षः, यथोक्तं भाष्ये गुणस्यैव प्रकर्षो न द्रव्यस्येति, गुणः प्रवृत्तिनिमित्तं, हरिरप्याह ।

द्रव्यस्याव्यपदेश्यस्य न विना भेदहेतुना ।
प्रकर्षो विद्यते नापि शब्दस्यापीति वाच्यताम् ॥

इति । 'क्रियागुणस्य इति' । प्रवृत्तिनिमित्तभूतस्य सहचरितस्य धर्ममात्रस्योपलक्षणं क्रियागुणग्रहणम् । 'द्रव्यउच्यतइति'। द्रव्यनिष्ठोभिधीयतइत्यर्थः। 'क्रियागुणयोरेवेति'। यो द्रव्यनिष्ठयोरनुविधीयते स तयोरेव प्रकर्षः । 'किंतरामिति' । इदं च किमिदं च किम्, इदमन-

योरतिशयेन किम् इति तरप् प्रत्ययः, यत्र स्वरूपेण ज्ञातस्य वस्तुनो विशेषाकारा बहवो जिज्ञासितास्तत्र किंशब्दार्थः प्रश्नः प्रकृष्ट इव भवति तदाश्रयः प्रत्ययः । 'पूर्वाह्णतरामिति'। घकालतनेष्विति सप्तम्या अलुक्, तत्रासत्त्वभूतस्य विभक्त्यर्थस्य प्रकर्षो न कालस्येति नायं द्रव्यप्रकर्षः । 'उच्चैस्तरामिति'। अत्राप्युच्चैःशब्दस्याधिकरणप्रधानत्वान्नायं द्रव्यप्रकर्षः । 'उच्चैस्तरः पर्वत इति'। नात्राधिकरणप्रधान उच्चैःशब्दः किं तर्ह्युच्चैस्त्वं नाम गुणस्तद्गतः प्रकर्षः पर्वतनिष्ठोभिधीयते, स्वभावाच्च तरबन्तस्यात्र सत्त्वभूतार्थाभिधायित्वं, लिङ्गसंख्यायोगश्च । उदित्करणं किम् । आमि सर्वनाम्नः सुडित्यत्रास्य सामान्यग्रहणं माभूद्यदि स्यात्किन्तरामित्यत्र परत्वाद्यस्येतिलोपं बाधित्वा ह्रस्वनद्याप इति नुट् प्रसज्येत, मकारस्य त्वित्संज्ञा प्रयोजनाभावादेव न भविष्यतीति ॥

"अमु चच्छन्दसि" ॥ 'प्रतरामिति'। प्रशब्दार्थस्य प्रकर्षस्य प्रकर्षे तरप् प्रकृष्टतर इतिवत् । अत्राप्युदित्करणमिच एकाचोम्प्रत्ययवच्चेत्यत्रास्यापि ग्रहणं मा भूदिति, यदि स्यादत्रापि यद् दृष्टं कार्यं तदप्यतिदिश्येत, तत्र को दोषः, इह स्त्रियंमन्यः, यस्येतिलोपः प्राप्नोति ।

"अनुगादिनष्ठक्" ॥ अनुगदतीत्यनुगादी, अस्मादेव निपातनाण्णिनिः, प्रकृतिस्वरूपप्रदर्शनपरं चैतत्, न त्वयं केवलः प्रयोगार्हः, ठको नित्यत्वात् ॥

"णचः स्त्रियामञ्" ॥ 'व्यावक्रोशीति'। व्यवपूर्वात्क्रुशेर्णच्, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति गत्योरपि णजन्तेनुप्रवेशात्समुदायादञ्, तस्याङ्गत्वादादिवृद्धिः, न य्वाभ्यां पदान्ताभ्यामित्येष विधिर्न भवति, न कर्मव्यतिहारइति निषेधात् । 'तत इति'। णचः, णजन्तादित्यर्थः । 'स्वार्थिकास्तत्रैव भविष्यतीति'। स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यनुवर्तन्तइति कृत्वा । 'अतिवर्त्तन्तेपीति'। व्यभिचरन्त्यपीत्यर्थः । अपिशब्दादनुवर्त्तन्तेपि, अनुवृत्तिस्तु कासूगोणीभ्यां ष्टरजिति षित्करणान्ङीषर्थादवसीयते, एकान्ततो निवृत्ते हि षकारोऽनर्थको भवेत्,

तेनेत्यादिना ज्ञापनस्य प्रयोजनं दर्शयति, प्रसचा, सुरा विशेषः । 'देवतेति' । देवशब्दात्पुल्लिङ्गादेव तल् ॥

"अणिनुणः" ॥ 'सांराविणमिति' । रुशब्दे, कूट दाहे, दीर्घोपधः, मृजूष् शुद्धौ, एतेभ्यः संपूर्वेभ्य इनुण्, पूर्ववत्सगतेरण्, इननण्यपत्य इति प्रकृतिभावः, एकानुबन्धकपरिभाषया घिनुणोऽत्र ग्रहणाभावः ॥

"विसारिणो मत्स्ये" ॥ 'विसारीति' । पूर्ववणिणनिः । 'वैसारिण इति' । पूर्ववत्प्रकृतिभावः ॥

"संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" ॥ अत्रोपाय एवाभ्युपाय इतिवद् आवृत्तिरेवाभ्यावृत्तिरित्याश्रीयमाणे आद्या ऽऽवृत्तिर्न भवतीति षट्कृत्वः प्रवृत्तौ पञ्चकृत्व इति स्यात्, अभिग्रहणं चानर्थकं, क्रियावृत्तिगणनइत्येव वाच्यं स्यात्, अतोऽत्र विवक्षितं वक्तव्यं तदाह । 'पौनःपुन्यमभ्यावृत्तिरिति' । पुनःपुनर्भवितरि वर्त्तमानात्पुनःपुनःशब्दात्प्रवृत्तिनिमित्तस्य भवनस्य निष्कृष्याभिधानाय भावप्रत्ययः, पौनःपुन्यं पुनःपुनर्भवनमित्यर्थः, असकृत्प्रवृत्तिरिति यावत् । तत्र चाद्या प्रवृत्तिरन्तर्भवति, तद्यथा पौनःपुन्यं भृशार्थो वा क्रियासमभिहार इत्यत्र योऽपि द्विः पचति तत्रापि पापच्यतइति भवति, उक्तमेवार्थं स्पष्टयति । 'एककर्तृकाणामिति' । बहुवचनमतन्त्रं द्वयोरपि जननसंख्यानमावृत्तिर्भवत्येव, जननसंख्यानमुत्पत्तिगणनं, भिन्नकर्तृकासु भिन्नजातीयासु च क्रियासु निरन्तरमनुष्ठीयमानास्वपि क्रियाभ्यावृत्तिप्रत्ययाभावादुभयमुपात्तम्, एवंभूतानां क्रियाणां जन्मन उत्पत्तेर्यत्संख्यानं गणनं तत्क्रियाभ्यावृत्तिगणनम्, एतच्चाभ्यावृत्तिशब्दस्य तत्रैव प्रसिद्धेर्लभ्यते, अत एवाभिग्रहणं कृतम् । 'पञ्चकृत्वो भुङ्क्तइति' । एकैवात्र भुजिक्रिया निवृत्तभेदाख्यातेनाभिधीयते, आवृत्त्या जनितेन फलेनैकीकृतत्वात् तस्या उत्पत्तयः पञ्चसंख्यानेन गण्यन्ते, आवृत्तिकृतं फलमिच्छन्भुजिक्रियायाः पञ्चोत्पत्त्यावृत्तीः करोतीत्यर्थः । अवान्तरफलापेक्षं पञ्चत्वमुत्पत्तिभेदश्च । 'भूरिवारानिति' । वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात्कालाध्वनोरिति द्वितीया, तथा च पुनःपुनःशब्दादुत्पत्त्याधारकालाभिधा-

यित्वात्कालाट्ठञ् भवति । 'पौनःपुनिक इति' । यदि कालशब्दो वारशब्दो भूरिशब्दोपि तत्समानाधिकरणः कालएव वर्त्तते न क्रियाभ्यावृत्ताविति कथमत्र प्रसङ्गः । अत्राहुः । कालवाचित्वेपि क्रियावृत्तेरपि गम्यमानत्वात्प्रसङ्ग इति । अपर आह । वारशब्दः क्रियागतामावृत्तिं द्योतयन् क्रियाविशेषणत्वात्कर्म, नपुंसकत्वं तु न भवति, लोकाश्रयत्वाल्लिङ्गस्य, वारशब्दस्य नित्यपुल्लिङ्गत्वात्, भूरिवारान् भुङ्क्ते, कोर्थः, आवृत्तानि बहूनि भोजनानि करोतीत्यर्थः । अत्र बहुगणवतुडतिसंख्येत्यत्र बहुगणग्रहणं नियमार्थम् अनियतप्रचयवाचिनां मध्ये एतयोरेवेति, तेन भूरिशब्दस्य लौकिकसंख्यावाचित्वेप्यत्र ग्रहणाभावः । 'अभ्यावृत्तिः क्रियाया एव संभवतीति' । साध्यार्थविषयत्वात्तस्याः । 'न द्रव्यगुणयोरिति' । तयोः सिद्धस्वभावतया शब्देनाभिधानात्, पुनःपुनर्दण्डी पुनःपुनःस्थूल इत्यत्रापि गम्यमानाया भवतिक्रियाया एवाभ्यावृत्तिर्न तु द्रव्यगुणयोः । 'एकस्य सकृच्चेत्यत्रापीत्यादि' । एकशब्देन ह्येकैव क्रियाव्यक्तिराख्यायते न च तस्यामावृत्तेः संभवः, तत्रासति क्रियाग्रहणे एको भुङ्क्तइत्यत्रापि स्यात्, तस्मादुत्तरार्थं क्रियाग्रहणम्, एवं च क्रिया चाभ्यावृत्तिश्च क्रियाभ्यावृत्ती तयोर्गणनं क्रियाभ्यावृत्तिगणनमिति द्वन्द्वगर्भः षष्ठीसमास इति केचित् । अन्ये त्विहार्थमपि सुखप्रतिपत्तये क्रियाग्रहणं मन्यमानाः षष्ठीतत्पुरुषगर्भं तत्पुरुषं वर्णयन्ति, तत्र गुणभूतस्यापि क्रियाग्रहणस्य निष्कृष्य संबन्धस्तद्ग्रहणसामर्थ्याद्वेदितव्यः । 'पञ्चपाका इति' । अत्र कर्तृभेदेन वा भिन्नकालाः क्रिया एव गण्यन्ते नाभ्यावृत्तिः, सा हि भिन्नकालानामेककर्तृकाणामेककर्मकाणां च नैरन्तर्ये सति भवति, यद्यप्यत्र धात्वर्थस्य सिद्धताख्ये धर्मे घञो विधानं तथापि धातुनात्रापि साध्यस्वभावा क्रियैवाभिधीयत इति तदाश्रयः प्रत्ययः स्यादेव, तथा च कारकस्य गतिः कारकस्य व्रज्येत्यत्र तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति ण्वुल् भवति । 'अक्रियमाणइत्यादि' । आदशभ्यः संख्याः संख्येयएव वर्त्तन्ते अतः परं संख्याने संख्येये च, तत्रासति गणनग्रहणे क्रियाभ्यावृत्तौ संख्येयायां वर्त्तमानेभ्यः

संख्येयवचनेभ्य एव प्रत्ययः स्यात् संख्याने तु वर्तमानेभ्यो न स्यात्, तदाह । 'इह न स्यादिति' । 'शतं वाराणामिति' । इयमप्यत्यन्तसंयोगे द्वितीया, किं कारणं न स्यादित्यत आह । 'नह्यत्रेति' । कारणमाह । 'संख्यानमात्रवृत्तित्वादिति' । 'गणनग्रहणात्त्विति' । क्रियाभ्यावृत्तिगणन-इति विषयनिर्देशः, तत्र ये संख्येयवचना ये च संख्यानमात्रवचना द्वयेपि ते गणनविषया भवन्तीति सर्वत्र सिद्धिः । ननु शतं वाराणामित्यत्र यदा वाराणामिति प्रयुज्यते तदा सापेक्षत्वात्प्रत्ययेन न भाव्यं, यदा तर्ह्यर्थात्प्रक-रणाद्वा ऽपेक्ष्यं निर्ज्ञातं भवति तदा भविष्यति, यद्येवं संख्येयवचनादेव शतकृत्व इति भविष्यति, नहि शतकृत्वो भुङ्क्त इत्यत्र वाराणामिति वारानिति वा प्रयोगार्हं, तस्मात्प्रयोजनदिगियं दर्शिता, इदं तु प्रयोजनं यत्र साक्षादभ्यावृत्तिगणनं तत्र यथा स्यात् अभ्यावृत्तिगणन-संभवमात्रे मा भूत् सप्तदशप्राजापत्यान्पशूनालभत इति, अस्ति ह्यत्रा-लभतिक्रियायाः प्रतिपशु वस्तुतोभ्यावृत्तिः, तस्या विषयभूतायाः साधनग-णनवृत्तेरपि सप्तदशशब्दात्प्रत्ययः स्यात् ॥

"द्वित्रिचतुर्भ्यः सुच्" ॥ 'चतुरिति' । रात्सस्येति सुचो लोपः । 'सुचश्चकारः स्वरार्थ इति' । चितः सप्रकृतेर्बह्वकजर्थमितिवचनाच्च-तुरित्यस्यान्तोदात्तो भवति, अन्यथा चतेरुरन्नित्युरन्प्रत्ययान्तत्वादा-द्युदात्तः स्यात् ॥

"एकस्य सकृच्च" ॥ 'सकृदिति' । संयोगान्तस्य लोप इति सुचो लोपः, सुचश्चकारोत्राप्यन्तोदात्तार्थः, अन्यथा इण्भीकापाशल्यतिमर्चिभ्यः कन्निति कन्प्रत्ययान्त एकशब्द आद्युदात्त इति तस्य स्थाने भवन्सकृ-च्छब्द आन्तर्यत आद्युदात्तः स्यात् एकः पाक इत्यत्रेत्यादि । अपर आह । अभ्यावृत्तिग्रहणादेव सिद्धे पूर्वसूत्रे क्रियाग्रहणं क्रियाविशेषप्रतिप-त्त्यर्थं, तेन साध्यस्वभावैव क्रिया गृह्यते, पाकादिभिस्तु शब्दैः सिद्धस्व-भावाभिधीयते, यादृशी च पूर्वसूत्रे क्रिया गृहीता तादृश्येवात्राप्यनुवर्त्त-त इति, तत्र च पाकादिशब्दप्रयोगे प्रत्ययाभाव इति घञन्ताद्यन्तप्रयोगेपि कृत्वोर्थप्रत्ययः क्वचित् लिङ्गाद् द्विर्वचनेचीति साधनीयो मनीषिभिः ॥

"विभाषा बहोर्धाऽविप्रकृष्टकाले"॥ 'अविप्रकृष्टकालग्रहणं क्रियाभ्यावृत्तिविशेषणमिति'। यद्यप्येवं तथापि गणनग्रहणेनैवास्य शाब्दोन्वय इति नपुंसकलिङ्गमेव भवति न स्त्रीलिङ्गं, गणनस्याविप्रकृष्टकालत्वं गण्यमानानामभ्यावृत्तीनामविप्रकृष्टकालत्वे सतीत्यर्थप्राप्तं वृत्तिकारेण दर्शितम्। 'बहुधा दिवसस्य भुङ्क्त इति'। कृत्वोर्थप्रयोगे कालेधिकरण इति षष्ठी, अविप्रकृष्टकालत्वं चाभ्यावृत्तीनां तत्तत्क्रियावशेन व्यवतिष्ठते। 'बहुकृत्वो मासस्य भुङ्क्त इति'। अत्राभ्यावृत्तेर्विप्रकृष्टकालताऽशक्त्यादिरिच्छाद्यपेक्षया द्रष्टव्या॥

'तत्प्रकृतवचने मयट्'॥ 'प्राचुर्येण प्रस्तुतं प्रकृतमिति'। यद्यपि प्रस्तुतमात्रवचनः प्रकृतशब्दस्तथापीह वचनग्रहणादयं विशेषो लभ्यते, वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थम्।'प्रथमासमर्थादिति'। केन पुनः प्रथमान्तस्य सामर्थ्यं प्रत्ययस्तावत्स्वार्थिकः, यद्यपि स्वार्थिकः प्राचुर्यं तु तस्य द्योत्यं तच्च प्रकृत्यर्थगतमित्येतावदत्र सामर्थ्यम्। 'अपरे पुनरित्यादि'। अत्र प्रकृत्यर्थादर्थान्तर एव प्रत्ययः, तत्पुनरर्थान्तरं ल्युटा प्रतिपादितं, सप्तम्यर्थउच्यमानता प्रकृतता च प्रकृत्यर्थविशेषणं तद्दर्शयति। 'अन्नं प्रकृतमस्मिन्निति'। 'उभयथा सूत्रप्रणयनादिति'। प्रकारद्वयसाधारण्येन सूत्रस्य प्रणयनादित्यर्थः। अत्र प्रथमे व्याख्याने तदिति विस्पष्टार्थं, द्वेवात्तलित्येवमादिवत्समर्थविभक्तेः सिद्धत्वात्॥

"समूहवच्च बहुषु"॥ 'आपूपिकं मौदकिकमिति'। अचित्तहस्तिधेनोष्ठक्॥

"अनन्तावसथेतिहभेषजाञ्ञ्यः"॥ आवसन्त्येतमित्यावसथः, उपसर्गे वसेरित्यथप्रत्ययः,। 'निपातसमुदायोयमिति'। वचनाच्चाप्रातिपदिकादपि प्रत्ययः। 'उपदेशपारंपर्यं वर्त्ततइति'। तद्यथा इतिह स्मोपाध्यायाः कथयन्तीति, भिषज्यतेः कण्ड्वादियगन्तात्क्विपि भिषक्, भिषज इदमित्यण् भैषजम्, अस्मादेव निपातनादेकारः॥

"देवतान्तात्तादर्थ्ये यत्" ॥ 'चतुर्थीसमर्थादिति'। तादर्थ्ये चतुर्थ्या उपसंख्यानादेतल्लभ्यते। 'पितृदेवत्यमिति'। कर्मधारयात्प्रत्ययः, कथं पुनरत्र सामानाधिकरण्यं, कथं च न स्यात्, जातिभेदात्, अन्या हि पितृजातिरन्या च देवताजातिः, दर्शयति च देवा मनुष्याः पितरस्तेन्यत आसन्निति, देव एव देवता स्वार्थिकस्तल्, एवं तर्हि तल्प्रत्ययस्य प्रकृतिर्देवशब्दः पचाद्यचि ऐश्वर्यार्थाद्दिवेः साध्यो न जातिवचनस्ततः सामानाधिकरण्यं स्याद्देवतापितृशब्दयोः । एवं च देवदेवत्यमित्येतदपि सिद्ध्यति । यागसम्प्रदानमन्त्रस्तुत्यं वा देवता न जातिविशेष इत्यर्थः ॥

"पादार्घाभ्यां च" ॥ गन्धोदकादिसमुदायोऽर्घस्तदर्थमुदकाद्यर्घ्यम् । 'छन्दस्य इति'। यथा गायत्र्यादिवृत्तं छन्दःशब्दोऽभिधत्ते तथा ऽऽश्रावयेत्यादिकमपि सप्तदशाक्षरसमाहारं तत्र वर्तमानाच्छन्दःशब्दात्स्वार्थे प्रत्ययः, व्यत्ययेन पुल्लिङ्गता । 'द्वितीयाबहुवचनस्य लुगिति' । छान्दसत्वात्, अत एव यदन्तात्प्रथमैकवचनं पुल्लिङ्गं च भवति, अमुष्यशब्दो नडादिः, अमुष्यपुत्रशब्दो मनोज्ञादिः, उभयत्र षष्ठ्या अलुगुपसंख्यायते, प्रत्ययप्रकरणे प्रासङ्गिकमेतत्, स चालुक् तयोरेव गणयोस्तथैव पाठात्सिद्धः । 'समशब्दादावतुप्रत्यय इति' । उकार उगित्कार्यार्थः, समावती यज्ञस्याशीरिति ङीब् भवति, आग्नीध्रः शरणे रण् भत्वं च, आग्नीध्रं, ततोऽञ्, आग्नीध्री, समानं धारणमस्य साधारणम्, अनेकं प्रत्यविशिष्टसंबन्धं, पृषोदरादित्वात्समानस्य सभावः, ततोऽञ्, साधारणी,ङीबर्थं वचनं, क्षेमशब्दाद्यो वक्तव्यः, यति हि [illegible]ति यतोऽनाव इत्याद्युदात्तत्वं स्यादन्तोदात्तश्चेष्यते ॥

"यावादिभ्यः कन्" ॥ 'ऋतावुष्णशीते इति'। उष्णक ऋतुः, शीतक ऋतुः, ऋतोरन्यत्र तूष्णोऽग्निः शीतमुदकम् । 'पशाविति'। लूनकः पशुः, वियातकः पशुः, अन्यत्र लूना दर्भाः, वियातो नीचः । 'अणु निपुणइति'। अणुकः सूक्ष्मदृक्, निपुणः, अन्यत्राणुरेव, पुत्र कृत्रिमे, पुत्रको लोहादिनिर्मितः, अन्यत्र पुत्र एव, स्नात वेदसमाप्तौ, यस्याध्येतव्यो वेदः समाप्तः पारं प्राप्तः, स वेदमधीत्य स्नास्यन्नित्यादिस्वगृह्योक्तप्रकारेण

स्नानाय चोदितः स्नातकः, समावृत्त उच्यते, अन्यत्र नद्यां स्नातः । 'शून्य रिक्तइति' । उदकादिना रिक्तो घटः शून्यकः, अन्यत्र शून्यः प्रत्ययः, बाह्यार्थरहित इत्यर्थः । तथा शुने हितः शून्यः, गवादिषु शुनः सम्प्रसारणं वा च दीर्घत्वं चेति पठ्यते, दान कुत्सिते, कुत्सितं दानं दानकं, तनु सूत्रे, तनुकं सूत्रंसूक्ष्मतन्तुः, अन्यत्र तनुः शरीरम्, ईयसश्च, ईयसुवन्ताच्च स्वार्थे कन् भवति श्रेयस्कं, कुमारीक्रीडनकानिच । कुमारीणां यानि क्रीडनकानि क्रीडासाधनानि तानि कनमुत्पादयन्ति, कण्डुकम् ॥

"वर्णे चानित्ये" ॥ सत्येवाश्रये यल्लोहित्यमपगच्छति तदनित्यम् । 'लोहितकः कोपेनेति' । कोपे सति भवति कोपापगमे च सत्येवाश्रये निवर्त्ततइत्यनित्यमेतल्लोहित्यम् । 'लोहितो गौरिति' । यावदाश्रयभावित्वादयं नित्यो वर्णः । 'लोहितं रुधिरमिति' । विषादिदूषितं रुधिरं कदा चित्कृष्णमपि भवतीति विशेषणं, वर्णग्रहणं किम् । अनित्यत्वं विशेषणं यथा विज्ञायेत, अन्यथा लोहितशब्दो वर्णप्रवृत्तिनिमित्तमुपादाय यत्र द्रव्ये पर्यवस्यति तत्रापि विशेषणं संभाव्येत, तत्र को दोषः, इह च स्याल्लोहितो गौरिति, इह च न स्याल्लोहितकाः पार्थिवाः परमाणवोग्निसंयोगेनेति, तथा वर्णनिरपेक्षो रुधिराख्ये द्रव्ये लोहितशब्दस्तस्यापि ग्रहणं स्यात्, अनित्यग्रहणमिदानीं किमर्थं स्यात्, ननु सर्वमेव रुधिरमनित्यं यत्सत्येवाश्रये कादाचित्कं, यथा स्त्रीणामार्त्तवं, तस्य ग्रहणार्थं स्यात्तस्माद्वर्णग्रहणं लोहिताल्लिङ्गबाधनं वेति ह्यासूत्रएतद्व्याख्यातम् ॥

"रक्ते" ॥ यत्र द्रव्यान्तरसंपर्क्केण लौहित्यं तथाधीयते यथा यावदाश्रयमवतिष्ठते तत्रानित्यत्वाभावात्पूर्वेण न प्राप्नोतीत्ययमारम्भः । नन्वेवमपि रञ्जनात्प्रक् सत्येव पटादावाश्रये लौहित्यस्यावस्थानाभावादस्त्येवानित्यता न कारणावस्थायामेव रञ्जनात्, तदेतदेव वचनं ज्ञापकं पूर्वत्रायावद्द्रव्यभावित्वमनित्यत्वं न पुनराद्यन्तभाव इति तादृशस्य त्वनित्यत्वस्य ग्रहणे तैजसानां परमाणूनां यल्लौहित्यं तद्व्यतिरिक्तस्य सर्वस्यैव लौहित्यस्य नित्यत्वादिदं वचनमनर्थकं स्यात् ॥

"कालाच्च" ॥ 'द्वयमप्यनुवर्त्ततइति' । द्वयस्यापि स्वरितत्वात्, न त्वनन्तरं रक्तइत्येतदेवेत्यपिशब्दार्थः । 'वैलक्ष्येणेति' । विलक्षस्य भावो वैलक्ष्यं, लज्जा । 'कालकः पट इति' । नील्यादिना कालतामापादित इत्यर्थः ॥

"विनयादिभ्यष्ठक्" ॥ 'उपायाद्ध्रस्वत्वं चेति' । उपायशब्दष्ठकमुत्पादयति, ह्रस्वत्वं चापद्यते, स च ह्रस्व आकारस्यैव भवति, अन्यस्याचः स्वत एव ह्रस्वत्वात्, अकस्मादित्यत्र पठ्यते, तद्दकारान्तं तेनेसुसुक्तान्तात्क इति कादेशो न भवति, आकस्मिको ऽव्ययत्वाट्टिलोपः ॥

"वाचो व्याहृतार्थायाम्" ॥ 'व्याहृतइति' । उक्त इत्यर्थः । 'अन्येनेति' । संदेष्ट्रा, तेन हि पूर्वमुक्तस्तस्यार्थः संदेशहरं प्रति । 'संदेशवागिति' । संदेशरूपा वाक् संदेशवाक्, संदिश्यतइति संदेशस्तस्य वाक् संदेशवाक्, यया संदिष्टोऽर्थो ऽभिधीयते, अपर आह, लेख्यादिनावधारितेऽर्थे प्रवर्त्तमाना वाक् व्याहृतार्थेति, अतिवर्त्तन्ते च स्वार्थिकाः प्रकृतितो लिङ्गवचनानीति नपुंसकत्वम् ॥

"तद्युक्तात्कर्मणोऽण्" ॥ 'कर्मशब्दादिति' । एतेन कर्मण इति स्वरूपग्रहणं नेप्सिततमादेरिति दर्शयति, एतच्च व्याख्यानाल्लभ्यते । 'कार्मणमिति' । अन्निति प्रकृतिभावः । 'तथैवेति' । यथैव व्याहृतार्थया वाचा प्रतिपादितमेवमेतत्त्वया कर्त्तव्यमिति तथैवेत्यर्थः । 'अण्प्रकरणादिति' । प्रज्ञादिष्वपाठ एतेषां भाषायामण् माभूदिति । 'सान्नाय्येत्यादि' । सान्नाय्यादयः शब्दाः प्रज्ञादिषु द्रष्टव्या इत्यर्थः । अन्तोदात्तार्थं चेह सान्नाय्यशब्दस्य ग्रहणं, रूपं तु पाय्यसान्नाय्येति निपातनादेव सिद्धम् । 'आनुजावर इति' । अनुजादवर इत्यस्मादेव निपातनात्पञ्चमीसमासः, ततोऽण् । 'आनुषूक इति' । सूतिः सूः, संपदादित्वात् क्विप्, अनुगता सूरेतमिति बहुव्रीहिः, कप्, पूर्वपदादिति षत्वम् । 'चातुष्प्राश्यमिति' । चतुर्भिः प्राश्यमिति कर्तृकरणे कृता बहुलमिति समासः, ततोऽण्, आधाने ब्रह्मौदनस्येदमभिधानम् । 'इदुदुपधस्येति षत्वम् । 'राक्षोघ्नमिति' । रक्षांसि हन्यन्तेनेनेति घञर्थे कः, वियात

विकृतशब्दाभ्यामण्, वैयातः, वैकृतः, वरिवःपरिचर्या, तत्करोति वरिवस्कृत्, क्विप्, अतः कृकमीति सत्वं, वरिवस्कृदेव वारिवस्कृतः परिचारकः, अग्रमयनमस्य अग्रे हायनमस्येति बहुव्रीहिभ्यामण् आग्रायणं कर्म, नानिष्ट्वाग्रायणेनाहिताग्निर्नवस्याश्नीयादिति, आग्रहायणी, अणन्तान् ङीप्, संतप्यतेनेनेति संतपनः, संतपन एव सांतपनः कृच्छ्रः ॥

"ओषधेरजातौ" ॥ 'औषधं पिबतीति'। पथ्या शुण्ठी सैन्धवादीनां कल्के ओषधशब्दो वर्त्तते। 'औषधयः क्षेत्ररूढा इति'। फलपाकावसानेषु जातिविशेषेष्वत्रौषधिशब्दः ॥

"प्रज्ञादिभ्यश्च" ॥ 'प्रजानातीति प्रज्ञ इति'। इगुपधज्ञाप्रीकिरः क इति कः, अथ किमर्थमुभयं क्रियते, इह च प्रज्ञशब्दः पठ्यते मत्वर्थे च प्रज्ञाशब्दाण्णो विधीयते, यः प्रजानाति तस्य प्रज्ञास्ति, यस्य च प्रज्ञास्ति स प्रजानातीति, ततश्चान्यतरेणैव प्राज्ञ इति सिद्धमित्याशङ्क्य स्त्रियां विशेष इति दर्शयति। 'स्त्रियामित्यादि'। विद्वन्षोडन्निति विभक्त्यन्तयोः पाठ एकत्वविवक्षार्थः, वैचित्र्यार्थ इत्यन्ये, श्रोत्र शरीरे, यः श्रोत्रशब्दः शरीरे वर्त्तते ऽसौ अणमुत्पादयति श्रौत्रम्, अन्यत्र श्रोत्रमिन्द्रियम्। 'जुहूत्कृष्णमृगइति'। कृष्णमृगे वर्त्तमानाज्जुहूच्छब्दादण् प्रत्ययो भवति, जौहूतः कृष्णमृगः, अन्यत्र जुहूत्, अपर आह। कृष्णमृगे वर्त्तमानात्कृष्णशब्दादण् प्रत्ययो भवति कार्ष्णो मृगः, अन्यत्र तु कृष्णः, जुहूच्छब्दात्त्वविशेषेणाण् भवतीति। 'सत्त्वं त्विति'। सच्छब्दो मत्वन्त आगतनुम्को गृह्यते, सत्वानेव सात्वतः ॥

"मृदस्तिकन्" ॥ प्रत्ययस्यादित्येव सिद्धे तिकन इकारोच्चारणं यत्रापो लुक् क्रियते तदर्थं, पञ्चभिर्मृत्तिकाभिः क्रीतः पटः पञ्चमृत्तिक पटः ॥

"सस्नौ प्रशंसायाम्" ॥ 'उत्तरसूत्रेन्यतरस्यांग्रहणादिति'। मृच्छब्दस्य सामान्यशब्दत्वान्मृदित्युक्ते प्रशंसाया अनवगमाच्च, इह प्रशंसायां रूपबित्यस्यानन्तरं वृकज्येष्टाभ्यां तिल्तातिलौ च छन्दसि, मृदस्सस्नौ,तिकंश्चेति वक्तव्यं तथा न कृतमित्येव ॥

"“बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्” ॥ ‘कारकाभिधायिनः शब्दादिति’ । पञ्चकपक्षे प्रातिपदिकात् त्रिकपक्षे सुबन्तात् । गहादिषु मध्यमध्यमं चाण् चरणइत्यविशेषाभिधानेपि पृथिवीमध्यस्य मध्यमभाव इत्युक्तमिह तु न तथेत्याह । ‘अविशेषाभिधानाच्चेति’ । ‘एवमादीति’ । आदिशब्देनापादानाधिकरणयोरुदाहरणपरिग्रहः, बहुभ्य आगच्छति बहुश आगच्छति, बहुषु निदधाति बहुशो निदधाति, एवमल्पेभ्यो ऽल्पशः, अल्पेष्वल्पशः, बहूनां स्वामीति शेषे षष्ठीविधानान्न कारकाभिधायी बहुशब्दः । ‘पर्यायेभ्योपीति’ । अपिशब्दाद्विशेषेभ्योपि, तत्र वृत्तौ पर्यायस्योदाहरणं, विशेषस्य तु त्रिशो ददातीति, वीप्साया अन्यत्र, वीप्सायां तूत्तरेण सिद्धम् । ‘आभ्युदयिकेष्विति’ । अभ्युदयप्रयोजनेषु अग्न्याधेयादिषु अनिष्टेषु भयादिनिमित्तेषु दानेषु, प्रायिकं चैतन्मङ्गलवचनम्, अन्यत्रापि हि दृश्यते, अपेतापोढमुक्तपतितापत्रस्तैरल्पश इति कारकत्वं समासक्रियां प्रति पञ्चम्याः कर्मत्वात्तदभिधायित्वाच्चाल्पशब्दस्य द्रष्टव्यम्, उदीरितं चाल्पा पञ्चमी समस्यतइति ॥

“संख्यैकवचनाच्च वीप्सायाम्” ॥ नित्यवीप्सयोरिति द्विर्वचने प्राप्ते तदपवादः शस्विधीयते, कथं तर्ह्येकैकशः पितृसंयुक्तामिति शस्द्विर्वचनयोः सहप्रयोगः, छन्दोवदृषयः कुर्वन्ति, यद्यत्र पारिभाषिकस्यैकवचनस्य ग्रहणं स्यात् सर्वेभ्यो ब्राह्मणेभ्यो घटंघटं ददातीत्यत्रापि स्यात्, घटशब्दस्यैकवचनान्तत्वादित्यालोच्यान्वर्थस्यैकवचनस्यात्र ग्रहणमित्याह । ‘एकोर्थ उच्यते येनेति’ । नन्वेवमपि स दोषस्तदवस्थ एव, एकवचनान्तस्यैकार्थत्वादित्यत आह । ‘कार्षापणादयश्चेति’ । अनेन वृत्तिस्यैकार्थता ऽऽश्रीयते न वाक्यगतेति दर्शयति, वृत्तौ च घटादयो जातिशब्दा अनेकार्था भवन्ति जातियोगस्यैकानेकसाधारणत्वात्, किं त्वभेदैकत्वसंख्यामुपाददते, कार्षापणादयस्तु परिमाणवचना अकृपरिमाणमर्थमाचक्षाणा न मात्रयापि न्यूनाधिकभावे भवन्ति, वाक्ये तु कार्षापणौ कार्षापणा इत्येकशेषबलाद्दत्ताः पादा माषा इतिवदेकजात्यन्वयरहितानेकार्थप्रतीतिः, वृत्तौ तु विभक्त्येकशेषयोरभावात्स

एव केवलोक्तपरिमाणो ऽर्थो ऽवतिष्ठते, अतः कार्षापणादय एवोदाहरणमिति जयादित्यो मन्यते, वामनस्तु जश्शसोः शिरित्यत्रोदाहरिष्यति, जसा सहचरितस्य शसो ग्रहणादिह न भवति, कुण्डशो ददाति, वनशः प्रविशतीति । स मन्यते जातिशब्दोपि यदार्थप्रकरणादिना वृत्तावेकार्थीभवति, भवत्येव तदा ततोपि शसिति द्वयोर्द्वयोः स्वामीति, कथं तर्हि

अव्रतानामविद्यानां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥

इति । कथं च न स्याद् वीप्साया अभावादकारकत्वादनेकवचनत्वाच्च, अयं ह्यत्रार्थः, एवंभूतानां ब्राह्मणां सहस्रस्यापि परिषत्त्वं न विद्यतइति,नायमत्रार्थो यथा त्वमात्थ किं तर्हि सहस्रं सहस्रं ये समेतास्तेषामप्येवंभूतानां परिषत्त्वं नास्तीति, तत्र समवायक्रियायां कर्तृत्वाद्वीप्सायाश्चाभावाच्छस् भवति ॥

"प्रतियोगे पञ्चम्यास्तसिः" ॥ 'प्रतिना कर्मप्रवचनीयेनेत्यादि' । प्रतिः प्रतिनिधिप्रतिदानयोरिति कर्मप्रवचनीयसंज्ञा, प्रतिनिधिप्रतिदाने च यस्मादिति पञ्चमी । 'आद्यादिभ्य उपसंख्यानमिति' । तस्यादित उदात्तमर्द्धह्रस्वमित्येतदत्र लिङ्गम् ॥

"अपादाने चाहीयरुहोः" ॥ 'सार्थाद्धीयतइति' । ओहाक् त्यागे, कर्मण्यात्मनेपदं, यक्, घुमास्थादिसूत्रेणेत्वं, कथं पुनः कर्मसंज्ञा, यावता कर्त्तुरीप्सिततमं कर्म, न चात्र सार्थः कर्तृसंज्ञकः किं तु ध्रुवत्वेन विवक्षितत्वादपादानसंज्ञको, माभूत्कर्तृसंज्ञा जहाति तावत्सार्थो देवदत्तं यदि न जह्यादपाय एव न संवर्त्तेत, स्वातन्त्र्योपलक्षणं च कर्मसंज्ञायां कर्तृग्रहणं, कर्तृसंज्ञा भवतु मा वा भूत्, एवं चापादनस्यापि सतः सार्थस्य हाने यत्स्वातन्त्र्यं वास्तवं तदाश्रया कर्मसंज्ञा भवति, यद्येवं माषेष्वश्वं बध्नातीत्यत्र कर्मणोप्यश्वस्य वस्तुतो यद्भक्षणे स्वातन्त्र्यं तदाश्रया माषाणां कर्मसंज्ञा प्राप्नोति तस्मात्कर्मकर्त्तर्यत्र लकारः, कथ-

मिह जहातिरपगमनायां वर्त्तते देवदत्तं सार्थो जहाति अपगमयतीत्यर्थः, एषैव च सार्थस्यापगमना यत् क्षुदुपघातादिना देवदत्तस्यापगमने तत्समर्थाचरणं, यदा तु क्षुधादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वं ततश्च हीयतइति, कोर्थः, स्वयमेवापगच्छतीत्यर्थः, पुनः कुतो हीयत-इत्यपेक्षायां सार्थेन संबन्धः । 'विकारनिर्द्देश इति'। विकृतिर्विकारः, इह तु तद्धेतुत्वाद्यगभिप्रेतः, तत्र हि घुमास्थादिसूत्रेणेत्वविधानाद्धा-तुरूपं विक्रियते, यका निर्द्देशो यस्य यकीत्वमस्ति, तस्य ग्रहणार्थमित्यर्थः । 'जिहीतेरिति'। श्तिपो ङित्त्वाभावादीत्वानुपपत्तेर्जिहातेरिति पठि-तव्यं, तिङन्तानुकरणं वा जिहीतेरिति द्रष्टव्यम् । 'नैषा पञ्चमीति'। यदन्तात्तसिः नैषा पञ्चमीत्यर्थः । 'किं तर्हि तृतीयेति'। हेतौ करणे वा तृतीया, तदन्ताद्धीयमानपापयोगाच्चेति तसिरित्यर्थः । स्वरेण वर्णेन वा विवक्षितादर्थाद्धीन इत्यर्थः संपद्यते ॥

"अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः" ॥ 'अतिक्रम्य ग्रहो-तिग्रह इति'। अतिशब्दोत्रातिक्रमणे वर्त्ततइति दर्शयति। अतिशब्दो हि ससाधनेप्यतिक्रमणे दृष्टः, तद्यथा तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणमिति, न वै देवा नमस्कारमतीति च, तेन तस्यातिक्रमणमात्रे वृत्तिर्न संभवति। 'वृत्तेनातिगृह्यतइति'। बहुष्वासीनेष्वन्यातिक्रमेणायमसा-विति विज्ञायतइत्यर्थः, तत्र वृत्तं करणम्। 'चारित्रेणेति'। चरेर्वृत्ते ह्रस्वश्च वेति णित्रन् प्रत्ययः चरित्रं चारित्रम् ॥

"हीयमानपापयोगाच्च" ॥ उदाहरणेषु वृत्तस्य हीयमानेन पापेन च योगः, हेतौ करणे वा तृतीया, कर्त्ता त्वत्र बन्धुजनादिः । 'क्षेपस्या-विवक्षायामित्यादि'। कस्मादेवमित्याह । 'क्षेपे हीति ॥

"षष्ठ्या व्याश्रये" ॥ 'नानापक्षसमाश्रयो व्याश्रय इति'। तथा च हेतुमति चेत्यत्र भाष्ये प्रयोगः, व्याश्रिताश्च भवन्ति, के चित्कंसभक्ताः के चिद्वासुदेवभक्ता इति । 'देवा इत्यादि'। अर्जुन इन्द्रपुत्रः, कर्णः सूर्यपुत्रः । षष्ठी चात्रेति'। पक्षशब्दस्तु तसौ सति न प्रयुज्यते, गतार्थ-त्वात्, नानापक्षसमाश्रयणएवास्य विधानात् ॥

"रोगाच्चापनयने" ॥ 'प्रवाहिकात इति'। प्रवाहिकाशब्दात्प्रतीकारापेक्षया षष्ठी, तदन्तात्तसिः, प्रतीकारशब्दस्य तु पूर्ववदप्रयोगः ॥

"अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः" ॥ वार्त्तिककारेण च्विविधावभूततद्भावग्रहणं कर्त्तव्यमित्युक्तं तदवश्यं कर्त्तव्यमिति मन्यमानः सूत्रएव प्रक्षिप्य व्याचष्टे। 'कारणस्येति'। उपादानं निमित्तमसमवायीति त्रीणि कारणानि, तत्रोपादानकारणस्येत्यर्थः। 'विकाररूपेणेति'। कारणस्यैवोत्तरमवस्थान्तरं विकारस्तेन रूपेण तदात्मना ऽभूतस्याजातस्यापरिणतस्येत्यर्थः। तदात्मना विकारात्मना भावो जन्म परिणाम इत्यर्थः। अनेन कार्यकारणयोरभेदो दर्शितः। यथा रज्जुः शिक्यमिति न तत्त्वान्तरम् अथ च न रज्जुमात्रे शिक्यप्रतीतिः, एवं हिरण्यमेव कुण्डलं, मृदेव घट,स्तन्तव एव पटो, दार्वेव यूपः, अथ च न हिरण्यादिमात्रे कुण्डलादिप्रतीतिः, नो खलु कुण्डलं हिरण्यं न भवतीति कश्चित्प्रत्येति, यदि च कुण्डलं हिरण्यं न भवति किं तर्हि हिरण्यं पिण्डः, ननु सोपि पिण्डः, एवं वृत्तमेवं दार्घमिति न किं च न हिरण्यं स्यात्, तस्मादनुवृत्तं कारणं व्यावर्त्तमानस्त्ववस्थाभेदो विकार इति युक्तं, कुतः पुनरयमभूततद्भावविशेषो लभ्यते, न पुनरभूत्वा भवनमात्रं भवन्त्यस्मिन्क्षेत्रे शालय इति, तच्छब्दोपादानात्, येन रूपेण प्रागभूतं कारणं तेन रूपेण तस्य भावो ऽभूततद्भाव इति हि तस्यार्थः, अन्यथा ऽभूतभाव इत्येव वाच्यं, तदपि वा न वक्तव्यं संपद्यकर्त्तृत्वादेव सिद्धेः, यद्वा जन्मग्रहणएव कर्त्तव्ये ऽभूततद्भावइतिवचनाद्यथोक्तार्थलाभः, सर्वथा यत्र प्रकृतिरेव विकाररूपतामापद्यमाना विकाराभेदेन विवक्ष्यते तत्रैव प्रत्ययः, तत्रैव हि दर्शितो ऽभूततद्भावः संभवति। 'संपद्यतेः कर्तेति'। शब्दात्मकस्य धातोः स्वरूपेण कर्त्रा संबन्धासंभवादर्थद्वारकमिदमभिधानं, सम्पद्यर्थस्य यः कर्त्ता स सम्पद्यकर्तेत्यर्थः। अर्थकथनं चैतत्, विग्रहस्तु सपद्यश्चासौ कर्त्ता चेति, पाघ्राध्माधेट्दृशः शो ऽस्मादेव निपातनात्संपदोपि भवति, दिवादित्वात् श्यन्, क्वचित्तु सम्पद्यते कर्तेति तिङन्तं पठ्यते, यः सम्पद्यते कर्त्ता स सम्पद्यकर्तेत्यर्थः। 'शुक्लीकरोतीति'। प्रकृतौ विकारावस्थां

प्राप्नवत्यां वर्त्तमानाद्विकारशब्दात्स्वार्थे च्विप्रत्ययः, इकारो वेरपृक्तस्येति सामान्यग्रहणार्थः, चकारस्तु तदविघातार्थः, प्रकृतेरन्तोदात्तार्थश्च, वकारस्य वेरपृक्तस्येति लोपः, अस्य च्वावितीत्वम्, ऊर्यादिच्विडाचश्चेति निपातत्वेनाव्ययत्वात्सोर्लुक्। 'नात्र प्रकृतिर्विवक्षितेति'। प्रकृतिविवक्षायामेवाभूततद्भावः संभवतीत्युक्तम्। 'अभूततद्भावसामर्थ्यलभ्यमेवेति'। यो विकाररूपेणाभूतः सन् विकारात्मना भवति स नियोगतस्तेन रूपेण सम्पद्यमानः सम्पद्यकर्त्ता भवतीत्येतत्सामर्थ्यं, यद्रूपान्तरेण सम्पद्यते न तदवश्यं कर्तृसंज्ञमेव भवतीत्यभिप्रायेणाह। 'कारकान्तरसंपत्तौ माभूदिति'। 'अदेवगृहे देवगृहे सम्पद्यतइति'। अदेवगृहे प्रागभूतो वृक्षादिः स इदानीं तस्मिन्प्रदेशे देवालयीभूते देवगृहे सम्पद्यतइत्यर्थः, उदाहरणदिक्त्वियं वृत्तिकारेण दर्शिता। कृभ्वस्तियोगाभावाद्विनैवात्र च्विः प्रसज्यते, तस्माददेवगृहे देवगृहे भवतीति प्रत्युदाहार्यम्, अत्र वृक्षादेः संपत्तिं प्रत्यधिकरणस्याप्यदेवगृहस्याभूततद्भावोऽस्त्येव, तस्य प्रागदेवगृहस्यापि संप्रति देवगृहत्वेन परिणामात्, एवं हि वृक्षादेस्तदाधारविशिष्टतया ऽभूततद्भावो यद्यपि वस्तुतः सम्पद्यकर्तृत्वमपि देवगृहस्यास्ति तथापि न तद्विवक्षितं किं तर्ह्याधारभाव एवेति भवत्युदाहरणम्। ननु चैवं सति शुक्लीकरोतीत्यत्रापि न स्याद् अत्रापि हि कारकान्तरस्य कर्मणः संपत्तिर्न कर्त्तुः, अस्त्यत्र विशेषः, कर्मव्यापारोपसर्जनं कर्तृव्यापारं करोतिराह कर्मव्यापारश्च संपत्तिः। शुक्लं करोतीति, कोर्थः शुक्लं सम्पद्यमानं सम्पादयतीत्यर्थः, ततश्च सम्पद्यकर्तृत्वमस्मिन्प्रयोगे शब्देनैवोपात्तम्, इतरत्र तु वृक्षादेरेव सम्पद्यकर्तृत्वं शाब्दं देवगृहस्य त्वार्थम्, आधारभावएव तु शाब्द इति न कश्चिद्दोषः, इह तर्हि कथं समीपीभवत्यभ्याशीभवत्यन्तिकीभवतीति, कथं च न स्यात्, नह्यसमीपं समीपं भवतीत्यत्रार्थः, किं तर्ह्यसमीपे स्थितं समीपे स्थितं भवतीति तात्स्थ्यात्ताच्छब्द्यं भविष्यति॥

"अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च"॥ 'अत्र सर्वविशेषणासंबन्धादित्यादि'। यदि त्वभूततद्भावादीनां विशेषणानां मध्ये ऽन्यतमच संबध्येत ततश्च्वेरपि विध्यर्थमेतत्स्यात्, यतस्तु सर्वाणि विशेषणानि

संबध्यन्ते ततो लोपमात्रमेव न प्राप्नोतीति तदर्थं वचनं न च्वेर्विधानार्थं, च्विश्च प्रत्यय इति तु पूर्वेणैव विहितस्य च्वेरनुवादः कृतस्तत्संनियोगशिष्टत्वं लोपस्य दर्शयितुं, यदि पुनर्विशेषविहितेन बाधा माभूदिति च्विरप्यनेन विधीयेत तत उन्मनीकरोतीत्यादावनेन प्रत्ययो न स्याद् ग्रहणवता प्रातिपदिकेन तदन्तविधिप्रतिषेधात्, ततश्चैतत्संनियोगशिष्टो लोपो न स्यात्, पूर्वेण तु केवल एव च्विः स्यात् तस्मात्पूर्वेण विहिते च्वौ परतो ऽरुःप्रभृतीनां लोपो भवतीत्येव सूत्रार्थः, पूर्वेणैव च केवलेभ्यस्तदन्ताच्च च्विर्भवति ॥

"विभाषा साति कार्त्स्न्ये" ॥ 'यदि प्रकृतिः कृत्स्ना विकारतामापद्यतइति'। अभूततद्भावविषयं कार्त्स्न्यमाश्रीयतइति दर्शयति । 'विभाषाग्रहणं च्वेः प्रापकमिति'। विकल्पार्थस्याप्यस्य प्रापयितव्यान्तराभावात् । ननु वाक्यं प्रापयितव्यं स्यात् तत्राह । प्रत्ययविकल्पस्त्विति' । अपर आह । अनेकार्थत्वान्निपातानां समुच्चयोर्थो, विभाषाग्रहणं च्वेः प्रापकमिति, विभाषाशब्दस्तु निपातो न भवति द्वयोर्विभाषयोर्मध्यइति विभक्तेर्दर्शनात्, किं तर्हि गुरोश्च हल इत्यकारप्रत्ययान्तः, विभाष्यते विकल्प्यतइति विभाषेति ॥

"अभिविधौ संपदा च" ॥ 'स कृभ्वस्तिभिरेव योगे भवतीति'। विभाषाग्रहणस्य विकल्पार्थत्वात्स्वशास्त्रेणैव च्विर्भवतीति संपदायोगे तस्याप्रसङ्गात्, स्पष्टीकृतं चैतत्पूर्वग्रन्थे विभाषाग्रहणानुवृत्तेश्चिरप्यभ्यनुज्ञायतइति, समुच्चयार्थे तु तस्मिन्ननेनैव च्विर्भवन्संपदापि योगे स्यादभ्यनुज्ञायतइति चानुपपन्नं स्यात् । 'अथेति'। उभयत्र व्याप्तिसंभवात्प्रश्नः । 'सर्वा प्रकृतिरिति'। प्रकारकार्त्स्न्येत्र सर्वशब्दः, यथा सर्वान्नीनोभिक्षुरिति। 'यथास्यां सेनायामित्यादि'। अत्रापि प्रकारकार्त्स्न्यएव सर्वशब्दः, खड्गप्रासादीनामशेषाणां शस्त्राणामेकदेशेनाप्यग्न्यात्मभावोत्र विवक्षितो न त्वेकस्या अपि शस्त्रव्यक्तेः सर्वात्मना विकाररूपापत्तिः, एवं वर्षासु लवणमित्यत्रापि । 'कार्त्स्न्यं त्वित्यादि'। यत्रैकस्यापि द्रव्यस्य सर्वा-

त्मना विकाररूपापत्तिर्न कश्चिदवयवः परिहाप्यते तत्र कार्त्स्न्यं भवति, तस्मादर्थभेदादुभयमुक्तं न त्वेकत्रैवान्यतरत्र संपदो ग्रहणं कृतमिति ॥

"तदधीनवचने" ॥ 'स्वामिसामान्यमित्यादि'। इहाधिरीश्वरइति अधिशब्दस्य कर्मप्रवचनीयसंज्ञा, तेन योगे यस्मादधिकं यस्य चेश्वरवचनमिति ईश्वरवाचिनः सप्तमी, ईश्वरश्चेशितव्यापेक्षः, अधिशब्दश्चायं शौण्डादिषु पठ्यतइति सप्तमीसमासः, ततोऽध्युत्तरपदलक्षणः खः, तत्र कृते ब्रह्मदत्ताधीनाः पञ्चाला इति सामानाधिकरण्यदर्शनादधिशब्द ईशितव्यसामान्याभिधायी पञ्चालादयस्तु तद्विशेषवचना इति गम्यते, ततश्च स्वामिसामान्यमीशितव्यसामान्यं च तदधीनशब्देनोच्यते, तत्र स्वामिसामान्यं प्रकृत्यर्थः । 'सामान्यं च विशेषोपलक्षणार्थमिति'। विशेषवाचिभ्यः प्रत्ययो विज्ञायतइत्याह । 'स्वामिविशेषवाचिन इति'॥

"देये त्रा च" ॥ 'ब्राह्मणत्रा करोतीति'। स्वरादिष्वयं त्रान्तः पठितव्यः, तेनाव्ययत्वात्सोर्लुक्, अपर आह । तत्रैव च्व्यर्थाश्चेति पठ्यते, तत्र बहुवचननिर्देशादच्व्यर्थस्यापि त्राप्रत्ययस्य साहचर्येण परिग्रहादव्ययत्वमिति । 'राजसाद्भवति राष्ट्रमिति'। पूर्वेण सातिरेव भवति ॥

'देवमनुष्यपुरुषमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्" ॥ 'सातीति निवृत्तमिति'। पूर्वसूत्रे चानुकृष्टत्वात् कृभ्वस्तियोगइति न संबध्यतइति तदर्थमत्र स्वरितत्वं कर्त्तव्यं, स्वरिते सति नाधिकार इत्ययं च पक्ष आश्रयणीयो मण्डूकप्लुत्योत्तरत्र संबन्धः, संपदा चेत्येतत्तु सर्वथैव निवृत्तत्वान्न संबध्यते ॥

"अव्यक्तानुकरणाद्व्यजवरार्द्धादनितौ डाच्" ॥ 'यत्र ध्वनावित्यादि'। यद्यप्यनुकार्यमेव रूपमनुकरणे वर्णविशेषरूपेण प्रकाशते तथाप्यव्यक्तानुकरणस्यात इताविव्यनुकरणस्यस्याच्छब्दस्य पररूपं विधत्ते, ध्वनिमात्रसाम्येन तु तस्यानुकरणमुच्यते । 'अवरशब्दोपकर्षइति'। अपकर्षो न्यूनता, प्रवृत्तिनिमित्तकथनं चैतत्, अपकृष्टं त्ववरशब्दस्यार्थः । 'यस्यापकर्षे क्रियमाणइत्यादि'। अत्रापकर्षो विभागः, समप्रविभागेर्द्धशब्दः,-

अवरत्वं चाव्यक्तमेव, द्व्यच्संनिधानात्, यस्मिन्विभज्य निरूप्यमाणे सुष्ठु-न्यूनमपि अल्पमपि अर्द्धं द्व्यच्छब्दवत्संपद्यते न ततो न्यूनमधिकं तु संभवतु मा वा भूत्तद्व्यजवरार्द्धमित्यर्थः। 'यस्येत्यादि'। यदि त्वकृते द्विर्वचने यस्य द्व्यजवरार्द्धता ततो डाज् भवतीति विज्ञायते, तदा पट-च्छब्दादेर्न स्यादिति भावः। नन्वेवं सति डाचि परभूते तदाश्रये द्विर्वचने द्व्यजवरार्द्धता भवति तस्यां च सत्यां डाचा भवितव्यमितीतरेतराश्रयं प्राप्नोति, तत्राह। 'डाचि बहुलमितीत्यादि'। सत्यं परसप्तम्यां स्यादेष दोषो विषयसप्तमी त्वेषा ततो न दोष इत्यर्थः। उदाहरणे परभागस्य टिलोपः, नित्यमाम्रेडिते डाचीति पूर्वतकारस्य परादेशश्च पका-रस्य पररूपमेकं पकारः, द्वितीय उदाहरणे दकारः। 'दृषत्करोतीति'। व्यक्तानुकरणमेतत्, प्रकरणादिना चानुकरणत्वानुगतिः। 'खरटखरटा-करोतीति'। खरटदित्यस्य द्विर्वचनादि पूर्ववत्, द्व्यजर्द्धादित्युच्यमानेत्र न स्यात्, नह्यत्रार्द्धं द्व्यच्कं किं तर्हि त्र्यच्कम्, अवरग्रहणे तु सति भवति न्यूननिवृत्त्यर्थत्वादवरशब्दस्य। 'पटिति करोतीति'। अव्यक्तानुकरणस्यात इताविति अच्छब्दस्य पररूपत्वं, यद्यत्र स्याद् डाजन्तस्य गतित्वं स्यादिति शब्दमनुच्चार्य करोतिरनन्तरः स्यादितिश्च, ततः परः एकाच्त्वादस्य प्रत्ययस्वरेणैव सिद्धमुदात्तत्वं, लोहितादिडाज्भ्य इत्यत्रापि डाभ्य इत्यु-च्यमानेपि न कश्चिद्दोषः, इडायां डाशब्दोनर्थकः, नाभा पृथिव्या इत्यादौ सुबादेशस्यापि डाशब्दस्याग्रहणं, छन्दसि ततः क्यषो ऽदर्शनात्, तस्माचार्थश्चकारेण, तत्राह। 'चकार इत्यादि'। पटपटा असीति स्थिते तिङ्ङतिङ इति निघातः, एकादेशः, अत्रासति चकारे स्वरितो वानुदात्ते पदादाविति पक्षे स्वरितः स्यात्, चित्करणसामर्थ्यात्तु चिद-चितोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावाच्चित्स्वरेणान्तोदात्त एव भवति। 'स स्वार्थिको विज्ञेय इति'। अर्थान्तरस्याभावात्, स्वार्थे तु यकारो ऽस्मादेव निपातनाद्विज्ञेयः॥

कृञो द्वितीयतृतीयशम्बबीजात् कृषौ'' ॥ 'कृषावभिधेयाया-मिति'। कस्याभिधेयायां, द्वितीयादिशब्दानां डाजन्तानां कृञश्च,

तद्दर्शयति । 'द्वितीयं कर्षणं विलेखनं करोतीत्यर्थ इति' । 'प्रतिलोमं कर्षतीत्यर्थ इति' । शम्बशब्दस्यात्र प्रातिलोम्ये वृत्तिः, कृञश्च कर्षणे । 'सह बीजेनेति' । बीजशब्दस्य बीजावापसहिते विलेखने वृत्तेरयमर्थो भवति ॥

"सङ्ख्यायाश्च गुणान्तायाः ॥ 'सङ्ख्यावाचिनः शब्दस्येति' । एतेन सङ्ख्याया इत्यस्य पञ्चम्यन्ततां दर्शयति । 'गुणान्तेति' । व्यधिकरणपदो बहुव्रीहिरन्तशब्दश्च समीपवचन इत्याह । 'गुणशब्दोऽन्तेसमीपइति' । अन्तशब्दस्य सङ्ख्याया इत्येतदपेक्षमाणस्यापि संबन्धिशब्दस्य नित्यसापेक्षत्वात्समासः, निपातनाच्च सप्तम्यन्तस्यापि तस्य परनिपातः, यत्रेत्यनेन प्रकृतिर्निर्दिश्यते,सेत्यादिना प्रकृतिसङ्ख्या, गुणान्तेत्युच्यते सङ्ख्याशब्दस्यान्ते गुणशब्दो यस्याः सा तथोक्ता, अत्रापि गमकत्वात्समासः । 'तादृशादिति' । शङ्ख्याशब्दसमीपवर्त्तिगुणशब्दादित्यर्थः । अन्तशब्दश्चायं नियतमेव परत्वविशिष्टं सामीप्यमाचष्टे न सामीप्यमात्रं, तेन गुणविंशतिरित्यादौ पूर्वभूते गुणशब्दे ऽतिप्रसङ्गो नोद्भावनीयो ऽनभिधानाद्वा ऽत्र प्रत्ययाभावः । 'द्विगुणं विलेखनं करोति क्षेत्रस्येति' । अत्र विलेखनशब्दस्य कृदन्तस्य प्रयोगात्कृद्योगलक्षणा षष्ठी क्षेत्राद्भवति,उत्पन्ने तु तद्धिते तदभावाद् द्वितीयैव भवति, अथैवं कस्मान्न व्याख्यायते सङ्ख्याया इति पञ्चमी अन्तशब्दोवयववचनः, सङ्ख्यावाचिनः परो यो गुणशब्दस्तदन्तायाः प्रकृतेरिति, उच्यते, एवं हि सति गुणान्ताया एव सङ्ख्याया इति विशेषणं स्यान्न गुणशब्दस्य समासे गुणभूतस्य, एवं तर्हि माभूदन्तग्रहणं सङ्ख्याया गुणादित्येवास्तु, व्यधिकरणे च पञ्चम्यौ, सङ्ख्यायाः परो यो गुणशब्दस्तस्मादिति, एवमपि वाक्ये प्रसङ्गः पञ्च गुणान्करोतीति, विपर्ययश्च संभाव्येत गुणशब्दात्परा या सङ्ख्या तदन्तादिति, एवं तर्हि सङ्ख्यादेर्गुणादित्येवास्तु, सत्यं, तथा तु न कृतमित्येव, प्रत्युत यथान्यासे द्विगुणभागं क्षेत्रं करोतीत्यत्रापि प्रसङ्गः ॥

"समयाच्च यापनायाम्" ॥ 'समया करोतीति' । अद्य मे पारवश्यं श्वः परश्वो वास्य समय इत्येवं यो बहुषु दिवसेषु अतिवर्त्तते स

एवमुच्यते । 'समयं करोतीति' । समयो नियमः सङ्गमो वा, समयनं समय इति ॥

"सपत्रनिष्पत्रादतिव्यथने" ॥ पतत्यनेनेति पत्रं शराणां पुङ्खगतो बर्हः । 'सपत्रं शरमिति' । सह पत्रेण वर्त्ततइति सपत्रः, आपुङ्खान्मृगशरीरे शरं प्रवेशयतीत्यर्थः । 'निष्पत्राकरोतीति' । निर्गतं पत्रमस्मान्निष्पत्रं मृगं करोतीति, यथास्य शरीरे पुङ्खप्रदेशोपि न लगति तथा शरं शरीरान्निष्क्रामयतीत्यर्थः । 'सपत्रं वृत्तमिति' । पत्राणि पर्णानि । 'जलसेचनत इति' । कर्तृकरणे कृता बहुलमिति तृतीयासमासः । 'भूमिशोधक इति' । नित्यं क्रीडाजीविकयोरिति जीविकायां षष्ठीसमासः ॥

"निष्कुलान्निष्कोषणे" ॥ 'निष्कुलाकरोतीति' । निष्कोशितं कुलमन्तरवयवानामस्मादिति बहुव्रीहौ डाच् ।

"सुखप्रियादानुलोम्ये" ॥ 'आराध्यचित्तानुवर्तनमिति' । आराध्याः स्वाम्यादयस्तेषामिष्टानिष्टकरणाकरणाभ्यां यच्चित्तस्यानुवर्त्तनमाराधनं तदानुलोम्यम् । प्रियं करोत्योषधपानमिति' । प्रीतिः प्रियं, घञर्थे कः ।

"दुःखात्प्रातिलोम्ये" ॥ 'चित्तपीडनमिति' । स्वाम्यादेर्यदनिष्टस्याचरणेनेष्टस्याकरणेन वा चित्तस्य पीडनं तत्प्रातिलोम्यम्

"शूलात्पाके" ॥ 'शूलं करोति कदन्नमिति' । शूलमुदरतोदः, कुत्सितमन्नं कदन्नं ॥

"सत्यादशपथे" ॥ सत्सु साधु सत्यं, प्राग्घितीये यति प्राप्तेस्मादेव निपातनाद्यः, अन्तोदात्तो हि सत्यशब्दः, सत्येनोत्तभिता भूमिः, ऋतं च सत्यं चेति, शपेरथः शपथः, भाण्डं रत्नादि द्रव्यजातम् । 'तथ्यमिति' । तथैव तथ्यं, पादार्घाभ्यां चेति चकारस्यानुक्तसमुच्चयार्थत्वात्स्वार्थे यत् ॥

"मद्रात्परिवापणे" ॥ 'परिवापणमिति'। कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युट्, माङ्गल्यं मुण्डनं करोतीत्यर्थः । 'चोलदीत्यादौ भद्राच्चेति वक्तव्यमिति'। मद्रादित्यर्थग्रहणमिति तु व्याख्याने मङ्गलादिभ्योऽपि स्यात् ।

"समासान्ताः" ॥ अवयववचनोऽन्तशब्द इत्याह । 'अवयवा एकदेशा इति'। समीपवचनस्तु न गृह्यते प्रत्ययपरत्वेनैव सिद्धत्वात्, अवयववचनं चान्तशब्दमाश्रयता समासार्थादुत्तरपदादकृतएव समासे समासान्ता भवन्तीत्युक्तं भवति, एवं हि ते समासस्यैकदेशा भवन्ति, यदि प्रागेव तान्प्रत्ययान्कृत्वा तदन्तेन समासः क्रियेत, तथा च न कपीत्यत्र वक्ष्यति समासार्थे ह्युत्तरपदे कपि कृते पश्चात्समासेन भवितव्यमिति, ये पुनरत्र पक्षे दोषास्ते ह्याप्सूत्रएव प्रतिविहिताः । 'अधिराजमुपराजमिति'। विभक्त्यर्थे सामीप्ये चाव्ययीभावः, अव्ययीभावे शरत्प्रभृतिभ्यः, अनश्चेति टच् । [1]'द्विपुरीति'। समाहारद्वन्द्वः । ऋक्पूरब्धूरित्यकारः । कोपश्च निषच्च कोपनिषदं, स्रक्च त्वक् च स्रुक्त्वचं, द्वन्द्वाच्चुदषहान्तात्समाहारइति टच् । 'विगतो धुरः प्रगतोधुर इति'। प्रादिसमासः । 'तत्पुरुषे तुल्यार्थेत्येष स्वरो भवतीति'। पूर्वपदप्रकृतिस्वरः, पूर्वपदं चात्र निपाता आद्युदात्ता उपसर्गाश्चाभिवर्जमित्याद्युदात्तं,उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तोदात्तौ पठितौ। अथ समासग्रहणं किमर्थं यावता बहुव्रीहौ संख्येये, तत्पुरुषस्याङ्गुलेः, अव्ययीभावे शरत्प्रभृतिभ्यः, द्वन्द्वाच्चुदषहान्तादिति प्रायेण समासविशेषग्रहणमस्ति, यत्रापि नास्ति तत्रापि संघात एव गृह्यते, यथाच् प्रत्यन्ववपूर्वात्सामलोम्न इति, यत्र तर्ह्येतदुभयं नास्ति ऋक्पूरब्धूरित्यादौ तदर्थं समासग्रहणमिति ॥

"न पूजनात्" ॥ 'यान् शब्दानुपादायेति'। पूजनवचनात्समासान्तो न भवतीत्ययमर्थो न भवति, परिगणिताभ्य एव प्रकृतिभ्यः समासान्तविधानात्, तत्र च पूजनार्थस्य कस्य चिदभावात्, अभावे प्रतिषेधानु-

---

१ द्विधुरीति व पु॰ पा॰ ।

पपत्तेः, सुराजेत्यादौ प्रादिसमासः। 'पूजायां स्वतिग्रहणमिति'। पूजनग्रहणमपि कर्त्तव्यमेव, अवक्षेपणेतिक्रमणे च वर्त्तमानयोः स्वत्योर्ग्रहणं माभूदिति। 'प्राग्बहुव्रीहिग्रहणं चेति'। बहुव्रीहौ सक्थ्यक्ष्णोरित्यतः प्रागयमधिकार इति वक्तव्यमित्यर्थः।

"किमः क्षेपे"॥ 'किंराजेति'। किं क्षेपइति समासः। 'कस्य राजा किंराज इति'। प्रश्नेत्र किंशब्दः। क्षेपइति शक्यमकर्त्तुं, कस्मादत्र न भवति, लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति, कश्चिदाह क्षेपग्रहणेनैतज्ज्ञापयति इयमिह परिभाषा नोपतिष्ठतइति, तेन निन्दिता धूरस्य शकटस्य किंधूः शकटमिति बहुव्रीहावपि प्रतिषेधः सिद्धो भवतीति तद्भाष्यविरोधादुपेक्ष्यं, तस्माद्विस्पष्टार्थं क्षेपग्रहणम्॥

"बहुव्रीहौ संख्येये डजबहुगणात्"॥ बहुव्रीहाविति सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी। 'तस्येदं ग्रहणमिति'। तस्यैव संख्येये वृत्तेः, योपि वार्थे वर्त्तते द्वित्राः पञ्चषा इति, योपि सुजर्थे द्विदशास्त्रिदशा इति, तावुभावपि संख्येयएव वर्त्तते संख्येयस्यैव वार्थस्य सुजर्थस्य चाभिधानात्। उपदशा इत्यादौ टिलोपः, उपविंशा इत्यत्र तिविंशतेर्डितीति तिलोपः, द्वयोरकारयोरतो गुणे पररूपत्वम्। 'चित्रगुरिति'। गोस्त्रियोरिति ह्रस्वः। संख्येयइति शक्यमवक्तुम्, इह कस्मान्न भवति चित्रगुरिति, नञिवयुक्तन्यायेन बहुगणप्रतिषेधात्तत्सदृशविज्ञाने सति संख्योत्तरपदो बहुव्रीहिर्ग्रहिष्यते, स्यादेतत्। वैपुल्यवचनोपि बहुशब्दोस्ति न संख्यापदमेव, गणशब्दोपि संघवचनोप्यस्ति, तस्मादशक्यं बहुगणसादृश्येन संख्योत्तरपदं ग्रहीतुमिति, तच्च, परस्परसाहचर्यात्संख्यापदयोरेव पर्युदासात्, तस्मात्प्रसज्यप्रतिषेधेपि समाससंभवात्सादृश्यस्य चानवस्थितत्वात्संख्येयग्रहणं कृतम्। 'उपबहव उपगणा इति'। अनियतप्रचयवचनयोरपि बहुगणशब्दयोरर्थप्रकरणादिना यदा विशिष्टेष्वेव दशादिषु वृत्तिस्तदा तत्समीपगता नवादय उपबहव इत्यविरुद्धं बहुवचनम्। 'अत्रेति'। उपगणा इत्यत्र। 'स्वरे विशेष इति'। डचि सत्यन्तोदात्तत्वं स्यात् तस्मिंस्त्वसति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव भवति। 'संख्यायास्त-

त्पुरुषस्येति'। तत्पुरुषस्यावयवभूतं यत्संख्यावाच्युत्तरपदं तस्मादित्यर्थः। 'निस्त्रिंशाद्यर्थमिति'। आदिशब्दः प्रकारे, अव्ययादयः संख्यान्तास्तत्पुरुषा निस्त्रिंशप्रकाराः, गोविंशतिरित्यादौ न भवति। 'निस्त्रिंशानि वर्षाणीति'। त्रिंशल्लक्षणायाः संख्याया निर्गतानि अधिकानि एकत्रिंशदादीनीत्यर्थः। 'निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति'। ततोपि दीर्घतर इत्यर्थः। रूढिशब्दस्येयं यथाकथंचिद्व्युत्पत्तिः। डचश्चित्करणं स्वरार्थमन्यथा समासार्थादुत्तरपदात्प्रत्यये कृते पश्चाद्बहुव्रीहौ सतिशिष्टः पूर्वपदप्रकृतिस्वरः स्यात्. इदमेव चित्करणं लिङ्गं समासार्थादुत्तरपदात्समासान्ते कृते पश्चात्समास इति, अन्यथा प्रत्ययस्वर एव सतिशिष्टः स्वरः स्यात्। यस्तु मन्यते कृते समासे समासान्तग्रहणसामर्थ्याच्चागमवत्तद्ग्रहणेन गृह्यतइति तस्यापि ज्ञापकार्थं चित्करणं, स्वरविधेः प्रागेव समासान्तो भवतीति, तेन महाधुर इत्यादौ बहुव्रीहिस्वरो भवति ॥

"ऋक्पूरब्धूःपथामानक्षे"॥ 'सामर्थ्यादिति'। धुर एवाक्षेण संबन्धोस्ति नेतरेषामित्येतत्सामर्थ्यम्। 'एतद्विशेषणमिति'। अनक्षइत्यत्रोत्तरपदार्थ एतदा प्रत्यवमृश्यते, अत एवाह। 'अक्षसंबन्धिनी या धूरिति'। सूत्रे त्वक्षस्य धूरपेक्षयाऽधिकरणत्वादनक्षइति सप्तमी। चक्रसंबद्धः काष्ठविशेषो रथाद्यवयवोऽक्षः, तत्संबन्धिनी धूस्तस्यां न भवतीत्यर्थः। यदि त्वक्षे समासार्थे न भवतीति विज्ञायेत इहैव प्रतिषेधः स्यात्, दृढा धूरस्य दृढधूरक्ष इति, इह तु न स्यादक्षस्य धूरक्षधूरिति, अथाप्येवं विज्ञायेत अक्षे पूर्वपदे न भवतीति, एवमपीहैव प्रतिषेधः स्यादक्षधूरिति, इह तु न स्याद्दृढधूरक्ष इति, तस्माद्व्याप्तिन्यायादुक्त एवार्थो न्याय्यः। 'अर्द्धर्च इति'। 'अर्धं नपुंसक'मिति समासे 'अर्द्धर्चाः पुंसि चे'ति पुल्लिङ्गत्वम्। 'बह्वृच इति'। बहुव्रीहिः। 'ललाटपुरं नान्दीपुरमिति'। षष्ठीसमासौ, परवल्लिङ्गता तु न भवति लोकाश्रयत्वाल्लिङ्गस्य, यद्यप्यकारान्तेन पुरशब्देन समासे कृते एतत्सिद्ध्यति तथापि व्यञ्जनान्तेन समासे तस्य श्रवणं माभूदिति पूर्वग्रहणम्। 'द्वीपं समीपमिति'। द्विर्गता आपोस्मिन्निति बहुव्रीहिः, द्व्यन्तरुपसर्गेभ्योप ईदितीत्वं, राजधुरादयः

षष्ठीसमासः । 'महाधुर इति'। बहुव्रीहिः, स्त्रियाः पुंवदिति पुंवद्भावः, आन्महत इत्यात्वम् । 'अनृचो माणवक इत्यादि'। ऋगन्तस्य बहुव्रीहेर्नञ्पूर्वस्य माणवकएवाभिधेये प्रत्यय इष्यते, तथा बहुपूर्वपदस्य चरणाख्यायामेवेत्यर्थः । 'अनृक्कं साम बह्वृक्कं सूक्तमिति'। शेषाद्विभाषेति कप्, चोः कुरिति कुत्वम् ॥

"अच् प्रत्यन्ववपूर्वात्सामलोम्नः" ॥ प्रतिसाममित्यादौ प्रादिसमासो बहुव्रीहिरव्ययीभावश्च यथासंभवं वेदितव्याः । 'कृष्णोदकपाण्डुपूर्वाया इति'। कृष्णादिशब्दाः पूर्वे यस्यास्तस्या भूमेरच् प्रत्ययः स्मृतः, कृष्णा भूमिरस्मिन् कृष्णभूमो देशः, उदीची भूमिरस्मिन्नुदग्भूमो देशः, कः पुनरसौ पृथिव्या दक्षिणसीमा भूमिशब्दो वा तद्विशेषे सस्यसंपन्ने द्रष्टव्यः, यस्य दक्षिणतः खिलः स देश उदग्भूमः । गोदावर्योश्च नद्याश्चाच् प्रत्ययः स्मृतः । ते यदि संख्याया उत्तरे भवतः, पञ्चगोदावरं पञ्चनदं, नदीभिश्चेति समाहारेऽव्ययीभावः।'पद्मनाभ इति'। पद्माकारो नाभिरस्येति प्रथमान्तयोर्बहुव्रीहिः, पद्मं नाभावस्येति विग्रहे गड्वादिषु दर्शनात्सप्तम्याः परनिपातः । 'ऊर्णनाभ इति' । ङ्यापोः संज्ञाछन्दसोर्बहुलमित्यूर्णाशब्दस्य ह्रस्वः । 'तदेतदिति'। कृष्णाभूमादिकम् । 'योगविभागेनेति'। अत एव प्राक् प्रत्ययनिर्देशः कृतः ॥

"अक्ष्णोऽदर्शनात्" ॥ अदर्शनादिति वचनादक्षीवाक्षीत्यक्षिसदृशार्थवृत्तिरिहाक्षिशब्द उपात्तः । 'लवणाक्षं पुष्कराक्षमिति'। लवणमक्षीव पुष्करमक्षीवेत्युपमितं व्याघ्रादिभिरिति समासः । 'कथमित्यादि'। ननु दर्शनादन्यत्र योऽक्षिशब्दस्तदन्तादित्युक्तं, गवाक्षकवराक्षयोश्च समुदायो दर्शनवचनो नाक्षिशब्द इति कात्रानुपपत्तिः, सत्यम्, अत्यन्तादर्शनादिति सूत्रार्थः कस्मान्न भवतीति मन्यमानस्यायं प्रश्नो द्रष्टव्यः । 'चक्षुःपर्याय इति'। तस्य प्रसिद्धतरत्वादिति भावः ॥

"अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिश्श्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः" ॥ 'समासव्य-

वस्थापीति'। क्वचिद्बहुव्रीहेरेव, क्वचिद् द्वन्द्वादेवेत्येवमादिको नियमो व्यवस्था, अपिशब्दादन्यदपि टिलोपादिकं तन्निपातनादेव । 'स्त्रियाः पुमानिति'। स्त्रियं प्रति पुमान् शूर इत्यर्थः । 'अक्षिभ्रुवमिति'। प्राण्यङ्गत्वादेकवद्भावः । 'दारगवमिति'। सर्वो द्वन्द्वो विभाषयैकवद्भवति । सप्तम्यर्थे वृत्तयोरव्यययोः समासोपि निपातनादेवेति । चार्थेन योगाभावात्, नहि भवति इह च एवं चेति । 'अहर्दिवमिति'। रोसुपीति रेफः । 'कथमनयोर्द्वन्द्व इति'। न कथं चित्, विरूपाणामपि समानार्थानामेकशेषारम्भात् । 'वीप्सायामित्यादि'। चार्थे विधीयमानो वीप्सायां न प्राप्नोति, एकशेषारम्भाच्च, तस्माद्वीप्सायां द्वन्द्वो निपात्यते, वीप्साद्योतनाच्चैकेन गतार्थत्वमपि नाशङ्कनीयं, यथा द्विर्वचने ग्रामोग्रामो रमणीय इति । 'सरजसमिति'। अव्ययीभावे चाकाल इति सहस्य सभावः । 'निःश्रेयसमिति'। प्रादिसमासः । 'निःश्रेयस्क इति'। निश्चितं श्रेयोनेनेति बहुव्रीहिः, शेषलक्षणः कप्, सोपदादाविति सत्वम् । 'ऋग्यजुरन्मुग्घइति'। य ऋचो यजूंषि मन्यते,त्रयो वा चत्वारो वा त्रिचतुराः, चतुर्णां समीपउपचतुराः, बहुव्रीहौ सङ्ख्येयइति प्राप्तस्य डचोपवादोऽज्विधीयते ॥

"ब्रह्महस्तिभ्यां वर्चसः" ॥ वर्चो दीप्तिः । उदाहरणेषु षष्ठीसमासः ॥

"अवसमन्धेभ्यस्तमसः" ॥ अवतंग तमोवतमसं, संततं तमः संतमसं, प्रादिसमासौ । अन्धं करोति अन्धयति, अन्धयतेः पचाद्यच्, अन्धं, तच्च तत्तमश्च अन्धतमसम् ॥

"श्वसो वसीयः श्रेयसः"॥ वसुशब्दात्प्रशस्तवचनादीयसुन्, वसीयः, प्रशस्यस्य श्रः, श्रेयः । 'स्वभावाच्चेत्यादि'। यद्यपि श्वःशब्दोन्यत्र कालविशेषे वर्त्तते तथापीह समासे उत्तरपदार्थप्रशंसामाशीर्विषयामाचष्टे, कुतः, स्वभावात् । 'अस्यैवेति'। श्वःश्रेयसशब्दस्येत्यर्थः ॥

"अन्ववतप्ताद्रहसः"॥ रहःशब्दोयमप्रकाशे वर्त्तते । 'अनुगतंरह इति प्रादिसमासः, अनुगतं रहोस्मिन्निति बहुव्रीहिर्वा, एवमवहीनं

रहः, अवहीनं रहोऽस्मिन्निति अवरहसं, तप्तं च तद्रहश्च तप्तरहसम्, अत्यन्तं रह इत्यर्थः ॥

"प्रतेरुरसः सप्तमीस्थात्" ॥ 'सप्तम्यर्थे वर्त्तत इति'। नह्यन्यदुरःशब्दस्य सप्तमीस्थत्वं नामेति भावः ॥

"अनुगवमायामे" ॥ 'आयामेऽभिधेयइति'। प्रवृत्तिनिमित्तमायामस्तद्वति तु पर्यवसानं मत्वर्थीयाकारान्तो वा आयामशब्दः, आयामवत्यभिधेयइत्यर्थः, अन्यथाऽनुगवं यानमिति सामानाधिकरण्यं न स्यात्। 'यस्य चायाम इति समासइति'। ननु तत्र लक्षणेनेति वर्त्तते, सत्यम्। इहापि बाह्यं यानं प्रति गवामस्त्येव लक्षणभावः। अनुशब्दात्प्रत्ययेभिधातव्ये निपातनाश्रयणं प्रसिद्ध्युपसंग्रहार्थं, तेन यद्गवां बाह्यं तत्रैव भवति ॥

"द्विस्तावा त्रिस्तावा वेदिः" ॥ 'समासश्च निपात्यतइति'। लक्षणाभावात्। यावती प्रकृतावित्यादिना निपातनस्य विषयं दर्शयति, यस्मिन्कर्मण्युपदिष्टा धर्माः कर्मान्तरेणोपजीव्यन्ते सा प्रकृतिर्ज्योतिष्टोमादिः, येनोपजीव्यते सा विकृतिः। 'कस्यां चिद्विकृताविति'। अश्वमेधादौ। 'द्विस्तावेति'। तावतीशब्देन तत्संबन्धिन्या वृत्तिर्लक्ष्यते, सैव च द्विशब्दन संख्यायतइति सुच् प्रत्ययः, परस्परसामर्थ्यं च, द्विस्तावतीत्यसमासोयं, सूत्रे लिङ्गमविवक्षितं, द्विस्तावोऽग्निरित्यपि दृश्यते, न चात्राग्निरभिधीयते न वेदिः, अग्निरपि वेदिरेव, उत्तरवेदिविकारत्वात्, उत्तरवेद्यामग्निश्चीयतइतिवचनात् ॥

"उपसर्गादध्वनः" ॥ अध्वशब्दस्याक्रियावचनत्वात्तं प्रत्युपसर्गसंज्ञाभावादुपसर्गग्रहणं प्राद्युपलक्षणम् ॥

"तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" ॥ 'अङ्गुलिशब्दान्तस्येत्यादि'। सर्वत्र समासान्तसंबन्धे षष्ठी ॥

"अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" ॥ 'अहर्ग्रहणं द्वन्द्वार्थमिति'। न तु तत्पुरुषार्थं मुख्यार्थवृत्तयोस्तत्पुरुषासंभवात्, नह्यस्ति संभवोहश्चासौ रात्रिश्चेति, नाप्यह्नोरात्रिरित्यस्ति, यदि तु रात्रिशब्देन

तद्गुणमहरुच्यतेहःशब्देन तद्गुणा रात्रिस्ततः संभवेदपि विशेषणसमासः, गौणार्थता तु भवति, न च मुख्ये संभवति गौणस्य ग्रहणं युक्तं तस्माद्-हर्ग्रहणं द्वन्द्वार्थं 'तथा च हेमन्तशिशिरावहोरात्रे च छन्दसी'ति द्वन्द्वे समासान्तो निर्दिष्टः । 'अहोरात्र इति' । समाहारद्वन्द्वः, रात्राह्नाहाः पुंसि, अह्नोह्नत्वे कृपरान्निरयन्तरेष्विति नकारस्य णत्वं, तस्य 'हशि चे'त्युत्वम्, । 'द्विरात्र इति' । समाहारे द्विगुः । 'नीरात्र इति' । प्रादिसमासः, द्रुलोपे पूर्वस्य दीर्घोणः ॥

"अह्नोह्न एतेभ्यः" ॥ 'तस्मिन्परभूतइति' । समासान्तप्रकरणात्तत्र परतो ऽयमादेशो विज्ञायते न तदपवादः, स च टजेव विहित इति सामर्थ्यादयमर्थो लभ्यते, व्याख्यानाच्चाह्नादेशः, स्वयं समासान्तो न विज्ञायते ऊधसोनङित्यादिवत् । 'सामर्थ्याच्चेत्यादि' । सामर्थ्यमेव दर्शयति । 'नहीति' । एकशेषविधानाद् द्वन्द्वस्तावच्च संभवति, तेनैव तस्यासंबन्धान्न षष्ठीसमासः, नापि विशेषणसमासः, नहि तदेव तस्य विशेषणं संभवति, एतेन बहुव्रीहिर्व्याख्यातः । 'द्व्यह्न इति' । तद्धितार्थे समासः, तत्र भव इत्यण्, तस्य द्विगोर्लुगनपत्यइति लुक् । 'सर्वाह्न इति' । अह्नोदन्तादिति णत्वम् । अह्नोह्नवचनानर्थक्यम्, अह्नष्टखोर्नियमवचनात्, अह्न एतेभ्य इत्येतावदेव सूत्रं कर्त्तव्यम्, अजनुवर्त्तते, एतेभ्यः परो योऽहन्शब्दस्ततोज् भवति टचोपवादः, तत्राचि कृतेऽह्नष्टखोरेवेति नियमाट्टिलोपाभावेल्लोपे सति द्व्यह्न इत्यादि सिध्यति, रात्राह्नाहाः पुंसीति वचनात् स्त्रियां प्रवृत्त्यभावाट्टजचोरविशेषः, एतेभ्य इति वचनं संख्याव्ययार्थमितरथा चानुकृष्टत्वाच्च संबद्ध्येत ॥

"नसङ्ख्यादेः समाहारे" ॥ सङ्ख्यादेरिति न वक्तव्यमन्यस्य समाहारे वृत्त्यसंभवात् ॥

"उत्तमैकाभ्यां च" ॥ 'केचित्त्वित्यादि' । यथा प्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात् तथैवात्राप्युत्तमग्रहणसामर्थ्यादुपोत्तमोत्तमयोर्द्वयोरपि ग्रहणमिति तेषामभिप्रायः, अत्र पक्षे उत्तमौ द्वा-

वैकस्यापर इति बहुवचनप्रसङ्गात्सोत्रो द्विवचननिर्देशः, एकशब्दस्यापूर्वनिपातोऽस्याचतरमित्यस्यानित्यत्वज्ञापनार्थः ॥

"राजाहस्सखिभ्यष्टच्" ॥ 'इह कस्मान्निति'। किं च स्यात्? अत्र टच् स्यात्, भस्याढे तद्धितइति पुंवद्भावेन ङीपि निवृत्ते टचि टिलोपे सति टित्त्वान्ङीपि मद्रराजीति स्यान्मद्रराज्ञीति चेष्यते, तस्मादत्र टचोऽनुत्पत्तिर्वक्तव्येति भावः। टचश्चित्करणमन्तोदात्तार्थमन्यथा प्रत्ययस्य समासैकदेशत्वाद्द्विधुरः प्रधुर इत्यादाविव प्रत्ययस्वरोऽव्ययपूर्वपदप्रकृतिस्वरेण बाध्येत ॥

"गोरतद्धितलुकि" ॥ 'पञ्चगवमिति'। समाहारे द्विगुः, पञ्चगुरित्यत्र तद्धितार्थे। 'पञ्चगवरूप्यं पञ्चगवमयमिति'। यथात्र द्विगोर्लुगनपत्यइति रूप्यमयटोर्लुङ्न भवति तथा तत्रैवोक्तम् ॥

"अग्राख्यायामुरसः" ॥ अग्राख्यायामिति पञ्चम्यर्थे सप्तमी, पञ्चम्यन्तेनोरःशब्देन सामानाधिकरण्यात्, सामानाधिकरण्यं तु स चेदुरःशब्द इत्यादिना दर्शितम् ॥

"अतेः शुनः" ॥ 'जवन इत्यर्थ इत्यादि'। विषयविशेषादियमर्थव्यवस्था श्वशब्दस्य ॥

"उपमानादप्राणिषु" ॥ 'अश्वालोष्ट इति'। अत्र नञस्तत्पुरुषादिति प्रतिषेधेन भाव्यं, तस्मान्निःश्वालोष्टइति प्रत्युदाहर्तव्यम् ॥

"खार्याः प्राचाम्" ॥ 'द्विखारीति'। टजभावपक्षे नपुंसकह्रस्वत्वम्। अयं योगः शक्योऽवक्तुं, कथं द्विखारं त्रिखारमिति, खारीशब्देन समानार्थः खारशब्दोऽस्ति, तथा च तदस्य परिमाणं, संख्यायाः संज्ञेत्यत्रान्येभ्योऽपि दृश्यते, खारशताद्यर्थमिति वार्तिकम् ॥

"द्वित्रिभ्यामञ्जलेः" ॥ 'द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिरिति'। अञ्जलिपरिमितो व्रीह्यादिरञ्जलिः, न पाणिद्वयं, तस्य मूल्यत्वासंभवात्, ततश्च परिमाणत्वात्प्राग्वतीयस्य ठञोऽध्यर्द्धपूर्वेति लुक्। 'द्व्यञ्जलिप्रिय इति'। व्यवस्थितविभाषात्वादुत्तरपदद्विगोर्न भवतीत्याहुः ॥

"अनसन्तान्नपुंसकाच्छन्दसि" ॥ 'सुत्रामार्णमिति'। सुष्ठु त्रायत इति त्रातो मनिन्, उपपदसमासः,। 'अनेहसमिति'। नञ्याहन एह चेत्याङ्पूर्वाद्धन्तेरसिप्रत्ययः, धातूपसर्गयोश्चेहादेशः, नञ उपपदसमासः, द्वितीयैकवचनम्, अन्तग्रहणं विस्पष्टार्थम् ॥

"ब्रह्मणो जानपदाख्यायाम्" ॥ अन्तरेणापि भावप्रत्ययं जानपदशब्दो भावप्रधानो द्विकयोरितिवदित्याह । 'समासेन चेद्ब्रह्मणो जानपदत्वमाख्यायतइति'। यद्यप्येकं ब्रह्मग्रहणं तेन च समासो विशेषितः, तथापि प्रत्यासत्तेर्ब्रह्मण एव जानपदत्वं विशेषणं विज्ञायते तस्मादेतत्प्रत्ययविधानमिति तत्र एव हि प्रत्ययविधाने ब्रह्मणो जानपदत्वं शक्यमाख्यातुम् । 'देवब्रह्मेति'। षष्ठीसमासः कर्मधारयो वा ॥

"द्वन्द्वाच्चुदषहान्तात्समाहारे" ॥ 'तत्पुरुषान्माभूदिति'। तत्पुरुषादेव माभूदित्यर्थः। द्वन्द्वादित्यनुच्यमाने हि तत्पुरुषाधिकारो न निवर्त्तेत ॥

"अव्ययीभावे शरत्प्रभृतिभ्यः" ॥ 'जराया जरस् चेति'। जराशब्दादच् प्रत्ययो भवति, अव्ययीभावे जरसादेशश्च, उपजरसम्। 'प्रतिपरसमनुभ्योऽक्ष्ण इति'। प्रादिभ्यः परो योऽक्षिशब्दस्ततष्टच्भवति, तत्र परशब्दस्याव्ययीभावासंभवात्तत्पुरुषार्थं ग्रहणम्। 'प्रत्यक्षमिति'। यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः, परमक्ष्णः परोक्षं, परोक्षे लिडिति निर्देशात्पञ्चमीसमासः, उपसर्जनस्य च परनिपातः, अत्यकारस्य चोत्वम्, अक्षिभ्यां समक्षं यथार्थे योग्यतायामव्ययीभावः । 'अन्वक्षमिति'। पश्चादर्थे ऽव्ययीभावः ॥

"नपुंसकादन्यतरस्याम्" ॥ 'नपुंसकग्रहणमुत्तरपदविशेषणमिति'। नाव्ययीभावविशेषणमव्यभिचारात् ॥

"नदीपौर्णमास्याग्रहायणीभ्यः" ॥ नदीति स्वरूपग्रहणं न संज्ञायाः, पौर्णमास्याग्रहायण्योः पृथग्ग्रहणात् ॥

"झयः" ॥ 'झय इति प्रत्याहारग्रहणमिति'। झकारयकारयोस्तु

ग्रहणं न भवति तदन्तस्याव्ययीभावस्यासम्भवात्, योगविभागश्चिन्त्यप्रयोजनः ॥

"गिरेश्चसेनकस्य" ॥ 'अन्तर्गिरमिति'। विभक्त्यर्थे ऽव्ययीभावः। 'विकल्पोनुवर्त्तत एवेति'। अन्यथा केषां चिज्झयन्तानां शरत्प्रभृतिषु पाठोनर्थकः स्यात्, झय इत्यनेनैव सिद्धत्वात्, एतेनैतच्च चोदनीयं द्वयोर्विभाषयोर्मध्ये नित्या विधय इति पूर्वस्य विधेर्नित्यत्वार्थमिदं सेनकग्रहणं स्यादिति ॥

"बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" ॥ स्वाङ्गमद्रवादिलक्षणं पारिभाषिकं गृह्यते। 'दुःश्लिष्टविभक्तीनीति'। दुर्निन्दायां, निन्दितं यथा तथा श्लिष्टाः संबद्धाः विभक्तयो येषु तानि तथोक्तानि, तथाहि। बहुव्रीहिशब्दात्पञ्चम्या भवितव्यं, समासान्तसंबन्धे षष्ठ्या वा, यथा तत्पुरुषस्याङ्गुलेरिति, इह तु सप्तम्येकवचनं श्रुतं सक्थ्यक्ष्णोरिति षष्ठीद्विवचनं सप्तमीद्विवचनं वा, न चैवंभूतेनानेन बहुव्रीहिः शक्यो विशेषयितुं, भिन्नविभक्तिवचनत्वात्, स्वाङ्गादिति पञ्चम्येकवचनं तच्च न सक्थ्यक्ष्णोः समानाधिकरणं विशेषणमवकल्पते, तच्चाभिप्रेतं, तस्माद्विभक्तिव्यत्ययमाश्रित्य विभक्तयः सम्बन्धयितव्या इति दुःश्लिष्टविभक्तीनीत्युक्तम्। 'स्थूलाक्षिरिक्षुरिति'। अक्ष्णोऽदर्शनादित्यचाच भवितव्यं, यदि तु नेष्यते समासान्तविधिरनित्य इति वक्तव्यं, तत एव तर्हि षजपि न भविष्यति, तस्मात्स्थूलाक्षा सूक्ष्माक्षा वेणुयष्टिरिति अत्रेव टापि प्रत्युदाहर्त्तव्य इत्याहुः। 'दीर्घसक्थीति'। दीर्घं सक्थ्यस्याः सा दीर्घसक्थी, अत्र षचि सति ङीषुदात्तो भवति, टचि तु सति ङीबनुदात्तः स्यात्, ननु टचश्चित्करणमन्तोदात्तार्थं, ततश्च ङीबप्युदात्तनिवृत्तिस्वरेणोदात्त एव भविष्यति तत्राह। 'सक्थं चाक्रान्तादित्यादि'। 'विभाषयेति'। विभाषोत्पुच्छ इत्यतोनुवृत्तेः षचश्चित्करणमस्यार्थं सक्थ्यपि यदा क्रान्तात्परं तदा नित्यमन्तोदात्तं भवति चक्रसक्थः वक्रसक्थ इति, गौरसक्थादौ तु नार्थश्चित्करणेन ॥

"अङ्गुलेर्दारुणि" ॥ 'अङ्गुलिसदृशावयवमित्यादि' । दारुणि समासार्थे मुख्याभिरङ्गुलीभिः सम्बन्धो नोपपद्यतइति भावः । ननु च द्वे अङ्गुली प्रमाणमस्य दारुण इत्यत्र सम्भवति तत्राह । 'यस्य त्वित्यादि'। इह च बहुव्रीहेरयं प्रत्ययो विधीयते त्वदुक्ते चोदाहरणे तद्धितार्थे तत्पुरुषः कर्त्तव्यस्तत्र च तत्पुरुषस्याङ्गुलेरित्यचा भवितव्यं, तस्माद्बहुव्रीहौ दारुणि वाच्ये गौण एवाङ्गुलिशब्द इति सुष्ठूक्तमित्यर्थः ॥

"द्वित्रिभ्यां ष मूर्द्ध्नः" ॥ अथकिमर्थं षः प्रत्ययान्तरं क्रियते न प्रकृतः षजनुवर्त्तिष्यते, द्विमूर्द्धस्त्रिमूर्द्धइत्यत्र द्वित्रिभ्यां पाद्दन्मूर्द्धस्विति पाक्षिकमन्तोदात्तत्वं यथा स्यात्, षचि तु सति चित्स्वाविमित्यमन्तोदात्तत्वं स्यात्, द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहावित्यस्य तु समासान्तविधेरनित्यत्वात्तदभावे द्विमूर्द्धा त्रिमूर्द्धानं सप्तरश्मिं गृणीषइति सावकाशः स्यात्, षे तु सति यदापि समासान्तः क्रियते तदापि पक्षे ऽन्तोदात्तत्वं पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिः, अनित्यत्वं च षविधानादेव विज्ञायते, नित्ये हि सति प्रकृते षच्यपि विहिते द्वित्रिभ्यामिपि स्वरः प्राप्तविभाषारूपेण चित्स्वरं बाधिष्यते विषयान्तराभावात्, अनित्यत्वे तु समासान्ताभावपक्षे सावकाशं द्वित्रिभ्यामिति स्वरं चित्स्वरो बाधेतेति प्रत्ययान्तरकरणमर्थवद्भवति, एवं च कृत्वा मूर्द्धस्विति नकारान्तनिर्द्देश उपपन्नो भवति अन्यथा सक्थ्यं चाक्रान्तादितिवदकारान्तमेव निर्द्दिशेत्, यदि नकारान्तो निर्द्दिश्यते कथं समासान्ते कृते भवति । नैष दोषः, वक्ष्यति हि तत्र यदापि समासान्तः क्रियते तदा बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्च समासान्तस्यान्तोदात्तत्वं भवत्येवेति ॥

"अप्पूरणीप्रमाण्योः" ॥ 'पूरणप्रत्ययान्त इति' । तस्य पूरणे डडित्येवमादयः पूरणार्थे ये प्रत्यया विहितास्तदन्ता इत्यर्थः । 'स्त्रीलिङ्गा इति' । पूरणीति ङीपा निर्द्देशात् । 'पूरणीग्रहणेन गृह्यन्तइति' । पूरणार्थसाहचर्यात् । 'अपि प्रधानपूरणीग्रहणमिति' । अपि विधीयमाने प्रधानं या पूरणी सा गृह्यतइति वक्तव्यमित्यर्थः । क्व पुनः पूरण्याः प्राधा-

न्यमित्यत आह । 'यत्रेति' । 'न केवलं वर्त्तिपदार्थ एवेति' । समासावयवभूतं पदं वर्त्तिपदं तस्यार्थो वर्त्तिपदार्थः, प्रथमान्तं चैतत्र सप्तम्यन्तं पूरणीत्येतदनुषज्यते न पुनरनुप्रविशतीति, तत्रोदाहरणे उद्भूतावयवभेदस्य समुदायस्य कृतैकशेषेण रात्रिशब्देनाभिधानाद्रात्रिषु पञ्चम्या अन्तर्भावः । 'कल्याणपञ्चमीकः पक्ष इति' । नद्यृतश्चेति कप्, अत्र वर्त्तिपदार्थे एव पूरणी न त्वन्यपदार्थः, तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थत्वात्, यथा वृक्षशब्दस्यावयव्यभिधेयो न तु शाखादयो ऽवयवाः, अनुमीयमानस्याशब्दार्थत्वादित्यप्राधान्यं पूरण्याः । 'नेतुर्नक्षत्रइति' । नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरित्यर्थः । 'छन्दसि चेति' । अनक्षत्रार्थमिदम् । 'पञ्चकमासिकइति' । पञ्चभृतिरस्य मासस्य पञ्चको मासः, सोऽस्यांशवस्नभृतय इति संख्यायाः कन्, पञ्चको मासोऽस्येति बहुव्रीहौ कृते टच्, अपः पित्करणं यत्र बहुव्रीहावन्तोदात्तत्वमारभ्यते तद्बाधनार्थम्, अपञ्चमाः सुपञ्चमाः, नञ्सुभ्यामित्यन्तोदात्तत्वं न भवति ॥

"अञ्नासिकायाः संज्ञायां नसं चास्थूलात्" ॥ नसमिति द्वितीयानिर्द्देशो वैचित्र्यार्थः । 'द्रुणस इति' । द्रुरिव नासिकास्य, पूर्वपदात्संज्ञायामग इति णत्वं, वध्रे भवा वार्ध्री, सा नासिकास्य वार्ध्रीणसः, वृद्धिनिमित्तस्य च तद्धितस्येति पुंवद्भावप्रतिषेधः, गौरिव नासिकास्य गोनसः । 'खुरखराभ्यां नस् वक्तव्य इति' । केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम् । 'खुरणाः खरणा इति' । अत्वसन्तस्य चेति दीर्घः, शितिः कृष्णा नासिकास्य शितिनाः, अहेरिव नासिकास्य अहिनाः, अर्चा प्रतिमा तस्या इव नासिकास्य अर्चनाः, ङ्यापोः संज्ञाछन्दसोरिति ह्रस्वत्वम् ॥

"उपसर्गाच्च" ॥ उपसर्गग्रहणं प्राद्युपलक्षणं, नासिकां प्रति क्रियायोगाभावात् । 'वेर्ग्रो वक्तव्य इति' । विशब्दात्परस्य नासिकाशब्दस्य ग्रशब्द आदेशो भवति प्रत्ययस्त्वज्जेव ॥

"सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः" ॥ 'टिलोपादिकमिति' । सुप्रातं सुश्वमित्यत्र टिलोपः, अव्ययानां भमात्रे टिलोप इत्येतत्तु नाश्रितम्, आदिपदेन एणीपदाजपदयोः पद्भावः ।

'शोभनं प्रातरस्येति'। प्रातःशब्दस्याधिकरणप्रधानत्वात्सामानाधिकरण्याभावात्, प्रातस्तनं कर्म प्रातःशब्देन लक्ष्यते, देवदत्तादिश्चान्यपदार्थ इत्याहुः। कथं च वरदः करोतु सुप्रातमह्नामयं नायक इति, नह्ययं बहुव्रीहिः, शोभनं [1]प्रातस्तवार्कः करोत्विति ह्यत्रार्थः। उच्यते। शोभनं प्रातस्तनं कर्म यस्य सन्ध्यादेस्तत्ते करोत्विति क्लेशेनास्य निर्वाहः॥

"नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्"॥ हलिग्रहणमनर्थकं, कथमहलः सुहल इति, अकारान्तो हलशब्दो ऽस्ति, नन्वर्थभेदोस्ति, महद्धलं हलिरित्युच्यते, हलमात्रं तु हलं, नायमर्थभेदः किं चित्करः, क्रियमाणेपि हलिग्रहणे हलशब्देनापि समासो न दण्डवारितः, ततश्च प्रकरणादिवशेन विशेषो ऽवगन्तव्यः, सति चैवमकारान्तेनापि समासे प्रकरणादिनैव महत्त्वमवगंस्यते, इह तर्हि दुर्हल इत्यकारान्तेनापि समासे पूर्वपदप्रकृतिस्वरः प्राप्नोति, समासान्ते तु विहिते चित्स्वरो भवति, अहलः सुहल इत्यत्र नञ्सुभ्यामित्यन्तोदात्तविधानाचास्ति विशेषः, शेषाद्विभाषेति च हलिशब्दात्कप् प्रत्ययः प्रसज्येत, तस्माद्धलिग्रहणं, के चित्तु हलिशक्त्योरिति पठन्ति, अस्थिपर्यायः शक्तिशब्दः॥

"नित्यमसिच् प्रजामेधयोः"॥ असेश्वायं न विहितः सकारस्येत्संज्ञा माभूदिति। 'एवं तर्हीत्यादि'। भाष्यएतचाश्रितं, चित्करणं दुःप्रजाः दुर्मेधा इत्यत्रान्तोदात्तार्थमन्यत्र नञ्सुभ्यामित्येव सिद्धम्॥

"धर्मादनिच् केवलात्"॥ 'परमः स्वो धर्मो ऽस्य परमस्वधर्म इति'। सर्वनामसंख्ययोरुपसंख्यानमिति स्वशब्दस्य पूर्वनिपातो न भवति, प्राप्तस्य चाबाधा व्याख्येयेति आहिताग्न्यादेराकृतिगणत्वाद्वा॥

"जम्भा सुहरिततृणसोमेभ्यः"॥ 'दन्तवचनो वेति'। इमं जम्भसुतं पिबेति दर्शनात्॥

"दक्षिणेर्मा लुब्धयोगे"॥ 'लुब्धो व्याध इति'। कवयस्तु-हिंसामात्रे प्रयुञ्जते, 'बाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो

[1] शोभनां तत्र व्युष्टिमिति च पु॰ पा॰।

इत्थितोर्मे' ति यथा । 'ग्रथितमिति' । ग्रथशब्दादितच्, ग्रथ गात्रविचूर्णनइत्यस्माद्वा चौरादिकणिजन्तात्क्तः ॥

"इच् कर्मव्यतिहारे" ॥ 'अयं बहुव्रीहिरिष्यतइति' । अस्यैव कर्मव्यतिहारे वृत्तेः, उदाहरणेष्वन्येषामपि दृश्यतइति पूर्वपदस्य दीर्घत्वम् । तिष्ठद्गुप्रभृतिष्वयमिच् पठ्यतइति' । तेनाव्ययीभावसंज्ञकत्वादव्ययत्वे सति सुब्लुग् भवतीति भावः । यद्येवमव्ययीभावसंज्ञया बहुव्रीहिसंज्ञाया बाधनात्समासस्वरेणैवान्तोदात्तत्वं सिद्धमिति नार्थश्चित्करणेन, विशेषणार्थं तु, असति हि तस्मिंस्तिष्ठद्गुप्रभृतिष्विकारमात्रं पठ्येत ततश्च अच इरित्यस्यापि ग्रहणं स्यात् ॥

"द्विदण्ड्यादिभ्यश्च" ॥ यदि द्विदण्ड्यादयः साधवो भवन्तीत्ययमर्थोऽभिप्रेतः, द्विदण्ड्यादिभ्य इति सूत्रपदस्य कथं निर्वाहेत आह । 'द्विदण्ड्यादिभ्य इति' । 'तादर्थ्यएषा चतुर्थीत्यादि' । 'समुदायनिपातनाच्चेति' । समुदाया यत्र प्रसिद्धास्तत्रैव तेषामवरोधोवस्थापनं यथा स्यादित्येवमर्थं समुदायनिपातनमित्यर्थः । 'द्विदण्डि प्रहरणइति' । द्वौ दण्डावस्मिन्प्रहरणइति विग्रहः । 'इह न भवतीति' । किं न भवति, द्विदण्डीत्येतच्छब्दरूपं साधु न भवतीत्यर्थः । 'बहुव्रीह्यधिकारेपीति' । अत्रापि समुदायनिपातनाच्चेत्ययमेव हेतुः । ननु प्रातिपदिकेष्विच्प्रत्ययान्तपाठादेव सिद्धं द्विदण्ड्यादीनां साधुत्वं तत्किमनेन, तत्र । नहि पाठमात्रेणेजन्तत्वं शक्यमवगन्तुं, ततश्चाव्ययीभावसंज्ञा न स्यात्, अनार्षश्च पाठः शङ्क्येत, क्वचिदप्यनुपयोगात् ॥

"प्रसंभ्यां जानुनोर्ज्ञुः" ॥ 'ज्ञुरित्ययमादेश इति' । प्रत्ययस्त्वयं न भवति, षष्ठीद्विवचनेन निर्देशात्, इह हि जानुशब्दस्यैकत्वेपि अर्थगतं द्वित्वमुपपदनिबन्धनं वा द्वित्वमाश्रित्य जानुनोरिति निर्देश एतदर्थः क्रियते, स्थानषष्ठीत्वमसंदिग्धं कथं विज्ञायेतेति । छन्दसि तु स्वतन्त्रोपि ज्ञुशब्दो दृश्यते, उपज्ञुबाधो नमसा, सदेम वत्सज्ञु पशुकामस्येति ॥

"ऊधसोऽनङ्" ॥ ङित्करणादन्त्यादेशत्वमकारादित्वं च निश्चि-

त्याह । 'अनङादेशो भवतीति' । कुण्डोध्नीति' । बहुव्रीहेरूधसो ङीष्, अल्लोपोनः, अनङ्विधानमुत्तरार्थम्, इह तु नकारादेशेनापि सिद्धम् ॥

"गन्धस्येदुत्पूतिसुसुरभिभ्यः" ॥ 'इकारादेशो भवतीति' । षष्ठीनिर्देशादादेशत्वावसायः, प्रकरणभेदाय चादेशत्वं व्यवस्थाप्यते न त्वस्मिन्प्रत्ययेपि कश्चिद्दोषः, गन्धशब्दोयमस्ति द्रव्यवचनः, वहति जलमियं, पिनष्टि गन्धानियमिति, अस्ति च गुणवचनः, चन्दनस्य गन्ध इति, तत्र गुणवाचिनो ग्रहणार्थमाह । 'गन्धस्येत्वइति' । रूपादिसमुदायो द्रव्यं, तस्य गन्धलक्षणो गुण एकान्त एकदेशो भवति, रूपादिव्यतिरिक्तमवयवि द्रव्यमिति तु पक्षे एकान्त इवैकान्तः, तत्स्थस्योपलम्भात् । 'सुगन्ध आपणिक इति' । आपणे नियुक्त आपणिकः, प्राग्वहतीयष्ठक्, भवार्थे वा अध्यात्मादित्वाट्ठक्, अथ वायोः कथं सुगन्धिर्दुर्गन्धिरिति, नह्ययं गन्धो वायोर्गुणः, माभूत्तस्य गुणः, तेन तावदविभागापन्नोलक्ष्यते, एतावदेव च तदेकान्तत्वं विवक्षितं, न तद्गुणत्वम्, एवं च कृत्वा कुङ्कुमाद्यनुलेपनमपि यदा देवदत्तादेरविभागापन्नं भवति तदेत्वं भवत्येव सु[1]गन्धिर्देवदत्त इति, सर्वथा द्रव्यवचननिवृत्तिः ॥

"अल्पाख्यायाम्" । 'सूपोल्पोस्मिन्सूपगन्धीति' । अर्थप्रदर्शनमेतत्, विग्रहस्तु सूपस्य गन्धो लेशोऽस्मिन्निति, अन्यथा विशेषणत्वाद्गन्धशब्दस्य पूर्वनिपातः स्यात्, यद्वास्मादेव निपातनाद्गन्धशब्दस्य परनिपातः ॥

"पादस्य लोपोऽहस्त्यादिभ्यः" ॥ 'लोपो भवति समासान्त इति' । यदि त्वयं समासान्तो न स्याद्यादेः परस्येत्यादेः स्यात्, शेषाद्विभाषेति कप् च प्रसज्यते, समासान्तापेक्षस्य शेषस्याश्रयणात्, कथं पुनरभावरूपोन्तावयवो भवति तत्राह । 'स्थानिद्वारेणेति' ॥

"कुम्भपदीषु च" ॥ बहुवचननिर्देशात्प्रभृत्यर्थोवगम्यतइत्याह । 'कुम्भपदीप्रभृतय इति' । 'समुदाया एव निपात्यन्तइति' । कथं तर्हि सूत्रे भूतविभक्त्या सप्तम्या निर्देश इत्यत आह । 'तत्रेति' । विषयग्रहणेन सूत्रे

१ सुरभिगन्धिर्देवदत्त इति २ पुण० ।

विषयसप्तमीति दर्शयति । 'यथा कुम्भपद्यादयः सिद्ध्यन्तीति' । यत्तदोर्नित्यसंबन्धात्पूर्वत्र तथा लोपो भवतीत्यर्थो ग्राह्यः, किमर्थं पुनः समुदाया एव निपात्यन्ते न कुम्भादीनेव गणे पठित्वा तेभ्यः परस्य पादशब्दस्य लोपो विधीयेत तत्राह । 'समुदायपाठस्य चेति' विषयनियममेव दर्शयति । 'स्त्रियामेवेति' । अत्र च स्त्रियामपि ङीप् प्रत्यय एव, पादोऽन्यतरस्यामिति यदा ङीब्विषयभूतस्तदैवेत्यर्थः । 'यच्चेत्यादि' । उपमानपूर्वपदं कुम्भपदी जालपदीत्यादि, संख्यापूर्वपदं एकपदी शतपदीति । अष्टापदीति पठ्यते, तत्र निपातनाद्दीर्घत्वम्,-अष्टनः संज्ञायामिति वा ऽऽकारः ॥

"वयसि दन्तस्य दतृ" ॥ 'द्विदविति' । ऋकारस्योगित्कार्यार्थत्वादुगिदचामिति नुम् ॥

"स्त्रियां संज्ञायाम्" ॥ अच्छन्दोर्थमिदम् । 'अयोदतीति' । अय इव दन्ता अस्या अयोदती, उगित्त्वान्ङीप् । 'समदन्तीति' । नासिकोदरोष्ठेत्यादिना ङीष् ॥

"विभाषा श्यावारोकाभ्याम्" ॥ 'अरोको निर्दीप्तिरिति' । रुच दीप्तौ, रोचनं रोकः, स न विद्यते यस्येति कृत्वा ॥

"अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च" ॥ चकारोऽनुक्तसमुच्चयार्थः । 'अहिदन्नित्यादि' । भाष्यएतदाश्रितम् ॥

"ककुदस्यावस्थायां लोपः" ॥ कालादिकृता इति' । आदिशब्देनाहारपरिणामादेर्ग्रहणम् ॥

"त्रिककुत् पर्वते" ॥ पर्वतेन्यपदार्थे मुख्यस्य ककुदस्यासम्भवादाह । 'ककुदाकारं शृङ्गमित्यादि' । 'न चेत्यादि' । उच्यतइत्यस्यानुषङ्गः । 'संज्ञैषेत्यादि' । एतच्च निपातनाल्लभ्यते, एवं च पर्वतग्रहणं विस्पष्टार्थम् ॥

"उरःप्रभृतिभ्यः कप्" ॥ 'व्यूढोरस्कः प्रियसर्पिष्क इति' । सोपदादौ, इणः षः, उपपूर्वान्नह्यतेः सम्पदादित्वात्कर्मणि क्विप्, उपनह्या

उपानत्, नहि वृतीति दीर्घः, अवमुक्ते उपानहौ येन सोऽवमुक्तोपानत्कः । नहो धः, जश्त्वचर्त्वे । 'विकल्प एव भवतीति' । लक्ष्मीशब्दाद्वक्ष्यमाणवृत्तेश्चेति नित्यः कब् न भवति, एकवचनान्तपाठस्य नियमार्थत्वात् । 'अर्थान्नञ इति' । नञः परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेर्नित्यं कब् भवति, नास्यार्थोऽस्त्यनर्थकः ॥

"इनः स्त्रियाम्" ॥ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥

"नञृतश्च" ॥ 'नञन्ताद्बहुव्रीहेरिति' । अत्रान्तशब्द उत्तरपदे वर्तते, नञुत्तरपदाद्बहुव्रीहेरित्यर्थः । यद्वा बहुव्रीह्यर्थमुत्तरपदं बहुव्रीहिः, तस्मान्नञन्तादित्यर्थः, किं सिद्धं भवति, बहुग्रामणीर्नगरी बहुखलपूर्नगरीत्यत्र कब् निवर्तितो भवति ॥

"शेषाद्विभाषा" ॥ 'यस्माद्बहुव्रीहेरिति' । कर्मणि ल्यब्लोपे पञ्चमी, बहुव्रीहिमाश्रित्येत्यर्थः, तेन यत्राप्यादेशः समासान्तः व्याघ्रपात् सुगन्धिः कुण्डोध्नीति, तत्रापि शेषो न भवति, प्रत्ययपायत्वाद्वा समासान्तस्य यस्मादित्युक्तम् । इह शेषः कबपेक्षो वा स्यात् अनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्षो वा समासान्तमात्रापेक्षो वेति त्रयः पक्षाः सम्भवन्ति; तत्राद्ये पक्षे व्याघ्रपात् सुगन्धिर्द्विदशाः अनृचः विधुर इत्यादौ नित्यकब्विषयत्वं सर्वत्र प्रसज्येत, शेषग्रहणं चानर्थकं, नहि नित्यकब्विषये विकल्पप्रसङ्गः, नित्यकब्विधेरानर्थक्यप्रसङ्गात्, द्वितीयेऽपि द्विदशा इत्यादौ स्यादेव प्रसङ्ग इति मन्यमानस्तृतीयं पक्षमाश्रयति । 'समासान्तो न विहित इति' । बहुखट्वक इत्यादावापोऽन्यतरस्यामिति ह्रस्वः, बहुखट्व इत्यादौ गोस्त्रियोरुपसर्जनस्येति । 'कथमित्यादि' । यदि समासान्तापेक्षः शेष इति प्रश्नः । 'विशेषे स इष्यतइति' ततश्च विषयान्तरे सूक्ते सामनि च बहुव्रीहेः समासान्तापेक्षं शेषत्वमस्त्येवेति भावः । किमर्थं पुनः शेषग्रहणं, यावता यत्र समासान्ता विहितास्तत्र तएव बाधका भविष्यन्ति, अनवकाशा विधयो बाधका भवन्ति, सावकाशाश्च ते, कोऽवकाशः, विभाषा कब्, यदा न कप् सोऽवकाशः, कपो-

प्यन्याः प्रकृतयः, विशेषप्रकृतिभ्य उभयप्रसङ्गे परत्वात्कप् स्यात् तस्मा-च्छेषग्रहणम् ॥

"ईयसश्च" ॥ 'सर्वा प्राप्तिः प्रतिषिद्ध्यतइति'। न त्वनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति शेषलक्षणस्यैव कपः प्रतिषेध इति सर्वशब्दस्यार्थः, एतच्च शेषादित्येतस्य निवृत्तत्वात्कप्मात्रस्यानुवृत्तेर्लभ्यते। 'बहुश्रेयसीति'। लिङ्गविशिष्टग्रहणादत्र प्रतिषेधः, यथात्र सोर्हल्ङ्या-दिलोपस्तथा तत्रैव वक्ष्यामः। 'ह्रस्वत्वमपि न भवतीति'। गोस्त्रियो-रुपसर्जनस्येति प्राप्तं, कस्मादित्याह। 'ईयसो बहुव्रीहावित्यादि'। पुंवद्वचनेनात्र न स्त्रीप्रत्ययस्य निवृत्तिर्विवक्षिता किं तर्हि ह्रस्वप्रकरणा-त्तदभावः, तथा च गोस्त्रियोरित्यत्र वृत्तौ ईयसो बहुव्रीहौ प्रतिषेधो वक्त-व्य इत्येवोक्तम् ॥

"वन्दिते भ्रातुः" ॥ 'वन्दितस्तुत इति'। यद्यपि वदिरभिवा-दनस्तुत्योरित्यभिवादनेपि वदिः पठ्यते तथापि व्याख्यानात्स्तुत्यर्थ-स्यैव ग्रहणमिति दर्शयति। 'तेन वन्दितभ्रातृक इत्यत्र कब् भवत्येव ॥

"नाडीतन्त्र्योः स्वाङ्गे" ॥ नाडीशब्दो जातिलक्षणङीषन्तः। तन्त्रीशब्दो ऽवितृस्तृतन्त्रिभ्य ईरितीकारान्तः,। 'बहुनाडिरिति'। उपसर्जनह्रस्वत्वं, बहुतन्त्रीरित्यत्र तु ऽत्स्त्रियाः प्रतिषेध इति वचनान्न भवति ॥

"निष्प्रवाणिश्च" ॥ 'प्रोयतेस्यामिति प्रवाणीति'। वेञो ऽधिकरणे ल्युट्, कृत्यच इति णत्वम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां पञ्चमस्याध्यायस्य चतुर्थः पादः ॥ समाप्तश्च पञ्चमोध्यायः ॥

---

श्रीगणेशाय नमः ।

# अथ षष्ठोऽध्यायः ।

# काशिकाव्याख्या पदमञ्जरी ।

---

"एकाचो द्वे प्रथमस्य" ॥ इह यद्यपि स्वार्थत्वे संभवति पारार्थ्यमयुक्तं, विधेयकार्यिणोर्द्वयोर्निर्देशात्संभवति च स्वार्थत्वं तथापि लिटि धातोरित्यादौ विधेयानिर्देशेन वैयर्थ्यप्रसंगान्नायं 'मण् कुटिलिकायां' इत्यादिवत्केवलो विधिः, नापि 'शेष' इत्यादिवल्लक्षणं चाधिकारश्च । तथा हि सति सर्वेषामेव शब्दानां प्रथमस्यैकाचोऽनेन द्विर्वचने सिद्धे लिटि धातोरित्यादि व्यर्थं स्यात्, धातोर्लिट्येव लिटि धातोरेवेति नियमाच्च वैयर्थ्यमिति चेन्न । विधिनियमसंभवे विधेरेव ज्यायस्त्वात्, अस्य हि पारार्थ्येऽवश्यं भाविनि सति यथा तेषां विधित्वं तथास्य वर्णनं युक्तमतः परार्थ एवायं, तत्रापि न परिभाषा द्विर्वचनं विधीयमानं प्रथमस्यैकाचो वेदितव्यमिति, एवं हि सति सर्वस्य द्वे इत्यत्रैवास्य व्यापार इति तत्रैवैकाचः प्रथमस्येति वाच्यं स्यात्, लिटि धातोरित्यादिकं च विधेयानिर्देशाद्व्यर्थं स्यादतः पारिशेष्यात्स्वरितत्वाच्चाधिकार एवायमिति निश्चित्याह । 'एकाच इति चेति'। अधिकारोऽयमिति वक्तव्ये पृथक् स्वरितत्वप्रदर्शनार्थमेवमुक्तम् । 'एतच्चितयमिति'। तस्य प्रयोजनं यत्र यदपेक्षितं तत्र तस्य संबन्धः, यथा 'ऽजादेर्द्वितीयस्य' त्यत्र एकाचो द्वे इति, 'उभे अभ्यस्त' मित्यत्र द्वे इति, लिटि धातोरित्यादौ सर्वं संबध्यते । 'इत उत्तरमित्यादि'। अनन्तरोक्तस्यैव विवरणम् । 'प्राक् संप्रसारणविधानादिति'। तत आरभ्य तु नास्य संबन्धो विधेयान्तरनिर्देशात्स्वरिते कृते नाधिकार इति वा व्याख्यानात् । सामान्येनोक्तमुदाहरणनिष्ठं दर्शयति । 'वक्ष्यतीति'। अत्र यदि धातोरेकाच इति सामानाधिकरण्येन संबन्धः स्यात्पचिप्रभृतीनामेव स्यात् न जागर्त्यादीनां, प्रथमग्रहणं चानर्थकं स्यात्, नह्येकाचां धातूनां द्वितीयादिरेकाजस्ति, न च प्रथमस्य धातोरिति

संबन्धः, तथा हि सति धातुपाठे प्रथमपठितस्य भवतेरेव स्यात्ततश्च भवतिग्रहणमेव कर्तव्यं स्यात्, अथैकाचो धातोः प्रथमस्य वर्णस्येति संबन्धः, तदयुक्तं, सह निर्दिष्टयोः सामानाधिकरण्यस्य स्वतः प्राप्तस्य त्यागयोगादतो वैयधिकरण्येन संबन्ध इत्याह । 'धातोरवयवस्येति'। 'द्वितीयस्य चेति'। यद्यप्यत्र द्वितीयग्रहणं नास्ति तथापि लिटि धातोरित्यत्र त्वधिकृतमस्ति तस्य चार्थः प्रदर्श्यते इति नासङ्गतं किंचित् । जजागारेत्यादीनि मुख्यगौणतया क्रमेणोदाहरणानि । 'एकाच इति'। यद्ययं तत्पुरुषः स्यात्तदा धातोरित्यनेन सामानाधिकरण्यं चेद्दियाय आरेत्यादावेव स्याद्वैयधिकरण्ये तु पपाचेत्यादिषु भवदपि द्विर्वचनमज्मात्रस्यैव स्यात्ततश्च 'हलादिः शेषः' 'शर्पूर्वाः खयः'। 'लिट्यभ्यासस्योभयेषा' मित्याद्यनुपपन्नं स्यात्, एकग्रहणं चानर्थकं, प्रथमस्याच इति विशेषणादेकस्य च धातोरनेकप्रथमाजसम्भवादच इत्येकत्वं वा विवक्षिष्यते किमेकग्रहणेन, तस्माद्बहुव्रीहिरयं तदाह । 'एकाच इति बहुव्रीहिनिर्देश इति'। बहुव्रीहिणा विवक्षितस्यार्थस्य प्रतिपादनं बहुव्रीहेर्वा उच्चारणं बहुव्रीहिनिर्देशः. विग्रहप्रदर्शनं विस्पष्टप्रतिपत्त्यर्थं, यदि बहुव्रीहिर्निर्देशस्ततो बहुव्रीहेरन्यपदार्थप्रधानत्वाद्यथा चित्रगुरानीयतामित्युक्ते यस्य ता गावः स एवानीयते न चित्रा गावस्तद्वदचोपलक्षितं तदुभयपार्श्ववर्त्ति व्यञ्जनद्वयमेव द्विरुच्येत न तूपलक्षणभूतोऽजित्यत आह । 'तत्रेति'। भवति वै बहुव्रीहावपि क्वचिद्वृत्तिपदार्थस्यापि कार्ययोगः, तद्यथा, शुक्लवाससमानयेति मत्वर्थे बहुव्रीहिस्तत्र यथा दण्डी विषाणीति संसर्गे मत्वर्थीयउत्पन्ने तस्य द्विष्ठत्वाद्गुणस्यापि कार्ययोगस्तद्वद्बहुव्रीहावपि यत्र संसर्गो वाच्यस्तत्राविरुद्धो गुणस्यापि कार्ययोगः । 'अभ्यन्तरश्चेति'। अन्तर्भूत इत्यर्थः । आभ्यन्तरमिति पाठे अभ्यन्तरं मध्यं तत्र भवमाभ्यन्तरम् । 'साचकस्यैव द्विर्वचनं भवतीति'। यथा तत्सन्निहितमवयवान्तरं द्विरुच्यते तथोपलक्षणीभूतोऽप्यजित्यर्थः, । अत्र च ज्ञापकं 'दीर्घोऽकित'इत्यादि । चोदयति । 'एवं[1]च पचित्यत्रेति'। 'तेनैव

१ मुद्रितमूलपुस्तके एवं चेति नास्ति ।

तदवयवोऽच्छब्दः पशब्दश्चेति'। चकारादकारश्च व्यपदेशिवद्भावादेकाजेव, यथैवाङ्गुल्या देवदत्ताङ्गुलिमांस्तथा हस्तोपि तद्वदत्रापि, ततश्च सर्वेषामेव तेषां द्विर्वचनप्रसङ्ग इति शेषः। नन्वर्थवद्ग्रहणेनानर्थकस्येति समुदायस्यैव भविष्यति नावयवानाम्। नन्वेवं जागर्त्यादीनां न स्यात्, किं च यत्र शेइत्यादौ विशिष्टं शब्दस्वरूपं गृह्यते तत्रैवेयं परिभाषा, अत्र तु धातोरवयवस्यैकाच इति तटस्थेनोपलक्षणेन जागृपच् इत्येवमादिकं गृह्यते न तु स्वरूपेणेति नेह तस्याः प्रवृत्तिः। परिहरति। 'तत्रेति'। तेषु समुदायादिष्वेकाक्षु मध्ये ऽवयवैकाचः प्रथमा न द्विरुच्यन्ते, कुत इत्याह। 'तथाहीत्यादि'। अयमभिप्रायः। किमेकस्मिन्नेव प्रयोगे युगपच्च सर्वप्रयोगश्चोद्यते, पर्यायेण वा, किं वा प्रयोगभेदेन कस्य चित्क्वचनेति, न तावदाद्यः कल्पः, प्रमित्यनुष्ठानयो र्द्वयोरप्यसम्भवात्, तथाहि। एकाच्त्वेन निरूपितं द्विर्वचनं प्रमातव्यं, न चैको ऽवयवो युगपदनेकावयवत्वेन शक्यो निरूपयितुं तत्कथं युगपत्प्रमीयतां प्रमितं वा कथमनुष्ठीयतां, नह्येकस्मिन्नेकाचि द्विरुच्यमाने तदैवान्य एकाच्छक्यो द्विर्वक्तुं, वाचः क्रमभावित्वात्। नापि द्वितीयोऽनभ्यासस्येति प्रतिषेधादनवस्थापाताच्च, तस्मात्प्रयोगभेदेन सर्वप्रसङ्ग इत्येष एव पक्षः सम्भवति, तत्र णिजिर् शौचपोषणयोरित्यस्य श्लौ यदा निशब्दस्य द्विर्वचनं तदा नेनेक्ति नेनिक्त इत्यत्र न कश्चिद्दोषः, नेनिजति अनेनिजुर्नेनिजदित्यत्रा'दभ्यस्ता' 'त्सिजभ्यस्तविदिभ्यश्च' 'नाभ्यस्ताच्छतु'रित्यद्भावजुसभावनुम्प्रतिषेधा न स्युर्जकारेण व्यवधानात्, इकारस्येच्छब्दस्य च द्विर्वचने रूपमेव न सिध्यतीत्येष एव दोषः, तस्य परिहारः। 'शास्त्रहानिप्रसङ्गादिति'। अवयवे हि द्विरुच्यमाने ऽवयवान्तरविषयसमुदायविषयं च शास्त्रं हीयेत। ननु शास्त्रेण प्रमितमेव यदि नानुष्ठीयेत स्याच्छास्त्रहानिः, अत्र तु पर्यायेण प्रतीयतइत्युक्तं तच्चानुष्ठितमेव कथं शास्त्रहानिः। अङ्ग तु भवानाचष्टां पशब्दे द्विरुच्यमाने चकारः किमिति न द्विरुच्यते तदा तद्द्विर्वचनस्याप्रतीतत्वादिति चेत्किमिति न

१ व्यापार इति १। २ पु० पा०।

प्रतीयते, तेन सहैकाच्त्वेनानिरूपितत्वादितिचेत्किमिति न निरूप्यते मौनमत्रोत्तरं, तस्मादस्मिन् प्रयोगे यच्च यावच्च प्रथमैकाच्त्वेन शक्यते निरूपयितुं तस्य सर्वस्य द्विर्वचनं प्रमातव्यमनुष्ठातव्यं च, अन्यथा तु क्रियमाणे प्रतीत्यनुष्ठानयोरुभयोरपि शास्त्रहानिमावहति, तस्मात्समुदायस्य द्विर्वचनमिति, न चात्रापि पक्षे ऽवयवविषये शास्त्रहानिः, अवयवात्मकत्वात्समुदायस्य, न खल्ववयवानां द्विर्वचनमकृत्वा समुदायः शक्यो द्विर्वक्तुं, यथा वृक्षः प्रचलन्सहावयवैः प्रचलति, अथ कथं पपाचेति द्विर्वचनं, यावता धातुरेवायं न धात्ववयवः, नापि प्रथमः, द्वितीयादिषु हि सत्सु यस्मात्पूर्वो नास्ति स प्रथमः, कथन्तरां चेयायेत्यादौ यत्रैकोऽजस्येति, व्यतिरिक्तोन्यपदार्थो नास्ति, तत्राह । 'पपाचेत्यत्रेति' । 'एकाच्त्वमपीति' । अपिशब्दात्प्रथमत्वमपि, उभयत्रापि धातुं प्रत्यवयवत्वम् । 'व्यपदेशिवद्भावादिति' । मुख्य एकाज्व्यपदेशोवयवव्यपदेशश्च येषामस्ति ते व्यपदेशिनो जागरादिषु जागित्येवमादयस्तेषामिवैषामपि कार्यं भवतीत्यर्थः । न चेदं वचनं, लौकिकोयं न्यायः, लोके हि शिलापुत्रकस्य शरीरमिति बहिर्वस्तुभेदे ऽसत्यपि भेदव्यवहारोवस्थाभेदाश्रयो दृश्यते शिलापुत्रकः क्रीयमाणत्रिक्रीयमाणत्वाद्यवस्थायुक्तो यो दृष्टस्तस्येदं शरीरमिति परिदृश्यमानावस्थाभेदेन व्यपदिश्यते, पपाचेत्यत्रापि पचेरनन्तप्रयोगविषयस्य संप्रति प्रयुज्यमानं लिट्परं रूपमवयव इति शक्यं व्यपदेष्टुं, प्रथमशब्दोपि प्रथमगर्भेण हतेत्यादावसतोपि द्वितीयादीन् बुद्ध्या परिकल्प्य मुख्यप्रथमसाधर्म्यो यथा लोके एकस्मिन्नपि प्रथम इति प्रयुज्यते तद्वदत्रापि, इयायेत्यत्रापि इतः, यन्ति, आयन्, अगात्, जिगमिषतीत्यनन्तप्रयोगस्थेनैकोयमिकार इत्यन्यपदार्थोपि कल्पितः, प्रसिद्ध्यप्रसिद्धिकृतश्च गौणमुख्यविवेकः, एवंविधस्तु व्यवहारो मुख्यादपि प्रसिद्ध इति न गौणत्वदोषः, एवं च कृत्वा 'व्यथो लिटि,' 'भवतेरः,' लिड्भ्यासस्योभयेषां, 'दीर्घ इणः किती'त्यादिकमुपपद्यते । अत्र द्वे इत्यस्य संख्येयापेक्षायां शब्दानुशासनप्रस्तावाच्छब्दरूपे संख्येये 'षष्ठी स्थाने योगे'ति वचनादेकाचः प्रथमस्येति स्थानषष्ठ्यां

सत्यामेकस्य स्थाने द्वे शब्दरूपे भवत इत्यर्थो भवति, यथास्तेर्भूरित्यादौ, तदा स्थाने द्विर्वचनमित्ययं पक्षो भवति, यदा शब्दसंबन्धिनी उच्चारणे संख्येये क्रियारूपस्य शब्दस्य च स्थान्यादेशसंबन्धायोगादध्याहृतोच्चारणक्रियापेक्षयैकाच इति कर्मषष्ठी, एकाचो द्वे उच्चारणे भवतः, एकाचं द्विरुच्चारयेदित्यर्थस्तदा द्विःप्रयोगो द्विर्वचनमित्ययं पक्षो भवति, तत्राद्ये पक्षे स्थानेन्तरतम इति वचनाच्छब्दतश्चान्तरतमयोर्द्वयोर्विधानाद् यद्यपि ये के चन प्राप्नुत इति दोषानवतारः, चिचीषतीत्यत्र तु सन्यङोरिति षष्ठ्याः स्थापयिष्यमाणत्वाच्चिस् इत्यस्य स्थाने चिस्चिस् इति शब्दान्तरआदेशे सति तत्स्थस्य सकारस्य सन्त्वे प्रमाणाभावा'दज्झनगमांसनी'ति दीर्घत्वं न स्यात्, आदेशस्य स्थानिवद्भाव उच्यते नादेशावयवस्य स्थान्यवयववद्भाव इति स्थानिवद्भावेनापि सन्त्वं नास्ति, तस्य तु यत्र सन्मात्रस्य द्विर्वचने स्थानिवद्भावेन सन्त्वं सोऽवकाशः, यथा इणः सन्, ईषिषतीति । ननु शब्दान्तरप्राप्त्या द्विर्वचनमनित्यमप्राप्त्या तु दीर्घत्वमित्युभयोः परत्वाद्दीर्घत्वे कृते द्विर्वक्ष्यते, इह तर्हि हुवतेः सनि हूस् इत्यस्य द्विर्वचनं, समुदायस्य समुदाय आदेशस्तत्र आदेशएतत्नास्ति इयं प्रकृतिरयं प्रत्यय इति, ततश्च ह्वोभ्यस्तस्येति संप्रसारणं न स्यात्, जुहाव जुहुवतुरित्यादावेव तु स्याद् यत्र ह्वामात्रस्य द्विर्वचनात्स्थानिवत्त्वं, नैष दोषः, ह्वोभ्यस्तस्येति व्यधिकरणे षष्ठी, ह्वयतेरभ्यस्तस्य भविष्यतः प्रागेव संप्रसारणं परपूर्वत्वं, हल इति अज्झनगमामिति वा दीर्घत्वं, हूस् इत्यस्य द्विर्वचनम्, इह च पिपक्षति उद्विवक्षतीत्यत्र पूर्वत्रासिद्धमद्विर्वचनइति वचनात्परत्वात्कुत्वादिषु कृतेषु पश्चाद् द्विर्वचनमिति न कश्चिद्दोषः, इह तर्हि आटिटद् आशिशद् इति णिलोपे कृते ऽपि द्विर्वचनेचीति रूपस्थानिवद्भावाच्छब्दान्तरप्राप्त्यभावेन नित्यत्वात्पूर्वं द्विर्वचने सति समुदायस्य समुदाय आदेशस्तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययत्वं नष्टं, स णिज् न भवतीति णिलोपो न स्यात्, तस्य तु कारणेत्यादिरवकाशः, इह च जिघांसतीति समुदायस्य समुदायआदेशे कृते हन्तेरभावादभ्यासाच्चेति हन्तेरिति कुत्वं न स्यात्, तस्य तु अघ-

निघ, जघन्य, अहं किल जघन, जघन्वानित्यादिरवकाशः, यत्र हन्तिमात्रस्य द्विर्वचनात्स्थानिवद्भावस्तदेवमाद्यपक्षस्य दुष्टत्वाद् द्वितीयं पक्षमाश्रित्याह । 'द्विःप्रयोगो द्विर्वचनमिति' । चशब्दोऽवधारणे । कथं पुनः षष्ठीस्थाने योगेति परिभाषायां सत्यां द्विःप्रयोगपक्षः शक्य आश्रयितुं, तत्राह । 'आवृत्तिसंख्या हीति' । यद्यावृत्तेः संख्या विधीयते एवं सति त्रिर्वचनं प्राप्नोति, नह्याद्यमुच्चारणमावृत्तिः, अतस्तदेकम्, आवृत्ती च द्वे इति त्रिर्वचनप्रसंगः, तस्मादावृत्तिकृता संख्या आवृत्तिसंख्या, कस्योच्चारणस्य, आवृत्तमुच्चारणं विधीयतइत्यर्थः, तत्र च स्थान्यादेशभावो न संभवतीत्युक्तम्, अत्र पक्षे यथाटिटदित्यादौ दोषो न भवति तथा दर्शयति । 'तेनेत्यादिना' । अन्यत्रापि पक्षे नेमतुः सेहे इत्यादौ नत्वषत्वयोः कृतयोर्धातोरादेशादित्यस्य द्विःप्रयोगेऽप्यनिवृत्तेरत्वाभावश्चैत्वे न स्यातां, पक्षान्तरे तु नादेशादिव्यपदेशः, अलाश्रयत्वेन स्थानिवत्त्वाभावात्समुदायादेशत्वेनादेशादित्वाभावाच्च न दोषः, लिटि आदेश इति विशेषणाच्चत्वसत्वयोरनैमित्तिकत्वाद्, इह तर्हि बेभिदितेति बेभिद्यशब्दात्तृचि अल्लोपयलोपयोः कृतयोरुपदेशे य एकाजनुदात्तः स एवायमितीट्प्रतिषेधः स्यात्, पक्षान्तरे त्वेकाचव्यपदेश्यालाश्रयत्वाद्भिद्येत्यस्यानेकत्वाच्चिषेधाभावः, द्विःप्रयोगेऽपि न दोषः, पूर्वस्मादपि विधौ अल्लोपस्य स्थानिवद्भावात्, इह तर्हि जरीगृहितेति ग्रहेर्लिटि दीर्घत्वं स्यात्, नह्यच स्थानिवत्त्वं, दीर्घविधौ निषेधात्, नैष दोषः । एकाच उपदेश इत्यत एकाच इत्यनुवर्त्यते, ग्रहेर्विहितं यदार्धधातुकं तस्य य इट् तस्य दीर्घ इति जरीगृह्यशब्दाद्विहितस्य न भविष्यति । इह च सिषेचेति, यद्यपि सिचेर्लिड्विहितस्तथापि द्विर्वचने कृते समुदायस्यैव पदसंज्ञा न तदवयवस्य, सेचशब्दस्य पदसंज्ञायां तदादिग्रहणानिवृत्तेरभ्यासस्य वर्जनायोगादिति सात्पदाद्योरिति षत्वनिषेधाभावः, इह तर्हि बिभिद्वानित्यादौ शतृकृत्वोप्युच्चारणे एकाच्त्वं न याति किं पुनर्द्विरुच्चारणइति वस्वेकाजाद्घसामितीट्प्रसङ्गः, तत्र । उच्चारणभेदाद्विवक्षु-संख्याप्रादुर्भावे पूर्वसंख्याकृतव्यपदेशनिवर्तनात्, अत एवाद्भुतं कृतं

प्पिवानित्यादाविडर्थम्, इह तर्हि विसुष्वापेति, तस्यैवार्थवतो द्विरुक्तिभावमात्रमित्यभ्यासस्यार्थवत्त्वात्सुपेः षत्वमित्यत्रानर्थको विसुषुपुरिति वक्ष्यमाणं विहन्येत, नैष दोषः । अन्वयव्यतिरेकाभ्यां शब्दस्याशेषार्थावसायः, न चात्राभ्यासोपजनने कश्चिदर्थ उपजायते ऽपाये चापयाति । ननु स एव चेद् द्विरुच्यते ऽर्थप्रत्ययेनाप्यावर्तितव्यं, यथा ऽहिरहिर्बुध्यस्व बुध्यस्वेति, किमत्रोपालभ्येमहि, न तावदर्थप्रत्यया आवर्तन्ते, तदेतदेवं दृश्यतां यथा स्वप्नः सुप्तो ऽस्वपदित्यादौ क्वचिदविकृतः क्वचिद्विकृतः क्वचिदडागमापेक्षो ऽर्थं प्रतिपादयति तथा सुष्वापेत्यादावावृत्त एव प्रतिपादयतीति ॥

"अजादेर्द्वितीयस्य" ॥ 'प्रथमद्विर्वचनापवादोयमिति' । ननु विरोधे समानफलत्वे च बाध्यबाधकभावो यथाष्टाश्रिर्यूपः कर्तव्यो वाजपेयस्य चतुरश्रिरित्यष्टाश्रित्वचतुरश्रित्वयोर्यथा नैवारश्चरुर्नखावपूतानामिति नखावपनेन वैतुष्यफलकेन तत्फलको ऽवघातो बाध्यते, नखैश्चोलूखलमुसलं, यत्र त्वेतदुभयं न भवति न तत्र बाधो यथा कृत्कृत्यप्रत्ययसंज्ञानां, यथा वा तद्धितवद्राजप्रत्ययसंज्ञानाम् । इह तु न समानफलत्वं, फलस्य कस्य चिदभावात्, अस्ति च सम्भवो यदुभयं स्यात् । स्यादेतत् । द्वयोरासीनयोर्मध्ये कस्मिँश्चिदुपविष्टे द्वितीयस्तृतीयो भवति तथा प्रथमे द्विरुक्ते द्वितीयस्तृतीयो भवतीत्यस्त्येवात्राप्यसंभव इति, स्यादप्येवं, यदि प्रथमद्विर्वचनमेव नियोगतः पूर्वं स्यात्, किञ्च नात्रौत्पत्तिकस्य द्वितीयस्य द्विर्वचनमुच्यते किं तर्हि द्वितीयमात्रस्य, ततः किं, प्रथमे द्विरुक्ते यो द्वितीयस्तस्य भविष्यति । नन्वेवमनारम्भसमं स्यात्, कथमटः सन्, प्रथमस्य द्विर्वचनम्, अट् अट् इति स्थिते हलादिः शेषश्च प्राप्नोति द्वितीयद्विर्वचनं च, परत्वान्नित्यत्वाच्च हलादिः शेषस्ततो द्विर्वचनम्, अ अट् अट् इति स्थिते हलादिशेषे त्रयाणामकाराणामतो गुणे पररूपत्वे ऽटिषतीत्येतद्रूपं स्याद्विर्वचने एतदेव रूपं, द्वयोरकारयोः पररूपमित्येतावद् नानारम्भसमं, कथं, प्रथमं द्विर्वचनं हलादिः शेषः, अअट् इति स्थिते सन्यत इतीत्वं च प्राप्नोति द्विर्वचनं च, द्वयोर्नित्ययोः परत्वादित्वं, नन्वित्वं सनमभ्यासं

चापेक्षतइति बहिरङ्गं, ततः किम्, अन्तरङ्गमतो गुणइति पररूपत्वं प्राप्नोति, समानाश्रये च वार्णादाङ्गं बलीयः, एवं तर्हि कृतेपि पररूपे तस्यान्तवद्भावादित्वं प्राप्नोत्यकृते चेति नित्यत्वं परत्वं चेति द्वे तस्य प्राबल्यकारणे, पररूपस्य त्वन्तरङ्गत्वमेकमेवेतीत्वमेव तावद् भवति, सति तु तस्मिन्नभ्यासस्यासवर्णेइतीयङ् च प्राप्नोति द्विर्वचनं च, तत्र द्विर्वचनमियङि कृते यङि-त्यस्य प्रप्नोति अकृते त्वङित्यस्येति शब्दान्तरप्राप्त्याऽनित्यं, तेन परत्वान्नित्यत्वाच्चेयङि कृते यङ्शब्दस्य द्वर्वचने हलादिः शेषः,इत्वम्, इयियटिषति, ओणेरुवुवोणिषतीति भवति, असति द्वितीये द्विर्वचने इयटिषति उवोणिषतीति भवतीति नानारम्भसाम्यम्। एवं तर्ह्यनभ्यासस्येति निषेधादेकस्मिन् द्विरुक्ते नापरो द्विर्वक्तुं शक्यतइत्यस्यैवासंभवः, अथ वा सामान्यविहितस्य विशेषविहितं सत्यपि संभवे बाधकं भवति, तद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति, ओदनसेकाख्यस्य फलस्य समानत्वादत्र दधिबाध इति चेद् इहापि तर्ह्यर्थाभिधानाख्यं फलमेकम्, अर्थाभिधानाय हि द्विरुच्चारणं तच्चैकेनैव साध्यते, अथ रूपविशेषाख्यं फलं भिन्नम्, अन्यद्धि रूपं प्रथमस्य द्विर्वचनेऽन्यच्च द्वितीयस्य, इतरत्रापि तृप्तिविशेषाख्यं फलं भिद्यते, अन्या हि दध्नस्तृप्तिरन्या हि तक्रस्य, अतो नाप्राप्ते तस्मिन्नारभ्यमाणत्वमेव बाधनिबन्धनं नासंभवः, सामान्यशब्दा हि विशेषशब्दसंनिधौ तत्रैवोपसंह्रियन्ते ततोन्यत्र वा यथा वसिष्ठो ब्राह्मणो ब्राह्मणाः आयाता वसिष्ठोप्यायात इति। ननु कौण्डिन्यस्यापि ब्राह्मणत्वाद् दधि प्राप्तमिह तु प्रथमस्योच्यमानं द्विर्वचनं द्वितीयस्य न प्राप्नोतीति कथं येन नाप्राप्तिः, न क्रमो द्वितीयस्य प्राप्तमिति किं तु धातुसामान्यविहितं प्रथमद्विर्वचनमजादेर्धातोः प्राप्तमिति, तत्र दधितक्राख्यं विधेयं भिद्यते, इह तु कार्यं भिद्यते, विधेयं द्विर्वचनमेकमित्येतावान् विशेषः। यद्वा तत्रापि दानमेव विधेयं तस्य तु देयभेदाद्भेदः, इहापि कार्यभेदाद्भेदस्तदिदमुक्तम्। 'प्रथमद्विर्वचनापवादोयं द्वितीयद्विर्वचनमिति'। सर्वथा प्रथमद्विर्वचनं द्वितीयद्विर्वचनेन बाध्यते, यद्येवं यथाभूतस्यैकाचः प्रथमद्विर्वचनं प्राप्तं तथाभूतस्यैव द्वितीयद्विर्वचनं बाधकं

स्यात्, सव्यञ्जनस्यैतत्प्राप्तमिति तेन सहव्यञ्जनानामप्यनावृत्तिप्रसङ्गः । स्यादेवं यद्यजादिषु प्रथमस्यैकाचः किञ्चिद्विहितं प्रतिषिद्धं वा भवेत्, इह तु विशेषसंनिधौ सामान्यशब्दस्य ततोऽन्यत्र वृत्तेरजादिषु प्रथमद्विर्वचनरूपाप्रतीतत्वादप्राप्त्यनुमानमेव बाधः, व्यञ्जनानि च यदा यस्य कार्यं तदा तदङ्गानीति द्वितीयैकाच्यन्तर्भावात्तेन सह द्विर्वचनं केन वार्यते, अत्र च लिङ्गं नन्द्रा इति प्रतिषेधः, अयियाय, आरित्यादौ केन द्विर्वचनं, न तावदनेनाद्वितीयत्वात्, नापि पूर्वेणाजादिषु तस्याप्रवृत्तेः, ननु च यत्र द्वितीयसद्भावादस्य प्रवृत्तिः, अटिटिषतीत्यादौ, तत्र तदप्रवृत्तिः, यत्रै तदप्रवृत्तिः, यत्र तु द्वितीयाभावादेतन्न प्रवर्त्तते न तत्र तस्य प्रवृत्तिर्वार्यते, तत्रापि वार्यते, अजादेरिति सामान्यनिर्द्देशात्, सामान्यनिर्द्देशे हि क्वचिदपि द्वितीयवत्यां व्यक्तौ सर्वत्र बाधेत यथा हलादिः शेषे वक्ष्यते क्वचिदपि प्रवर्त्तमानो हलादिः शेषः सर्वत्र निवृत्तिं करोतीति। नैष दोषः।

जात्योपलक्षिता व्यक्तिः प्राधान्येनेह गृह्यते ।
द्वितीयवत्यामेवेदं व्यक्तौ तेन प्रवर्त्तते ॥
प्रवर्तते च यत्रेदं तत्र पूर्वं निवर्त्तते ।
जातिर्हलादिशेषे तु प्राधान्येन समाश्रिता ॥

'इति[1]गुणे चेति' । नित्यत्वात्परत्वाच्च । 'स्थानिवद्भावः प्राप्नोतीति' । ततश्च इस इत्यस्य द्विर्वचने हलादिः शेषे च दीर्घत्वे सति अरीषतीति प्रसङ्गः । 'न चात्र द्विर्वचननिमित्तमिडिति' । यत्र परतो द्विर्वचनमुच्यते तदेव तस्य निमित्तमिति भावः । 'किं तर्हि कार्यीति' । सन्यङोरिति षष्ठ्याश्रयणात् । ततः किमित्याह । 'न चेति' । तद्भावभावित्वे सत्यपि कार्यिणः सप्तमीनिर्द्देशाभावान्न निमित्तत्वं शास्त्रे स्थितमित्यर्थः । अवश्यं चैतदेवं विज्ञेयमित्याह । 'तथाहीति' । 'गुणवृद्ध्योरिति' । क्ङीति चेत्यत्र वृद्धेरपि प्रतिषेधाद्गुणवृद्ध्योरित्युक्तम् । 'शयितेत्यत्र न भवतीति' । गुणस्य प्रतिषेधः । क्वचित्तु शायक इत्यपि

१ तस्मिन् कृते गुणे चेति मुद्रितमूलपुस्तके पाठः ।

पठ्यते, तदयुक्तमग्रह[1]तत्वादत्र वृद्धेः, तथा चोत्तरत्र गुणग्रहणमेव कृतम्। 'तेषां द्वितीयस्येति विस्पष्टार्थमिति'। तस्मादित्युत्तरस्येत्यनन्तरस्य द्वितीयस्यैव भविष्यति न तृतीयादेः, यदा तु बहुव्रीहिः षष्ठी यत्रादिर्यस्य धातोरिति तदा सामर्थ्यादग्रगमात्र्यारम्भे तृतीयादेरपि प्रसङ्गः॥

"नन्द्राः संयोगादयः"॥ उन्दी क्लेदने, अडु अभियोगे दोपधः, ष्टुत्वम्, अर्च पूजायाम्। ईक्ष दर्शनाङ्कनयोः, अन प्राणने, द्रा कुत्सायां गतौ, र्कोञ्चविषये यद्वक्तव्यं तत्सर्वं हयवरडित्यत्रैवोक्तम्। 'यकारपरस्येति'। यकारः परो यस्माद्रकारात्तस्येत्यर्थः। 'अज्जनस्येति'। तृतीयस्याऽजन्सहितस्यैकाच इत्यर्थः। तत्र यकारस्य द्विर्वचनं न भवति। 'अपरे पुनरिति'। अस्मिन्पक्षे ईर्ष्यितिस्सनि कृते इति व्याख्येयम्, तत्सम्बन्धिनस्तृतीयस्यैकाचो ऽसम्भवात्। नामधातवः, सुब्धातवः।

"पूर्वोऽभ्यासः"॥ 'अर्थादिति'। सामर्थ्यात्पूर्वशब्दोऽयमवयववचनः, अवयवश्चावयविनो भवति, स चेह कश्चिच्च निर्दिष्टः, अतोवश्यं द्वे इत्यत्रानुवर्त्तनीयं, न वानुवृत्तमपि प्रथमान्तमेवावस्थितमवयव्यपेक्षां पूरयितुमलमित्येतत्सामर्थ्यम्। 'अस्मिन्प्रकरण इति'। अनेन सर्वस्य द्वे इत्यत्र प्रकरणे इयं संज्ञा न भवति, तेन तत्र हलादिशेषाद्यभावः, यद्येवं ऋतिगमिजुहोत्यादीनां द्वे इत्यत्र न प्राप्नोति, कर्त्तव्योऽत्र यत्नः। 'तयोः पूर्वावयव इति'। अवयववाचिभिर्दिक्शब्दैर्योगे पञ्चमी न भवति, तस्य परमाम्रेडितमिति लिङ्गात्, पपाचेत्यादौ हलादिः शेषः, सन्यतः, दीर्घाकितः, कुहोश्चुः, अभ्यासे चर्च, सन्वल्लघुनि, दीर्घो लघोरित्यादीनि यथायोगमभ्यासकार्याणि॥

"उभे अभ्यस्तम्"॥ 'द्वे इति वर्त्तमानइत्यादि'। द्विरुक्तसमुदायस्यैकाभ्यस्तसंज्ञा यथा स्याद् द्वयोर्द्वे संज्ञे मा भूतामित्येवमर्थमुभेग्रहणं न तु संज्ञिनिर्देशार्थं, द्वे इत्यस्यानुवृत्त्यैव संज्ञिनिर्देशस्य सिद्धत्वादित्यर्थः, ददतीत्यादावदभ्यस्तादित्यद्भावः। श्नाभ्यस्तयोरातः इत्याकारलोपः।

[1] अनिग्लक्षणत्वाद्वृद्धेरिति २ पा०।

'नेनिजतीत्यत्रेत्यादि'। असत्युभे ग्रहणे वृद्धिरादैजित्यादौ प्रत्येकं वाक्यपरिसमाप्तिदर्शनादिहापि प्रत्येकं स्यात् ततश्च नेनिजतीत्यत्र [1]पृथगाद्युदात्तत्वं स्यात्, न चानुदात्तं पदमेकवर्जमित्येकस्यानुदात्तत्वं, वर्जनीयविशेषावगमहेतोः सति शिष्टत्वादेरसंभवात्, अथापि स्यादेवमपि पर्यायः स्यात्। ननु च भीह्रीभृहुमदेतिज्ञापकात्परस्य न भविष्यति, पूर्वस्यापि तर्हि न स्यात्परेण व्यवधानात्, उच्यते च स्वरस्ततश्च स एव पर्यायप्रसङ्गः, यदि तु संयोगसमासादिसंज्ञावदन्वर्थत्वप्रतिपत्त्यर्थं महासंज्ञाकरणं, तेनान्वर्थताविज्ञाने समुदायस्यैव संज्ञेत्युच्यते तदोभेग्रहणं शक्यमकर्तुं, ननु यत्रोभे श्रूयेते तत्र यथा स्यादन्यतराभावे मा भूद् इत्येवमर्थमुभेग्रहणं कर्तव्यम्, अन्यथाऽऽर्धधेरापश्च सनीवन्ततीडभावपक्षे परत्वात्प्रतिपदविहितत्वाच्च आप्ज्ञप्यृधामीदितीत्वे नन्द्रा इति प्रतिषेधाद्रेफवर्जं द्वितीयस्यैकाचो द्विर्वचने कृते अत्र लोपोऽभ्यासस्येत्यतः प्रागन्तरङ्गत्वादभ्यस्तसंज्ञा स्यात्, सा च प्रत्येकं समुदायस्य वा, तत्र प्रत्येकपक्षे ऽभ्यासलोपेपि परस्य न निवर्तेत, समुदायपक्षेपि पूर्वं संज्ञा समुदाये प्रवृत्ता पश्चादेकदेशनिवृत्तावप्यवशिष्टेर्वतिष्ठेत, यथेयसुन ईकारे लुप्तेपि तद्धितसंज्ञा भूयानित्यत्र, सत्यां च संज्ञायाम् ईप्सन्ति ऐप्सन् ईर्त्संन्ति ऐर्त्संन् इत्यत्राद्भावजुसभावनुम्प्रतिषेधाः स्युरतः श्रूयमाणप्रतिपत्त्यर्थमुभेग्रहणं कर्तव्यम्, तच्च, प्रतीषिषतीत्यादिवत्सिद्धेः। [2]तथाहि। अजादेर्द्वितीयस्येति सनि द्विरुक्ते श्रूयमाणयोरुभयोः सत्यामप्यभ्यस्तसंज्ञायामद्भावादयो न भवन्ति, यथा च[3] पुत्रीयियिषन्तीत्यादौ यथेष्टं नामधातूनामिति सनि द्विरुक्ते, तद्वदत्रापि न भविष्यति, अत्र हि ईप्सभि ईर्त्संभीतिस्थिते ऽद्भावात्माङ्कित्यत्वाच्छप्, अद्भावो हि शपि कृते तेन व्यवधानाच्च प्राप्नोतीत्यनित्यः, ततो झोन्तः प्राप्नोति पूर्वेण सहैकादेशश्च, परत्वादन्तादेशः, नित्य एकादेशः, कृतेप्यन्तादेशे प्राप्नोत्यकृतेपि, अन्तादेशस्त्वनित्यः, कृते एकादेशे तस्मान्तवद्भावादभ्यस्तग्रहणेन ग्रहणादद्भावेन बाध्यते, यस्य च निमित्तं तत्र-

1 द्वयोरपीत्यधिकं २ पु॰। 2 तद्यथा इषः सनीति २ पु॰ पा॰। 3 वेति २ पु॰ पा॰।

णान्तरेण विहन्यते न तदनित्यम्, अन्तरङ्गस्तर्ह्येकादेशः, वर्णाश्रयत्वात्, अन्तादेशस्त्वाङ्गत्वाद्बहिरङ्गः, समानाश्रये च वार्णादाङ्गं बलीयः, अन्तादेशोप्यन्तरङ्गः, वक्ष्यति ह्यायचादिषूपदेशिवद्वचनमिति, तदेवमुभयोरप्यन्तरङ्गयोर्नित्ययोश्च परत्वादन्तादेशः, ततो झकाराभावादलाश्रयत्वेन स्थानिवद्भावाभावाच्चादादेशो न भवति, अस्तु वा पूर्वमेकादेश एवमप्यात्मनेपदेष्वनत इत्यत्रानत इत्यस्याद्भ्यस्तादिति पूर्वेणापि संबन्धात्पूर्वस्मादपि विधावेकादेशस्य स्थानिवत्त्वाद्दाऽऽद्भावो न भविष्यति, एवमैप्सचित्यत्रापि, ईप्सन्ति इति स्थिते शप् च प्राप्नोति जुसभावश्च, नित्यत्वाच्छपि कृते तेन व्यवधानाच जुस्भावः, न च पूर्वेण सहैकादेशे कृते तस्यान्तवद्भावात्पुनर्जुस्प्रसंगः, पूर्वस्मादपि विधौ स्थानिवत्त्वात्, ईप्सन्त्वित्यत्रापि लटः शत्रादेशः, ईप्स[1] शतृ इति स्थिते सार्वधातुकमात्रापेक्षत्वादन्तरङ्गत्वाच्छ[2]पि कृते तत्र सनोकारेणातो गुणे पररूपे पश्चात्सर्वनामस्थाने चोत्पन्ने नुमः प्रसक्तस्य तस्यां दशायां शत्रभ्यस्तयोर्व्यपवर्गाभावादु[3]भयवर्णाश्रयत्वेनान्तादिवद्भावाभावाच्च निषेधाभावः, एवं प्रतीषिषन्तीत्यादावपि, चिकीर्षन्तीत्यादौ तु यत्र सनोकारो न दृश्यते तत्र तेनैव व्यवधानादद्भावाद्यभावः ॥

"जक्षित्यादयः षट्" ॥ अत्र जक्षेश्तिपि रुधादिभ्यः सार्वधातुकइतीटि कृते जक्षितिरिति भवति, स आदिर्येषां ते जक्षित्यादय इति विज्ञायमाने वेव्यतेः सप्तमस्य न स्यात्, लाघवार्थमसंदेहार्थं च इकेव निर्द्दिष्टव्यं स्याज्जक्षादय इति, तस्मात्रायमुक्तविग्रहो बहुव्रीहिः, किं तर्हि जक्ष इति पृथक् पदमित्याह । 'जक्ष इत्ययं धातुरित्यादयः षडिति' । इतिनानन्तरो जक्षिर्निर्द्दिश्यते, आदिशब्दः समीपवचनः, अतद्गुणसंविज्ञानो बहुव्रीहिः । 'सेयमिति' । येयमुक्तप्रकारा सेयमित्यर्थः । 'एष स्वर इति' । अन्यथा ङित्त्वाल्लसार्वधातुकानुदात्तत्वं धातुस्वरः, यणादेशउदात्तस्वरितयोरिति स्वरितत्वं प्रसज्येत । 'शतरि व्यत्ययेन संपादित इति' । ङित्त्वात्परस्मैपदासंभवाद्व्यत्ययः । षड्ग्रहणमनर्थकं सन्त्वागणात्ता जक्षि-

---

१ अदिति २ पु॰ पा॰ ।
२ प्रागेकादेशादिति अधिकं २ पु॰ ।
३ उभयाश्रयत्वेदिति २ पु॰ पा॰ ।

त्यादयः, वेवीङोपि परे ये पठन्ते तेषां कस्मान्न भवति, अत्रैवं गणपाठः, वेवीङोनन्तरं षस स्वप्ने, वश कान्तौ, चर्करीतं च, ह्नुङ् अपनयने, इति, केचित्तुवीङोनन्तरम् आङः शास्विति पठन्ति, षस्ति स्वप्नइति च, तत्राशासो न विशेषः, अभ्यस्तकार्याणि भूयिष्ठानि परस्मैपदिष्वात्मनेपदी चायम्, अभ्यस्तस्वरेपि नास्ति विशेषः, कथम्, अनभ्यस्तेपि तस्मिन्ननुदात्तेतः परं लसार्वधातुकमनुदात्तं धातुस्वरश्च, चर्करीतमभ्यस्तमेव, षसषस्ती छान्दसौ, वशिरपि, तस्यापि भाषायां न प्रयोगस्साधुर्भाष्यवार्त्तिककारौ चेत्प्रमाणं, ह्नुङोपि ङित्त्वात्परस्मैपदासम्भवः, स्वरस्तर्हि प्राप्नोति, अह्निङोरिति प्रतिषेधवचनसामर्थ्यान्न[1] भविष्यति, यदि स्यात्तर्ह्यपह्नुवत इत्यादावभ्यस्तस्वरे सति लसार्वधातुकस्य भवितव्यमेव निघातेनेति प्रतिषेधोनर्थकः स्यात्तस्मात्प्रत्ययस्वरो यथा स्याल्लसार्वधातुकानुदात्तत्वं मा भूदित्यह्निङोरिति प्रतिषेधोर्थवान् भवतीति प्रतिषेधसामर्थ्यात्प्रत्ययस्वर एव भविष्यति नाभ्यस्तस्वरः । ननु चाभ्यस्तस्वरो ऽजादौ विधीयते, ततः किं,मजादौ तस्मिन्प्रवृत्तेपि ह्नुते ह्नुवे ह्नुवे इत्यत्र तस्याप्रवृत्तौ यद्यह्निङोरिति प्रतिषेधो न क्रियेत ततो धातुस्वरेणाद्युदात्तं पदं स्यात्, अन्तोदात्तं यथा स्यादिति प्रतिषेधः क्रियते, तदेवं सति प्रयोजने न प्रतिषेधसामर्थ्यादभ्यस्तस्वरं बाधित्वा प्रत्ययस्वरः सिध्यति, एवं तर्ह्यभ्यस्तानामादिरित्यत्राप्यह्निङोरित्यनुवर्त्तिष्यते, तदेवं नार्थः षङ्ग्रहणेन, तदुक्तमपरिगणनं वा गणान्तत्वात् ॥

"तुजादीनां दीर्घो ऽभ्यासस्य" ॥ अयं योगः शक्यो ऽवक्तुं, कथं, छान्दसमेतद्दीर्घत्वं, छन्दसि च दीर्घत्वं न शक्यं परिगणयितुम्, अन्येषामपि दर्शनात् पूरुषो नारक इति । अनेकाजङ्गत्वाच्च येषां चारभ्यते तेषामेव तस्मिन्प्रयोगे न दृश्यते मामहानः ममहान इति वा ॥

"लिटि धातोरनभ्यासस्य" ॥ 'धातोरिति किमिति' । लिटि परतोन्यो न संभवति तस्य धातोरेव विधानादिति प्रश्नः । 'विश्वश्विरे

---

१ प्रत्ययस्वर एव भविष्यति नाभ्यस्तस्वर इति ३ पु॰ पा॰ ।

इति'। छन्दस्युभयथेति सार्वधातुकत्वाच्छ्रुवः श्नु चेति श्नुप्रत्ययः, शभावश्च, अत्र विकरणान्तस्य समुदायस्य लिट्परस्याधातुत्वात्तदीयस्य प्रथमस्यैकाचो द्विर्वचनाभावः, ईक्षांचक्रइत्यादौ त्वामन्तस्य लिट्परत्वं नास्ति, आम इति लुका लुप्तत्वादिति द्विर्वचनाभावः सिद्धः। 'अनभ्यासस्येति किमिति'। न तावद् नुनाव पपाचेत्यादौ तत्रैव लिटि पुनर्द्विर्वचनप्रसंगः, सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्, अनवस्थापाताच्च, यस्तु प्रत्ययान्तरे सनादौ साभ्यासो न तस्य लिटि संभवः, ततो हि कास्प्रत्ययादित्यामा भवितव्यमिति प्रश्नः। 'नोनावेति'। अमन्त्रइति प्रतिषेधादत्रामभावः। 'संमिमिक्षुरिति'। संपूर्वान्मिहेः सनि हो ढः, षढोः कः सि, लिट्, झेरुस्, अतोलोपः। 'द्विर्वचनप्रकरणइति'। प्रकरणग्रहणाच्च केवलं सर्वं द्विर्वचनं छन्दसि विकल्प्यते, एवं च धातोरनभ्यासस्येत्युभयमुत्तरार्थम्, एतस्मादेव विकल्पाद्विकरणान्तसाभ्यासयोर्न भविष्यति॥

"सन्यङोः"॥ 'षष्ठ्यन्तमेतदिति'। तत्र प्रत्ययग्रहणपरिभाषया तदन्तस्य द्विर्वचनं न तु सन्यङोरेव यदाह। 'सनन्तस्य यङन्तस्य चेति'। सप्तमीपक्षे तु सन्यङोः परतः पूर्वस्य धातोर्द्विर्वचनं भवतीत्ययमर्थः स्यात्, ततश्च सनभ्[1]क्तस्येटो द्विर्वचनं न स्याद् अटिटिषति अशिशिषतीत्यादौ, तथा प्रतीषितीत्यादौ सनो न स्यात्, एवमरार्यतइत्यादौ यङः, तथा सप्तम्यामिष्टायां पूर्वेणापरेण वा सहैकमेव योगं कुर्यात्। 'जुगुप्सिषतइति'। गुपेर्गुप्तिज्किद्भ्यः सन्, तत्र सनि द्विर्वचनं, पुनरिच्छासन्, तत्राकृतत्वात्पुनर्द्विर्वचनप्रसंगः। 'लोलूयियतइति'। अत्रापि यङि द्विर्वचनं न तु सनीति द्विर्वचनप्रसङ्गः। भागवृत्तिकारस्त्वाह पूर्वसूत्रे धातोरनभ्यासस्येति द्वयमपि प्रत्याख्याय भाष्यकारेणोक्तं तिष्ठतु तावत्साभ्यासिकं धातुग्रहणमिति, उत्तरार्थमिति भावः, अनभ्यासग्रहणस्य तु न किञ्चित्प्रयोजनमुक्तं, ततश्चोत्तरार्थमपि तन्न भवतीति भाष्यकारस्याभिप्रायो लक्ष्यते, तेनात्र भवितव्यमेव द्विर्वचनेनेति॥

"श्लौ"॥ 'श्लौ परत इति'। वर्णानामपि युगपदवस्थानाभावा-

१ सन्प्रकृतेरेकाचोऽद्विर्वचनं स्यादिति २ पु॰ पा॰।

बुद्धिपरिकल्पितं पौर्वापर्यं, तच्चाभावरूपेण श्लुनाप्युपपद्यतइति भावः। 'अनभ्यासस्येति'। अधिकारमात्रेणैतदुक्तं न तु श्लौ साभ्यासो भवति। एवं द्वितीयस्य चेत्यत्र द्रष्टव्यम्॥ १३॥

"चङि"॥ 'एषां कार्याणां प्रवृत्तिक्रम इति'। एतच्चाचः परस्मिन्नित्यत्रोपपादितं तत एवावधातव्यं, न केवलं व्याप्यत्वादयं क्रम आश्रीयते किं तु प्रयोजनमप्यनन्यथासिद्धमस्तीत्याह। 'यथा हीति'। 'ह्रस्वस्य स्थानिवद्भावाच्च प्रतिषिध्यते इति'। ह्रस्वस्य स्थानिवद्भावात्प्रतिषिध्यतइति यत्तन्न भवति, स्थानिवद्भावाभावादित्यर्थः। कथं पुनरस्मिन् कार्यक्रमे सति स्थानिवद्भावो न भवतीत्यत आह। 'अनादिष्टादच इति'। करणे हेतौ, अचः परस्मिन्नित्यत्र योनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावो भवतीति सिद्धान्तः स्थापितः, न चास्मिन् क्रमे सत्यनादिष्टादचः पूर्वोऽभ्यासो भवति किं तर्ह्यादिष्टादेव, ह्रस्वत्वे कृतेऽभ्यासोपजननात्, तेन तस्य विधौ कर्त्तव्ये ह्रस्वस्य स्थानिवद्भावो न भवतीति लघुत्वानिवृत्तेः सन्वद्भावो न व्याहन्येत, यदि तु द्विर्वचने कृते ह्रस्वः क्रियेत तर्ह्यनादिष्टादचः पूर्वोऽभ्यासः स्यात्ततश्च तस्य स्थानिवद्भावः स्यादेव विधौ, ततश्च दीर्घत्वाल्लघुसंज्ञाया अभावात्सन्वद्भावो न स्यात्, क्व तर्हि स्यादशीशमदित्यादौ, अत्र हि णावेव मितां ह्रस्वो विधीयते, यदि तर्ह्ययं कार्यक्रमः, आटिटदित्यादौ द्वितीयस्यैकाचष्टिशब्दस्य द्विर्वचनं न प्राप्नोत्यत आह। 'आटिटदित्यादि'। श्लुचङोरित्येकयोग एव कर्त्तव्ये योगविभागो वैचित्र्यार्थः॥

"दाश्वान्साह्वान्मीढ्वांश्च"॥ दाश्वादीनां प्राचुर्येण छन्दसि प्रयोगदर्शनाच्छान्दसमेतत्सूत्रमिति मन्यमानं प्रत्याह। 'अविशेषेणेति'। विशेषानुपादानादिति भावः। 'परस्मैपदमिति'। भौवादिकस्यात्मनेपदित्वात्, चौरादिकस्य त्वाधृषाद्वेति णिजभावपक्षे दीर्घत्वमनिट्त्वं च निपात्यतइत्यन्ये। 'मीढ्वस्तोकायेति'। मतुवसोरिति नुमो रुत्वं, किं पुनः सामर्थ्यमित्याह। 'हलादिशेषे हीति'। 'उरदत्त इति'। दीर्घोच्चारणसामर्थ्याद् ह्रस्वो न भवति। 'णिलुक्चेति'। णेरनिटीति णिलोपे सिद्धे

पुनर्वचनं प्रत्ययलक्षणेन पुनर्वृद्धिर्मा भूदिति । 'पाटूपट इति' । पूर्ववद्धलादिशेषाभावो ह्रस्वत्वाभावश्च, दीर्घोच्चारणादेव अभ्यासस्यानचीति वचनाद्वा उभयत्रापि हलादिशेषाभावः । अभ्यासस्य यदुच्यते तदचि न भवतीत्यर्थः ॥

"ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे" ॥ 'इग्यणः संप्रसारण'-मित्यत्रोक्तं वाक्यार्थः संज्ञी वर्णश्चेति, तत्र विधौ वाक्यार्थ उपतिष्ठते इति तदाश्रयेणाह ।' यणः स्थाने इग्भवतीत्यर्थ इति' । तदन्तात् ष्यङिति'। ष्यङ्विधावादेशपक्षस्य स्थितत्वाल्ल्यब्लोपएषा पञ्चमी, तदन्तमाश्रित्येत्यर्थः, अतद्गुणसंविज्ञानोऽत्र बहुव्रीहिः, अथ प्रत्ययोऽन्तः समीपो यस्य कारीषगन्धेस्तस्मात्परः ष्यङित्यर्थः, प्रत्ययपक्ष एव वामनाचार्यस्य तत्राभिमतः, तथा च ये च तद्धितइत्यत्र वक्ष्यति अणिञन्ताद्वा परः ष्यङ् प्रत्यय एषितव्य इति, इभमर्हतीतीभ्या, दण्डादिभ्यो यः, इह कारीषगन्ध्यामतिक्रान्तस्य पुत्रो ऽतिकारीषगन्ध्यापुत्र इति प्रत्ययग्रहणपरिभाषया समुदायस्याष्यङन्तत्वेपि योऽत्र ष्यञन्तस्तस्य प्रसङ्गः, तथा पुत्रस्य कुलं पुत्रकुलं कारीषगन्ध्यापुत्रकुलमिति । वर्णग्रहणे तदादिविधिविज्ञानादिह च तदभावात्तदादिविध्यभावे ऽपि पुत्रपत्यानन्तर्याश्रयं संप्रसारणं प्राप्नोति, नात्र तर्हीदानीमिदं भवति कारीषगन्धीपुत्रकुलमिति । भवति च यदेतद्वाक्यं भवति, कारीषगन्ध्यायाः पुत्रः कारीषगन्धीपुत्रस्तस्य कुलं कारीषगन्धीपुत्रकुलमिति, कः पुनरनयोरर्थभेदः, न खलु कश्चित्, कारीषगन्ध्यापुत्रकुलमिति न सिध्यतीति चोद्यार्थः, तथातिकारीषगन्ध्यापुत्रकुलमित्यादावपि सर्वत्र पुत्रपत्योः ष्यङन्तस्य चानन्तर्यमाश्रित्य संप्रसारणप्रसङ्गः । स्यादेतत् । यथा वृक्षे शाखेति वृक्षः शाखाया अवयवी प्रतीयते तथेहापि ष्यङन्तस्य पुत्रपत्योश्च तत्पुरुषः, तत्र प्रत्यासत्त्या यस्य तत्पुरुषस्य ष्यङन्तोऽवयवस्तस्यैव पुत्रपती इति गम्यते, इह न तथेति, एवमप्यवयवावयवस्य समुदायावयवत्वादस्त्येव प्रसङ्गः, नैष दोषः, पुत्रपत्योरिति सप्तमीनिर्द्देशात् ष्यङन्तस्य पुत्रपत्योश्च पौर्वापर्यं प्रतीयते, पूर्वोक्तेन न्यायेन तत्पुरुषावयवत्वं च, तत्पुरुषश्च पौर्वापर्यावस्थितावयवद्वया-

त्मकः, तदिह तत्पुरुषावयवयोः पौर्वापर्येणावस्थितयोरिदं भवतीत्युक्ते ययोः स तत्पुरुषस्तावेताविति गम्यते, व्यङन्तस्य पूर्वपदस्य पुत्रपत्योरुत्तरपदयोरित्यर्थः, समासे च यस्माच्च पूर्वं नास्ति तत्पूर्वपदं, यस्माच्च परं नास्ति तदुत्तरपदं, तदिदमुक्तम्। 'पुत्रपत्योरुत्तरपदयोरिति'। पूर्वोदाहृतेषु च यत्पूर्वपदं न तत्व्यङन्तं यत् व्यङन्तं न तत्पूर्वपदं, यच्चोत्तरपदं न तत्पुत्रपत्यात्मकं यच्चपुत्रपत्यात्मकं न तदुत्तरपदमिति नास्तिप्रसङ्गः। इहापि तर्हि न प्राप्नोति परमकारीषगन्धीपुत्र इति तत्राह। 'व्यङ इति स्त्रीप्रत्ययग्रहणमिति'। स्त्रियामिति प्रकृत्य विहितत्वात्स्थानिवद्भावेन स्वयमेव वा प्रत्ययत्वाच्च स्त्रीप्रत्ययत्वं, यदि स्त्रीप्रत्ययग्रहणं ततः किमित्यत आह। 'तेनेति'। अप्रधानमुपसर्जनम्। एतदुक्तं भवति। यत्रार्थे स्त्रीप्रत्ययो विहितः स यावति तदन्ते प्राधान्येनोच्यते तावान्समुदायस्तदन्ततया ग्राह्यः, अप्रधाने च यतो विहितस्तदादिके च तदन्ते च न भवति, यदा तत्पुरुषाक्षिप्तमुत्तरपदं पुत्रपतिभ्यां विशेष्यते तदा तदन्ते प्रसङ्गः, इह तूरपदेन पुत्रपती विशेष्येते इति भावः। 'निर्दिश्यमानस्येति'। एतच्च षष्ठीस्थाने योगेत्यत्र व्याख्यातम्, अनन्त्यविकारेन्त्यसदेशस्येति तु परिभाषा प्रयोजनाभावान्नाश्रिता। सम्प्रसारणग्रहणमुत्तरार्थमिह त्वीशापि सिद्धं, शकारः सर्वादेशार्थः, तत्रायमप्यर्थः, सम्प्रसारणस्येति योगविभागेन दीर्घत्वं न विधेयं भवति, तदेवोत्तरार्थत्वं दर्शयति। 'सम्प्रसारणमिति चेत्यादि'।

पूर्वं यत्र व्यङन्तं पदमुपरितनं पुत्रपत्यात्मकं स्याद्
दृष्टा तत्र व्यङन्तत्पुरुषइह यथा स्यानद्भावनीयः।
यत्रार्थे व्यङ् स यावत्यपि सति न गुणोसाविहेष्टस्तदन्ते
यत्रेत्यर्थः प्रधानो न भवति स यतः व्यङ् तदाद्येव तत्र ॥

"बन्धुनि बहुव्रीहौ" ॥ 'शब्दरूपापेक्षयेति'। बन्धु इत्येतस्मिन् शब्दरूपमित्येवं शब्दरूपमपेक्ष्य नपुंसकनिर्देशः कृतः। किमर्थमेवं व्याख्यायत इत्यत आह। 'पुल्लिङ्गाभिधेयस्त्वयमिति'। योयमस्मिन्सूत्रे बन्धुशब्द उपात्तः स इत्यर्थः। कुत एतत्, नपुंसकलिङ्गस्यापि विद्यमान

त्वात्, बध्यतेऽस्मिन् जातिरिति बन्धु द्रव्यं, जात्यन्ताच्छ बन्धुनीति, यद्येवं तस्यैव ग्रहणं प्राप्नोति, नैष दोषः, पतिपुत्रसाहचर्याज्जातिवचन एव गृह्यते ॥

"वचिस्वपियजादीनां किति" ॥ आदिशब्दोयं यजिनैव संबध्यते न वच्यादिभिः, प्रत्येकं स्वपिग्रहणात्, अन्यथा वच परिभाषणे, विद ज्ञाने, अस भुवि, मृजूष् शुद्धौ, इदिर् अश्रुविवचने, ञिष्वप् शये, इत्येवं गण-पाठाद्वच्यादिग्रहणेनैव स्वपादीनामपि ग्रहणसिद्धेः पृथक् स्वपादिग्रहणं न कुर्यात् । 'आगणान्त इति' । गणस्यान्तो गणान्त आगतो गणा-न्तमाधान्तः । 'उक्त इति' । चोः कुः । 'इष्ट इति' । व्रश्चादि-त्वात्षः । 'ऊढ इति' । हो ढः, 'झषस्तथोर्धोधः', ष्टुत्वं 'ढो ढे लोपः' ढ्रलोपे पूर्वस्य दीर्घोणः । 'उषित इति' । वसतिक्षुधोरिट्, 'शासिवसि-घसीनां चे'ति षत्वं, संवीतादौ 'हल' इति दीर्घः । 'शून इति' । ओदितश्चेति निष्ठानत्वं, धातोः स्वरूपग्रहणइति यत्र धातुः स्वरू-पेणोपादीयते न धातुशब्देन तत्र तत्प्रत्यये धातोरित्येवं यो विहितः प्रत्ययस्तत्रैव कार्यं विज्ञायते, एतच्च श्रौणहत्येति तत्त्वनिपातनेन ज्ञाप-यिष्यते, वाच्यति वाचिकमित्यत्र तु यद्यपि क्यजन्ता धातुत्वं न जहाति तथापि धातोरित्येवं प्रत्ययस्याविधानात्संप्रसारणाभावः ॥

"ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" ॥ 'गृहीतः गृहीतवान् इति'। यद्यपि प्रथमं ङिति प्रत्यये परतः संप्र-सारणं चकारात्किति चेति क्रमो व्याख्यातस्तथाप्यनास्थया प्रथमं कित्युदा-तम् । 'वेञादेशो गृह्यतइति' । पूर्वपरसाहचर्यादस्य वयेः परस्मैपद-संभवस्तस्य ग्रहणं न्याय्यं, यस्त्वय वय गताविति वयिः सोनुदात्तेदात्मने-पदी । 'यद्येवमिति' । वेञादेशस्य ग्रहणमित्यर्थः । 'यजादिषु वेञ् पठ्यत-इति' । ततश्च पूर्वेणैव संप्रसारणं सिद्धमिति भावः । 'नैवं शक्यमिति' । विज्ञातुमिति शेषः । नानयोपपत्त्या वयिग्रहणमनर्थकं शक्यं विज्ञातु-मित्यर्थः । 'एवं प्रतिषेधोपि प्राप्नोतीति' । नात्रापिशब्देन समुच्चय उच्यते किं तर्हि यथा स्थानिवद्भावाद्विधिः प्राप्यते तथा प्रतिषेधोपि

प्राप्नोति, तत्रापि स्थानिवद्भावस्य तुल्यत्वात् इति हेतोस्तुल्यत्वमपि-शब्देन द्योत्यते, तेन प्रतिषेध एव भवेदित्यर्थः । 'उष्ट इति' । तसक्तं, व्यधिर्दिवादिः, व्यचिप्रभृतयस्तुदादयः । 'वृक्णा इति' । स्कोः संयोगाद्योरिति सलोपः, पूर्ववचिष्ठानत्वं, वरीवृश्च्यतइत्यादौ रीगृत्वत इति रीगाभावः ॥

"लिट्यभ्यासस्योभयेषाम्" ॥ 'विव्यधेति' । व्यचेः कुटादित्वमनसीति वक्तव्यमित्यत्र पर्युदासवृत्त्यास्प्रत्ययसदृशस्य ग्रहणात् यङ्बाहि ङित्त्वाभावाद्रातोः संप्रसारणाभावः, वृश्चतिपृच्छतिभृज्जतीनामविशेष इति वार्तिकं तद् वृश्चतिविषये भाष्यकारेण दूषितं, यदुच्यते वृश्चतेरविशेष इत्यादि, तत्र वार्तिककारस्याभिप्रायमाह । 'वृश्चतेरिति' । असति सूत्रे यद्रूपं तदेव सतीत्यभिप्रायेण वार्तिककारेणैतदुक्तमित्यर्थः । भाष्यकारस्याभिप्रायमाह । 'योगारम्भे सतीति' । रेफस्य संप्रसारणे सत्यसति वा नास्ति विशेष इति वार्तिककारेणोक्तमित्यध्यारोप्य भाष्यकारेणोक्तमित्यर्थः । 'अकिदर्थमिदमिति' । किति कथमित्यत आह । 'किति हीति' । अधिकारादेवेति । 'नात्र शास्त्रीयोऽधिकारः' । किं तर्ह्यपेक्षालक्षणस्तेन पूर्वसूत्रे वच्यादेः संबन्धो नाशङ्कनीयः, योगविभागसामर्थ्याद्वा पूर्वसूत्रे तेषामसंबन्धः । 'हलादिः शेषमपि बाधित्वेति' । अन्यथा परत्वाद्धलादिः शेषः स्यात् । 'संप्रसारणमेव यथा स्यादिति' । पुनर्विधानमुभयेषांग्रहणाद्भवति तद्बाधकबाधनार्थमिति भावः ॥

"स्वापेश्चङि" ॥ 'स्वापेर्ण्यन्तस्य ग्रहणमिति' । आप्नोतेस्तु सुपूर्वस्य ग्रहणं न भवति । अण्यन्तस्य चङोऽसंभवात्, ण्यन्तस्यापि न भवति, धातोरित्यधिकारात् । 'स्वाप्यतइति' । कर्मणि लट्, णिलोपः । 'स्वापित इति' । निष्ठायां सेटीति णिलोपः । ननु च ग्रहिज्येत्यादिसूत्रात्ङ्कितीत्यनुवर्तिष्यते, न चान्यः स्वापेर्ङिदस्ति, यङ् तावदनेकाच्त्वान्नास्ति, अपित्सार्वधातुकं तु विकरणैर्व्यवहितम्, यङादयस्त्वविहिता एव, तत्राह । 'ङितीति' । 'केवलमित्यादि' । ननु कितीत्येतच्चानुकृष्टं पूर्वसूत्रइति

नेहानुवर्तिष्यते, किमर्थं तर्ह्यानं ङिद्ग्रहणं, ङिद्ग्रहणमपि तर्हि पूर्वसूत्रे नानुवर्तते, लिटो ङितोसंभवादिति तस्येहानुवृत्तिर्दुर्विज्ञाना ॥

"स्वपिस्यमिव्येञां यङि" ॥ 'स्वप्नगिति'। स्वपितृषोर्नजिङ् ॥

"चायः की" ॥ कीति दीर्घोच्चारणमनर्थकं, ह्रस्वादेशेप्यकृत्सार्वधातुकयोरिति दीर्घस्य सिद्धत्वात्तत्राह । 'दीर्घोच्चारणमित्यादि'। कथं पुनर्यङ्लुच्यमान आदेशो यङ्लुकि स्यात्, प्रत्ययलक्षणेन, न लुमताङ्गस्य, एवं तर्हि दीर्घोच्चारणसामर्थ्याल्लुक्यपि भविष्यति, पूर्वसूत्रविहितं तु प्रसारणं यङ्लुकि न भवत्येव, न च संप्रसारणं संप्रसारणाश्रयं च कार्यं बलवदिति प्रागेव लुकः संप्रसारणं, प्रत्याख्यातत्वादस्याः परिभाषायाः, तथा च पूर्वत्रोभयेषां ग्रहणं कृतम्, अन्यथा ऽनयैव परिभाषया हलादिशेषात्प्रागेव संप्रसारणं भविष्यतीत्यनर्थकं तत्स्यात्, सास्वपीति, सास्वप्ति, सास्वप्तः, सास्वपति, वाव्येति । वाव्याति ॥

"स्त्यः प्रपूर्वस्य" ॥ 'द्वयोरप्येतयोरिति'। द्वयोरपि स्त्यारूपस्य लाक्षणिकत्वात् । 'संप्रसारणे कृते इति'। तस्यासिद्धत्वात्प्रागेव संप्रसारणम् । 'प्रस्त्य इत्येव सिद्धइति'। यथाप्रस्त्योन्यतरस्यामित्यत्र, न चैवमुच्यमाने प्रशब्दस्यापि यो रेफस्तस्यापि प्रसङ्गः, धातोरित्यधिकारात् । 'प्रसंस्तीत इति'। प्रस्त्योन्यतरस्यामिति मत्वमत्र न भवत्येव । 'तत्काचमिति'। कथमयमर्थः शब्देनाभिहितो भवतीति प्रश्नः । 'षष्ठ्यर्थे बहुव्रीहिरिति'। पूर्वशब्दस्यावयववाचित्वाद्यथा पूर्वं कायस्येति । 'अधिकरणे षष्ठ्याविति'। प्रपूर्वस्येति स्त्याशब्दापेक्षयावयवषष्ठी, स्त्य इत्येषापि यथावयवापेक्षया षष्ठी, यथा पुनरयमर्थः प्रकृतोपयोगी तथा दर्शयति । 'तत्रेति'॥

"द्रवमूर्त्तिस्पर्शयोः श्यः" ॥ 'द्रवकाठिन्यइति'। द्रवास्थाया उत्तरावस्थाविशेषः काठिन्यम् । 'स्पर्शे चेति'। रूपादिसहचरितो गुणः

---

१ दुर्ज्ञानेति २ पा० ।

स्पर्शः। 'शीतो वायुरिति'। कथं पुनः स्पर्शमात्राभिधायिनः शीतशब्दस्य तद्वद्द्रव्यवाचिना वायुशब्देन सामानाधिकरण्यं, तत्राह। 'गुणमात्र-इत्यादि'। शुक्लादिशब्दवदिति भावः॥

"विभाषाभ्यवपूर्वस्य"॥ 'सेयमुभयत्र विभाषेति'। द्रवमूर्ति-विषये पूर्वेण प्राप्ते ऽन्यत्राप्राप्ते। अथ पूर्वग्रहणं किमर्थं, न विभाषा-भ्यवाभ्यामित्येवोच्येत, तत्राह। 'पूर्वग्रहणस्येत्यादि'। क्रियमाणेपि पूर्वग्रहणे कस्मादेवात्र न भवतीत्याह। 'न किलेति'। किलशब्दसूचि-तामरुचिं दर्शयति। 'योत्रेति'। माभून्महासमुदायोभ्यवपूर्वोवान्तर-समुदायस्त्वभ्यवपूर्वोप्यस्ति, तदाश्रयो विकल्पः प्राप्नोति। 'यत्नान्तरमा-स्थेयमिति'। विभाषाग्रहणं व्यवस्थितविभाषार्थमाश्रयणीयमित्यर्थः। 'पूर्वग्रहणस्य चान्यत्प्रयोजनं वक्तव्यमिति'। तत्पुनरभिसंशीनमभिसं-श्यानमत्रसंशीनमवसंश्यानमित्यत्रापि विकल्पप्रवृत्तिरेव, तच्च पूर्वग्रहणे क्रियमाणे यथा लभ्यते तथा स्त्यः प्रपूर्वस्येत्यत्र व्याख्यातम्॥

"शृतं पाके"॥ 'श्रा पाकइत्यस्य धातोरिति'। श्रा पाक इत्य-दादौ पठ्यते, श्रै पाक इति चुरादौ, घटादिष्वपि मित्त्वार्थे श्रा पाक इति पठ्यते, तत्रेह सर्वेषां ग्रहणं, श्रायतेरपि कृतात्वस्यैतद्रूपं भवति, निपात-नसामर्थ्याच्च लक्षणप्रतिपदोक्तपरिभाषा नाश्रीयते। 'ण्यन्तस्य चा[1]ण्य-न्तस्य चेति'। तथा चोक्तं श्राश्रप्योः शृभावो निपात्यतइति, अत एव प्रकृतं संप्रसारणमेव न विहितं, श्रपेरपि शृतमित्येव यथा स्यादिति, यदि विभा-षेत्येतदत्रानुवर्त्तते क्षीरहविषोरन्यत्र च विकल्पः प्राप्नोति सर्वत्र, तत्राह। 'व्यवस्थितविभाषा चेयमिति'। 'यदा त्वित्यादि'। प्रयोजकव्यापारः प्रेषणादिलक्षण उपचारेण प्रयोजकशब्देनोक्तस्तस्य च बाह्यत्वं बहिर्भू-तणिज्व्याप्यत्वात्। 'तदापि नेष्यतइति'। तथा चोक्तं श्रपेः शृतमन्यत्र हेतोरिति। 'श्रपितं क्षीरं देवदत्तेन'। प्रयोजकव्यापारेणाप्यमानस्यापि प्रयोज्यस्य कर्मसंज्ञा न भवति, गतिबुद्धिप्रत्यवसानेति नियमात्, कथं पुनर्ण्यन्तस्य निपातनं लभ्यते, यावता पाक इत्युच्यते ण्यन्तेन च पाचना-

१ मुद्रितमूलपुस्तके चेति नास्ति।

भिधीयते न पाकः, अथ पाचनायामपि गुणभूतः पाकः प्रतीयते तदाश्रयं निपातनं स्यात्, यद्येवं द्वितीयेपि णिचि प्रसङ्गः, नहि तत्र पाको गुणभूतो न गम्यते, अथ तत्र गुणभूतत्वादेव प्रधानभूते पाके चरितार्थे निपातनं न भविष्यतीत्युच्येत प्रथमेपि न स्याद्वक्तव्यो वा विशेषस्तमाह। 'श्रातिरयमित्यादि'। अयमभिप्रायः। द्विविधः पाको विक्लित्तिलक्षणो विक्लेदनालक्षणश्च, उभयत्रापि पचेः प्रयोगदर्शनात्, पच्यते ओदनः स्वयमेव, पचत्योदनं देवदत्त इति, श्रातिश्चायं यद्यपि पाकइत्यविशेषेण पठ्यते तथापि कर्मकर्तृविषयस्य पचेरर्थे वर्त्तते, स ण्यन्तोपि प्राकृतं प्रकृतौ भवं णिज्रहितपचिवाच्यं पच्यर्थमाह, सोपि पाक एव न पाचयतेरर्थः, यथा सिद्ध्यत्योदनः साधयत्योदनमिति, तत्र यदा श्रातेः क्त उत्पद्यते तदा ऽकर्मकत्वात्कर्त्तरि भवति शृतं क्षीरमिति, श्रपेस्तु कर्मणि शृतं क्षीरं देवदत्तेन, द्वितीये तु णिचि पाचयितृव्यापारः पाचनालक्षणः प्राधान्येनाभिधीयते न तु पाक इति निपातनाभाव इति। श्रपेः शृत्वमन्यत्र हेतोरिति वार्तिके श्राश्रप्यो शृभावो निपात्यतइति पूर्वमुक्तत्वाद्द्वाद्यप्रकृतलक्षणप्रयोजकव्यापाराङ्गीकरणसामर्थ्यात्पाचयितृलक्षणप्रयोजकव्यापारनिषेधो विज्ञेयः॥

पाकोयं पाक्यपक्त्रोर्द्विविध इह स विक्लित्तिविक्लेदनात्मा
श्रातिर्वर्त्त्येकमन्यं श्रपयतिरुभयत्रोभयोक्तेः शृभावः।
स्वे स्वे वाच्ये श्रपेस्तु प्रसजति सति वा पाचने न द्वितीये
नित्यं क्षीरे शृभावो हविषि च न तु पाक्येषु चार्थान्तरेषु॥

"प्यायः पी"॥ अन्धुः कूपः॥

"लिड्यङोश्च"॥ 'विभाषेति निवृत्तमिति'। उत्तरसूत्रे पुनर्विभाषाग्रहणात्। 'प्यायः पीत्येतच्चकारेणानुकृष्यतइति'। असति चकारे प्रकरणिनः संप्रसारणस्यैवानुवृत्तिः स्याद्यथोत्तरत्र। 'परत्वात्पीभावे कृतइति'। ननु द्वयोः सावकाशयोः परत्वं भवति, अनवकाशश्च पीभावः, एवं तर्हि परत्वादुत्कृष्टत्वादनवकाशत्वादिति भावः। 'पुनः प्रसङ्गविज्ञानादिति'। अत्रापि विप्रतिषेधे परमित्यत्र यदुक्तं न तद्विवक्षितं, किं तर्हि

द्विर्वचनस्य पुनः प्रसंगोस्तीति कृत्वेत्यर्थः, यदि तर्ह्यनवकाशः पीभावो नाप्राप्ते द्विर्वचनआरभ्यमाणेन तेन द्विर्वचनस्य बाधः प्राप्नोति । नैष दोषः । उत्सर्गापवादयोः परस्परसन्निधौ बाध्यबाधकभावः, इह तु सम्प्रसारणप्रकरणेन द्विर्वचनप्रकरणं विच्छि[१]चमत एव वक्ष्यते दिग्यादेशेन द्वित्वबाधनमिष्यतइति ॥

"विभाषा श्वेः"॥ 'शुशावेति'। परावपि वृद्ध्यायादेशौ बाधित्वा नित्यत्वात्सम्प्रसारणमन्तरङ्गत्वात्पूर्वत्वम् । 'शुशुवतुरिति'। अत्रापि परत्वात्प्राप्तमियङं बाधित्वा नित्यत्वात्संप्रसारणं, तत्र कृते परमप्येरनेकाच इति यणं बाधित्वान्तरङ्गत्वात्पूर्वत्वं पश्चादुवङादेशः। 'अन्यत्रेति'। पित्सु वचनेषु। 'तत्र सर्वत्र विकल्प इति'। पित्सु तावद्विकल्प्यते प्रतिषेधकाभावात्, कित्स्वपि परत्वादयं विकल्पः, यजादिलक्षणस्यात्रकाशः शूनः शूनवान्, अस्यावकाशः पिद्वचनानि, किति लिट्युभयप्रसंगे परत्वादयं विकल्पः। 'अभ्यासस्यापि न भवतीति'। किमिति न भवति, न तावत् परत्वादनेन विकल्पेन बाधः, धातोरयं विकल्पो नाभ्यासस्य । किं चोभयेषांग्रहणस्य प्रयोजनमुक्तं विध्यन्तरमपि बाधित्वाभ्यासस्य स एव विधिर्यथा स्यादिति। तस्माद्वचनमेवात्र शरणं, यदाह, श्वेर्लिट्यभ्यासलक्षणप्रतिषेध इति ॥

"णौ च संश्चङोः"॥ णाविति श्वयत्यपेक्षया परसप्तमी, संश्चङोरिति णयपेक्षया, तदाह। 'सन्परे चङ्परे च णौ परत इति'। 'अन्तरङ्गमपीति'। अन्तरङ्गत्वं तु णिजमात्रापेक्षत्वात्। 'वृद्ध्यादिकमिति'। आदिशब्देनायादेशो गृह्यते, यदा तु संप्रसारणं संप्रसारणाश्रयं च कार्यं बलीय इति परिभाषा प्रयोजनाभावात्प्रत्याख्याता तदा णौ च संश्चङोरिति विषयसप्तम्याश्रयणीया, णौ विषयभूते तत्परयोश्च संश्चङोर्विषयभूतयोरिति। 'ओः पुयण्ज्यीत्यादि'। यथा चैतज्ज्ञापकं तथा द्विर्वचनेचीत्यत्र प्रतिपादितम्। अत्र स्थानिवद्भावादित्यतः पूर्वं द्वितीयोपीतिशब्दः पाठ्यः, तेनेति वा पठितव्यम् ॥

१ व्यवहितमिति २ पु॰ पा॰ ।

"ह्वः संप्रसारणम्" ॥ 'संप्रसारणस्य बलीयस्त्वादिति'। बलीयस्त्वं च पूर्ववत्। 'एकयोगेनैव सिद्ध इति'। उत्तरसूत्रे कस्य चिन्निमित्तस्य सप्तमीनिर्दिष्टनिष्टस्याभ्यस्तं प्रत्यश्रवणाण् णावपि संश्चङ्परे ह्वरभ्यस्तकारणस्य सिद्धमेव संप्रसारणमिति भावः। 'अनभ्यस्तनिमित्त-प्रत्ययेनेति'। अभ्यस्तस्य यन्निमित्तं न भवति तेन। 'व्यवधानेनेति'। यद्युत्तरसूत्रं प्रवर्तेत तदा योगविभागोनर्थकः स्यादिति ज्ञापकत्वम् ॥

"अभ्यस्तस्य च" ॥ अत्र ह्व इत्यनुवर्त्तमानस्य यद्यभ्यस्तस्येत्यनेन सामानाधिकरण्यं स्यात्तदा कृते द्विर्वचने ऽभ्यस्तसंज्ञायामुपजातायां संसारणेन भवितव्यं, ततश्चाभ्यासस्य संप्रसारणं न स्यात्, न संप्रसारणे संप्रसारणमिति निषेधात्, आकारहकाराभ्यां व्यवहितत्वादप्रतिषेध इति चेत्, न, समानाङ्गे संप्रसारणप्रतिषेधात्, समानाङ्गग्रहणं तत्र चोदयिष्यति, एतच्च तत्रैव व्यक्तं व्याख्यास्यते। तमिमं सामानाधिकरण्यं दोषं पश्य-न्नाह। 'तदभ्यस्तस्येत्यनेन व्यधिकरणमिति'। एतदेव स्फोरयति। 'अभ्यस्तस्य यो ह्वयतिरिति'। तेन किं सिद्धं भवतीत्याह। 'तेनेति' ॥

"अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताःश्रितमाशीराशी-र्त्ताः" ॥ 'अपर आहेति'। कस्यां चिच्छाखायामपस्पृधेथामित्याद्युदात्तं पठ्यते ऽन्यस्यां तु पदद्वयमुभयमप्यनेन निपातनेन संगृह्यते, तत्रैकपद्ये 'तिङ्ङतिङ' इति निघातः प्राप्तो 'यद्वृत्तान्नित्य'मिति प्रतिषिद्धः, तत्राट्-स्वरेणाद्युदात्तं पदं भवति, यदा तु द्वे पदे तदा निघातप्रतिषेधे तास्यनु-दात्तेन्ङिति,लसार्वधातुकानुदात्तत्वे धातुस्वरेण स्पृधेथामिति पदमाद्युदात्तं, 'तिङि चोदात्तवती'त्यपशब्दस्य निघातः। 'बहुवचनस्याविवक्षितत्वा-दिति'। सोमस्यैव बहुत्वे आभाव इति नियमानाश्रयणाच्च, अन्यथा बहुत्वाविवक्षायामपि सोमादन्यत्र आभावो न स्यात् विपर्यविभाग-वादिनाम् ॥

"न संप्रसारणे संप्रसारणम्" ॥ येषां संप्रसारणं विहितं तेषां यावन्तो यणस्तेषां सर्वेषां संप्रसारणे प्राप्ते प्रतिषेधोयमुच्यते। ननु

चालोन्त्यपरिभाषयान्त्यस्यैव भविष्यति, नानया परिभाषया शक्यमिहोप-स्थातुं, वच्यादीनामन्त्यस्य यणोसंभवात्, अनन्त्यविकारेन्त्यसदेशस्येत्यनया परिभाषया तर्हि अन्त्यसदेशस्यैव भविष्यति नेतरस्य, नैषास्ति परिभाषा, प्रयोजनाभावात्, एतच्चास्माभिः परिभाषाप्रकाराणाख्ये ग्रन्थे उपपादितम् । एवं तर्हि ज्ञापकात्सिद्धं, यदयं प्यायः पीभावं शास्ति तज्ज्ञापयति न सर्वस्य यणः संप्रसारणं भवतीति, यदि स्यात् प्यायः संप्रसारणमेव विद-ध्यात्, द्वयोर्यकारयोः संप्रसारणे पूर्वत्वे च हल इति दीर्घत्वे च सिद्धं स्यात्पीनं मुखमिति । ननु च प्यायेोन्त्यस्य यणः संभवात्तस्यैव स्यात्, स्यादेवं यदि प्याय इति स्थानषष्ठी विज्ञायेत, अवयवषष्ठी चैषा विज्ञास्यते, प्यायो यो यण् तस्येति, एवमप्येतावदेवानेन ज्ञाप्यते न सर्वस्य यणः संप्रसारणं भवतीति, तत्र कुत एतत् परस्यैव भवति न पूर्वस्येति, न च विध्यती-त्यादिनिर्देशात्परस्यैवेति शक्यमवगन्तुं, पर्यायेण प्रवृत्तावपि तदुपपत्तेः, तस्मादारभ्यमेवैतत् । ननु पूर्वपरयोर्यणोरेकयोगलक्षणं संप्रसारणं तद्यदि परस्याभिनिर्वृत्तं पूर्वस्याप्यभिनिर्वृत्तमेव, न चाभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या विज्ञातुं, यो हि भुक्तवन्तं ब्रूयाद् मा भुङ्क्था इति किं तेन कृतं स्यात्, अथ पूर्वस्यानभिनिर्वृत्तं परस्याप्यनभिनिर्वृत्तमेव, तत्र निमित्त-त्वेनाश्रयणमनुपपन्नमित्यत आह । 'एकयोगलक्षणमपीति' । अपरः कल्पः, अस्तु द्वयोरप्यभिनिर्वृत्तं, कथं तर्हि प्रतिषिध्यते, न संप्रसारणं प्रतिषिध्यते, किं तर्हि तदाश्रयं पूर्वत्वं, तदेव त्वत्र संप्रसारणशब्देनोपचारा-दुच्यते, तस्मिन्प्रतिषिद्धे यणादेशेन सिद्धमिष्टम्, अस्तु वा द्वयोरप्यनभिनि-र्वृत्तं, कथं तर्हि निमित्तत्वं, नैवात्र संप्रसारणं निमित्तं, किं तर्हि तद्भावी यो यण् स एव च सप्तम्यन्तेन संप्रसारणशब्देनोच्यतइति । 'पुनः संप्रसारण-ग्रहणमिति'। असति तस्मिन्ननन्तरस्य विधिर्वा भवति प्रतिषेधो वेति पूर्वप्रकरणविहितस्यैव संप्रसारणस्य प्रतिषेधः स्यान्न विदेशस्थस्य, विभिन्नो देशो विदेशः। 'संप्रसारणग्रहणादेवेति'। इह तु व्ययो लिटि विव्ययइति

१ न पूर्वस्येति २ पु॰ पाठः । न संप्रसारणे संप्रसारणं भवतीति ३ पु॰ पाठ उप-लभ्यते परं तु स उत्तरग्रन्थविरोधादुपेक्ष्यः ।

हलादिः शेषापवादः संप्रसारणं प्रकरणादुत्सर्गदेशश्चापवादो भवतीति परस्यैव संप्रसारणात्सिद्धम्, अत एव पुनः संप्रसारणग्रहणाद्विदेशस्थेपि संप्रसारणे प्रतिषेध इतीष्टव्यम्, अन्यथा तत्रेति वाच्यं स्यात्। 'व्यवधानमेतावदाश्रयिष्यतइति'। तेनोपपूर्वाद्वसेर्भाषायां सदवसश्रुव इति लिटः क्वसौ विभक्तौ च परतो वसोस्संप्रसारणे उपेयुषेत्यादौ धातोः प्राप्तस्य यजादिलक्षणस्य संप्रसारणस्य प्रतिषेधो न भवति, प्रत्ययेण वकारेण व्यवधानादिति भावः, यदि तु व्यवधानमात्रे स्यात् तदा समानाङ्गग्रहणं कर्त्तव्यं, निमित्तनिमित्तिनौ यत्रैकस्मिन्नेवाङ्गे भवतस्तत्र प्रतिषेधो भवतीति वक्तव्यम्, उपेयुषीत्यत्र क्वसौ धातुरङ्गं, क्वस्वन्तं च विभक्ताविति प्रतिषेधाभावः, अन्तरङ्गत्वाद्वात्र पूर्वमेव धातोः संप्रसारणम्। 'ऋचि त्रेरिति'। कल्पसूत्रकारास्तु द्विशब्दस्यापि संप्रसारणं प्रयुञ्जते तृचाः प्रतिपदनुचरा, द्वृचाः प्रगाथा इति॥

"लिटि वयो यः"॥ । 'लिङ्ग्रहणमुत्तरार्थमिति'। नेहार्थं लिटोन्यत्र वयादेशस्यासंभवात्॥

"वश्चास्यान्यतरस्यां किति"॥ अस्यग्रहणेन वयो यकारः प्रतिनिर्दिश्यते, अन्यथादेशाकारस्योच्चारणार्थत्वे प्रमाणाभावाद्वय एवायं सर्वादेशः संभाव्येत, अस्यग्रहणे तु सति यद्यप्यकारवानादेशस्तथाप्यतो लोपेन सिद्धमिष्टं, वश्चास्यग्रहणं शक्यमकर्त्तुं, कथ, मन्यतरस्यां किति वेञ इति सूत्रं कर्तव्यं, लिटीत्येव, किति लिटि परतो वेञः संप्रसारणं न भवत्यन्यतरस्यां, ववतुः, ववुः, संप्रसारणपक्षे उवङादेशे सति द्विर्वचनं, सवर्णदीर्घत्वम्, ऊचतुः, ऊचुः, वेञो वयिः, ऊयतुः, ऊयुरिति, कथं ववौ वविथ, ल्यपि चेति चकारेण लिडनुकृष्यते, तत्पिति नित्यनिषेधार्थं भविष्यति॥

"ल्यपि च"॥ पूर्वे वश्चास्यग्रहणे क्रियमाणे ल्यपि व्यो ज्यश्चेति एकयोग एव कर्त्तव्यः, एवं हि द्विश्चकारोपि न कर्त्तव्यो भवति॥

"आदेच उपदेशेऽशिति"॥ अत्र यदि धातोरिति नानुवर्त्तेत ततो विशेष्याभावादेव नास्ति तदन्तविधिरित्युपदेशे य एच् तस्यात्व-

मित्यर्थो भवति, ततश्च ढौकिता त्रौकिता इत्यत्रापि प्राप्नोति, ननु चाशितीत्युच्यते न चात्राशितं पश्यामः, न च ककार एवाशित्, किं कारणं, नञिवयुक्तन्यायेन शित्सदृशस्य प्रत्ययस्यैव ग्रहणात्। स्यादेवं यद्यशितीति पर्युदासः स्यात्, प्रसज्यप्रतिषेधस्त्वयमिति वक्ष्यते, तस्माद्धातोरित्यनुवर्त्यमित्याह। 'धातोरिति वर्त्तत इति'। तस्य चैचो विशेषणात्तदन्तविधिरित्याह। 'एजन्तो यो धातुरिति'। 'उपदेश इति'। अनिर्ज्ञातस्वरूपस्य स्वरूपज्ञापनार्थमाद्यमुच्चारणमुपदेशः। 'चेता स्तोतेति'। आर्द्धधातुके गुणविधानं त्वात्वार्थमेव स्यात्, यं विधिं प्रत्युपदेश इति न्यायात्, कर्त्ता हर्त्ता इत्यादौ च गुणविधिश्चरितार्थः, एवमपि लाक्षणिकत्वादेवात्र न भविष्यति, ज्ञापकाच्च, यदयं क्रीङ्जीनां णावात्वं शास्ति तज्ज्ञापयति न परनिमित्तस्यैच आत्वं भवतीति, नैतदस्ति ज्ञापकं, नियमार्थमेतत् स्यात्, क्रीङ्जीनां णावेवेति, यत्तर्हि मीनातिमिनोतिदीङां ल्यपि चेत्यात्वं शास्ति, एवं ह्युत्तरार्थमवश्यंकर्त्तव्यमुपदेशग्रहणं तदिहैव क्रियते मन्दधियामनुग्रहाय। 'कथमिति'। अशिदित्ययं बहुव्रीहिः, तत्र शिति प्रतिषेधे क्रियमाणे शिन्मात्रस्य प्राप्नोति, ततश्च जग्लाये इति भवितव्यमिति प्रश्नः। भावे लकारः, तत्पुरुषाश्रयेणोत्तरम्। कः पुनस्तत्पुरुषे सति गुण इत्यत आह। 'तत्रेति'। तत्पुरुषे हि वर्णग्रहणमिदं भवति, वर्णग्रहणे च तदादौ कार्यं भवति। स्तनंधय इत्यत्र तु नासिकास्तनयोरिति खशि कृते मध्यपातिनं शपमाश्रित्य प्रतिषेधः, प्रयोजनाभावादेवात्र न शपा भवितव्यमिति चेत्, नन्विदमेव प्रयोजनं यदुनात्वनिवृत्तिः। 'अशितीति'। यद्ययं पर्युदासः स्यात् शितोन्योशित् तस्मिन्नशितीति, ततो ग्लायन्ति म्लायन्तीत्यत्र शबकारस्यान्त्याकारस्य चैकादेशे कृते तस्य परं प्रत्यादिवद्भावादस्ति शितोन्य इति कृत्वाऽऽत्वमत्र प्राप्नोति, प्रसज्यप्रतिषेधे तु न दोषः, एकादेशस्य पूर्वं प्रत्यन्तवद्भावात् शिद्ग्रहणेन ग्रहणात् शिति प्रतिषेध एव भवति, किं पुनः कारणमेकादेशविषय एव आत्वप्राप्तिश्चोद्यते न पुनर्ग्लायतीत्यादावपि, लकारएवाशिति परत आत्वं प्राप्नोतीति। नैवं शक्यं चोदयितुम्। एवं ह्यशितीति प्रतिषेधो निर्विषयः स्यात्, न च

पाघ्राध्माधेट्दृशः इति धेटः शप्रत्ययो ऽनन्यपूर्वो विषयो, नह्येकमुदाहरणं शित्प्रतिषेधं प्रयोजयति, यद्येतावत् प्रयोजनं स्यादशइत्येव ब्रूयात्, यद्वान्तरङ्गत्वान्नित्यत्वाच्च पूर्वं लस्य तिबादयः, पश्चाच्छप्, अनित्यं चात्वं, तस्मादेकादेशविषय एव चोद्यते। नैष दोषः। एकादेशस्य पूर्वविधौ स्थानिवद्भावेनादिशितोन्यस्य प्रत्ययस्याभावात्, इह तर्हि सुग्लः, सुग्ला, सुग्लानमित्याकारान्तलक्षणाः काङुचो न स्युः, एषोप्यदोषः,

आत्वभाविन एजन्तादाकारान्तनिमित्तकः।
प्रत्ययो प्राप्यते सर्वो ह्वावामश्चेत्यणा पुनः॥

इह तर्हि ग्लै ग्लानीयं पै पानीयम् अनीयरि कृते आत्वं च प्राप्नोति आयादयश्च, परत्वादायादयः स्युः, स तु कृतेषु तेष्वलोन्त्यस्यात्वे सवर्णदीर्घत्वे ग्लानीयमित्यादि सिद्धं, नन्वायादिषु कृतेषु नायमेजन्तः, न च स्थानिवद्भावोलाश्रयत्वात्, स्यादेतदेवं यदि संप्रति यदेजन्तन्तस्यात्वं भवतीत्युच्यते, इह तूपदेशगतमेजन्तत्वं न संप्रतितनमिति नास्ति स्थानिवद्भावापेक्षा। नन्वेवमपि जग्लतुरित्यादौ यकारस्यात्वे कृते जग्ला आ अतुसिति स्थितेन्तरङ्गमप्याकारयोरेकादेशं बाधित्वातो लोप इटि चेत्यातो लोपः स्यात्, न च पूर्वस्याकारस्य पुनर्लोपो लभ्यते, यकाराकारलोपस्य पूर्वविधौ स्थानिवद्भावादसिद्धवदत्राभादित्यसिद्धत्वाच्च। नैष दोषः, समानाश्रये वार्णादाङ्गं बलीयः, इह तु व्याश्रयत्वादन्तरङ्गएकादेशे सति पश्चादाल्लोप इति सिद्धमिष्टम्, एवमपि द्विर्वचनेचीत्यायादीनां स्थानिवत्त्वात् ग्लैशब्दस्य द्विर्वचनेभ्यासस्यैवर्णान्तता प्राप्नोति, पक्षान्तरे त्वनैमित्तिकत्वादात्वस्य द्विर्वचननिमित्ते ऽव्यवहितत्वाच्च दोषः, पर्युदासपक्षेपि न दोषः, लिटि वयो य इति द्विलकारकोयं निर्द्देशः, तथानिर्द्देशस्य च तत्र प्रयोजनाभावादिहानुवृत्तं वाक्यभेदेन संबध्यते, अशित्येव आत्वं भवति, लिटि तु लकारादौ लावस्थायामेवेति। ततश्चात्वस्य द्विर्वचननिमित्तान्निमित्तत्वाभावात्तस्य तावच्च स्थानिवद्भावः, आया-

१ शाध्यइति ३ पु॰ पा॰।

दयस्तु लिट्यप्राप्ता एव, तदेवं पर्युदासपक्षस्य बहुप्रतिविधेयत्वात्प्रसज्य प्रतिषेधोऽयमित्याह। 'अशितीति प्रसज्यप्रतिषेधोऽयमिति'। तेन किं सिद्धं भवतीत्याह। 'तेनैतदित्यादि'। एवमादि सिद्धं भवतीत्यादिशब्देन सुग्लेत्यत्रातश्चोपसर्गइत्यङो ग्रहणम्, अन्यानि बहूनि प्रयोजनानि प्रागेवास्माभिर्दर्शितानि, इह कस्मान्न भवति गोभ्यां नौभ्यामिति, ज्ञापकात्, यदयं रायो हलीत्यात्वं शास्ति तज्ज्ञापयति न प्रातिपदिकस्यात्वं भवतीति, नैतदस्ति ज्ञापकं, नियमार्थमेतत्स्यात्, रायो हल्येव, औतोम्शसोरित्येत्तत्तु गां पश्येत्यत्र, गोतो णिदिति णित्त्वाद्वृद्धिः प्राप्नोति, गाःपश्येत्यत्र त्वशितीति प्रतिषेधः प्राप्नोतीति कृतं भवेदित्यज्ञापकम्। एवं तर्ह्युपदेशइत्युच्यते, न च गोनौशब्दयोरुपदेशोऽस्ति, यद्गोपयसोर्यत्, नौवयोधर्मेत्यादाउच्चारणं नासावुपदेशः, किंतर्ह्युद्देशः, सिद्धवदुपादानात्, मा भूद् गोनौशब्दयोरुपदेशः, एचस्तूपदेशोऽस्ति, गमेर्डोः, ग्लातुदिभ्यां डाविति, न च डोडावोर्विधानवैयर्थ्यं, शसि चरितार्थत्वात्, एवं तर्हि धातोरिति वर्त्तते, इत्युक्तत्वा[1]च भविष्यति ॥

"न व्यो लिटि" ॥ कित्त्यात्वे सत्यसति वा विशेषाभावात्पित्युदाहरणमेतस्य वृत्तिकारेण दर्शितं, थलीडत्यर्तिव्ययतीनामितीट् ॥

"क्रीङ्जीनां णौ" ॥ यद्यपि करोतेरीङ्कृताविस्येतस्य यणादेशे क्रिति रूपं संभवति, तथाप्येच इत्यधिकारात्करोतेस्तावद् ग्रहणं न संभवति, तथा इङोऽपि ग्रहणं न भवति, ह्रस्वान्तेन परेण जयतिना साहचर्यात् ॥

"सिध्यतेरपारलौकिके" ॥ परलोकः प्रयोजनमस्य तत्पारलौकिकं, प्रयोजनमिति ठक्, अनुशतिकादित्वादुभयपदवृद्धिः। 'ज्ञानविशेषे वर्त्ततइति'। हेयोपादेयतत्त्वावबोधो ज्ञानविशेषः। 'तापसः सिध्यतीति'। हेयमुपादेयं च तत्त्वतो ज्ञातुकामः प्रवर्त्ततइत्यर्थः, तदाह। 'ज्ञानविशेषमासादयतीति'। 'तपः प्रयुङ्क्ते इति'। ज्ञानविशेषवन्तं करोतीत्यर्थः। परलोकइत्यस्य विवरणं 'जन्मान्तरइति,' इह वा भवतु स्वर्गादौ वा, शरीरान्तरोपलक्षणार्थं पारलौकिकग्रहणमिति दर्शयति। 'उपसंहरचि-

१ इत्युक्तम्, अधातुत्वाच्चेति ३ पु० पा०।

ति'। हेतौ शतृप्रत्ययः। 'इह कस्मादिति'। ब्राह्मणेभ्यो दास्यामीत्यनेनाभिप्रायेणानुष्ठितो धात्वर्थः परलोकप्रयोजनो भवतीति प्रश्नः, सिद्ध्यतेरर्थे इत्यादिना ऐहलौकिकत्वं धात्वर्थस्य दर्शयति। 'तस्य प्रयोजनमन्नमिति'। तदुद्दिश्य प्रवृत्तत्वात्। 'पुनः सिद्धिरेवेति'। पारलौकिकीति लिङ्गविपरिणामेन संबन्धनीयं, सिद्धिर्निष्पत्तिः, यस्यां सिद्धौ धातुर्वर्त्तते सा च पारलौकिकी न भवति, तस्मादात्वं न पर्युदस्यते। 'साक्षादिति'। यदि साक्षादव्यवधानेन पारलौकिको यः सिद्ध्यतेरर्थस्तत्र पर्युदासो न चरितार्थः स्यात्तदा पारम्पर्याश्रयणम्, इदन्तु साक्षात्परलोकार्थे ज्ञानविशेषे चरितार्थमतो नैवंविधे विषये प्रवर्त्ततइत्यर्थः॥

"मीनातिमिनोतिदीङां ल्यपि च"॥ उपदेशएवात्वविधानाल्ल्यपः परत्वासंभवाल्ल्यपीति विषयसप्तमीत्याह। 'ल्यपि विषयइति'। 'एकाच इति'। यद्यपि प्रकृतिविशेषणं प्रागासीत्तथापीहोपदेशाधिकारान्मीनात्यादीनां चोपदेशएजन्तत्वासंभावात्सामर्थ्यादेव इत्येतदपि विषयविशेषणं विज्ञायतइत्याह। 'एचश्च विषयइति'। यत्र प्रत्यये एभावी तस्मिन्बुद्धिस्थइत्यर्थः। उपदेशएवेत्यस्य विवरणं 'प्राक् प्रत्ययोत्पत्तेरिति'। उपदेशएवात्वविधाने योर्थः संपद्यते तं दर्शयति। 'उपदेशएवात्वविधानादिति'। इवर्णान्तलक्षणः प्रत्यय एरच्, आकारान्तलक्षणस्तु घञ्, यद्यपि घञाकारान्तादिति नोच्यते तथाप्यत्रात्वे सति भवत्यसति तु न भवतीत्येतावता घञ आकारान्तलक्षणत्वम्। 'उपदायो वर्त्ततइति'। घञ्यातो युक् चिण्कृतोरिति युक्, ईषदुपदानमितिखलर्थे आतो युच्, मीनातिमिनोत्योस्तु खलचावेव भवतः, निमीमिलियां खलचोः प्रतिषेध इति वक्ष्यमाणत्वादतो दीङेवोदाहृतः॥

"विभाषा लीयतेः"॥ 'तयोरुभयोरपि यका ऽयं निर्द्देशः क्रियतइति'। यदि तु दैवादिकस्यैव श्यना निर्द्देशः क्रियेत लीङ इत्येव ब्रूयादिति भावः। श्तिपः शित्करणसामर्थ्याच्चाभावकर्मवाचित्वेपि यग् भवति, यथा ऽकर्तृवाचित्वेपि शबादयो भवतेर इत्यादौ। 'खलचोरिति'। पचाद्यच एरचश्च सामान्येन ग्रहणम्। 'यत्वं चेति'। व्यवस्थितविभाषा-

विज्ञानादेवेत्यर्थः । 'उल्लापयतइति'। लियः संमाननशालीनीकरणयो-श्चेत्यात्मनेपदम् ॥

"खिदेश्छन्दसि" ॥ 'चखादेति'। व्यत्ययेन परस्मैपदम्, आत्वस्यानैमित्तिकत्वाद् द्विर्वचनेचीति स्थानिवत्त्वाभावादभ्यासस्यैवर्णा-न्तता न भवति। अयं योगः शक्योऽवक्तुं, कथं, खादेश्चखाद, खिदेश्चिखे-देति, अनेकार्थत्वाद्धातूनामर्थभेदोप्यकिञ्चित्करः ॥

"अपगुरो णमुलि" ॥ यदि गिरतिर्गुरेरर्थे वर्तते तदायं योगः शक्यो वक्तुं, कथं, गिरेरपगारमपगारम् गुरोरपगोरमपगोरम् ॥

"प्रजने वीयतेः" ॥ यदि वातिरप्रजनेपि वर्तते तदा योगोयं शक्यो ऽवक्तुं, कथम्, वातेः प्रवापयति वीयतेः प्रवाययतीति, वीयतेरित्ययमपि यका निर्देशः स्मर्यते, वेत्तेरादादिकत्वेन श्यनोऽसंभवात्, प्रयोजनं हि यका निर्देशस्य चिन्त्यम् । 'जन्मन उपक्रम इति'। जनेर्भवे घञ्, प्रशब्द आदिकर्मणि। 'गर्भग्रहणमिति'। गृहीतो हि गर्भो जायते ततो गर्भग्रहणं जन्मन उपक्रमः ॥

"बिभेतेर्हेतुभये" ॥ 'हेतुभयमिति'। पञ्चमी भयेनेति समास-स्तदाह। 'हेतोर्भयमिति'। किं पुनस्तदित्याह। 'स यस्य भयस्येति'। 'स चात्वपक्षे न भवतीति'। एकदेशविकृतस्यानन्यत्वात्प्राप्नोति, कुतो न भवतीत्याह। 'लीभियोरीकारप्रश्लेषनिर्देशादिति'। लीलोर्नुग्लुकाविति लियोनुग्विधीयते,यश्च भियः षुक्, तावुभावप्याकारान्तयोर्न भवतः, कुतः, लीई भीई इति ईकारप्रश्लेषेणेकारान्तयोर्विधानात् । लीभियोः प्रश्लेषनिर्देशादिति वार्तिके सह पाठादिह लियो ग्रहणम् ॥

"नित्यं स्मयतेः" ॥ 'धात्वर्थसामान्यादिति'। सामान्यं सादृश्यं, धात्वर्थयोः सामान्यं धात्वर्थसामान्यन्द्वयोरपि धात्वोरर्थौ चित्तविकार-स्वभावौ, तेन भयशब्देन स्मयतेरर्थो ऽभिधीयते, क्रीङ्जीनां णावित्यत्र स्मयतिर्नोक्तो हेतुभयइत्युपाधिं वक्ष्यामीति ॥

"सृजिदृशोर्झल्यमकिति" ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्ये विज्ञायतइति प्रत्यय इह संनिधापितो झला विशेष्यतइति तदादिविधिर्वि-

ज्ञायतइत्याह । 'झलादाविति' । 'अकिति प्रत्यये परतइति' । किति परतो न भवतीत्यर्थः, प्रसज्य प्रतिषेधो ह्ययमिष्यते, एतच्च गाङ्कुटादिसूत्रे सम्यगुपपादितम् । 'लघूपधगुणापवादोयमिति' । अकितीति वचनावा-प्राप्ते तस्मिन्नस्यारम्भात् । 'सिचि वृद्धिस्त्वमि कृते भवतीति' । सिचि वृद्धिस्तु भवति न बाध्यते येन नाप्राप्तिभावात्, साप्यमि कृते भवति। तस्यैव व्याख्या । 'पूर्वन्तु बाध्यतइति' । अमागमेन । नित्यत्वात्तस्य । 'रज्जुसृड्भ्यां देवद्रूभ्यामिति' । उभयत्र व्रश्चादिसूत्रेण षत्वे जश्त्वमिति केचित् । अन्ये तु क्विन्प्रत्ययस्य कुरिति कुत्वमिच्छन्ति । ननु न क्विन्नन्तावेतौ किं तर्हि क्विबन्तौ,नैष दोषः । यस्माद्धातोः क्वचित्क्विन् विहितस्तस्य प्रत्ययान्तरे कुत्वं भवति, क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणादिति वक्ष्यते, पदान्तस्येत्यधिकारात्स्रष्टा द्रष्टेत्यत्र न भवति, कुत्वविधावेव तस्य निर्णयं वक्ष्यामः ॥

"अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ॥ 'उपदेश इति वर्त्तत-इति' । अनुदात्तस्य विशेषणार्थं, तेन द्रप्तेत्यत्र तृनि विहिते यद्यपि नित्स्वरेण धातोरुदात्तत्वं भवति तथाप्युपदेशे ऽनुदात्तइत्यम्भवति, वर्द्धे-त्यत्र तृचि कृते यद्यपि शेषनिघातेन धातुरनुदात्तो भवति तथाप्युपदेशे नायमनुदात्त इत्यम्न भवति, किमर्थं पुनरनुदात्तस्येत्युच्यते, नानिट इत्येवो-च्येत, एवं हि सति लघु सूत्रं भवति तत्राह । 'तृप प्रीणनइत्यादि' । 'इडागमो रधादिभ्यश्चेत्यनेन विकल्पित इति' । ततश्च पाक्षिकेणेटा सेट्त्वात्तयोर्न स्यात् । अथ पाक्षिकेणेडभावेन तयोरपि स्यात् वर्द्धावर्द्धु-मित्यत्रापि स्यादिति भावः । यदि तर्हि तयो रधादिभ्यश्चेतीड्विक-ल्प्यते, अनुदात्तोपदेशः पुनस्तयोः किमर्थ इत्याह । 'अनुदात्तोपदेशः पुनरमर्थ एवेति' ॥

"शीर्षश्छन्दसि" ॥ 'न पुनरयमादेशः शिरःशब्दस्येति' । यद्यपि सूत्रे शिरस इति स्थानी नोपात्तस्तथापि समानार्थत्वादादेशे-नाशिष्यते, यथा शिवादिषु विश्रवणरवणशब्दाभ्यां विश्रवःशब्द इत्यादेश-त्वशङ्का । 'सोपि हि छन्दसि प्रयुज्यतइति' । आदेशपक्षे तु तेन निर्वर्तित-

त्वाच्छिरःशब्दो न प्रयुज्येतेति भावः। ननु चान्यतरस्यामित्यनुवृत्तेस्तस्यापि प्रयोगो भविष्यति, सत्यमुत्तरत्रापि विकल्पानुवृत्तिः शङ्क्येतेति प्रकृत्यन्तरपक्ष एवाश्रितः ॥

"ये च तद्धिते" ॥ 'छन्दसि पूर्वेणैव सिद्धमिति'। भाषार्थमिदं यदि पूर्वसूत्रवदिहापि शीर्षन्निति प्रकृत्यन्तरं विज्ञायेत तदा यदा शिरःशब्दाद्यकारादिस्तद्धित उत्पद्यते तदा तस्य श्रवणं प्रसज्येतेति मत्वाह। 'आदेशोऽयमिष्यतइति'। 'स कथमिति'। स आदेशः कथं लभ्यते, न कथञ्चित्, स्थानिनोऽनुपादानात् पूर्वसूत्रवदिति प्रश्नः। तन्निमित्तमनुरूपां शब्दतश्चार्थतश्चान्तरतमां प्रकृतिं शिरःशब्दमेवाक्षिपति। 'शिरस्यतीति'। सुप आत्मनः क्यच्। 'वा केशेष्विति'। सूत्रेण नित्ये प्राप्ते विकल्पितः, अत्र शिरस्यशब्दस्य केशैकविषयत्वात्तत्प्रयोगे केशशब्दो न प्रयोक्तव्यः, शीर्षण्यशब्दस्तु सामान्यवाचीति तत्प्रयोगे विशेषावगमाय केशशब्दः प्रयोक्तव्यः ॥

"अचि शीर्षः" ॥ 'शीर्षन्भावे ह्यचिति प्रकृतिभावः स्यादिति'। अतोऽकारान्तमादेशान्तरं विहितमिति भावः। 'कर्त्तव्योऽत्र यत्न इति'। तत्रायं यत्नः, शीर्षादेशसंनिपातकृतः ष्यङादेशस्तद्विघातस्य निमित्तं न भवतीति। 'अणिञन्ताद्वा पर इति'। अणिञोरनार्षयोरित्यादेशपक्षप्रहाणेन प्रत्ययपक्ष आश्रयणीयः, आदेशपक्षएव वा स्थित्वा यत्नः कर्त्तव्य इति वाशब्दार्थः ॥

"पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु" ॥ इहापि शस्प्रभृतिष्विति निमित्तोपादानादनुरूपाः प्रकृतय आक्षिप्यन्ते, पद्दादयश्चादेशा विज्ञायन्तइत्याह। 'पाददन्तेत्यादि'। अन्ते आसनशब्दः पठ्यते, आस्यशब्दस्तु पठितव्यः, आस्नो वृकस्य वर्त्तिकामभीके, ग्रीवायां बद्धो अपि कक्ष आसनि, आस्नो यत्सीसमुञ्चतं वृकस्येत्यादौ ह्यास्यार्थो ऽवगम्यते। 'आसनीति'। विभाषा ङिश्योरित्यल्लोपाभावपक्षे रूपम्। अपरे पुनरविशेषेणेच्छन्तीति, भाष्ये तु छान्दसमेवैतदिति स्थितम्। 'प्रकारार्थे प्रभृतिशब्दइति'। व्यवस्थावाचिनि तु

शसः[1] पूर्वेषु वचनेषु न स्युः । 'दोषणीति'। प्रथमाद्विवचने, दोःशब्दस्य दोषन्नादेश, औङः शीभावः । 'मांसपचन्या उखाया इति'। मांसस्य पचि युड्घञोरित्यन्तलोपो वक्ष्यते, तद्व्युत्पत्त्यन्तरम् । 'नस्यमिति'। हितार्थे भवार्थे वा शरीरावयवाद्यत् । 'न स्त इति'। अपादाने चाहीयरुहोरिति तसिः । 'नक्षुद्र इति'। तृतीया तत्कृतार्थेनेति समासः । सप्तमीति योगविभागादित्यन्ये । बहुव्रीहौ विशेषणस्य क्षुद्रशब्दस्य राजदन्तादित्वात्परनिपात इत्य[2]न्ये । 'यति वर्णनगरयोर्नेति वक्तव्यमिति'। तत्त्विहं वक्तव्यं, न वक्तव्यम्, इह तावन्नासिक्यो वर्ण इति, परिमुखादिपाठाद् ञ्यः, नासिक्यनगरमिति सङ्काशादिपाठाद् ण्यः । राजन्यसाङ्काश्यकाम्पिल्यनासिक्यदार्वाघाठानामादिर्वान्तो वेति प्रतिपदस्वरविधानात्स्वरेऽपि नास्ति विशेषः, प्रत्युत यत्प्रत्यये सत्यनासिक्यमित्यत्र 'ययतो श्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वं प्रसज्येत, अव्ययपूर्वपदप्रकृतिस्वरश्चेष्यते ॥

"धात्वादेः षः सः" ॥ 'सिञ्चतीति'। 'शे मुचादीनामिति' नुम् । 'षोडचिति'। षड् दन्ता यस्येति बहुव्रीहौ वयसि दन्तस्य दतृ, षष उत्वं दतृदशधास्विति षष उत्वमुत्तरपदादेष्टुत्वं च, उगिदचामिति नुम्, हल्ङ्यादिसंयोगान्तलोपौ, क्वचित्तु षोड इति पठ्यते तत्तु षोडन्तमाचष्ट इति णिचि कृते टिलोपे पचाद्यचि[3] रूपं, षट्शब्दोऽव्युत्पन्नं प्रातिपदिकम्, अनुकम्पितः षडङ्गुलिः षडिकः, बह्वचो मनुष्यनाम्नष्ठज्वा,ठाजादावूर्ध्वमित्यङ्गुलिशब्दस्य लो[4]पः, लषतीति षकारोपदेशस्तु प्रनिलषतीत्यादौ शेषे विभाषा कखादावषान्तउपदेश इति नेर्णत्वप्रतिषेधार्थं स्यात्, लेषतुः लेषुरित्रादेशप्रत्यययोरिति षत्वार्थं, क्वचित्तु कषतीत्यपि पठ्यते, तदयुक्तं, षकारोपदेशसामर्थ्यादेवात्र न भविष्यति, प्रनिकषतीत्यत्रापि कखादावित्येव णत्वप्रतिषेधः सिद्धः, आदेशादित्वादेत्वाभ्यासलोपौ च न स्तः, चकष-

१ परेष्वित्यधिकम् ३। पु०। २ इत्येक इति २ पु० पा०।

३ द्रष्टव्यमिति ३ पु० पा०।

४ लुगिति ३ पु० पाठ उपलभ्यते स तु न युक्तः।

तुश्चकृषुः । किमर्थं पुनः षादयो धातव उपदिष्टा न सादय एवोपदिश्येरन्, एवं ह्येतत्सूत्रं न कर्त्तव्यं भवति, तत्राह । 'आदेशप्रत्यययोरित्यादि' । व्यवस्थानियमः, आदेशप्रत्यययोरिति सहादीनामेव षत्वं यथा स्यात्सृपिसृजिप्रभृतीनां माभूदित्येवमर्थं षादयः केचिदुपदिष्टाः, अन्यथा सहादीनां षत्वार्थं यत्नान्तरमास्थेयन्तच्च गुरु भवतीति भावः । 'के पुनस्तइति' । पाठे भ्रंशसम्भवात्प्रश्नः । 'ये तथा पठ्यन्तइति' । अप्रमादेन पठितव्यमित्यर्थः । 'अथ वा लक्षणं क्रियतइति' । मन्दधियोऽनुग्रहीतुमिति भावः । 'अज्दन्त्यपराः सादय इति' । अज्दन्त्यैा परौ येषां तेऽज्दन्त्यपराः, परशब्दोवयववाची, तच्चाज्दन्त्ययोः परत्वमवयवान्तरापेक्षं विज्ञायमानं संनिधानात्सकारापेक्षं विज्ञायते । 'स्मिङ्स्विदीति' । स्मिङीषद्धसने, ञिष्विदा गात्रप्रक्षरणे, ष्वञ्ज सङ्गे, ञिष्वप् शये, एते स्वरूपेणैव पठ्यन्ते, वकारमकारयोरनज्दन्त्यत्वादृकारोपि केवलदन्तस्थानो न भवति, स्वद आस्वादन इति । स्वदिमपि केचित्पठन्ति । 'सृपिसृजीत्यादिः' । सृप्ल गतैा, सृज विसर्गे, स्तृञ् आच्छादने, स्त्यै ष्ट्यै शब्दसंघातयोः, सेकृतिर्गत्यर्थः, सृ गतावेतान्वर्जयित्वा येन्येज्दन्त्यपरास्ते षोपदेशाः, । 'सुब्धात्वित्यादि' । सुब्धातुः क्यजाद्यन्तः, ष्ठिवु निरसने, ष्वष्कतिर्गत्यर्थः, अनुदात्तेत्, एषां सत्वस्य प्रतिषेधो वक्तव्यः, तत्र सुब्धातूनां तावन्न वक्तव्यः, उपदेशइति वर्तते, न च सुब्धातवः क्वचिदुपदिश्यन्ते, एवं च कृत्वा धातुग्रहणं शक्यमकर्तुम् । उपदेशाभावादेव षोडादेर्न भविष्यति, तत् क्रियते धातोरित्यस्य निवृत्तिं सूचयितुं, तेन लोपो व्योर्वलीति अविशेषेण भवति, ष्ठीवतिष्वष्कती द्विषकारकैा, तत्र पूर्वस्यास्तु सत्वं परेण संनिपातेन षत्वं भविष्यतीति, यद्येवं लिट् ष्वष्कते, षत्वस्यासिद्धत्वाद् 'ङः सि धुडि'ति धुट् प्रसज्येत, एवं तर्हि यकारादी ष्ठिवुष्वष्कती, यकारस्तु लोपो व्योर्वलीति लुप्यते, ष्ठीवतीति, ष्ठिवुक्लम्वाचमां शितीति दीर्घत्वम् । अथास्य द्वितीयो वर्णा यदि ठकारः तेष्ठीयतइति न सिध्यति, अथ थकारः टेष्ठीयतइति न सिद्ध्यति उभयं चेष्यते, तत्राह । 'ष्ठीवतइत्यस्येत्यादि' । उभयथा ह्याचार्येण शिष्याः पाठिता इति भावः ॥

"णो नः" ॥ 'णमतीति'। णोपदेशस्तु निरणतीत्यादावुपसर्गादसमासेपि णोपदेशस्येति णत्वार्थं स्यात्। 'सुब्धातोरयमपि नेष्यतइति'। पूर्ववदेव सर्वे नादय इति प्रयोगे। "नृति[१] नन्दीत्यादि"। नृती गात्रविक्षेपे, टुनदि समृद्धौ, नर्द गर्द्द, शब्दे, नक्ष नाशने, नट अवस्यन्दने चुरादिः, नाथृ नाधृ याच्ञोपतापैश्वर्येषु ॥

"लोपो व्योर्वलि" ॥ 'धातोरिति प्रकृतमित्यादि'। एतद्वात्वादेः षः स इत्यत्र व्याख्यातम्। 'दिदिवानिति'। दिवेः क्वसौ रूपं, वस्वेकाजाद्घसामिति नियमादिडभावः, अत्र वक्तव्यमस्ति तद्वस्वेकाजाद्घसामित्यत्र वक्ष्यामः। ऊयी तन्तुसंताने, क्नुयी शब्दे। 'असेमाणमिति'। षिवु गतिशोषणयोः, औणादिको मनिन्, नञा समासः। ननु च सतः कार्यिणः कार्येण भवितव्यमिति पूर्वं कार्यिनिर्द्देशो युक्तः पश्चात्कार्यनिर्द्देशः, व्योर्वलि लोप इति, लाघवञ्च भवत्यर्द्धमात्रया, तत्किमर्थं पूर्वं लोपग्रहणं कृतमित्यत आह। 'पूर्वं लोपग्रहणमित्यादि'। पूर्वं लोपग्रहणेनायमर्थः सूच्यते, विध्यन्तरात्पूर्वमेवायं लोपो भवतीति, कण्डूयतेर्यलोपश्च प्राप्नोति वेरपृक्तलोपश्च, तत्रान्तरङ्गत्वात्पूर्वमपृक्तलोपेन भवितव्यम्। 'कण्डूयतेः क्विबिति'। कण्ड्वादिभ्यो यगित्यत्र भाष्ये नैतेभ्यः क्विब् दृश्यतइति, तस्मात्कण्डूमिच्छतीति क्यजन्तात्क्विब् द्रष्टव्यः, द्विविधा हि कण्ड्वादयो धातवः प्रातिपदिकानि च, तत्र धातुभ्यो यग्विधानात्प्रातिपदिकेभ्यः क्यजादयो भवन्त्येव, तत्र क्यजन्तात्क्विपि कृते अतो लोपश्च प्राप्नोति वेरपृक्तलोपश्च, तत्रान्तरङ्गत्वात्पूर्वमपृक्तलोपेन भाव्यम्, अथाप्यार्द्धधातुकइति विषयसप्तम्याश्रयणात्पूर्वमतो लोपः, पश्चात्क्विप्, एवमपि क्विलोपश्च प्राप्नोति वलोपश्च, तत्र परत्वान्नित्यत्वाच्च पूर्वमपृक्तलोपः स्यात्तस्मिंश्च सति निमित्ताभावादलाश्रये प्रत्ययलक्षणाभावात्स्थानिवद्भावाभावाच्च वलि लोपो न स्यात्पूर्वं लोपग्रहणाच्च भवति। अथात्र लोपस्य स्थानिवद्भावादुवङ् कस्मान्न भवति, उच्यते, क्यजन्ता-

---

२ मुद्रितमूलपुस्तके नृनन्दीति पाठः पदमञ्जर्यसंमतः।

त्क्विबित्युक्तं, ततः किं, स्थानिवद्भावेनापि कण्डूमात्रस्य धातुत्वाभावादुवङ् न भवति, यथादेशस्तर्हि प्राप्नोति, अस्तु यण्, तस्योठ् करिष्यते, न चोठापि कर्त्तव्ये स्थानिवद्भाव, आदिष्टादचः पूर्वत्वादुकारस्य, अत एव कण्डुवावित्यादावूडुवङादिषु कर्त्तव्येषु नास्त्यल्लोपस्य स्थानिवद्भावः, अथ व्रश्चको व्रश्चनमित्यादौ रेफे वलि परतो वकारस्य लोपः कस्माच्च भवति, तत्राह । 'व्रश्चादीनामित्यादि' । ननु वृश्चति वव्रश्चेत्यादौ संप्रसारणे कृते हलादिशेषे च वकारस्य श्रवणं यथा स्यादित्येतदुपदेशस्य प्रयोजनं स्यात्, नह्यत्र लोपः प्र[1]वर्तते, वल्परत्वाभावादित्यत आह । 'वृश्चति वव्रश्चेत्यादावपीत्यादि' । 'बहिरङ्गत्वादिति' । बहिरङ्गत्वं संप्रसारणस्य क्ङित्प्रत्ययापेक्षत्वात्, हलादिशेपस्य त्वभ्यासापेक्षत्वात्ततश्चाकृतयोरेव तयोर्वलोपः प्राप्त उपदेशसामर्थ्यादेव न भवति, अत्र भाष्ये वलोपः प्रत्याख्यातः, आसिमाणां जीरदानुरित्यत्र छान्दसो वर्णलोपः, क्वसावपि छान्दस एव, दिविप्रभृतीनां यङ्लुगन्तानां तसादिषूठा भवितव्यम्, तिप्सिपोरीड्भावपक्षेषूठा भवितव्यं, ये तत्र क्ङितीति नानुवर्त्तयन्ति देदिवीति देद्योति देदिवीषि देद्योषि, मिपि त्वनुनासिकत्वादेव भवति, देदिवीमि देद्योमि, ये त्वनुवर्त्तयन्ति तेषामपि छान्दसो यङ्लुगिति ॥

"वेरपृक्तस्य" ॥ 'क्विबादयो ह्यन्त्तइति' । ततोन्यस्य वेरपृक्तस्याभावात् । 'घृतस्पृगिति' । क्विन्प्रत्ययस्य कुः, अपृक्तग्रहणादुकारमात्रस्येदं ग्रहणम्, इकार उच्चारणार्थः ॥

"हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" ॥ दीर्घग्रहणं संभवव्यभिचाराभ्यां ङ्यापोरेव विशेषणं ङ्याब्ग्रहणं च सोर्विशेषणं, हलपृक्तग्रहणं च तिस्योः, सुतिसीति त्रीणि पदानि । 'तदिहेत्यादि' । प्रकृतस्य लोपशब्दस्य शास्त्रीयस्य भावसाधनस्य सुतिसीति प्रथमान्तेन संबन्धाभावादिति भावः । अपर आह । हल्ङ्याब्भ्य इति पञ्चम्या सुतिसीत्यादिकायाः प्रथमायाः षष्ठ्यां प्रकल्पितायां शास्त्रीयेपि लोपशब्दे न दोष इति । 'अभि[2]नो-

१ प्रसङ्ग इति २ । ३ । पु. पा. ।
२ अच्छिनोत्रेति २ पु. पाठः ।

त्रेति'। भि[1]देर्लङि सिलोपः, दश्चेति दकारस्य रुत्वं, तस्यातो रोप्लुतादप्लुतइत्युत्वम्, श्नमोकारेणाद्गुणः, एङः पदान्तादतीति पूर्वरूपम्। 'निष्कौशाम्बिरिति'। ननु च प्रत्ययग्रहणपरिभाषया तदादिग्रहणादेवात्र न भविष्यति, इहापि तर्हि न स्यात् परमकुमारी परमखट्वेति, स्त्रीप्रत्यये चानुपसर्जनेनेति तदादिनियमाभावाद्भविष्यति, निष्कौशाम्बिरित्यादौ उपसर्जन[2]त्वाद्भवत्येव तदादिनियमः, एवं तर्हि एतज्ज्ञापयति उपसर्जनेपि स्त्रीप्रत्यये तदादिनियमोत्र न भवतीति, तेनार्द्धं पिप्पल्या अर्द्धपिप्पलीत्यादावेकविभक्ति चेत्युपसर्जनत्वे सत्यपि लोपो भवति, नात्रोपसर्जनं पिप्पली, एकविभक्तावषष्ठ्यन्तमिति वचनात्, अत एव गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं न भवति, माभूच्छास्त्रीयमुपसर्जनमप्रधानं तावद्भवत्येव,[3]बह्व्यः श्रेयस्योस्य बहुश्रेयसीति, शास्त्रीयमप्युपसर्जनत्वमस्ति, ईयसश्चेति कपः प्रतिषेधः, ईयसो बहुव्रीहौ प्रतिषेधो वक्तव्यइति ह्रस्वाभावः, अपर आह। निष्कौशाम्बिरित्यादौ समुदायस्य ङ्याबन्तत्वेपि यदत्र ङ्याबन्तं कौशाम्ब्यादि, ततः परस्य सोर्लोपः प्राप्नोति. दीर्घग्रहणाद्व्यावर्त्ततइति, ननु च विहितविशेषणं विज्ञास्यते ङ्याबन्ताद्विहितस्येति, नैवं शक्यं, या सा केत्यादौ न स्यात्, नह्यत्र टाबन्तात्सुब्विहितः, माभूदेवं, हलन्ताद्विहित इत्येवं भविष्यति, यद्येवं यस्सः क इत्यत्रापि स्यात्, कर्त्ता हर्त्तेत्यादौ च न स्यात्, नह्यत्र हलन्तात्सुर्विहित इति, अतोऽन्यस्मादपि विहितस्य हल्ङ्याब्भ्योनन्तरस्य लोप इत्यास्थेयम्, एवं च निष्कौशाम्ब्यादावपि लोपः प्राप्तो दीर्घग्रहणेन व्यावर्त्तनीयः। 'तिपा[4] सहचरितस्येति'। तिपा[5] तिशब्देन साहचर्यात्सेरपि तिङ एव ग्रहणमित्यर्थः। 'अथ किमर्थमित्यादि'। ङ्यापोर्दीर्घात्सुरित्येव वक्तव्यमिति चोद्यार्थः। 'न लोपो न स्यादिति'। ननु च न ङिसंबुद्ध्योरिति ज्ञापकान्नलोपे कर्त्तव्ये

१ छिदेरिति २ पु· पा·।

२ स्त्रीप्रत्ययस्येति २ पु· अधिकम्। ३ पु· उपसर्जनस्त्रीप्रत्ययस्येति पाठः।

३ उभयमपि तत्र गृह्यतइति २ पु· अधिकम्।

४ तिङेति २। ३ पु· पा·। ५ तिङेति २। ३। पु· पा·।

संयोगान्तलोपः सिद्ध एव भविष्यति, न, पचन्नित्यादावपि प्रसङ्गात्, नकारसंबुद्ध्योरानन्तर्ये प्रतिषेधो विज्ञायमानस्तुल्यजातीये नकारविभक्त्यो- रानन्तर्यएव संयोगान्तलोपस्य सिद्धत्वं ज्ञापयति, पचन्नित्यादौ तु तकारेण व्यवहितत्वाद् ज्ञापकाभावाल्लोपाभाव इत्याशङ्क्य दोषान्तर- माह । 'उखास्रत् पर्णध्वदिति' । 'दत्वमिति' । न स्यादित्यनुषङ्गः, उखा- स्रस्–सुइति स्थिते संयोगान्तलोपमपवादत्वाद्बाधित्वा स्कोः संयोगाद्यो- रिति प्रकृतिसकारस्य लोपे श्रूयमाणः सकारो न वस्वादि संबन्धीति वसुस्रं- स्विति दत्वं न स्यात्, न च संयोगादिलोपं बाधित्वा पूर्वमेव प्रकृतिसका- रस्य दत्वं लभ्यते, अपदान्तत्वात्, नहि सौ श्रूयमाणे पूर्वस्य पदसंज्ञास्ति, असर्वनामस्थानइति प्रतिषेधात्, अथापि सावपि पदत्वमिति पक्षाश्रयेण स्यात्पदत्वम् एवमपि दत्वस्यासिद्धत्वात्पूर्वं संयोगादिलोप एव स्यात् । ननु च वस्वादीनां दत्वं सौ दीर्घत्वे सिद्धमिति वक्ष्यति, तत्र सौ दीर्घग्रहणं न करिष्यते वस्वादीनां दत्वमित्येव, ततश्च पूर्वमेव दत्वं भविष्यति, एवमपि राजा तक्षेत्यादौ सावपि पदत्वे सति संयोगान्तलो- पस्यासिद्धत्वात्पूर्वं नलोपे सति असंयोगान्तत्वात्सोर्लोपो न स्यात्, तस्मात्सुष्ठूक्तं दत्वं न स्यादिति । 'उत्वमिति' । न स्यादित्यनुषङ्गः । स एव हेतुः संयोगान्तलोपस्यासिद्धत्वादिति । एतच्च संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्य इत्येतदनाश्रित्योक्तं, तदा श्रयणे तु हरिवो मेदिनमित्यादिवत्सिद्धम् । 'रात्सस्येतिनियमाल्लोप एव न स्यादिति' । ननु रात्सस्येति द्वितकारकनिर्देशात्तकारस्यापि प्रश्लेषाद्रेफादुत्तरस्य च तकारस्यापि लोपो विधास्यते, यद्येवं कीर्त्त्यतेः क्विपि कीरिति स्यात् यथा न्यासे तु कीर्दिति भवति, तदेवं सिग्रहणमेकं न कर्त्तव्यमन्यत्सर्वं कर्त्तव्यमिति स्थितम् । 'संयोगान्तस्य लोपे हीत्यादि' । संग्रहश्लोकः, हिशब्दो हेतौ, नलोपादीत्यादिशब्देन दत्वोत्वयोर्ग्रहणं, ये तु संयोगा- न्तलोपवादिनस्तेषां रेफादुत्तरस्य तकारस्य अबिभर्भवानित्यत्र नैव लोपः स्यात्, तस्माद्धल उत्तरेषां सुतिसीनां लोपो विधीयते ॥

"एङ्ह्रस्वात्सम्बुद्धेः" ॥ अत्र यदि हल्ग्रहणं नानुवर्तेत तत-

एङ्ह्रस्वाभ्यां सम्बुद्धिरेव विशेषणीया, एङन्ताद्ध्रस्वान्ताच्च परस्याः सम्बुद्धेर्लोप इति, ततश्च हे कुण्डेत्यत्र न स्यात्, कथं कुण्डसु इति स्थिते लोपश्च प्राप्नोत्यम्भावश्च, तत्र लोपः शब्दान्तरप्राप्त्याऽनित्यः, स हि कृते ऽम्भावे आदेःपरस्येत्यमोकारस्य प्राप्नोति, अकृते तु सकारस्य, अम् भावस्तु लोपे कृते ऽत्यन्ताप्राप्त्या ऽनित्य इत्युभयोरनित्ययोः परत्वादम्भावे कृते ऽमि पूर्वश्च प्राप्नोति लोपश्च, तत्रामि पूर्वत्वे कृते व्यपवर्गाभावादुभयत आश्रयेन्तादिवद्भावाभावाच्च लोपो न प्राप्नोति, लोपे च कृते ऽमोभावादमि पूर्वत्वं न प्राप्नोतीत्युभयोरनित्ययोः परत्वादमि पूर्वत्वे कृते लोपो न स्यात्, तस्मादनुवर्त्यं हल्ग्रहणं, तदाह । 'हलिति चेति'। वर्त्ततइत्यपेक्षते । 'अपृक्तमिति नाधिक्रियतइति'। यद्यधिक्रियेत हे कुण्डेत्यत्र न स्यात्, अपृक्तसंज्ञाया अभावात्, कथं पुनर्ज्ञायते नायमधिक्रियतइति, तत्राह । 'तथा चेति'। अनुवर्तमानेपि हल्ग्रहणे यद्येङ्ह्रस्वाभ्यां सम्बुद्धिर्विशेष्येत, तया हल् विशेष्येत, एङन्ताद् ह्रस्वान्ताच्च परा या सम्बुद्धिस्तस्या हल्लुप्यते इति, ततः हे कुण्डेत्यत्र न स्यात् पूर्वोक्तादेव हेतोः, अत एङ्ह्रस्वाभ्यां सम्बुद्ध्या च हलेव विशेषणीय इति मत्वाह । 'एङन्तात्प्रातिपदिकादित्यादि'। सम्बुध्याक्षिप्तप्रातिपदिकमेङ्ह्रस्वाभ्यां विशेष्यतइति तदन्तविधिलाभः, अत्र पक्षे कुण्डेत्यत्रामि पूर्वत्वस्य पूर्वं प्रत्यन्तवद्भावाद्ध्रस्वान्तात्परो हल् भवति, वस्तुतश्च सम्बुद्धेरिति लोपः सिद्ध्यति । 'अच्छब्द इति'। एतच्च तत्रैव व्याख्यास्यते । 'ह्रस्वाभावादिति'। ननु चादडेवाकारो ह्रस्वस्ततः परो हल् भवति, सम्बुद्धेश्च सम्बन्धीति लोपः स्यादेव, सम्बुद्धौ तु विशेष्यमाणायां प्रकृत्यकारस्य लोपे ह्रस्वात्परा सम्बुद्धिर्न भवतीति लोपाप्रसङ्गः । उच्यते, सम्बुद्ध्याक्षिप्तं प्रातिपदिकमेङ्ह्रस्वाभ्यां विशेष्यतइत्युक्तं तेन कुण्डेत्यत्र च भविष्यति, एकादेशस्य पूर्वम्प्रत्यन्तवद्भावात् प्रकृतिग्रहणेन ग्रहणात्, हे कतरदित्यत्र च न भविष्यति, टिलोपे कृते प्रकृतेरह्रस्वान्तत्वात् । 'सम्बुद्धिगुणबलीयस्त्वादिति'। अन्यथा ऽग्निसु इति स्थिते संबुद्धिगुणश्च प्राप्नोति ह्रस्वादिति लोपश्च, तत्र नित्यत्वात्परत्वाच्च सम्बुद्धिगुणे

कृते ऽह्रस्वान्तत्वान्न भवेत् । ननु च विहितविशेषणं विज्ञास्यते ह्रस्वान्ताद्विहिता या सम्बुद्धिरिति, एवमपि हे खट्वेत्यत्र न स्यात्, माभूदनेनाबन्तत्वात्पूर्वेण भविष्यति, एवमपि हे न[1]दि हे य[2]वागु हे कुमारीत्यत्र न स्यात्, न चात्र ङ्यन्तत्वाल्लोपो लभ्यते, दीर्घग्रहणात्, एवं तर्ह्युभयं विज्ञास्यते विहितविशेषणं परविशेषणं च, तेनाग्ने कुमारीत्यादौ सर्वत्र भविष्यति, तत्र सकृच्छ्रुतस्य ह्रस्वग्रहणस्योभयविशेषणत्वमेव तावद् दुर्लभम्, अथापि लभ्येत एवमपि हे कतरदित्यत्र यद्यपि टिलोपे कृते संबुद्धेर्ह्रस्वपरत्वाभावस्तथापि ह्रस्वान्ताद्विहिता सम्बुद्धिरिति स्यादेव लोपस्तस्मादेङ्ग्रहणं कर्त्तव्यं, वयं तु ब्रूमो ये स्वभावत एङन्तास्तदर्थमप्येङ्ग्रहणं कर्तव्यमिति, तद्यथा हेशब्दमतिक्रान्तो ब्राह्मणोतिहेस्तस्य सम्बोधनं हे अतिहे, अनुकृतः पचतेशब्दो येन तस्य सम्बोधनं हेऽनुकृतपचते, विहित इरेप्रत्ययो येन स विहितेरेः पाणिनिस्तस्य सम्बोधनं हे विहितेरे इत्यादि । अत्र संग्रहश्लोकः ।

सम्बुद्धिर्ह्रस्वभेद्या यदि हि न च भवेच्चादिवचान्तवत्स्याद्
दोषोसौ हल्निवृत्तावपि लुपि भवतीम् पूर्वरूपे परत्वात् ॥
ह्रस्वान्ताल्लुब्विधिः स्याद्धल इति कतरद्धित्त्वतो नो हलो लुप्
ह्रस्वश्रुत्या न शक्यः परविहितविधिर्नातिहे ऽतोप्यकार्येङ् ॥
लोपनं लुप्, लोप इत्यर्थः ॥

"शेश्छन्दसि बहुलम्" ॥ 'या त्वेत्रेति' । शेर्लोपे कृते प्रत्ययलक्षणेन नपुंसकस्य झलच इति नुम्, सर्वनामस्थाने चेति दीर्घः, नलोपः, अयं योगः शक्यो ऽवक्तुं, कथं, डादेशेन सिद्धत्वात् कथमग्नेत्रीति त्रिइति स्थिते प्रथमयोः पूर्वसवर्णदीर्घत्वेनैव सिद्धं, न सिद्ध्यति, नुमा व्यवहितत्वा,च्छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः, मधोर्गृह्णातीत्येवमाद्यर्थं पुंवद्भावेनैव नुमो निवृत्तिः, एवमपि जसि चेति गुणः प्राप्नोति, वत्य-

१ लक्ष्मीति २ पु० पा० ।
२ वधु इति ३ पु० पा० ।

त्येतत्, जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधाया इति, अपि च या ह्येत्रा,ताता पिण्डानामिति तद्द्दति स्थिते सुपां सुलुगितीकार-स्याकारे कृते प्रथमयोः पूर्वसवर्ण इति दीर्घत्वेन सिद्धम् ॥

"ह्रस्वस्य पिति कृति तुक्" ॥ कृता धातुराक्षिप्यते, स च ह्रस्वेन विशेष्यते, तेन तदन्तविधिर्भवतीत्याह । 'ह्रस्वान्तस्य धातो-रिति' । 'अग्निचित् सोमसुदिति' । अग्नौ चेः, सोमे सुञ इति क्विप्. ग्राम-णिकुलमिति व्यस्तं चेन्नपुंसकह्रस्वत्वं, षष्ठीसमासे त्विको ह्रस्वो ऽङ्यो गालवस्येति ह्रस्वः, अत्र नपुंसकह्रस्वत्वमर्थापेक्षत्वाद्बहिरङ्गमितरदुत्तरप-दापेक्षत्वात्, यदि पुनरयं तुट् परादिः क्रियते, नैवं शक्यम्, इहाग्निचित्सो-मसुत्, वेरपृक्तस्येति वलोपो न प्राप्नोति, इह च परितनोतीति क्विप्, क्वौ च गमादीनामित्यनुनासिकलोपः, नहिवृतीत्यादिना दीर्घः । परीतत् तुट आर्द्धधातुकभक्तत्वादिट्प्रसंगः, इह चावच्छ्राद्यान्यस्य संयोगादिरित्येत्वं प्रसज्येत, अथाभक्तः स्याद् मधुच्छादयतीति तिङ्ङतिङ इति निघातो न प्राप्नोति, तकारेण व्यवधानात्, न च तकार एवातिङ्, अपदत्वात्, तस्मात्पूर्वान्त एव कर्त्तव्यः, यद्येवं नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिद्ध्यति, नपुंसकह्रस्वत्वम्, आराशष्कुलिच्छित्रं धानाशष्कु-लिच्छित्रम्। उपसर्जनह्रस्वत्वम्, निष्कौशाम्बिच्छत्रं, द्विगुस्व रः, पञ्चारत्नि-च्छत्रं, तुकि कृते ऽनन्त्यत्वादेते विधयो न प्राप्नुवन्ति, न वा बहिरङ्गल-क्षणत्वात्, बहिरङ्गस्तुक्,छकारसंनिपातापेक्षत्वात्, अन्तरङ्गा एते विधयः प्रागेव तत्संनिधानाद्भविष्यन्ति ॥

"संहितायाम्" ॥ 'संहितायामिति' । विषयसप्तमीयं, कार्यि-निमित्तयोः संहितायां विषयभूतायां वक्ष्यमाणं कार्यं भवतीत्यर्थः । वक्ष्यति इको यणचीति, अनन्तरन्तु विधिमतिक्रामतोभिप्रायो मृग्यः । 'दधि-अत्रेति' । ननु चेको यणचीत्यधिकरणसप्तम्येषा, तच्चाधिकरण-मौपश्लेषिकादन्यद्वर्णेषु न संभवति, तत्राप्युपश्लिष्टस्येको विधीयमानो यणवर्णान्तरव्यवाये कालव्यवाये च न भविष्यतीति नार्थः संहिताधि-कारेण, ज्ञापनार्थं तु, एतज्ज्ञापयति कालव्यवायो निर्दिष्टपरिभाषायां

नाश्रीयतइति, तेनोत्तरपदाधिकारेपि विधीयमानं कार्यमलुगादि काल-व्यवधानेपि भवत्येव । आखरेष्ट इत्याखरे स्यः, अग्नाविष्णू इत्यग्ना विष्णू इत्यादि ॥

"छे च" ॥ छकारेकार उच्चारणार्थः, विदिभिदिच्छिदेः, शाच्छो-रन्यतरस्यामित्यादि निर्देशात् । अधिकारे द्वौ पक्षौ, अर्थाधिकारः शब्दा-धिकार इति, तत्राद्ये पक्षे पूर्वसूत्रे कृतात्तिप्तस्य धातोर्ह्रस्वेन विशेषणा-त्तदन्तं ह्रस्वशब्देन प्रत्यायितमिति इहापि तदन्तस्यैव ग्रहणं स्यात्, शब्दाधिकारे तु ह्रस्वशब्द एवात्रानुवर्त्तते न पूर्वप्रकृतोर्थः, न चेह किञ्चि-द्विशेष्यमस्तीति तदन्तविध्यभावाद्ध्रस्व एवागमी भवति, तत्रेह द्वितीयः पक्ष आश्रित इत्याह । 'ह्रस्व एवात्रागमीति'। किमेवं सति सिद्धं भवति, तत्राह । 'तेनेति' । यदि तु ह्रस्वान्तस्य तुक् स्यात् तुको ऽभ्यासग्रहणेन ग्रहणाद्धलादिशेषेण निवृत्तिः स्यात्, ह्रस्वमात्रे त्वागमिनि नायमभ्यास-स्यावयवो हलिति न भवत्येव प्रसंगः । कथं पुनर्ह्रस्वआगमिनि तुगभ्या-सग्रहणेन न गृह्यतइत्यत आह । 'नावयवावयव इति' । इतिकरणो हेतौ, यद्यवयवावयवस्समुदायावयवो न भवति एवं तर्हि शेरतइत्यत्र रुडागमः सार्वधातुकावयवस्यादादेशस्यावयव इति सोपि सार्वधातुकस्य समुदायस्यावयवो न स्यात्, तत्र को दोषः, शीङः सार्वधातुके गुण इति गुणो न स्यात्, रुटाव्यवधानात्, स ह्यवयवभक्तस्तमेव न व्यवदध्यात् सार्वधातुकं तु व्यवदधात्येव, कुतश्चैष न्यायो ऽवयवावयवः समुदायाव-यवो न भवतीति, लोके तावद्देवदत्तावयवस्य हस्तस्यावयवोङ्गुलिर्देवद-त्तस्याप्यवयवो भवत्येव साङ्गुलिर्देवदत्त इति, तस्मादयमत्राभिप्रायः । छआङ्माङोश्चेत्येक एव योगः कर्त्तव्यः, चकारादनन्तरस्य प्राक्कृतस्य च, एवं सिद्धे यद्योगविभागं चकारञ्च करोति तस्यैतत्प्रयोजनं प्रकृतस्य तद-न्तस्य प्रहाणेन केवलं ह्रस्वमेवानुवर्त्तयिष्यामीति, यदि त्वागमस्तुक् समुदायस्यावयवः स्याद् एष यत्नोनर्थकः स्यादिति ॥

"आङ्माङोश्च" ॥ आङ्माङोर्ङिद्विशिष्टयोरुपादाने प्रयोजनमाह । 'आङो ङित इति' । अर्थविशेषसंपादनार्थं ङिद्विशिष्टयोरुपादानमित्यर्थः ।

'आच्छायाया इति'। आङ् मर्यादावचनइति कर्मप्रवचनीयसंज्ञा पञ्चम्यपाङ्परिभिरिति पञ्चमी। 'आच्छायमिति'। आङ् मर्यादाभिविध्योरित्यव्ययीभावः। 'माच्छिदददिति'। इरितो वेत्यङ्। 'आछाया आच्छायेति'। स्मरणे चात्राकारः, वाक्यस्मरणयोरङित्। 'प्रमेति'। प्रपूर्वान्माङ आतश्चोपसर्गइत्यङ्, अत्र धातोर्ङित्त्वेपि टाबन्तो न ङित्, गामादाग्रहणेष्वविशेष इति लाक्षणिकस्याप्यस्य ग्रहणस्य प्रसंगः, अत्रोभयत्रापि पदान्ताद्वेति विकल्प एव भवति॥

"दीर्घात्"॥ उभयनिर्द्देशे पञ्चमीनिर्द्देशो बलीयान्, अचरितार्थो च पञ्चमी तेन दीर्घादिति पञ्चम्या छइत्यस्याः सप्तम्याः षष्ठ्यां प्रकल्पितायां छकारस्यैव तुका भवितव्यमिति भ्रान्तिमपाकरोति। 'दीर्घात्परो य इत्यादि'। अनेन पञ्चम्या अन्वयो दर्शितः, प्रक्रमाभेदाय तु छकारस्य निमित्तत्वन्दीर्घस्य च कार्यित्वं दर्शयति। 'तस्मिन्पूर्वस्य तस्यैव दीर्घस्येति'। अत्र च लिङ्गं शाच्छा, विभाषासेनासुराच्छायेत्यादि निर्द्देशः, अवध्यवधिमद्भावस्य विवक्षितत्वादधिकरणमात्रस्य च विवक्षितत्वात्तस्मिन्पूर्वस्येति सप्तमी कृता। 'ह्रीच्छतीति'। ह्रीच्छ लज्जायां, म्लेच्छ अव्यक्ते शब्दे। 'अपचाच्छायतइति'। छो छेदने, यङ्, दीर्घोच्चितः॥

"पदान्ताद्वा"॥ प्रकृतेन दीर्घेण पदविशेषणादेव तदन्तविधौ सिद्धेऽन्तग्रहणं पदान्तविधिरयं तुग् यथा स्यात्पदविधिर्माभूदिति, तेन समर्थपरिभाषानुपस्थानात् तिष्ठतु कुमारीच्छत्रं हर देवदत्तस्येत्यत्रापि विकल्पो भवति॥

"इको यणचि"॥ 'इको यणादेशो भवतीति'। इकां यणां च साम्याद्यथासंख्यं भवति, आन्तर्यतो वा व्यवस्था। इक इति किम्। व्यञ्जनस्य माभूत्, वागत्र। कुत्वजश्त्वयोरसिद्धत्वाच्चकारस्य यकारः प्राप्नोति, यत्र च कुत्वादेरप्रसङ्गो ऽपदान्ते पचतीति तत्रापि प्रसङ्गः, नैष दोषः, दीर्घादिति वर्त्तते, तच्च तत्रैव पञ्चमीनिर्द्देशेपि स्थानिभूतमिहापि तथैवानुवर्त्तते, यदि दीर्घस्य यण् भवति कथं दध्यत्र मध्वत्रेति, ह्रस्वस्येत्ये-

तदप्यनुवर्त्तते, तदेवं ह्रस्वदीर्घयोर्यणविधानाच्च व्यञ्जनस्य प्रसङ्गः, प्लुतस्य च प्रकृतिभावेन भवितव्यं, चयनं चायक इत्यादावेचामयादयोऽपवादाः, ना प्राप्ते तस्मिंस्तदारम्भाद्, देवेन्द्रः खट्वौदनमित्यादौ गुणवृद्धी बाधिके भविष्यतः, यथा सत्यपीग्ग्रहणे दधीन्द्रादौ सवर्णदीर्घत्वम्। अतो नार्थ इग्ग्रहणेन, इदं तर्हि प्रयोजनमिको यणेवाचि यथा स्याद्यदन्यत्प्राप्नोति तन्माभूदिति, किञ्चान्यत् प्राप्नोति, शाकलं, न च तस्याप्यत्यन्तबाधः, आरम्भसामर्थ्यात्, एवं सति सिचित्यसमासयोः शाकलप्रतिषेध इति यत्पूर्वाचार्यैः स्मर्यते तदनेनेग्ग्रहणेन संपाद्यते। 'इकः प्लुतपूर्वस्येति'। प्लुतः पूर्वो यस्मात्स तथोक्तः प्लुतात्परस्येत्यर्थः। 'भो३ इ इन्द्रेति'। भो इ इन्द्र इति स्थिते भोशब्दस्य गीतिवशात् प्लुत, इकारः स्वरादिपाठान्निपातः प्रगृह्यसंज्ञकस्तस्य प्रकृतिभावे प्राप्ते यण्विधीयते, सवर्णदीर्घबाधनार्थमि-त्येतत्त्वाद्यप्राप्त्यभिप्रायेणोक्तम्। 'प्लुतपूर्वस्येति'। प्लुतग्रहणमपि मात्रि-कद्विमात्रिकव्यतिरिक्ताद्यपरिग्रहार्थं, तेन चतुर्मात्रादावपि भवति, तथा च छन्दोगा गायन्ति, सामन्येव चायमिष्यते, भोयिन्द्रं गायतीत्येतदपि सामगस्यानुकरणम्, एवं तावद्भाष्ये स्थितं, वृत्तावप्येवमेव द्रष्टव्यम्॥

"वान्तो यि प्रत्यये"॥ कस्य पुनरयं वान्तादेशः एच इति वर्त्तते, यद्येवमैदैतोरपि प्राप्नोति, चेयं जेयं, रैयतीति, एवं तर्हि वान्तग्रहणं न करिष्यते, एचोयवायाव इत्येव, इहापि तर्ह्ययादेशः प्राप्नोति, चेयं जेयमिति, क्षय्यजय्यौ शक्यार्थे, क्रय्यस्तदर्थेइत्येतन्नियमार्थं भविष्यति एचो यदि भवति क्षिज्योरेवेति, एवमपि रैयतीत्यत्रायादेशः प्राप्नोति, रैशब्दश्छान्दसः, दृष्टानुविधिश्छन्दसि, भाषायां तु रैशब्दप्रयोगो भाष्यविरोधादसाधुः, यद्येवं नियम आश्रयिष्यते ऽनैचस्य यदि भवति क्षिज्योरेवेति, ततः शक्यार्थ इति द्वितीयो योगः, क्षिज्योरपि शक्यार्थ एवेति, सिध्यति, सूत्रस्य तु को निर्वाहः। उच्यते। वान्तशब्दोयं सन्निहिते वान्ते वर्त्तते न यत्र कुत्र चित्, सन्निहितश्चौदौत्स्थानिकः पूर्वत्र, यथा संख्यसंबन्धात्, तत्र यथा यः कश्च न वान्तादेशो न भवति तथान्यस्था-निको न भविष्यति, विशिष्टस्यैव संनिधानात्। तदिदमुक्तम्। 'योयमेचः

स्यानइति' । 'बाभ्रव्यइति' । मधुबभ्र्वोर्ब्राह्मणकौशिकयोरिति यञ्‌, मण्डुशब्दो गर्गादिः, शङ्कुपिचुशब्दाभ्यां तदर्थं विकृतेः प्रकृतावित्यत्रार्थे उगवादिभ्यो यत्, नावा तार्यं नाव्यं, नौवयोधर्मेत्यादिना यत् । 'अध्वपरिमाणे चेति' । भाषार्थमिदं, गव्यूतिः क्रोशयुगम् ॥

"धातोस्तन्निमित्तस्यैव" ॥ 'धातोरिति किमिति' । न तावदविशेषेण नियमप्रसङ्गो यि प्रत्यये यदि भवति तन्निमित्तस्यैवेति, एवं हि वान्तो यि प्रत्यये तन्निमित्तस्येति विशिष्टविधिराश्रयणीयः, योगविभाग एवकारो नियम इति सर्वमेतदनर्थकमापद्येत, तस्मादसत्यपि धातुग्रहणे विशिष्टविषयो नियमो भविष्यतीति प्रश्नः । स तु विशिष्टो विषयः प्रातिपदिकमपि संभाव्येतेत्युत्तरम् । 'बाभ्रव्य इत्यत्रैव स्यादिति' । एचस्तन्निमित्तत्वात् । 'अत्र न स्यादिति' । विपर्ययात् । 'उपोयतइति' । वेञः कर्मणि लट्, आत्मनेपदं, यक्, यजादित्वात्संप्रसारणम्, अकृत्सार्वधातुकयोरिति दीर्घः, आद्गुणस्तस्य परं प्रत्यादिवद्भावाद्धातुग्रहणेन ग्रहणम् । 'औयतेति' । कर्मण्येव लङ्, । 'लौयमानिरिति' । अत इञ्, आदिवृद्धिः, ननु चात्र गुणः पदद्वयापेक्षत्वाद्बहिरङ्गो वृद्धिरपि बाह्यतद्धितापेक्षत्वाद्बहिरङ्गैव, सत्यम् । औयतेत्यत्रैतदुभयं नास्ति तदर्थमवश्यं योग आरब्धव्यः, आरब्धेनैनैव सिद्धत्वादुपोयतइत्यादिकं प्रत्युदाहृतम् । 'एवकारकरणं किमिति' । सिद्धे सत्यारम्भो नियमार्थत्वे हेतुर्न त्वेवकारकरणमपीति प्रश्नः । इष्टतोवधारणार्थ इत्युत्तरम् ॥

"तय्यजय्यौ शक्यार्थे" ॥ उदाहरणे शक्यार्थे कृत्यः, प्रत्युदाहरणे त्वावश्यके ॥

"क्रय्यस्तदर्थे" ॥ क्रय्य इत्यत्र प्रत्ययार्थश्च कर्म विद्यते, कर्मणि कृत्यविधानात्, प्रकृत्यर्थश्च द्रव्यविनिमयः, तत्र प्रत्ययार्थः प्रधानं, प्रकृत्यर्थस्तूपसर्जनं, तत्र यदि प्राधान्यात्तदित्यनेन प्रत्ययार्थः परामृश्येत तदयुक्तं, तथाहि । यदि स एवार्थस्तदर्थ इति तत्पुरुष आश्रीयते तदाव-

१ मुद्रितमूलपुस्तकेइह इति पाठः ।

श्यमेव क्रय्यशब्दस्य तस्मिन्नर्थे वृत्तेर्नार्थस्तदर्थग्रहणेन, अथ सोर्थो यस्य तदर्थः शब्दस्तस्मिन्नभिधेयइत्यर्थः, तदप्ययुक्तं, शब्दे शब्दस्य वृत्त्यसंभवात्, अतो गुणीभूतोपि प्रकृत्यर्थ एव निर्दिश्यतइति दर्शयति । 'तदर्थं क्रयार्थं यत्तस्मिन्वाभिधेयइति' । 'क्रयार्थं यः प्रसारित इति' । क्रेतारः क्रीणीयुरिति बुद्ध्यापणे यद्द्रव्यस्थापितमित्यर्थः । 'क्रेयमिति' । मूल्येनोपादेयमित्यर्थः । 'न चेहास्ति क्रय्यमिति' । आपणे विक्रयाय प्रसारितं धान्यं नास्तीत्यर्थः । के चित्तु क्रय्यशब्दे क्रीणातिर्विक्रये वर्त्ततइत्याहुः । तेनापणे विक्रयाय प्रसारितं द्रव्यं क्रय्यमित्युच्यते ॥

"भय्यप्रवय्ये चच्छन्दसि ॥ 'वीत्येतस्येति' । वीगत्यादिषु, अजेर्व्यघञपोरिति वा । 'हृदय्या इति' । आकारस्यायादेशः ॥

"एकः पूर्व्वपरयोः" ॥ वक्ष्यमाणप्रकरणे पौर्व्वापर्येणावस्थितौ निर्दिश्येते आदचि आदेचीत्यादि, तयोः पूर्वपरयोः स्थाने वक्ष्यमाणो गुणादिरेकादेशो भवतीति सूत्रार्थः, अथ पूर्वपरयोरिति किमर्थं, स्थानिनिर्द्देशार्थं,मसति हि तस्मिन्नाद्गुण इत्यादौ स्थानिनिर्द्देशाभावात्कस्य गुणादिरादेशः स्यात्, नैतदस्ति प्रयोजनम् । आदित्यादिका पञ्चमी अचीत्यादिकायाः सप्तम्याः षष्ठीं प्रकल्पयिष्यति, सा च तस्यास्तेन तयोरेव पूर्वपरयोर्गुणो भविष्यतीति नार्थ एतेन, तदाह । 'पूर्वपरग्रहणमित्यादि' । 'द्वयोरादेशप्रतिपत्त्य[1]र्थम्' । युगपदादेशप्रतिपत्त्यर्थमित्यर्थः । असति तु तस्मिन्कस्य स्यादित्यत आह । 'एकस्यैव स्यादिति' । ननु द्वयोरपि षष्ठीप्रक्लृप्तिरुक्ता तत्राह । 'नोभे सप्तमीपञ्चम्याविति' । नोभे प्रकल्पिके भवतो युगपन्न प्रकल्पिके भवत इत्यर्थः, इतिकरणो हेतौ, तत्राद्गुण इत्यत्राचीत्येषा सप्तमी यणादिविधौ चरितार्था, आदित्येषा तु पञ्चमी न क्व चिच्चरितार्था, ततश्च सैव सप्तम्याः षष्ठीं प्रकल्पयिष्यति इत्यच एव स्थाने गुणः स्याद्वृद्धिरेचीत्यत्र तु गुणविधौ पञ्चमी कृतार्थेति तस्या एचीति सप्तम्यकृतार्था षष्ठीं प्रकल्पयेदित्यवर्णस्यैव वृद्धिः स्यात्, उपसर्गादृति धातावित्यादौ द्वयोरप्यकृतार्थत्वेपि पर्यायेण परस्परषष्ठीप्रक्लृप्तिः स्याच्च

[1] मुद्रितमूलपुस्तके युगपदित्यधिकम् ।

युगपत्कार्यत्वं निमित्तत्वं च, द्वयोर्युगपद्विरोधात्, ततश्च कार्यमपि पर्यायेण स्यात्, तस्मात्पूर्वपरयोरिति वक्तव्यं, न वक्तव्यमेकग्रहणसामर्थ्याद-न्तादिवच्चेति वचनाच्च पूर्वपरयोर्द्वयोरेवादेशो भविष्यति नान्यतरस्य, सत्यम्। सुखप्रतिपत्त्यर्थं तु पूर्वपरयोरित्युक्तमन्यथा युगपत् षष्ठीप्रकल्पन-द्वारेण विवक्षितप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात्, अथ किमर्थमेकग्रहणं प्रथमनिर्दिष्टमतिक्रम्य चरमनिर्दिष्टस्य पूर्वपरयोरित्यस्य प्राक् प्रयोजन-मुक्तं, पाठक्रमादर्थक्रमस्य बलीयस्त्वात्, कथं, सतः कार्यिणः कार्येण भवितव्यं, कार्यस्य च गुणादेर्विशेषणमेकग्रहणम्। ननु चाद्गुण इत्यादा-वेकस्यैवादेशस्य सूत्रे उपादानं, संख्याया विवक्षितत्वादुपात्तसंख्यात्यागे कारणाभावात्ततश्चैक एव गुणादिरादेशो भविष्यति। स्यादेतत्। आदेशस्य विधेयतया प्राधान्यात्प्रधाने च ग्रहं संमार्ष्टीत्यादौ संख्याया अविवक्षित-त्वादनेकादेशप्रसंग इति, तदसत्। ग्रहं शेषितयोद्दिश्य संमार्गो हि विधीयते, शास्त्रान्तरे च विहितं शेषित्वमुपगच्छति, शास्त्रान्तरे च विज्ञाता ग्रहाः संख्यान्तरान्विताः, तत्रैकत्वविवक्षायां वाक्यभेदः प्रसज्येतेति कृत्वा ग्रहैकत्वमविवक्षितमुच्यते, नैवं गुणादिरादेश इत्येकत्वं विवक्षितं, प्राजापत्या नव ग्रहा इति शास्त्रान्तरविहितनवग्रहोद्देशेन संस्कारः संमार्गो विधीयते, तत्र श्रुतमप्येकत्वं नोद्देश्यकोटौ निवेशयितुं शक्यते, तत्र संख्यान्तरान्विततया विहितत्वात्, ततश्च तद्विवक्षायां तदपि विधेयं स्यात्ततश्च वाक्यभेदप्रसङ्गः, वचनव्यक्तिभेदाद् यो ग्रहस्तं संमार्ष्टि तं चैकमिति, इह तु विधेयतया गुणादेः प्राधान्येपि विशिष्ट-विधिसंभवाद् न वाक्यभेदप्रसंगः, अविवक्षाकारणाभावाद्विवक्षितमेकत्वं लोकवत्, तद्यथा लोकेनयोर्मृत्पिण्डयोर्घटं कुर्विति, न चोच्यते एकमिति, एकमेव चासौ करोति, न चाथप्रकरणादिना तत्रैकस्य करणं, तदभावेपि दर्शनात्तस्मानार्थ एकग्रहणेन, तत्राह। 'एकग्रहणं पृथगादेशनिवृत्त्यर्थ-मिति'। यथा पुनः पृथगादेशप्रसङ्गस्तथा दर्शयति। 'स्थानिभेदादिति'। पूर्वपरयोरिति निर्देशात्स्थानिभेदः प्रतीयते, ततश्च तद्वशादादेशेपि श्रुतमप्येकत्वमविवक्षितं स्यादित्यनेकादेशप्रसङ्ग इत्यर्थः। अवश्यं चैतदे-

वमभ्युपगन्तव्यमिति दृष्टान्तेन दर्शयति । 'भिन्नादिषु नत्ववदिति' । यथा रदाभ्यां निष्ठा तो नः पूर्वस्य च द इति नत्वमेकत्वाविवक्षया प्रतिस्थानि भवति तद्वदत्रापीत्यर्थः । भाष्ये त्वेकग्रहणं प्रत्याख्यातं, न तावद्गुणभूतस्यान्यनुरोधेन प्रधानस्यादेशस्य भेदकल्पना युक्ता प्रधानानुरोधी हि गुणो भवति न पुनर्गुणानुरोधी प्रधानं, यच्चोक्तं भिन्नादिषु नत्ववदिति, तत्र न खलु नत्वविधावेकत्वस्याविवक्षिततया द्वौ नकारौ भवतः, किं तर्हि पूर्वस्य चेति चकाराद्वाक्यभेदोऽवगम्यते, तत्र पूर्वेण निष्ठातो नत्वं, परेण धातुदकारस्य, इह चोभौ साभ्यासस्येति प्राणिणिषतीत्युपसर्गादनन्तरस्य नकारस्य 'अनिते' रित्येव णत्वे सिद्धे साभ्यासस्येत्येतावतैव द्वयोर्नकारयोर्णत्वं सिद्धमिति स्थानिनिर्देशार्थमुभौग्रहणं न कर्तव्यमुभौ नकारौ णत्वमापद्येते इति, तस्मादादेशार्थमुभौ ग्रहणं विज्ञायते साभ्यासस्यानितेर्यौ नकारौ द्वौ तयोरुभौ णौ भवत इति, तेनात्रापि नैकत्वस्याविवक्षितत्वाद् द्वयोर्द्वौ भवतः किन्तूभौग्रहणादिति न कश्चिद्दोषः । इह श्रुतिस्मृतिविहितं कर्म किञ्चित्सकृदनुष्ठीयते, यथोपनयनमाधानमाचमनमिति, नह्युपनीतः पुनरुपनीयते, नाप्यग्न्या[1]हितः पुनराग्नीनाधत्ते । नाप्याचान्तः पुनराचामति असति निमित्ते, किञ्चिदसकृद्यथा । ज्योतिष्टोमादयः, यथा पूर्ववया ब्राह्मणः प्रत्युत्थेय इति योयो वृद्धवयास्तस्य तस्यागमनं प्रत्युत्थीयते, ब्राह्मणो न हन्तव्यः, सुरा न पेयेति प्रतिव्यक्तिनिषेधोनुष्ठीयते, न पुनरेकं ब्राह्मणमहत्वैकाञ्च सुरामपीत्वान्यत्र कामचारः, व्याकरणं च स्मृतिस्तदिहाद्गुण इत्यनया स्मृत्या गुणः कर्त्तव्य इति चोदिते यदि सकृदनुष्ठानं खट्वेन्द्र इत्येकस्यां व्यक्तौ गुणे कृते कृतः शास्त्रार्थ इति कृत्वा मालेन्द्र इत्यादिषु न क्रियेत, तस्मात्प्रत्युत्थानादिवदावर्त्तते, किम्पुनरत्र निबन्धनं किञ्चित्सकृत्क्रियते किञ्चित्पुनःपुनरिति, उपनयनं तावन्माणवकस्य संस्कारः, सकृच्चासौ संस्कृतोऽध्ययनादिषु योग्यो भवति, आधानमप्यग्निसंस्कारार्थं, संपन्नेष्वग्निषु

---

१ अन्वाहितः पुनराधीयते, नाप्याचान्तः पुनरसति निमित्ते आचामतीति ३ पु० पा० ।

प्रयोजनाभावात्पुनर्न क्रियते, आचमनमपि शौचार्थमिति असति निमित्ते पुनर्न क्रियते, ज्योतिष्टोमादयस्तु नित्याश्चेत्प्रत्यवायपरिहाराय वसन्ते क्रियन्ते, अथ काम्या अमुष्मिन् लोकएनमप्सरसो जाया भूत्वोपशेरतइति, ततस्तमभ्युदयं भूयोभूयः परीप्सुभिः पुनःपुनरनुष्ठीयन्ते, पूर्ववयोब्राह्मणप्रत्युत्थानाकरणे दोषः, करणे चाभ्युदयो दर्शितः ॥

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविरआयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥

इति। तच्च प्रत्यागमनमविशिष्टम्, अतो दोषनिर्हाणार्थं पुनःपुनरनुष्ठीयन्ते, नैमित्तिकत्वाद्वा प्रतिनिमित्तमावृत्तिः, तथा ब्राह्मणवधे च सुरापाने च दोष उक्तः, स ब्राह्मणमात्रे सुरामात्रे च भवति, ततो दोषवन्तो मा भूमेति सर्वत्रैवानुष्ठीयते, इह शब्दस्य ज्ञाने प्रयोगे चाभ्युदयो दर्शितः, एकः शब्दः सम्यग् ज्ञातः [1]सुप्रयुक्तः स्वर्गे लोके कामधुग् भवतीति प्रत्यवायश्च याज्ञे कर्मण्यपशब्दप्रयोगे दर्शितः। ते सुरा हे लय इति, आहिताग्निरपशब्दं प्रयुज्येति च, अत एव तदपि गुणादिकं पुनःपुनरनुष्ठीयते, तदेवं नित्यत्वं नैमित्तिकत्वं काम्यत्वं भूयोभूयोनुष्ठाननिबन्धनमेतच्च सर्वशास्त्रसाधारणमपि वार्तिककारेण प्रोक्तं भाष्यकारेणोपपादितमित्यस्माभिरप्यत्रैव प्रत्यपादि ॥

"अन्तादिवच्च" ॥ अन्तादिशब्दयोरवयवविशेषवाचित्वादवयविविशेषापेतायां पूर्वपरयोरित्यनुवृत्तेस्तस्य च वक्ष्यमाणगुणाद्यादेशविशेषणत्वादेकादेश इति लभ्यते, तदिदमुक्तम्। 'एकः[2] पूर्वपरयोरिति वर्त्ततइत्यादि'। कः पुनरत्रातिदेशार्थः, किं यात्रैकादेशस्य स्थानिनौ पूर्वपरौ तयोरन्तादिवद्भवति, किं वा ऽकृतएकादेशे तमेवैकादेशमपेक्ष्य यौ पूर्वपरौ समुदायौ तयोरन्तादिवद्भवतीति, यदि वैकादेशस्य स्थानिनौ पूर्वपरौ वर्णौ तयोः समुदाययोरन्तादी तयोरेकादेशोप्यन्तादिवद्भवतीति,

१ सुष्ठु इति ३ पु॰ पा॰।
२ मुद्रितमूलपुस्तके 'एक इति वर्तते, पूर्वपरयोरिति चेति' पाठः।

तत्राद्यपक्षस्तावन्न संभवति, एकादेशेन पूर्वपरयोस्तत्स्थानिनोर्निवर्त्तितत्वात्, कथमसतोः पूर्वपरयोरन्तादिवत्स्यात्, द्वितीये पक्षे वृक्षावित्यत्र वृक्षऔ इतिस्थिते सुबलुपोरेकादेशः सुबपेक्षस्य कस्य चित्परस्याभावात्पराद्विवच्च स्यात्, अतस्तृतीयः पक्ष आश्रीयते। नन्वयमपि पक्षो न संभवत्येव। तथाहि। ब्रह्मबन्धूरित्यत्र ब्रह्मबन्धुऊ इति स्थिते पूर्वोवर्णो उकारो यस्यान्तो ब्रह्मबन्धुशब्दस्य स एकादेशे नास्त्येवोकारस्य निवर्त्तितत्वात्, यश्चास्ति धकारान्तो न तस्यान्त एकादेशस्य स्थानी उकारः, अनारम्भकत्वात्, एवन्तर्हि यद्व्यपदेशयुक्तस्य स्थानिनौ पूर्वपरावन्तादी तद्व्यपदेशयुक्तस्यैकादेशोप्यन्तादिवदित्यर्थः। एतदुक्तं भवति,एकादेशात्प्राक् पूर्वपरयोः पृथगवस्थितयोस्ताभ्यां सह यो व्यपदेशः पूर्वपरसमुदायविषयो दृष्टः प्रातिपदिकमिति वा सुबन्तमिति वा स व्यपदेश एकादेशे कृतेपि भवतीति, तदिदमुक्तम्। 'यथा तस्यान्त आदिर्वा तदन्तर्भूत इत्यादि'। तस्येत्यनेन एकादेशात्प्रागवस्थितः पूर्वः परश्च समुदायो निर्दिश्यते, अन्तादिशब्दाभ्यां च एकादेशस्य स्थानिनौ पूर्वपरौ, तद्ग्रहणेन गृह्यत इत्यनेनापि तदुक्तं भवतीत्याख्यानन्तरं यदुक्तमस्माभिस्तद्दर्शितम्। 'एषोतिदेशार्थ इति'। अतिदिश्यतइत्यतिदेशः, अतिदेशश्चासावर्थश्चेत्यतिदेशार्थः, कर्मधारयोऽयमर्थोत्रातिदिश्यतइत्यर्थः। 'वर्णाश्रयविधावित्यादि'। वर्णस्वरूपमाश्रित्य यद्विधीयते न तदन्तादिवद्भावेनातिदिश्यतइत्यर्थः। तत्कथं नात्र ताद्रूप्यनिबन्धनं कार्यमतिदिश्यते, योयमन्त आदिर्वा प्रागेकादेशादवस्थितः पूर्वः परश्च तद्दुद्वयमेकादेशो भवति। 'तत्प्रयुक्तं कार्यं लभतइति'। एवं च तद्वत्स्येत्येव वक्तव्यं स्यात्, तच्छब्देन पूर्वापरौ परामृश्येते, एवं हि सिद्धन्तादिवदितिवचनादन्तादित्वप्रयुक्तं कार्यमेकादेशस्य भवतु पूर्वपरस्वरूपप्रयुक्तं तु कार्यं केन भवेत्, लिङ्गं चात्र भवति तुक्यसिद्धवचन,मन्यथाधीत्येत्यादावेकादेशस्यादिवद्भावादेव तुकः सिद्धत्वादनर्थकं तत्स्यात्। 'खट्वाभिरिति'। तपरकरणन्तु यत्रैकादेशो नास्ति तदर्थं स्यात्, शुभंयाभिरिति। 'जुहावेति'। अभ्यस्तस्य चेति ह्वयतेः संप्रसारणे कृते जुहु—आइति. यत्पूर्वरूपत्वमाकारस्य

तत्वादिवद्भवति योयमादिराकारस्तद्वच्च भवति, तेन आत औ णल इति न भवति। 'अस्यै अश्वइति'। स्याटो विभक्त्येकारस्य योयं वृद्धिरेचीति वृद्धिरेकादेशः स परस्यादिवच्च भवति, तेनैङः पदान्तादतीति न भवति, यत्र च युगपदुभयमाश्रीयते अन्तश्चादिश्च तत्राप्यन्तादिवद्भावो न भवति, यथैतेर्लिङीति ह्रस्वत्वमुपसर्गात्परस्येणो विधीयमानमभीयात्परीयादित्यादौ न भवति, यदि ह्ययमेकादेशः पूर्वं प्रत्यन्तवद् बुद्ध्या गृह्येत स तदानीमेव कथं परं प्रत्यादिवत्स्यात्, एवं परं प्रत्यादिवत्त्वे तदानीमेव पूर्वं प्रत्यन्तवद्भावोप्यनुपपन्नः, एकस्योभयापेक्षया युगपत्पारतन्त्र्यस्य विरोधात्। 'पूर्वापरेति'। यो येन निवर्त्यते स तस्य स्थानी यथा भुवो ऽस्तिः, समुदायश्चात्र निवर्त्यते ततश्च तत्प्रयुक्तमेव कार्यं स्थानिवद्भावात्स्याद् यदि किञ्चिदस्ति न तु प्रत्येकं पूर्वपरयुक्तम्। स्यादेतदवयवयोरपि निवर्त्यमानत्वात्तयोरपि स्थानित्वमित्यत आह। 'तत्रेति'। इतिकरणद्वयमपि हेतौ, तत्र समुदाये स्थानिन्यवयवयोर्यत्स्थानित्वं तदानुमानिकमवयवनिवृत्तिमन्तरेणावयविनो निवर्त्तयितुमशक्यत्वादवयवयोर्निवृत्तिः, न त्वादिष्टत्वादित्यर्थः। ततश्च तदाश्रयं कार्यं स्थानिवद्भावान्न प्राप्नोति, साक्षाच्छ्रुतस्यैव च स्थानिनस्तत्राश्रयणात्, इष्यते च तदर्थमन्तादिवद्भावो विधीयते। ननु विपरीतमिदम्, अवयवयोरानुमानिकं स्थानित्वमिति, पूर्वपरयोरिति द्विवचननिर्द्देशात् तयोरेव स्थानित्वं श्रुतं न समुदायस्य शब्दोस्ति, द्वयोस्तु निवर्तमानयोरर्थात्समुदायोनिवर्तत इत्येतावत्, तथा च पूर्वसूत्रे स्थानिभेदाद्द्वित्वादिषु नत्ववदित्युक्तम्। तच्चान्यत्रापि उक्तम्, यो ह्युभयस्थाने भवति लभते सो ऽन्यतरव्यपदेशम्, तेन खट्वर्श्य इत्यत्ररपरत्वं भवत्यकारस्यापि स्थानित्वादिति। भवतु वा स्थानित्वमवयवयोरानुमानिकं, तथापि सिद्धः स्थानिवद्भावः, कथं, स्थानिवदादेश इत्यत्र स्थानिशब्दस्य संबन्धिशब्दत्वादेवादेशपरिग्रहे सिद्धे आदेशग्रहणमानुमानिकस्याप्यादेशस्य स्थानिवद्भावार्थं, ततश्च स्थान्यप्यानुमानिक आश्रितः, यथा एङः, पचत्वित्यत्र, अत्र हि इकारेणेकारान्तःस्थान्यनुमीयते उकारेणाप्युकारान्त आदेशः, तस्य स्थानिवद्भावात्तिङन्तं पदमिति पदसंज्ञा भवत्येवमप्यत्रावयवयोरनु-

मानिके स्थानित्वे सिद्धः स्थानिवद्भावः,एवं तर्ह्यनल्विधौ स्थानिवद्भाव उक्तः, अल्विध्यर्थमिदं, यथा क्षीरपेण सुरापेणोत्तरपदविभक्त्योरेकादेशस्यान्तवद्भावा 'दैकाजुत्तरपदे णः' इति णत्वमल्विधिरपि भवति, ननु चानल्विधाविति प्रतिषेधः स्थान्यलाश्रयेष्वेव कार्येषु, अस्य त्वेकादेशस्योत्तरपदं प्रत्यवयवत्वमेव स्थानिवत्त्वेन प्रार्थनीयमच्त्वं तु स्वत एव सिद्धं, ततश्च यथा ऽरुदितामित्यत्र स्वाश्रयं वलादित्वं स्थानिवद्भावकृतं च सार्वधातुकत्वमाश्रित्य 'रुदादिभ्यः सार्वधातुके' इतीड् भवति, तद्वदिहापि स्थानिवद्भावकृतमुत्तरपदावयवत्वं स्वाश्रयं चाच्त्वमाश्रित्य णत्वं भवति, यत्तु स्थान्यल्स्वरूपनिबन्धनं तत्रेष्यतएव यथा खट्वाभिरित्यादावैस्भावादि, तस्माच्चिन्त्यमस्य प्रयोजनम् ॥

"षत्वतुकोरसिद्धः" ॥ 'षत्वे तुकि चेति'। षत्वशास्त्रे तुक्शास्त्रे चेत्यर्थः। 'एकादेश इति'। एकादेशशास्त्रं 'माद्गुणः' इत्यादीत्यर्थः। 'असिद्धो भवतीति'। सिद्धो निष्पन्नस्ततो ऽन्यो ऽसिद्धः, तत्र शास्त्रस्वरूपं तावन्निष्पन्नमिति परत्र परशब्दप्रयोगादिवार्थो ऽवगम्यते, तत्कार्यकरणाच्च सादृश्यं तदाह। 'सिद्धकार्याणि न करोतीत्यर्थ इति'। षत्वतुक्शास्त्रसन्निधावेकादेशशास्त्रं स्वकार्यमेकादेशाख्यं कार्य्यं न करोति न प्रवर्त्तयति न प्रतिपादयतीत्यर्थः। सूत्रस्य प्रयोजनमाह। 'असिद्धवचनमिति'। आदेशे कृते यत्कार्यं तद्धेतुकं प्राप्नोति तदादेशलक्षणम्, आदेशो लक्षणन्निमित्तमस्येति कृत्वा, तस्य प्रतिषेधार्थमसिद्धवचनम्, उत्सर्गः स्थानी, सामान्योत्सृष्टत्वात्स लक्षणं यस्य तदुत्सर्गलक्षणन्तस्य भावः प्रवृत्तिर्यथा स्यादित्येवमर्थं चासिद्धवचनम्। 'कोसिचदिति'। 'लिपिसिचिह्वश्चे' ति च्लेरङ्, कशब्दात्सोरुत्वम्, 'अतो रोरप्लुतादप्लुते' इत्युत्वम्, गुणः। 'एङः पदान्तादतीति'। 'परम्प्रत्यादिवद्भावादिति'। आदिवद्भावे हि ओसिचदित्येतदन्तं पदं, ततः सकारः पदादिर्न भवतीति सात्पदाद्योरिति निषेधाभावादेकादेशमोकारमिणमाश्रित्य षत्वं प्राप्नोति तदसिद्धत्वान्न भवति, असिद्धत्वे हि षत्वशास्त्रं प्रत्येकादेशशास्त्रस्याप्रतिपादकत्वात्को असिचदित्येवमवस्थितमपदरूपमभवति, तत्राकारेण व्यवधानात्षत्वाभावः। 'कोस्येति'।

इदम: षष्ठ्येकवचनम्, त्यदाद्यत्वम्, 'टाङसिङसामिनात्स्या' इति स्यादेशः, हलि लोपः, शेषम्पूर्ववत्, एवमादेशलक्षणप्रतिषेधस्योदाहरणानि दर्शितानि, इतरस्य दर्शयति। 'अधीत्य प्रेत्येति'। 'एकादेशस्यासिद्धत्वादित्यादि'। असिद्धत्वे हि तुक्शास्त्रसंविधावधिइयेत्येव स्थितं पदरूपं भवति, ततश्च ह्रस्वाश्रयस्तुक् प्रवर्त्तते, यदि तु मुख्यस्यैकादेशस्यैव कार्यस्यासिद्धत्वमुच्यते तदा षत्वे नास्ति दोषः, कथमोकारस्तावत्स्वकार्यं षत्वं न करोति, यो तु ततः पूर्वौ ककारयकारौ तदाश्रयमपि षत्वं न भवति, तेनैवोकारेण व्यवधानात्, तुकि नेष्टसिद्धिः, कथमेकादेशेन ह्रस्वस्य निर्वर्तितत्वात्। न चैकादेशः स्वकार्यंच करोति, अनेन स्थानिनः प्रत्यावृत्तिः शक्या, तस्मात्तुकि शास्त्रासिद्धत्वमेवाश्रयणीयम्, आह च स्थानिवद्वचनानर्थक्यञ्च शास्त्रासिद्धत्वादिति। 'सम्प्रसारणङीट्स्विति'। सम्प्रसारणे ङौ इटि च य एकादेशस्तस्यासिद्धत्वप्रतिषेधो वक्तव्यः। 'शक्रहूष्विति'। शक्रान् ह्वयतीति यजादित्वात्सम्प्रसारणम्पूर्वत्वं, क्विप्, 'हल' इति दीर्घः। 'परिवीष्विति'। व्येञःपरिपूर्वात् क्विबादि पूर्ववत्। 'असिद्धत्वात्षत्वन्न प्राप्नोतीति'। पूर्वरूपस्यासिद्धत्वे हि शक्रहुआ इत्येवमवस्थितं पदरूपम्भवति। 'वृक्षेक्षत्रमिति'। 'अपचेक्षत्रमिति'। पचेर्लङ्, उत्तमैकवचनमिट्, शप्। 'आद्गुणस्यासिद्धत्वादिति'। असिद्धत्वे हि तस्य वृक्षइच्छत्रम् अपचइच्छत्रमित्येवमवस्थितं पदरूपम्भवति, अत्र सम्प्रसारणे तावत्प्रतिषेधो न वक्तव्य एकादेशोऽसिद्ध इत्युच्यते, न चात्रैकादेशम्पश्यामः, दीर्घेण निर्वर्त्तितत्वात्, न च दीर्घस्य स्थानिवद्भावादेकादेशग्रहणेन ग्रहणमल्विधित्वात्, ङीटोस्तु प्रतिषेधो वक्तव्य एव, अथ वा लाघवार्थं पदस्येति वक्तव्यम्, अन्तादिग्रहणं च पूर्वसूत्रादनुवर्त्तनीयम्, तेन पदान्तस्य पदादेश्च य एकादेशः सोऽसिद्ध इत्येषोऽर्थो भवति, यद्येवं सुपिप्पला ओषधीस्कृधीत्यत्रौषधिशब्दाद् द्वितीयाबहुवचनम्, 'ओषधेश्च विभक्तावप्रथमाया' मिति दीर्घः, ततः प्रथमयोः पूर्वसवर्णदीर्घः, रुत्वविसर्जनीयौ, अत्रेदानीं 'कःकरत्करतिकृधी' ति विसर्जनीयस्य सत्वमिष्यते तच्च प्राप्नोति, पदान्तपदाद्योरिति वचनात्, एकादेशस्यासिद्ध-

त्वाभावाद् रथा उत्तरो विसर्जनीय इती 'शः ष' इति षत्वं प्राप्नोति, अवि-शेषेणासिद्धत्वे ओषधीषु कुधीत्येवमवस्थानादिश उत्तरत्वाभावा-त्षत्वाप्रसङ्गात्सत्वं सिध्यति । ज्ञापकात्सिद्धम् । यदयं कस्कादिषु भ्रातु-ष्पुत्रशब्दं पठति तज्ज्ञापयति नैकादेशात्परस्य विसर्जनीयस्य षत्वम्भ-वतीति, यदि स्याद्भ्रातृशब्दान्ङसि 'ऋत उदि' त्युत्वे एकादेशे रपरे च कृते 'रात्सस्ये' ति सकारलोपे कृते षष्ठीसमासे 'ऋतो विद्यायोनिसंबन्धेभ्य' इत्यलुकि रेफस्य विसर्जनीये 'ऋत उदि' त्युकारस्यैकादेशस्य सिद्धत्वादिदु-दुपधस्य चेत्येव षत्वे सिद्धे कस्कादिषु तन्न पठेत्, पठति च, ततो ज्ञायते नैकादेशात्परस्य षत्वमिति, शकहूष्वित्यत्रापि तर्हि न प्राप्नोति, नैष दोषः । तुल्यजातीयस्य ज्ञापकं भवति, कश्च तुल्यजातीयः, यः कुप्वोरन-न्तरः, इह च वेञः क्विपि संप्रसारणे पूर्वत्वे च 'ह्रस्वस्य पिति कृती' ति तुकि प्राप्ते पूर्वत्वस्य सूत्रेणासिद्धत्वे प्राप्ते पदान्तपदाद्योरिति वचना-दसिद्धत्वाभावादुदिति तुग्भवत्येव, नहि उ आ इत्येकादेशात्प्रागवस्था-यामाकारः पदान्तो नाप्युकारः पदादिः, विभक्तेरभावात्, न चैकादेशात्मा-गेव कृदन्तत्वाद्विभक्त्युत्पत्तिरेकादेशस्यान्तरङ्गत्वात्, अथापि प्रागेवविभ-क्त्युत्पत्तिरेवमपि उआस् इति स्थिते उकारः पदादिः सकारः पदान्तः सुबन्तं हि पदं न तु ततः पूर्वम्, अथापि भ्यामभूतावुआभ्यामिति स्थिते स्वादिष्विति पदसंज्ञायां पदान्तपदाद्योरेकादेशस्तथापि न दोषः, पूर्वपर-योरिति वर्तते अन्तादिग्रहणञ्च, तत्र यथासंख्यं संबन्धात्पूर्वपदस्य योन्तः परस्य चादिस्तयोरेकादेशोसिद्ध इत्यर्थः संपद्यते, आकारश्चात्र पदादिर्न भवति नाप्युकारः पदान्त इत्यसिद्धत्वाभावात्तुग् भवत्येव, किमर्थं पुनः षत्वतुकोरेकादेशस्यासिद्धत्वादुच्यते, यावता द्विपदाश्रयत्वाद्बहिरङ्गस्यै-कादेशस्यैकपदाश्रयत्वेनान्तरङ्गयोः षत्वतुकोरसिद्धम्बहिरङ्गमन्तरङ्ग इत्येवा-सिद्धत्वं सिद्धं, ज्ञापनार्थं तु, एतज्ज्ञापयति यत्र बहिरङ्गस्यान्तरङ्गस्य वा द्वयोरानन्तर्यं निमित्तत्वेनाश्रितं तत्र बहिरङ्गपरिभाषा न प्रवर्त्ततइति, तेनाक्षद्यूरित्यत्र बहिरङ्गस्याप्यूठोसिद्धत्वाभावाद्यणादेशः सिद्धो भवति, अयमेवार्थः परिभाषारूपेण पठ्यते नाजानन्तर्ये बहिष्ट्वप्रकॢप्तिरिति ॥

"आद्गुणः" ॥ गुणग्रहणं किम्, यावताऽचीति वर्त्तते, एकः पूर्वपरयोरिति च, तत्रान्तर्यतः कण्ठतालव्ययोरकारेकारयोः स्थाने तादृश एवैकारो भविष्यति, कण्ठौष्ठ्ययोश्चाकारोकारयोः स्थाने तादृश एवौकारो भविष्यति, न चैकारौकारयोरपि प्रसङ्गः, वृद्धिरेचीति नियमात्, तदिदानीं नियमार्थम्, ऐचोरनेनैव सिद्धत्वात्, एच्येव वृद्धिर्भवति, उभयथा नियमश्च व्याख्यास्यते, वृद्धिरेवैचीति, इह तर्हि खट्वर्श्यः मालर्श्य इति, प्रमाणतोन्तरतमो मूर्द्धन्य ऋकारः प्राप्नोति। उभयोर्योन्तरतमस्तेन भाव्यं, न चर्कार उभयोरन्तरतमः, अकारस्तु शिष्यमाण एव रपरो भवतीति. स्थानत उभयोरन्तरमः, आकारस्तर्हि प्राप्नोति, 'उपसर्गादृति धाता' वित्येतन्नियमार्थं भविष्यति ऋति धातावेवाकारो नान्यत्रेति, प्लुतस्तर्हि प्राप्नोति खट्वेन्द्रः, प्लुतश्च विषये स्मृतः, प्लुतविधाने हि सति यस्मिन्विषये प्लुतो विहितस्तस्मिन्नप्यनेनैव भाव्यम्, अस्मिन्कर्त्तव्ये आष्टमिकस्य प्लुतस्यासिद्धत्वात्, ततश्च पत्ते ऽनुवाददोषप्रसंगात् प्लुतो न भविष्यति, इह तर्हि खट्वाईषा खट्वेषा, खट्वा ऊढा खट्वोढा, आन्तर्यतश्चतुर्मात्र आदेशः प्राप्नोति, गुणग्रहणे तु क्रियमाणे गुणसंज्ञायान्तपरकरणं सर्वार्थमिति त्रिमात्रचतुर्मात्राणामगुणत्वादप्रसंगः, तस्माद्गुणग्रहणं, श्लोकौ चात्र भवतः।

आदेशश्चेद्गुणः केन स्थानेन्तरतमो हि सः।
ऐदौतौ नैचि तावुक्तावृकारो नोभयान्तरः॥
आकारो नर्त्ति धातौ स प्लुतश्च विषये स्मृतः।
आन्तर्याच्चिचतुर्मात्रो गुणश्च तपरः स्मृतः॥

इह वृत्तशब्दान्ङिः, वृत्तइन्द्रमिति स्थिते अकारेकारयोर्गुणश्च प्राप्नोतीकारयोः सवर्णदीर्घश्च, तत्र शब्दपरविप्रतिषेधाद्दीर्घप्रसंगः, तथा तच्छब्दाज्जश्शसोः शिः, तइइन्द्रं, पचेरत्तमैकवचनमिट् शप्, पचइइन्द्रं, नैष दोषः, एकपदाश्रयत्वादन्तरङ्गो गुणो भविष्यति प्रागेव पदान्तरसंनिधानात्। 'लकारस्य स्थानत इति'। यथा चैतल्लभ्यते तथा लणित्यत्र व्याख्यातम्॥

"एत्येधत्यूठ्सु" ॥ 'न पुनरेधतेरव्यभिचारादिति'। बाहुल्याभिप्रायेणैतदुक्तम्। अस्ति ह्यस्यापि व्यभिचारः चङ्युपधाह्रस्वत्वे भवान् मामे-

दिधदित्यत्रेत्याहुः । 'प्रष्ठौह इति' प्रष्ठं वहतीति छन्दसि सहः, वहश्चेति ण्विः, वाह ऊठ्त्यूठ्, संप्रसारणं, पूर्वत्वं, ततो वृद्धिः । 'एत्येधत्योरेङि पररूपापवाद इति' । वृद्धिर्विधीयतइत्यनुषङ्गः, यथैव तर्हि एङि पररूपं बाधते एवमाङि पररूपमपि बाधेत, नाप्राप्ते पररूपे ऽस्या वृद्धेरारम्भात्, इत्यत आह । 'ओमाङोश्चैतत्स्त्विति' । कुत इत्याह । 'येनेति' । 'स तस्य बाधको भवतीति' । तस्यैव बाधको भवतीति यावत्, तद्बाधस्यावश्यम्भावित्वात् तावता च बाधकस्य चरितार्थत्वात्, न चाप्राप्ते एङि पररूपे इयं वृद्धिरारभ्यते, आङि पररूपे तु आ इतः एतः प्रेतः परेत इत्यत्र प्राप्ते उपैति प्रैतीत्यत्र त्वप्राप्ते तस्मान्न बाधते । परिहा[1]रान्तरमाह । 'पुरस्तादिति' । अनन्तरे बाध्ये ज्ञाते तद्बाधया वचनस्य चरितार्थत्वादुत्तरेण सह स्पर्द्धायां परत्वात्तदेव भवतीति भावः । 'अक्षौहिणीति' । अक्षैरूहतेऽवश्यमिति आवश्यके णिनिः, साधनं कृतेति समासः । 'स्वैरमिति' । ईर गतौ, ईरणमीरः, भावे घञ्, स्वेनाभिप्रायेण ईरणं स्वैरं, 'कर्तृकरणे कृता बहुल'मिति समासः, क्रियाविशेषणात्वाल्लोकाश्रयत्वाद्वा लिङ्गस्य नपुंसकत्वम् । स्वेनाभिप्रायेणेरते गच्छतीति स्वैरी, सुप्यजातौविति णिनिः । ईरिग्रहणमनर्थकम्, पदास्वैरिबाह्येति निपातनात्सिद्धम्, पदास्वैरशब्दादिना मत्वर्थीयेन सिद्धम्, णिनिस्त्वनभिधानान्न भविष्यति । 'प्रादित्यादि' ऊढ ऊढि एष एष्य इत्येतान्युत्तरपदानि, इष्यतेरिच्छतेरिणातेर्वा यदा ण्यत् तदा प्रेष्यः, यदा घञ् तदा प्रैषः, एङि पररूपापवादो वृद्धिः, ईष्यशब्दे तु प्रेष्य इति भवति, तथा आ ऊढा ओढा प्रोढेत्योमाङोश्चेति पररूपं भवति, पूर्वोपात्तस्य ऋणस्यापनयनाय यदृणमन्यदुपात्तं तदृणार्णम्, दशार्णशब्दो नदीविशेषस्य देशविशेषस्य च संज्ञा ॥

"आटश्च" ॥ ईक्ष दर्शने, उभ उम्भ पूरणे, उब्ज आर्जवे, ऋधु वृद्धौ, इत्येतेषामुदाहरणानि । 'चकारोऽधिकविधानार्थ इति' । अस्यैव विवरणम् 'उस्योमाङोश्चेति' । 'पररूपबाधनार्थ इति' । उसि ओमि आङि च

१ परिभाषेति ३ पु० पा० ।

अत्पररूपं प्राप्नोति तद्बाधनार्थमित्यर्थः, अन्यथा परत्वात्तदेव पररूपं स्यात् । 'प्रोशीयर्दिति' । अनर्थकेष्वुसि पररूपविधानादत्र प्रसङ्गः ॥

"उपसर्गादृति धातौ" ॥ 'उपार्च्छतीति' । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु । 'प्रर्च्छको देश इति' । अत्र यत्क्रियायुक्ताः प्रादय इति गमिं प्रति प्रशब्दस्योपसर्गत्वं नर्च्छतिं प्रतीति भवति प्रत्युदाहरणम्, वा सुप्यापिशलेरिति हि विकल्पः । 'स्यादिति' । तेनोत्तरार्थमत्पररूपकरणमिति भावः । धातुग्रहणमनर्थकम्, उपसर्गेणैव धातोराक्षेपात्, यत्र चोपसर्गत्वं न संभवति तत्रोपसर्गग्रहणेन प्रादयोपि लक्ष्यन्ते, यथा नासिकाया नस्भावविधौ, इह तु मुख्यमेवोपसर्गत्वं संभवति तत्किं धातुग्रहणेनेत्यत आह । 'उपसर्गग्रहणादेवेति' । शाकल्यस्येदं शाकलम्, तस्य निवृत्त्यर्थं पुनर्धातुग्रहणं, सति तु धातुग्रहणे योगविभागेन पुनर्वृद्धिर्विधीयत इति शाकलं बाध्यते, असति तु तस्मिन् शाकल्यमतेन परत्वात् प्रकृतिभावः स्यादेव ॥

"वा सुप्यापिशलेः" ॥ सुबन्तस्य धातोरसंभवात्सुबित्येतद्धातोरवयवद्वारकं विशेषणमित्याह । 'सुबन्तावयवे धाताविति' आचार्यग्रहणेनेव पूजाविकल्पयोरपि सिद्धयोः पुनर्वाग्रहणमाचार्यग्रहणस्य प्राधान्येन पूजार्थताख्यापयितुं कृतम् ॥

"ओतोम्शसोः" ॥ 'गां पश्येति' । ननु चात्र गोतोणिदिति णित्त्वे सति परत्वाद्वृद्धौ कृतायामोकाराभावादात्वेन न भाव्यम् । आत्वविधानन्तु द्योशब्दार्थं स्यान्नहि तत्र णित्त्वमस्ति, गोत इतिवचनादित्यत आह । 'द्योशब्दोपीत्यादि' । सत्यं यदि तत्र णित्त्वं न स्यात्, अस्ति तु तत्रापि णित्त्वं गोत इत्यस्यौकारान्तोपलक्षणत्वात्, वर्णनिर्देशेषु तपरत्वप्रसिद्धेस्ततः किमित्याह । 'तेनेति' । 'शसा साहचर्यादिति' । सुप एव हि शसोत्र सम्भवो नान्यस्याचीत्यधिकारात् । 'अचिनवमसुनवमिति । 'चिनोतेः सुनोतेश्च लङ् 'तस्थस्थमिपा' मित्यमि कृते विकरणस्य गुणादेशौ ॥

"एङि पररूपम्" ॥ इल प्रेरणे चुरादिः, ओखृ शोषृ इति भ्वादौ पठ्येते 'के चिद्वा सुप्यापिशलेरित्यनुवर्तयन्तीति'। यद्येवन्तेन सहास्यैकवाक्यतायाम् असुब्धातुषु नास्य प्रवृत्तिः स्याद् इत्यत आह । 'तच्चेति'। अत्र व्याख्यानमेव शरणम् । 'शकन्ध्वादिष्विति'। शकन्ध्वादयः प्रयोगतोऽनुसर्तव्याः, तेषु पररूपं वक्तव्यम् । कुलटाया वा, कतन्तेभ्य इत्यादिनिर्द्देशोऽस्मिन्नर्थे लिङ्गम्, अन्धुः कूपः, बहूनि कुलान्यटति नैकस्मिन्कुलेऽवस्थितेति कुलटा, पचादिष्वयम्पठितव्यः, अन्यथा कर्मण्यण् स्यात् । 'एवे चानियोगइति'। नियोगोऽवश्यम्भावो, नियमोऽवधारणम्, ततोऽन्यत्रार्थे पररूपम्भवति, उदाहरणेऽनवक्लृप्तावेवशब्दः, यथा क्वेव भोक्ष्यसइति, अवधारणे तु वृद्धिरेव भवति, 'अमैवाव्ययेन' 'धातोस्तन्निमित्तस्यैव' इहैव संतस्थाय, ममैव हव्यान्यग्नइत्यादि, ओतुर्विडालः, 'तुन्वो र्वे निपातउपसंख्यानम्,' वीति सप्तमीनिर्द्देशात्तदादिविधिः, वकारादौ निपाते परतः तु नु इत्येतयोः पररूपम्भवति, तु वै त्वै अनुभूततमं चैकम्, नुवै न्वै, एक एवायं निपातः, अर्थाभेदात्, यदाह, न वा निपातैकत्वादिति । अत एव नैतद्वृत्तिकारेण पठितम् । सूत्रे पररूपग्रहणमुत्तरार्थम्, इह त्वेङीत्येव सिद्धम् एङि परत एकादेशो भवतीति । रूपग्रहणं चिन्त्यप्रयोजनम्, तथा चाम्ति पूर्व इत्यत्र रूपग्रहणं न कृतम् ॥

"ओमाङोश्च" ॥ 'अद्योढेति'। आङ्नाङोरेकादेश आङ्ग्रहणेन गृह्यतइति भवत्युदाहरणम्, अत्र च धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वमाद्गुणे कृते पश्चादद्यशब्देन संबन्धे वृद्धिः प्राप्नोति, एवमाङो रूपमविनष्टमद्य आगत इत्यादौ तत्र सवर्णदीर्घत्वेन सिद्धं रूपम् । 'अकः सवर्णे दीर्घत्वम्बाध्यतइति'। ननु च मध्येपवादन्यायेन वृद्धेरेव बाधो युक्तो न दीर्घत्वस्य, नैष दोषः । चकारोऽत्र क्रियते स पुनर्विधानार्थो भविष्यति ॥

"उस्यपदान्तात्" ॥ 'भिन्द्युरिति'। भिदेर्लिङ्, यासुट्, झेर्जुस् । श्नसोरल्लोपः, 'लिङः स लोपोनन्त्यस्ये' ति सलोपः, भिन्द्याउस् अनेन पररूपम् । 'अदुरिति'। दाञो लुङ्, गातिस्थेत्यादिना सिचो लुक्, आत इति झेर्जुस्, अदा उस् अनेन पररूपम् । 'कोस्रेति'। ननु चानर्थकत्वादेवास्यो-

सो ग्रहणं न भविष्यति, एवं तर्ह्येतज्ज्ञापयति अनर्थकस्याप्युसो ग्रहणमिति, तेन भिद्युरित्यादावप्युसि पररूपं भवति, अत्र हि यासुडादिः समुदायोऽर्थवान् न तु तदवयव उस्। 'कोपितेति'। वसेः क्तः, वसतिक्षुधोरिट्, यजादित्वात्संप्रसारणं, शासिवसिघसीनां चेति षत्वं, तस्यासिद्धत्वादुसि न पररूपम्भवति, अस्य तु लाक्षणिकत्वादेवाग्रहणं सिद्धम्। 'अबिभयुरिति'। भियो लङ्, शपः श्लुः, सिजभ्यस्तेत्यादिना झेर्जुस्, जुसि चेति गुणः॥

"अतो गुणे"॥ 'अकः सवर्णे दीर्घस्यापवाद इति'। ननु च मध्येपवादन्यायेन वृद्धेरेवायमपवादो युक्तो न दीर्घस्य, गुणग्रहणाद्दीर्घस्यापि बाधको भविष्यति, अन्यथा ऽतोपदान्तादित्येव वक्तव्यम्। एङीत्येव, ततो जुमि च, अपदान्तादित्येव, एवं सिद्धे गुणग्रहणाद्गुणमात्रेयं विधिः प्रवर्तमानो दीर्घमपि बाधिष्यते। 'अत इति किमिति'। आदिति वर्त्तत एवेति प्रश्नः, तपरकरणे तात्पर्यमित्युत्तरम्॥

"अव्यक्तानुकरणस्यात इतौ"॥ 'अव्यक्तमपरिस्फुटवर्णमिति'। अपरिस्फुटा अनभिव्यक्ता अकारादयो वर्णा यस्मिन्स्तथोक्तम्, यद्येवन्तदनुकरणेनापि तथाविधेनैव भाव्यम्, सदृशं ह्यनुकरणम्भवति, ततश्चानुकार्य इव तत्रापि नैवाच्छब्दोवधार्यते, अनवधारिते चाशक्यं पररूपं कर्त्तुं, तत्राह। 'तदनुकरणं परिस्फुटवर्णमेवेति'। अथ कथन्तर्हि तत्तेनानुक्रियते नहि विसदृशमनुकरणम्भवत्यतिप्रसङ्गादित्यत आह। 'केन चित्सादृश्येनेति'। तत्पुनः सादृश्यं ध्वनेस्तुल्यतया, तेन ह्यव्यक्तमनुकार्यमनुकरोति पुरुषः, अनुकरणं कर्तृ अव्यक्तं कर्मानुकरोति, करणस्य कर्तृत्वविवक्षायां कर्तृप्रत्ययः, अनुकरणशब्दस्तु करणसाधन एव। 'पररूपमेकादेशो भवतीति'। अच्छब्दस्यापि सर्वस्य नालोन्त्यस्य, नानर्थकेलोन्त्यविधिरितिवचनाज्ज्ञापकाच्च, यदयमाम्रेडितस्यान्त्यस्य तु वेति अन्त्यग्रहणङ्करोति तज्ज्ञापयति नात्रालोन्त्यपरिभाषा प्रवर्त्तत इति, किञ्च पूर्वापरसमुदाय एकादेशस्य स्थानीत्युक्तं, ततश्च तदेकदेशे पूर्वस्मिन् खल्वेतत्परिभाषाप्रवृत्तिः कीदृशीति चिन्त्यम्। 'पटदितीति'। प्रक्रियावाक्यमेतत्, न प्रयोगार्हं, पररूपस्य नित्यत्वात्। 'पटि-

तीति'। कथं पुनः पररूपे कृते तदनुकार्यस्य प्रतिपादकम्भवति, कुतश्च तस्यानुकरणत्वं, नैष दोषः । यथा गविन्ययमाहेति कृतावादेशमपि गोशब्दस्यानुकरणम्भवति शास्त्रवासनया तद्वदत्राऽपि भविष्यति[1]। 'दकारान्तानुकरणमेतदिति'। तकारान्तानुकरणे तु रूपमेवैतन्न स्यात्, अपदत्वेन जश्त्वाभावात्पटत् पटिति करोतीति ॥

"नाम्रेडितस्यान्त्यस्य तु वा"॥ अव्यक्तानुकरणस्याम्रेडितस्येति व्यधिकरणे षष्ठ्यौ, अव्यक्तानुकरणस्य यदवयवभूतमाम्रेडितन्तस्येत्यर्थः । 'नित्यवीप्सयोरिति द्विर्वचनमिति'। वीप्सायोगस्तु यथाकथञ्चिद् द्रष्टव्यः। अपर आह, नित्यवीप्सयोरित्युपलक्षणमेतत्, डाचि बहुलं द्वे भवत इत्यत्र बहुलवचनादन्यस्यापि द्विर्वचनमिति । 'यदा त्विति'। द्विरुक्तस्य समुदायानुकरणस्य वार्थभेदो भवति ॥

"नित्यमाम्रेडिते डाचि"॥ वार्त्तिकमेवेदम् । वृत्तिकृता सूत्ररूपेण पठितम्। 'डाचि विवक्षितइति'। आशंसायां भूतवच्चेति भविष्यति क्तः, विधित्सितइत्यर्थः । अन्यथा डाजेव न स्यात्, द्व्यजवरार्धत्वाभावात्, तथा च डाज्विधावुक्तम् । 'यस्य च द्विर्वचने द्व्यजवरार्द्धता ततः प्रत्यय' इति, अष्टमे च वक्ष्यति डाचीति विषयसप्तमीति, डाचि विधित्सितएव द्विर्वचनं क्रियतइत्यत्र प्रयोजनान्तरमाह । 'तच्चेति'। ह्यर्थे चः, तद्धि द्विर्वचनं टिलोपात्पूर्वमिष्यते, एवं च पूर्वं सिद्ध्यति, यदि डाचि विधित्सितएव द्विर्वचनम्भवति, नान्यथा, यदि हि परभूते द्विर्वचनं स्यात्ततोऽन्तरङ्गत्वात्पूर्व टिलोपे कृते टकारान्तस्य द्विर्वचने पटपटेति न सिद्ध्येत्, यद्वा डाचि विहिते उत्पन्ने इत्यर्थः । ननु चोक्तं डाजेव न स्यादिति । नैष दोषः । द्व्यजवरार्द्धादिति भाविव्यपदेशोऽयम् । यस्य द्व्यजवरार्द्धता भविष्यति द्विर्वचने कृते तस्मादित्यर्थः । यदि डाचि विहितं द्विर्वचनं परत्वाट्टिलोपप्रसङ्ग इत्युक्तन्तत्राह । 'तच्चेत्यादि'। डाचि बहुलमिति बहुलग्रहणाद् द्विर्वचने कृते टिलोप इत्यर्थः ।

---

१ पटदिति करोतीत्येतावद्वृत्त्यर्थं चेदं वचनं, पटिति करोतीत्येकदेशानुकरणेनापि सिद्धमिति ३ पु० अधिकम् ।

"अकः सवर्णे दीर्घः" ॥ 'अनयरति'। 'चेङ्गिती' ति गुणे कृते दीर्घत्वप्रसङ्गः। 'दध्यत्रेति'। असति सवर्णग्रहणे यणादेशस्य दीर्घस्य च विषयविभागो न ज्ञायेत ततश्च पर्यायः स्यात्। 'कुमारी शेतइति'। ननु च तुल्यास्यप्रयत्नत्वे ऽपि सावर्ण्यमत्र नास्ति नाज्झलाविति प्रतिषेधादित्यत आह। 'नाज्झलावित्यत्रेति'। अणुदित्सवर्णस्य चाप्रत्यय इति ग्रहणकवाक्यन्तच्च नाज्झलावित्यस्य प्रवृत्तिसमये नाभिनिर्वृत्तं, तस्य हि सवर्णसंज्ञाङ्गं, तेन यावत्सा न प्रवर्त्तते तावदनभिनिर्वृत्तम्, सवर्णसंज्ञाऽपि स्वापवादे नाज्झलावित्यस्मिन्नप्रवृत्ते न प्रवर्त्तते, ततश्च पूर्वं नाज्झलावित्यस्य प्रवृत्तिः, पश्चात्सवर्णसंज्ञायाः प्रवृत्तिः, पश्चाद् ग्रहणकवाक्यस्येति एष क्रमः, तेन 'नाज्झला' वित्यत्राग्रहीतसवर्णानामचां ग्रहणमिति ऋकारलृकारयोः सावर्ण्यमप्रतिषिद्धम्, तस्मादचीत्यनुवर्त्त्यमिति। 'ऋति च वावचनमिति'। मध्ये रेफभक्ती द्वे, आदितोऽभक्तेरर्द्धमात्रा, एवमन्ततः, एवम् लृतीत्यत्रापि, मध्ये द्वे लकारभक्ती, अभितः पूर्ववत्, एवं द्विमात्रयोरप्येतयोरीषत्स्पृष्टत्वाद्विवृताभ्यामृकारलृकाराभ्यामसावर्ण्यादग्रहणाद्दीर्घसंज्ञाया अभावाद्वचनम्। अर्द्धतृतीयमात्रत्वात्तत्कालस्याभावादित्यन्ये, एतच्च सवर्णसंज्ञायाम्प्रपञ्चितम्। 'दीर्घपक्षे त्विति' ऋकारलृकारयोः समुदायः स्थानी, न च तस्यान्तरतमो दीर्घः संभवति, अतोऽवयवस्य योन्तरतमः स एव भवति, तत्रापि लवर्णस्य दीर्घासंभवादृकारस्य योन्तरतमः स ॠकार एव भवति ॥

"प्रथमयोः पूर्वसवर्णः" ॥ 'प्रथमाशब्दो विभक्तिविशेषे रूढ इति'। सुपामाद्यत्रिके 'स पूर्वायाः प्रथमायाः' सप्तमीपञ्चमीप्रथमाश्च इत्यादौ तस्यैव ग्रहणात्। ननु च स्त्रीलिङ्गः प्रथमाशब्दस्तत्र रूढो न चास्य स्त्रीलिङ्गत्वे प्रमाणमस्ति प्रत्युत प्रथमशब्दस्तिङां त्रिकद्वये ऽस्मिन्नेव शास्त्रे संज्ञात्वेन विनियुक्त इति तस्यैव ग्रहणं युक्तं, ततश्च पचति, पचतः, पचन्ति। पचते, पचेते, पचन्ते, चकार, चक्रतुः, चक्रुः, चक्रे, चक्राते, चक्रिरे, इत्यादौ यथाप्राप्तविध्यन्तरबाधेनायं विधिर्युक्तः। किं चैवं सति मुख्येऽपि प्रथमशब्दे प्रथमयोरिति द्विवचनमुपपद्यते, आत्मनेपदपरस्मैपदभेदेन

प्रथमस्य भेदात् । उच्यते । एवं सति द्विवचननिर्देशोऽनर्थकः, लुटः प्रथमस्येत्यादिवत्सिद्धत्वात् । यद्वा वा सुप्यापिशलेरित्यतः सुपीत्यनुवर्त्तयिष्यते, तेन सुप एव प्रथमस्य ग्रहणं, लिङ्गाच्च, किं लिङ्गं, 'दीर्घाज्जसि च' 'तस्माच्छसो नः पुंसी'ति, अत एव लिङ्गात्सुपामप्यादितः प्रथमयोर्द्वयोर्ग्रहणत्र भवति, अचीत्यधिकाराच्च, नहि सुटजादिः, सुटपि कुण्डं तिष्ठतीत्यत्रावजादिः, नाचायं विधिः प्राप्नोति, किं कारणम्, अमि पूर्वत्वेन बाध्यते, तस्मात् स्त्रीलिङ्गस्य ग्रहणमिति स्थितम् । तत्साहचर्याद् द्वितीयापि प्रथमेत्युक्तेति, द्विवचनञ्चात्र प्रमाणम् । ननु सकृच्छ्रुतः शब्दो मुख्यवृत्तिरेव वा भवति जघन्यवृत्तिरेव वा न पुनरुभयवृत्तिः, प्रथमाद्वितीयासमुदाये जघन्यवृत्तिरेवायं, स च समुदाय उद्भूतावयवभेद इति द्विवचनोपपत्तिः, यथा छत्रिणो गच्छन्तीति । 'वृक्षाः प्लक्षा इति' । नन्वत्राप्यतो गुणइति पररूपेण भवितव्यं, नाप्राप्ते विध्यन्तरे तस्यारम्भात् । स्यादेतत् । प्रथमयोरित्येतदपि दीर्घत्वस्याप्राप्ते विध्यन्तरे आरभ्यमाणम् अग्नीइत्यादौ यथा यणम्बाधते तथा पररूपमपि बाधिष्यतइति, तन्न, स्वरसन्धिषु गुणयणावुत्सर्गौ, वृद्धिः सवर्णदीर्घत्वं पूर्वसवर्णादेशश्च तयोरपवादा इति द्वितीयकक्षाप्राप्ताः, पररूपन्तु तृतीयकक्षाप्राप्तमिति तदेव प्राप्नोति । एवं तर्हि योगविभागः करिष्यते, प्रथमयोरिति, अकः सवर्णइत्येव, तेन वृक्षा इत्यादौ पररूपम्बाधित्वा प्रथमयोरकः सवर्णे दीर्घत्वम्भविष्यति, यथैव तर्हि योगविभागः पररूपम्बाधते तथा वृक्षमित्यादावमि पूर्वमपि बाधेत, तस्य त्वग्निमित्यादिरवकाशः, नैष दोषः, अमि पूर्व इत्यत्रामीति विभज्यते, तत्र च पूर्वसवर्णदीर्घप्रतिषेधः प्रकृतोनुवर्त्तिष्यते, प्रथमयोरिति योगविभागेन प्राप्तं दीर्घत्वमपि न भवतीत्यर्थः, एवमपि तस्माच्छसो नः पुंसीत्यत्र तच्छब्देनानन्तरो दीर्घः परामृश्यते, एतान् गाश्चरतो बलीवर्द्दान्पश्येत्यचोतोम्शसोरित्येकादेशान्माभूदिति, ततः किं, योगविभागे क्रियमाणे अग्नीन् वायूनित्यादावेव नत्वं स्यात्र तु वृक्षानित्यादौ यत्र प्रथमयोरिति योगविभागाद्दीर्घो विधीयते, अयमप्यदोषः । तस्मादित्यनेनाकस्यानिमो दीर्घः परामृश्यते नानन्तरो

नापि दीर्घमात्रम्, एतच्चाक इत्यनुवृत्तेर्लभ्यते, मा भूद्वा योगविभागः प्रथमयोरिति, ननु चोक्तं वृक्षा इत्यादौ पररूपप्रसङ्ग इति, नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न जस्शसोः पररूपं भवतीति, यदयं नादिचीतीजग्रहणं करोति, अन्यथा अवर्णान्तस्य नास्त्येव दीर्घप्रसङ्ग इति किमिज्ग्रहणेन, केवलोत्तरार्थं हि तस्मिंस्तत्रैव कर्तव्यं स्यात्, यद्वा दीर्घाज्जसीत्येव ब्रूयात्, किमर्थमिदं, नियमार्थं, दीर्घाज्जस्येवेति, तेन जस्शसोर्न भविष्यति। वृत्तिकारस्तु यथोक्ते परिहारे प्रतिपत्तिगौरवप्रसंगाद्व्यायतः परिहारमाह। 'अतो गुण इति यदकारे पररूपमित्यादि'। न्यायं दर्शयति। 'पुरस्तादिति'। इतिकरणो हेतौ। 'अग्नी इत्यत्रेति'। असति हि पूर्वग्रहणे पूर्वसमुदायस्य स्थानिनोऽन्तरतमस्य दीर्घस्याभावादवयवान्तरतमो भवद् पूर्वस्यैवेति नियमकारणाभावात्परसवर्णोऽपि स्यात्, ततस्तन्निवृत्त्यर्थं, पूर्वग्रहणं तु विप्रतिषेधनिराकरणार्थम्, अन्यथा अग्नी इत्यत्र विप्रतिषिद्धमापद्यते, कथं, दीर्घ इति वर्तते, यदि पूर्वो न दीर्घो यदि दीर्घो न पूर्वः। ननु दीर्घग्रहणानुवृत्तिसामर्थ्यात् पूर्वशब्देन पूर्वाकृतिर्ग्रहीष्यते, कथं पुनः सामर्थ्यं, यावता यत्र पूर्वव्यक्तिर्दीर्घभूता कुमारीः पश्य भस्त्राः पश्येत्यादौ तत्रैव यथा स्यादग्नी इत्यादौ मा भूदित्येवमर्था दीर्घानुवृत्तिः स्यात्, यद्येतावत् प्रयोजनं स्याद् दीर्घाज्जसि पूर्वोऽमि चेति ब्रूयात्, यतस्तु खलु प्रथमयोरित्यारभ्यते ततो ज्ञायते न केवलं कुमारीः पश्येत्यादौ दीर्घस्यैव प्रथमयोरित्यनेन दीर्घो विधित्सितः किं तर्ह्यग्नी इत्यादावपीति, तच्चाकृतिविवक्षायामुपपद्यते, सत्यं, तदेव सवर्णग्रहणेनापि विस्पष्टीक्रियते। 'त्रिमात्रे स्थानिनि त्रिमात्रादेशनिवृत्त्यर्थमिति'। आन्तरतम्यात् त्रिमात्र एव प्राप्नोति, यत्र प्लुताप्लुतप्रसङ्गः स एव प्लुतस्य विषये स्मृत इत्यस्य विषयः, इह तु प्लुतस्यैव प्रसङ्ग इति नायमस्य विषयः॥

"तस्माच्छसो नः पुंसि"॥ तस्मादित्यनेनानन्तरः पूर्वसवर्णदीर्घो निर्दिश्यत इत्याह। 'तस्मात्पूर्वसवर्णदीर्घादिति'। 'उत्तरस्य शसोवयवस्येति'। उत्तरस्येत्येतच्छसवयवस्य विशेषणं, तस्मादुत्तरो यः शसोऽवयवस्तस्येति न तु शसः, असंभवात्, नहि पूर्वसवर्णदीर्घात् परः क्वचिच्छस्

संभवति, अन्तादिवद्भावोपि न भवति, उभयत आश्रयणात्, अत एवानुपात्तमप्यवयवस्येति लभ्यते । बहुषु बहुवचनमित्यत्र त्रिकं प्रातिपदिकार्थ इत्युक्तं, तेन पुंसीत्येतत्प्रकृतिविशेषणं, पुंशब्दात् परस्य शसोऽवयवस्येति, यद्येवं दण्डानित्यादिकं पदं नकारान्तमुदाहरणमुपपद्यते, षण्ढकषण्ढकशब्दाविह लोकप्रसिद्ध्या नपुंसके वर्त्तमानावपि पुंस्त्वानुगतमेवार्थमाहतुः, यथा कुमार्यादिषु वर्त्तमानोऽर्थशब्दः, सामान्यविशेषा एव स्त्रीत्वादयो न पुनस्स्तनादयः । स्त्रीसूत्रे चैतदुपपादितम् । स्थूरकानित्यादि तूदाहरणद्वयमयुक्तम् । कथं, स्थूरकाया अपत्यानि अररकाया अपत्यानि 'गर्गादिभ्यो यञ्, बहुषु लुक्, स्त्रीप्रत्ययस्यापि लुक् तद्धितलुकीति लुक्, स्थूरक अररक इत्येतौ स्त्रीशब्दौ, ताभ्यां परोऽत्र शस् भवति न तु पुंशब्दाभ्यामित्यत आह । 'सर्वएतइति' । न केवलं वृक्षादयोऽपि त्वेतावपीति सर्वशब्दस्यार्थः, लुप्तेपि प्रत्यये प्रकृतिरेव तदर्थे वर्त्तते, प्रत्ययार्थश्चात्रायमन्यरूपः । 'पुंस्त्वविशिष्टइति । स्त्रीवाचकत्वेन प्रसिद्धावप्येतावस्मिन् प्रयोगे पुंशब्दाविति भावः । यद्येवं चञ्चेव चञ्चाः पुमांस इतीवे प्रतिकृताविति कनो लुम्मनुष्य इति लुपि कृते प्रकृतिरेव चञ्चाशब्दः पुंस्त्वविशिष्टं प्रत्ययार्थमस्मिन् प्रयोगआहेति नत्वप्रसङ्ग इत्यत आह । 'इह त्वित्यादि' । प्रत्ययार्थोपि नैवात्र पुंस्त्वविशिष्टः किं तर्ह्यतिदेशात् स्त्रीत्वविशिष्ट इत्यर्थः । 'तस्मादिति किमिति' । प्रकृतस्य दीर्घग्रहणस्य पञ्चम्या विपरिणामात्सिद्धमिति प्रश्नः । 'एतान् गाः पश्येति' । औतोम्शसोरित्यात्वमेकादेशः, एकः पूर्वपरयोरिति महाप्रकरणं, ततश्च तद्विषयमेव नत्वं स्यादिति मन्यते । नन्वेवं षत्वतुकोरसिद्ध इति च तत्रैव कर्त्तव्यं शसो नः पुंसीति, इह तु प्रकरणादनन्तरमेवोपजीविष्यते, तदेव तर्हि तस्माद्ग्रहणेन विस्पष्टयते ॥

"नादिचि" ॥ 'खट्वे इति' । औङ आप इति औङः शीभावः, कुण्डे इत्यत्रापि न पुंसकाच्चेति ॥

"दीर्घाज्जसि च" ॥ आदिति नानुवर्त्तते, चकारेणेचोऽनुकर्षणसामर्थ्यादन्यथा पूर्वेणैव दीर्घादप्यवर्णादिचि सिद्धः प्रतिषेध इति किं

तदनुवृत्त्यर्थेन चकारेण, दीर्घग्रहणं किं, यावता अवर्णस्य अतो ङिसर्व-नामस्थानयोरिति गुणविधानाचातिप्रसङ्गः, एवमिदुतोरपि जसि चेति गुणो विधीयते, इह तर्हि वृक्षाः अग्नी वायू इति, ह्रस्वादपि प्रतिषेधः स्यात्, नैष दोषः । नादिचीत्येतन्नियमार्थं भविष्यति, अगृह्यमाणविशेषत्वाच्चोभयथानियमः, आदिच्येवादेवेचीति, तत्राद्येन नियमेन वृक्षा इत्यादि सिद्धं, द्वितीयेनाग्नी वायू इत्यादि, यथेव तर्ह्यग्नी वायू इत्यादौ निषेधो न भवति एवं कुमार्यौ वध्वावित्यादावपि न स्यात्, तस्माद् दीर्घादिति वक्तव्यम्, जस्ग्रहणं शस्निवृत्त्यर्थम् अन्यथा कुमारीः पश्य वधूः पश्येत्यादौ शस्यपि प्रतिषेधः स्यात्, ज्ञापकाद्ध भविष्यति, यदयं तस्माच्छसो नः पुंसीति पुंग्रहणं करोति तज्ज्ञापयति न शसि प्रतिषेधो भवतीति, तद्धि नपुंसके सवर्णदीर्घत्वासम्भवात् स्त्रीनिवृत्त्यर्थं कृतम्, यदि च स्त्रियामप्ययं कुमारीः पश्येत्यादौ शस्यपि प्रतिषेधः स्यात्तदा पूर्वसवर्णदीर्घत्वाभावादेव नत्वं न भविष्यति किं पुंग्रहणेन, नैतदस्ति ज्ञापकं, ह्रस्वान्तं यत् स्त्रीलिङ्गं तदर्थमेतत् स्यात् कृतीः पश्य धेनूः पश्येति, तस्माज्जसि चेत्येतदपि वक्तव्यमेव ।

"वा छन्दसि" ॥ 'मारुतीरिति' । मरुतो देवता आसामिति सास्य देवतेत्यण्, ङीप्, जसि पूर्वसवर्णदीर्घत्वम् । 'वाराहीति' । वाराहस्य विकार इति अवयवे च प्राण्योषधिवृक्षेभ्य इति प्राणिरजतादिभ्योऽञ्, ङीप्, द्विवचने पूर्वसवर्णदीर्घः, उपानहौ विशेष्ये ॥

"अमि पूर्वः" ॥ दीर्घादिति नानुवर्त्तते आरम्भसामर्थ्यात् । 'पूर्वग्रहणमित्यादि' । यः पूर्वः श्रुतः स एव यथा स्यात्, कः पुनरन्यः प्राप्नोति तत्राह । 'पूर्वसवर्णो दीर्घो मा भूदिति' । क्व चित्तु समासः पठ्यते, स कर्मधारयो द्रष्टव्यः, एतदुक्तं भवति, असतीह पूर्वग्रहणे प्रकृतं पूर्वग्रहणमनुवर्त्यम्, तस्मिंश्चानुवर्त्तमाने तत्संबद्धं सवर्णग्रहणमप्यनुवर्त्यम्, ततश्च पूर्वस्य यः सवर्णः स एवान्तरतमः प्रसज्येत, तत्र को दोषः, न तावद्वृक्षमित्यादौ द्विमात्रस्य स्थानित्वेन द्विमात्रप्रसङ्गः, वचनसामर्थ्यात्प्रथमयोः पूर्वसवर्ण इत्येव दीर्घस्य सिद्धत्वादत आह । 'कुमारीमित्य-

चेति'। 'वा छन्दसीत्येवेति'। एतच्च वाक्यभेदेन संबद्ध्यते, अन्यथा भाषायां न स्यात्। 'अम्यं चेति'। विकल्पविधानसामर्थ्यात्पूर्वत्वाभावे पूर्वसवर्णदीर्घोपि न भवति, तयोरत्र विशेषाभावादिति यणादेश एव भवति ॥

"संप्रसारणाच्च" ॥ 'संप्रसारणविधानसामर्थ्यादिति'। कथं पुनः सामर्थ्यं, यावता संहितायां यण् विधीयते ऽसंहितायां संप्रसारणं चरितार्थं, नैतदस्ति, संहितैकपदे नित्येतिवचनात्। 'वा छन्दसीत्येवेति'। पूर्ववद्वाक्यभेदेन संबन्धः। 'यज्यमानइति'। नन्विदानीमेवोक्तं विगृहीतस्य श्रवणं प्राप्नोति तत्कथमत्र यणादेशो ऽत आह। 'पूर्वत्वविधाने हीति'। सत्यमनारब्धे पूर्वत्वे विगृहीतश्रवणं प्राप्नोति संप्रसारणविधानं व्यर्थं मा भूदिति, पूर्वत्वविधाने हि सति तत्प्रतिपत्तिविषये ऽर्थवत्संप्रसारणमिति पूर्वत्वाभावपक्षे यणादेशो भवत्येव, 'संप्रसारणपूर्वत्वे समानाङ्गग्रहणं', यस्मिन्नङ्गे संप्रसारणमवस्थितं तदन्तर्भूतो यो ऽच् तेनैव सह यथा स्यादिह मा भूच्छकहूौ शकहूथमिति, शकान् ह्वयतीति क्विपि यजादित्वात्संप्रसारणं, योन्त्यो धातोराकारः तस्मिन्नेवाङ्गन्तर्भवति तस्य तावत्पूर्वत्वं, विभक्त्यौकारोर्थशब्दाकारश्च न तस्मिन्नङ्गन्तर्भवत इति तयोः पूर्वत्वं न भवति, अत्र परिहारः यणः स्थाने य इक् स संप्रसारणम्, एकादेशस्तु न यण्स्थानिकः, वर्णाश्रयत्वाच्चान्तादिवद्भावो ऽपि नास्ति, एवं पूर्वत्वमेव तावन्न संप्रसारणम्, किं पुनस्तत्स्थानिक ऊकार इति पूर्वैकादेशाभावः, सम्प्रसारणदीर्घत्वे तु वचनसामर्थ्यादेकादेशस्य पूर्वं प्रत्यन्तवद्भावात् संप्रसारणव्यपदेशः। वृत्तिकारस्तु संप्रसारणत्वमभ्युपेत्य परिहारान्तरमाह। 'अन्तरङ्गे चेति'। देशतो विप्रकर्षोत्र बाह्यत्वेनोपवर्णितः, कालतो विप्रकर्षस्तु पश्चादुपनिपाततः, धातावनन्तर्भावकृतं बाह्यत्वं पश्चादुपनिपातस्तु स्पष्ट एव ॥

"ङसिङसोश्च" ॥ 'एङ उत्तरयोरिति'। एङ उत्तरौ यौ ङसिङसौ तयोर्यः सम्बन्ध्यकारस्तस्मिन् परत इत्यर्थः। 'अग्नेरागच्छति अग्नेः स्वमिति'। यद्यपि द्वावेङौ ङसिङसावपि द्वावेव तथापि यथासङ्ख्यं

न भवति, नह्यत्र ङसिङसोः कार्यं विधीयते किं तर्हि तत्सम्बन्धित्यति, स चैक एव, अथापि सम्बन्धिभेदेन तस्य भेदः स्यादेवमपि न दोषः, ईदूद्भ्यां सोमवरुणयोः, धातोरित्यादिनिर्देशात् ॥

"ऋत उत्" ॥ 'द्वयोः षष्ठीनिर्दिष्टयोरित्यादि' । न्यायप्राप्तिप्रदर्शनमेतत्, न पुना रपरत्वे ऽक्रियमाणे किंचिदनिष्टम्, ऋत इति तपरकरणं दीर्घनिवृत्त्यर्थम्, 'उन्योर्ग्रहः' प्रे स्त्रा ऽयज्ञे, इत्यादौ न भवति । उत इत्यपि तपरकरणं दीर्घनिवृत्त्यर्थमेव, आन्तर्यतो हि द्विमात्रस्य द्विमात्र एव प्राप्नोति । ननु भाव्यमानोण् सवर्णान्न गृह्णातीति, एवं तर्ह्येतज्ज्ञापयति भाव्यमानोप्युकारः सवर्णान् गृह्णातीति, तेनामूभ्यामित्यत्रादसोसेर्दादु दो म इति दीर्घस्य दीर्घ ऊकारो भवति । इह गम्लृप्रभृतिभ्यो ङसिङसोः कृतयोः ऋकारलृकारयोः सवर्णसंज्ञाविधानादस्मिन्नुत्वे लपरत्वे च कृते संयोगान्तलोपे गमुलिति रूपं भवति ॥

"ख्यत्यात् परस्य" ॥ 'खिशब्दखीशब्दयोरित्यादि' । यणादेशे कृते तुल्यरूपत्वाद् द्वयोरपि ग्रहणम्, एतदर्थमेवागन्तुकेनाकारेण यणादेशं कृत्वा विकृतनिर्देशः कृतः, अन्यथा खित्योरिति ह्रस्वयोर्ग्रहणे दीर्घयोर्न स्यात्, दीर्घयोर्ग्रहणे ह्रस्वयोर्न स्यात्, विकृतनिर्देशे तु द्वयोरपि भवति, अकारान्तयोस्तु मुख्यापत्यादिवर्त्तिनोर्ग्रहणं न भवति, 'सख्युर्यः' 'पत्युर्नो' 'आपत्यस्य चे' त्यादिनिर्देशात् । 'सखीयतेः क्विप् सखीरिति' । ननु चाल्लोपस्य स्थानिवद्भावाद्यणा भाव्यं, तत्र कृते यलोपे स्थानिवत्त्वनिषेधादादिष्टादचः पूर्वत्वाच्च पुनः स्थानिवत्त्वाभावाल्लोपो व्योर्वलीति यलोपे सख्युरित्यादि न सिद्ध्यति । नैतदस्ति । क्वौ लुप्तं न स्थानिवदिति स्थानिवत्त्वनिषेधात् । विकृतनिर्देशस्य प्रयोजनान्तरमप्याह । 'विकृतनिर्देशादिति' । 'अतिसखेरिति' । अतिक्रान्तः सखा येनेति बहुव्रीहिः, यद्वा शोभनः सखा अतिसखा, न पूजनादिति समासान्तनिषेधः, अथ स एव यणादेशोऽत्र कस्मान्न भवति, घेर्ङितीति गुणेन बाधितत्वादिति चेत्,

न, शेषो घ्यसखीति घिसंज्ञा प्रतिषेधादित्यत आह । 'सखिशब्दस्य केवलस्यैव हीति' । इतश्च तत्रैव प्रतिपादितम् ॥

"अतो रोरप्लुतादप्लुते" ॥ 'उकारानुबन्धकस्येति' । यदि रुशब्दसमुदायस्थानी स्याद् अगुर्वर्थं तवर्थमित्यादावपि प्रसज्येत, स सजुषो हरित्यत्र चोकारस्यानुनासिकत्वप्रतिज्ञया ऽनुबन्धकरणमनर्थकं स्यात्, तद्यत्रैव सूत्रे विशेषणार्थं क्रियते । 'उत्वमपीति' । अपिशब्दः पुनःशब्दस्यार्थे, यदि पुना रुत्वमसिद्धं स्यात् स्यानित्वेनाश्रयणमनुपपन्नं स्यात्, उकारानुबन्धकस्य कस्य चिद्रोरभावात् । 'तस्यापीति' । निमित्तभूतस्यापीत्यर्थः । 'सुस्रोता३ अत्र न्वसीति' । दूराद्धूते चेति प्लुतः, नुशब्दः प्रश्ने । 'अश्विन् अत्रेति' । अश्वशब्दान्मत्वर्थीय इनिः, संबुद्ध्यन्तं चैतत्, गुरोरनृत इति प्लुतः, हे अश्विन् अत्रैव प्रदेशे पर्यस्तिष्ठत्वित्यर्थः, प्रायेण तु तकारान्तं पठ्यते तत्राश्विच्छब्दस्य व्युत्पत्तिर्मृग्या, ननु तपरकरणादेव प्लुतात्परस्य प्लुते वा परतो न भविष्यति, यथा दीर्घे तत्राह । 'प्लुतस्यासिद्धत्वादिति' । ननु च सिद्धः प्लुतः स्वरसन्धिषु, यदयं प्लुतप्रगृह्या अचीति प्रकृतिभावं शास्ति, यस्य हि विकारः प्राप्नोति तस्य प्रकृतिभावो विधातव्यः, न च प्लुतस्यासिद्धत्वे प्लुतस्य सतो विकारप्राप्तिरित्यनर्थकन्तत् स्यात्, अस्तु स्वरसन्धिषु प्लुतः सिद्धः, रोरुत्वं तु स्वरसन्धिर्न भवति, यदि तु संहिताधिकारे यद्विधीयते तन्मात्रविषयं ज्ञापकमाश्रीयते शक्यमकर्त्तुमप्लुतादप्लुतइति ॥

"हशि च" ॥ अप्लुतादित्येव, सुस्रोता३ देहीति । तकारोऽतीत्यस्यानुकर्षणार्थस्तेनोत्तरत्र तस्यैवानुवृत्तिर्भवति न हशीत्यस्य, नहि तदनुकर्षणस्यान्यत्प्रयोजनमस्ति ॥

"प्रकृत्यान्तः पादमव्यपरे" ॥ 'अतीत्येवेति' । न तु हशीति । अत्र हेतुः पूर्वमेवोक्तः । 'एङ इति यत् पञ्चम्यन्तमित्यादि' । एङ इति तावद्व्यवहितमप्यनुवर्तते, न त्वनन्तरमपि रोरिति, अत्र च व्याख्यानमेव शरणं, तेनाव्यपरे हशि परतो ऽ प्रकृत्या भवतीत्यर्थो न,

भवति । 'तदर्थादिति'। नहि पञ्चम्यन्तस्य प्रकृत्येत्यनेन सम्बन्धः सम्भवति । 'प्रकृतिरित्यादि'। उभयत्रापि प्रकृतिशब्दो दृष्टः, दुग्धस्य प्रकृतिः, दध्नः क्षीरं प्रकृतिरिति । 'अन्तरित्यव्ययमित्यादि'। तेन मध्यवाचिनान्तःशब्देनोपजनिते व्यतिरेके पादशब्दात्षष्ठी, तदन्तेन सहाव्ययीभावः । 'ऋक्पादस्यैव ग्रहणमिष्यतइति'। इष्टिरेवैषा, अन्ये तु वा छन्दसीत्यतो मण्डूकप्लुत्या छन्दसीत्यनुवर्त्तयन्ति, एवमवयवार्थं दर्शयित्वा समुदायार्थं दर्शयति । 'अवकारयकारपर इत्यादिना'। 'स्वभावेनावतिष्ठतइति'। यदा प्रकृतिशब्दः स्वभावे वर्त्तते तदायमर्थः, स्वभावपरित्यागेन न संहिताकार्यमापद्यतइत्यर्थः । यदा तु कारणे वर्त्तते तदायमर्थः, एङ्कारणात्मना भवतीति, कारणं परपूर्वत्वादेः कार्यस्येङ् तस्यात्मा स्वरूपं तेनैव भवति, प्राक् संहिताकार्यादेङो यद्रूपं तेनैवावतिष्ठतइत्यर्थः । अनन्तरोक्तमेवार्थद्वयं विस्पष्टीकरोति । 'न विकारमापद्यतइति'। एवं हि स्वभावेन भवति, यदि स्वभावादन्यथालक्षणां विकारावस्थां न प्राप्नोति तथा एवं कारणात्मना भवति, यदि विकाररूपं नापद्यते, यदि कार्यात्मना न विपरिणमतीत्यर्थः । 'तो चेदिति'। निमित्तमकारः, कार्यमेङ्, उदाहरणेष्वेङः पदान्तादतीति पूर्वत्वस्यायवादेश्च यथायोगमभावः । 'एतेर्चयन्तीति'। अत्रैतत्पदान्ते वर्त्तते, अर्चयन्तीत्यकारश्च परस्य पादस्यादौ । 'के चिदिति'। यदि नान्तःपादमिति पठन्ति एवं सति पूर्वत्वस्यैवानन्तरस्य प्रतिषेधः प्राप्नोति नायवोर्व्यवहितयोरित्यत आह । 'संहितायामिति'। संहितायामित्येतावदेवात्रापेक्ष्यते न तु पूर्वरूपत्वं, तेनैङः संहिताधिकारे यदुक्तं तन्न भवतीत्यर्थः, तेनैतदपि न चोदनीयम्, अनारब्धेऽस्मिन् प्रतिषेधे ऽयवोः प्राप्तिर्नास्ति, पूर्वत्वेन बाधितत्वात्, अनेन तु प्रतिषेधेन पूर्वत्वे बाधिते तयोरुद्भवः स्यात्, तस्यां दशायामस्य व्यापारो नास्ति, आत्माश्रयदोषप्रसङ्गादिति कथमेतच्चोद्यं परिहृतं, यदि पूर्वत्वस्यैवायं प्रतिषेधः स्यात्तस्यैवापेक्ष्य प्रतिषेधयेत्, यस्तु खलु संहितायामित्यपेक्ष्य सामान्येन प्रतिषेधति तस्यैतत्प्रयोजनं स्यादुत्पुनरकालमुद्भवतोरयवोरपि प्रति-

षेधो यथा स्यादिति, अत्र च पदान्तादित्यनुवर्त्यम्, अन्यथा अग्नेरहं सुहवस्य प्रणीतौ, वायोरिव सूनृतानामुदर्क इत्यादौ ङसिङसोश्चेति यत्पूर्वरूपं तस्यापि प्रकृतिभावप्रतिषेधौ प्राप्नुतः ॥

"अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च" ॥ अव्यादीनामनुकरणत्वात्समासो विभक्तिश्च। 'अव्यादिति'। अवतेराशिषि लिङ्। 'अवद्यादिति'। पञ्चम्येकवचनान्तम्। 'अवक्रमुरिति'। अवपूर्वस्य क्रमेर्लिट्युसि द्विर्वचनप्रकरणे छन्दसि वा वक्तव्यमिति द्विर्वचनाभावे रूपं, केचित्तु सूत्रे अवचक्रमुरिति कृतद्विर्वचनं पठन्ति तेषामुदाहरणं मृग्यम्। बह्वृचास्तावदवक्रमुरित्यधीयते। 'अव्रतेति'। वृङ्वृञोर्मन्त्रे घसेत्यादिना च्लेर्लुक्, आत्मनेपदेष्वनत इति अदादेशः। 'अयमिति'। इदं शब्दात् सुः, इदोऽय् पुंसि, अवतेर्लोट्, अवन्तु. तस्मादेवासुनन्तात् क्यच्, क्याच्छन्दसीत्युप्रत्ययः, अवस्युः, तेनोऽवन्तु पितरो हवेष्विति बह्वृचाः पूर्वरूपमेवाधीयते, अधिब्रुवन्तु तेऽवन्त्वस्मानिति ॥

"आपो जुषाणो वृष्णो वर्षिष्ठे ऽम्बे ऽम्बाले ऽम्बिकेपूर्वे" ॥ आपो इत्यादीनि पृथक् पदानि अनुकरणानि, विभक्तिस्त्वनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वान्न भवति, सुपां सुलुगिति वा विभक्तेर्लुग् भवति, अम्बिकेपूर्व इत्येतदप्यनुकरणमेव, तत्र प्रथमं जसन्तं द्वितीयं स्वन्तं, तृतीयं ङसन्तं, चतुर्थं ङ्यन्तम्, इतरे संबुद्ध्यन्ते। 'अम्बिकेशब्दात्पूर्वाविति'। अस्मादेव निपातनात्पञ्चमीसमासः। 'अस्मादेव निपातनादिति'। अम्बेत्येतद्विषयमेतत्, इतरयोस्त्वम्बार्थं द्व्युत्तरमिति वक्ष्यमाणत्वान्नैव ह्रस्वप्रसङ्गः ॥

"अङ्ग इत्यादौ च" ॥ 'अङ्गशब्दे च इङिति'। स प्रकृत्या भवतीति वक्ष्यमाणेन संबन्धः। 'तदादौ चाकारे यः पूर्व इति'। इङित्यपेक्षते, पूर्वशब्देन संबन्धः। तच्छब्देनातिक्रान्तप्रत्यवमर्शिनेतिशब्दस्यार्थमाचष्टे, तस्मादङ्गशब्दस्यादिस्तदादिः, चकारः किमर्थः, असति चकारेऽङ्गशब्दस्यैवेङ् तदादावपि परतः प्रकृत्या भवतीत्यर्थः स्यात्तत्श्चाङ्गेऽङ्गे इत्य-

चैव स्यात्, सति तु तस्मिन्नङ्गशब्दस्य एङि यत्र क्व चिदपि परतः प्रकृत्या भवति, तदादेरचापि परतो यः कश्चिदेङ् प्रकृत्या भवतीत्ययमर्थो भवति, तेन अङ्गे अदीव्यत् प्राणो अङ्गे इत्युभयत्रापि भवति ॥

"अनुदात्ते च कुधपरे" ॥ 'कवर्गधकारपर इति'। कवर्गधकारौ परौ यस्मात्स तथोक्तः, धकारे ऽकार उच्चारणार्थः, अग्निशब्दो ऽङ्गेर्नलोपश्चेति निप्रत्ययान्तोन्तोदात्तः, अध्वरशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। 'आद्युदात्तो निपात्यत इति'। ऋज्रेन्द्राग्रेत्यादावुणादिसूत्रे अग्नशब्दः प्रातिपदिकस्वरेणान्तोदात्तः ॥

"सर्वत्र विभाषा गोः" ॥ 'सर्वत्र छन्दसि भाषायां चेति'। यद्यपि छन्दसीति न प्रकृतं तथाप्यन्तः पादं यजुषीति वचनादवपथासि प्रतावस्युरिति छान्दसानुकरणाच्च छान्दसानि पूर्वसूत्राणीति भावः। सर्वत्रग्रहणं तु यजुष्यन्यत्र चेत्यप्युपपन्नं, पदान्तादित्येव, गोरागतं गोःस्वम् ॥

"अवङ् स्फोटायनस्य" ॥ स्फोटो ऽयनं परायणं यस्य स स्फोटायनः, स्फोटप्रतिपादनपरो वैयाकरणाचार्यः, ये त्वौकारं पठन्ति ते महादिष्वश्वादिषु वा पाठं मन्यन्ते। 'अतीति निवृत्तमिति'। अन्यथा गवोदनादौ न स्यात्, न चैवं सत्यतिप्रसंग इत्याह। 'अचीत्येतत्त्विति'। सर्वत्र चात्र व्याख्यानमेव शरणं, यदचीत्यनुवर्तते कथमिको यणचीत्यत्रोक्तम् अचीति चाधिकारः संप्रसारणाच्चेति यावदिति, निरन्तरानुवृत्त्यभिप्रायं तदित्यदोषः। 'गवाश्वं गवाजिनमिति'। बहुव्रीहिस्तत्पुरुषो वा। 'गवोष्ट्रमिति'। द्वन्द्वः, गोरश्वचनं, गोरवक्तव्यः, तत्रापि अवादेशेन सिध्यत्येव, न चैङः पदान्तादिति पूर्वत्वप्रसङ्गः, अगागमस्य तद्गुणत्वेन ग्रहणादोकारस्यापदान्तत्वात्, किं प्रयोजनं, लाघवं तावद्भवति, स्वरे च न दोषः, कथमागमा अनुदात्तास्तत्र गवाश्वादौ बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणागमानुदात्तत्वं संभवति, अवङादेशे त्वान्तर्यतो ऽन्तोदात्तस्यान्तोदात्तोवङादेशः स्यात्। ननु चास्यैकाचः सतो अपदोषेऽमन्त्रणेनान्तो-

विशेषणम्, अचि परतः कस्मिंश्चिन्द्रे यः स्थितस्तस्मिन्निति, तदिदमुक्तम् । 'इन्द्रशब्दस्येचीति' ॥

"प्लुतप्रगृह्या अचि नित्यम्" ॥ ननु यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, न च प्लुतस्य विकारः प्राप्तः, स्वरसन्धिषु तस्यासिद्धत्वादित्यत आह । 'आश्रयात् प्लुतः सिद्ध इति' । यदिदं प्लुतस्य प्रकृतिभावं प्रति कार्यित्वेनाश्रयणमस्मादेव ज्ञापकात् स्वरसन्धिषु प्लुतः सिद्ध इति कल्प्यत इत्यर्थः । 'आदेशनिमित्तस्याचः परिग्रहार्थमिति' । यस्मिन्नादेशो विधीयते स एव प्रकृतिभावस्यापि निमित्तत्वेन परिगृहीतो यथा स्यादित्येवमर्थमित्यर्थः । 'जानु उ अस्येति' । उञ् निपातस्तस्य पूर्वेण सहैकादेशस्य यन्निमित्तं न स प्रगृह्यादुत्तरो यश्च ततः परो न स एकादेशस्य निमित्तमिति प्रकृतिभावाभावादेकादेशो भवत्येव, असति पुनरज्ग्रहणे प्रगृह्योऽचि परतः प्रकृत्या भवतीत्युच्यमाने पूर्वेण सह यो विकारः प्राप्तस्तस्यापि प्रकृतिभावः स्यात्, पुनरज्ग्रहणे तु न भवति, तत्रैकादेशे कृते तस्यादिवद्भावात्प्रगृह्यग्रहणेन ग्रहणादिको यणचीति यणादेशः प्रकृतिवद्भावाच्च भवति, मय उञो वो वेति पक्षे वकारः । 'नित्यग्रहणमनुवर्त्तत इति' । पूर्वसूत्रे नित्यग्रहणमेतदर्थमेव कृतं, तत्र त्वारम्भसामर्थ्यादेव नित्यो विधिः सिद्धः । 'नित्यमेव प्रकृतिभावो यथा स्यादिति' । अयमेव प्रकृतिभावो नित्यं यथा स्यात्कालान्तरेण कार्यान्तरसहितो मा भूदित्यर्थः ॥

"आङोऽनुनासिकश्छन्दसि" ॥ 'तेनेह न भवतीति' । अनर्थकस्यैवाकारस्य भवति, अभ्र आँ अप इत्यादौ सप्तम्यैव तदर्थस्योक्तत्वात्तदर्थश्रुतिराङनर्थकोऽनर्थान्तरवाचित्वात्, आतरदित्यत्र तु क्रियाविशेषणत्वादर्थवान्, कथं पुनरनर्थकस्य ङित्त्वं, यावता

ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

इत्युक्तम् । सत्यम् । वाक्यस्मरणयोरङिदित्यत्रैव तात्पर्यम् । अन्यत्र सर्वत्र आङ्ङिद्वेदितव्यः, एवं तावद्भाष्ये स्थितम् ॥

"इको ऽसवर्णे शाकल्यस्य ह्रस्वश्च" ॥ किमर्थश्चकारः, प्रकृत्येत्येतदनुकृष्यते ऽनेन । ननु च ह्रस्वविधानसामर्थ्यादेव स्वरसंधिर्न भविष्यति, भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यादेव स्वरसंधिर्न स्यादिति ह्रस्वानां तु प्राप्नोति, नहि ह्रस्वानां ह्रस्वो भवति प्रयोजनाभावात् । अस्ति प्रयोजनं, स्वरसन्धिर्मा भूदिति । एवं तर्हि प्रयोजनं प्रकृतिभावमात्रं क्वचिद्यथा स्यादिति, तेनेषाद्यवादिषु छन्दसि प्रकृतिभावमात्रं सिद्धं भवति । 'शाकल्यग्रहणं विभाषार्थमिति' । अथ विकल्पार्थं कस्मान्न भवतीत्याह । 'वाक्यसामर्थ्यादेवेति' । सवर्णे ऽचि दीर्घविधानाद्यणादेशस्यासवर्णस्वार्विषयः, अस्यापि विधेः स एव विषयः, ततश्च विषयैक्यादेव विकल्पे सिद्धे न तदर्थकमाचार्यग्रहणम् । 'सिन्नित्यसमासयोरिति' । नित्याधिकारविहितो ऽस्वपदविग्रहश्च समासो नित्यसमासः, एकापि सप्तमी विषयभेदाद्भिद्यते, सिति परतो नित्यसमासे च विषयइति, शाकल्यस्यायं विधिः शाकलः, कण्वादिभ्यो गोत्रइत्यण् । 'वाल्विय इति' । चतुरस्य प्राप्त इति चतेरण्, छन्दसि घस् । 'व्याकरणमिति' । कुगतिप्रादय इति समासः, तच्च नित्यमित्यनुवर्तते । 'कुमार्यर्थमिति' । कुमार्यै इदं कुमार्यर्थम्, अस्वपदविग्रहोयं नित्यसमासः ॥

"ऋत्यकः" ॥ 'सवर्णार्थमनिगर्थं च वचनमिति' । होतृ ऋश्यः सहृश्यस्य इत्यादौ, अन्यत्र पूर्वेणैव सिद्धत्वात् ॥

"अप्लुतवदुपस्थिते" ॥ ऋग्विदस्तत्रभव आर्षस्ततोन्योनार्षः, समुदायाद्वाक्यादवच्छिद्य पृथक्कृत्य स्वरूपे ऽवस्थाप्यते, कैः, पदकारैः, पदस्येयत्तापरिज्ञानाय अप्लुतेन तुल्यं वर्ततइत्यप्लुतवत्, तत्र येन साधर्म्येणाप्लुतवत्त्वं तद्दर्शयति । 'अप्लुतकार्यमिति' । तत्रापि प्लुतशब्देन विहितस्य कार्यस्य प्रतिषेध इति दर्शयति । 'प्रकृतिभावं न करोतीति' । अन्यथा स्वरसन्धेरपि प्रतिषेधः स्यात्, तस्यापि प्लुतकार्यत्वात् । उदाहरणेषु प्लुतकार्यप्रतिषेधादेकादेशो भवन् प्लुतमेवोपमृद्य भवति, स्वरसन्धि-

१ हि न भवतीति ३ पु० पा० ।

प्रकरणे प्लुतस्य सिद्धत्वात् । 'तत्र को दोष इति' । एकादेशेन निवर्त्यमानत्वात् प्लुतस्य श्रवणेन न भवितव्यमिति प्लुत एव निर्दिश्यतां किमर्थमतिदेशाश्रयणमिति प्रश्नः । 'अग्नी ३ इतीति' । यत्र प्लुताश्रयोपि प्रकृतिभावः प्राप्नोति प्रगृह्याश्रयोपि, तत्र प्लुताश्रयस्य प्रतिषेधेपि प्रगृह्याश्रयस्य प्रकृतिभावस्य प्रतिषेधाभावात् प्लुतस्य श्रवणं सिद्ध्यति, प्लुतप्रतिषेधे तु क्रियमाणेऽत्रापि श्रवणं न स्यात् ॥

"ईं ३ चाक्रवर्मणस्य" ॥ सूत्रे ईं चेति त्रिमात्रिकस्य निर्देशः । 'अचि परत इति' । उपस्थितग्रहणं वाक्यपरिसमाप्तिवृत्तम् । 'अस्तु ही ३ इत्यब्रूतामिति' । विभाषा पृष्टप्रतिवचने हेरिति प्लुतः, अस्तेर्लोटि तिप्, 'एरुः' । 'तदुपस्थिते निवृत्त्यर्थमिति' । तत्र पूर्वत्राप्लुतवद्भावस्य नित्यप्राप्तत्वात्, अनुपस्थिते प्राप्त्यर्थमिति, तत्र केन चिदप्राप्तत्वात् । 'इकारादन्यत्रापीति' । तथा च भाष्यम्, ईकारग्रहणेन नार्थ इत्यादि ॥

"दिव उत्" ॥ 'पदग्रहणमनुवर्त्तत इति' । अन्तग्रहणेनोप-समस्तमपि केवलं पदग्रहणमेवानुवर्त्तते, ततश्चार्थात् षष्ठ्यन्तं जायते, दिवशब्देन विशेषणात्तदन्तविधिः, ग्रहणवता प्रातिपदिकेनेति तु प्रत्ययविधिविषयं, व्यपदेशिवद्भावात् केवलस्यापि भवितव्यं, व्यपदेशिवद्भावो ऽप्रातिपदिकेनेत्येतदपि प्रत्ययविधिविषयमेव । 'सानुबन्धकस्यादिति' । दीव्यतेर्धातोरिकारो ऽनुबन्धः, प्रातिपदिकस्य तु न कश्चिदनुबन्धः । 'दिवः पदस्येति' । तदन्तस्य पदस्येत्यर्थः । 'द्युकाम इति' । दिवं कामयते इति शीलिकामिभक्ष्याचरिभ्यो णः । 'विमलद्युरिति' । विमला द्यौरस्मिन्निति बहुव्रीहिः । 'अक्षद्युभ्यामिति' । अक्षशब्द उपपदे दीव्यतेः क्विप्, तत्र च्छ्वोः शूडित्यूठ् । अथ तपरकरणं किमर्थं, यद्यपि ऋत उदिति तपरकरणेन ज्ञापितं भाव्यमानोप्युकारः सवर्णान् गृह्णातीति, तथाप्यान्तर्यतो ऽर्द्धमात्राकालस्य व्यञ्जनस्य मात्रिक एव भविष्यतीत्यत आह । 'तपरकरणमिति' । यद्यप्यनेन दीर्घो न प्राप्नोति

१ इत्यब्रवीदिति मुद्रितमूलपुस्तके पाठः ।
२ उत्तरपदेनेति पाठः ३ पु॰ ।

सवर्णान्तरेण तु प्राप्नोतीत्याह । 'कुभ्यां कुभिरिति' । उत्वस्याव-काशो यवाययवादिपरः, चिमनकु, ऊठो ऽवकाशः कूत्वा कूतं, अत्र तूभयोः प्रसंगस्तत्र परत्वादूठ् प्राप्नोति तपरकरणादुत्वमेव भवति । यदि प्राप्तस्योठो निवृत्त्यर्थं तपरकरणमित्युच्यते एवं तर्हि च्छ्वोः शूडनु-नासिके चेत्यत्र कथं कुभ्यां कुभिरिति परेण चोदिते वक्ष्यति ऊठि कृते द्विव उदिति तपरकरणान्मात्राकालो भविष्यतीति तद्विरुध्यते, तस्य चूठि कृते तस्यैवोठो मात्राकालो भविष्यतीत्ययमर्थः । नैष दोषः । ऊठि कृतत्येतस्य पूर्वेण वाक्यशेषेण सम्बन्धः, कथं कुभ्यां कुभिरिति, ऊठि कृतमिति, द्विव उदिति तपरकरणान् मात्राकालो भविष्यतीत्येतावान् परिहारग्रन्थः, तपरकरणस्य तूण्निवृत्तिरेव प्रयोजनं, तस्मादुत्वमेवात्र कर्तव्यं न पुनरूडित्यर्थः ॥

"एतत्तदोः सु लोपोऽकोरनञ्समासे हलि" ॥ 'सुशब्द इति' । एतेनैतत्तदोरिति सुशब्दापेक्षया संबन्धलक्षणा षष्ठीत्याचष्टे, यद्येवं सुर-त्येतस्य सापेक्षत्वाल्लोपशब्देन समासो न प्राप्नोति, नैवायं समासः, सु इति पृथक्पदं सुपां सुलुगिति लुप्तषष्ठीकम् । 'कस्य तयोः सुशब्द इति' । यदि यस्ताभ्यां विहितः सुः स तयोः संबन्धी भवति तदा परमस ददाति परमैष ददातीत्यादौ न स्यादिति मन्यमानः पृच्छति, इतरो विदिताभिप्रायः परिहरति । 'यस्तदर्थं न संबद्ध इति' । अर्थद्वारकश्च संबन्धः, यस्तदर्थगतमेकत्वमाचष्ट इत्यर्थः । परमस ददाती-त्यादावपि उत्तरपदार्थप्रधानत्वात्तदर्थगतमेवैकत्वमाचष्ट इति सिद्धो लोपः । प्रथमैकवचनस्यात्र सुशब्दस्य ग्रहणं न सप्तमीबहुवचनस्य, 'स्यश्छन्दसि' 'सो चि लोपे चेत्पादपूरण'मित्यत्र द्वयोरेव संभवः, द्वयोः सामान्येन ग्रहणं तर्हि कस्मान्न भवति, एवं तर्हि निरनुबन्धक-ग्रहणे न सानुबन्धकस्येति प्रथमैकवचनस्यैव ग्रहणमस्य सुकार उच्चा-रणार्थो नानुबन्धः । 'एष इति' । तदोः सः सावनन्त्ययोरिति सकारः, त्यदाद्यत्वं, षत्वम् । 'एषक इति' । 'अव्ययसर्वनाम्नामकच् प्राक् टे'-रित्यकच् । ननु रूपभेदात्साकच्कावेतत्तदावेव न भवतस्तत्किमकोरिति

प्रतिषेधेन, तत्राह। 'तत्पुरुषपतित इति'। अस्याश्च परिभाषाया अस्तित्वे अयमेव प्रतिषेधो लिङ्गम्। 'उत्तरपदार्थप्रधानत्वादिति'। एतच्च नञ्सूत्रएव व्याख्यातम्। इलञावश्व इत्यस्यानन्तरमिदं न कृतं, संहितायां यथा स्यादसंहितायां मा भूदिति॥

"स्यश्छन्दसि बहुलम्"॥ 'स्य इति'। षष्ठ्यन्तस्य प्रथमान्तस्यानुकरणं 'सुपां सुलुगिति' लुप्तषष्ठीकम्, अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वाद्वानुत्पत्तिरेव वा षष्ठ्याः, उदाहरणे सत्वादि पूर्ववत्॥

"सोचि लोपे चेत्पादपूरणम्"॥ स इति निर्देशः पूर्ववत्। 'के विहितिः'। अयं तु छन्दोधिकारादृक्ष्वेव बहुलं भाष्यते॥

"सुट् कात् पूर्वः"॥ 'संस्कर्तेति'। 'समुदाये सो वक्तव्यः' इति वचनात् 'समस्सुटी'ति द्विसकारकत्वाद्वा निर्दिष्टस्य सुटो मकारस्य सकारः, 'अत्रानुनासिकः पूर्वस्य तु वे'ति पूर्वस्यानुनासिकः। इह 'संपर्युपेभ्यः करोतौ भूषणे' 'किरतौ लवने' इत्यादौ ककारादावागमिनि टित्त्वादेव सुट्कात्पूर्वो लभ्यते। ह्रस्वाच्चन्द्रोत्तरपदे इत्यादौ कात्पूर्वत्वासंभवादनुपयोग एवेत्यनर्थकं कात्पूर्वग्रहणम्। स्यादेतत्। संचस्कारेत्यादावभ्यासे संजाते साभ्यासस्य करोतिस्थाच्चात्पूर्वः सुट् स्यात्, मा भूच्चात्पूर्वः कात्पूर्व एव यथा स्यादित्येवमर्थं कात्पूर्वग्रहणमिति। तच। अत्र हि लिटि द्विर्वचनं च प्राप्नोति, सुट् च, तत्र द्विर्वचनमकृते सुटि कृशब्दस्य प्राप्नोति कृते तु स्कृशब्दस्य, सुडपि कृते द्विर्वचने चकृशब्दस्य प्राप्नोति अकृते तु कृशब्दस्येत्युभयोरनित्ययोः परत्वात् सुटि कृते तस्य धातुग्रहणेन ग्रहणात् सहैव तेन द्विर्वचने 'शर्पूर्वाः खय' इति खयः शेषे संचस्कारेति सिद्धं, न च साभ्यासस्याकृतः सुडिति पुनः सुट्प्रसङ्गः, अस्मिन्नेव प्रयोगे लक्षणस्य प्रवृत्तत्वात्। ननु पूर्वं धातुः साधनेन युज्यतइति दर्शने पूर्वं साधनवाचिनि लकारे तदाश्रये च द्विर्वचने एकपदाश्रयत्वादन्तरङ्गे कृते पदद्वयाश्रयत्वाद्बहिरङ्गः सुट् पश्चाद्भवन् चात्पूर्वः स्यात्, समस्करोदित्यादौ चान्तरङ्गत्वात् परत्वाच्चाटि कृते तेन व्यवधानादेव सुट् स्यात्, विकरणान्ताकृभको ह्यडा-

समस्तमेव न व्यवदध्यात् करोतिं तु व्यवदधात्येव, इह च समस्कृत संस्कृथा इति यत्र करोतिरेवाङ्गं तत्राटः कृतत्वेन बहिर्भावादट एव पूर्वः सुट् स्यात्, अतो ऽडभ्यासयोरपि कृतयोः कात् पूर्वः सुड्यथा स्यादिति कर्तव्यं कात्पूर्वग्रहणं, न कर्तव्यम् । 'अडभ्यासव्यवाये-ऽपी' त्येतस्मादेव निर्देशादेतत्सिद्धं, न च तत्र करिष्यामीति कात्पूर्वग्रहणं, कृतेर्व्याप्यत्वासिद्धेः । तथाहि । क्रियमाणमप्येतत्कालावधारणार्थं वा स्यात् करोतेस्तस्यामवस्थायां सुड्भवति यस्यामवस्थायां भवन् कात्पूर्वो भवतीति, करोत्यवधारणार्थं वा, तस्य करोतेः सुड् भवति यस्य भवन् कात्पूर्वो भवतीति, तत्र पूर्वस्मिन् [1]पक्षे यद्यप्यन्तरङ्गे अप्यड्द्विर्वचने बाधित्वा कात्पूर्वग्रहणसामर्थ्यात् पूर्वं सुड्भवति पश्चात्तयोः कृतयोरिष्टं सिद्ध्यति, द्वितीये तु प्रत्युताभ्यासवर्तीनिवृत्त्यर्थमेव कात्पूर्वग्रहणं स्यात्, नहि तद्वर्तीभवन् कात्पूर्वः कृतः स्यात् । स्यादेतत् । न करोत्यवधारणार्थं कात्पूर्वग्रहणं, किं तर्ह्युपलक्ष्य विधिः, करोतेः सर्वत्र सुड् भवति स तु प्रदेशान्तरे प्राप्तः कात् पूर्वः कर्तव्य इति, एवमपि समस्कृत समस्कृथा इति सिद्ध्यति, अटः प्राक् प्राप्नुवन् कात्पूर्वो नीयतइति, समस्करोदित्यादौ त्वसिद्धिरेव, कथं, प्रदेशान्तरे प्राप्तस्य विधिरुपलक्ष्य भवति, न चात्र सुट् प्राप्तो ऽटा व्यवधानादिति कथमुपलक्ष्य विधिर्भवेत्, कथं च संचस्कारेत्यादावपि द्विःप्रयोगे द्विर्वचने उच्चारणभेदाच्छब्दभेद इति द्वौ करोती, तत्र यः समो ऽनन्तरो न तस्य ककारो यस्य च ककारो नासौ समो ऽनन्तर इति अप्राप्तत्वान्न च कात्पूर्वं विधीयेत, स्थाने द्विर्वचने च स्थानिवद्भावादेक एव करोतिः, स चाव्यवहित इति कात् पूर्वः प्राप्तः कात् पूर्वः कृत इति न कश्चिद्दोषः । तदेवं धातुः पूर्वं साधनेन युज्यते ततश्च क्रियमाणेऽपि कात्पूर्वग्रहणे नैवेष्टं सिध्यती' त्यडभ्यासव्यवायेऽपी' त्येतदेव कर्तव्यं, कात्पूर्वग्रहणं तु शक्यमकर्तुमिति वार्त्तिककारस्य मतः । यदि तु संपर्युपेभ्यः करोतावित्ति तृतीयानिर्देशेन समादिभिरुपसृष्टस्य सुड् विधीयते तदा व्यवहितस्याप्युप-

१ कल्पे इति ३ पु० पाठः ।

सृष्टत्वात्, कात्पूर्वग्रहणेनाप्ययमर्थः शक्यते संपादयितुम्, कथं, समस्करोदित्यादौ तावदन्तरेणापि कात्पूर्वग्रहणमटो न भविष्यति, तस्य करोतिं प्रत्यनवयवत्वात्, करोतेस्तु भविष्यति, व्यवहितस्याप्युपसृष्टत्वात्, समस्कृतेत्यादौ त्वटः पूर्वं प्राप्तः कात्पूर्वं वेद्यते, संचस्कारेत्यादौ च स्थाने द्विर्वचने कात्पूर्वं प्राप्तः कात्पूर्वं करिष्यते, द्विःप्रयोगे तु द्वयोरपि करोत्योः प्राप्तः पूर्वस्मादेव करिष्यते, नहि तस्य हलः कात्पूर्वः हलः स्यादिति सिद्धमिष्टम्। भाष्यकारस्तु मेने उभयं न कर्तव्यं पूर्वं धातुरुपसर्गेण युज्यते ततश्चानुत्पन्न एव प्रत्यये संस्करोति स्थिते सुटि कृते ककारस्ततस्तत्पूर्वत्वाभावान्न भविष्यतः। ननु च सत्तास्वरूपा क्रिया विशेषणमाकाङ्क्षति, सत्तामात्रस्य साधनानन्तरमिति पूर्वं धातुः साधनेन युज्यते, तदयुक्तरूपेति, कोऽर्थः, निमित्तविशेषणस्वरूपेति विशेषणस्वरूपा, निष्पत्तिस्तावद्विशेषणसंबन्धेनोपयुज्यते, प्रतिपत्तिस्तु विशेषणसंबन्धात्प्रागपि क्रियायाः संभवति, विशिष्टा च क्रिया साधनेन युज्यते। तथाहि। तिष्ठतीति गतिनिवृत्तेः साधनसंबन्धः प्रतीयते, प्रतिष्ठत इति गतेः, गच्छतीति गमनस्य, आगच्छतीत्यागमनस्य, करोतीति व्यापारमात्रस्य, संस्करोतीति भूषणस्य, विशिष्टं च क्रियोपसर्गसंबन्धे सत्येव प्रतीयत इति द्योतकत्वेन वाचकत्वेन वा पूर्वमुपसर्गसंबन्धोऽपेक्षणीयः, अवश्यं चैतदेवं विज्ञेयम्, अन्यथा भवतेरकर्मकत्वाद्भावे लकार उत्पन्नस्तस्यादनुशब्देन संबन्धेऽनुभूयते कम्बलो देवदत्तेनेति कथं कर्मणि लकारः स्यात्, अतः पूर्वं धातुरुपसर्गेण युज्यत इत्येतदेव संप्रतिपन्नम्। एवं च पूर्वोक्तन्यासेन सिद्धमिष्टमिति नार्थः कात्पूर्वग्रहणेन, नाप्यड्व्यवायेऽपीत्यनेन, यदि पूर्वं धातुरुपसर्गेण युज्यते प्रत्येता प्रत्येता प्रत्यायक इत्यादौ पूर्वं धातूपसर्गयोरेकादेशे तस्य धातुं प्रत्यादिवत्त्वात्तत एव प्रत्ययोत्पत्तावनिष्टं प्राप्नोति। नैष दोषः। नेन्द्रस्य परस्येत्यत्र ज्ञापितमेतत् पूर्वोत्तरपदयोस्तावत्कार्यं भवति पश्चात् स्वरसंधिरिति, प्रत्यक्ष इति वा निर्देशोऽस्यार्थस्य ज्ञापकः। वृत्तिकारस्तु उभयं वक्तव्यमिति

१ साधनसम्बन्धादिति पा· ३ पु·।

मन्यमानः कात्पूर्वग्रहणस्य तावत्प्रयोजनमाह । 'कात्पूर्वग्रहणमित्यादि' । किं पुनरभक्तत्वे प्रयोजनमत आह । 'तथाहीति' 'संस्कषीष्टेति' । आशिषि लिङ्, आत्मनेपद 'मुश्चे' ति कित्वं, सुट्, तयोः कात्पूर्वः सुट्, तस्य करोतिभक्तत्वात् करोतिग्रहणेन ग्रहणात् ऋतः संयोगादित्वात् आश्रयेतेति अतश्च संयोगादेरितीट् प्रसज्येत । 'संस्क्रियत इति' । कर्मणि लट् 'रिङ् शयग्लिङ्क्षु,' अत्रापि भक्तत्वे सुटः ऋतः संयोगादित्वात् 'गुणोऽर्तिसंयोगाद्योः' इति गुणः स्यात्, अतस्तौ मा भूतामिति अभक्तः सुडेषितव्य इति भावः । निघातोऽपि तर्हि न प्राप्नोति । समः पदस्य सुटा व्यवहितत्वात्सुटश्चापदत्वात् । 'गुणः कथमिति' । सुटोऽभक्तत्वेनाङ्गस्य संयोगादित्वाभावात्प्रश्नः । तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति स्थाने द्विर्वचनपक्षे द्विःप्रयोगे च समुदायस्यैवाङ्गसंज्ञेत्युक्तं, ततश्च तदङ्गमध्यपतितः तदङ्गग्रहणेन गृह्यते । नन्वेवमपि असंयोगादित्वं तदवस्थमत आह । 'संयोगोपधग्रहणं चेति' । अन्त्यादलः पूर्वस्य वर्णस्योपधासंज्ञाविधानात् तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इत्येतदुक्तम्भवति, यदि न संभक्तः सुट् टित्करणं किमर्थमित्यत आह । 'टित्करणमिति' । सुस्तुस्वञ्जामित्युच्यमाने सुरेत्यादौ यः सुशब्दो यश्चोपसर्गस्तस्यापि ग्रहणं स्यात्, ततश्च सुपं परिषष्टे पारसुरयतीत्यादावपि प्राप्नोति ॥

"अड्भ्यासव्यवायेऽपि" ॥ व्यवायो व्यवधानम्, अपिशब्दाद्व्यवधानेऽपि, असति तु तस्मिन् व्यवाय एव स्यात् । 'संचस्कारेति' । अतो भारद्वाजस्येत्येतदप्यसुट एवेष्यत इति वचनादिडागमः । 'पूर्वं धातुरित्यादि' । यद्यपि पूर्वं धातुः साधनेन युज्यत इत्यत्रापि दर्शने सुतरामेतदनारम्भणीयं तथापि स्वदर्शनत्वादुपपन्नत्वाच्चेदमेव दर्शनमुपन्यस्तम् । अपर आह । किमर्थं पुनरिदमुच्यते इत्यस्यानन्तरं यावतीति पठितव्यं, ततश्च पश्चादड्भ्यासावित्येवमन्तरङ्गावागमौ इति । परिहरति । 'अभक्तत्वेति' । अस्त्वर्थे । 'तत्र[1]ति' । [illegible] । 'एतस्मिंस्तु सती-

१ मुद्रित-मूल पुस्तके तत्रेति नास्ति ।

त्यादि' । ननु चास्मादेव वचनात्कृतयोरड्भ्यासयोस्तत्कृतकार्ययोर्षि सुट् कात्पूर्वः क्रियतां, यस्तु संकृत्यस्यामवस्थायां सुट् प्राप्नोति स केन बार्यते, उच्यते । नाप्राप्ते तस्मिन्नवस्थारम्भात्तस्यानेन बाधः, अपरे त्वेतद्व्याख्यभया-द्गाध्यकारमतमेव न्यायो मन्यन्ते, यत्पुनरुक्तमात्तुक्प्रसंग इति, नैव दोषः । अतश्च संयोगादेरित्यत्र तावदुपदेशइति वर्तते, क्व प्रकृतम्, इकाच उपदेशे ऽनुदात्तादिति, ततः किम्, उपदेशे संयोगादेरिति सुटि कृते न भविष्यति, गुणोऽर्तिसंयोगाद्योरित्यत्रापि नित्यमित्यनुवर्तते, क्व प्रकृतं, नित्यं छन्दसीति, ततः किं, नित्यं यः संयोगादिस्तस्य गुणः । सुटि कृते न भविष्यति ॥

"संपर्युपेभ्यः करोतौ भूषणे" ॥ 'संपूर्वस्य क्वचिदभूषणेऽपीष्यत इति' । एतच्च 'संस्कृतं भक्षा' इति निर्देशाल्लभ्यते ॥

"समवाये च" ॥ उदाहरणेषु भावे निष्ठा, एवं समुदितमित्यत्रापि ॥

"उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु" ॥ 'सत इत्यादि' । लब्धसत्ताकस्यार्थस्य पूर्वं ये गुणास्तेभ्योन्ये गुणा आधीयन्ते, येन तद्गुणान्तराधानं तत्पुनः किमर्थमित्याह । 'आधिक्यायेति' । आधिक्यं वृद्धिः । 'वृद्धस्य वा तादवस्थ्यायेति' । तस्य वृद्धियुक्तावस्थायाः प्रच्युतिपरिहारायेत्यर्थः । समीहा चेष्टा । 'अगम्यमानार्थस्येति' । 'अर्थप्रकरणादिना वाक्यस्येति' । वाक्यैकदेशस्येत्यर्थः । 'एधोदकस्येति' । जातिद्वन्द्वः, 'कृञः प्रतियत्ने' इति षष्ठी, 'प्रतियत्नप्रकथनोपयोगेषु कृञ' इत्यात्मनेपदम् । 'उपस्कृतं भुङ्क्ते इति' । क्रियाविशेषणम्, विकृतं भुङ्क्ते इत्यर्थः । 'उपस्कृतं जल्पतीति' । साध्याहारं यथा तथा जल्पतीत्यर्थः । अथैवं कस्मान्न कृतं संप्रतिभ्यां करोतौ भूषणसमवाययोः, उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु चेति । सूत्रकारं पृच्छ ॥

"किरतौ लवने" ॥ 'किरतौ लवनविषयइति' । अर्थद्वारकं किरतेर्लवनविषयत्वं, लवनविषये विक्षेपे यः किरतिर्वर्तते तत्रेत्यर्थः । तदाह ।

'विक्षिप्य लुनन्तीत्यर्थ इति' । साक्षात्तु विषये किरतेर्लवनमेवार्थः स्यात् । 'चमुलव वक्तव्य इति' । आभीक्ष्ण्याद्र्थमुलर्थस्याभावात् ॥

"हिंसायां प्रतेश्च" ॥ 'हिंसायां विषयइति' । न त्वभिधेयायां विक्षेप एव त्वभिधेयस्तदेव दर्शयति । 'तथेति' । उदाहरणे नपुंसके भावे क्तः, हंशब्दः कोपे, परिनिविभ्य एव सुटः सत्वं न प्रतेः ॥

"अपाच्चतुष्पाच्छकुनिष्वालेखने" ॥ 'तस्मिन्विषयइति' । न त्वभिधेये, विक्षेप एव त्वभिधेयस्तदाह । 'आलिख्य विक्षिपतीत्यर्थ इति'। 'हर्षजीविकेत्यादि' । हर्षः प्रमोदः, जीविका प्राणपरित्राणोपायः, कुलाय आश्रयः, किं पुनरुदाहरणएवात्मनेपदं भवति न प्रत्युदाहरणे ऽत आह । 'हर्षजीविकेत्यादि' ॥

"कुस्तुम्बुरूणि जातिः" ॥ सूत्रे नपुंसकलिङ्गेन बहुवचनेन च निर्देशात् फलजातावेव सुटा भवितव्यं न त्वोषधिजातावित्याशङ्क्याह । 'सूत्रनिर्देशइति' । नपुंसकलिङ्गग्रहणं बहुवचनस्याप्युपलक्षणम् ॥

"अपरस्पराः क्रियासातत्ये" । 'अपरस्परा इति' । अपरे च परे चेति द्वन्द्वः, निपातनादल्पाच्तरस्य परनिपातः । 'सार्था गच्छन्तीति' । सार्थभूता गच्छन्तीत्यर्थः । 'सततमविच्छेदेनेति' । न कदा चिदस्मिन् महापथे गमनं विच्छिद्यतइत्यर्थः । अयं चार्थः, सुटा द्योत्यते । 'किमिदमिति' । अस्मादेव निपातनान् मलोप इत्युच्यमाने सततमिति न सिद्ध्यति, सूत्रे ध्यन्तोच्चारणादिति प्रश्नः । 'कथमिति' मलोपस्य लक्षणं न दृश्यते । अथ सातत्यइत्येतदेव निपातनं सामान्येन ततशब्दे परतः समो मकारस्य लोपो भवतीत्यस्यार्थस्य ज्ञापकं कल्प्यते, सन्ततमिति न सिद्ध्येत् बाधकत्वान्निपातनानामिति मन्यमानस्य प्रश्नः । 'समस्तते विकल्पेनेति' । अयमभिप्रायः । सातत्यशब्दं पूर्वाचार्यलक्षणसिद्धमुच्चारयता पूर्वाचार्यलक्षणमाश्रितमतस्तेन समो मकारस्य लोपो विधीयतइति, एवं च कृत्यावश्यंप्रभृतीनामपि कृत्यादिषु मकारलोपः

१ कोपं द्योतयतीति १ पु० पाठः । २ प्राणपरित्राण इति ३ पा० ।

सिद्धौ भवति, तदेव पूर्वाचार्यलक्षणं पठन्ति। 'लुम्पेदित्यादि'। अन्त्यमिति शेषः। कृत्यप्रत्ययान्ते परतोऽवश्यंशब्दस्यान्त्यं लुम्पेत्, लोपमस्य कुर्यादित्यर्थः, 'शे मुचादीना'मिति नुम्। अवश्यकार्यमित्युदाहरणम्, तुमिति वृत्तभङ्गभयात्षष्ठी न कृता, तुम्प्रत्ययान्तस्यान्त्यं लुम्पेत् काममनसोः शब्दयोः परतः, कर्तुं कामोऽस्य कर्तुकामः, कर्तुं मनोऽस्य कर्तुमनाः, तुमश्चोपसंख्यायते, अक्रियोपपदत्वादित्याहुः। संशब्दस्यान्त्यं लुम्पेत्, वा विकल्पेन, हिततयोः शब्दयोः परतः, सहितं, संहितं, सततं, संततं, गतिसमासः, मांसशब्दस्याप्यन्त्यं लुम्पेत्, क्व, पचि, पचतिधातौ, किंविशिष्टे युट्घञोः, युटि घञि च परतो यः पचिस्तस्मिन्नित्यर्थः, मांस्पचनं मांस्पाकः, कर्मणि षष्ठ्याः समासः, संहितायां समासे चैव मलोप इत्याहुः। अथ संततशब्दात् ष्यञ् भवति वा न वा सान्तत्यमिति, नेत्याहुः॥

"गोष्पदं सेवितासेवितप्रमाणेषु"॥ 'गावः पद्यन्तेऽस्मिन्निति'। पुंसि संज्ञायामित्यधिकरणे घः, कर्तरि षष्ठ्या समासः। 'अगोष्पदान्यरण्यानीति'। ननु च सूत्रे गोष्पदशब्द उपात्तस्तत् किमिदमित्यत आह। 'असेवितइत्यादि'। क्रियते चेदमसेवितग्रहणम्, न च तत्र गोष्पदशब्दः संभवति, तस्मादसेविते गोष्पदशब्दार्थनिपातनं विज्ञायते। 'नार्थ एतेनेति'। असेवितग्रहणेन। कथं तेन विना सिद्धिस्तत्राह। 'गोष्पदप्रतिषेधादिति'। 'सत्यमिति'। गोष्पदप्रतिषेधादिति यदुक्तं तत् सत्यं मन्यते न तु नार्थ एतेनेति, तद् यदि सत्यं किमर्थं तर्ह्यसेवितग्रहणमित्याह। 'यत्र त्विति'। नञ्समासो हि तत्पुरुषः स्वभावादुत्तरपदार्थसदृशमर्थमाचष्टे अब्राह्मणवत्, ततश्च न गोष्पदमगोष्पदमिति नञ्समासे कृते यत्र सेवितस्य सेवनस्य प्रसङ्गोऽस्ति तत्रैवागोष्पदमिति स्यात्, स एव गोष्पदस्य देशस्य सदृशः, यत्र त्वत्यन्तासंभव एव सेवितस्य तत्र न स्यात्, असेवितग्रहणसामर्थ्यात्तु बहुव्रीहिराश्रीयते, स ह्यत्यन्ताभावेपि भवति, तेन येषु गवामत्यन्तासम्भवस्तान्यरण्यान्यसेवितशब्देनोच्यन्ते, ततश्च तत्राप्यगोष्पदमिति भवति, अत्यन्तासंभवं स्पष्टयति। 'यानि हि महा-

न्यरण्यानीति'। तत्र केचिदाहुः। यत्र गवामत्यन्तासंभवस्तत्रैव गोष्पदशब्दः प्रयोक्तव्यो न त्वसंभवइति। अन्ये त्वविशेषेणेच्छन्ति। न चैवमसेवितग्रहणस्य वैयर्थ्यम्, असति ह्यस्मिन्नत्यन्तासंभवे न स्यात्। 'गोष्पदपूरमिति'। 'वर्षप्रमाणऊलोपश्चास्यान्यतरस्या'मिति णमुल्। ननु च गोष्पदमिति षष्ठीसमासो ऽयं तस्य गोः संबन्धि पदमर्थः, न तु प्रमाणं, तत्राह। 'नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयतइति'। तथा च गोष्पदपूरं वृष्टो देव इति, असत्यपि गोष्पदपूरणे प्रयुज्यते, यथा चेलक्नोपं वृष्टो देव इत्यसत्यपि चेलक्नोपे॥

"आस्पदं प्रतिष्ठायाम्"॥ 'आत्मयापनायेति'। प्राणधारणमात्मयापनन्तदर्थं यत्स्थानं सा प्रतिष्ठा। 'आस्पदमिति'। आङ्पूर्वात्पदेः पूर्ववदधिकरणे घः, लोकाश्रयत्वाद्स्मादेव निपातनाद्वा नपुंसकलिङ्गता, आपदमित्यव्ययीभावसमासः॥

"आश्चर्यमनित्ये"॥ यद्याश्चर्यमनित्ये निपात्यते, घटादावतिप्रसङ्ग इत्यत आह। 'अनित्यतयेत्यादि'। लोके यदनुचितमदृष्टपूर्वमुपलभ्यते तदचित्यतया व्याप्तं कादाचित्कत्वमतो ऽनित्यता विषयभूता भवति, तया विषयभूतयाद्भुतत्वं विस्मयहेतुत्वमुपलक्ष्यते, उदाहरणे 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेपी'त्यनवक्लृप्तावसंभावनायां लिङ्, कस्यस्य म[1]न्धकर्णस्य चाविशिष्टे कालादौ भोजनमध्ययनं चादृष्ट[2]पूर्वं दृश्यमानमद्भुतं भवतीति। 'आश्चर्यमिति'। 'चरेराङि चागुरा'विति यत्। आचर्यमनुष्ठेयमित्यर्थः॥

"वर्चस्के ऽवस्करः"॥ कुत्सितं वर्चो वर्चस्कं, कुत्सितइति कन्, 'सोपदादाविति' सत्वम्। कना निर्ह्रासो दीप्तौ मा भूदिति। दीप्तावपि हि वर्चःशब्दो वर्तते। 'अन्नमलमिति'। भाण्डेषु यदन्नं काष्ठादिना ऽपकृष्य काकादिभ्यो विकार्यते तदन्नमलम्। 'अवकीर्यतइति'। भूमाववक्षिप्यतइत्यर्थः। 'तत्संबन्धाद् देशो-

१ मन्धस्येत्येव पाठः १ पु०।
२ अपूर्वस्येति पाठः १ पु०।

पीति'। यत्र भाण्डानि परिमृज्यन्ते देशे स देशः, तथा च याज्ञवल्क्यः[1]। 'संमार्जितावस्करया व्यये चामुक्तहस्तये'ति। अपर आह। पुरीषं वर्चस्कं तद्देशश्चेति। 'अवकर इति'। ब्रह्मचारिणः स्त्रियां रेतःसेकोऽवकरः, यतो ऽवकीर्णी भवति॥

"अपस्करो रथाङ्गम्"॥ अत्र सूत्रे तृतीय उपसर्गः पूर्वत्र पञ्चः॥

"विष्किरः शकुनिर्विकिरो वा"॥ 'विष्किरो वेत्यादि'। शकुनावभिधेये विष्किर इति वा सुविनपात्यतइत्येतावतैव सुट्विकल्पः सिद्ध इत्यर्थः। 'विकिरग्रहणमित्यादि'। असति तस्मिन् कप्रत्ययान्तस्य विकिरशब्दस्य शकुनौ विकल्पार्थमेवेदं वचनं स्यादिति विकिरशब्दस्यान्यत्र प्रयोगो न निर्वाहितः स्यादिति, पुनर्विकिरग्रहणे तु सति भवति, यथा तु भाष्यं तथा विष्किरः शकुनौ वेत्येतावत् सूत्रम्॥

"ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे"॥ 'सुडागमो भवतीति'। पूर्वे कात्पूर्वग्रहणादभक्तः सुडित्युक्तम्, इह तु कात्पूर्वत्वं न संभवति, आगमलिङ्गं च टित्त्वमस्तीत्यागम एव सुडुक्त इति भावः, स च भवन्नुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति चन्द्रशब्दस्यैव भवति। 'सूर्याचन्द्रमसाविति'। द्वन्द्वः। 'देवताद्वन्द्वे चे'त्यनङ् 'उत्तरपदमित्यादि'। स्वनिकायप्रसिद्धिरेवैषा॥

"प्रतिष्कशश्च कशेः"॥ 'अत्र यद्यपीत्यादि'। 'कशेरिति'। यद्धातोरुपादानं तस्य नान्यत्प्रयोजनमिति भावः॥

"प्रस्कण्वहरिश्चन्द्रावृषी"॥ हरिश्चन्द्रो राजर्षिः। 'प्रकण्वो देश इति'। कण्वं पापं तत्प्रगतं यस्मात्स एवमुच्यते, हरिः चन्द्रो यस्य मुग्धस्य स हरिचन्द्रः॥

"मस्करमस्करिणौ वेणुपरिव्राजकयोः"॥ 'परिव्राजके त्विनिरपीति'। मत्वर्थाभावादिनिरप्राप्तो ऽतः सोपि निपात्यते, नहि परिव्रा-

---

१ पुस्तकद्वयेप्येवमेव पाठः, याज्ञवल्क्यस्मृतौ तु 'संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी'ति पाठ उपलभ्यते, मनुस्मृतावपि 'सुसंस्कृतोपस्करया व्यये चामुक्तहस्तये'ति पाठः।

यको मस्करेण तद्वान्, मस्करेण तु वेणुना तद्वान् भवति, दण्डधारणात्, ततः किं, मस्करशब्दादिनिना सिद्धम् । एवमपि सयोगे मत्वर्थीयविधानान्मस्करसंयुक्त एव मस्करीत्युच्येत,माभूदेवं परिव्राजकमात्रवचनो यथा स्यादितीनिर्निपात्यते, व्युत्पत्तेरदर्शनाद्वा नात्र स्पष्टं निपात्यं तद्दर्शयति । 'के चिदिति' । 'माकरणशील इति' । प्रतिषेधशील इत्यर्थः । 'कर्मापवादित्वादिति' । कर्मशब्देनेह काम्यकर्माणि विवक्षितानि न नित्यनैमित्तिकानि, तानि हि मुमुक्षोरपि कर्त्तव्यानि । यथाहुः ।

मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायनिवृत्तये ॥

इति । तानि कर्माण्यपवदितुं प्रतिषेद्धुं शीलमस्य स कर्मापवादी । परमहंसास्तु कर्ममात्रमपवदन्ति । 'मा कुरुतेति' । न कर्त्तव्यानीत्यर्थः । कर्मणि लुङ् ॥

"कास्तीराजस्तुन्दे नगरे" ॥ के चिन्नगरे इति प्रथमाद्विवचनान्तमाहुः । वृत्तौ तु सप्तम्यन्तं व्याख्यातम् । 'कास्तीरमिति' । इषदर्थे चेति काभावः ॥

"कारस्करो वृक्षः" ॥ 'पारस्करप्रभृतिष्वेवेति' । नेदं[1] सूत्रमधीयतइत्यर्थः ॥

"पारस्करप्रभृतीनि च संज्ञायाम्" ॥ रूढिशब्दा एते यथाकथं चिद्व्युत्पाद्याः, पारङ्करोतीति पारस्करः । कृञो हेत्वित्यादिना टः । रथं यातीति रथस्या । आतोनुपसर्गे कः, सत्वमप्यत्र निपात्यते । अन्ये तु सकारमेव पठन्ति । किं करोतीति करोतिर्डुः, किमोन्त्यलोपः, सुट्, किष्कुः । किमपि धत्ते किष्किन्धा । पूर्ववत्कः, किमो द्विर्वचनं पूर्वस्य मलोपः, सुट्, उभयत्राप्यत्र षत्वमपि निपात्यते । तत्करोतीति तस्करः । अत्र हि तच्छब्देन चोरकर्म प्रसिद्धं निन्द्यं परामृश्यते । 'प्रातुम्पताविति' । तुप तुम्प हिंसार्थौ, इत्येतस्मिन्धातौ परतः प्रशब्दात्परः सुट् भवति धात्वर्थस्य

[1] मूले नेदं सूत्रमधीयतइति पाठो दृश्यते स पदमञ्जर्यसंमतः ।

धेट्टोः कर्त्ता भवति, प्रस्तुम्पतीति पक्षे तिबन्ते[1] सुट्, स्वशब्देन धातुरूपा-त्सङ्घातादावपि भवति प्रस्तुम्पतो गावो प्रस्तुम्पन्ति गाव इति । 'चित्तिचि-त्तयोरिति' । चिती संज्ञाने, क्तिन्, नपुंसके भावे क्तः ॥

प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपो निश्चयसंयोगात्प्रायश्चित्तमिति स्मृतम् ॥

"अनुदात्तं पदमेकवर्जम्" ॥ 'एकवर्जमिति' । एकं वर्जयित्वे-त्यर्थः । द्वितीयायां चेति णमुल् । तत्र हि परीप्सायामिति प्रायिकम्, अत्र यदि पदमिति जातावेकवचनं स्यात्तदेकवर्जमित्येकशब्देनापि प्रत्या-सत्त्या पदमेवोच्येत, ततश्चायमर्थो भवति, वाक्ये पदान्यनुदात्तानि भवन्ति एकं पदं वर्जयित्वेति, अनुदात्तशब्दश्चेदानीं लौकिकः, लोके ह्यचामनुदात्तादिगुणयोगे हलपि तदनुरक्तत्वात्तद्धर्मा इत्युच्यतइति अज्ह-ल्समुदायरूपं पदमेवानुदात्तमिति सामानाधिकरण्येन व्यपदिशति । अत्र पक्षे किमेकं वर्जनीयमिति नियमकारणाभावात्सर्वेषामेव पदानां पर्यायेण वर्जनात्स्वरनियमो न स्यात् तस्मात्पदमिति व्यक्तिनिर्देशः, विवक्षितं चैकत्वम् । अनुदात्तशब्दश्च नीचैरनुदात्त इत्यज्विशेषे पारि-भाषिक इति तस्यैव ग्रहणं युक्तम्, एकशब्देनापि सन्निधानादज्रेवोच्यते, कथं तह्यज्झल्समुदायरूपस्य पदस्याज्मात्रवाचिनानुदात्तशब्देन सामाना-धिकरण्यमवयवावयविनोरभेदोपचारात्, अर्शआद्यच्प्रत्ययान्तत्वाद्वानु-दात्ताच्कं पदमेवानुदात्तं, यद्येवमनुदात्तशब्देनापि पदमेव प्राधान्येनोच्यते अच् गुणभावेनेति पुनरप्येकशब्दस्य संख्येयापेक्षायां प्रधानभूतपदमेव संख्येयं प्राप्नोति। उच्यते। पदमित्येकत्वं विवक्षितमित्युक्तं, तत्रैकं पदमनु-दात्ताच्कं भवत्येकं पदं वर्जयित्वेति नायमर्थः सम्भवतीति सामर्थ्याद्गुण-भूतोऽप्यजेवैकशब्देनोच्यते । यद्वा पदशब्दोऽपि लक्षणया तत्स्थेष्वच्षु वर्त्तते, तत्राचां पदस्थत्वाव्यभिचारादेकत्वविवक्षार्थमेव पदग्रहणं, सर्वथा त्वयमर्थो विवक्षितः, एकस्मिन्पदे वर्त्तमाना अचोनुदात्ता भवन्ति एकमचं वर्जयित्वेति । एवं स्थिते यदीदं स्वतन्त्रं लक्षणं स्यात्तदा

१ तिबन्तइति नास्ति २ पु० ।

नियमो वा स्यादेकमचं वर्जयित्वा परिशिष्टमनुदात्तमेव भवतीति, विधिर्वा, तथाच पक्षे येषामचां लक्षणान्तरेणोदात्तः स्वरितो वा विधीयते तत्रानियमप्रसङ्गाभावात्तद्व्यतिरिक्तविषयमेवेदं भवति । अस्ति हि तत्रानियमप्रसङ्गः, अस्वरस्याच उच्चारणासम्भवात् । 'एकवर्जमिति' । यस्ययस्योदात्तस्वरितविधानं स स वर्ज्यं इत्यर्थो भवति, ततश्चत्वार इत्यादावागमादीनां पृथक् स्वरप्रसङ्गः, आमलकीज इत्यत्र ङीषः प्रत्ययाद्युदात्तत्वं 'गतिकारकोपपदात्कृदि'ति जशब्दस्योदात्तत्वं 'दीर्घकाशतुषभ्राष्ट्रवटञ्जे'इति पूर्वपदाद्युदात्तत्वम्, अन्त्यात्पूर्वं बह्वच इति लकाराकारस्योदात्तत्वमिति युगपदुदात्तचतुष्टयप्रसङ्गः । ननु च नाप्राप्ते कृत्स्वरआरभ्यमाणेन दीर्घकाशेत्याद्युदात्तत्वेनापोदितत्वादेव कृत्स्वरो न भविष्यति, तथाद्युदात्तत्वं कुटीज इत्यादौ सावकाशमुपसरज इत्यादौ सावकाशे 'नान्त्यात्पूर्वं बह्वच' इत्यनेन परत्वाद् बाधिष्यत इति कथमुदात्तचतुष्टयप्रसङ्गः । उच्यते । विरोधे समानफलत्वे बाध्यबाधकभावः, विप्रतिषेधेऽपि विरोध एव, तच्चोभयं स्वरेषु नास्तीति कृत्कृत्यप्रत्ययसंज्ञानामिव समावेशप्रसङ्गः, सत्यपि विप्रतिषेधे ङीष उदात्तत्वे कृते पश्चादन्त्यात्पूर्वं बह्वच इत्येतस्मिन्प्रवृत्तेऽपि पूर्वकृतस्य ङीष उदात्तस्यानिवृत्तेरनिष्टमेव । यदि च यस्ययस्योदात्तस्वरितविधानं तंतं वर्जयित्वा परिशिष्टमनुदात्तमेवेत्यर्थः स्यात्पदमेकवर्जमिति द्वयमपि व्यर्थं स्यात्, सामान्येनाचोऽनुदात्ता इत्येवास्तु, प्रत्ययाद्युदात्तत्वादिविषये तैर्बाधितत्वादेवानुदात्तत्वं न भविष्यति, तस्मात्पदमेकवर्जमिति वचनादयं स्वतन्त्रो नियमः । अथ विधिस्तदा येषामचां लक्षणान्तरेणोदात्तः स्वरितो वा न विधीयते तेष्वप्यनुदात्तस्य पक्षे प्राप्तत्वाद्विधिरनुपपन्न इति लक्षणान्तरेण येषामुदात्तः स्वरितो वा विहितस्तएकस्मिन्पदे वर्तमाना अनुदात्ता भवन्त्येकमचं वर्जयित्वेत्यर्थः स्यात्, क एको वर्ज्य इति न ज्ञायेत, अथापि परनित्यादिभिर्व्यवस्था एवमपि सतिशिष्टेनापि व्यवस्था न स्यात्, कथ,मोपगवत्वमित्यत्र द्वे प्रत्ययाद्युदात्तत्वे, तत्रैकस्यानुदात्तत्वं विधीयमानं कस्य भवतु उदात्तस्वरितव्यतिरिक्तानां चाचाम्

नियमप्रसङ्ग एवावतिष्ठेत, तदेवं स्वतन्त्रेऽस्मिन् विधौ नियमे वा नेष्टं सिद्ध्यति । अथाधिकारः स्यात्तदा कर्षात्वतो घञोऽन्त इत्यत्रास्योपस्थाने सत्ययमर्थो भवति कर्षशब्दस्याकारवतोऽन्त उदात्तो भवति तमेकं वर्जयित्वा तस्मिन्पदे वर्तमानाः परिशिष्टा अचोऽनुदात्ता भवन्तीति, एवमन्यत्रापि, यत्रयत्रोपस्थानं तत्रतत्र सूत्रविहितं स्वरं वर्जयित्वा परिशिष्टस्यानुदात्तविधानम् । एकग्रहणमपि तत्र विधीयमानस्य स्वरस्योपलक्षणार्थं, तेन 'तवै चान्तश्च युगपत्' 'उभे वनस्पत्यादिषु युगपद्' इत्यादौ द्वयोरपि वर्जनं भवति । इन्द्राबृहस्पती इत्यत्र बृहस्पतिशब्दे वनस्पत्यादित्वाद् द्व्युदात्ते इन्द्रशब्देन द्वन्द्वे 'देवताद्वन्द्वे चे'ति द्वयोरपि प्रकृतिस्वरत्वमिति त्रयाणां वर्जनं भवतीत्येवं षाष्ठिके स्वरे न कश्चिद्दोषः । 'चाऽनुदात्तश्च' 'समानोदरे शयित ओ चोदात्तः' 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्त' इत्यादिषु प्रदेशान्तरवर्तिषु स्वरविधिष्वस्यानुपस्थानात्तेषु परिशिष्टस्यानुदात्तत्वं न स्यात्, एकवर्जमिति च व्यर्थं स्यात् अथमनुदात्तं पदमित्येवाधिकारोऽस्तु, न चैवं तत्तत्सूत्रविहितस्यापि स्वरस्यानुदात्तप्रसङ्गः, तद्विधानसामर्थ्यात्, तदेवं पक्षान्तरसम्भवात्परिभाषेयमिति निश्चित्याह । 'परिभाषेयमिति' । लिङ्गवती चेयं, स्वरविधिश्च लिङ्गमित्याह । 'स्वरविधिविषयेति' । 'यत्रान्य इति' । अनुदात्तापेक्षमन्यत्वम् । 'उदात्तः स्वरितो वेति' । अनुदात्तस्यानुदात्तवर्जनं व्यर्थमिति तद्विरोधाद् उदात्तः स्वरितो वा परिसंख्येयः, तद्विधावेवास्योपस्थानमिति भावः । उपस्थितमित्यनेन स्वरविधिभिरस्यैकवाक्यत्वता दर्शिता । 'कः पुनरिति' । वर्ज्यविशेषस्य सूत्रेऽनिर्देशात्प्रश्नः । 'यस्य स्वरो विधीयत इति' । यत्रेदमुपतिष्ठते तत्र यः स्वरो विधीयते स उच्यते । 'असाविति' । यदि ह्यसावपि न वर्ज्येत तस्य तत्स्वरविधानमनर्थकं स्यात् । 'धातुस्वरं श्नास्वरो बाधत इति' । सति शिष्टेन व्यवस्थाया वक्ष्यमाणत्वात् । 'श्नास्वरं तस्स्वर इति' । बाधत इत्यनुषङ्गः । अत्रापि हेतुर्वक्ष्यते विकरणस्वरस्तु सतिशिष्टोपीत्यत्र । 'तस्स्वरमाम्स्वर इति' । पूर्ववदनुषङ्गः । सति शिष्टत्वं हेतुः । 'आगमस्येत्यादि' । उपलक्षणमेतत् ।

अनेन हि तत्तल्लक्षणाभिनिर्वृत्तानां बहूनामुदात्तस्वरितानां समावेशनिवृत्तिः प्रयोजनमस्येत्युच्यते। न चैतावदेव प्रयोजनं, येषामपि केनापि स्वरित उदात्तो वा न विधीयते, यथा ऽनेकाच्सु प्रत्ययेषु धातुषु वा ऽऽद्यन्तव्यतिरिक्तानामचां तेषामप्यनुदात्तनियमस्यैतदधीनत्वात्। 'चत्वार इति'। चतेरुरनिति चतुरशब्द आद्युदात्तः। 'अनड्वाह इति। 'अनसि वहेः क्विप् डश्चानस' इति क्विप्, यजादित्वात् संप्रसारणम्, अनःशब्दोऽसुन्प्रत्ययान्त आद्युदात्तः, गतिकारकोपपदात्कृदिति उत्तरपदप्रकृतिस्वरेण धातोरन्त उदात्तः। 'अस्थनीति'। असिसञ्जिभ्यां क्थिनित्याद्युदात्तो ऽस्थिशब्दः, दधिशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः, नबिति नपुंसकाख्या। यस्यासौ स्वरो विधीयते स वर्ज्यत इत्युक्तं सर्वेषां चागमादीनां स्वरो विधीयत इत्यविशेषेण वर्जनप्रसङ्ग इत्यत आह। 'परनित्यान्तरङ्गापवादैरिति'। स तस्मिन्योगे सर्वेषामेव तेषां स्वकस्वरवर्ज्यमन्यमनुदात्तं चिकीर्षतां परस्परविरोध उपजायते, परत्वादिभिर्युक्तैव व्यवस्था। 'सतिशिष्टेन चेति'। व्यवस्थेत्यपेक्षते। एतदेव विवृणोति। 'यो हीति'। सामान्येनोक्तमुदाहरणनिष्ठं करोति। 'तथाहीति'। एतच्च सतिशिष्टस्य बाधकत्वं न्यायतस्सिद्धम्, कथमुदात्तस्वरितविधिभिरेकवाक्यतापन्नयाऽनया शेषनिघातः क्रियत इत्युक्तम्. ततः किमुत्सर्गस्यापवादस्य वा या चरमा प्रवृत्तिस्तस्यामिदमुपतिष्ठते, एवं च तस्यैव लक्षणस्य या चरमा प्रवृत्तिस्तस्या उपस्थाने पूर्वा प्रवृत्तिर्बाध्यते, तदर्थोपगवत्वमिति, अत्र ह्याद्युदात्तश्चेत्यस्य प्रतिप्रत्ययमावृत्तौ त्वप्रत्यये यदा प्रवर्त्तते तदा ऽनया निघातः क्रियते, यदि सतिशिष्टस्वरो बाधको विकरणस्वरोऽपि लसार्वधातुकस्वरस्य बाधकः प्राप्नोति. तत्राह। 'विकरणस्वरास्त्विति'। एवं मन्यते। यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति तज्ज्ञापकमुक्तस्यार्थस्य, अन्यथा यद्यपि लावस्थायां तासिर्विधीयते तथापि लकारमात्रापेक्षत्वादन्तरङ्गेषु च लादेशेषु कृतेषु पश्चात्तासिरिति तत्स्वरस्य सतिशिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं तत्स्यादिति। 'विभक्तिस्वरादिति'। सतिशिष्टत्वाद्विभक्तिस्वरे प्राप्ते वचनम्। 'नञ्स्वरेणेति'।

तत्पुरुषे तुल्यार्थेति प्रकृतिभावविहितेन । 'विभक्तिनिमित्तस्वरादिति' विभक्तिर्निमित्तं यस्य तस्य यः स्वरस्तस्मादित्यर्थः । 'वाक्ये हीत्यादि' । देवदत्तशब्द आमन्त्रितस्वरेणाद्युदात्तः, गामित्याद्युदात्तः, गमेर्डोः प्रत्ययस्वरः, औतोम्शसोरित्यात्वमेकादेश एकादेश उदात्तेनोदात्तः, निपाता आद्युदात्ता, उपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वे वर्जितत्वादभेः फिषित्यनेनान्तोदात्तत्वं, फिषिति प्रातिपदिकस्य पूर्वाचार्याणां संज्ञा । आङ् उपसर्गस्वरेणाद्युदात्तः । अजेर्लोट्, तिङ्ङतिङ इति निघातः, शुक्लशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, टापा विभक्त्या चैकादेश उदात्तेनोदात्तः, तदेवं पदग्रहणाद्वाक्ये पृथगेव स्वरो भवति । ननु च यदि वाक्येऽपि शेषनिघातः स्यात्, ततश्च सतिशिष्टस्वरत्वादीनां व्यवस्थापकानां तत्रासंभवात्क एको वर्जनीय इति न ज्ञायेत । सत्यं, विशेषाग्रहणात्पर्यायेण वर्जनं भविष्यति । यदि तर्हि पदग्रहणं क्रियते एवं सति यावत्पदसंज्ञा न भवति तावच्छेषनिघातेन न भवितव्यं, ततश्च कुवल्या विकारः कौवलमित्यत्रानुदात्तादेश्चेत्यञ् न प्राप्नोति, यतः कुवलशब्दोयं ग्रामादित्वेनाद्युदात्तः, गौरादित्वान्ङीषि विहिते ऽपि पदव्यपदेशाभावादाद्युदात्तत्वं न परित्यजतीत्यत आह । 'परिमाणार्थं चेति' । पदमत्र गौणमभिप्रेतं यस्य पदसंज्ञा भविष्यति न मुख्यं, पदाधिकारे पुनः पदग्रहणात् । किं चोदात्तस्वरितविधिभिरेकीभूय शेषनिघातः क्रियत इत्युक्तं तस्यां च दशायां युष्मदस्मदोर्ङसि, ङयि चेत्यादावेव पदत्वं नियतं भवति न पुनर्धातोरित्यादिषु धात्वाद्युपदेशानन्तरं प्रवर्त्तमानेषु, अतश्च तैरेकीभूतस्य पदशब्दस्य तदेकदेशे ऽपि भविष्यति वृत्तिः । यद्येवं यत्रयत्रास्योपस्थानं तत्रतत्र सर्वं पदं ततोऽपि चान्यत्र न्यूनं न कार्यित्वेन संनिहितमिति तत्रैवास्तु परिशिष्टमनुदात्तं भविष्यति नार्थो वाक्यनिवृत्त्यर्थेन पदग्रहणेन । उच्यते । असति पदग्रहणे धातोरन्त उदात्तो भवति परिशिष्टमनुदात्तमित्युक्ते धातोरेव यत्परिशिष्टं तदनुदात्तमिति गम्येत, एधमाद्युदात्तश्चेत्यादौ, ततश्च धातुप्रत्यययोः पृथक्स्वरः स्यादेव, अत एकपदे भविष्यतां सर्वमेवानुदात्तत्वं यथा स्यादित्येवमर्थं

पदग्रहणम् । 'पदाधिकारस्य निवृत्तिं करोतीति' । गौणार्थमेतत्पदग्रहणं मुख्यपदाधिकारस्य निवृत्तिं कारयति, तेन किं सिद्धं भवति, तत्राह ॥ 'तेनेति' । ज्ञापकमप्यस्मिन्नर्थे दर्शयति । 'गर्भिणीशब्दस्येति' । गर्भोऽस्या अस्तीति मत्वर्थीय इनिः, ङीप्, गर्भशब्दो यामादिः, तत्र यदीनिप्रत्ययस्योदात्तविधिसमकालमेवानुदात्तत्वं भवति ततो गर्भिणीशब्दस्यानुदात्तादित्वादनुदात्तादेरित्यञि प्राप्ते तद्बाधनार्थं युज्यते तस्य भिक्षादिषु पाठः, अथ पदसंज्ञाया उत्तरकालं शिष्टस्यानुदात्तत्वं भवेत्ततो गर्भिणीशब्द आद्युदात्तः स्यात्ततश्चाञो बाधनार्थं भिक्षादिषु न पठितव्यः स्यात् । 'कुवलगर्भशब्दावाद्युदात्ताविति' । तत्र चोक्त एव प्रकारः, ततः कुवलशब्दादण्सिद्धये आश्रयणीयं, गर्भिणीशब्दश्च ज्ञापकमुपपद्यत इति भावः । अथेदं चोद्यते । उदात्तस्वरितविधिरेकीभूतमप्येतद्विधानार्थं चेद् विहितस्वररहितेष्वेव स्यात्, नियमार्थं चेद् विहितस्वरेष्वेव स्यादिति प्रागुक्तो दोषस्तदवस्थ एव । उच्यते । उक्तं पदग्रहणमेकस्मिन्पदेऽन्तर्भूतानां सर्वेषामनुदात्तत्वमिति, अतो यथैतदुपपद्यते तथा विधिरूपेण नियमरूपेणोभयरूपेण वा प्रवृत्तिर्भविष्यति । नन्वेवमप्येकवर्जमिति व्यर्थं, तद्धि यत्र सूत्रे येन व्यापारेण यस्य स्वरो विधीयते तस्य माभूदित्येवमर्थं, यदि च तस्यापि स्यादनर्थकमेव तत्स्यात् । उच्यते । एकवर्जमिति वचनात्परिभाषात्वनिर्णयः, तद्धि स्वातन्त्र्येऽधिकारे च न कर्तव्यं, परिभाषात्वे तु प्रवृत्तिविषयज्ञानार्थं कर्तव्यमिति सर्वमवदातम् ॥

"कर्षात्वतो घञोऽन्त उदात्तः" ॥ आदस्यास्तीत्यात्वान्, ततो मत्वर्थ इति भसंज्ञा, कर्षश्चात्वांश्चेति समाहारद्वन्द्वः । 'विकृतनिर्देश इति' । विकारवान्तस्येदमनुकरणं न तु घञन्तनिर्देश इति भावः । अथ किमर्थो मतुब्निर्देशः, यावता न क्वचिदप्याकारात्परो घञस्तीति सामर्थ्यात्ततो ग्रहणं भविष्यति । उच्यते । घञाक्षिप्तो धातुरात्त इत्यनेन विशेष्येत, तत्र तदन्तविधौ ज्ञायमाने आनन्तर्यस्यासंभवाद्विधानं विशेष्येत, आकारान्ताद्यो विहित इति, ततश्च दाय इत्यादावेव स्यात्पाक इत्यादौ तु न स्यात्, मतुब्निर्देशात्तु सर्वत्र भवतीति । तावपिकस्या-

प्यन्वतो ग्रहणमिष्यते । वृषादिषु कामपामपद्रानां पाठात् । अतोऽन्त-स्येत्येव सिद्धेऽन्तग्रहणमुत्तरार्थम् ॥

"उञ्छादीनां च" ॥ उछि उञ्छे, म्लेच्छ अव्यक्ते शब्दे, जनि युद्धे, अत्र कुत्वाभावो निपातनात्, जल्प व्यक्तायां वाचि व्यध, ताडने, व्यधजपोरनुपसर्ग इत्यप् । 'वध इति' । हनश्च वध इत्यप् । 'कालवि-शेष इति' । कलिद्वापरादौ । घृ ग निगरणे, ऋदोरप्, विषमित्यनेन द्यूतशब्दस्य विशेषे वृत्तिं दर्शयति । विद ज्ञाने, ओविजी भयचलनयोः, वेष्ट वेष्टने, बन्ध बन्धने, ष्टुञ् स्तुतौ, यु मिश्रणे, द्रु गतौ, । 'उपसम-स्तार्थमेतदिति'। केवलानां धातूनां क्विबन्तानां धातुस्वरेणैव सिद्धत्वात् । 'परिष्टुदिति'। संपदादित्वात्क्विप्, तेन प्रादिसमासः, पूर्वपदादिति षत्वम् । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्तेऽन्तोदात्तत्वं, सोपपदात्तु क्विपि कृत्स्वरेणैव सिद्धम् ।'अन्यत्र मध्योदात्त इति'। स हि वृतु वर्तन इत्यस्मा-दिनिप्रत्ययेन व्युत्पाद्यते । दॄ विदारणे । 'साम्बतापौ भावगर्हाया-मिति'। साम्बो भिद्यते, अम्बया सह भित्तयां गर्हितं, बहुव्रीहौ पूर्वपद-प्रकृतिस्वरस्यापवादः । तापौ दस्यूनाम् । धार्मिकेषु दस्युकर्तृकस्तापो ग-र्हितः। कर्षात्वत इत्येव सिद्धे भावगर्हाया अन्यत्राद्युदात्तार्थं वचनम् । 'उत्तमशश्वत्तमाविति' । तमबन्तावेतौ द्रव्यप्रकर्षविवक्षायामामभावः, पित्त्वादनुदात्ते प्राप्ते पाठः । 'सर्वत्रेति' । भावगर्हायामन्यत्र च । छन्दसि भाषायां चेत्यन्ये । भक्ष अदने चुरादिः, मन्थ विलोडने, भुज कौटिल्ये, दिह उपचये । 'एरजण्यन्तानामिति' । ये तु अनार्षमेतद्व-चनमित्याहुस्तेषां भक्षशब्दस्य पाठे प्रयोजनं मृग्यम् ॥

"अनुदात्तस्य च यत्रोदात्तलोपः" ॥ 'कुमारशब्दोऽन्तोदात्त इति'। फिषित्यनेन । अन्यत्रापि प्रातिपदिकस्यान्तोदात्तत्वमनेनैव द्रष्टव्यम् । 'पचितृशब्दोऽन्तोदात्त इति' । पतेश्च चेतीन्प्रत्ययान्तत्वात् । 'कुमु, दावयोऽन्तोदात्ता इति' । कुमुदशब्दो मूलविभुजादित्वात्कप्रत्ययान्तः, मदशब्दोऽप्युक्तं, वी गत्यादिष्वस्मादसच् । तुडागमश्च, चितःसति-स्वरेणान्तोदात्तः । 'प्रासङ्ग इति'। प्रासज्यत इति प्रासङ्गः, कर्मणि

यजन्तं, तद्वहतीति प्राग्घिताद्यदिति यत् । 'नैतदस्तीति' । 'उदात्तो लुप्यतइति यत्तस्य प्रतिषेधः, कथं नैतदस्तीत्याह । 'स्वरितेडीति' । प्रागेव पदसंज्ञायाः स्वरविधिसमकालमेव शेषनिघातो भविष्यतीत्युक्तं पुरस्तात् । 'तत्कुत उदात्तलोप इति' । न कुतश्चिदित्यर्थः । 'तद्वेतदित्यादि' । यस्मादेवमनुदात्तग्रहणस्य व्या[1]वर्त्यंच सम्भवति तस्मादेतदनुदात्तग्रहणमादेरनुदात्तार्थम् । अथासत्यनुदात्तग्रहणे कस्य स्यादित्यत आह । 'अन्त इति' । 'मा हि धुक्षातामिति' । दुहेर्माङि लुङात्मनेपदम् । आतामाथामो, क्लेः क्सः । अदुपदेशादिति लसार्वधातुकानुदात्तत्वं, क्सः प्रत्ययस्वरेणान्तोदात्तः, 'क्सस्याचि' त्यकारलोपः, माङः प्रयोगोऽडागमनिवृत्त्यर्थः, अटि हि सति पदमाद्युदात्तं भवति, हिशब्दप्रयोगो 'हि चे' ति निघातप्रतिषेधार्थः । अत्रासत्यनुदात्तग्रहणे आतामाथामोर्द्वितीयस्याच उदात्तः स्यात्, अन्ताधिकारात् सति त्वस्मिन्नादेर्भवति । इदन्तु वक्तव्यं, यत्रोदात्तलोपइत्युच्यमाने कथमन्त्यस्य प्रसङ्गः, नहि तदुदात्तलोपस्य निमित्तमिति । उच्यते । आदेरपि तर्हि न प्राप्नोति, तस्यानुदात्तलोपं प्रत्यनिमित्तत्वात्, 'क्सस्याचि' त्यजादौ प्रत्यये विधानात्, तस्मादत्र प्रत्ययउदात्तलोपस्तत्संबन्धिनोनुदात्तस्योदात्तो भवतीति सूत्रार्थे ऽन्ताधिकारादन्त्यस्य प्रसङ्गः । यदि तु निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्तो भवतीति सूत्रार्थस्तदा नान्त्यस्य प्रसङ्गः । 'भृगव इति' । अत्रिभृगुकुत्सेत्यादिना बहुषु लुक् । तत्र बहुष्वित्यर्थग्रहणं न बहुवचनस्य । 'बैदीति' । बिदाद्यञन्ताच्छार्ङ्गरवाद्यञो ङीन् ॥

"चितः" ॥ 'भङ्गुरमिति' । 'कुञोः कुघिण्ण्यतो' रिति कुत्वम् । 'कुण्डिना इति' । कुण्डशब्दान्मत्वर्थीय इनिः, स्त्रियां ङीप्, कुण्डिनीशब्दो मध्योदात्तः, कुण्डिन्या अपत्यानि बहूनि गर्गादियञो बहुषु लुक्, परिशिष्टस्य कुण्डिनजादेशः । 'चिति प्रत्ययइति' । ननु च नात्र चितीति प्रत्ययग्रहणं कुण्डिनजादेरपि ग्रहणात्, तस्मादयमपार्थः । यच चित्म-

[1] प्रत्युदाहरणमिति २ पु॰ पा॰ ।

त्ययस्तत्र समुदायस्येष्यत इति, कथं पुनरेतल्लभ्यते, चित इत्यवयवावेक्षा षष्ठी, न कार्यित्वः, चितोऽवयवस्य संबन्धी यः समुदायः स कार्यी, अथ वा चिदस्यास्तीति चितः, अर्शआदेराकृतिगणत्वादच् प्रत्ययः, षष्ठ्यर्थे प्रथमा, तेन चिद्वतः समुदायस्येत्यर्थः । अत्र च लिङ्गमकश्चित्करणम-न्यथा तस्यैकाच्त्वादनर्थकं तत्स्यात्, कुण्डिनजादेर्व्यपदेशिवद्भावेन चित्त्वम् ॥

"तद्धितस्य" ॥ 'कौञ्जायना इति' । कुञ्जस्यापत्यानि बहूनि, गोत्रे 'कुञ्जादिभ्यश्च्फञ्' । 'व्रातच्फञोरस्त्रिया' मिति ञ्यः, 'ञ्यादय-स्तद्राजाः' तद्राजस्य बहुषु लुक् । 'किमर्थमिति' । पूर्वेण सिद्धमिति प्रश्नः । 'परमपीति' । चकारो व्रातच्फञोरस्त्रियामित्यत्र विशेषणेन चरि-तार्थः । ञकारोऽपि वृद्ध्यर्थः, तच्चासत्यस्मिन्परत्वाद् ञित्स्वरः ॥

"तिसृभ्यो जसः" ॥ अर्थगतं बहुत्वं शब्दे आरोप्य बहुवचन-निर्देशः । 'तिस्र इति' । अन्तोदात्तस्य त्रिशब्दस्य स्थाने तिसृशब्द आदेशः स्थानिवद्भावादन्तोदात्तः । 'अनुदात्तौ सुप्पितौ' विति जसनुदात्तः, तत्रा-ऽचि र ऋतः । जस इति किमर्थं, तिसृकाः, स्वार्थे क प्रत्ययः, तिसृभावे संज्ञायां कनीति तिस्रादेशः, नित्स्वरोऽत्र बाधको भविष्यति, नाप्राप्ते स्वरान्तरे तिसृस्वर आरभ्यते, स यथैव सुप्पितावनुदात्तावित्येतं बाधते एवं नित्स्वरमपि बाधेत, नैष दोषः । येन नाप्राप्ते इत्येतस्य बाधनं भविष्यति, न वा प्राप्ते अनुदात्तौ सुप्पितावित्येतस्मिन् तिसृस्वर आरभ्यते, तिसृकेत्यत्रापि हि टापा सहैकादेशस्य स्थानिवद्भावात्पित्स्वरः प्राप्नोति, अथ वा मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इति तिसृस्वरोऽनु-दात्तौ सुप्पितावित्येतमेव बाधिष्यते न नित्स्वरं बहुवचनविषयत्वाद् द्विवचनैकवचने न स्तः, शसि तु भवितव्यमुदात्तयणो हल्पूर्वादिति, अन्याः सर्वा हलादयो विभक्तयस्तत्र 'षट्त्रिचतुर्भ्यो हलादि' 'झल्यु-पोत्तम' मित्यनेन स्वरेण भवितव्यं, तदन्तरेणापि जसग्रहणं जस एव भविष्यति, अत आह । 'जस्ग्रहणमुप[1]समस्तार्थमिति' । समासेऽपि तिसृ-

[1] उपसर्जनार्थमिति २ पु० पा० ।

शब्दात्परो जस् भविष्यति, 'अतितिसृाविति' । अत्रातेरन्त्यपदत्वन्त्वात्तेर्धातुलोप इति वक्तव्यमिति वचनात्प्राप्तमन्तोदात्तत्वं बाधित्वा विभक्तेरुदात्तत्वं स्यात्, जसग्रहणात्तूदात्तस्वरितयोर्यण इति स्वरितो भवति, अतितिसृ इत्यत्र त्वनेन जस उदात्तत्वं भवत्येव ॥

"चतुरः शसि" ॥ अनुकरणत्वेनार्थपरत्वा[1]भावादेकवचनम् । इह चतस्रः पश्येत्यत्र चतसादेशे कृते स्थानिवद्भावादयं स्वरः प्राप्नोति तत्राह । 'चतसादेश इति' । स्थानिवद्भावादेवाद्युदात्तत्वे सिद्धे पुनराद्युदात्तत्वनिपातनमस्य स्वरस्य बाधनार्थमिति भावः । यद्येवं तर्हि निपातनस्वरः शस्वरं बाधते एवं 'षट्त्रिचतुर्भ्यो हलादि'रित्येतमपि विभक्तिस्वरं बाधेत चतसृणामिति, ज्ञापकात्सिद्धं. यदयं षट्त्रिचतुर्भ्यो हलादिरिति हलादिग्रहणं करोति तज्ज्ञापयति न निपातनस्वरो विभक्तिस्वरं बाधतइति, तद्धि तत्र न कर्तव्यं, कथं, सर्वेषामपि बहुवचनविषयत्वाद् द्विवचनैकवचने न सम्भवतः । न चोपसमस्ते सम्भवो, विहितविशेषणाश्रयणात् । तत्र षड्भ्यस्तावत् जस्शसोर्लुका भवितव्यम् । अन्या सर्वा हलादयो विभक्तयस्त्रीशब्देपि जसि न भवितव्यमसर्वनामस्थानमित्यधिकारात्, शसि भवितव्यम् एकादेश उदात्तेनोदात्त इति, अन्या हलादयस्तिसृशब्दे ऽपि जसि तिसृभ्यो जस इति भवितव्यम्, शस्यपि उदात्तयणो हल्पूर्वादिति, अन्या हलादयः । चतुरशब्देपि अस्यसर्वनामस्थान इति निषेधः, शसि चतुरः शसीत्ययमेव भवति, अन्यास्तु हलादयः, तदेतद्धलादिग्रहणं चतस्रः पश्येत्यत्र माभूदित्येतदर्थमेव कृतं, यदि च निपातनस्वरेण विभक्तिस्वरो बाध्येत हलादिग्रहणमनर्थकं स्यात्, चतस्रः पश्येत्यत्र निपातनस्वरेणैव बाधितत्वाद् विभक्तिस्वरस्याप्रसङ्गात् किं तन्निवृत्त्यर्थेन हलादिग्रहणेन, तत्क्रियमाणं विभक्तिस्वरस्य बलीयस्त्वं ज्ञापयति इति चतसृणामित्यत्र विभक्तिस्वरः सिद्धः । 'यणादेशस्य चेति' । 'अचि र ऋतः' इति रादेशस्यास्मात्स्वरात्पूर्वं परत्वात्कृतस्य ।

१ अर्थवत्त्वाभावादिति २ पु० पा० ।

एतदुक्तं भवति । परत्वादादेशे कृते चकारस्य तावन्न भवति, तथच्छाकारस्यापि न भवति रादेशस्य स्थानिवद्भावादिति । न च स्वरविधौ स्थानिवत्त्वनिषेधः, स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदिति वचनात् ॥

“सावेकाचस्तृतीयादिर्विभक्तिः” ॥ ‘साविति सप्तमीबहुवचनस्य सुशब्दस्य ग्रहणमिति’ । न प्रथमैकवचनस्य व्याख्यानात्, प्रयोजनन्तूत्तरत्र वक्ष्यति । ‘पातेति’ । पातेर्लटः शत्रादेशः । ‘राज्ञेति’ । सावित्येतस्मिन्सत्येकाचः परा तृतीयादिर्विभक्तिरुदात्ता भवतीत्यर्थो भवति, भवति चायमल्लोपे कृते एकाच् । ननु च विहितविशेषणं विज्ञास्यते, एकाचो या विहिता तृतीयादिरिति, न, प्रमाणाभावात् । ‘सप्तमीबहुवचनस्य ग्रहणादिति’ । प्रथमैकवचने तु ‘त्वाहौ सा’विति त्वादेशे कृते युष्मच्छब्द एकाच् भवति शेषे लोपे कृते ऽकारान्तत्वात्सावकर्णाति प्रतिषेधो भविष्यति, तदिह प्रथमैकवचनाग्रहणे को हेतुरिति चिन्त्यम् ॥

“अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे” ॥ ‘नित्यशब्दः स्वर्यतइति’ । स्वरितत्वमस्य क्रियतइत्यर्थः । तत्र स्वरितो गुणः क्रियारूपेण निर्दिष्टः, स्वरितत्वे सति किं भवतीत्याह । ‘तेनेति’ । स्वरितेनाधिकार इत्यत्रायमप्यर्थो व्याख्यातः । स्वरितेन लिङ्गेन यस्याधिकारः स प्रत्येतव्य इति ततो नित्याधिकारविहितः समासोऽत्र प्रतिषिध्यते । ‘अ[1]वाचेति’ । नञ्समासः । ‘तत्पुरुषोऽयमिति’ । न बहुव्रीहिः । तेन नञ्सुभ्यामित्यन्तोदात्तत्वं न भवति, अव्ययपूर्वपदप्रकृतिस्वर एव भवतीति भावः । प्रायेण तु सुवाचा सुत्वचा इति पाठः । तत्र प्रत्युदाहरणादिगियं दर्शितेति व्याख्येयं, न पुनरत्र प्रसङ्गः, प्रादिसमासस्य नित्यसमासत्वात् । अथोत्तरपदग्रहणं किमर्थं, यावतानित्यसमासइत्याधारसप्तमी विज्ञास्यते, अनित्यसमासस्यान्तोदत्तादेकाचः परा तृतीयादिर्विभक्तिरिति, तच्चोत्तरपदमेव, तत्राह । ‘उत्तरपदग्रहणमिति’ । अयं भावः । सत्सप्तमी विज्ञायेत, ततश्च समासस्याग्रयस्या-

१ मुद्रितमूलपुस्तके तु परमवाचा परमत्वचेति पाठः ।

तस्येकाच्त्वमन्तोदात्तत्वं च विशेषणं स्यादिति । 'अग्निचिता सोमसुतेति'। 'अग्नौ चेः,' 'सोमे सुञ' इति क्विप्, नित्यशब्दः स्वर्यंत इति यदुक्तं तस्य प्रयोजनमाह । 'यस्त्विति' ॥

"अञ्चेश्छन्दस्यसर्वनामस्थानम्" ॥ 'दधीच इति'। दध्यञ्चतीति ऋत्विगित्यादिना क्विन्, अनुनासिकलोपः, 'अच' इत्यकारलोपः, 'चौ' इति दीर्घत्वम्, । 'शसोऽपि परिग्रहार्थमिति'। शसादिग्रहणं तु न कृतं, नपुंसके शसि माभूत्, सुटि च यथा स्यादिति ॥

"ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ 'प्रष्ठौह इति'। 'छन्दसि सहः' 'वहश्चे'ति ण्विः। वाह ऊठित्येधत्यूठ्स्विति वृद्धिः। 'ऊठुपधाग्रहणमिति'। उपधाभूत ऊठ् गृह्यते न त्वन्त्य इत्यर्थः। पञ्चमीनिर्देशादन्त्यस्यैव ग्रहणे प्राप्ते वचनम्। 'अन्तोदात्तादित्यधिकारादन्वादेशे न भवतीति'। अत एव हेतोः सावेकाच इत्यनेनापि न भवति, यदि स्यादिहान्तोदात्ताधिकारो व्यर्थः स्यात्। ननु च यदीमे नानुक्रमो अभ्यष्टोदिति शसोऽन्वादेशेन माभूदिति प्रयोजनम्, एकाच इत्यधिकारादेव सिद्धं, तथा च तदस्मै तथ्य तदस्य प्रियं प्रेयो तदेशमित्यादि सर्वानुदात्तं पदमधीयते। 'पदादयो निशृपर्यन्ता गृह्यन्त इति'। पद्दन्नोमासितिसूत्रे निर्दिष्टाः, तत्रैकाच इत्यनुवृत्तेर्निशः परे न गृह्यन्ते, यद्वा स्वल्लोपे कृते एकाचो भवन्ति तदोदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं सिद्धं, येष्वाद्युदात्तानां स्थाने विधीयन्त आदेशास्ते तत्रैवान्तोदात्ता निपात्यन्ते, वृत्तावप्येतदेवोक्तं द्रष्टव्यम्। 'आसनीति'। आस्यशब्दस्यासनादेशः, यत्रैकाचस्तेषां ग्रहणं ग्रहणम् ॥

"अष्टनो दीर्घात्" ॥ 'धृतात्रिपाठादन्तोदात्त इति'। तेनोत्तरार्थमनुवर्तमानस्यान्तोदात्तादित्यस्य नेहापि विरोध इति भावः। 'अष्टस्विति'। ननु चात्र दीर्घग्रहणमनर्थकं, यावताष्टन आ विभक्ताविन्यनेन भवितव्यं तद्विधौ विकल्पस्याभावादित्यत आह। 'इदमेवेति'। नित्ये ह्यात्वे व्यावर्त्याभावादिह दीर्घग्रहणमनर्थकं स्यात्। 'कृतात्वस्य च षट्संज्ञामिति'। इदमेव दीर्घग्रहणमष्टनो ज्ञापयतीति संबन्धः, कथ-

मेतदित्यत आह । 'अन्यथा हीति' । आत्वाभावपक्षेयं स्वरो माभूदित्येतदर्थं हि दीर्घग्रहणं, यदि च कृतात्वस्याष्टनः षट्संज्ञा न स्यात्तदात्वपक्षे सावकाशमिममष्टनः स्वरमनात्वपक्षे षट्संज्ञायां सत्यां झल्युपोत्तममिति षट्स्वरः परत्वाद्बाधिष्यते इत्यनर्थकं दीर्घग्रहणं स्याद्यदा तु कृतात्वस्याष्टनः षट्संज्ञा भवति तदा नाप्राप्ते षट्स्वरे आरभ्यमाणोऽष्टनः स्वरो ऽनात्वपक्षेऽपि स्यादिति तन्निवृत्तये क्रियमाणमर्थवद्भवति, कथं पुनरेकेन यत्नेनोभयं शक्यं ज्ञापयितुं, को दोषः, अन्यथानुपपत्त्या ह्यनेकोऽप्यर्थो ज्ञाप्यते तेनैतदुभयमन्तरेणानुपपद्यमानमुभयमपि ज्ञापयति ॥

"शतुरनुमो नद्यजादी" ॥ 'तुदती नुदतीति' । तुदादित्वाच्छः, आच्छीनद्योर्नुम्विकल्पितः । तत्र नुमभावपक्षे उदाहरणं, नुम्पक्षे प्रत्युदाहरणम् । 'तुदन्तीति' । श्नाभ्यस्तयोरात इत्याकारलोपः, अत्र प्रत्ययस्वरेण शत्रन्तमन्तोदात्तम् । तत्रेत्यादिना प्रत्युदाहरणस्य दृष्टविकलतां परिहरति । 'तत्र पूर्वत्रासिद्धमिति नेष्यत इति' । अत्र च ज्ञापकमयमेवानुम इति प्रतिषेधः, नहि किंचिदेकादेशस्वरमन्तरेण शत्रन्तं अनुम्कमन्तोदात्तमस्ति । 'बृहन्महतोरुपसंख्यानमिति' । शतृवद्भावादेव सिद्धे नियमार्थमिदं पृषदादीनां माभूदिति, गौरादिषु बृहन्महतोः पाठोऽनर्थक इति स्त्रीप्रकरण एवोक्तम् ॥

"उदात्तयणो हल्पूर्वात्" ॥ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति प्राप्ते वचनम् । 'बहुतितवा ब्राह्मणयति' । स्त्रीलिङ्गोपादानं नाभावनिवृत्त्यर्थम् । तनोतेर्डउः सन्वच्चेति, चालनी तितउः पुमान्, ततो बहुव्रीहिः, बहोर्नञ्वदुत्तरपदभूम्नीत्युत्तरपदान्तोदात्तः, तत्रोदात्तस्वरितयोरिति विभक्तेः स्वरितत्वम् । 'नकारग्रहणं च कर्तव्यमिति' । उदात्तस्थाने यो नकारस्ततोऽपि परस्या नद्या उदात्तत्वं वक्तव्यमित्यर्थः । तदर्थं केचिदुदात्तहलो हल्पूर्वादिति पठनीयमिति मन्यन्ते । 'वाक्पत्नीति' । तत्पुरुषः । पत्यावैश्वर्य्ये इति पूर्वपदप्रकृतिस्वरत्वं न भूवाक्चिद्दिधिषुष्विति प्रतिषेधात्समासान्तोदात्तत्वे विभाषा सपूर्वस्येति नकारः ॥

"नोङ्धात्वोः" ॥ 'ऊङो धातोश्च य उदात्तयण् हल्पूर्व इति'। अनेन पूर्वस्याः प्राप्तेरयं प्रतिषेध इति दर्शयति । 'तस्मात्परा [१]तृतीयादिर्विभक्तिरिति'। यद्यपि पूर्वसूत्रे नद्यजादी इत्यनुवर्त्तते न तृतीयादिरिति तथाप्यत्र बाहुल्येन तृतीयादेरेव संभवादिदमुक्तं, तथाहि। ऊङ्धातुयणः परा नदी तावन्न संभवति, नाप्यूङ्यणः शस् संभवति, धातुयणस्तु संभवति ॥

"ह्रस्वनुड्भ्याम्मतुप्" ॥ 'अक्षण्वतेति'। छन्दस्यपि दृश्यतइत्यनङ्, अनो नुडिति नुडागमः, पूर्वस्य नकारस्य लोपः । 'शीर्षण्वतेति'। शीर्षञ्छन्दसीति निपातितः। 'वसुशब्द आद्युदात्त इति'। वसेरुप्रत्ययः, धान्ये नित्यधिकारे, अथेह कस्मान्न भवति मरुतो ऽस्य सन्ति मरुत्वानिति । मरुच्छब्दो हि मृग्रोरुतिरिति उतिप्रत्ययान्तत्वात्प्रत्ययस्वरेणान्तोदात्तः । न च तकारेण व्यवधानं, स्वरविधौ व्यञ्जनस्याविद्यमानत्वात्, इत्यत आह । 'अत्रेति'। कथं पुनर्ज्ञायते नाश्रोयतइति, नुड्ग्रहणात्, तद्ध्यक्षण्वतेत्यादौ यथा स्यादित्येवमर्थमन्यथा नकारस्य लुप्तस्यापि स्वरविधावसिद्धत्वेनकारेण व्यवधानाव स्यादिति, यदि चात्र व्यञ्जनमविद्यमानवत्स्यात्ततो ऽसिद्धलोपस्यापि तस्याविद्यमानत्वादेव स्वरः सिद्ध इति नुड्ग्रहणमनर्थकं स्यात्, नैतद्युक्तमुच्यते, यदि हि नकारलोपस्यासिद्धत्वेपि नकारो ऽविद्यमानवत्स्यात्स्वरविधौ नकारलोपस्यासिद्धवद्वचनमनर्थकं स्यात्तस्मान्नलोपविषये ऽविद्यमानवद्भावो न प्रवर्त्ततइति कर्त्तव्यमेव नुड्ग्रहणम्, एवं तर्हीष्टिरेवेयमत्र स्वरे ऽविद्यमानवत्परिभाषा न प्रवर्त्ततइति, रेशब्दाच्चेति पाठः। 'रेवानिति'। रयि अस्यास्तीति मतुपि रयेर्मतौ बहुलमिति सम्प्रसारणं, पूर्वत्वमाद्गुणः, ततो ह्रस्वाभावाद्वचनम्। 'त्रिवतीरिति'। छन्दसीर इति वत्वं, वा छन्दसीति पूर्वसवर्णदीर्घः ॥

"नामन्यतरस्याम्" ॥ 'म[२]तुब्निति चेति'। तच्चार्थात्सप्तम्यन्तं सम्पद्यते। 'अन्यथा हि साम्प्रतिक एव स्यादिति'। साम्प्रतिकाभावे हि भूत-

१ अत्राद्युदात्तसर्वनामस्थानविभक्तिरिति मुद्रितमूलपुस्तकपाठः पदमञ्जर्यसंमतः ।
२ मतुब्ग्रहणं चेति मुद्रितमूलपुस्तके पाठः ।

पूर्वगतिर्भवति न तु तस्मिन्सत्यपि, ततस्तिसृणां चतसृणामित्यत्र 'न तिसृचतसृ' इति दीर्घप्रतिषेधात्साम्प्रतिक एव ह्रस्वो विद्यते इति तत्रैव स्यादग्नीनां वायूनामित्यादौ परत्वान्नित्यत्वाच्च दीर्घत्वे कृते ह्रस्वाभावान्न स्यात्, तस्मान्मतुपा ह्रस्वो विशेष्यते, यद्येवं 'मतौ बह्वचोनजिरादीनां' 'शरादीनां चे' ति येषां मतौ दीर्घत्वमुच्यते तेषां न स्यात्। नैष दोषः। संज्ञायामिति वर्त्तते, ततश्चातुरर्थिकएव मतौ दीर्घत्वं न तु तदस्यास्त्यस्मिन्नित्यत्र, तत्र मतौ ह्रस्वान्तत्वाद्भविष्यति, एवमपि तिसृणां चतसृणामित्यत्र न स्यात्, तिसृचतसृभावस्यैव तत्राभावात्, इष्टमेवैतत्संगृहीतम् अत्र हि षट्त्रिचतुर्भ्यो हलादिरिति नित्यमेव विभक्तेरुदात्तत्वमिष्यते। 'धेन्वां शकट्यामिति'। धेट इच्चेति नुप्रत्ययान्तो धेनुशब्दोन्तोदात्तः, शकटिशकट्योरक्षरमक्षरं पर्यायेणेति शकटीशब्दोपि पक्षेन्तोदात्तः, वपुशब्दो वसुशब्दश्चाद्युदात्तः॥

"षट्त्रिचतुर्भ्यो हलादिः"॥ 'अन्तोदात्तादिति निवृत्तमिति'। यद्येतदनुवर्त्तेत पञ्चानां नवानां चतुर्णामित्यत्र न स्यात्, नः संख्याया इत्याद्युदात्तत्वात्, क्व तर्हि स्यात्, सप्तानामष्टानां, सप्ताष्टशब्दौ घृतादित्वादन्तोदात्तौ। न इति रेफनकारान्ताया इत्यर्थः। 'चतसः पश्येति'। यथैतदिह हलादिग्रहणस्य व्यावर्त्यं तथा चतुरः शसीत्यत्रावोचाम॥

"झल्युपोत्तमम्"॥ झलादौ विभक्तौ परतः षट्त्रिचतुर्णां त्रिप्रभृत्यक्षराभावात् झलादिविभक्त्यन्तस्य पदस्य ग्रहणं, यदाह। 'विभक्त्यन्ते पदे उपोत्तममुदात्तम्भवतीति'॥

"न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः"॥ साविति यदि सप्तमीबहुवचनस्य ग्रहणं स्यात्तेभ्यः केभ्य इत्यत्र न स्यात्, तत्किंशब्दयोः सप्तमीबहुवचने परतस्त्यदाद्यत्वे कृते बहुवचने झल्येदित्येत्वविधानात्, ताभिर्याभिरित्यादावेव स्यात् तासु यास्वित्यत्रावर्णान्तत्वात्तस्मात्प्रथमैकवचनस्य ग्रहणमित्याह। 'सौ प्रथमैकवचनइति'। अनन्तरस्य प्रतिषेध्यस्यासम्भवात्सर्वस्यैव षाष्टिकस्वरस्य प्रतिषेधो विज्ञायतइत्याह।

'इत्येतेभ्यो यदुक्तं तच भवतीति'। एवं च ऋचवानित्यादौ ह्रस्वनुड्भ्यां मतुबित्यपि प्रतिषेधो भवति, उदात्तनिवृत्तिस्वरस्य प्रतिषेधो नेष्यते। 'सुगुनेति'। बहुव्रीहौ गोस्त्रियोरुपसर्जनस्येति ह्रस्वः, नञ्सुभ्यामित्यन्तोदात्तत्वम्। 'शुनेति'। ननु च नलोपे कृते सावेकाचोऽन्त्यमेतत्, न, स्वरविधौ नलोपस्यासिद्धत्वात्। न चायं स्वरविधिः, स्वरप्रतिषेधोयम्। एवं तर्हि शुनः प्रतिषेधं कुर्वन्नेतज्ज्ञापयति अस्मिन्प्रतिषेधे नलोपोऽसिद्धो भवतीति, तेन नृशब्दात्सप्तम्येकवचने नरीत्यत्र सावेकाच इति विभक्तेरुदात्तत्वं भवति, पितृमानित्यादौ ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं भवति, अन्यथा सावर्णेति प्रतिषेधः स्यात्। 'प्राचेति'। पूर्ववन्नलोपदीर्घादि। 'क्रुञ्चेति'। कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः। ऋत्विगित्यादिना क्विन्, तत्रैव सूत्रे क्रुञ्चेति निपातनान्नलोपाभावः। 'कृतिर्वेति'। कृती छेदने॥

"दिवो झल्"॥ 'झलादिरिति'। कथं पुनरसति सप्तमीनिर्देशे तदादिविधिर्भवति, केवलझलात्मिकाया विभक्तेरभावात्, अस्तु तर्हि तदन्तविधिः, का पुनर्झलन्ता विभक्तिः, भसादिः सकारान्ता। एवं तर्हि षट्त्रिचतुर्भ्यो हलादिरित्यत आदिग्रहणमनुवर्त्तते, दिवः परा विभक्तिर्नोदात्ता भवति, कीदृशी यस्या झलादिरिति, अयं योगः शक्यो ऽवक्तुं, कथमेवं वक्ष्यामि, अष्टनो दीर्घात्, दिवोझलादिः, शतरनुमो नदी चेति, ऊडिदमित्यादौ च दिवो ग्रहणं न करिष्यामि, एवमपि नु चान्यतरस्यामित्युत्तरसूत्रे तत्र झल्ग्रहणं कर्त्तव्यं, नदी चेति चकारश्च क्रियत इति नास्ति लाघवे विशेषः॥

"तित्स्वरितम्"॥ इह कस्मान्न भवति चात स्तृणातेराप्लोतौ विस्तीर्णा, तत्कालग्रहणार्थतया चरितार्थत्वादिति चेत्, न। अनेकप्रयोजनदर्शनादनुबन्धानां, तद्यथा ऽऽचिक इत्यादौ ठकि सति स्वरो वृद्धिश्च भवति, एवं तर्हि नायमिकारस्तपरः, किं तर्हि, इपरः, यद्येवमृकारस्य स्थाने आन्तर्य्यतो दीर्घः प्राप्नोति, भाव्यमानोऽण् सवर्णान्न गृह्णाति। यद्येव 'मदसो ऽसेर्दादु दो मः' अमूभ्यां दीर्घस्य स्थाने दीर्घो न स्यात्

नैष दोषः । ज्ञापितमेत 'दिव उत्' अत उदिति तपरकरणेन भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति । तयोरेव तर्ह्युकारयोः स्वरितत्वप्रसङ्गः । तावपि तर्हि न तपरौ, किं तर्हि दपरौ, कथं तर्हि ज्ञापकं तपरस्तत्कालस्येत्यत्र दकारोऽपि चर्त्वभूतो निर्दिश्यते, अणुदित्सवर्णस्य चाप्रत्ययस्तपरस्तत्कालस्येति, यदि दकारोऽपि निर्दिश्यते ऋदोरबित्यत्रापि तद्ग्रहणादिहैव स्यादवस्तवः, लवः पव इत्यत्र न स्यात्, तादपि परस्तपर इति तादपि परस्य तपरत्वात्, एवं तर्हि ऋदोरबित्यत्र धकारो जश्त्वभूत उच्चारणार्थो निर्दिश्यते, तत्र जश्त्वस्यासिद्धत्वाच्चायमृकारो दपरः, ये तु प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति परिभाषां पठन्ति तेषामृत इद्धातोरित्यादौ सत्यपि तित्त्वे नास्य स्वरस्य प्रसङ्गः, तपरस्तत्कालस्येत्यत्र दकारोपि न प्रश्लेष्टव्यः,

तस्यास्तु परिभाषाया भाष्यवार्तिकयोरिह ।
अदर्शनादयं यत्नो महानस्माभिरादृतः ॥

"तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" ॥

तास्यादीनां समाहारद्वन्द्वः । 'अदुपदेशादिति' । उपदिश्यत इत्युपदेशः, तस्याकारेण विशेषणात्तदन्तविधिः, अच्चासावुपदेशश्चादुपदेशः, उपदिश्यमानदशायां यदवर्णान्तं तस्मादित्यर्थः । 'अकारोपदेशादिति' । अकारान्तादुपदेशादित्यर्थः । 'कर्तेत्यादि' । लुडात्मनेपदे प्रथमपुरुषस्य डारौरसः, तासिः । एकवचने टिलोपः, इतरत्र रि चेति सलोपः, आस्त इत्यादावदादित्वाच्छपो लुक्, तुदत इत्यादीनि तसन्तानि, कथं पुनः शबुपदेशेऽदन्तो भविष्यति, यावता पकारान्तोयं तत्रेत्यत आह । 'अनुबन्धस्यानेकान्तत्वादकारान्तोपदेश एवेति' । उदीचामाङ इति कृतात्वनिर्देशाज्ज्ञापकादनुमीयते कार्येष्वनुबन्धाः श्रूयमाणा अपि न प्रतिबन्धका इति । 'पचमानो यजमान इति' । लटः शानच् । नन्वत्र मुका व्यवधानमत आह । 'यद्यत्रेति' । 'स्यादिति' । संभावने लिङ्, अङ्गस्य यो ऽकारस्तस्य मुगित्याश्रयणादस्य पक्षस्य संभवः । 'तदा सार्वधातुकमदुपदेशादनन्तरमिति' । स्वावयवेन व्यवधानाभावादुपदेशग्रहणाच्च मुकि सत्यर्द्धमात्राव्यवधानेऽपि प्रवर्तते निघातः । 'ताता

ङित' इतीयादेशस्तु न भवति, अत इत्यत्र तपरकरणात् । अनन्तरयोगे पञ्चमी मृग्या, परमिति वाध्याहारः । 'अथाकारान्तस्याङ्गस्येति' । अकारेणाङ्गस्य विशेषणादिति भावः । 'लसार्वधातुकस्येति' । सिद्ध इति वचमाणेन सबन्धः, निघात इति चानुषङ्गः, तथा च लसार्वधातुकस्य निघातः सिद्ध इत्यर्थः । 'असिद्ध इति' । प्रकृतत्वान्मुगिति गम्यते । 'बहिरङ्गत्वादिति' । बहिरङ्गत्वं तु मुको बहूपेक्षत्वात्, स हि अकारान्तविशिष्टमङ्गमाश्रयति आनञ्च प्रत्ययविशेषम् । अयं तु स्वरोद्दुपदेशमात्रं लसार्वधातुकमात्रं चापेक्षत इत्यन्तरङ्गः । 'चित्स्वरोपीत्यादि' । चित्स्वरस्यावकाशः चलनः, चलनशब्दार्थादकर्मकाद्युच्, अस्यावकाश आस्ते शेते इति, प[१]वमान इत्यादौ परत्वादयं निघातश्चित्स्वरं बाधते । ननु चैकस्य द्विकार्ययोगे विप्रतिषेधो, न चात्रैको द्विकार्ययुक्तः, कथ,-मादेरनुदात्तत्वमन्त्यस्य चित्स्वरः, नात्रादेरनुदात्तत्वं किं तर्हि संघातः कार्यो, अत्र ज्ञापकमुत्तरत्र वक्ष्यामः, ततश्चानस्य सर्वानुदात्तत्वेन भवितव्यं नत्वादेरित्यस्त्येव विरोध इति परत्वादयं बाधत इति युक्तमेव । 'चिनुतः चिन्वन्तीति' । ननु च सार्वधातुकमपिदिति श्नुरपि ङिदेव तत्कथमिदं प्रत्युदाहरणमत आह । 'ङिदयं श्नुः पूर्वस्य कार्यं प्रतीति' । तत्र हि ङिति यत्कार्यं तदतिदिश्यते, यदाह । सिद्धं तु पूर्वस्य कार्यातिदेशादिति । नायं स्थितः सिद्धान्तः, आतो ङित इत्यत्र वक्ष्यति सार्वधातुकमपिदित्यत्र ङित इव ङिद्वदित्यङ्गीक्रियत इत्यादि, अत्र तु पत्ते परिहार उपदेशग्रहणमुभाभ्यामपि संबध्यते, ङिदुपदेशाददुपदेशादिति । 'पचावः पचाम इति' । असत्युपदेशग्रहणे परत्वाच्चित्यत्वाच्च दीर्घे कृते तपरकरणान्न स्यात् । ननु च तपरकरणं न करिष्यते, यदि तु न क्रियते यातः वात इत्यत्रापि प्राप्नोति । 'हतो हथ इति' । अत्रानुदात्तोपदेशेत्यादिनानुनासिकलोपे कृते सत्यकारात्परं लसार्वधातुकं भवति तथाप्युपदेशग्रहणान्न भवति, नहि हन्तिरदन्त उपदिश्यते, अथ योत्रादन्तो हशब्दस्तदाश्रयमनुदात्तत्वं कस्मान्न भवति,

१ पवमान इति ४ पु॰ पा॰ ।

तावतोऽनुपदेशात्, समुदायपरो हि हल्युपदेशः । 'कतीह पवमाना इति' । 'पूङ्यजोः शानन्', तत्र च लट इति निवृत्तत्वान्न लादेशोऽयम् । 'शिश्यइति' । इरनेकाच इति यणादेशः, लिट् चेत्यार्द्धधातुकमेतत् । 'यदधीतइति' । यच्छब्दप्रयोगो निपातैर्यद्यदीति निघातप्रतिषेधार्थः ।

"आदिः सिचो ऽन्यतरस्याम्" ॥ 'माहि कार्ष्टामिति' । हे-मोङश्च प्रयोगे पूर्वमेव प्रयोजनमुक्तम् । 'अपरो मध्योदात्त इति' । ननु च क्त्वादिरिह प्रत्ययः, इडागम आगमाश्चानुदात्ता भवन्ति, तस्मादिहा-द्यन्तोदात्तत्वेन भवितव्यमत आह । 'सिचश्चित्करणादिति' । 'अनिटः पित इति' । अनिटः सिचः परः पित्यचे उदात्तो भवति पक्षे त्वनुदात्तः, तेन माहिकार्ष्टमिति तिङन्तं पक्षे आद्युदात्तं पक्षे त्वन्तो-दात्तम्, अन्यथा धातुस्वरेण नित्यमाद्युदात्तं स्यात् । 'मध्योदात्त एवेति'। सिचः स्वरेण, एवकारेण न त्वन्तोदात्त इति दर्शयति ॥

"स्वपादिर्हिंसामच्यनिटि" ॥ 'स्वपादिरा वृत्करणादिति' । आगणान्तादित्यर्थः । तत्र ञिष्वप् शये, श्वस प्राणने, अन चेत्येतेभ्यः परे जक्षित्यादयो ऽभ्यस्तसंज्ञकास्तेषु परत्वादभ्यस्तानामादिरिति स्वरो भवति, ये तु ततः परे वस् स्वप्ने, वश कान्तौ, हृङ् अपनयने, चर्करीत-मिति, तत्र चर्करीतमभ्यस्तम्, अन्ये तु ससिवसी छान्दसौ, छन्दसि च दृष्टानुविधानं, ह्नुङोऽप्ययं स्वरो न भवति अङ्गृविङोरित्यनुवृत्तेः, पारिशेष्या-दादितस्त्रिष्वेवायं स्वरः । 'हिंसन्तीति' । हिसि हिंसायां रुधादिः, ऽऽनलोपः, 'श्नसोरल्लोपः' ।

"अभ्यस्तानामादिः" ॥ 'आदिरिति वर्त्तमानइति' । 'आदिः सिचोऽन्यतरस्या' मित्यतः । 'पुनरादिग्रहणं नित्यार्थं मिति' । अन्यथा आदिग्रहणसंबद्धमन्यतरस्यांग्रहणमनुवर्तेत ॥

"अनुदात्ते च" ॥ अनजा[1]द्यर्थमिदम् । 'जिहीते मिमीतइति'। 'ई हल्यघोः, ङित्त्वाल्लसार्वधातुकानुदात्तत्वम् । अविद्यमानोदात्त-

१ अधेतदर्थंनान्मूले अनजाद्यर्थं आरम्भ इति पाठो ऽपपाठः ।

इति वदतानुदात्त इति बहुव्रीहिनिर्देशोऽयमित्युक्तं, तत्र प्रयोजनमाह । 'अनुदात्तइति'। 'बहुव्रीहिनिर्देश इत्यादि'। न विद्यते उदात्तो यस्मिन्नित्यनुदात्तः । 'मा हि स्म दधादिति'। शास्त्रीये ऽनुदात्ते गृह्यमाणे नित्यत्वादन्तरङ्गत्वाद्वा इकारलोपे कृते ऽचोनुदात्तस्य परस्याभावादाद्युदात्तत्वं न स्यात्, बहुव्रीहौ विज्ञाते तु भवति। 'दधात्येति'। अत्र यणादेशस्य बहिरङ्गत्वेनासिद्धत्वादपि स्वरः सिद्धः ॥

'सर्वस्य सुपि" ॥ सर्वशब्द उणादिषु अन्तोदात्तो निपातितः, सर्वस्य विकारः सार्व इत्यनुदात्तादिलक्षणो ऽञ् यथा स्यादिति। 'प्रत्ययलक्षणेनापीत्यादि'। न लुमताङ्गस्येत्यत्रैतदुपपादितम् । 'सर्वस्वरो ऽनकच्कस्येति'। तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्साकच्कस्याप्युदात्तत्वं प्राप्ते वचनम् ॥

"भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" ॥ आद्युदात्तस्यापवादोयम् । जागरामिति सौत्रो निर्देशः । अत्र मदिर्दिवादिः, दरिद्राजागाववादी, अन्ये जुहोत्यादयः। 'पञ्चम लकार इति'। लस्येत्यत्र दर्शितक्रमे पञ्चमलकारो लेट्, लेट्शब्दस्तु श्रुतिकारदेशे जुगुप्सितः, यथात्र द्रविडदेशे निविशब्दः। 'दधनदिति'। 'इतश्च लोपः परस्मैपदेषु' 'लेटोडाटा' वित्यट् । 'दरिद्रतीति'। अत्र परत्वादाकारलोपे कृते इकारस्योदात्तत्वप्रसङ्गः। अथ प्रत्ययग्रहणं किमर्थं, यावता भ्यादिभ्यः परः पित्प्रत्यय एव संभवति, ननु चायमस्ति 'आडुत्तमस्य पिच्च, विभयानि, अत्रापि लोडुत्तमस्यैव पित्त्वं विधीयते न त्वाट इति, आट्सहितो लोडुत्तमः पिद्भवति स च प्रत्यय एव। अत एव लोडादेशात्पितः पूर्वमाड् भवति, प्रत्ययात्तु पूर्वो न भवति आट्सहितस्य प्रत्ययत्वादिति तन्निवृत्त्यर्थं प्रत्ययग्रहणमिति, न वाच्यं कथं यथैव प्रत्ययत्वमाट्सहितस्य तथा पित्त्वमपि तस्यैव, इदं तर्हि प्रयोजनं, प्रत्ययात्पूर्वस्याच उदात्तत्वं यथा स्यात्संघातस्य माभूदिति, एतदेव ज्ञापकं स्वरविधौ संघातः कार्यीति, तेन तास्यनुदात्तेदिति निघातः पचमान इत्यादौ चित्स्वरं परत्वाद्बाधत इति यदुक्तं तदुपपन्नं भवति। अथ पूर्वग्रहणं किमर्थं, प्रत्यये

पितीति वक्तव्यं, तत्र तस्मिन्निति निर्दिष्टे पूर्वस्येति पूर्वस्यैव भविष्यति, इदं तर्हि प्रयोजनं पिति पूर्वं कार्यमन्यथा स्यात्पिदन्तं मा भूदिति, कथं पुनः सप्तमीनिर्देशे तदन्तस्य प्रसंगः, एतदेव ज्ञापयति स्वरविधौ सप्तम्यस्तदन्तसप्तम्य इति, किं सिद्धं भवति, उपोत्तमं रिति. रित्प्रत्ययान्ते उपोत्तममुदात्तं भवति न तु रिति परतः पूर्वस्य, चङ्यन्यतरस्यां चङन्तस्य, यद्येवं चतुरः शसीतिशसन्तस्य प्राप्नोति, शस्ग्रहणसामर्थ्याच्च भविष्यति। यदि हि चतुरः शसीत्यनेन शस उदात्तत्वमिष्टं स्यात्तत उडिदमित्यस्यानन्तरं चतुरश्चेति ब्रूयात्, तत्रासर्वनामस्थानग्रहणानुवृत्त्या षट्‌त्रिचतुर्भ्यो हलादिरिति हलादेरुदात्तत्वविधानाच्च शस एव भविष्यति ॥

"लिति" ॥ प्रत्ययात्पूर्वमिति वर्तते, तेन लिदन्ते स्वरप्रसंगो न चोदनीयः ॥

"आदिर्णमुल्यन्यतरस्याम्" ॥ 'लोलूयंलोलूयमिति'। एकाचु धातुषु लित्स्वरस्यास्य च विशेषाभावादनेकाजुदाहृतः। 'आम्रेडितानुदात्तत्वे कृतइति'। अनुदात्तं चेत्यनेन ॥

"अचः कर्तृयकि" ॥ कर्तृवाचिनि सार्वधातुके विहितो यक् कर्तृयक्। 'उपदेशइति वर्ततइति'। अदुपदेशादित्यत्र यदुपदेशग्रहणं तदुपसमस्तमपि स्वरितत्वप्रतिज्ञानादिह संबध्यते, तच्चार्थात्सप्तम्यन्तं संपद्यतइति मत्वोक्तं, न तु सप्तम्यन्तमुपदेशग्रहणं प्रकृतमस्ति, यदि तूपदेशग्रहणं नानुवर्त्तेत कार्यतइत्यादौ रपरत्वे सति न स्यात्, तस्मादुपदेशइत्यनुवर्त्यम्, यद्येवं जायते स्वयमेवेत्यादौ न स्यात्, ये विभाषेत्यात्वे सत्युत्तरकालमजन्ता जनादयो न तूपदेशइत्यत आह। 'जनादीनामिति'। 'ये विभाषे' त्यत्रानुदात्तोपदेशेत्यत उपदेशग्रहणमनुवर्तते, सा च विषयसप्तमीति उपदेशएव जनादीनामात्वं भवति। 'जायते स्वयमेवेति'। अन्तर्भावितण्यर्थो जनिः कर्मकर्तृविषयः, दृश्यते चान्तर्भावितण्यर्थस्य प्रयोगः, यथैकं द्वादशधा जज्ञइति ॥

"अलि च सेटीडन्तो वा" ॥ अन्यतरस्यामिति वर्त्तमाने वाग्रहणं कार्यविकल्पार्थम्, अन्यतरस्यांग्रहणेन कार्यं विकल्पते वाग्रहणेन कार्यिणः;

तेनेहात्रयः पर्यायेण कार्यं प्रतिपद्यन्ते । ननु चान्तश्च तवै युगपदित्यादौ युगपद्ग्रहणादेवान्यत्र पर्यायः सिद्धः सत्यमादेरपि प्राप्ते वाग्रहणम् । अन्यथा श्रुतयोरिडन्तयोरेव कार्यित्वं विकल्पेन, वाग्रहणे तु सति यद्येवं विकल्पोर्थो ऽयापि समुच्चयः सर्वेथादेरपि भवति । 'सेटीति किमिति' । इड्ग्रहणादेव थल् सेट् ग्रहीष्यतइति प्रश्नः । 'ययाथेति' । अयमभिप्रायः । इड्ग्रहणं यदेडागमः क्रियते तदा तस्योदात्तार्थं स्यात्ततश्च यथा लुलविथेत्यादौ चतुर्णां पर्यायेणोदात्तविधाने ययिथेत्यादौ चतुर्णाभावेपि पर्यायेणोदात्तत्रयं भवति एवमिडभावेपि स्यादिति ॥

"अनित्यादिर्नित्यम्" ॥ 'प्रत्ययस्वरापवाद इति' । बाहुल्यादेवमुक्तम् । 'श्रोत्रियंश्छन्दोधीत' इति, अत्र हि वाक्यार्थे पदवचनमित्यत्र पक्षे न प्रत्ययस्वरप्रसङ्गः । 'प्रत्ययलक्षणमत्र नेष्यतइति' । ननु च न लुमताङ्गस्येति प्रतिषेधादेव प्रत्ययलक्षणं न करिष्यते, किमुच्यते प्रत्ययलक्षणमत्र नेष्यतइति, एवमन्यतो ज्ञापितमेतत्, स्वरविधौ सप्तम्यस्तदन्तसप्तम्य इति, ततश्च यथा पूर्वसूत्रे थलन्तं कार्यि तथात्रापि अनिदन्तं कार्यं न तु ततः पूर्वमङ्गमित्यनङ्गकार्यत्वात्प्रतिषेधो न सिद्ध्यतीति । 'अञि कनि चेति' । चकाराद्विदाद्यञि च ॥

"आमन्त्रितस्य च" ॥ अत्र कारकाद्दत्तश्रुतयोरेवाशिषीति प्राप्तिः प्रतिषिद्ध्यते, शेषनिघातेन बाध्यतइत्यर्थः । 'प्रत्ययलक्षणमत्र नेष्यतइति' । षष्ठीनिर्द्देशेन तत्कार्यस्य स्पष्टत्वात् । 'सर्पिरिति' । सृपेरिसि सर्पिःशब्दोन्तोदात्तः, स्वमोर्नपुंसकादिति सोर्लुक्, सप्तशब्दो घृतादित्वादन्तोदात्तः, षड्भ्यो लुगिति जसो लुक् ॥

"पथिमथोः सर्वनामस्थाने" ॥ 'पथिमथिशब्दावित्यादि' । पतेरिनिः, पुषःकित्, मन्थः, पतेस्थ चेतीनिप्रत्ययः, मन्थः कित्वादुपधालोपः । 'मन्था इति' । पथिमथ्यृभुक्षामादित्यादिकार्यम् । 'पथः पश्येति' । भस्य टेर्लोपः, प्रत्ययलक्षणमत्रापि नेष्यते, अतिप्रसङ्गस्तु पूर्ववत् ॥

"अन्तश्च तवै युगपत्" ॥ 'कर्त्तवै इति'। कृत्यार्थे तवैकेन्केन्यत्वन इति तवैप्रत्ययः। किं पुनः कार्य्यं पर्यायनिवृत्तये यत्नः क्रियतइत्याह। 'एकवर्जमिति [1]हीत्यादि' ॥

"क्षयो निवासे" ॥ क्षि निवासगत्योरित्यस्माद् अधिकरणे घः। '[2]क्षयो दस्यूनामिति'। क्षयेरच्, कर्त्तरि षष्ठी ॥

"वृषादीनां च" ॥ वृषु सेचने, जनी प्रादुर्भावे, ज्वर रोगे, हि गतौ, कै गै रै शब्दे। 'एते सर्वे ऽच्प्रत्ययान्ता इति'। पचादित्वात्, बाहुल्याच्चेदमुक्तं, वृषेत्यत्रेगुपधलक्षणः कः, वीञ् प्रायणे, तायृ संतानपालनयोः, केचित्तय इति पठन्ति,अय पय तय गतौ, क्वचिच्चयशब्दः पठ्यते, स चिनोतेर्द्रष्टव्यः। इण् गतौ, अंश समाधाने, विद ज्ञाने, वृद निरासे, दु दाहे, वद व्यक्तायां वाचि, अत सातत्यगमने, केचिदेतौ न पठन्ति, गुहू संवरणे, शम उपशमे, अण रण शब्दे। 'संमतौ भावकर्मणोरिति'। शमरणाविति वर्त्तते, संमतावर्थे शमरणौ भावकर्मणोर्यथाक्रममाद्युदात्तौ भवतः, मत्रि गुप्तभाषणे, । 'शान्तिरिति'। शमेः क्तिचि, कमु कान्तौ, यमु उपरमे, केचिद्यमशब्दं न पठन्ति, चर शब्दे गतौ, धृञ् धारणे, कॄ विक्षेपे, भिदादिषु निपातनाद्वृद्धिः, वह प्रापणे, क्लृपू सामर्थ्ये, पद गतौ ॥

"संज्ञायामुपमानम्" ॥ 'यज्ञेवमिति'। यज्ञाच्च कनो लुबित्यर्थः। 'एतदेवेत्यादि'। ज्ञापकाभावे तु सप्तमीनिर्देशेपि प्रत्ययलक्षणप्रतिषेधो न स्यात्, स्वरविधौ सप्तम्यस्तदन्तसप्तम्य इति ज्ञापनेन तदन्तस्य कार्यित्वात्। 'क्वचिदिति'। वचनात्क्वचिद्भवत्येव, यथा सर्वस्य सुपीत्यत्र ॥

"निष्ठा च द्व्यजनात्" ॥ इहाद्यात्तः अद्यात्त इत्येकादेशस्य बहिरङ्गत्वादसिद्धत्वादनादिति प्रतिषेधाभावः, भीष्मशब्दो भियः षुक्चेति मक्प्रत्ययान्तः। 'चिन्तित इति'। चिति स्मृत्यां चुरादिः ॥

१ मुद्रितमूलपुस्तके हीति नास्ति।
२ मुद्रितमूलपुस्तके क्षयो वर्तते दस्यूनामिति पाठः।

"आशितः कर्ता" ॥ 'अशेरिति'। अश भोजने इत्यस्मात् । 'आङ्पूर्वादविवक्षिते कर्मणीति'। उक्तं हि 'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिये'ति । 'कर्तरि क्त इति'। गत्यर्थाकर्मकेत्यादिना । भाष्ये तु कर्तरि क्तो निपात्यतइति स्थितं, यदि तर्ह्याङ्पूर्वकस्याशेराशित इति रूपम् अवग्रहः प्राप्नोति, तस्मादुपधादीर्घत्वमपि निपात्यतइति वार्तिककारः । वृत्तिकारस्तु संहितापाठ एव नित्यः, पदपाठस्तु पौरुषेयः, ततश्च न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यमिति मन्यते । अपर आह । अशेर्ण्यन्तस्य प्रयोज्यकर्त्तरि गतिबुद्धिप्रत्यवसानार्थेति कर्मसंज्ञके निष्ठायामाशित इति रूपं, स एवात्र भूतपूर्वगत्या कर्त्ता विवक्षित इति ॥

"रिक्ते विभाषा" ॥ 'रिक्तइति'। रिचिर्विरेचने । 'संज्ञायामित्यादि'। निष्ठा च द्व्यजनादित्यस्यावकाशो दत्ता गुप्तः, अस्यावकाशोऽसंज्ञायां, रिक्तो घट इति संज्ञायामुभयप्रसंगे पूर्वविप्रतिषेधः ॥

"जुष्टार्पिते चच्छन्दसि" ॥ 'जुष्ट इति'। जुषी प्रीतिसेवनयोः, श्वीदितो निष्ठायामितीट्प्रतिषेधः । 'अर्पित इति'। अर्त्तर्णिच्, अर्त्तीत्यादिना पुक् ॥

"नित्यं मन्त्रे" ॥ आरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणमुत्तरार्थम् ॥

"युष्मदस्मदोर्ङसि" ॥ युष्मसिभ्यां मदिक्, युषिः सौत्रो धातुः । 'तव ममेति'। 'युस्मदस्मद्भ्यां ङसोऽश्' 'तवममौ ङसी'ति मपर्यन्तस्य तवममादेशः, शेषे लोपः, अतो गुणइति पररूपत्वम्, एकादेश उदात्तेनोदात्त इति विभक्तेरुदात्तत्वे प्राप्ते इदमुच्यते ॥

"ङयि च" ॥ 'तुभ्यं मह्यमिति'। ङेप्रथमयोरम्, तुभ्यमह्यौ ङयि, अथ किमर्थो योगविभागो न युष्मदस्मदोर्ङङसोरित्येवोच्येत, एवं हि चकारो न कर्त्तव्यो भवति, अत आह । 'पृथग्योगकरणमिति'। आशङ्कायहणेनास्वरितत्वादेव यथासंख्यं न भविष्यतीति शक्यं वक्तुमिति दर्शयति, अत्रापि पूर्ववद्विभक्तिस्वरः प्राप्तः ॥

"यतो नाव:" ॥ अत्रानाव इति प्रतिषेधो ज्ञापयति स्वरविधो व्यञ्जनमविद्यमानवदिति, अन्यथा य आदिर्नकारो नासौ स्वरयोग्यो यस्य स्वरयोग्य आकारो नासावादिरिति प्रतिषेधोऽनर्थकः स्यात् ॥

"ईडवन्दवृशंसदुहां ण्यतः" ॥ ईड स्तुतौ, वदि अभिवादनस्तुत्योः, वृङ् संभक्तौ, शंसु स्तुतौ दुह प्रपूरणे, कथं वार्यं इत्यत्र ण्यत्, यावता एतिस्तुशास्वित्यादिना विशेषविहितेन क्यपा भाव्यमत आह। 'वार्यं इत्यादि'। अथ वृङो ऽपि क्यबेव कस्मान्न भवत्यत आह। 'अर्थविधौ हीत्यादि'। एतच्च तत्रैव प्रतिपादितम् ॥

"विभाषा वेण्विन्धानयोः" ॥ 'शुप्रत्ययान्तइति'। तिष्ठतेर्गुरिति तत्रानुवर्तते। 'उदात्तनिवृत्तिस्वरेणेति'। श्नसोरल्लोप इति श्नसोकारस्योदात्तस्य लोपात्। 'वेणुरित्यादि'। संज्ञायामुपमानमित्यस्यावकाशः चञ्चा वध्रिका, विभाषाया अवकाशो ऽनुपमानभूतो वेणुः शुष्क उपवने, वेणुरिति संज्ञायामुपमाने पूर्वविप्रतिषेधः ॥

"त्यागरागहासकुहश्वठक्रथानाम्" ॥ कुह विस्मापने, श्वठ क्रथ भाषणे चौरादिकावदन्तौ, निघातस्यैवायमपवादो युक्तः, नैतदेवं, यद्ययं निघातस्यापवादः स्यात्तत्रैवायं ब्रूयादनुदात्तं पदमेकवर्जं नहि स्वार्थम् ॥

"चङ्यन्यतरस्याम्" ॥ उदाहरणे एकवचनातिक्रमणे हेतुर्मृग्यः। 'माहिदधदिति'। विभाषा धेट्श्व्योरिति च्लेश्चङादेशः ॥

"मतोः पूर्वमात्संज्ञायां स्त्रियाम्" ॥ 'मतोः पूर्व आकार इति'। अर्थव्याख्यानमेतत्सूत्रे तु शब्दरूपापेक्षया नपुंसकनिर्देशः। केचित्तु सूत्रे पूर्वशब्दं पुल्लिङ्गमेव पठन्ति, उदाहरणे चातुरर्थिको नड्यां मतुप्। मतौ बह्वचोऽनजिरादीनां चेति दीर्घत्वम्। 'मतोरिति किं, गवादनीति'। मतोरित्यस्मिन्नसति पूर्वग्रहणमपि न क्रियेतेति संज्ञाशब्दसंबन्धिन आकारमात्रस्य प्रसङ्गः, पूर्वग्रहणं मतोरनन्तरस्य पूर्वस्य यथा स्यादिह माभूत्सानु[१]मतीति ॥

१ साम्रमतीति ३ पु० पा०।

"अन्तो ऽवत्याः" ॥ इहासंदेहार्थं वत्या अन्त इत्यवचनादकारप्रश्लेषो निश्चितः, तत्र प्रयोजनं पृच्छति । 'अवत्या इति किमुच्यतइति' । यथावत्या इत्युच्यमानेपि राजवतीत्यत्र कस्मान्न भवति, भवति ह्येतदपि नलोपे कृते ऽवतीशब्दान्तमत आह । 'स्वरविधावित्यादि' । ननु चोदाहरणेपि मतोर्वत्वस्यासिद्धत्वादवतीशब्दान्तत्वं नास्तीत्याह । 'वत्वं पुनरिति' । पुनःशब्दो नलोपाद्विशेषं द्योतयति ॥

"ईवत्याः" ॥ अहीवतीत्यादौ पूर्वं दीर्घः, संज्ञायामिति वत्वं, योगविभागश्चिन्त्यप्रयोजनः ॥

"चौ" ॥ 'उदात्तनिवृत्तिस्वरापवादोयमिति' । कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्याञ्चत्यकारस्य विभक्तिनिमित्तको 'ऽच' इति लोपः । 'चावतद्धितइति वक्तव्यमिति' । चौ यः स्वरः स तद्धिते परतो न भवतीत्यर्थः । अन्यथा योऽनुदात्तः प्रत्ययो दधीचः पश्येत्यादौ तत्र यथोदात्तनिवृत्तिस्वरं बाधते तथा दाधीच इत्यादौ प्रत्ययस्वरमपि सतिशिष्टः स्वरो बाधेत, तस्मादतद्धितइति वक्तव्यम्, अस्मिंश्च सति उदात्तनिवृत्तिस्वरस्याऽयमपवादो भवति ॥

"समासस्य" ॥ 'राजदृषदिति' । ननु च योत्र समासस्यान्तो दकारो नासौ स्वरभाक्, यश्च ततः पूर्वोऽकारो नासौ समासस्यान्तोऽत आह । 'स्वरविधाविति' । न स्वरस्यैव विधिः किं तर्हि योऽप्यनुदात्तादेरञित्यादिः सोपि स्वरविधिः, स्वराश्रयत्वात्, तेन सोपि विधिर्व्यञ्जनादौ व्यञ्जनान्ते च भवति, अत्र च ज्ञापकचोत्तरपदेनुदात्तादावित्युक्त्वा पृथिव्याः प्रतिषेधः । 'नानास्वरापवाद इति' । यद्यप्यनुदात्तम्पदमेकवर्ज' मित्यस्ति तथापि वर्जने विशेषाश्रयणात्पर्यायेण नानास्वरप्रसङ्गः, तत्र राजशब्दः 'कनिन्युवृषितक्षी' त्यादिना कनिन्प्रत्ययान्तत्वादाद्युदात्तः, पुरः कुषन् पुरुषः, ब्रह्मणोपत्यं ब्राह्मणो ऽणन्तः, कलतृपश्च, वृषादिभ्यश्चित्, कमेर्बुक् च, कम्बलः, 'कन्याराजन्यशिष्यामनुष्याणामन्त' इति कन्याशब्दोन्तस्वरितः, 'स्वनहसोर्वा' इत्यप्, धातुस्वरः, पटत्पटदुन्यतइति पटहः, पृषोदरादिरन्तोदात्तः, 'शाश-

पिभ्यान्दनो', पचादिषु नदडिति पठ्यते, टित्वान्ङीप्, नदी, उदात्तनिवृत्तिस्वरः, पोषशब्दो घञन्तः 'षट्भसोऽदिः' 'दृणातेः षुग् ह्रस्वश्च' इति कुषत्, प्रत्ययस्वरः। समिध्यते ययेति समित्, संपदादित्वात्क्विप्, कृदुत्तरपदप्रकृतिस्वरः, एते नानास्वरास्तेषामपवादः॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्याध्यायस्य

प्रथमस्यचरणः॥

"बहुव्रीहौ प्रकृत्या पूर्वपदम्"॥ इह यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, न च कृत्स्नस्य पूर्वपदस्य शेषनिघातलक्षणो विकारः प्राप्तः किं तु तत्स्थयोरुदात्तस्वरितयोरेव, तस्मात्तयोरेव पूर्वपदशब्दो वर्तते तदाह। 'पूर्वपदग्रहणमित्यादि'। समासान्तोदात्तत्वं हीत्यादिना विकारप्राप्तिन्दर्शयति। 'समासान्तोदात्तत्वापवादोऽयमिति'। नाप्राप्ते तस्मिन्नारम्भात्। ननु च यत्र सामान्यविधिप्रवृत्तिमनपेक्ष्य विशेषविधिप्रवृत्तिस्तत्रापवादत्वं, यथा 'कर्मण्यण्' 'आतोनुपसर्गे कः' इति, इह तु सत्यां विकारप्राप्तौ प्रकृतिभावो विधेयः, विकारप्राप्तिश्च समासस्येत्यस्मिन् प्रवृत्त इति कथन्तत्प्रवृत्त्यपेक्षस्तदपवादः, अतः समासस्येत्यस्मिन्प्रवृत्ते प्राप्तस्य शेषनिघातस्यैवायमपवादो युक्तः, नैतदेवं, यद्ययन्निघातापवादः स्यात्तत्रैवायं ब्रूयादनुदात्तम्पदमेकवर्ज्जं, बहुव्रीहौ पूर्वपदमिति। नन्वेवमुच्यमाने समपाद इत्यादौ स्वाभाविकस्यापि पूर्वपदानुदात्तस्य प्रतिषेधप्रसङ्गः, किं कारणमनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति, तस्मात्समासस्येत्यस्यानन्तरमारभ्यमाणस्तस्यैवायमपवादः। ननु चोक्तं कथन्तत्प्रवृत्त्यपेक्षस्तदपवाद इति, उच्यते, निदानोच्छेदेन निदानिन उच्छेदः शक्यते कर्तुं, समासान्तोदात्तत्वं च शेषनिघातलक्षणस्य पूर्वपदविकारस्य निदानमतस्तदभावद्वारेण निदानभूतस्य समासान्तोदात्तस्यैवास्मिन् विषयेऽप्रवृत्तिराख्यायते। नन्वेवं नानापदस्वरप्राप्तौ समासस्येत्यस्यारम्भात्तदप्रवृत्तौ द्वयोरपि पूर्वोत्तरपदयोः प्रकृतिस्वरप्रसङ्गः। तथाहि सति न बहुव्रीहेरिति समासान्तोदात्तत्वमेव प्रतिषेधेत्, अस्तु

वा समासान्तोदात्तत्वमस्तु वा शेषनिघातः, पश्चात्तु प्रकृत्येत्यनेन स्वरविशेषमुपलक्ष्य स स्वरः पूर्वपदस्य विधीयते, शेषनिघातात्प्राक् पूर्वपदस्य प्रकृत्या यः स्वरस्तत्स्वरकम्पूर्वपदं बहुव्रीहौ भवतीति, यदि वा प्रकृत्येत्यनेन स्वरविशेषउपलक्षिते सत्ययमर्थो भवति बहुव्रीहौ पूर्वपदस्य स्वाभाविको यः स्वर आद्युदात्तत्वादिकः स भवतीति, एवञ्च यथा पूर्वपदस्यादिरुदात्तो भवतीत्युक्तेन समासस्येत्येतत्प्रवृत्त्यपेक्षा, तादृगेतदिति युज्यते तदपवादता। 'कृष्णो मृग इति'। यस्याजिनं कृष्णाजिनमित्युच्यते। 'ब्रह्मचारिशब्दः कृदुत्तरपदप्रकृति स्वरेणान्तोदात्त इति'। तथा चाधीयते ब्रह्मचारी चरति बिभ्रद्विषाम्, कस्य ब्रह्मचार्यसीत्यादौ। 'णिनीति'। पूर्वपदाद्युदात्तत्वन्तु न भवति प्रवृद्धादिषु पाठादाकृतिगणो हि स दृश्यते, वृत्तौ तु कृदुत्तरपदप्रकृतिस्वरेणेत्युपलक्षणम्, अपर आह छन्दसि परादिश्च परान्तश्चेत्यन्तोदात्तत्वं, वृत्तेस्त्वयमर्थः ब्रह्मेव चरति ब्रह्मचारीत्युपमानमत्र पूर्वपदन्ततः किम्, उपमानं शब्दार्थप्रकृतावेवेति नियमात्कृदुत्तरपदप्रकृतिस्वर एव भवतीति। 'स्नातकशब्दः कन्प्रत्ययान्त इति'। यावादिषु स्नात वेदसमाप्ताविति पठ्यते, 'मनोर्जातावञ्यतौ षुक्च' मनुष्यः। यदि तर्ह्ययं प्रकृतिभावः समासान्तोदात्तत्वं बाधते सर्वानुदात्तेपि पूर्वपदे बाधेत, तत्रापि ह्यस्य प्रवृत्तिर्न केन चिद्वार्यते, विशेषविधिश्च प्रवर्त्तमानः सत्यपि सम्भवे सामान्यविधेर्बाधको भवति, तक्रदानमिव दधिदानस्येत्यत आह। 'उदात्तग्रहणमित्यादि'। न्यायतोप्ययमर्थः सिद्धः, कथं यस्य विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, विकारप्राप्तिश्चोदात्तस्वरितयोरेव, अत एव पूर्वमुक्तमुदात्ते स्वरिते वा वर्त्तत इति। 'समभाग इति'। समशब्दः षूञो डमिति व्युत्पादितः सर्वानुदात्तः, नन्वत्रासत्यपि समासान्तोदात्तत्वे भागशब्दस्य कर्षात्वत इति अन्तोदात्तत्वात् समभागशब्दोन्तोदात्त एव भविष्यति, तस्मादुदाहरणादिगयं दर्शिता, समपाद इत्युदाहर्तव्यं, पादशब्दो वृषादित्वादाद्युदात्तः। किमर्थं पुनरिदमुच्यते, पूर्वपदप्रकृतिस्वरो यथा स्यात्

१ मुद्रितमूलपुस्तके छिन्यन्त इति नास्ति।

समासान्तोदात्तत्वं माभूदिति, नञ्सुभ्यामित्येतन्नियमार्थं भविष्यति, यदि बहुव्रीहावन्तोदात्तत्वं भवति नञ्सुभ्यामेवेति, न चैवञ्चानापदस्वरप्राप्तौ समासान्तोदात्तत्वविधानान्नियमेन तस्मिन्व्यावर्त्तितेपि पूर्वोत्तरपदयोर्द्वयोरपि पर्यायेण प्रकृतिस्वरप्रसङ्गः, 'शितेर्नित्याबह्वज्' इत्यस्य नियमार्थत्वात्, यदि बहुव्रीहावुत्तरपदम्प्रकृत्या भवति शितेरेव परमिति। उच्यते। 'नञ्सुभ्या' मित्येव तावन्नियमो नोपपद्यते, अनुदरः सूदर इत्यादौ उदाराश्वेषु चेपदति पूर्वपदान्तोदात्तस्य प्राप्तस्य बाधनाद्विधिसम्भवात्। 'शितेर्नित्याबह्वज्' इत्येतदपि शितेर्नित्याबह्वजेवेत्यनेन नियमेन शीतिललाटादिष्वेवोत्तरपदप्रकृतिस्वरं निवर्त्तयेच्च चित्रगुप्रभृतिष्वित्यारभ्यमेवैतत्, बहुव्रीहिग्रहणन्तु शक्यमकर्तुं, तत्पुरुषे कस्मान्न भवति, तत्पुरुषे तुल्यार्थेत्यादिनियमार्थम्भविष्यति, तत्पुरुषे तुल्यार्थादिष्वेवेति, गन्तव्यपण्यमेव वाणिजे, गतादिष्वेवोत्तरपदेषु द्विगावित्यादि, द्वन्द्वे कस्मान्न भवति, राजन्यबहुवचनद्वन्द्वेऽत्येतन्नियमार्थम्भविष्यति, द्वन्द्वे भवति राजन्यबहुवचनद्वन्द्व एवेति, अव्ययीभावे कस्मान्न भवति, परिप्रत्युपापावर्ज्यमानेत्यादि नियमार्थं भविष्यति, परिप्रत्युपापा एवाव्ययीभावइति, विपरीतस्तु नियमः सर्वत्र न भविष्यति नानिष्टार्था शास्त्रप्रवृत्तिरिति, एवमप्यसति बहुव्रीहिग्रहणे समासान्तोदात्तस्य पूर्वपदप्रकृतिस्वरस्य चैकविषयत्वाद्विरोधाच्च तुल्यश्वेतः पञ्चारत्निरित्यादौ पर्यायः प्राप्नोति, तत्पुरुषादिषु तुल्यार्थादीन्येव पूर्वपदानि प्रकृतिस्वराणि भवन्ति नान्यानीत्येव हि नियमः कृतो न तुल्यार्थादिपूर्वपदेषु तत्पुरुषादिषु पूर्वपदप्रकृतिस्वरत्वमेवेति। अथाप्यगृह्यमाणविशेषत्वादुभयनियमः, तत्पुरुषादिषु तुल्यार्थादीन्येव तेषु पूर्वपदप्रकृतिस्वरत्वमेवेति, तथा च बहुन्यतरस्यामिति वर्त्तमाने दिष्टिवितस्त्योश्चेति विकल्पो विधीयते पञ्चदिष्टिः पञ्चवितस्तिरित्यादाविगन्ते द्विगाविति नित्यपूर्वपदप्रकृतिस्वरो माभूदिति, तथापि चित्रगुरित्यादौ बहुव्रीहौ पर्यायप्रसङ्गः, ज्ञापकात्सिद्धं, यदयं द्वित्रिभ्यां पाद्दन्मूर्द्धस्विति द्विपादित्यादावन्तोदात्तविकल्पं शास्ति तज्ज्ञापयति न बहुव्रीहावन्तोदात्तत्व-

पर्यायेण भवतीति, एवमप्युदात्तविषयमेव ज्ञापकं स्यात् बहुव्रीहा-वन्तोदात्तत्वं पर्यायेण भवतीति, किं च स्याद् उदात्तस्वरितयोस्तु पूर्वो-त्तरपदस्थयोः पर्यायप्रसङ्गः, न च स्वरिते य उदात्तस्तदाश्रयं ज्ञापकं युज्यते, अचो ह्युदात्तसंज्ञा, न च वर्णैकदेशो वर्णग्रहणेन गृह्यते, अथ वर्णत्वावर्णत्वकृतं भेदमुत्सृज्योदात्तश्रुतिपरं ज्ञापकं वर्ण्यते तदा बहु-व्रीहिग्रहणं शक्यमकर्तुम् ॥

"तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" ॥ 'सदृशशब्दोपीत्यादि'। कृदुत्तरपदप्रकृतिस्वरेणेत्येतदपेक्षते। 'कुमुदश-ब्दोपीत्यादि'। तत्र यदा कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तः, तथा चानुदात्तस्य च यत्रोदात्तलोप इत्यत्र कुमुदानित्युदाहृतमुक्तं च कुमु-दादयोन्तोदात्ता इति, यदा त्वव्युत्पन्नं तदा 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्त इत्युक्तम्, अपर आह, जलजे नपुंसकविषयः कुमुदशब्दः, यस्तु वानरविशेषे कुमुदशब्दः स पुल्लिङ्गस्तत्रेह जलजवाच्युदाहृतः, अनुदात्तस्य चेत्यत्र तु वानरवचन इति। 'दूर्वाकाण्डशरकाण्डशब्दावित्यादि'। आद्युदात्तत्वप्राप्तिप्रदर्शनमेतत्, षट् च काण्डादीनीत्युत्तरपदाद्युदात्तत्वेन तत्र भाव्यम्। 'नञ्कुनिपातानामिति'। निपातत्वादेव सिद्धे नञ्ग्रहणमकर-णिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थं, तथा चाव्ययीत्यत्रापि कृता सह निर्दिष्टो यत्र नञ् तत्रापि नञ एव स्वरो भवति, तथा विभक्तिस्व-रान्नञ्स्वरो बलीयान् भवति, कुग्रहणं तु चादिषु पाठाभावात्, पठितव्य-स्त्वसौ, अन्यथाव्ययसंज्ञा न स्यात्, स्वरादिष्वपि पाठाभावात्। 'स्नात्वा-कालक इति'। मयूरव्यंसकादिरयं, यद्येवं स तत्रैवान्तोदात्तः पठ्यते, एवमपि परिगणनं कर्त्तव्यं, सामिकृतं स्वयंधौतमित्यादौ प्रकृतिस्वरो माभू-दिति, इह कस्माच भवति, परमं कारकं परमकारकं, परमेण कारकेण पर-मकारकेण, परमे कारके परमकारके इति, नहि विशेषणसमासः प्रथमान्ता-नामेवेति नियमोस्ति, तेन द्वितीयाद्यन्तं पूर्वपदमिति चोद्यं, परिहारस्तु लक्षणप्रतिपदोक्तपरिभाषया तृतीयादीनां प्रतिपदं यः समासस्तत्रायं स्वरः, अयन्तु विभक्तिविशेषमनुपादाय विशेषणसमास इति ॥

"वर्णो वर्णेष्वनेते" ॥ अनेतइति प्रतिषेधाल्लुप्तवचननिर्दिष्टाच्चोत्तरपदे स्वरूपग्रहणं न भवति, तत्साहचर्यात्पूर्वपदेऽपि। 'कृष्णशब्दो नक्प्रत्ययान्तोऽन्तोदात्त इति'। फिषि तु कृष्णस्यामृगाख्या चेदिति कृष्णस्यान्तोदात्तत्वमन्यत्राद्युदात्तत्वं व्यवस्थितम् ॥

"गाधलवणयोः प्रमाणे" ॥ 'शम्भगाधमिति' । गाधृ प्रतिष्ठायां, गाध्यतइति गाधः, अर्द्धर्चादिः, इयत्तायाः परिच्छित्तिरियत्तापरिच्छेदः, क्रियाशब्दोऽत्र प्रमाणशब्दो गृह्यते न स्वायाममाने रूढ इत्यर्थः ॥

"दायाद्यं दायादे" ॥ दातव्यो दायः, भागोंश इत्यर्थः । दायमादत्ते दायादः, मूलविभुजादित्वात्कः, दायादस्य भावो दायाद्यं, किं पुनस्तत्, दायस्यादानं तत्संबन्धी वा, इह तु लक्षणया ऽऽदीयमाने दायएव दायाद्यशब्दो वर्त्तते। 'अत्रेत्यादि'। अस्यमाणेऽभिप्रायः । तमेवाविष्करोति । 'यद्येवमिति'। 'शेषलक्षणेति'। सामान्यलक्षणेवात्र षष्ठी न प्रतिपदमित्येवशब्दस्यार्थः । यदि शेषलक्षणैवात्र षष्ठी किमर्थं पुनस्तत्र विधानमित्याह । 'तस्यास्त्विति'। सप्तमी तावद्विधेया, अप्राप्तत्वात्, तत्र यदि सैव विधीयेत ततोऽसौ विशेषविहितत्वात् षष्ठ्या बाधिका विज्ञायेत, मैवं विज्ञायीति पुनः सैव शेषलक्षणा षष्ठ्यभ्यनुज्ञायते न त्वपूर्वा विधीयतइत्यर्थः ॥

"प्रतिबन्धि चिरकृच्छ्रयोः" ॥ कार्यसिद्धिं प्रतिबध्नातीति प्रतिबन्धी, आवश्यके णिनिः । 'विशेषणसमास इति'। ननु च सामानाधिकरण्ये सति स भवति, न चेह तदस्ति, गमनशब्दस्य गतिवाचित्वात् चिरशब्दस्य च कालवाचित्वात् । नैष दोषः । चिरकालभाविनि गमनेऽत्र चिरशब्दो वर्त्तते। 'मयूरव्यंसकादित्वैव इति'। गमनमत्र विशेष्यन्तद्विशेषणे तु चिरकृच्छ्रे, अतो विशेष्यस्य पूर्वनिपातार्थं मयूरव्यंसकादित्वमेष्टव्यमिति भावः। पूर्वपदस्य प्रतिबन्धिवाचित्वमुपपा[1]दयति। 'गमनं हीत्यादि'। कारणवैकल्याद्धि चिरकालभावि गमनं कृच्छ्रयोगि च, कृच्छ्रन्दुःखं तद्योगि च कार्यसिद्धेः प्रतिबन्धि जायते ॥

१ उपपादयतीति ३ पु० पा० ।

"पद्वेपदेशे" ॥ उच्चारः पुरीषक्रिया ॥

"निवाते वातत्राणे" ॥ 'कृत्प्रत्ययान्तोऽन्तोदात्त इत्यपर इति'। कवतेर्झगिति सूत्रमधीयते, इकारस्येत्संज्ञा न भवति गुणप्रतिषेधार्थात्ककारानुबन्धात् ॥

"शारदेऽनार्तवे" ॥ उदाहरणे रज्जुद्रुते रज्जुशब्दो दृषत्पिष्टेषु दृषच्छब्दः, ततः कर्मधारये ऽस्वपदविग्रहः, सृजेरसुम् चेत्यत्र स्कन्देः सलोपश्चेत्यतः सलोप इति वर्त्तते, तेन सृजेरन्त्यादचः परोऽयमसुम्, सलोपे यणादेशे ऽसुमः सकारस्य जश्त्वे च रज्जुरिति भवति ॥

"अध्वर्युकषाययोर्जातौ" ॥ 'नियतविषया इति'। वर्णविशेषनियता इत्यर्थः ॥

"सदृशप्रतिरूपयोर्जातौ" ॥ सदृशग्रहणमनर्थकं तृतीयासमासवचनात्, सदृशशब्देन तृतीयासमास उच्यते 'पूर्वसदृशसमोनार्थे'ति, तत्र तृतीयापूर्वपदं प्रकृतिस्वरम्भवतीत्येव सिद्धमत आह । 'षष्ठीसमासार्थञ्चेति'। तुल्यार्थयोगे षष्ठ्यपि विधीयते, तत्र यदा तस्याः षष्ठ्याः समासः क्रियते तदापि यथा स्यादित्येवमर्थं सदृशग्रहणम् । ननु चानभिधानात्षष्ठीसमासो न भविष्यति । द्वैरूप्यं हि नः साध्यम्, मातुः सदृशो मात्रा सदृशो मातृसदृश इति, एतच्च विनापि षष्ठीसमासेन सिद्ध्यत्येवात आह । 'इहेत्यादि'। अलुकि सति रूपविशेषस्य विद्यमानत्वादवश्यकर्त्तव्यः षष्ठीसमासस्तदर्थं चेह सदृशग्रहणं कर्त्तव्यं, यद्येवं तृतीयासमासे सदृशग्रहणञ्च कर्त्तव्यं षष्ठीसमास एवास्तु, यत्र तर्हि षष्ठ्यर्थो नास्ति तदर्थन्तत्र सदृशग्रहणं यथा विद्यया सदृशो विद्यासदृश इति, नह्यत्र षष्ठ्यर्थोऽस्ति, किं तु तृतीयार्थः, विद्यया हेतुना सदृश इत्यर्थः, अन्यो देवदत्तादिरत्र प्रतियोगी, अपर आह । तृतीयासमासोऽलुकि प्रयोजयति, मनसः संज्ञायां मनसासदृश इति । 'दन्तेत्यादि'। दशि दंशनस्पर्शनयोः, दंशेष्ट्रो न आ चेति ट्रप्रत्ययो नकारस्य चाकारः, टित्त्वान्ङीप्, यस्येति लोपः, अनुदात्तस्य च यत्रोदात्तलोप इति ङीप उदात्तत्वं, वृषलशब्दाज्जातिलक्षणो ङीष् ॥

"द्विगौ प्रमाणे" ॥ 'कर्त्तृमादीनाञ्चे'त्यत्र मकरकुक्कुटपारेवते-त्यादेः सूत्रादादिग्रहणमनुवर्त्तते, 'अथ द्वितीयं प्रागीषा'दित्यतो द्वितीयग्रहणम् । 'परमसप्तसममिति'। समाहारे द्विगुः, पात्रादित्वा-न्नपुंसकत्वम्, मूलोदाहरणे तु तद्धितार्थे द्विगुरुत्तरपदम् ॥

"गन्तव्यपण्यं वाणिजे" ॥ वणिगेव वाणिजः प्रज्ञादित्वादण् । 'सप्तमीसमासा एतइति'। सप्तमीति योगविभागात्, गोवाणिजादयस्तु षष्ठीसमासाः ॥

"मात्रोपज्ञोपक्रमच्छाये नपुंसके" ॥ फिषिति आदिमेन योगेन शान्तनवीयञ्चतुष्कं सूत्रमुपलक्षयति, तत्र समुद्रशब्दः सागरार्थत्वाद-न्तोदात्तः ॥

"सुखप्रिययोर्हिते" ॥ 'समानाधिकरणसमासा एतइति'। गमनादीनां विशेषणत्वात्पूर्वनिपातं मन्यते, अथ तु सुखप्रिययोर्विशेष-णत्वन्तदा मयूरव्यंसकादित्वमेष्टव्यम् । 'आयत्यामिति'। परिणामे आगामिकाले भाविकालइति यावत् ॥

"प्रीतौ च" ॥ इह तु सुखप्रिययोरित्येतावत्सूत्रं कृत्वा हिते चेति वक्तव्यम् । तत्राद्ये सूत्रे सुखप्रिययोः प्रीत्यव्यभिचारादेव प्रीतौ गम्यमानायां भविष्यति, तत्राह । 'सुखप्रिययोरित्यादि'। ब्राह्मण-शब्दोणन्तः, छात्रशब्द 'छत्रादिभ्यो ण'इति णप्रत्ययान्तः । 'कन्या-शब्दः स्वरितान्त इति'। तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनु-ष्याणामन्त इति फिषि पाठात् ॥

"पत्यावैश्वर्ये" ॥ 'धान्यमन्तस्वरितमिति'। अनन्तरपठि-तेन फिट्सूत्रेण, गवादीनान्तु पूर्वमेव स्वरकथनम् ॥

"न भूवाक्चिद्दिधिषु" ॥ भूवादीनां समाहारद्वन्द्वे नपुंसक-ह्रस्वत्वम्, अत्र पूर्वपदप्रकृतिस्वरप्रतिषेधाद्वृत्तिकारेण पूर्वपदानां स्वरो व्याख्यातः, तत्रादितस्त्रयः क्विबन्ताः. अन्दूदृम्भूजम्बूकफेलूकर्कन्धूर्दिधि-षूरिति कूप्रत्ययान्तो दिधिषूशब्दो निपातितः ॥

"वा भुवनम्" ॥ भुवनशब्दो भाषायां बहुलवचनात्साधुः ॥

"आशङ्काबाधनेदीयस्सु संभावने" ॥ शकि शङ्कायां, बाधृ विलोडने, आङ्पूर्वाभ्याङ्कर्मणि घञ्, अतिशयेनान्तिको नेदीयः, 'अन्तिकबाढयोर्नेदसाधौ' अस्तित्वाध्यवसायोस्तित्वनिश्चयः, गमनाशङ्कादयो विशेषणसमासाः, मयूरव्यंसकादयो वा ॥

"पूर्वे भूतपूर्वे" ॥ 'आढ्यो भूतपूर्व इति' । यः पूर्वमाढ्य आसीत्स एवमुच्यते । 'अत्रेत्यादि' । 'परमश्चासौ पूर्वश्चेति' । सोयं वाक्यार्थः पूज्यमानतालक्षणः, तस्मिन्निह प्रत्युदाहरणे समास इत्यर्थः । 'न त्विति' । 'परमो भूतपूर्व इति' । योयं वाक्यार्थः पूर्वं परम आसीदित्येवंरूपः, न तस्मिन् तत्र समास इति यावत्, किं कारणमित्याह । 'तथा चेति' । चोह्यर्थे ॥

"सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये" ॥ उदाहरणेषु षष्ठीसमासः, मद्रादीनां पूर्वमेव स्वर उक्तः ॥

"विस्पष्टादीनि गुणवचनेषु" ॥ 'विस्पष्ट इति' । स्पशबाधनस्पशनयोरित्यस्य निष्ठायां वा दान्तेत्यादिना स्पष्टशब्दो निपातितः, विशब्देन गतिसमासः । चित्र चित्रीकरणे चुरादिस्तस्मादेरच्, विशेषेण चित्रं विचित्रं, प्रादिसमासः । चिती सञ्ज्ञाने, विगतञ्चित्तमस्य विचित्तः, अञ्जू व्यक्त्यादिषु, तस्य विपूर्वस्य निष्ठाया गतिस्वरः, तत्रेकारस्य यो यण् स उदात्तयण् भवति । 'संपन्नशब्दस्याथादिस्वरेणेति' । गतिस्वरस्तु न भवति, किं कारणम्, कर्मणीति तत्रानुवर्त्तते, अयं तु कर्तरि क्तः । 'पटुपण्डितशब्दौ प्रत्ययस्वरेणेति' । अन्तोदात्त इत्यपेक्षते, यदेकवचनान्तं प्रकृतन्तस्य वचनविपरिणामं कृत्वा ऽन्तोदात्ताविति संबन्धः कर्त्तव्यः, पाटयतेः 'फलिपाटिनमिमनिजनीनां गुक्पटिनाकिधतश्चे' त्युप्रत्ययः, पटिश्चादेश, इकार उच्चारणार्थः, पटुः, पडि गतौ, निष्ठा, पण्डितः, कुशान् लातीति कुशलः, ला आदाने । 'चपलशब्दश्चित्स्वरेणेति' । अन्तोदात्त इत्यपेक्षते । 'चिदिति वर्त्तत इति' । वृषादिभ्यश्चिदित्यतः । 'निपुणशब्द इत्यादि' । पूर्ववत्संबन्धः । पुण कर्मणि शुभे ॥

"अर्ध्यावमकन्यापवत्सु भावे कर्मधारये" ॥ उदाहरणेषु मयूरव्यंसकादित्वाद्विशेष्यस्य पूर्वनिपातः, इष्टेयसुनोः 'प्रशस्यस्य श्रः' 'ज्य च' 'युवाल्पयोः कनन्यतरस्याम्'। 'पापिष्ठ इति'। विन्मतोर्लुक्।

"कुमारश्च" ॥ 'कुमारश्रमणेति'। लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य समासे पुंवद्भावः। कुमार क्रीडायामित्यस्मात्पचाद्यच्, कुमारः। 'केचित्पुनरित्यादि'। चकारो ह्यत्र क्रियते, अस्यैव विधेः समुच्चयार्थः॥

"आदिः प्रत्येनसि" ॥ 'प्रतिगत एनसेति'। अत्यादयः क्रान्ताद्यर्थे तृतीययेति तत्पुरुषः, द्वितीये तु विग्रहे बहुव्रीहिः, कथं पुनरन्तरेणोदात्तग्रहणमुदात्तस्वरो लभ्यतइत्याह। 'उदात्त इत्येतदिति'। सामर्थ्यमेव दर्शयति। 'पूर्वपदेति'। प्रकृत्येति हि वर्तते, तत्रैवमभिसंबन्धः, पूर्वेण कुमारशब्दे प्रकृतिभावेन यः स्वरः स्थापितः सोऽत्रादेर्भवतीति[1]॥

"इगन्तकालकपालभगालशरावेषु द्विगौ" ॥ 'कृताणप्रत्ययलोपा इति'। कृतोऽणप्रत्ययलोपो येषान्ते तथोक्ताः। 'द्विगाविति किं परमशराव इति'। षष्ठीसमासोऽयं, बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यमेव, इगन्तप्रकृतिस्वरत्वे यणगुणयोरुपसंख्यानं पञ्चारत्न्यो दशारत्नयः, यणगुणयोः कृतयोरिगन्ते द्विगावित्येष स्वरो न प्राप्नोतीत्यत आह। 'यणगुणयोरित्यादि'। प्राक् सुबुत्पत्तेः स्वरो भवन्नन्तरङ्गः, यणगुणौ तु सुबपेक्षत्वाद्बहिरङ्गौ। 'स्थानिवद्भावाद्वेति'। न चात्र स्वरविधौ न स्थानिवत्त्वमलोपाजादेशत्वात्। 'पञ्चारत्न्य इति'। छान्दसोऽयं प्रयोगः, तत्र जसि चेति गुणो न भवति, जसादिषु छन्दसि वा वचनमिति वचनात्॥

"बहून्यतरस्याम्" ॥ 'बहुशब्दोन्तोदात्त इति'। कुङ्स्वावर्तिति वर्तमाने लङ्घिबंह्योर्नलोपश्चेति कुप्रत्यये ह्यत्पादितत्वात्॥

"सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात्" ॥ 'द्यप्रत्ययान्ताविति'। वुञ्छणादिषु संकाशादिभ्यो ण्यः, अवतेः कक्प्रत्ययः, ज्वरत्वरेत्यादिनोठ्,

[1] सूत्रे आदिरिति षष्ठ्यर्थे प्रथमेति अधिकं ३ पु०।

उकः, कुम्भकलशशब्दाभ्याञ्जातिलक्षणो ङीष्, धात्रीशब्दो धेटः ष्ट्रन् ङीषु च व्युत्पादितः, चक्रशब्दः 'कृञः को द्वे च । 'सप्तमीस्वर इत्यादि' । 'तत्पुरुषे तुल्यार्थे'त्यादिना सप्तम्यन्तस्य यः प्रकृतिभावः परत्वात्थाथादिस्वरेण बाधित[1] इति, यत्र तु कृत्स्वरेण बाधित इति पाठस्तत्र कृदन्तस्य यः स्वरः थाथादिलक्षणस्तेनेत्यर्थः ॥

"परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु" ॥ 'परित्रिगर्त्तमिति' । त्रिगर्त्तान्वर्जयित्वेत्यर्थः । 'अपपरी वर्जन'इति कर्मप्रवचनीयसंज्ञा, 'पञ्चम्यपाङ्परिभिरि'ति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्ये'त्यव्ययीभावः । सौवीरादयोपि जनपदविशेषाः । 'प्रतिपूर्वाह्णमिति' । 'लक्षणेनाभिप्रती आभिमुख्य' इत्यव्ययीभावः । 'उपपूर्वाह्णमिति' । 'अव्ययं विभक्ती'त्यादिना सामीप्ये, किं पुनः कारणमपपर्योरेव वर्ज्यमानमुदाहृतं नेतरयोस्तत्राह । 'तत्रेति' । अथाहोरात्रावयवा अपि इतरयोरपपर्योः कस्मान्नोदाह्रियन्तेऽत आह । 'अहोरात्रावयवा अपीति' । 'परिवनमित्यत्रेति' । 'परिप्रत्युपापे' त्यस्यावकाशः परित्रिगर्तमिति, वनं समासइत्यस्यावकाशः प्रवणमिति, परिवनमित्यत्र वनं समासइत्येतद्भवति विप्रतिषेधेन, अपवादत्वञ्चात्र हेतुर्न विप्रतिषेधः, समासस्येत्येव सिद्धे वनस्य पुनर्वचनएतत्प्रयोजनं येन्ये तदपवादास्तद्बाधनार्थं, सर्वेषामव्ययस्वरं बहुव्रीहिस्वरञ्च बाधते, एवमिदमपि बाधिष्यते ॥

"राजन्यबहुवचनद्वन्द्वेन्धकवृष्णिषु" ॥ 'श्वाफल्कचैत्रकरोधका इति' । प्रमादपाठोयमत्र त्रिपदे हि द्वन्द्वे यत्सर्वमपेक्ष्य पूर्वपदन्तस्यैव भवति, ततश्च चैत्रकशब्दस्य स्वरवचनमनुपपन्नं स्यात्, तस्मात् श्वाफल्कचैत्रकाश्चैत्रकरोधका इति पाठः, एकस्तु चैत्रकशब्दो लेखकैः पुनरुक्तिबुद्ध्या त्यक्तः । 'शिनिशब्द आद्युदात्त इति' । औणादिको निः ह्रस्वश्च बहुलवचनात् । 'तदपत्येष्विति' । यद्यपि शिनिशब्द इति प्रकृतं तथापि शब्दस्यापत्यास्यासंभवाच्छिनेः क्षत्रियस्यैव यान्यपत्यानि तेष्वित्यर्थः । अभेदेनाभेदोपचारेण । ननु च राज्ञोपत्ये जातिग्रहणमिति

[1] तेनैं पुनर्विधीयतइति ३ पु॰ अधिकम् ।

वचनाद् राजन्यशब्दः क्षत्रियजातिवचनः, ततश्च द्रौप्यभैमायना इत्युदाहरणं नोपपद्यते, तेषामपि क्षत्रियत्वादत आह । 'राजन्यग्रहणमित्यादि' । अन्धकवृष्णीनां क्षत्रियत्वाव्यभिचाराद् राजन्यग्रहणमुक्तविशेषपरिग्रहार्थमिति भावः ॥

"सङ्ख्या" ॥ 'एकादशेति' । 'सङ्ख्याया अल्पीयस्या' इत्येकशब्दस्य पूर्वनिपातः, 'प्रागेकादशभ्योच्छन्दसीति' निपातनाद्दीर्घः । 'द्वादशेति' । द्व्यष्टनः सङ्ख्यायामित्यात्वम् ॥

"आचार्योपसर्जनश्चान्तेवासी" ॥ आचार्य उपसर्जनं यस्य स आचार्योपसर्जनः, अन्तेवसतीत्यन्तेवासी, शयवासवासिष्वकालादित्यलुक्, गौणशब्दोऽयं निर्देशः, द्वन्द्वस्य यान्यवयवपदानि तान्याचार्योपसर्जनवचनत्वादन्तेवासिवाचित्वाच्च तथोच्यन्ते, तदवयवद्वन्द्वोप्यवयवधर्मेण तथोच्यते, पाणिनिशब्दादिञ् न भवतीति पूर्वमेवोक्तं, रौढिशब्दादपि न भवति, 'न द्व्यचः प्राच्यभरतेषु'ष्विति निषेधात् । 'आचार्योपसर्जनग्रहणन्द्वन्द्वविशेषणमिति' । न पूर्वपदविशेषणम् । प्रथमा तु सप्तम्यर्थे द्रष्टव्या, किमर्थं पुनर्द्वन्द्वविशेषणं विज्ञायतइत्याह । 'सकलो द्वन्द्व इति' । 'इह माभूदिति' । पूर्वपदविशेषणे त्वत्रापि स्यात् ॥

"कार्त्तकौजपादयश्च" ॥ 'प्रकृतिस्वरपूर्वपदा इति' । प्रकृतिशब्दः स्वाभाविके वर्त्तते, प्रकृतिः स्वाभाविकः स्वरो येषान्तानि प्रकृतिस्वराणि, एवं विधानि पूर्वपदानि येष्विति बहुव्रीहिः । 'कृतस्यापत्यं कुजस्यापत्यमिति' । 'अणन्तावेताविति' । ऋषिवाचित्वादाभ्यामण्, उत्तरपदस्य व्युत्पत्तिप्रदर्शनं प्रासङ्गिकं, पूर्वपदस्यैव तु स्वरसिद्धये प्रदर्शनीयम्, माण्डूकेयशब्दो ढक्च मण्डूकादिति ढगन्तः । 'आवन्त्यश्मका इति' । अवन्तिशब्दोन्तोदात्तस्तस्मा 'द्वृद्धेत्कोसलाजादाञ्यङ्,' तस्य तद्राजत्वाद्बहुषु लुक्, अवन्तीनां निवासो जनपदश्चातुरर्थिकस्याणो जनपदे लुप्, अश्मकशब्दात्साल्वावयवेत्यादिना इञ्, लुगादि पूर्ववत् ।

१ मुद्रितमूलपुस्तके हैमायना इति पाठः ।

'श्यापर्णीति'। 'शार्ङ्गरवाद्यञो ङीन्'। 'कपिरन्तोदात्त इति'। प्रातिपदिकस्वरेण, कमु कान्तौ क्तिच्, पृषोदरादित्वादत उत्वं, कुन्तिशब्दोन्तोदात्तोवन्तिवत्कुन्तयः, शोभनं राष्ट्रमस्य सुराष्ट्रस्तस्यापत्यानि बहूनि 'जनपदशब्दात्क्षत्रियादञ्,' लुगादि पूर्ववत्, चिति स्मृत्यां, क्तिच्, कुन्तिवच्चिन्तयः, तडि ताडने, तण्डः, तस्मादेवावपूर्वाद्वतण्डः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो'रित्यकारलोपः, मदी हर्षे, विपूर्वात् क्तः, न ध्याख्येत्यादिना नत्वाभावः, न विमत्तोविमत्तः। 'शलङ्कु शलङ्कं चेति'। नडादिष्वेतत्पठ्यते, बभ्रोरपत्यं बाभ्रवः, च्युङ्, दानाच्च्युतो दानच्युतः, तदपत्यमपि दानच्युत एव, कटशब्दः पचाद्यजन्तः, लोकोक्षि यस्य स लोकाक्षः, तस्यापत्यं लौकाक्षिः, तस्य छात्रा लौकाक्षाः। 'स्त्रीकुमारमिति'। समाहारद्वन्द्वः, मुद हर्षे, इगुपधलक्षणः कः, मुदः, पिप्पलमत्तीति पिप्पलादः, 'कर्मण्यण्, वदेः सः, वत्सः, जीर्यते रतृन्, जरन्, तयोः समाहारद्वन्द्वः 'षिद्भिदादिभ्योऽङ्', जरा, 'भुजिमृङ्भ्यां युक्त्युकौ', मृत्युः ॥

"महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु" ॥ महच्छब्दोन्तोदात्त इति'। 'वर्तमाने पृषद्बृहन्मह' दित्यत्र तथा निपातनात्। 'तस्येत्यादि'। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते, यद्येवं प्रवृद्धग्रहणमनर्थकं कर्मधारये निष्ठेति वक्ष्यमाणेनैव सिद्धत्वात्, छन्दुहणे गतिकारकपूर्वस्यापि ग्रहणमिति प्रवृद्धशब्दस्यापि क्तान्तत्वादत आह। 'कर्मधारये निष्ठेत्ययमपीति'। तत्रापि लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थः ॥

"क्षुल्लकश्च वैश्वदेवे" ॥ क्षुधल्लातीति क्षुल्लः 'आतोनुपसर्गे कः' 'तोर्लि'ति परसवर्णः ॥

"उष्ट्रः सादिवाम्योः" ॥ 'उष्ट्रशब्दः ष्ट्रन्प्रत्ययान्त इति'। उष दाहइत्येतस्मात् ष्ट्रन् इति वर्तमाने उषिखनिभ्यां किदित्येवं व्युत्पादितत्वात् ॥

"गोः सादसादिसारथिषु" ॥ 'गोसाद इति'। सदेर्घञ्, ततः षष्ठीसमासः। 'गां सादयतीति वेति'। सदेर्ण्यन्तात्कर्मण्यण्, तस्मादेव णिनिः, गोसादी, अत्र सादसादिनोः कृत्स्वरस्यापवादः, सारथौ तु समासस्वरस्य ॥

"कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूःपण्यकम्बलो दासीभाराणां च" ॥ अत्र कुरुगार्हपतेत्येवमादयः पण्यकम्बलपर्यन्ताः सप्त समासाः, तत्रादितो द्वावविभक्तिकौ इतरे प्रथमैकवचनान्ताः, सा च प्रथमा सुब्व्यत्ययेन षष्ठ्याः स्थाने द्रष्टव्या, दासीभाराणामिति बहुवचननिर्देशादाद्यर्थो व्याख्यायते, कुरुस्य, कृषो कच्च, कुरुः, कृञो वर्जने, निदित्यधिकारे इगुपधात्कितः, इति कुः, फिषि त्विगन्तानाञ्च द्व्यचामिति पक्षेऽन्तोदात्तः। तस्यार्थः। जनपदशब्दानामिति वर्तते, अन्तः पूर्वो वेति च, जनपदवाचिनामिगन्तानां द्व्यचामादिरुदात्तो भवति अन्तो वा, काशयश्चेदयः, एतेन कुरुशब्दो व्याख्यातः, रिक्तपूर्वादयः कर्मधारयाः, श्रीर्यस्यास्तीति श्रीशब्दो लावण्यवचनः। 'कपिलकादित्वाल्लत्वमिति'। 'कृपो रो लः' इत्यत्रैतद्वक्ष्यते, श्रीर्यस्यास्ति तच्छ्रीलशब्देनोच्यत इति, एतदेवोपपादयति। 'अश्लीलदृढरूपेति हीति'। 'संस्थानमात्रेण शोभनेति'। कुब्जत्वादीनामभावात् दृढत्वाच्च संस्थानस्य, मात्रशब्दव्यावर्त्यं दर्शयति। 'निःश्रीकेति'। अस्यैवार्थं विस्पष्टीकरोति। 'लावण्यरहितेति'। 'तितिलिनोऽपत्यमिति'। तिलशब्दान्मत्वर्थीय इनिः, पृषोदरादित्वात्तिशब्दस्य द्विर्वचनं, तस्य यदापत्येऽर्थेऽण् तदा 'नस्तद्धिते' इति टिलोपः यदा तु छात्रे तदा नान्तस्य टिलोपः इत्यादिनोपसङ्ख्यानेन टिलोपः। ये तु तत्र तैतिलिशब्दं पठन्ति तेऽत्रापि तैतिलिनोऽपत्यमिति विगृह्णन्ति, पृषोदरादित्वेनैव च रूपसिद्धिः, पण्यशब्दोऽवद्यपण्येति यदन्तो 'यतोऽनाव' इत्याद्युदात्तः,। 'पण्यकम्बलः संज्ञायामिति'। नियतप्रमाणस्य नियतमूल्यस्य कम्बलस्यैषा संज्ञा। 'समासान्तोदात्तत्वमेवेति'। ननु च पण्यशब्दस्य कृत्यप्रत्ययान्तत्वात्तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरेण भाव्यमत

आह । 'प्रतिपदोक्ते हीति' । 'कृत्यतुल्याख्या अजात्ये' ति यः कृत्यसमासः प्रतिपदोक्तस्तत्रैव स स्वरः, अयन्तु 'विशेषणं विशेष्येणे' ति सामान्यलक्षणविहितः, कम्बलशब्दस्य जातिशब्दत्वात् 'कृत्यतुल्याख्या अजात्ये' त्येतद्धि गुणक्रियावाचिनामनियते पूर्वनिपातप्रसङ्गे कृत्याद्यस्य पूर्वनिपातार्थञ्च तु जातिप्रतिषेधार्थम्, अजात्येति तु वचनन्यायसिद्धार्थानुवाद एवेति स्थितिः, चन्द्रे माङो डिच्चेति, मिथुनेसिः, पूर्ववच्च सर्वमित्यसिप्रत्ययः प्रकृतः, चन्द्रशब्दउपपदे माङ्मानइत्यस्मादसिप्रत्ययो भवति डिच्च, डित्त्वाट्टिलोपः, चन्द्रमिव मीयते चन्द्रमाः, चन्द्रमिति रजतममृतञ्च, चन्द्र इति वा मीयते चन्द्रमाः, चन्द्रशब्दस्तु स्फायितञ्चीत्यादिना रक्प्रत्ययान्तः, यस्य तत्पुरुषस्येत्यादिना दासीभारादेराकृतिगणत्वं दर्शयति ॥

"चतुर्थी तदर्थे" ॥ तस्मादन्तदर्थन्तच्छब्देन चतुर्थ्यन्तार्थ उच्यते, यदाह। 'तदभिधेयार्थं यदिति' । तस्य चतुर्थ्यन्तस्य यदभिधेयन्तदर्थमित्यर्थः । रमन्तेस्मिन्निघता इति रथः, 'हनिकुषिनीरमिकाशिभ्यःक्थन्,' अनुदात्तोपदेशेत्यनुनासिकलोपः, वल्लीशब्दो गौरादिङीषन्तः, 'तदर्थेइति किं,कुबेरबलिरिति' । अत्र तादर्थ्यस्य भावाद् गोसुखमिति प्रत्युदाहार्यम्मन्यन्ते । 'प्रकृतिविकारभावे स्वरोयमिष्यतइति' । समासप्रकरणएवैतत्सम्यगुपपादितम्, अत्रापि ज्ञापकं वक्ष्यति ॥

"अर्थे" ॥ 'तदर्थविशेषा एव दारुहिरण्यादयो भवन्तीति' । दारुहिरण्यादयो विशेषा एव तदर्था भवन्तीत्यर्थः । तादर्थ्यं हि तच्छेषभावस्य च विशेषाणामेव भवति न सामान्यस्येति मन्यते । केचित्पुनरित्यादिना इवमन्यते नेयं राजाज्ञा विशेषा एव तदर्था इति, तेन सामान्यवाचिन्यप्यर्थशब्दे पूर्वमेव सिद्धमिति । 'अश्वघास इति' । ननु च तदर्थेन प्रकृतिविकारभावे समास इत्युक्तम्, अश्वघासादयः षष्ठीसमासा इति च, एवं मन्यते, यदात्र प्रकृतिविकारभावे स्वर इति स्थितन्तदाश्वघासादौ चतुर्थीसमासेपि न दोष इति। 'श्वश्रूश्वशुरमिति' । विभाषा सेनेत्यादिना नपुंसकत्वम् ॥

"क्ते च" ॥ 'गोभ्यो रक्षितं दीयत[1] इति संप्रदाने चतुर्थीति'। अथ तादर्थ्ये चतुर्थ्यां को दोषः, चतुर्थी तदर्थेत्येव स्वरस्य सिद्धत्वात्, नैतदस्योदाहरणमुपपद्यते, कथम्, प्रकृतिविकारभावे स्वर इत्युक्तम्, न चात्र प्रकृतिविकारभावः। सत्यं, समासविधौ तु रक्षितग्रहणस्येदं प्रयोजनं दर्शितम् ॥

"कर्मधारयेऽनिष्ठा" ॥ श्रिञ् सेवायाम्, औणादिके निन्प्रत्यये श्रेणिः, मुदि ग्रो गग्गौ, बहुलवचनात्पङ्गोपि गक् पूगः। 'कृताकृतमिति'। 'क्तेन नञ्विशिष्टेनानञि' ति समासः, अनिष्ठेत्यनुच्यमाने ऽत्रैव स्यात्, अयं हि क्तसंशब्दनेन विहितत्वाच्छ्रेण्यादिसमासादपि प्रतिपदोक्तः ॥

"अहीने द्वितीया" ॥ हीनन्त्यक्तम्। 'अहीनवाचिनि समास इति'। पूर्वपदद्वारेण समासस्याहीनवाचित्वम्। 'द्वितीयानुपसर्गेइति वक्तव्यमिति'। अहीनग्रहणमपनीय अनुपसर्गग्रहणं कर्तव्यं, व्यापकत्वादित्यर्थः। 'इह माभूदिति'। इहापि माभूदित्यर्थः। अनुपसर्गग्रहणे चेह क्रियमाणे प्रवृद्धादिषु खट्वारूढशब्दो न पाठ्यः, आरूढशब्दस्य सोपसर्गत्वात्, एतत्स्वराभावे थाथादिस्वरेणैवान्तोदात्तस्य सिद्धत्वात् ॥

"तृतीया कर्मणि" ॥ अयमपि थाथादिस्वरापवादः। 'अहिरन्तोदात्त इति'। आङ्पूर्वाद्धन्तेर्डिप्रत्ययः, आङश्च ह्रस्वः, आहन्ति परान् आहन्यते परैरिति वा अहिः। 'केचिदिति'। ते तत्रोदात्तग्रहणमनुवर्तयन्ति, तथा च अहवहिम्, अहिरिव भोगैरिति, आद्युदात्तमधीयते ॥

"गतिरनन्तरः" ॥ अनन्तर इति पुल्लिङ्गनिर्देशाद्गतिशब्दः क्तिजन्तः, निपातनाच्चानुनासिकलोपः। 'प्रकृतः प्रहृत इति'। अत्र समासान्तोदात्तत्वम्, अव्ययपूर्वपदप्रकृतिस्वरत्वम्, कृत्स्वरस्थाथादिस्वरः, इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिभावो विधीयते। 'व्यवहितस्य गतेरयं स्वरो न भवतीति'। ननु च निर्दिष्टग्रहणमानन्तर्यार्थम्, प्रत्ययग्रहणपरिभाषया च हृतशब्दस्तान्तस्तत्कथं तान्ते परतो विधीयमानो

१ दीयतइति मुद्रितमूलपुस्तके नास्ति।

व्यवहितस्य प्रसज्यते, कृद्ग्रहणपरिभाषया क्तान्तेनुप्रवेशादुच्छब्दस्य प्रसङ्ग इति चेत्, यद्येवम्, क्रियमाणेप्यनन्तरग्रहणे स्यात्, उद्धृतशब्दः क्तान्तस्तस्यानन्तर एव गतिरिति, नैष दोषः । अनन्तरग्रहणसामर्थ्याद्धृान्तोरनन्तरो गतिराश्रयिष्यते, नन्वेवमप्यत्र परत्वाद्गतिर्गताविति निघातो भविष्यति, सति च तस्मिन् उदात्तस्वरिताधिकारादेव पूर्वपदप्रकृतिस्वरस्याप्रसंग इति व्यवहितनिवृत्त्यर्थमनन्तरग्रहणं न कर्त्तव्यम्, अनन्तरप्राप्त्यर्थन्तु, तत्र च यत्रैक एव गतिस्तत्र नार्थोनेन, यत्र त्वनेको गतिस्तत्रासौ न प्राप्नोति, तदनन्तर इत्यनेनानेकगतिसमवधानेनन्तरस्य प्राप्यते, अन्यथा ऽभ्युद्धृतमित्यत्रोद्धृतशब्दस्य कृद्ग्रहणपरिभाषया क्तान्तत्वे सति समासान्तोदात्तत्वे तदपवादे च कृत्स्वरे तदपवादस्याथादिस्वरः प्राप्नोति, ननु च यथा प्रथमे समासे गतिस्वरेण बाधितस्य थाथादिस्वरस्य पुनर्द्वितीये समासे प्राप्तिस्तथा तदपवादो गतिस्वरोऽप्यनेन पुनर्भविष्यति, नैतदेवम्, अपूर्वपदत्वात्, कुगतिप्रादय इत्यत्र निष्क्रान्तादौ पदकार्यप्रवृत्तये सुबित्यनुवर्त्तनीयम्, तत्रैकत्वस्य विवक्षितत्वात्सुबन्तसमुदायस्य चासुबन्तत्वाच्च द्वयोर्युगपत्समासो लभ्यतइति क्रमेणासौ विधेयः, गतिकारकोपपदानामित्यनेनाप्युत्तरपदस्य प्राक् सुबुत्पत्तेः समास उच्यते न पूर्वपदस्यापि, निष्क्रान्तचर्मकारादौ पदकार्यस्यासिद्धिप्रसङ्गात्, अत उच्छब्दस्य पूर्वं समासः पश्चादुद्धृतशब्देनाभिशब्दस्य, ततश्चाभिशब्द एव पूर्वपदं नोच्छब्द इति पूर्वपदस्य गतेः प्रकृतिस्वरो विधीयमानो ऽपूर्वपदस्योदो न स्यादतः कदाचित्प्राप्तमपि थाथादिस्वरं बाधित्वा ऽपूर्वपदस्याप्यनन्तरस्य वाक्यभेदेन प्रकृतिभावो यथा स्यादित्येवमर्थमनन्तरग्रहणम्, तदाह । 'अनन्तरे पुनरिष्यतइति' । यद्येवं कारकपूर्वेऽतिप्रसङ्गः, दूरादागतो प्राप्तो देवदत्तेनेत्यत्राप्यागतशब्देन स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति समासे कृते तस्यामवस्थायां थाथादिस्वर इष्यते तमपि बाधित्वा ऽपूर्वपदस्याप्युद एव स्वरः प्राप्नोति । नैष दोषः । थाथादिसूत्रे गतिग्रहणाचिवर्तिष्यते, ततः किं, प्रकृत-

१ निष्क्रीतेति ३ पु॰ पा॰ ।

मित्यादौ कृत्स्वरस्यैव प्राप्तत्वात्तस्यैव गतिस्वरापवादो न तु थाथादिस्वरस्य, तत्र दूरादागत इत्यादौ यत्र कक्षान्तरे थाथादिस्वरस्य प्रसंगस्तत्र स एव भविष्यति. अभ्युद्धृतमित्यादौ तु यत्र कक्षान्तरेऽपि कृत्स्वर एव प्राप्तस्तत्रापि स एव भविष्यतीति, ततश्चापूर्वपदार्थमनन्तरग्रहणमपि न कर्त्तव्यं भवति, कथम्, उद्धृतशब्दे गतिस्वरे प्रवृत्ते पश्चादभिशब्दस्य समासे कृते गतिर्गतावित्ति निघाते चोदात्तस्वरिताधिकाराद्धृतिरित्यस्य पूर्वपदप्रकृतिभावस्याप्रवृत्तौ समासस्वरापवादः कृत्स्वरो भवन् कृद्ग्रहणपरिभाषयोद्धृतशब्दस्य कृदन्तत्वात्तत्स्वर उक्तः वचोदात्तत्वमेव भविष्यति, यदि थाथादिसूत्रेण गतिग्रहणं निवर्त्यते प्रभेद इत्यत्र कृत्स्वरेण घञो ञित्त्वादाद्युदात्तत्वं स्यादन्तोदात्तत्वं चेष्यते, एवं तर्ह्यनुवर्त्तते गतिग्रहणं तेन तु न संबध्यते तस्मात्थाथादिसूत्रात् क्तग्रहणमपनीय पृथक् कर्त्तव्यम्, तत्र च गतिग्रहणं निवर्त्तिष्यते, एवमपि विशुष्क इत्यादौ यत्र कर्त्तरि क्तान्तमुत्तरपदं शुष्कधृष्टावित्यादिना चाद्युदात्तन्तत्र कृत्स्वरे सत्युत्तरपदमाद्युदात्तं स्यादन्तोदात्तं चेष्यते, अतः कृद्ग्रहणेनापि गतिग्रहणमवश्यं संबन्धनीयम्, ततश्च पूर्वोक्तदोषप्रसङ्गः, तत्राह । 'कारकपूर्वस्य त्विति'[1] । अयमभिप्रायः । अनन्तरशब्दोयमनन्तरमपेक्ष्य प्रवर्त्तते, तत्र चानन्तरो गतिरित्युक्ते अनन्तरोपि गतिरेव प्रतीयते सन्निधानात्, ततश्चापूर्वपदार्थमप्यनन्तरग्रहणं गतिद्वयसमवधानव्यानन्तरस्य प्रकृतिस्वरत्वं प्रापयतीति दूरादागत इत्यादौ न दोष इति । अथ वा कारकाद्दत्तश्रुतयोरेवाशिषीत्यत्र कारकादिति विभज्यते, तत्र च क्तग्रहणमनुवर्त्तते, अन्तोदात्त इति गतिरिति च, कारकात्परं क्तान्तमुत्तरपदमन्तोदात्तं भवतीत्यर्थः, तत्र दूरादागत इत्यादौ थाथादिसूत्रेणैवान्तोदात्तत्वस्य सिद्धत्वाद् दूरादागत इत्यादौ गतिरनन्तर इत्यनन्तरग्रहणेनैवापूर्वपदार्थेन प्राप्तस्य गतिस्वरस्यापवादः कारकादित्ययं योगो ज्ञायते, यद्येवमनन्तरग्रहणं न कर्त्तव्यं, कथम्, असत्यनन्तरग्रहणे दूरादागतः, अभ्युद्धृत इत्यादौ सर्वत्र द्वितीये समासे कृते

[1] तथाहीति ३ पु॰ पा॰ ।

सतिशिष्टस्याथादिस्वर एव प्राप्तस्ततश्च कारकादित्ययं योगो नियमार्थो भवति, तत्र च गतिग्रहणमनुवर्तयितव्यन्ततश्चायमर्थः, कारकादेव परं सगतिकं क्तान्तमुत्तरपदमन्तोदात्तमिति, ततश्चाभ्युद्गत इत्यादौ नियमेन थाथादिस्वरे व्यावर्तिते कृत्स्वरो भवन् कृद्ग्रहणपरिभाषयोद्गतादेः कृदन्तत्वात्तस्यैव यः स्वर आद्युदात्तत्वं स एव भविष्यति। ननु च विपरीतोपि नियमः सम्भाव्येत, कारकात्परं सगतिकमेवेति, ततश्च पूर्वाह्णशुष्क इत्यत्र थाथादिस्वरे व्यावर्तिते कृत्स्वरेण शुष्कःभृष्टावित्याद्युदात्तत्वं श्रूयेत। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति न विपरीतो नियम इति, यदयं दत्तश्रुतयोरेवाशिषीत्याह, नहि विपरीते नियमे कारकात्परयोर्दत्तश्रुतयोरन्यस्य वा क्तान्तस्योत्तरपदस्यान्तोदात्तत्वं प्रसक्तमतो नार्थो ऽपूर्वपदार्थेनानन्तरग्रहणेन, एवं तर्हि व्यवहितनिवृत्त्यर्थमेवानन्तरग्रहणम्, ननु चोक्तं परत्वाद्गतिर्गताविति निघाते कृते उदात्तस्वरिताधिकारादेव प्रकृतिभावस्याप्रसङ्ग इति, यत्र तर्हि गतिर्गताविति निघातो नास्ति तत्र प्रसङ्गः, क्व चासौ नास्ति, पादादौ, वक्ष्यति हि आ पादपरिसमाप्तेरपादादावित्यधिकार इति, तथा च उपप्रेतकुशिताश्वेतयध्वमिति पादादावुपशब्दं गतिपरमपि उदात्तमधीयते, तथाभ्युद्गतमिति यदाभिशब्दः पादादौ वर्तते तदा निघाताभावादनेन व्यवहितस्यापि गतेः प्रकृतिभावः स्यात्, नैतदस्ति। यावता प्रत्ययग्रहणपरिभाषया द्गतशब्दः क्तान्तो नोद्गतशब्दः, एवं तर्ह्येतज्ज्ञापयति कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति। ननु कृद्ग्रहणे गतिपूर्वस्य ग्रहणं ज्ञापितं कारकपूर्वस्य तु कथम्, उच्यते। पूर्वाचार्यैस्तावदेषा परिभाषा व्युत्पादिता इहाप्यनन्तरग्रहणेनैकदेशद्वारेण कृत्स्न एव परिभाषार्थो ज्ञाप्यते, यदि कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवति, कथं समुद्गत इति प्रत्युदाहरणं, यावता उद्गतशब्दः क्तान्तस्तस्य चानन्तर एव समित्यत आह। 'अनन्तरग्रहणसामर्थ्यादिति'। इह व्यवहितनिवृत्तिफलेनानन्तरग्रहणेन परिभाषाया ज्ञापनादन्यत्रैतत्फललाभ इति भावः। 'प्रकृतः कटमिति'। 'आदिकर्मणि क्तः कर्तरि चे'ति कर्तरि प्रत्ययः॥

"तादौ च निति कृत्यतौ" ॥ 'प्रजल्पाक इति'। जल्पभिक्षेति षाकन्, इह गतेः स्वरो विधीयते, क्रियायोगे च गतिसंज्ञा, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च, तत्र तिङन्ते पूर्वपदस्यासंभवात्कृदन्तादेव भविष्यति, नार्थः कृद्ग्रहणेन, इदं तर्हि प्रयोजनं, यथा तादिग्रहणं कृद्विशेषणं विज्ञायते तकारादौ निति कृतीति, अन्यथा नितीत्यनेन प्रत्ययग्रहणपरिभाषया तदन्तस्योपस्थानात्तस्यैवोत्तरपदस्य तकारादित्वं विशेषणं स्यात्, ततश्चेहैव स्यात्प्रतरिता प्रतरितमिति, इह न स्यात् प्रकर्त्ता प्रकर्त्तुं, नैतदस्ति प्रयोजनं, क्रियमाणेपि कृद्ग्रहणे ऽनिष्टं शक्यं विज्ञातुं तकारादावुत्तरपदे निति कृतीति, अक्रियमाणेपि चेष्टं नित्प्रत्ययतकारादिस्तदन्तउत्तरपदेति, ततश्च यथोतश्च प्रत्ययादित्यत्रासंयोगपूर्वेण ह्रस्वेनोकारो विशेष्यते न प्रत्ययस्तथेहापि नित एव विशेषणं तादिग्रहणं भविष्यतीत्यत्राह। 'कृद्ग्रहणमुपदेशे ताद्यर्थमिति'। अयमभिप्रायः। कृद्ग्रहणेन कृत्संज्ञाप्रवृत्तिकालो लक्ष्यस्तेन कृत्संज्ञाप्रवृत्तिकाले यस्तादिस्तत्रेति, किमेवं सति सिद्धं भवति तत्राह। 'इहापीति'। असति कृद्ग्रहणे तादिग्रहणेन स्वरप्रवृत्तिसमये यस्तादिस्तत्रेति विज्ञायेत, ततश्च प्रलपितेत्यादौ इडागमे कृते न स्यात्, संप्रत्यतादित्वात्, कृद्ग्रहणात्तु भवति। आदिग्रहणं तु शक्यमकर्त्तुं, यस्मिन्विधिस्तदादावल्ग्रहणे ॥

"तवै चान्तश्च युगपत्" ॥ 'अन्त उदात्तो भवतीति'। कथं पुनरन्तरेणोदात्तग्रहणमुदात्तो भवतीत्ययमर्थो लभ्यते, एवं मन्यते प्रकृत्येति वर्तते, तत्रैवमभिसंबन्धः क्रियते, तवैप्रत्ययान्तस्य यः स्वरः प्रकृत्याश्रयः प्राप्तः सोऽन्तस्य भवतीति, स चोदात्त एवेति। युगपदिति पर्यायनिवृत्त्यर्थम् ॥

"अनिगन्तोञ्चतौ वप्रत्यये" ॥ 'वप्रत्ययइति'। वकारः प्रत्ययो यस्य स तथोक्तः। 'प्राङिति'। ऋत्विगित्यादिना क्विन्, स च वकारमात्र एव, ककारादीनामनुबन्धत्वात्। उगिदचामिति नुम्, हल्ङ्यादिसंयोगान्तलोपौ। 'क्विन्प्रत्ययस्य कु'रिति कुत्वं चकारस्य ङकारः। 'पराङिति'। पराशब्द आद्युदात्तः, तेनात्र स्वरितो वा ऽनुदात्ते

पदादावित्येव विधिर्न भवति । 'प्रत्यङ्ङिति' । ननु चात्रान्तरङ्गत्वा- द्यणादेशे कृते ऽनिगन्तत्वात्प्रकृतिभावेन भवितव्यम्, अनिगन्त इत्यस्य तु प्रतीच इत्यादिरवकाशः, तत्राच इत्यकारलोपाद्यणादेशाभावः । न च यणादेशस्य स्थानिवद्भावोऽस्ति, अपूर्वविधित्वात्, पूर्वपदस्य प्रकृतिस्वरविधानात्, यत्तर्हि न्यधीचेत्यर्थः प्रकृतिभावं शास्ति तज्ज्ञापयति यण्विषये ऽयं स्वरो न भवतीति, यदि स्याद् अध्यङ्ङित्यत्राप्य- ऽनेनैव सिद्धं स्यात्, नैतदस्ति ज्ञापकम्, अधीच इत्यादौ यत्र यण् नास्ति तदर्थमेतत्स्यात्, यत्तर्हि नेः प्रकृतिस्वरं शास्ति, निशब्दस्यैक। चत्वाद्, नीच इत्यादावुत्तरस्य प्रकृतिस्वरस्य च विशेषो नास्ति, एतदपि न ज्ञापकं वच- नसामर्थ्यादकृतएवान्तरङ्गे यणादेशे निशब्दस्य स्वरार्थमेतत्स्यात्, यणादेशे कृते स्वरभाजोभावात्, प्रत्यङादिषु तु यणादेश एवान्तरङ्गत्वात्प्राप्नोति, तस्माद्यण्विषये प्रतिषेधो वक्तव्यः, न वक्तव्यः, स्थानिवद्भावात्सिद्धं, ननु चोक्तं पूर्वपदस्य प्रकृतिस्वरो न यणः पूर्वस्येति, नैतदस्ति, उक्तमे- तत्, पूर्वपदशब्दः पूर्वपदस्योद उदात्ते स्वरिते वा वर्ततइति । 'चोरिति'। चाविति यत्पूर्वपदान्तोदात्तत्वं विधीयते तच्चुशब्देन लक्ष्यते, चोः चुस्व- रादित्यर्थः । 'एष स्वरो भवतीति' । विप्रतिषेधेनेति भावः । चुस्वरस्या- वकाशो दधीचः दधीचा यत्र गतिर्नास्ति, अनिगन्तस्वरस्यावकाशः पराङ्, पराञ्चौ पराञ्चः, पराच इत्यादावुभयप्रसङ्गे परत्वादनिगन्तस्वर एव भवति, नायं युक्तो विप्रतिषेधः, चुस्वरः सतिशिष्टः, कथं, चावित्युच्यते, यत्रास्यैतद्रूपं, भसञ्ज्ञानिमित्ते प्रत्यये ऽलोपे च कृते सम्भवति, एवन्तर्हि नायं विप्रतिषेध उपन्यस्तः किं तर्हि इष्टिरेषा चोरनिगन्तोऽञ्चतौ प्र- त्ययइत्येष स्वर इष्यतइति ॥

"न्यधी च" ॥ 'अधीच इति' । अत्रापि कृत्स्वरादयमेव स्वर इष्यतइति दर्शयति ॥

"ईषदन्यतरस्याम्" ॥ । 'ईषद्भेद इत्यादौ तु कृत्स्वर एव भव- तीति' । परत्वात् । अपर आह । ईषदकृतेति प्रतिपदोक्तस्य समासस्य ग्रहणादुपपदसमासेस्याप्रवृत्तिरिति ॥

"हिरण्यपरिमाणं धने" ॥ 'हिरण्यपरिमाणवाचीति'। परिमाणविशिष्टहिरण्यवाचीत्यर्थः। तत्र सुवर्णशब्दः परिमाणे, उपपदादौ तत्परिच्छिन्ने हिरण्ये च वर्त्तते, यथा प्रस्थादिशब्दो दार्वादिनिर्मिते परिमाणे तत्परिमिते च व्रीह्यादौ वर्त्तते, 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश,' 'पलं सुवर्णाश्चत्वारः', द्वयोः सुवर्णयोः समाहारो द्विसुवर्णं पात्रादिः। 'द्विसुवर्णपरिमाणमिति'। अत्र सुवर्णशब्द उपले वर्त्तते। 'काञ्चनधनमिति'। परिमाणग्रहणमकृत्वा हिरण्यमित्युच्यमाने इहापि स्यात्, काञ्चनशब्दस्य हिरण्यवाचित्वात्, परिमाणवाची त्वेष न भवति ॥

"कतरकतमौ कर्मधारये" ॥ 'इह त्वित्यादि'। कतरकतमौ जातिपरिप्रश्नइति प्रतिपदसमासस्तस्येह ग्रहणं स कर्मधारय एव तस्मादिहार्थं कर्मधारयग्रहणमिति भावः ॥

"राजा च" ॥ 'राजब्राह्मण इति'। राजशब्दो ब्राह्मणो ताद्धर्म्याद्वर्त्तत इति सामानाधिकरण्यात्कर्मधारयः, राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः। 'पृथग्योगकरणमुत्तरार्थमिति'। उत्तरो विधी राजशब्दस्यैव यथा स्यात् आर्यशब्दस्य मा भूत्, यथासङ्ख्याभावेऽपि पृथग्योगकरणस्य प्रयोजनं तत्तु नोक्तमित्येतावत् ॥

"षष्ठी प्रत्येनसि" ॥ 'राज्ञःप्रत्येना इति'। षष्ठ्या आक्रोशइत्यलुक् ॥

"क्ते नित्यार्थे" ॥ नित्यशब्द आभीक्ष्ण्ये कौटस्थ्ये च वर्त्तते, इह त्वाभीक्ष्ण्ये, कुत एतत्, क्तइत्युच्यते, क्तश्च धातोर्विधीयते, धातुश्च क्रियावचनः, क्रियायाः क्षणिकत्वात्कौटस्थ्यं नोपपद्यते, तस्मादाभीक्ष्ण्ये नित्यशब्दः। 'द्वितीयासमासोऽयमिति'। द्वितीया पुनरत्यन्तसंयोगे, अथ वा कर्मणि कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मकाणामिति। 'सततइति' 'भावे क्त इत्यादि'। यदा तु कर्मणि क्तस्तदा गतिरनन्तर इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तो भवति, समासस्वरस्य द्वितीयापूर्वपदप्रकृतिस्वरो बाधकस्तस्य थाथादिस्वरस्तस्यायमपवादः ॥

"ग्रामः शिल्पिनि" ॥ ग्राम इति स्वरूपग्रहणम् ॥

"राजा च प्रशंसायाम्" ॥ 'षष्ठीसमासे चेति' । प्रशंसेत्यनुषङ्गः । 'राजयोग्यतया तस्येति' । स हि कर्मणि प्रवीणत्वाद्राजानं प्रति योग्यो भवति, राजार्ह इति चोक्ते प्रशंसा गम्यते ॥

"आदिरुदात्तः" ॥ पूर्वपदमित्यस्येहार्थात्षष्ठ्याविपरिणामः, सर्वत्र चात्र प्रकरणे पूर्वपदविषये षष्ठ्यर्थे प्रथमा ॥

"सप्तमीहारिणौ धर्म्ये ऽहरणे" ॥ हारीत्यावश्यके णिनिः, धर्म्य-इत्यर्थग्रहणं,हरणप्रतिषेधात्तत्साहचर्याद्धारीत्यर्थग्रहणम् । 'आचारनियत-मिति' । आचारेण नियतमाचारनियतम्, आचारवशादवश्यकर्त्तव्यमि-त्यर्थः । कथं पुनस्ताद्धर्म्यन्तत्राह । 'धर्मो ह्यनुवृत्त आचार इति' । जनपदे ग्रामे चरणे कुले वा ऽनुवृत्तः परम्परायात इत्यर्थः । तस्मादनपेतं धर्म्यं, पथ्यर्थेत्यादिना यत् । 'तेन वा प्राप्यमिति' । नौवयोधर्मेत्यादिना यत् । या-ज्ञिकाश्वादौ षष्ठीसमासः, क्वचिदित्यादिना शाखादेर्द्वयस्याचारनियततां दर्शयति । 'याज्ञिकादीनामश्वादीति' । दातव्यमित्यनुषङ्गः । 'क्व चिदयमाचारो व्यवस्थित इति च' । वहिंतको नाम मूले स्थूलोग्रे सूक्ष्म ओदनपिण्डः, स कर्मकराय दीयते, अन्यथा कर्म न कुर्यादिति, न त्वयन्धर्मः । बीजावापः, बीजनिषेको गर्भाधानम् । 'वाडवहरणमिति' । क्वचिदयमाचारो व्यवस्थितः, वाडवायै बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं योग्यमशनादि दातव्यमिति, हरणशब्दः कर्मसाधनः, अत्रास्मिन्स्वरे निवृत्ते कृत्स्वरे प्राप्ते अनो भावकर्मवचनमित्युत्तरपदान्तोदात्तत्वं भवति । ननु च परत्वादेवायं स्वरो भविष्यति तत्किं हरणप्रतिषेधेन, तत्राह । 'परोपीत्यादि' । अत्र पूर्वपदानां स्वरो नाख्यातः, अप्रयोजनत्वात् ॥

"युक्ते च" ॥ वल्लवादयः शब्दा गवादीनां पालकवचनाः, मणिं ददातीति मणिदः पृषोदरादिः, गाः संचष्टे, समिण्य इति कः, गोसंख्यः, उपपदसमासः । नन्वत्र परत्वात्थाथादिस्वरःप्राप्नोति, अस्य तु मोक्ष-

ल्लवादिरत्रकाशः, सत्यं, पूर्वविप्रतिषेधस्त्वत्र पठितव्यः, चित्स्वराद्वा-रिस्वरः पितृगवः मातृगवः, कृत्स्वराच्च वाड्वहार्थम्, युक्तस्वरश्च, कृत्स्व-रादित्येव, कृतो यः स्वरस्थाथादिसूत्रेण तस्माद्युक्तस्वरो भवति पूर्वविप्र-तिषेधेनेत्यर्थः । 'युक्तः समाहित इति' । युज समाधावित्यस्यैतद्रूपमि-त्यर्थः ॥

"विभाषाऽध्यक्षे" ॥ अध्यक्षशब्दोपि समासे युक्तवाच्येत्रेति सूत्रे पूर्वेण नित्ये प्राप्ते विकल्पः ॥

"पापं च शिल्पिनि" ॥ पापमिति स्वरूपग्रहणं, शिल्पिनीति चार्थग्रहणं, व्याख्यानात् ॥

"गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे" ॥ गोत्रान्तेवासिनोरर्थग्र-हणमितरयोः स्वरूपग्रहणम्, अपत्याधिकारादन्यत्र लौकिकं गोत्रमित्यनेन लौकिकमपत्यमात्रं गोत्रं गृह्यते । 'जङ्घादानमहं ददानीति' । जङ्घादानं करवाणीत्यर्थः, ओदनपाकम्भवतीतिवत्, यत्र श्राद्धादौ वात्स्यानामेव पादप्रक्षालनं क्रियते तत्रावात्स्यः सन्वात्स्योहमिति ब्रूते तल्लाभाय स जङ्घावात्स्य इति क्षिप्यते, वत्सशब्दो गर्गादिः, सुप्सुपेतिसमासः, सुष्ठु शृणोति सुश्रुत्, तस्यापत्यं सौश्रुतः । 'भार्याप्रधानतयेति' । शाकपार्थिवादित्वादुत्तरपदलोपी समास इति दर्शयति । 'वशाब्राह्मकृ-तेय इति' । वशा वन्ध्या भार्या, सौश्रुतवत्समासः, दक्षेण प्रोक्तन्दाक्षं, त-दधीते दाक्षः, दाक्षेश्छात्रो वा दाक्षः, चरशब्दो नडादिः, चारायणेन प्रोक्त-मधीते तस्य वा शिष्यश्चारायणीयः, एवं पाणिनीयः । 'कुमार्यादिलाभका-मा इति' । तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि ये कुमार्यादिलाभकामास्तत्र प्रवर्त्तन्ते तएवं क्षिप्यन्ते । पूर्ववत्समासः, माणवब्राह्मणयोरप्रत्ययवाचित्वेन प्रसिद्ध्यभावात्पृथग्ग्रहणम् । अपर आह । तस्येदमित्यणन्तयोर्ग्रहणं, निपा-तनाच्च माणवे णत्वमिति । 'भयब्राह्मण इति' । यो ब्राह्मण एव सन् राजदण्डादिभयेन ब्राह्मणाचारं करोति न श्रद्धया स एवं क्षिप्यते, कर्तृकरणे कृता बहुलमिति बहुलवचनादकृतापि समासः, दासीश्रोत्रियो दासीब्राह्मणवत् ॥

"अङ्गानि मैरेये" ॥ अङ्गमारम्भकं, बहुवचनं स्वरूपविधिनिरासार्थं, सुराव्यतिरिक्तं मद्यं मैरेयम् । 'तदङ्गवाचिनीति'। मैरेयशब्द इति प्रकृतम्, इह तु तच्छब्देन तदर्थः परामृश्यते । 'पौष्पासवइति'। आसवो मद्यविशेषः, यत् पौष्पेण मधुना द्रव्यान्तरेण चारभ्यते तस्य पौष्पमङ्गं भवति । पुष्पासव इति तु युक्तः पाठः ॥

"भक्ताख्यास्तदर्थेषु" ॥ बहुवचननिर्द्देशादेव स्वरूपविधिनिरासे सिद्धे आख्याग्रहणं भक्तविशेषवाचिनां भिक्षादीनां ग्रहणार्थम्, अन्यथा पर्यायाणामन्नादीनामेव ग्रहणं स्यात्, भिक्षाकंसादयः षष्ठीसमासाः, येषां प्रकृतिविकारभावे चतुर्थीसमास इति पक्षः, अन्येषां चतुर्थीसमासाः ॥

"गोबिडालसिंहसैन्धवेषूपमाने" ॥ उपमानशब्दस्य सह गवादिभिः प्रत्येकं संबन्धादेकवचनम् । 'उपमानार्थेपीति'। यो यत्रोदाहरणे उपमानार्थः संभवति स तत्र योजयितव्यः । 'यथा प्रसिद्धं चे ति'। यस्योदाहरणस्य च यथा लोके प्रसिद्धिः स तथा योजयितव्यः, तत्र दिङ्मात्रं दर्शयति । 'गवाकृत्येत्यादि'। आकृतिः संस्थानं, संनिवेशितं व्यवस्थापितम्, एवमन्यत्रापि यत्किञ्चित्सादृश्यं योजनीयम् ॥

"अके जीविकार्थे" ॥ 'जीविकावाचिनीति'। प्रवृत्तिनिमित्तकथनमेतत्, जीविकारूपप्रवृत्तिनिमित्तइत्यर्थः । पर्यवसानभूमिस्तु तद्वान्, तदाह । 'दन्तलेखनादिभिर्येषामिति'। 'रमणीयकर्त्तेति'। अत्रापि नित्यं क्रीडाजीविकयोरिति समासः, क्रीडायामेव हि तृजन्तं संभवति न पुनर्ज्जीविकायामिति तत्रा[१]र्थः ॥

"प्राचां क्रीडायाम्" ॥ प्राचां क्रीडायामिति श्रुतयोरेवान्वयसंभवान्मतेनेत्यध्याहारो न युक्त इति मत्वाह । 'प्राग्देशवासिनां या क्रीडेति'॥

"अणि नियुक्ते" ॥ नियुक्तइति' युजिर्योगइत्यस्यैतद्रूपमित्याह । 'नियुक्तोधिकृत इति'। 'स च कस्मिंश्चित्कर्मणि तत्परो न भवतीति'। कार्यान्तरेपि नियोगसंभवात् ॥

---

१ तत्रोक्तम् इति २ पु· पा· ।

"शिल्पिनि चाकृञः" ॥ युक्ते चेत्येव सिद्धे कृञः प्रतिषेधार्थं वचनम् । 'तन्तुवाय इति'। ह्वावामश्चेत्यण्, आतो युक् । 'अयस्कार इति'। अतः कृकमीत्यादिना विसर्जनीयस्य सत्वम् ॥

"गौतन्तियवं पाले" ॥ तनु विस्तारे, क्तिच्, तन्तिर्वत्सानां बन्धनरज्जुः ॥

"उपमानं शब्दार्थप्रकृतावेव" ॥ उष्ट्रक्रोशीत्यादौ कर्तर्युपमान इति णिनिः । 'उपमानग्रहणमित्यादि'। अन्यथा योगविभागेन नियमाश्रयणसामर्थ्याद्विशिष्टविषयो नियम इत्येतावद्गम्यते, न त्विष्टो विषयविभाग इति भावः । 'शब्दार्थप्रकृताविति किमिति'। सूत्रारम्भः किमर्थ इत्यर्थः । 'वृकवञ्चीति'। कृत्स्वर एव भवति । 'प्रकृतिरेवेत्यादि'। असति प्रकृतिग्रहणे शब्दार्थात्परो यो णिनिस्तदन्तउत्तरपद इति विज्ञायेत, ततश्च यत्रापि धातूपसर्गसमुदायात् शब्दार्थात्परो णिनिस्तत्रापि स्यात्, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाण्णिन्यन्तमेवोत्तरपदमिति कृत्वा, प्रकृतिग्रहणे तु न भवति, योत्र धातुर्नासौ शब्दार्थः, यश्च शब्दार्थो धातूपसर्गसमुदायो न ततो णिनिर्विहित इति, सिद्धे विधिरारभ्यमाणोन्तरेणाप्येवकारं नियमाय भवति, नार्थ एवकारेण, तत्राह । 'एवकारकरणमित्यादि'। असति हि तस्मिन्विपरीतो नियमः स्यात्, शब्दार्थप्रकृतौ यदि भवति उपमानएवेति । एवं च प्रकृतिर्नियम्येत नोपमानं, तस्मादुपमानावधारणार्थमेवकारः क्रियते, किं पुनःकारणमुपमानावधारणमाश्रीयते ऽत आह । 'शब्दार्थप्रकृताविति'। तुशब्दो हेतौ, उपमाननियमे हि शब्दार्थप्रकृतेरनियतत्वात्तत्राप्यविशेषेण सर्वस्याद्युदात्तत्वं लभ्यते, नान्यथा । किं च प्रकृत्यवधारणेऽस्यानियतत्वाद्वृकवञ्चीत्यादावाद्युदात्तत्वप्रसंगः ॥

"युक्तारोह्यादयश्च" ॥ 'पूर्वोत्तरपदनियमार्थमिति'। यत्र युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येव चोत्तरपदानि तत्रैव यथा स्यादित्यर्थः । आगतमत्स्यादिषु च बहुव्रीहिः कर्मधारयो वा । 'एकशितिपादिति'। संख्यासुपूर्वस्येति पादशब्दाकारस्य लोपः; सङ्ख्यासुपूर्वस्य समासस्य योन्त

पादशब्दस्तस्य लोपो भवतीति तत्रार्थः । ननु चेहेणभीकापाशल्यतिमर्चिभ्यः कनिति कवन्त एकशब्द आद्युदात्तः, ततश्च बहुव्रीहौ प्रकृत्येत्येव सिद्धमाद्युदात्तत्वं तत्राह । 'एकःशितिः पादोऽस्येति त्रिपदो बहुव्रीहिरिति' । ततः किमित्याह । 'तत्रेति' । यद्युत्तरपदे परत एकशितिशब्दस्तत्पुरुषः, ततोपि किमित्याह । 'तस्येति' । तस्य तत्पुरुषसञ्ज्ञकस्यैकशितिशब्दस्य समासान्तोदात्तत्वं प्राप्तम् । ननु समासस्वरापवादो बहुव्रीहिस्वरस्तत्राह । 'निमित्तिस्वरबलीयस्त्वादिति' । समासस्वरस्येति शेषः । निमित्तमुत्तरपदं द्विगोस्त्रिपदो बहुव्रीहिस्तस्य यः स्वरस्तस्मात्समासस्वरस्य बलीयस्त्वादित्यर्थः । बलीयस्त्वं तु सतिशिष्टत्वात्सतिशिष्टत्वं तु बहुव्रीहौ सति पश्चात्तत्पुरुषे कृते प्राप्नोतीति । 'एवमपीत्यादि' । स्पष्टार्थम् । 'निमित्तिस्वरबलीयस्त्वस्यापीत्यादि' । तथा च समर्थसूत्रे वार्त्तिकम्, एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्येति । उभयमन्तरेणाप्यनुपपद्यमानमेकशितिपाद्ग्रहणमुभयमपि ज्ञापयति ॥

"दीर्घकाशतुषभ्राष्ट्रवटं जे" ॥ 'कुटीज इति' । सप्तम्यां जनेर्डः ॥

"अन्त्यात्पूर्वं बह्वचः" ॥ 'आमलकीज इति' । दीर्घान्तेपि बह्वचि परत्वादयमेव स्वरो भवति ॥

"ग्रामे ऽनिवसन्तः" ॥ निपूर्वाद्वसेर्णादिकोऽधिकरणे झच्, निवसन्त्यस्मिन्निति निवसन्तः । 'देवग्रामइति' । प्राचीनपरिक्षिप्तदेशेयं ग्रामशब्दः, यद्येवं निवसन्तवाची भवति तत्राह । 'देवस्वामिकइति' । ततश्चायं न देवापेक्षया ग्रामो निवसन्त इति भावः । 'दाक्ष्यादयो निवसन्ति यस्मिन्नित्यादि' । अन्य निवसन्तु तत्र मा वा ऽवसन् ते तावदवात्सुरित्येतावता तेषामिति व्यपदिश्यतइत्यर्थः ॥

"घोषादिषु च" ॥ 'यान्यत्रेति' । घोषकुटादीनि । 'अपरे पुनरिति' । येषां घोषकुटादिष्वपि शब्देषु तावद्वर्तते, न निवासनामधेयेषु ॥

१ वाटेति ३ पु० पा० ।

"छात्र्यादयः शालायाम्" ॥ 'यदा शालान्त इत्यादि'। विभाषा सेनासुरेत्यादिना शालान्तस्य तत्पुरुषस्य विभाषा नपुंसकत्वमुक्तं, तत्रास्यावकाशो यो नपुंसकलिङ्गो न भवति छात्रिशाला गोत्रशालेति, तत्पुरुषे शालायामित्यस्यावकाशो यश्छात्र्यादिपूर्वपदो न भवति ब्राह्मणशालं क्षत्रियशालमिति, यश्छात्र्यादिपूर्वपदो नपुंसकलिङ्गश्च तत्रैकदेशविकृतस्यानन्यत्वादयमपि प्राप्नोति, तत्पुरुषे शालायामित्ययं च, तत्र पूर्वविप्रतिषेधादयमेव भवति ॥

"प्रस्थे ऽवृद्धमकर्क्यादीनाम्" ॥ मालीदीनाञ्चेति वचनादवृद्धमिति पदच्छेदः, कर्क्यादिप्रतिषेधस्तु नामधेयार्थः स्यात्, वा नामधेयस्य वृद्धसंज्ञा वक्तव्येति ॥

"अर्मे चावर्णं द्व्यच्त्र्यच्" ॥ 'बृहदर्ममिति'। स्वरविधौ व्यञ्जनमविद्यमानवदित्येतदत्र नाश्रीयते, ऽनित्यत्वात्। 'महार्ममिति'। आत्वे कृते ऽवर्णान्तत्वादस्ति प्राप्तिः। 'नवार्ममिति'। नवशब्दः प्रत्ययवचनो ऽकारान्तः ॥

"न भूताधिकसञ्जीवमद्राश्मकज्जलम्" ॥ 'मद्राश्मग्रहणं सङ्घातविगृहीतार्थमिति'। मद्रशब्दस्य केवलस्य मद्राश्मशब्दस्य च सङ्घातस्य प्रतिषेधार्थमित्यर्थः। 'मद्राश्मार्ममिति'। 'अनोश्मायःसरसां जातिसंज्ञयो'रिति समासान्ते सत्यवर्णान्तमेतद्भवति, तदेवं मद्रार्मं मद्राश्मार्ममिति द्वे एवोदाहरणे, प्रायेण त्वश्मार्ममिति तृतीयमप्युदाहरणं पठ्यते, तदयुक्तम्, अश्मशब्दस्य नकारान्तत्वात्, न च लोपे कृते ऽवर्णान्तत्वं, स्वरविधौ नलोपस्यासिद्धत्वात्, तथा च वक्ष्यति पञ्चार्मं दशार्ममित्यत्रार्मे चावर्णं द्व्यच्त्र्यजित्ययं स्वरो न भवतीति। अपर आह। मद्राश्मग्रहणं संघातविगृहीतार्थमित्यस्य भाष्ये ऽदर्शनादनार्षो वृत्तौ पाठ इति। 'दिवोदासायेति'। दिवश्च दासइति षष्ठ्या अलुक् ॥

"अन्तः" ॥ अत्रापि प्रकरणे पूर्वपदविषया प्रथमा षष्ठ्यर्थे द्रष्टव्या[1] ॥

---

१ वेदितव्येति ३ पु॰ पा॰।

"सर्वं गुणकार्त्स्न्ये" ॥ यत्र गुणान्तरस्याभावस्तत्र गुणकार्त्स्न्यं भवति । 'सर्वश्वेत इति' । पूर्वकालैकेत्यादिना कर्मधारयः । अत्र शुक्लेन गुणेन सर्वावयवानां व्याप्तिर्गम्यते । 'आश्रयव्याप्त्यापरमत्वमिति' । यद्यप्यौज्ज्वल्यादिनापि परमत्वं सम्भवति, अत्र त्वेवंविधं परमत्वं विवक्षितमित्यर्थः । 'सर्वसौवर्णइति' । विकारविषयमत्र कार्त्स्न्यम् । 'कार्त्स्न्येति किमिति' । गुणवाचिन्युत्तरपदे न ह्यवश्यं सर्वशब्दस्य कार्त्स्न्यं व्यभिचरतीति प्रश्नः । 'सर्वेषां श्वेततरः सर्वश्वेत इति' । गुणकार्त्स्न्ये सर्वशब्दो न गुणकार्त्स्न्ये, सर्वेषामिति च गुणसम्बन्धे षष्ठी, पटस्य शौक्ल्यमिति यद्, गुणवाचिन एव च प्रत्ययः, सर्वेषां पटानां द्रव्यान्तराधारो[1] यः श्वेतगुणस्तदपेक्षया सातिशयः श्वेतो गुण इत्यर्थः । 'गुणान्तरेणेति' । गुणाद्यस्तरप्प्रत्ययस्तदन्तेनेत्यर्थः, वचनमेवेदन्तेन पूरणगुणेति प्रतिषेधं बाधित्वा समासश्च भवति तरब्लोपश्च ॥

"संज्ञायां गिरिनिकाययोः" ॥ 'अञ्जनागिरिरिति' । वनगिर्योः संज्ञायामिति दीर्घत्वम् ॥

"कुमार्यां वयसि" ॥ 'वृद्धकुमारीति' । विशेषणसमासः । 'जरत्कुमारीति' । जरतीशब्दस्य पूर्वकालैकेत्यनेन, अत्रोभयत्र पुंवत्कर्मधारयेत्यादिना पुंवद्भावः । ननु च कुमारीशब्दः प्रथमे वयसि वर्त्तते, तथा च वयसि प्रथमइति ङीबत्र विहितस्तस्य कथं चरमवयोवाचिभ्यां वृद्धाजरतीशब्दाभ्यां सामानाधिकरण्यमत आह । 'कुमारीशब्द इत्यादि' । कुमार्या हि द्वयं दृष्टं प्रथमं वयः पुंसा सहासंप्रयोगश्च, तत्र प्रथमार्थप्रहाणेन द्वितीयमर्थमसंप्रयोगमात्रमुपाददानस्य संभवति सामानाधिकरण्यमित्यर्थः । 'तच्चेति' । वृद्धादिशब्दान्तराभिधेयमित्यर्थः । 'कुमारत्वमेवेति' । यदेतत्कुमारीशब्दस्य प्रवृत्तिनिमित्तं न तद्वयो गृह्यतइत्यर्थः । एतच्च वयोग्रहणसामर्थ्याल्लभ्यते, अन्यथा कुमारीशब्दप्रयोगे नियमतः प्रथमवयो गम्यते इत्यनर्थकं तत्स्यात्, परमकुमारीत्यत्र कुमारत्वमेव प्रतीयते न वयोन्तरमिति भवति प्रत्युदाहरणम् ॥

१ द्रव्यान्तरे इति ३ पु० पा० ।

"उदके ऽकेवले" ॥ असन्देहार्थं केवलउदकइत्यवचनाद् अकेवल इति पदच्छेदः, मिश्रं द्रव्यान्तरसंयुक्तम् ॥

"द्विगौ क्रतौ" ॥ गर्गत्रिरात्रादयः षष्ठीसमासाः, तिसृणां रात्रीणां समाहारस्त्रिरात्रः, अहः सर्वैत्यादिनाच् समासान्तः । 'अतिरात्र इति' । रात्रिमति क्रान्त इति प्रादिसमासः ॥

"सभायां नपुंसके" ॥ गोपालसभादावशाला चेति नपुंसकत्वम् । 'रमणीयसभमिति' । अत्राभिधेयवशान्नपुंसकत्वं न प्रतिपदोक्तम् ॥

"अरिष्टगौडपूर्वे च" ॥ 'पूर्वग्रहणं किमिति' । अरिष्टगौडयोरिति वक्तव्यमिति प्रश्नः । 'इहापि यथा स्यादिति' । पूर्वग्रहणे हि सति बहुव्रीहिर्लभ्यते, अरिष्टगौडौ पूर्वौ यस्मिन्समास इति, तेनारिष्टाश्रितपुरं गौडभृत्यपुरमित्यत्रापि पूर्वपदमन्तोदात्तं भवति । असति तु पूर्वग्रहणे श्रितभृत्यशब्दाभ्यां व्यवहितत्वादपूर्वपदत्वादरिष्टगौडयोस्तावन्न स्यात्, समुदाययोश्च सूत्रेनुपात्तत्वात् ॥

"न हास्तिनफलकमार्देयाः" ॥ 'मार्देयमिति' । ढे लोपो ऽकद्र्वा इत्युकारलोपः ॥

"दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु" ॥ चानराटे स्वरूपग्रहणमितरेष्वर्थग्रहणम् । 'पूर्वेषुकामशमीति' । दिक्संख्ये संज्ञायामिति समासः । 'पूर्वपञ्चाला इति' । समुदाये हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति पञ्चालैकदेशे पञ्चालशब्दः, ततः पूर्वापरप्रथमेत्यादिना कर्मधारयः । 'शब्दग्रहणमित्यादि' । दिशि दृष्टः शब्दो दिक्शब्द इत्युत्तरपदलोपी समासः, तेन कालवाचिनोपि ग्रहणात्पूर्वेया यातमित्यादावपि भवति ॥

"आचार्योपसर्जनश्चान्तेवासिनि" ॥ आचार्योपसर्जनग्रहणमन्तेवासिनो विशेषणं, सप्तम्यर्थे प्रथमा । 'आचार्योपसर्जनान्तेवासिवाचिनीति' । आचार्य उपसर्जनं[1] यस्य स आचार्योपसर्जनः, स चासावन्तेवासी च आचार्योपसर्जनान्तेवासी, तद्वाचिनि । 'पूर्वपाणिनीया इति' । पूर्वे-

१ अप्रधानमित्यधिकं ३ पु० ।

तत्समासः, पाणिनेश्छात्राः पाणिनीयाः, अन्तेवासिनः प्रधानमाचार्यस्तूपसर्जनं, काशकृत्स्निशब्दादितश्चेत्यण् । 'पूर्वपाणिनीयं शास्त्रमिति' । पाणिनीयं शास्त्रं पूर्वञ्चिरन्तनमित्यर्थः ।

"उत्तरपदवृद्धौ सर्वं च" ॥ वृद्धावित्येतावतैव तद्वदुत्तरपदपरिग्रहे सिद्धे उत्तरपदग्रहणात्तदधिकारो लक्ष्यते ॥

"बहुव्रीहौ विश्वं संज्ञायाम्" ॥ विशेः क्वनि विश्वशब्द आद्युदात्तः । 'विश्वामित्रइत्यादि' । अस्यावकाशः विश्वदेवः विश्वयशाः, संज्ञायां मित्राजिनयोरित्यस्यावकाशः, कुलमित्रः कुलाजिनः, विश्वामित्रो विश्वाजिन इत्यत्रोभयप्रसङ्गे संज्ञायां मित्राजिनयोरित्येतद्भवति विप्रतिषेधेन ॥

"उदरपदवृद्धौ सर्वं च" ॥ अयमपि पूर्वपदप्रकृतिस्वरस्यापवादः, वृकशब्दः प्राणिनां च कुपूर्वाणामित्याद्युदात्तः, वृकस्येवोदरं यस्य वृकोदरः, दाम उदरे यस्य दामोदरः, दामशब्दो मनिन्प्रत्ययान्तः, हरतेः सर्वधातुभ्य इनितीन्, हरिदश्वो यस्य हर्यश्वः, यौवनशब्दो ऽव्युत्पन्नं प्रातिपदिकं, लघावन्ते द्वयोश्च बह्वो गुरुरित्याद्युदात्तः । 'यूनो भावो यौवनमिति' । युवादित्वाणन्तत्वे प्रत्ययस्वरेणान्तोदात्तत्वात्पूर्वपदप्रकृतिस्वरेणैव सिद्धम् । 'सुवर्णपुङ्खैरिषुरिति' । शोभनो वर्णो येषां ते सुवर्णाः, नञ्सुभ्यामित्यन्तोदात्तत्वं, सुवर्णाः पुङ्खा येषां ते सुवर्णपुङ्खाः, पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वं, पुनरिषुशब्देन बहुव्रीहिः । 'महेषुरिति' । महच्छब्दोन्तोदात्त इति महान्व्रीह्यपराह्णेत्यत्रोक्तं, तस्मात्तत्पूर्वपदप्रकृतिस्वरेणैव सिद्धे सति तस्यान्यार्थेआरम्भे ऽपवादत्वादनेनैवान्तोदात्तत्वं युक्तमित्यस्योपन्यासः ॥

"क्षेपे" ॥ कुण्डशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः, घटशब्दः पचाद्यजन्तः, महेषुवदस्योपन्यासः, कटुशब्दात्संज्ञाया कन्, स्यन्दितशब्दो निष्ठान्तः, निहन्यतेनेनेति निघातः, ततोन्यो ऽनिघातः, अतोव्ययपूर्वपदप्रकृतिस्वरत्वं, चरिचलिपतिवदीनां वा द्वित्वमच्याक्चा

भ्यासस्य, चलाचलः । 'अनुदर इत्यादि'। अस्यावकाशः कुण्डोदर[1] इत्यादि, नञ्सुभ्यामित्यस्यावकाशः, अयशाः सुयशाः, एवं स्थिते विप्रतिषेधः ॥

"नदी बन्धुनि" ॥ बन्धुनीति शब्दरूपापेक्षया नपुंसकनिर्देशः, गर्गवत्सशब्दाभ्यां गर्गादियञन्ताभ्यां यञश्चेति ङीप्, गार्गीवात्सीशब्दौ ञित्स्वरेणाद्युदात्तौ, ब्रह्मशब्दो बृंहेर्मनि[2]न्प्रत्यये निपातितः ॥

"निष्ठोपसर्गपूर्वमन्यतरस्याम्" ॥ 'प्रक्षालितपाद इति'। क्षल शौचकर्मणि चुरादिः, धावु गतिशुद्ध्योः, च्छ्वोः शूडित्यूठ्, एत्येधत्यूठ्स्विति वृद्धिः, प्रक्षालितप्रधौतशब्दौ गतिस्वरेणाद्युदात्तौ । 'मुखं स्वाङ्गमित्येतद्बाधतीति'। विकल्पितमुत्तरपदान्तोदात्तत्वं, तेन स्वाङ्गवाचिनि मुखशब्दे स्वरत्रयं भवति, अनेन पूर्वपदान्तोदात्तत्वं, मुखं स्वाङ्गमित्येतत्, उभाभ्यां मुक्ते पूर्वपदप्रकृतिभावेन गतिरनन्तर इत्याद्युदात्तत्वं च । 'न भवेदिति'। स्वाङ्गवाचीति संबध्यते, यदि मुखशब्दः स्वाङ्गवाची न भवतीत्यर्थः प्रसेवकशब्दः कृदुत्तरपदप्रकृतिस्वरेण मध्योदात्तः, पुष्कशब्दः 'शुष्कधृष्टौ' इत्याद्युदात्तः ॥

"उत्तरपदादिः" ॥ उत्तरपदग्रहणमसमस्तं लुप्तषष्ठीकम्, अत्रापि प्रकरणउत्तरपदनिर्देशे षष्ठ्यर्थे प्रथमा ॥

"कर्णो वर्णलक्षणात्" ॥ 'दात्राकर्णः शङ्कुकर्ण इति' । दात्रं कर्णो यस्य, शङ्कुः कर्णो यस्येति विग्रहः, सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनमिति परनिपातः, 'कर्णे लक्षणस्याविष्टेत्यादिना' दीर्घ[3]त्वं, लक्ष्यते येन तल्लक्षणं, ततश्च स्थूलकर्ण इत्यत्रापि प्राप्नोति, स्थौल्येनापि हि लक्षणीयत्वादत आह । 'पशूनां विभागज्ञापनार्थमित्यादि'। एतच्च सामान्योक्तावपि वर्णग्रहणाल्लभ्यते, अन्यथा वर्णेनापि लक्ष्यमाणत्वात्तदनर्थकं स्यात् । 'श्वेत-

---

१ कर्णोदरो घटोदर इति ३ पु· पाठः ।

२ बृंहेरम् नलोपश्चेति मन्प्रत्यये नलोपे अमागमे च निपातितः। इति ३ पु· पा· ।

३ कर्णे लक्षणस्येति दीर्घत्वमिति मूलमुद्रितपुस्तके पाठो दृश्यते स पदमञ्जर्यसंमतः ।

पाद इति'। श्वितावर्णे पचाद्यच्, कूट दाहे, इगुपधलक्षणः कः, शुभ शुम्भ शोभार्थे, अनुदात्तेतश्च हलादेरिति युच् शोभनः, प्रत्युदाहरणे सर्वत्र पूर्वपदप्रकृतिस्वर एव भवति। कण्ठकर्णादीनां समाहारद्वन्द्वे नपुंसकह्रस्वत्वम्[1]। 'सुग्रीव इति'। अत्र परत्वाद्वञ्सुभ्यामित्यन्तोदात्तत्वेन भाव्यम्, अस्य तु दशग्रीवादिरवकाशः, यदि तु नेष्यते चकारस्यैव विधेः समुच्चयार्थ इति व्याख्यानं कर्तव्यम्। 'नाडीजङ्घ इति'। नाड्याकारे जङ्घे यस्य नाडीजङ्घः॥

"नञो जरमरमित्रमृताः"॥ जरणं जरः, ऋदोरप्, मरणं मरः, अस्मादेव निपातनादप्। ञिमिदा स्नेहने, अस्मात्कः, मित्रम्॥

"सोर्मनसी अलोमोषसी"॥ मँश्च अश्च मनसी। 'सुप्रथिमेति'। पृथोर्भावः, पृथ्वादिभ्य इमनिच्, रऋतो हलादेर्लघोरिति रादेशः। पीयतइति पयः, पिबतेरिच्चेत्यसुन्, अशेर्देवने युट् चेत्यसुन्, युडागमः, यशः। सुरिभ्यां तुट् स्रोतः। 'सुस्रत् सुध्वद् इति'। स्रंसुध्वंसुभ्यां क्विप्, वसुस्रंस्वित्यादिना दत्वं, तस्यासिद्धत्वादत्रासन्तत्वम्। राजतक्षशब्दौ कनिन्युवृषीत्यादिना कनिप्रत्ययान्तौ, लुनातेर्मनिन् लोम, उष दाहे, मिथुनेऽसिरिति वर्तमाने उषः कित्। 'अनिनस्मन् ग्रहणानीति'। अन् इन् अस् मन् इत्येतानि गृह्यन्ते येषु सूत्रेषु तानि तथोक्तानि, तत्र तदन्तविधिं प्रयोजयन्तीति वचनादनर्थकानामप्यनिन्प्रभृतीनां ग्रहणं भवतीत्युक्तं भवति, तेन सुप्रथिमा सुस्रत् सुध्वदित्यादिकमप्युदाहरणमुपपद्यतइति भावः। 'कपि परत्वादिति'। सोर्मनसीइत्यस्यावकाशः, सुकर्मा सुशर्मा, कपि पूर्वमित्यस्यावकाशः, अयवकः, सुयवक इत्येकस्थले विप्रतिषेधः॥

"आद्युदात्तं द्व्च् छन्दसि"॥ कृभ्र्श्चेति वर्तमाने वर्णिद्रुश्रिक्र्य्यमिपशिशाधामृजिपशितुग्धुग्दीर्घहकाराश्च, बाधते येन परानिति बाहुः॥

१ ह्रस्वत्वमिति नास्ति ३ पु·।

"वीरवीर्य्यौ च" ॥ वीर विक्रान्तौ चुरादिः, ततः पचाद्यचि वीरः, अचो यत्, वीर्यं, वीरेषु वा साधुरिति प्राग्घितीयो यत्। 'तच्चेत्यादि'। कथं पुनरेतज्ज्ञापकमित्याह। 'तच हि सतीति'। फिषि तु 'बिल्वभक्ष्यवीर्याणि छन्दसीति' छन्दस्यन्तस्वरितत्वं भाषायां वाद्युदात्तत्वं शब्दस्य स्थितम् ॥

"कूलतीरतूलमूलशालाक्षसममव्ययीभावे" ॥ सुषममित्यादौ सुविनिर्दुर्भ्यः सुपिसूतिसमा इति षत्वं, तस्यासिद्धत्वात्समशब्द एवायम्। 'तिष्ठद्गुप्रभृतिष्वेते पठ्यन्त इति'। तेनाव्ययीभावसंज्ञा। 'पर्यादिभ्य इत्यादि'। परिप्रत्युपापा इत्यस्यावकाशः, यत्र कूलादयो न सन्ति परित्रिगर्तमिति, कूलादीनामाद्युदात्तस्यावकाशः, यत्र पर्यादयो न भवन्ति अवकूलमतिकूलमिति, पर्यादिभ्यः परेषु कूलादिषु विप्रतिषेधः ॥

"कंसमन्थशूर्पपाय्यकाण्डं द्विगौ" ॥ 'द्विकंस इति'। द्वाभ्यां कंसाभ्यां क्रीत इति तद्धितार्थे समासः, 'कंसाट्टिठन्' इति टिठन्, तस्या 'ध्यर्द्धपूर्वेति' लुक्। 'द्विमन्थ इति'। 'आर्हादगोपुच्छेत्यादि' ना ठक्, शेषं पूर्ववत्। 'द्विशूर्पमिति'। 'शूर्पादञन्यतरस्याम्'। 'द्विपाय्यमिति'। 'पाय्यसान्नाय्येत्यादिना' परिमाणे निपातितः, 'प्राग्वतेष्ठञ्'। 'द्विकाण्डमिति'। द्वे काण्डे प्रमाणमस्य 'प्रमाणे द्वयसज्जित्यादिना' मात्रजादयः, तेषां प्रमाणे लो द्विगोर्नित्यमिति लुक् ॥

"तत्पुरुषे शालायाञ्चपुंसके" ॥ 'दृढशालमिति'। बहुव्रीहिरयं, तत्र पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदञ्च निष्ठान्तत्वादन्तोदात्तं, ननु चात्र लक्षणप्रतिपदोक्तपरिभाषयैव भविष्यति, सत्यम् उत्तरार्थं तत्पुरुषग्रहणमवश्यं कर्त्तव्यं तदिहैव क्रियते, परिभाषाया अनाश्रयणाय ॥

"कन्या च" ॥ शोभनः शमो यस्य तस्यापत्यं सौशमिः, आङ्पूर्वात् द्वयते 'रातश्चोपसर्ग' इति कः, चप सान्त्वने, चौरादिकः यः, बहुलवचनादिङभावः चप्यः ॥

१ अन्यार्थमिति ३ पु· पा· ।

"आदिश्चिहणादीनाम्" ॥ चिनोतेः क्विप्, चित्, हन्तेः पचाद्यच्, हनः, चिहणं, निपातनात्तलोपो णत्वं च । मल मल्ल धारणे, आभ्यां रप्रत्ययः, निपातनाल्लस्य डत्वं, मडरः मड्डुरः, विगततुलस्येदं वैतुलं, पटदिति कायति, पटत्कः । कै गै रै शब्दे । आतो ऽनुपसर्गे कः । बिडमाददत्ते बिडालः । ला आदाने । सोपसर्गादप्यस्मादेव निपातनात्कः, तस्यापत्यं बैडालिः, तस्यैव कर्णावस्य बैडालिकर्णः, अ[1]परे तु इकारान्तं पठन्ति, बैडालिकर्णिरिति, कुक्कु रटतीति कुक्कुटः, निपातनाद्रशब्दस्य लोपः, चिनोतेः क्विप् चित्, कणतेरच्, कणः, चिता कणः चिक्कणः, निपातनात्तकारस्य ककारः, तकारमेवान्ये पठन्ति, चिहणादयश्चैते गोत्रनामधेयानि स्मर्यन्ते । 'आदिरिति वर्तमाने इति' । पूर्वं ह्यादिग्रहणमुत्तरपदाभिसंबद्धमिह पूर्वपदानां चिहणादीनामाद्युदात्तत्वमिष्यते अतस्तदर्थं पुनरादिग्रहणं कृतम् ॥

"चेलखेटकटुककाण्डं गर्हायाम्" ॥ 'पुत्रचेलमिति' । चेलवत्तुच्छमित्यर्थः । खेट इति तृणनाम, तद्वद् दुर्बला उपानत्, खेटं कटुकमस्वादु, तथा[2] दध्यपि गतस्वादुकत्वात् कटुकं, काण्डमिति शरनाम, तद्वत् सत्त्वपीडाकरमेवं भूतमपि ॥

"चीरमुपमानम्" ॥ 'वस्त्रचीरमिति' । वस्त्रं चीरमिवेति पूर्ववद्व्याघ्रादिसमासः ॥

"कूलसूदस्थलकर्षाः संज्ञायाम्" ॥ 'भाजीसूदमिति' । भाजीशब्दो जानपदादिसूत्रेण ङीबन्तः ॥

"अकर्मधारये राज्यम्" ॥ 'चेलराज्यादिस्वरादिति' । आदिशब्देन वर्ण्यादिस्वरपरिग्रहः, चेलराज्यादिस्वरस्यावकाशः भार्याचेलं, ब्राह्मणराज्यं, तत्पुरुषे तुल्यार्थेत्यादिना विहितस्याव्ययस्वरस्यावकाशो निष्कौशाम्बिः, कुचेलं, कुराज्यमित्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥

---

१ बैडालिकर्णिरित्यन्ये पठन्तीति मुद्रितपुस्तके पाठस्तत्र बैडालिकर्णिरित्यपेक्षितं, स च पाठः पदमञ्जर्यसम्मतः ।

२ तथा गतस्वादुत्वात्स्वादु दध्यपि कटुकमिति ३ पु· पा· ।

"पुत्रः पुंभ्यः" ॥ कुनटस्यापत्यं कौनटिः, दामकमाहिषकशब्दौ संज्ञायां कनिति कनन्तौ ॥

"नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः" ॥ 'संयुक्ताः स्त्रीसम्बन्धिनः श्यालादय इति' । योगरूढिरेषा तेषां, यथा सम्बन्धिशब्दः । 'ज्ञातयो मातापितृसम्बन्धेन बान्धवा इति'। पितृसम्बन्धिष्वेव तु ज्ञातिशब्दो लोके प्रसिद्धः, आख्याशब्द आचार्यादिभिः प्रत्येकमभिसम्बध्यते । 'भ्रातुष्पुत्र इति' । कस्कादिषु पाठात् षत्वम् ॥

"चूर्णादीन्यप्राणिषष्ठ्याः" ॥ चूरी दाहे अस्मात् क्तः, चूर्णं, वा[1] गतिगन्धनयोः, पा रक्षणे, आभ्यां करिशब्द उपपदे आतोऽनुपसर्गे कः, करिवं करिपं, महेरिनण्, बहुलवचनात् शकेरपि भवति, शाकिनं, शकादिभ्यो ऽटच्, शकटं, तद्वहतीति शकटादण् शाकटं, द्राक् चरति द्राक्षा, पृषोदरादिः, तुस शब्दे ततो बहुलवचनात् क्तः, उपधादीर्घत्वं च । कुं दुनोति कुत्सितं वा दुनोतीति क्विप्, अस्मादेव निपातनात्तुगभावः पूर्वपदस्य च मुम्, कुन्दुं मिमीते कुन्दुमः, दलेः कपन्, दलपः, चमेरसच् चमसः, ततो जातिलक्षणो ङीष्, चमसी, कनी दीप्तिकान्तिगतिषु, अस्मात् पचाद्यच्, अस्मादेव निपातनाद् द्विर्वचनं, चकनः, चक्कन इत्यन्ये पठन्ति, तत्रापि निपातनादेव रूपसिद्धिः, चोलस्यापत्यं चुल इत्यण्, चौलः । एते चूर्णादयः । 'पूर्वाचार्योपचारेणेति' । उपचारः प्रयोगः ॥

"कुण्ड वनम्" ॥ 'कुण्डशब्दो ऽत्रेत्यादि' । भाजनविशेषाभिधायी कुण्डशब्दस्तस्य नान्तरेण सादृश्यं ततो ऽन्यत्र वने वृत्तिः सम्भवतीति भावः, अन्ये तु वनेपि मुख्य एव कुण्डशब्द इत्याहुः । तत्र वनशब्देन विशेषणेन भाजनविशेषवाची निवर्त्यते, समुदायवाची चात्र वनशब्दो न तूदकवाची, आह हि कुण्डाद्युदात्तत्वे तत्समुदायशब्दमिति, तच्छब्देन पूर्वपदार्थः परामृश्यते, अपर आह । वनसमुदाये इति वक्तव्यम्, न तु वन इति, तेन शरवणसमुदायः शरकुण्डशब्देनोच्यत इति ॥

---

१ वा गतिगन्धनयोः, करिवं वातीति करिवः । पा रक्षणे, कस्मादपि आतोऽनुपसर्गे कः । करिप इति ३ पु· पा· ।

"प्रकृत्या भगालम्" ॥ भगालमित्यर्थग्रहणमित्याह। 'भगालवाचीति'। अत्र च व्याख्यानमेव शरणम्। 'भगालादयो मध्योदात्ता इति'। लघावन्ते द्वयोश्च बह्वषो गुरुरिति वचनात् ॥

"शितेर्नित्याबह्वज्बहुव्रीहावभसत्" ॥ 'अंसौष्ठशब्दावित्यादि'। अम् रोगे, अमेः सन्, अंसः, उष दाहे, उषिकुषिगार्त्तिभ्यस्थन्, ओष्ठः, दर्शनीयशब्दोऽनीयर्प्रत्ययान्तो मध्योदात्तः, शितिशब्दो वर्णानां तणतिनितान्तानामित्याद्युदात्तः ॥

"गतिकारकोपपदात् कृत्" ॥ प्रकारक इत्यादौ कुगतिप्रादय इति समासः, इध्मप्रव्रश्चनादौ कर्मणि षष्ठ्याः समासः, करणे ल्युट्, इध्मं प्रवृश्च्यते येन सोऽत्र इध्मप्रव्रश्चनः, शद्लृ शातने, णिच्, शदेरगतौ तः, पलाशानि शात्यन्ते येन स दण्डः पलाशशातनः, श्मश्रु कल्प्यते येन स क्षुरादिः श्मश्रुकल्पनः, कृपू सामर्थ्ये ण्यन्तः केवलो वा। 'ईषत्कर इति'। एतदुपपदग्रहणस्य साक्षादुदाहरणं सुदुरोस्तु गतित्वादपि सिद्धं, स्तम्बेरमादौ च कारकत्वात्, उच्चैःकृत्य उच्चैःकारमित्यादिकमप्युपपदग्रहणस्यैवोदाहरणम्। 'देवदत्तस्येति शेषलक्षणा षष्ठीति'। न कर्मलक्षणा, तथा हि सति कारकमेव देवदत्तः स्यात्, तृजकाभ्यां कर्त्तरि चेति समासप्रतिषेधप्रसङ्गश्च, अथ कृद्ग्रहणं किमर्थं, निर्गतः कौशाम्ब्याः निष्कौशाम्बिरित्यत्र मा भूत्, नैतदस्ति प्रयोजनं, यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, न च कौशाम्बीशब्दं प्रति क्रियायोगः, कारकमपि क्रियाया एव सम्भवति, उपपदमपि धात्वधिकारे सप्तमीनिर्दिष्टं प्रत्ययनिमित्तमुच्यते, तदेवं गत्यादिभिस्त्रिभिरपि क्रियावाच्युत्तरपदमाक्षिप्यते, धातुश्च क्रियावाची, धातोश्च द्वये प्रत्ययाः, कृतः तिङश्च, तत्र तिङन्ते समासाभावात्कृदन्तमेव संभवतीति, अनुव्यचलदित्यत्र तु न गतित्वनिबन्धनः समासः किं तर्हि सुबिति योगविभागनिबन्धनः, धातुप्रत्ययसमुदायपरिग्रहार्थं तु, अन्यथा यत्क्रियायुक्तास्तं प्रतीति वचनाद्धातुमेव प्रति गतित्वाद्धातावेवोत्तरपदे स्वरः स्यात् प्रणीरवीरिति, इह न स्यात् प्रणायकः उन्नायक इति, एतदपि नास्ति

प्रयोजनं, यत्क्रियायुक्ता इति, नैवं विज्ञायते यस्य क्रिया यत्क्रिया यत्क्रियया युक्तास्तं प्रतीति, एवं विज्ञायमाने स्वन्वयव्यतिरेकाभ्यां धातोरेव क्रिया वाच्येति तमेव प्रति गत्युपसर्गसंज्ञाप्रसंगः, कथं तर्हि विज्ञायते या क्रिया यत्क्रिया तं क्रियालक्षणमर्थं प्रति गत्युपसर्गसंज्ञे भवतः, केवलायाश्च क्रियाया वाचकमुत्तरपदं नास्तीति क्रियाविशिष्टसाधनवाचिनि प्राणीः प्रकारक इत्यादौ क्रियायां सिद्धताभिधायिनि प्रभवनमित्यादौ च सर्वत्र भविष्यतीति नार्थ एतेन क्रद्गुहणेनात आह । 'कद्गुहणं विस्पष्टार्थमिति'[1] । य एवं प्रतिपत्तुमसमर्थस्तं प्रति विस्पष्टार्थं क्रियतइत्यर्थः । यदि तर्हि विस्पष्टार्थमपि तावत्कद्गुहणं क्रियते आमन्ते तर्हि न प्राप्नोति प्रपचतितरां प्रपचतितमामिति, ततश्च समासस्वरं बाधित्वा ऽव्ययस्वर एव स्यादित्यत आह । 'प्रपचतितरामित्यादि' । अत्र हि प्रशब्दस्य तरबन्तेन समासो नामन्तेन, कथम्, अन्तरङ्गत्वाद्धातुः पूर्वमुपसर्गेण युज्यते प्रपचित्यस्यामवस्थायां सुब्भावात् समासो न कृत इत्येतावत, ततस्तिङ्, तस्यामप्यवस्थायां सुब्भावस्ततस्तरप्, तद्धितान्तत्वात्सुप्, तेन समासः, ततश्चाम्प्रत्ययः, तत आम्स्वरः सतिशिष्टः, कथं पुनस्तरबन्तेन समासः, कथं च न स्यात्, गतिकारकोपपदानां कृद्भिः सह समासवचनमिति वचनात्, नात्र कृद्भिरेव समास इति नियम्यते किं तर्हि यदि गत्यादीनां समासो भवति तेनतेन लक्षणेन तदा कृद्भिः प्राक् सुबुत्पत्तेरिति । ननु चैवमपि तरबन्तेन समासो न लभ्यते, किङ्कारणम्, असुबन्तत्वात्, प्रातिपदिकाधिकाराद्धि तत एव किमेत्तिङव्ययघादित्याम् भवति न सुबन्तात्, न च गतिकारकोपपदानामित्येतदस्ति, अकृदन्तत्वात्, अत्राहुः । घकालतनेष्विति ज्ञापकात् सुबन्तादेव सर्वे तद्धिताः, ङ्याप्प्रातिपदिकग्रहणं तु स्वाद्युत्पत्त्यर्थमेवाधिक्रियते, ततश्चामुत्पत्तये यः सुप् तदन्तेन समास इति । अपर आह । कुगतिप्रादय इत्यत्रातिङिति वक्ष्यमाणस्य प्रतिकर्षाद्दुत्तरपदमसुबन्तमेव समस्यते, ततश्च तरबन्तेन समासो लभ्यतइति । 'इत्येकइति' । अस्य[2]

---

१ विशेषणार्थमिति ३ पु॰ पा॰ ।

२ अस्य कद्गुहणं विस्पष्टार्थमित्यादिना कृत्स्नेन संबन्धस्तदयमर्थ इत्यधिकं ४ पु॰ ।

कृद्ग्रहणं विस्पष्टार्थम्, न चामन्ते दोषप्रसङ्ग इत्येवं केचिद्व्याचक्षते, 'प्रपचतिदेश्याद्यर्थन्त्वित्यादि'। तुशब्दः पक्षं व्यावर्त्तयति, आदिशब्देन प्रपचतिकल्पं प्रपचतिदेशीयं प्रपचतिरूपमित्येतेषां ग्रहणं, प्रपचतिदेश्यादार्थः प्रयोजनं यस्य तत्तथोक्तम्, एत दुक्तं भवति, न विस्पष्टार्थं कृद्ग्रहणम् अपि तु प्रपचतिदेश्यादौ यत्र सतिशिष्टस्वरान्तरं नास्ति तत्रायं स्वरो मा भूद् अव्ययपूर्वपदप्रकृतिस्वर एव यथा स्यादित्येवं सप्रयोजनं दृश्यत इति । इदं तु वक्तव्यम्, प्रपचतितरामित्यादौ तरबन्तेन समासे पश्चादाम् भवन् प्रत्ययग्रहणपरिभाषया पचतितरशब्दस्यैव घान्तत्वात् तत एव स्यात् । तत्र को दोषः, सोपसर्गस्य सङ्घातस्यैकपद्याभावादाम्प्रपचतितरां देवदत्तेत्यादौ 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येष विधिर्न स्यात्, शेषनिघातश्च प्रशब्दस्य न स्यात्, भिन्नपदत्वात्, तस्मात्प्रशब्दस्यामन्तेन समासोऽङ्गीकर्त्तव्यो न तरबन्तेन, तत्र समासत्वात् समुदायस्य प्रातिपदिकत्वे विभक्तावैकपद्यं भवति, स्वरे तु दोषप्रसङ्गात् कृद्ग्रहणमपि त्यक्तव्यमिति भाष्ये स्थितं, प्रपचतिदेशीयादौ का गतिरिति न विद्मः ॥

"उभे वनस्पत्यादिषु युगपत्" ॥ वनशब्दो नब्विषयस्यानिसन्तस्येत्याद्युदात्तः, पातेर्डतिः पतिः । 'तनुशब्दोन्तोदात्त इति'। केचित्तु तस्याप्याद्युदात्तत्वमत्र निपातयन्ति, तथा च तनूनपादुच्यते गर्भ आसुर इत्याद्युदात्तमधीयते। 'नरा अस्मिन्नित्यादि' । शंसेरकर्त्तरि च कारके संज्ञायामित्यधिकरणे कर्मणि वा घञ् । 'अवन्त इति'। कृत्यल्युटो बहुलमिति कर्त्तरि चदोरप् । 'शुनःशेप इति'। बहुव्रीहिः । 'शुनः[१] पुच्छशेपलाङ्गूलेष्विति' षष्ठ्या अलुक्। 'उभावाद्युदात्ताविति'। श्वन्शब्दः प्रातिपदिकस्वरेण, शेपशब्दः स्वाङ्गशिटामदन्तानामित्यनेन । शिडिति सर्वादीनां संज्ञा, स्वाङ्गवाचिनां शिटामदन्तानां चादिरुदात्तो भवतीत्यर्थः, शडि रुजायां, पचाद्यच् शण्डः, ग्रामादित्वादाद्युदात्तः, मर्चयतेरिणभीकापाशल्यतिमर्चिभ्यःकन्निति कन्, तितुत्रेत्यादिना इट्प्रतिषेधः,

१ शुनःशेपपुच्छेति ३ पु॰ पाठः। मुद्रितमूलपुस्तके शेपपुच्छलाङ्गूलेषु शुनः संज्ञायामिति षष्ठ्या अलुगिति पाठः स पदमञ्जर्यसंमतः ।

कुत्वं, मर्कशब्द आद्युदात्तः । 'तृष्णाशब्द इति'। तृषेर्निष्ठायामस्मादेव निपातनादिड्भावः, निष्ठा च द्व्यजनादित्याद्युदात्तत्वं, लबि अवस्रंसने, पचाद्यच्, अस्मादेव निपातनाल्लकारस्य बकारः, विश्वानि वयांस्यस्य विश्ववयाः, मृङो 'ऽन्येभ्योऽपि दृश्यत' इति विच्, मरिति, भुजिमृङ्भ्यां युक्त्युकौ, मृत्युः ॥

"देवताद्वन्द्वे च" ॥ उदाहरणेषु देवताद्वन्द्वे चेति पूर्वपदस्याऽनङ् । 'अत्र त्रय उदात्ता इति' । त्रयाणां पदानामादयः ॥

"नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" ॥ अग्निश-ब्दोऽङ्गेर्निर्नलोपश्चेति निप्रत्ययान्तः । कृवापाजिमिस्वदिसाध्यशूभ्य उण्, युक्, वायुः । 'उत्तरपदग्रहणमित्यादि'। अन्यथा ऽस्मिन्प्रकरणे द्वन्द्वः सप्तम्या निर्दिष्टो नोत्तरपदं, तत्रानुदात्तादाविति सप्तम्यन्तं द्वन्द्वस्यैव विशेषणं स्यात्ततश्चन्द्रसूर्यावित्यादौ प्रतिषेधः स्यात्, उत्तर-पदग्रहणे तु सति तस्यैव श्रुतस्यानुदात्तादावित्येतद्विशेषणं भवति । 'अनुदात्तादावित्यादि' । अन्यथा विधिप्रतिषेधयोः समानविषयत्वा-द्विकल्पः प्रसज्येत । प्रथेः षिवन् सम्प्रसारणं च, शुक्रशब्दो ऽयम् ऋज्रे-न्द्राग्रेत्यादिनान्तोदात्तो निपातितः ॥

"अन्तः" ॥ 'तत्र समासस्योत्तरपदस्येति'। क्वचित् समासस्यान्त उदात्तो भवति क्व चिदुत्तरपदस्येत्यर्थः, विषयविभागमुत्तरत्र दर्श-यिष्यति ॥

"थाथघञ्क्ताजबित्रकाणाम्" ॥ 'आद्युदात्तमुत्तरपदं स्यादिति'। यदीदं नोच्येतेति भावः । 'दूरादागत इति' । अत्र कर्मणि क्तः, ग्रामादिरभिधेयः, कृता आङो गतिसमासे 'गतिरनन्तर' इति प्रकृति-भावे चागत इत्याद्युदात्तं, तेन स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति समासः, 'पञ्चम्याः स्तोकादिभ्य' इत्यलुक्, तत्र कारकात्परमागतमित्येतत् कृदुत्त-रपदप्रकृतिस्वरेणाद्युदात्तं स्यात् । 'विशुष्क इति' । शुषेरकर्मकत्वात् कर्तरि क्तः, शुष्कधृष्टाविद्युदात्तत्वं, ततो गतिसमासः । 'आतपशुष्क

इति'। नायं सिद्धशुष्केति सप्तमीसमासः, सप्तमी सिद्धशुष्कपक्वबन्धेष्वका-लादिति पूर्वपदप्रकृतिस्वरप्रसङ्गात्, तस्मात् कर्त्तृकरणे कृता बहुलमिति समासः । 'प्रत्ययः प्रजय इति' । 'एरच्' । ननु च कृदुत्तरपदप्रकृतिस्वरे-णैवाच्चान्तोदात्तत्वं सिद्धमत आह । 'त्रयो निवासइत्यादि' । 'प्रलवः प्रसव इत्यादि' । 'ऋदोरप्' । 'प्रलवित्रमिति' । 'अर्त्तिलूधूसूखनसह-चर इत्रः' । 'गोवृष इति' । वृषु मृषु सेचने । 'सुस्तुतमिति' । सुःपूजाया-मतिरतिक्रमणे चेति कर्मप्रवचनीयसंज्ञा, स्वती पूजायामिति प्रादिसमासः॥

"सूपमानात् क्तः" ॥ 'वृकावलुप्तमित्यादि' । लूञ् छेदने, च्युङ् प्लुङ् प्रुङ् गतौ, नर्द गर्द शब्दे, सर्वत्र कर्तृकरणे कृता बहुलमिति समासः । वृकैरिवावलुप्तमित्यादिविग्रहः । 'उपमानादपीत्यादि' । अत्रेतिशब्दस्यानन्तरं प्राप्त इत्यस्यानुषङ्गः ॥

"संज्ञायामनाचितादीनाम्" ॥ संभूतादयः शब्दा रामायणा-दीनां संज्ञाः, रामायणशब्दो नपुंसकलिङ्गः, प्रायेण तु पुल्लिङ्गः पठ्यते, 'उपहूतइति'। ह्वेञो निष्ठायां यजादित्वात् संप्रसारणम् । 'परिजग्ध इति' । अदो जग्धिरादेशः । 'प्राप्त्यर्थोद्भवतेरिति' । चुरादावाधृ-षाद्वेत्यधिकारे भू प्राप्तावात्मनेपदीति पठ्यते, किं पुनः कारणं प्रयत्नेन कर्मणि क्त उपपाद्यते ऽत आह । 'गतिरनन्तर इत्यत्र हीति' । 'तद्बाध-नार्थश्चेदमिति' । प्रकृतोदाहरणाभिप्रायमेतद् न सूत्राभिप्रायम् । 'धनुष्खातेति' । नित्यं समासे ऽनुत्तरपदस्थस्येति षत्वम् । चिञ् चयने, ष्ठा गतिनिवृत्तौ, णयन्तः केवलश्च, ग्रह उपादाने, वच परिभाषणे, पद गतौ, श्लिष आलिङ्गने, डुधाञ् धारणपोषणयोः, सर्वत्र कर्मणि क्तः, एते आचितादयः। संहिताऽगवीतिगणसूत्रं तद् व्याचष्टे। 'यदा गोरन्यस्येति'॥

"प्रवृद्धादीनां च" ॥ वृधु वृद्धौ, यु मिश्रणे, डुधाञ् धारणे,रुह बीजजन्मनि, शसु हिंसायाम् । 'खट्वारूढ इति' । खट्वा क्षेप इति-समासः, नैतदिह पठितव्यमित्यहीने द्वितीयेत्यत्रावोचाम । कविभिः शस्तः, तृतीया कर्मणीत्यस्यापवादः । 'प्रायो वृत्तिप्रदर्शनार्थं इति' ।

प्रायो बाहुल्येन या वृत्तिर्यानादिष्वर्थेषु तस्याः प्रदर्शनार्थं इत्यर्थः । 'पुनस्स्यूतमिति' । सीव्यतेश्छ्वोः शूडनुनासिके इति ऊठ्, पुनश्चनसौ छन्दसीति गतिसंज्ञायां समासः ॥

"कारकाद्दत्तश्रुतयोरेवाशिषि" ॥ संज्ञायामनाचितादीनामिति विहितमन्तोदात्तत्वमनेन नियम्यते, देवा एनं देयासुरित्येवं प्रार्थितैर्देवैर्दत्तो देवदत्तः, आशिषि लिङ्लोटाविति वर्त्तमाने क्तिच् क्तौ च संज्ञायामिति क्तः, देवदत्तः । 'सम्भूतो रामायण इति' । कारकादित्यनुच्यमाने गतिकारकोपपदादिति चितयाधिकाराद्यथैव कारकान्नियमो भवति तथा गतेरपि स्यात् । 'एवकारकरणं किमिति' । सिद्धे विधिरारभ्यमाणो ऽन्तरेणाप्येवकारं नियमार्थो भविष्यतीति प्रश्नः । 'कारकावधारणमित्यादि' । असति ह्येवकारे विपरीतोऽपि नियमः स्यात् कारकादेव दत्तश्रुतयोरिति, एवं चाकारकाद् दत्तश्रुतयोर्न स्यादिष्यते च, तथा कारकस्यानियतत्वाद्देवपालित इत्यादावन्तोदात्तप्रसङ्गो ऽतः कारकावधारणं यथा स्याद्दत्तश्रुतावधारणं माभूदित्येवमर्थं करणमित्यर्थः । 'अयमपि[1] नियम इष्यतइति' । एतच्च तन्त्रेण सूत्रद्वयोच्चारणादेकसूत्रे ऽपि आशिष्येवेति भिन्नक्रमत्वादेवकारस्य लभ्यते ॥

"इत्थंभूतेन कृतमिति च" ॥ 'सुप्तप्रलपितमित्यादि' । कथं पुनरेतान्युदाहरणानि, यावता कृतमित्युच्यते न च प्रलपितादीनि कृतानि, अभूतप्रादुर्भाव एव हि करोतिर्वर्त्तते, ततश्च सुप्तकृतं सुप्तभाषितं सुप्तोत्पादितमित्यादिकमेवोदाहर्त्तव्यमत आह । 'कृतमिति क्रियासामान्ये करोतिर्वर्त्ततइति' । ततश्च यथा क्रियावचनो धातुः क्रियायां क्रियार्थायामित्यादौ विशेषाणामपि ग्रहणं भवति तद्वदत्रापि । अभूतप्रादुर्भावो निष्पादनम् ॥

"अनो भावकर्मवचनः" ॥ पयःपानादीनामुपपदसमासः, राजभोजनादौ षष्ठ्या समासः । 'सर्वेषु प्रत्युदाहरणेष्वित्यादि' । एतेन गतिकारकोपपदादित्यस्यायमपवाद इति दर्शयति ॥

१ एवमत्र नियमइष्यतइति मुद्रितमूलपुस्तकस्थपाठः पठमस्त्वर्थसंमतः ।

"मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः" ॥ 'रथव-र्त्मेति'। वृतेरधिकरणे मनिन्, कर्तरि षष्ठ्या समासः। 'पाणिनिकृ-तिरिति'। कर्मणि क्तिन्, पूर्ववत्समासः। व्याख्यानशब्दः करणसाधनः, शयनासनस्थानशब्दा अधिकरणसाधनाः। 'प्रकृतिः प्रकृतिरिति'। 'तादौ च निति कृत्यता' विति पूर्वपदप्रकृतिस्वर एवात्र भवति ॥

"सप्तम्याः पुण्यम्" ॥ 'उणादीनां त्विति'। अतः कृकमिकं-सेत्यत्र कमिग्रहणेनैव सिद्धे कंसग्रहणादुणादिषु पाक्षिकव्युत्पत्तिकार्यमिति भावः। पूङो यत् णुक् ह्रस्वश्च, पुण्यम्। ह्रस्वविधानादगुणत्वम्। यतो-नाव इत्याद्युदात्तत्वम् ॥

"ऊनार्थकलहं तृतीयायाः" ॥ उदाहरणेषु पूर्वसदृशेति तृतीया-समासः। 'अत्र केचिदित्यादि'। नन्वेवमूनशब्दस्यापि स्वरूपग्रहणं प्रसज्येत, ततश्च तदर्थानामन्येषां ग्रहणं न स्यादत आह। 'ऊनशब्दे-नैव त्विति'। अर्थनिर्देशार्थत्वं तु व्याख्यानादवसेयम् ॥

"मिश्रं चानुपसर्गसन्धौ" ॥ कथं पुनर्मिश्रशब्दस्य विधीयमानः संमिश्रशब्दस्य प्राप्नोति, कथं वा मिश्रशब्देन समास उच्यमानः सोपसर्गेण लभ्यते ऽत आह। 'इहेत्यादि'। प्रत्युदाहरणे संधिं दर्शयति। 'ब्राह्म-णैरिति'। एतदेव स्पष्टयति। 'ऐकार्थ्यमापन्नइति'। कथं पुनः संधि-शब्दस्यायमर्थ इत्याह। 'सन्धिरिति'। पणबन्धः परिभाषणं, यदि मे भवानेवं कुर्यादहमपि ते इदं करिष्यामीत्येवंरूपः। 'केचित्पुनरिति'। गृह्यमाणो विशेषो व्यावृत्तिर्यस्यां प्रत्यासत्तौ सा तथोक्ता। ततः किमि-त्याह। 'तत्रेति'। यद्यपि राज्ञोपि ब्राह्मणैस्सह प्रत्यासत्तिरस्ति तथापि सत्यामपि तस्यां परस्परमूर्तिविभागस्वरूपभेदो गृह्यतइति प्रत्युदाहरणो-पपत्तिरित्यर्थः। उदाहरणेषु नैवमित्याह। 'उदाहरणेष्विति' ॥

"नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः" ॥ संपादि शोभनम्। 'कर्णवेष्टकिकमिति'। 'संपादिनीति' प्राग्वतेष्ठञ्, 'छै-दिक इति'। छेदादिभ्यो नित्यमिति आर्हादगोपुच्छेत्यादिना ठक्।

'वत्सीय इति'। प्राक् क्रीताच्छः। 'सांतापिकइति'। तस्मै प्रभवति सन्तापादिभ्य इति प्राग्वतेष्ठञ्। 'नञ इति किमिति'। प्रतिषेधे प्रायेण नञ एव प्रवृत्तिदर्शनात्प्रश्नः। 'विगार्द्दभरथिकइति'। अव्ययपूर्वपदप्रकृतिस्वर एवात्र भवति। 'गार्द्दभरथिकादन्य इत्यादि'। उदाहरणादस्य विशेषं प्रदर्शयितुं गुणप्रतिषेधइति सूत्रावयवं व्याचष्टे। 'गुण इति'। तद्धितार्थः सम्पाद्यादिः, तस्य यत्प्रवृत्तिनिमित्तं सम्पादित्वादि, आदिशब्देन तदर्हत्वादेर्ग्रहणं, स गुण इत्युच्यते, उक्तं हि।

संसर्गभेदकं यद्यत्सव्यापारं प्रतीयते।

गुणत्वं परतन्त्रत्वात्तस्य शास्त्रउदाहृतम्॥

इति कथं तस्य गुणस्य प्रतिषेध उच्यतइत्याह। 'कर्णवेष्टकाभ्यां न सम्पादीति'। 'वोढेति'। अर्हार्थे तृच्, ढत्वधत्वष्टुत्वढलोपेषु सहिवहोरोदवर्णस्येत्योत्वम्॥

"यतोश्चातदर्थे"॥ पाशतृणशब्दाभ्यां समूहे पाशादिभ्यो यः, दन्तकर्णशब्दाभ्यां भवार्थे दिगादिभ्यो यत्, शरीरावयवाच्चेति यत्। 'पाद्यमिति'। 'पादार्घाभ्यां चेति' यत्। 'अदेयमिति'। अर्हार्थे 'अचो यत्', ईद्यतीतीत्वं, गुणः। 'निरनुबन्धकैकानुबन्धयोरिति'। एते च परिभाषे वामदेवाड् ड्यड्ड्याविव्यत्र ज्ञापिते॥

"अचकावशक्तौ"॥ 'अविचिपइति'। वक्ष्यमाणैः कृत्योकेष्णुज्भिः साहचर्यादचकयोः कृतोरिदं ग्रहणान्तेन कृद्ग्रहणपरिभाषया विचिपशब्दस्य कान्तत्वम्, दीक्षितपरिव्राजकौ शास्त्रनिषेधाच्च पचतो न त्वशक्तत्वात्, तेन तत्र व्रतं गम्यते न त्वशक्तिः॥

"आक्रोशे च"॥ 'अपचोयं जाल्म इति'। लोभोत्र विवक्षितो न त्वशक्तिः॥

"संज्ञायाम्"॥ 'अदेवदत्त इति'। यो देवदत्तः सन् तत्कार्यं न करोति स एवमाक्रुश्यते॥

"कृत्योकेष्णुच्चार्वादयश्च"॥ 'द्व्यनुबन्धकस्यापि ग्रहणमिति'। भवतीति वक्ष्यमाणेन संबन्धः, अत्रैव हेतुः। 'इकारादेर्विधानसामर्थ्या-

दिति'। भवतेरुदात्तत्वात्ततः परस्य खिष्णुच इटैवेकारादित्वे सिद्धे इकारादेर्विधानमिह सामान्यग्रहणार्थमेवेति भावः। 'आचार्यरित्यादि'। चरेर्ञुण् चारुः, साधेरुण् साधुः, युधा चरति यौधिकः 'एजेः खश्' अङ्गमेजयः, ततोऽन्योऽनङ्गमेजयः, वदेरान्यः, न कस्मादकस्मात्। वृतु वर्तने। वृधु वृद्धौ। जित्वरा संभ्रमे। रुच दीप्तौ। धृङ् अवस्थाने, एते शानजन्ताः गृह्यते, संज्ञायां कन्, ग्रहपतिकः, गृहपतिरित्यन्ये पठन्ति॥

"बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने"॥ प्रथमेति स्वरूपग्रहणं, पूरणशब्दस्य स्वरितत्वात्तदधिकारविहितानां प्रत्ययानां ग्रहणम्। 'अनेन प्रथम इति'। अत्र तृतीयापूर्वपदप्रकृतिस्वर एव भवति। 'यत्प्रथमा इति'। यः प्रथम एषामिति बहुव्रीहिः। अत्रापि पूर्वपदप्रकृतिस्वर एव भवति। 'इदंप्रधाना इत्यर्थ इति'। अनेन प्रधानवचनः प्रथमशब्दो न त्वेकसंख्यावचन इति दर्शयन् गणनाभावमाह। 'उत्तरपदस्येत्यादि'। सर्वत्रेह समासस्येति प्रकृतम्, उत्तरपदादिरित्यतः प्रभृति उत्तरपदस्येति च, तत्र चोत्तरपदं कार्यित्वेनाश्रीयते, तेन यदा कबुत्पद्यते तदा कपि परतो यत्पूर्वं प्रथमेति तदन्तोदात्तं भवति न तु कबन्तं, कप्प्रत्ययो हि समासस्यैवान्तो नोत्तरपदस्य, यदा च समासार्थादुत्तरपदादकृतएव समासे समासान्त इति पक्षस्तदापि प्रथमपूरणयोरिति विशिष्टरूपग्रहणात् कपश्च तत्रानन्तर्भावादुपात्तयोरेव स्वरः। ननु यदत्रोत्तरपदं कबन्तं न तदुपात्तं यच्चोपात्तं न तदुत्तरपदं, कपा सहोत्तरपदत्वादिति नात्र कपः स्वरप्रसंगो। नापि ततः पूर्वपदस्य स्वरेण भवितव्यं, तस्मादस्मिन्पक्षे उत्तरपदग्रहणमुपान्तस्योपलक्षणम्, प्रायेण हि तदुत्तरपदम्, उत्तरपदस्य कार्यित्वा,-त्कोऽर्थः, प्रायेणोत्तरपदभूतयोः प्रथमपूरणयोः कार्यित्वादित्यर्थः॥

"विभाषा छन्दसि"॥ द्विस्तनामित्यन्तोदादात्तं, चतुस्तनामित्याद्युदात्तम्॥

"संज्ञायां मित्राजिनयोः"॥ 'विश्वामित्र इति'। 'मित्रे चर्षा-वि'ति दीर्घः, परत्वादनेनान्तोदात्तत्वं प्राप्तं प्रतिषिध्यते, ततो बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदान्तोदात्तं भवति॥

"व्यवायिनोऽन्तरम्" ॥ उदाहरणे व्यवधानवाचिनोन्तराशब्दा-त्तत्करोतीति णिचि पचाद्यच्, प्रत्युदाहरणे त्वन्यवाच्यन्तरशब्दः ॥

"मुखं स्वाङ्गम्" ॥ 'दीर्घमुखा शालेति'। मुखशब्देनात्र द्वार-प्रदेशः शालाया उच्यते, ननु च स्वमङ्गं स्वाङ्गं ततश्च भवितव्यमेवाचा-प्यत आह। 'स्वाङ्गमद्रवादिलक्षणं गृह्यतइति' ॥

"नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" ॥ उच्चैर्नी-चैःशब्दौ स्वरादिष्वन्तोदात्तौ, प्राक्शब्दो निगतोऽव्ततावित्याद्युदात्तः, प्रत्यङ्कित्यत्र कृदुत्तरपदप्रकृतिस्वरः, गोमहतोरुक्तः स्वरः, स्थूलशब्द स्फजेन्द्रेत्यादावन्तोदात्तो निपातितः, मुषेः क्तिच्, मुष्टिः, कुश्च प्रथि-म्रदिभ्रस्जां संप्रसारणं सलोपश्चेति पृथुः। वदेः सः, वत्सः। 'गोमु-ष्टिवत्सपूर्वस्येत्यादि'। अस्य प्रतिषेधस्यावकाशो यत्र गवाद्युपमानं न भवति गौर्मुखमिव यस्य मुष्टिर्मुखमिव यस्य वत्सो मुखमिव यस्येति, सर्वत्र गवाद्युपमेयञ्चोपमानं, विकल्पस्योत्तरस्यावकाशः, यत्र गवादिपूर्व-पदं न भवति सिंहमुखो व्याघ्रमुखः, गवादावुपमानउभयप्रसंगे ऽयमेव भव-ति प्रतिषेधः पूर्वविप्रतिषेधेन ॥

"निष्ठोपमानादन्यतरस्याम्" ॥ हिंसेः पचाद्यच्, पृषोदरादि-त्वादाद्यन्तविपर्ययः सिंहः, व्याजिघ्रतीति व्याघ्रः, आतश्चोपसर्गइति कः, पाघ्राध्माधेट्दृश इति शो न भवति, जिघ्रतेः संज्ञायां प्रतिषेध इति वचनात् ॥

"जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः" ॥ ननूदाहरणेषु प्रत्युदाहरणेषु च 'निष्ठेति' निष्ठान्तं पूर्वं प्रयोक्तव्यं[1] स्यादित्यत आह। 'एतेष्विति'। 'प्रत्युदाहरणेष्वित्यादि'। तत्र पुत्र-शब्दोन्तोदात्तः, वसेष्ट्रन् वस्त्रं, तस्यैव ल्युट् वसनम्। कुण्डशब्दो नब्विष-यस्यानिसन्तस्येत्याद्युदात्तः ॥

"वा जाते" ॥ दन्तस्तनशब्दौ 'स्वाङ्गशिटामदन्ताना' मित्याद्यु-दात्तौ, मासशब्दः 'ग्रामादीनां चे' त्याद्युदात्तः, संवत्सरशब्दो बहिष्व-

१ निष्ठान्तस्य पूर्वनिपातः प्राप्नोतीति ३ पु० पा०।

त्सरतिशत्थान्तानामित्यन्तोदात्तः, अस्यार्थः बहिष्ठवत्सरतिशत्थ इत्येवमन्तानामन्त उदात्तो भवति बहिष्ठः, संवत्सरः, सप्ततिः, अशीतिः, त्रिंशत्, चत्वारिंशत्, गूथं, पूथं, सुखदुःखशब्दौ खान्तस्याशमादेरित्यन्तोदात्तौ, अस्यार्थः । खान्तस्य शब्दस्याशकारमकारादेरन्त उदात्तो भवति, नखः, उखा, अश्मादेरिति किं, शिखा, मुखं, तृपेःस्फापितश्चेत्यादिना रक्प्रत्ययः । कृतेश्छ च, कृच्छ्रम् । असेर्बहुलवचनाद्रक्, अस्रम् अम्बिकादयश्चेति अम्बिकशब्द इकन् प्रत्ययान्तो निपातितः, प्रतिगता आपोऽत्र प्रतीपं, कृवापाजिभ्य उण्, कारुः, कृपेः क्युन् कृपणः, सहेः क्त सोढः, दश सुखादयः ॥

"नञ्सुभ्याम्" ॥ 'समासस्यैतदित्यादि' । यद्यपि समास उत्तरपदं चेति प्रकृतन्तथाप्यत्र समासस्यैव कार्यित्वमिष्यते, एतच्च कपि पूर्वमिति वचनादवसीयते, यदि ह्यनेनोत्तरपदस्यान्तोदात्तत्वं स्यात् ततोऽकुमारीक इत्यादावनेनैव सिद्धत्वात्कपि पूर्वमिति न वाच्यं स्यात् । 'समासान्ताश्च समा[1]सावयवा भवन्तीति' । समासान्ता इत्यत्रान्तग्रहणमेतदर्थं समासान्ताः समासग्रहणेन यथा गृह्येरन्निति, तेनानृच इत्यादौ कृते समासान्ते तस्यैव समासान्तस्योदात्तत्वं भवति । 'बहुचइति' । बहोर्नञ्वदित्यतिदेशादिदमत्रोदाहृतम् । एतच्च समान्ताः समासस्यैवावयवा नोत्तरपदस्येत्याश्रित्योक्तं, न कपीत्यत्र तु पूर्वं समासान्तेषु पश्चात्तदन्तेन समास इति वक्ष्यति ॥

"कपि पूर्व्वम्" ॥ पूर्वेण कप एवोदात्तत्वे प्राप्ते ततःपूर्वस्योदात्तत्वं विधीयते, ह्रस्वान्तेऽन्त्यात्पूर्वमिति वचनादिह दीर्घान्ता एवोदाहृताः । 'नद्यृतश्चे'ति कप् ॥

"ह्रस्वान्तेन्त्यात्पूर्वम्" ॥ ह्रस्वान्तइत्यस्य बहुव्रीहेरन्यपदार्थं उत्तरपदं समासो वेत्याह । 'ह्रस्वोऽन्तो यस्येत्यादि' । अत्र च कपि परत इति पृथग्वचनात्तद्रहितमुत्तरपदं समासश्च गृह्यते, पूर्वग्रहणमनर्थकं

१ मुद्रितमूलपुस्तके समासेति नास्ति ।

कपि पूर्वमित्यनुवृत्तेरित्यत आह । 'पूर्वमिति वर्तमाने इत्यादि'। द्वितीये पूर्वग्रहणे सति प्रवृत्तिभेदो भवति, तत्रैकया प्रवृत्त्या ह्रस्वान्तेऽन्त्यात्पूर्वस्योदात्तत्वं विधीयते, अपरया तु नियम्यते, ह्रस्वान्तेऽन्त्यादेव पूर्वमुदात्तं भवति न तु कपि पूर्वमिति, तेन किं सिद्धं भवति तत्राह। 'तेनेति'। नास्त्यस्य ज्ञ इत्यज्ञकः, शोभनो ज्ञो ऽस्येति सुज्ञकः, तत्र यद्येष नियमो न स्यात् ततोन्त्यात्पूर्वं उदात्तभावी नास्तीति कपि पूर्वमित्ययमेव स्वरः स्यात्, अस्मिंस्तु नियमे सति न भवति। नञ्सुभ्यामिति कबन्तस्यैव भवति, यथा च कबन्तस्य भवति तथा तत्रैव प्रतिपादितम्, व्यक्तिपक्षाश्रयणे चैतत्पूर्वग्रहणं कृतम्, जातिपक्षाश्रयणे तु यथा हलादिः शेष इत्यत्र क्वचिदपि वर्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति, ह्रस्वान्तेन्त्यात्पूर्वमित्यत्रापि ह्रस्वजातेराश्रयणात्सर्वत्र ह्रस्वान्ते तक्रकौण्डिन्यन्यायेन कपि पूर्वमित्यस्याप्रवृत्तिः सिद्धेति ॥

"बहोर्नञ्वदुत्तरपदभूम्नि" ॥ नञ इव नञ्वत्, अस्मादेव निपातानात्पञ्चमीसमर्थाद्वतिः, यद्वा सम्बन्धसामान्ये षष्ठी, तया सर्वे द्विभक्त्यर्थाः संगृह्यन्तइति पञ्चम्यर्थेपि 'तत्र तस्येवे'ति वतिः षष्ठ्यन्तादेव, बहूनां भावो भूमा, 'बहोर्लोपो भू च बहोः,' उत्तरपदशब्देन तदर्थो गृह्यते स्वरूपेणोत्तरपदस्य बहुत्वासम्भवात् तदाह। 'उत्तरपदार्थबहुत्वइति'। किमर्थं पुनरतिदेश आश्रीयते न नञ्सुबहुभ्य उत्तरपदभूम्नीत्युच्येत, एवमपि ह्युच्यमाने उत्तरपदभूम्नीत्येतत्सम्भवव्यभिचाराभ्यां बहोरेव विशेषणं भविष्यति योपि न गुणादयो ऽवयवा इति प्रतिषेधः तत्राप्युत्तरपदभूम्नीत्यनुवृत्तेर्बहोरेव भविष्यति न नञ्सुभ्याम्, अगुणः सगुणइति। इदं तर्हि प्रयोजनं प्रकरणान्तरेपि यो नञाश्रयः स्वरस्तस्याप्यतिदेशो यथा स्यादिति तद्दर्शयति। 'नञोजरमरमित्रमृता इत्युक्तमित्यादि'॥

"न गुणादयोवयवाः" ॥ गुण संख्याने चुरादेरदन्तादेरच्, अशेःसरः, अक्षरः छन्दो मीयते येन छन्दोमानम्, वचेः सुपूर्वात्कः, सूक्तम्, अधीयतेस्मादित्यध्यायः, इङश्चेति घञ्, एते गुणादयः ॥

"उपसर्गात् स्वाङ्गं ध्रुवमपर्शु" ॥ स्वाङ्गं प्रति क्रियायोगाभावाद् उपसर्गग्रहणं प्राद्युपलक्षणं, सततं यस्येत्यादिना पृष्ठस्य ध्रुवत्वं दर्शयति, तीर्थपृष्ठगूढयूथेति पृष्ठशब्दो निपातितः । 'उद्बाहुः क्रोशतीति' । अत्र क्रोशनसमयएवोद्बाहुत्वं न सर्वदेत्यध्रुवत्वं, स्पृशेः श्वण्शुनौ पृच, स्पृशेर्धातोः श्वण्शुन् इत्येतौ प्रत्ययौ भवतः, धातोश्च पृ इत्यादेशो बहुलवचनाच्छकारस्येत्संज्ञा न भवति, यथाक्रमं वृद्धिगुणौ, पार्श्वं, पर्शुः ॥

"परेरभितोभावि मण्डलम्" ॥ 'बहुव्रीहिरयमित्यादि' । यदा बहुव्रीहिस्तदा परितः कूलमस्येति विग्रहः, प्रादिसमासे तु परिगतं कूलमिति, यदा पुनरव्ययीभावस्तदा परिकूलादिति । 'अव्ययीभावपक्षेपि हीत्यादि' । अव्ययीभावेप्ययमेव स्वर एषितव्यो न समासस्वरेण सिद्धिरित्यर्थः । 'अभितो भावोऽस्यास्तीत्यभितोभावीति' । लौकिके योगे लाघवस्यासार्वत्रिकत्वाद्बहुव्रीहिरेव नाश्रित इत्याह । 'अभितोभावीति' । सुप्यजाताविति णिनिरिति । 'यच्चैवं स्वभावमिति' । अभितोभवनस्वभावम् ॥

"प्रादस्वाङ्गं संज्ञायाम्" ॥ प्रकोष्ठादिषु प्रादिसमासो बहुव्रीहिर्वा ॥

"निरुदकादीनि च" ॥ 'एषामित्यादि' । यदा प्रादिसमासस्तदा निर्गतमुदकं निर्गतं वोदकादिति विग्रहः, बहुव्रीहौ निर्गतमुदकमस्मादिति, अथाव्ययीभावार्थमप्येषां ग्रहणं कस्मान्न भवति अत आह । 'अव्ययीभावे त्विति' । 'निष्कालिक इति' । कालशब्दाज्जानपदादिसूत्रेण ङीष्, ततःस्वार्थे कन्, 'केण इति ह्रस्वः, कालिका, ततः प्रादिसमासः । 'निष्पेष इति' । पिषेर्घञ् । 'कुत्सितस्तरीय इति' । दुः कुत्सायां वर्त्तत इति दर्शयति । 'अपरे निस्तरीक इति' । पठन्तीत्यनुषङ्गः, निष्प्रवाजिनशब्दः स एवोदयपूर्वः । 'परेरित्यादि' । परेरुत्तरे हस्तादयोऽन्तोदात्ता भवन्ति । 'परिहस्त इत्यादि' । हरेरिव केशा यस्य हरिकेशः, कपेरिव कपिकेशः ॥

"अभेर्मुखम्" ॥ 'उपसर्गात्स्वाङ्गं ध्रुवमिति सिद्धइति'। मुखं स्वाङ्गमिति न सिद्ध्यति, नाव्ययदिक्शब्देति प्रतिषेधात् ॥

"अपाच्च" ॥ 'अव्ययीभावेऽप्यत्र प्रयोजतीति'। कुत इत्याह। 'तत्रापि हीति'। यस्मात्तत्रापि 'परिप्रत्युपापे'ति पूर्वपदप्रकृतिस्वरत्वमुक्तं तस्मात्सोपि प्रयोजयतीत्यर्थः। 'योगविभाग उत्तरार्थइति'। उत्तरत्रापादित्यस्यैवानुवृत्तिर्यथा स्यादभेर्माभूत् ॥

"स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनाम नाम च" ॥ नामग्रहणं सीरशब्देनैव सम्बद्ध्यते न स्फिगादिभिः, स्फिगपूतकुक्षीणां पृथग्ग्रहणात्। 'उपसर्गादध्वन इति यदा समासान्तइत्यादि'। अत्र कारणमाह। 'तस्मिन् हि सतीति'। ननु चोपसर्गादध्वन इत्यत्र तु विकल्पः श्रुतो नापि प्रकृतः, तत्किमुच्यते यदा समासान्तो नास्तीति, अत आह। 'अनित्यश्चेति'। यदि नित्यः समासान्तःस्यादध्वग्रहणमिह न कर्तव्यं स्याद्, अच्प्रत्ययस्य चित्त्वादेवान्तोदात्तस्य सिद्धत्वात्, कृतं तु ज्ञापयति समासान्तविधिरनित्य इति। 'स्फिगपूतकुक्षीणामित्यादि'। यदा ह्येतानि स्वाङ्गवाचीनि ध्रुवाणि च भवन्ति बहुव्रीहिश्च समासस्तदोपसर्गात्स्वाङ्गमित्येव सिद्धम् ॥

"अधेरुपरिस्थम्" ॥ उपरि तिष्ठतीत्युपरिस्थम्, 'सुपि स्थ' इति कः, दन्तस्योपरीत्यादिनोपरिस्थत्वं दर्शयति। 'अधिकरणमिति'। अत्र कृदुत्तरपदप्रकृतिस्वरेण ककाराकार उदात्तः ॥

"अनोरप्रधानकनीयसी" ॥ उदाहरणे उत्तरपदार्थस्याप्राधान्यं दर्शयति। 'पूर्वपदार्थप्रधानः प्रादिसमासोयमिति'। 'प्रधानार्थं च कनीयोग्रहणमिति'। अन्यत्राप्रधानग्रहणेनैव सिद्धत्वात्। 'अनुगतो ज्येष्ठ इति'। विग्रहविशेषेण प्रधानवाचित्वं ज्येष्ठशब्दस्य दर्शयति ॥

"पुरुषश्चान्वादिष्टः" ॥ अन्वाचितो प्रधानशिष्टः, यथा भिक्षामट गां चानयेति गोरानयनम्। 'कथितानुकथितो वेति'। कस्मिंश्चित्प्राक्कथिते यो ऽन्यः पश्चात्कथ्यते स कथितानुकथितः, अनुगतः पश्चाद्गतः ॥

"अतेरकृत्पदे" ॥ अकृच्च पदञ्च अकृत्पदे । 'अतिकारकइति' । शोभनः कारकः, 'स्वती पूजायामि' ति प्रादिसमासः । 'अतेर्धातुलोप इति वक्तव्यमिति' । अत्यङ्कुश इत्यादौ वृत्तिविषयेऽतिशब्दो ऽतिक्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एव धातुलोपः । 'अतिगार्ग्य इति' । यथान्यासे त्वत्रापि प्राप्नोति गार्ग्यशब्दस्याकृदन्तत्वात् । 'अतिकारक इति' । यथा न्यासे त्वत्र न स्यात् कारकशब्दस्य कृदन्तत्वात्, तस्मादव्याप्त्यतिव्याप्तिपरिहारार्थमकृत्पदे इत्यपनीयातेर्धातुलोप इति वक्तव्यम् ।

"नेरनिधाने" ॥ निधा[1]नमप्रकाशता, न निधानमनिधानं, निर्गतं मूलमस्य निर्गतं वा मूलान्निर्मूलम् । 'निधानार्थं ब्रवीतीति' । अप्रकाशतां ब्रवीतीत्यर्थः । कथं पुनर्निशब्दस्यायमर्थ इत्याह । 'प्रादयो हीति' ॥

"प्रतेरंश्वादयस्तत्पुरुषे" ॥ अंशशब्दः कुश्चेतिवर्त्तमाने 'मृगय्वादयश्चेति' निपातितः, राजतेः कनिन् राजन्, उष दाहे, ष्ट्रन् उष्ट्रः । खिट्, ण्वुल्, खेटकः, अजिरशिशिरेति किरच्, अजिरम् । 'द्रातेराङ्पूर्वादातश्चोपसर्ग' इत्यङ्, अस्मादेव निपातनादाङो रगागमः, आर्द्राः, श्रृणोतेर्ल्युट्, श्रवणम्, कृतिभिदिलतिभ्यः कित्, तिकन् प्रकृतः, कृत्तिकाः-ऋधेः पचाद्यच्, अर्द्धः । पुर अग्रगमने, इगुपधात्कः, पुरम्, एते अंश्वादयः ॥

"उपाद् द्व्यजजिनमगौरादयः" ॥ गुरी उद्यमने, पचाद्यजन्तात्प्रज्ञाद्यण्, गौरं, तिष्येण युक्तः कालस्तैष्यः लेट् लोट् इति कण्ड्वादिपठिताभ्यां पचाद्यच, लेटलोटौ, दिहेर्जिह्वा उणादिः । कृषेर्वर्णइति नक्, टाप्, कृष्णा, कन्याशब्दोऽघ्न्यादयश्चेति निपातितः । गुध घनत्वे, इगुपधात्कः, गुधः । कृपिपदिभ्यां घञ्, कल्पः पादः ॥

"सोरवक्षेपणे" ॥ उदाहरणे तु स्वती पूजायामिति कर्मप्रवचनीयस्य समासः, तेन सुप्रत्यवसिते थाथादिस्वरेण सिद्धिर्नाशङ्क्या, यदि सुशब्दोत्र पूजायामेव वर्त्तते कथं तर्हि क्षेपो गम्यते इत्याह । वाक्यार्थस्त्विति' । कथमित्याह । 'असूयया तथाभिधानादिति' । यः खल्वनर्थउपस्थिते सुखायमान आस्ते तं प्रकृत्यैवमुक्ते क्षेपो गम्यते ॥

[1] अत्र दर्शनान्मूले पाठो ऽपपाठः ।

"विभाषोत्पुच्छे" ॥ 'सेयमुभयत्र विभाषेति'। आद्यप्रवृत्ताव्ययपूर्वपदप्रकृतिस्वरेण बाधितत्वात्समासस्यान्तोदात्तत्वमप्राप्तम्, द्वितीयायान्तु थाथादिस्वरेण नित्यं प्राप्तमिति कृत्वा ॥

"द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ" ॥ द्वित्रिभ्यामिति दिग्योगलक्षणा पञ्चमी, पाद्दन्मूर्द्धस्वितिसत्सप्तमी, बहुव्रीहिः कार्यीति, तदेतदाह। 'द्वि त्रि इत्येताभ्यामिति'। 'द्विपादिति'। 'संख्यासुपूर्वस्य'-त्यकारलोपः समासान्तः। 'दद्विति'। वयसि दन्तस्य दतृ। 'मूर्द्धस्वित्या[1]दि'। नन्व[2]कृत्समासान्तस्य सम्भवोऽत आह। 'एतदेवेति'। यदि तर्ह्यकृतसमासान्तस्योपादानमेवं सति यदि समासान्तः क्रियते तदा न प्राप्नोति तस्य शब्दान्तरत्वादित्यत आह। 'यदापीति'। इह हि बहुव्रीहिः कार्यित्वेनोपात्तो न मूर्द्धशब्दः। 'तदेकदेशत्वाच्चेति'। तस्य बहुव्रीहेरेकदेशोऽवयवः समासान्तस्तद्भावस्तत्त्वम्, तस्मादित्यर्थः। तदेकदेशित्वादिति पाठे स बहुव्रीहिरेकदेशी अवयवी यस्य स तदेकदेशी, तस्य भावस्तत्त्वम्। तस्मादिति स एवार्थः, तदेवं बहुव्रीहेः कार्यित्वात्तदेकदेशत्वाच्च समासान्तस्य यदापि समासान्तः क्रियते तदाप्ययं विधिर्भवत्येव। अपर आह। यदाप्युत्तरपदस्य कार्यित्वं तदापि परत्वादन्तोदात्तत्वे कृते पश्चात्समासान्तः, तत्र टिलोपे सति उदात्तनिवृत्तिस्वरेणैव षप्रत्ययस्य सिद्धमुदात्तत्वमिति। 'कल्याणमूर्द्धेति'। पूर्वपदप्रकृतिस्वर एवात्र भवति, कल्याणशब्दो 'लघावन्त' इति मध्योदात्तः ॥

"सक्थं चाक्रान्तात्" ॥ 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्ते कृते यः सक्थशब्दः सोऽत्र गृह्यते, क्रशब्दोऽन्तो यस्य स क्रान्तः, ततोऽन्योऽक्रान्तइति। 'गौरसक्थइति'। गौरशब्दः प्रज्ञाद्यण-

१ 'अकृतसमासान्त एव मूर्धन्शब्द इति'। एतच्च मूर्धस्वितिनिर्देशादेवावसीयते। अन्यथा मूर्धष्विति निर्देशं स्यात्। किमर्थं तर्ह्यकृतसमासान्त एव निर्दिष्ट इत्याह। 'तस्येति'। कृतसमासान्तस्य निर्देशे सत्येव समासान्ते ऽन्तोदात्तत्वं स्यादसति न स्यादिति ४ पुस्तके पाठः।

२ ननु च 'द्वित्रिभ्यां ष मूर्ध्न' इत्यत्र न विकल्पः श्रुतस्तत्कथमकृतसमासान्तसम्भव इति ४ पा०।

न्तत्वादन्तोदात्तः । शिलबेरच्वोपधायाइति शलत्वशब्दोन्तोदात्तः । 'बचश्चित्त्वादिति' । एतेन चित्स्वरस्यायमपवादः, प्राप्तविभाषेयमिति दर्शयति ॥

"परादिश्छन्दसि बहुलम्" ॥ 'परादिरिति' । 'परशब्देनात्र सक्थशब्द एव गृह्यतइति' । तस्यैव पूर्वसूत्रे सन्निहितत्वात्, यद्येवं परग्रहणमनर्थकं प्रकृतो हि सक्थशब्दो ऽनुवर्तिष्यते, नैतदस्ति, बहुव्रीहेरपि प्रकृतस्यानुवृत्तिः स्यात्, तस्याद्युदात्तत्वं शङ्क्येत, विभाषाग्रहणे प्रकृते बहुलग्रहणस्य प्रयोजनमन्यदपि यथा स्यादिति । 'ऋजुबाहुरिति' । बहुव्रीहिः । 'वाक्पत्तिश्चित्पतिरिति' । षष्ठीसमासौ । अत्र भाषाविषये पत्यावैश्वर्यइत्यस्य न भूवाक्चिद्दिधिष्विति प्रतिषेधे समासान्तोदात्तत्वं भवति । बहुलग्रहणसिद्धमर्थं श्लोकेन दर्शयति । 'परादिश्च परान्तश्चेति' । पूर्वपरशब्दाभ्यां पूर्वोत्तरपदयोर्ग्रहणं, यत एवं परादिप्रभृतिरुदात्तश्छन्दसि दृश्यते ततो हेतोर्बहुलं स्वरव्यत्यय उक्तः, स्वरव्यत्ययार्थं बहुलग्रहणं कृतमित्यर्थः ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्य द्वितीयः पादः ॥

"अलुगुत्तरपदे" ॥ 'अलुगिति चेत्यादि' । प्रत्येकं स्वरितत्वप्रतिज्ञानं दर्शयति, अस्य प्रयोजनमेकस्य निवृत्तावपरस्य निवृत्तिर्माभूदिति । 'स्तोकान्मुक्त इति' । करणे च स्तोकाल्पकृच्छ्रेत्यादिना पञ्चमी, स्तोकान्तिकेत्यादिना समासः । 'उत्तरपदइति किमिति' । लुक्तावत्समासएव प्राप्तः प्रतिषिध्यतइति सामर्थ्यादुत्तरपदइत्येतल्लभ्यते, न लोपो नञ इत्यादौ च न समासइत्यतो हि समासग्रहणानुवृत्तेरुत्तरपदला-भावतरामित्यादौ नञो नलोपाद्यभावः सिद्ध इति प्रश्नः । 'निस्तोक इति' । अत्रोत्तरपदभूतेभ्योपि स्तोकादिभ्यः परस्याः पञ्चम्या अलुक्प्रसङ्गः, ननु च लक्षणप्रतिपदोक्तपरिभाषया स्तोकादिभ्यः प्रतिपदं या पञ्चमी विहिता यश्च तेषां प्रतिपदोक्तः समासस्तस्या एव तत्रैव वा लुक् भविष्यति तत्किमेतन्निवृत्त्यर्थेनोत्तरपदग्रहणेनेत्यत आह । 'अन्यार्थमित्यादि' । आन-

कृतो द्वन्द्वे उत्तरपदे परतो यथा स्यादुत्तरपदस्य माभूद्धोतापोतारौ, अन्यथा परमपि सर्वनामस्थानापेक्षत्वेन बहिरङ्गभूतो हि गुणं बाधित्वा द्वन्द्वक्रियानन्तरप्राप्त आनङ् स्यात्, होतापोतृभ्यामित्यादौ च स्यादेव। तथा इको ह्रस्वोऽङ्यो गालवस्येति उत्तरपदे यथा स्याद् ग्रामणीरित्यादावुत्तरस्य पदस्य माभूदित्येवमाद्यर्थमुत्तरपदाधिकारोऽवश्यं कर्त्तव्यः स इहैव क्रियते समासानुवृत्तिर्लक्षणप्रतिपदोक्तपरिभाषा नाश्रयितव्या भवतीति, आ कुत इमावधिकारावित्यपेक्षायामाह। 'अलुगधिकार इत्यादि'। ऋकारान्तस्य ह्युत्तरपदेऽनन्तरे पितृपुत्र इत्यादौ आनङा भवितव्यं, यदि चात्रालुक् स्याद्विभक्त्या व्यवधानं स्यात्। यद्वा साक्षाद्विधीयमानङादिकार्यं प्रकरणप्राप्तस्यालुको निवर्त्तकमिति अलुगधिकारः प्रागानङः, तथाङ्गस्य विधीयमानं कार्यं यत्राङ्गमित्येतद्भवति तत्रैव भवति, कस्मिंश्चैतद्भवति, प्रत्यये न तूत्तरपदइति सामर्थ्यादुत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

"पञ्चम्याः स्तोकादिभ्यः" ॥ स्तोकादीनां प्रातिपदिकगणेऽपाठात्सूत्रपठितानां ग्रहणमित्याह। 'स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादीनीति'। करणे च स्तोकाल्पकृच्छ्रेत्यादीनि तु स्तोकादीनि न गृह्यन्तेऽव्याप्तेः, स्तोकान्तिकेत्यत्रत्यानि भूयिष्ठानि अर्थग्रहणात्। 'अलुग्भवतीति'। लुग्न भवतीत्यर्थः। 'सुपो लुकि प्राप्त इति'। सुपो धातुप्रातिपदिकयोरित्यनेन। 'प्रतिषेधः क्रियतइति'। अलुगिति प्रसज्यप्रतिषेध इति दर्शयति, उत्तरपदाधिकारोपजीवनाय तु नाव्ययीभावादित्यस्यानन्तरमिदं प्रकरणं नारब्धम्, एकवच्च, सर्वस्यालुक्प्रकरणस्य शेषभूतोऽयमर्थातिदेशः, यस्या विभक्तेरलुग्विधीयते तदर्थो द्व्यात्मको बह्वात्मकश्चैकवद्भवतीति वक्तव्यं, तेन स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इत्यपि विग्रहे स्तोकान्मुक्त इत्येव भवति, अन्यथा द्विवचनबहुवचनयोरप्यलुकि सति स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इत्यत्राप्येकपद्यमैकस्वर्यं स्यात्। नैष दोषः। स्तोकादिभ्यः प्रतिपदं या पञ्चमी करणे च स्तोकाल्पेति तस्या अलुक्, सा चासत्त्ववचनेभ्यो द्विबह्वोर्न संभवतीति स्तोकाभ्यां स्तोकेभ्य इत्यपादानएषा पञ्चमीत्येव न भविष्यति। एवमपि

दूराभ्यामागतो दूरेभ्य आगत इत्यत्र प्रसंगः, अत्र हि दूरान्तिकार्थेभ्यो द्वितीया चे ति प्रतिपदमेव पञ्चमी, तथा ऽन्तिकाभ्यां कृतमन्तिकेभ्यः कृतमित्यादावपि अलुक्प्रसंगः, तस्मादेकवच्चेति वक्तव्यम् । ननु वृत्तावुपसर्जनपदानि एकादिसङ्ख्यां विहायाभेदैकत्वसङ्ख्यां प्रतिपद्यन्ते, का पुनरियमभेदैकत्वसङ्ख्या, विशेषाणामविभागेनावस्थानं यथा मधुन्योषधिरसानां, नहि तत्रास्या ओषधेरयं रसो ऽस्या अयमिति विभागो दृश्यते, अथ च तएव विशेषा अनुभूयन्ते न पुना रससामान्यं तद्वत्, अत्रापि राजपुरुष इति राजार्थो नैकत्वादिविशेषाः, उक्तं च

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्त्तन्ते तां सङ्ख्यां तादृशीं विदुः ॥

इति । यद्वानुपातसङ्ख्याविशेषमेकत्वादिष्वनुगतं सामान्यमभेदैकत्वसङ्ख्या यथा संतमसे रूपमात्रं गृह्यते न पुनः शुक्ल इति वा कृष्ण इति वा, तद्वदत्रापीति सङ्ख्यावान् राजार्थो न चाव्ययार्थवन्निःसङ्ख्य इत्येतावत्प्रतीयते, उक्तं च ।

भेदानां वा परित्यागात्सङ्ख्यात्मा स तथाविधः ।
व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते ॥
अ[1]न्तर्हितविशेषेण यथा रूपेण रूपवान् ।
प्र[2]ख्यायते न शुक्लादि भेदो रूपस्य गम्यते ॥

इति, तदेवमभेदैकत्वसङ्ख्योपादानाद् द्विवचनबहुवचनान्तानां सर्वा वृत्तिर्न भवति किं पुनः समास एव, ततश्च स[3]मासाभावादलुङ् भविष्यतीति किमेकवद्भावेन । उच्यते । किं पुनः कारणं वृत्तावभेदैकत्वसङ्ख्या प्रतीयते संङ्ख्याविशेषप्रतिपादकाभावात्, विभक्तिर्हि तस्य प्रतिपादिका, सा च वृत्तौ निवृत्ता, निवृत्तायां च तस्यां त्रिकः प्रातिपदिकार्थ इति पक्षे संख्यासामान्यस्यापि तावत्प्रतिपादकाभावः, यदि परं गुड इत्युक्ते माधुर्यादिवदव्यभिचारात्सङ्ख्या प्रतीयते, अव्यभिचारस्तु सामान्यस्यानिय-

१ अगृहीतेति ४ पु· पा· । २ आख्यायतइति ४ पु· पा· ।
३ असमासादिति ४ पु· पा·

तस्य वा विशेषस्येति, सैवाभेदैकत्वसङ्ख्या, पञ्चकपत्वेपि सङ्ख्याविशेषप्रतिपत्तौ द्योतकत्वेनापि तावद् विभक्तयो ऽपेक्ष्यन्तइति तदभावात्सामान्योऽनियतो वा विशेषः प्रतीयतइति सैवाभेदैकत्वसङ्ख्या, यत्र त्वर्थप्रकरणादिकं विशेषावगतौ प्रमाणं भवति भवत्येव तत्र वृत्तिः, तद्यथा। अर्थाद्, मुद्गैः क्रीतं मौद्गिकं नह्येकेन मुद्गेन क्रयः सम्भवति, कारकमध्यइति च, नह्येकस्य मध्यं सम्भवति, प्रकरणात्, भवद्भिरामवसरप्रदानायेति, आदेशात्, तावकीनो मामकीन इति शैषिकः, मासजातइत्यादौ तु प्रातिपदिका[1]र्थस्यैवाकपरिमाणत्वात्, द्विपुत्र इत्यादौ तु सङ्ख्याशब्दसंनिधानात् तदेवं यत्र विशेषे प्रमाणाभावस्तत्राभेदैकत्वसङ्ख्या। यद्येवमत्रालुकि सति विभक्तिरेव प्रमाणमिति द्विवचनबहुवचनान्तानां समासः स्यादेव, यदा त्वर्थप्रकरणादिना विशेषावगतौ द्विवचनबहुवचनान्तानां वृत्तिर्भवति तदा का शङ्का विभक्तावेव सत्यां, यदि चाभेदैकत्वसंङ्ख्योपजननाद् द्विवचनबहुवचनयोरलुगभावः, एकवचनस्यापि न स्यात्, तस्यापि हि शुद्धमेकत्वं वाच्यं नाभेदैकत्वसङ्ख्या, अथ विभक्त्यभावे सङ्ख्यासामान्यस्य प्रतीतस्य विशेषपर्यवसानापेक्षायां यो हि बहून् कल्पयति कल्पयत्यसावेकमिति न्यायेन वृत्तावपि शुद्धमेकत्वं प्रतीयतइत्युच्येत अभेदैकत्वसङ्ख्येत्यनुपपन्नं स्यात्, तस्मादेकवचनान्तस्य द्विवचनान्तस्य बहुवचनान्तस्य वा यथेष्टं वृत्तिः, वृत्तौ चाभेदैकत्वसङ्ख्या, अर्थप्रकरणादिना विशेषावगतिरिति वाच्यमेवं च पूर्वोक्तेन न्यायेन द्विवचनबहुचनयोरलुक्प्रसङ्गादतिदेश आश्रयितव्यः, यद्येवं गोषुचरः अप्सुयोनिः अप्सव्य इति ये नित्यबहुवचनान्तास्तेषामप्यलुकि एकत्वातिदेशादेकवचनप्रसङ्गः, एवं तर्ह्यनभिधानमत्र हेतुः तदाह। 'द्विवचनबहुवचनान्तानां त्व[2]नभिधानादिति'। वाक्यमपि तर्हि न प्राप्नोति, न च वाच्यं समासे नास्त्यभिधानं वाक्ये पुनरस्तीति, नहि समाससञ्ज्ञा ऽर्थाभिधानउपयुज्यते, यत्पुनरुपयुज्यते प्रातिपदिकं विभक्तिश्च तत्सर्वमविकलमिति किमत्रानभिधानं

---

१ प्रातिपदिकस्यैवाकपरिमाणवाचित्वादिति ४ पु॰ पा॰।

२ मुद्रितमूलपुस्तके स्तोकादीनामित्यधिकम्।

करिष्यति, तत्राह । 'तेनात्रेत्यादि' । स्वरस्याप्यर्थाभिधानउपयोगात्, पृथक्स्वरयुक्तस्य वाक्यस्य प्रतिपादकत्वमैकस्वर्ययुक्तस्य समासस्याप्रतिपादकत्वं च युक्तमित्यर्थः । 'ब्राह्मणाच्छंसिन इत्यादि' । किं पुनरत्रोपसङ्ख्यायते, द्वितीयार्थे पञ्चमी, ब्राह्मणानि शंसति ब्राह्मणाच्छंसी, अलुक् तु तत्पुरुषे कृति बहुलमित्येव सिद्धः, ननु शस्त्राण्यसौ शंसति न ब्राह्मणानि, नैष दोषः, ब्राह्मणविहितेषु शस्त्रेषु ब्राह्मणशब्दो द्रष्टव्यः, अपर आह युक्त एवात्र पञ्चम्यर्थः, आहरणपूर्वके शंसने शंसतिर्वर्तते ब्राह्मणादाहृत्य सूक्तानि शंसतीति ब्राह्मणाच्छंसी, एवमपि होतृप्रभृतिष्वपि ब्राह्मणाच्छंसीति प्राप्नोति तत्राह । 'ऋत्विग्विशेषस्य रूढिरियमिति' । 'तस्या इति' । ब्राह्मणाच्छंसीत्यस्या रूढेरित्यर्थः । 'सतेति' । ब्राह्मणाच्छंसीत्यत्र पक्षे पञ्चम्यर्थो न सम्भवति पक्षान्तरे तु सम्भवति ।

"ओजःसहोम्भस्तमसस्तृतीयायाः" ॥ उदाहरणेषु कर्तृकरणे कृता बहुलमिति समासः । इह कस्मान्न भवति सततनैशतमोवृतामिति । उच्यते । उत्तरपदेन पूर्वपदमाक्षिप्यते, तेनोपात्तमोजःप्रभृति विशेष्यते पूर्वपदभूतेभ्य ओजःप्रभृतिभ्य इति, न चात्र तमःशब्दः पूर्वपदं किं तर्हि सततनैशतमःशब्दः, यत्र तदन्तविधिरिष्यते तत्रोपात्तेनाक्षिप्तं पूर्वपदं विशेष्यते, तेन तस्य तदन्तस्य च भवति । 'इष्टकचितं पक्वेष्टकचितमिति' । क्वचित्तु यदेवोपात्तं तस्यैवोत्तरपदे ऽनन्तरे तत्कार्यं भवति न तूपात्तस्य तदन्तस्य वा पूर्वपदत्वमपेक्ष्यते, यथा ऽऽनङ् ऋतो द्वन्द्वे, होतृपोतृनेष्टोद्गातार इति, अत्र नेष्टृशब्दश्च न पूर्वपदं नापि तदन्तं पूर्वपदं किं तर्हि होतृशब्दः, न तस्योत्तरपदमनन्तरम् । अञ्जसा आर्जवेन, यस्य पुमाननुजः स पुंसानुजः, [1]पुंसा हेतुना ऽनुज इति कृत्वा, जनुषान्धो जात्यन्धः, जनुर्जन्म ।

१ अत्र मुद्रितमूलपुस्तके 'पुंसा हेतुनानुजः । जनुषान्धः । जनुषा हेतुना ऽन्धः, तृतीयेति योगविभागात्समासः । जनुरिति जन्मनो नामधेयम्' इत्युल्लिख्य तत्र टिप्पणौ पुंसा हेतुनेत्यारभ्य नामधेयमित्यन्तो ऽपपाठः पदमञ्जर्यां सत्त्वादित्युक्तं, परं तूपलब्धपुस्तकेष्वयं पाठो नोपलभ्यते ।

"आत्मनश्च पूरणे" ॥ वार्त्तिकमेवेदं सूत्ररूपेण पठितं, पूरणशब्दस्य स्वरितत्वात्तदधिकारविहितानां प्रत्ययानामत्र ग्रहणं न स्वरूपस्य ग्रहणमित्याह । 'पूरणप्रत्ययान्तइति' यद्यप्युत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्न भवतीति हृदयस्य हृल्लेखेत्यत्र ज्ञापयिष्यते तथाप्यात्मन्शब्दात्पूरणप्रत्ययस्यासम्भवात्सामर्थ्यादत्र तदन्तविधिः । 'आत्मना वा कृत इति' । वृत्तौ कृतार्थस्यान्तर्भावात्कर्तरि करणे वा तृतीया, तृतीया तत्कृतार्थेनेति समासः, यथा कुङ्कुमलोहितादाविस्यर्थः । 'आत्मा चतुर्थो यस्येति' । एकस्यापि वस्तुनो बुद्धिपरिकल्पितविभेदस्य वर्त्तिपदार्थत्वमन्यपदार्थत्वं चाविरुद्धम् ।

"वैयाकरणाख्यायां चतुर्थ्याः" ॥ 'वैयाकरणानामित्यादि' । यदि तु व्याकरणे भवा वैयाकरणी, अणृगयनादिभ्य इत्यण्, वैयाकरणी चासावाख्या चेति वैयाकारणाख्येत्येवं व्याख्यायेत, आत्मनेभाषः परस्मैभाष इत्यत्र न स्यात्, अनयोरष्टाध्याय्यामपठितत्वात्, तस्माद्ग्रन्थोपदर्शितमेव व्याख्यातं, यद्येवं कुबेरबलिरित्यादौ लौकिकसञ्ज्ञाशब्दे प्रसङ्गः, वैयाकरणानामपि तेन व्यवहारात्, अत आह । 'ययेति' । विशेषणसामर्थ्यादवधारणमाश्रीयनइति भावः । यदा तु धातुसूत्रगणोणादिवाक्यात्मकं पञ्च स्थानं व्याकरणं तदा वैयाकरणी चासावाख्या चेत्यस्मिन् व्याख्याने ऽपि न दोषः । 'आत्मनेपदमिति' । अन्वर्थत्वमस्य समासविधौ दर्शितम् ।

"परस्य च" ॥ किमर्थमिदमुच्यते, अलुग् यथा स्यात् परस्मैपदं परस्मैभाषः, सिद्धो ऽत्रालुक् पूर्वेणैव, न सिद्ध्यति, आत्मन इति तत्र वर्त्तते, निवर्त्तिष्यते, यदि निवर्त्तेत तेभ्यो हितास्तद्धिता इत्यत्रापि प्राप्नोति, तस्मादात्मन इति तत्रानुवर्त्तते, तस्मिंश्चानुवर्त्तमाने परस्य चेति वक्तव्यम् ॥

"हलदन्तात्सप्तम्याः संज्ञायाम्" ॥ उदाहरणेषु संज्ञायामिति समासः । 'गविष्ठिर इत्यादि' । अन्यथान्तरङ्गानपि विधीन्बहिरङ्गो

१ विभागस्येति ४ पु· पा· ।

लुग्बाधत इत्यवादेशस्याकरणादहलदन्तत्वाच्च स्यात्, यथा भूम्यां पाशो भूमिपाश इत्यत्रेति भावः । 'हृद्द्युभ्यामिति' । असंज्ञार्थमिदम् । 'हृदिस्पृक्, दिविस्पृगिति' । द्वितीयार्थे चैषा सप्तमी । तथाहि भाष्यम् । अन्यार्थे एषा सप्तमी द्रष्टव्या, हृदयं स्पृशतीति हृदिस्पृक्, दिवं स्पृशतीति दिविस्पृग् इति, आख्याग्रहणस्योपसमस्तत्वादिह संज्ञाग्रहणं, तत्रैव त्वसमस्तमाख्याग्रहणं कर्त्तव्यम् ॥

"कारनाम्नि च प्राचां हलादौ" ॥ वणिग्भिः पशुपालैः कर्षकैश्च कल्पितो राजग्राह्यो भागः करः, कर एव कारः, प्रज्ञादित्वादण् । 'नियमविकल्पा इति' । नियमविशेषा इत्यर्थः । तानेव दर्शयति । 'कारनाम्नश्चेत्यादि' । प्राचां देशे हलादौ यदि भवति कारनाम्न्येवेति प्रथमो नियमः, अप्राग्देशवर्तिनि तु त्वचिसारादावकारनाम्न्यपि भवत्येव, तथा कारनाम्नि हलादौ यदि भवति प्राचामेवेति द्वितीयः, प्राचां कारनाम्नि च यदि भवति हलादावेवेति तृतीयः, अवीनां समूहोऽविकटं, संघाते कटच्, कथं पुनरेकस्मिन्वाक्ये नियमत्रयं लभ्यते, कः पुनराह एकमिदं वाक्यमिति, अगृह्यमाणविशेषत्वेन प्रत्येकमेवकाराध्याहाराद्भिद्यन्त्येव वाक्यानि, संज्ञाग्रहणे प्रकृते ऽपि नामग्रहणं क्रियते नियमार्थत्वं विस्पष्टयितुम् । अन्यथा ऽसंज्ञायां विध्यर्थता ऽपि संभाव्येत, कथं पुनरसंज्ञायां सप्तमीसमासः, एतदेव ज्ञापकं स्यात् प्राचां कारे हलादिनोत्तरपदेनासंज्ञानामपि भवति समास इति । यस्मिन्विधिरित्येव सिद्धे आदिग्रहणं विस्पष्टार्थम् ॥

"अमूर्द्धमस्तकात् स्वाङ्गादकामे" ॥ उदाहरणेषु प्रत्युदाहरणेषु च व्यधिकरणपदो बहुव्रीहिः । 'अक्षशौण्ड इति' । सप्तमी शौण्डैरिति तत्पुरुषः ॥

"बन्धे च विभाषा" ॥ स्वाङ्गादिति निवृत्तं, सामान्येनायं विधिः । बन्ध इति धातुरेवात्र सहाकारेणा ऽनुकृतः, नेन्सिद्धबध्नातिषु चेति धातावेव प्रतिषेध उक्तस्ततश्च बहुव्रीहिरेवास्य विकल्पस्य विषयस्तत्रापि हस्तबन्धादौ स्वाङ्गे प्राप्तविभाषा चक्रबन्धादावस्वाङ्गे

त्वप्राप्तविभाषेत्युभयत्र विभाषा संपद्यते, तत्पुरुषे तु नैवास्य प्रवृत्तिरिनीमां शङ्कामपनयति। 'बन्धइति घञन्तो गृह्यतइति'। ततश्च तत्पुरुषेपि घञन्तस्य वृत्तिर्विरुद्धा, प्रतिषेधस्य बन्धनादौ चरितार्थत्वादिति भावः। 'उभयत्र विभाषेयमिति'। कथमित्याह। 'स्वाङ्गबहुव्रीहाविति'। 'तत्पुरुषे त्विति'। यद्यपि बहुव्रीहावेवास्वाङ्गादप्राप्तइति शक्यं वक्तुं तथाप्यस्य तत्पुरुषे प्रवृत्तिं दर्शयितुं तत्पुरुषे त्वित्युक्तं, तत्पुरुषे चास्य प्रवृत्तिः पूर्वविप्रतिषेधेन, अन्यथा बहुव्रीहिरस्यावकाशः, बध्नातिप्रतिषेधस्य च बन्धनादिरवकाशः, घञन्ते तु तत्पुरुषे उभयप्रसङ्गे परत्वात्प्रतिषेध एव स्यात्॥

"तत्पुरुषे कृति बहुलम्"॥ अत्रापि कृदन्तस्य ग्रहणं न कृन्मात्रस्य, तत्र परतः सप्तम्या असम्भवात्, इह कस्मान्न भवति परमे कारके परमकारकइति। उच्यते। अन्तरङ्गा कृत्प्रतिपाद्यक्रियानिमित्ता सप्तमी, इह तु क्रियान्तरनिमित्ता परमे कारके निधेहीति, तेन बहिरङ्गत्वान्नास्या ग्रहणम्। 'कुरुचर इति'। हलदन्तादित्यधिकारमनाश्रित्येतदुदाहृतं, विभाषाग्रहणे प्रकृते बहुलग्रहणं क्वचित् प्रकृत्यादीनामुपसंग्रहार्थं, तेन कर्णेजपादावलुगेव, मद्रचरादौ लुगेव, ब्राह्मणाच्छंस्यादौ असप्तम्या अप्यलुक्, एवं च सर्वमेवालुक्प्रकरणमस्यैव प्रपञ्चः॥

"प्रावृट्शरत्कालदिवां जे"॥ प्रावृट्शरदोः पृथग्ग्रहणात्कालेति स्वरूपग्रहणम्॥

"घकालतनेषु कालनाम्नः"॥ घेति तरप्तमपोर्ग्रहणं, कालेति स्वरूपग्रहणं, तनेति ट्युट्युलोरादेशस्य सतुट्कस्य ग्रहणम्। 'पूर्वाह्णेतनमिति'। सप्तम्यर्थप्रकर्षे प्रत्ययः, तस्याद्रव्यप्रकर्षत्वादलुक्पक्षे, किमेत्तिङव्ययघादित्यामुप्रत्ययः, लुक्पक्षे तु निमित्ताभावादद्रव्यप्रकर्षेण्यामभावः, तरबन्तात् सप्तमी, क्व चित्त्वलुक्पक्षेऽपि सप्तमी समुदायात्पठ्यते, तत्र प्रकृत्यर्थविवक्षया ऽद्रव्यप्रकर्षेइति प्रतिषेधो व्याख्येयः। 'पूर्वाह्णेतन इति'। विभाषा पूर्वाह्णापराह्णाभ्यामिति ट्युट्युलौ, अनादेशस्तुट् च, कथं पुनर्घतनप्रत्ययमात्रे ऽलुक् उदाहृतो यावता प्रत्ययग्रहणपरिभाषया तद-

न्तउत्तरपदे ऽलुगुदाहर्त्तव्यो ऽत आह । 'उत्तरपदाधिकारइति' । कुत इत्याह । 'लेखग्रहणादिति' । यदयं हृदयस्य हृल्लेखयदणलासेष्वित्यणग्रहणे क्रियमाणे लेखग्रहणं करोति तज्ज्ञापयति नोत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्भवति, यदि स्याल्लेखग्रहणं न कुर्यात्, अणन्त इत्येव सिद्धत्वात् । ननु च घञर्थं लेखग्रहणं स्यात्, न वै घञन्तइष्यते । 'कालेति न स्वरूपग्रहणमिति' । नामग्रहणात् । क्वचिचञ् न पठ्यते, तत्र घकाले स्वरूपग्रहणमित्यर्थः ॥

"शयवासवासिष्वकालात्" ॥ अत्राकाल इत्यर्थग्रहणं व्याख्यानात् तदाह । 'अकालवाचिन इति' । 'खशय इति' । अधिकरणे शेतेरित्यच् । 'वास इति' । घञ् । ग्रामेवासीति' । सुप्यजातौ णिनिः । 'अपो योनीत्यादि' । शब्दप्रधानत्वादप इत्येकवचनं, योनि इत्पत्तिः, अप्सु योनिर्यस्य सो ऽप्सुयोनिः । 'अप्सव्य इति' । अोर्गुणः, वान्तोयि प्रत्यये । 'अप्सुमन्ताविति' । सप्तम्यन्तान्मतुपो ऽसम्भवादप्स्वितिशब्दो ययोरस्ति तावप्सुमन्तौ कारीयामाज्यभागौ, तयोर्हि अप्स्वग्ने सधिष्टव, अप्सु मे सोमो अब्रवीत्, इत्यनुवाक्ययोरप्सुशब्दो ऽस्ति, यद्येवमनुकरणत्वादस्य वामीयादिवल्लुङ्‌ भविष्यतीति किं मतुब्ग्रहणेन, अन्ये तु मतिशब्दं पठन्ति, उदाहरन्ति, अत्र सोमो वाप्सुमतिरिति, तत्तु भाष्ये न दृष्टम् ॥

"नेन्त्सिद्धबध्नातिषु च" ॥ तत्पुरुषे कृति बहुलमिति प्राप्तं प्रतिषिध्यते, सप्तम्याः परस्य केवलस्येनो ऽसम्भवादुत्तरपदाधिकारे ऽपि प्रत्ययग्रहणे तदन्तविधिरित्याह । 'इचन्तउत्तरपदइति' । 'स्थण्डिलवर्त्तीति' । व्रतइति णिनिः । उपपदसमासः । 'साङ्काश्यसिद्ध इति' । सिद्धशुष्कपक्वबन्धैश्चेति समासः । 'चारबद्ध इति' । बद्धशब्दो निष्ठान्तः, 'योगविभागात् समास इति' । बद्धशब्देन । 'तर्दिति' । बन्ध इत्येव शब्दरूपम्, अथ घञन्तः कस्मान्न भवति तत्राह । 'घञन्ते हीति' । अथ वा पचाद्यजन्ते घञन्ते च बन्धे च विभाषेत्ययं विकल्पः कस्मान्न भवतीत्यत आह । घञन्ते हीति ॥

"स्थे च भाषायाम्" ॥ 'आखरेष्ठ इति'। स्थः क चेति कः॥

"षष्ठ्या आक्रोशे" ॥ 'पश्यतोहर इति'। षष्ठी चानादर इति षष्ठी, पश्यन्तमनादृत्य हरतीत्यर्थः। 'शुनःशेप इति'। अकारान्तोऽप्यस्ति शेपशब्दः न केवलं सकारान्तः, शुन इव शेपमस्येति बहुव्रीहिः एवं पुच्छलाङ्गूलाभ्यामपि बहुव्रीहिः, ऋषिविशेषाणामेताः संज्ञाः॥

"ऋतो विद्यायोनिसम्बन्धेभ्यः" ॥ विद्या च योनिश्च विद्यायोनी, अभ्यर्हितत्वाद्विद्यायाः पूर्वनिपातः, तत्कृतः सम्बन्धो येषां ते विद्यायोनिसम्बन्धाः, कृतशब्दो गम्यमानत्वान्न प्रयुज्यते। 'पितुःपुत्र इति'। प्रख्यातात्पितुरुत्पन्न इत्यर्थः। 'विद्यायोनिसम्बन्धेभ्यः पूर्वोत्तरपदग्रहणमिति'। सूत्रे पञ्चमीनिर्देशात्पूर्वपदानामेव विद्यायोनिसम्बन्धवाचित्वं लभ्यते नोत्तरपदानाम्, अथ सप्तमीनिर्देशः क्रियते उत्तरपदानामेव लभ्यते न पूर्वपदानां, तस्मादुभयेषामपि तद्वाचित्वेऽयं विधिरिति वक्तव्यमित्यर्थः। अन्यनिवृत्तिपरत्वाच्चास्य तेषां परस्परव्यतिकरेऽपि भवति, होतुःपुत्रः, पितुरन्तेवासीति॥

"आनङ् ऋतो द्वन्द्वे" ॥ अत्र यद्यृकारस्य द्वन्द्वे आनङ् भवतीत्येवं विज्ञायेत पितृपितामहावप्यानङ् स्यात्, ऋत इत्येतच्चानर्थकं प्रकृतत्वात्तस्माद् द्वन्द्वविशेषणमृत इति। जातो चेदमेकवचनमिति मन्यमान आह। 'ऋकारान्तानामित्यादि'। इह कार्यार्थः श्रवणार्थो वा वर्णानामुपदेशः, नकारश्चायं न क्वचिच्छ्रूयते सर्वत्र न लोपः प्रातिपदिकान्तस्येति नलोपेन भवितव्यं, कार्यमपि चास्य न किं चिदुपदिश्यते तस्माच्चार्थ एतेनेत्यत आह। 'नकारोच्चारणमित्यादि'। असति नकारे उः स्थानेऽणेव शिष्यते इति उरण् रपर इति रपरत्वं स्यात्, तस्मिंश्च नायमणेव शिष्यते किं तर्ह्यण् चान्यच्चेति नास्ति रपरत्वप्रसङ्गः, तस्माद्रपरत्वनिवृत्त्यर्थं नकारोच्चारणं, ङकारो ङिच्चेत्यन्त्यादेशार्थः, यत्र च निर्दिश्यमानं कार्यिणो विशेषणं तत्र निर्दिश्यमानस्यादेशा भवन्तीत्येतद्भवति, नात्र ऋत इति कार्यिणो विशेषणं, किं तर्हि

द्वन्द्वस्य विशेषणम् । 'पुत्रइत्यत्रा'नुवर्त्ततइति' । पुत्रेऽन्यतरस्यामित्यतः । यद्यत्र पुत्रइति वर्त्तते विभाषा स्वसृपत्योरित्यत्राप्यनुवर्त्तेत, ततश्च भ्रातुष्पुत्र इत्यादावनाक्रोशेपि विकल्पप्रसङ्गः, एवं तर्हि व्याख्यानादत्रैव सम्बध्यते, अत एव इहात्रेत्युक्तम्, एवमपि पुत्रउत्तरपदे पूर्वपदमात्रस्यानङ् प्राप्नोति कार्यिणोऽनिर्देशात्, ऋत इति श्रुतस्य द्वन्द्वविशेषणत्वादत आह । 'ऋत इति चेति' । अनुवर्त्ततइत्यनुषङ्गः, ऋतो विद्यायोनीत्यत ऋत इत्यनुवर्त्तते तत्कार्यिणं विशेषयिष्यतीत्यर्थः, यद्यपि तत् पञ्चम्यन्तं तथापि तदिह व्याख्यानात्षष्ठ्यन्तं विपरिणम्यते ॥

"देवताद्वन्द्वे च" ॥ अनृकारान्तार्थमविद्यायोनिसम्बन्धार्थं वचनम् । 'द्वन्द्वइति वर्त्तमानइत्यादि' । प्रकृतं द्वन्द्वग्रहणं समासविशेषप्रतिपत्त्यर्थमिदं तु प्रसिद्धं साहचर्यं यस्य युगलस्य तत्परिग्रहार्थं, कथं पुनर्न परिग्रह इत्यत आह । 'अत्यन्तसहचरित इत्यादि' । द्वन्द्वं रहस्येत्यत्राभिव्यक्तिग्रहणेनात्यन्तसहचरितयुगले द्वन्द्व इति निपात्यते, तस्यात्र ग्रहणं देवतापदेन, समस्तञ्चेदम्प्रकृतस्य द्वन्द्वस्यार्थद्वारकं विशेषणमत्यन्तसहचरितयुगलाभिधायिनि द्वन्द्वइति यावत्, साहचर्यमेव विशिनष्टि । 'तत्रेति' । सहवापः, सहनिर्वापः । अग्नीषोमाभ्यां जुष्टं निर्वपामीत्यादि । 'उभयत्रेति' । पूर्वपदत्वेनोत्तरपदत्वेनेत्यर्थः ॥

"इद्वृद्धौ" ॥ अत्र वृद्धिमदुत्तरपदं वृद्धिशब्देनोच्यते, वृद्ध्यात्मकस्योत्तरपदस्यासम्भवात्, अग्नीवरुणौ देवते अस्य, अग्नामरुतौ देवते अस्येति विग्रहः, पूर्वत्रेत्वमुत्तरत्रानङ् । 'द्व्यधिष्ठानं देवतात्वमिति' । देवतेत्येकवचनम् । 'आनङमीत्वं च बाधितुमिति' । वरुणे हीत्वस्य प्रसङ्गः, अन्यत्रानङः, यद्यपि प्राग् वृद्धेर्विग्रहवाक्यएवानङीत्वयोः प्रसङ्गस्तथाप्यपवादविषयत्वात्प्रक्रियावाक्ये न क्रियेते, लौकिके तु वाक्ये भवत एव, इद्वृद्धौ विष्णोः प्रतिषेधः, आग्नावैष्णवमेकादशकपालं निर्वपेत् ।

"दिवसश्च पृथिव्याम्" ॥ दिवस इति प्रथमान्तं, मकारोच्चारणं किमर्थं, यावता प्रयोजनाभावात्सकारस्येत्सञ्ज्ञा न भविष्यति तत्राह ।

१ मुद्रितमूलपुस्तके पुत्रइत्यनुवर्ततइति पाठस्स पदमञ्जर्यसंमतः ।

'सकारोच्चारणमिति'। असति तस्मिन् पृथिवीशब्दे परतः सकारस्य रुत्वं विसर्जनीयः कुप्वोः ॅ्क ॅ्पौ चेत्येते विकाराः प्राप्नुवन्ति, सकारे सति सकारस्योच्चारणं भवति, तेन प्रयोगे ऽस्याविकृतस्यैव ग्रहणं भवति। 'कथमित्यादि'। द्वन्द्व इत्यनुवृत्तेर्वाक्ये नैव प्राप्नोतीति प्रश्नः। 'कर्तव्यो ऽत्र प्रयत्न इति'। छान्दसो ऽयं प्रयोगः। दृष्टानुविधिश्छन्दसीत्येषो ऽत्र यत्नः।

"उषासोषसः"॥ 'उषासानक्तेति'। छान्दसो ऽयं प्रयोगः। उषाश्च नक्तं चेति द्वन्द्वः, प्रथमाद्विवचनस्य डादेशः, अत्र पदकाले पदकाराः उषसानक्तेति ह्रस्वमधीयते॥

"स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु"॥ अत्र त्रयः पक्षाः सम्भवन्ति, स्त्रिया इति स्त्रीप्रत्ययग्रहणम्, अर्थग्रहणं, शब्दग्रहणं चेति, तत्र यदि स्त्रीग्रहणं स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति स्त्र्यधिकारविहिताष्टाबादयो गृह्यन्ते, यथा गोस्त्रियोरुपसर्जनस्येत्यत्र, तदा चायमर्थो भवति, भाषितपुंस्कात्परे टाबादिस्त्रीप्रत्यया यथा पुंसि न भवन्ति तथा उत्तरपदे न भवन्तीति, नन्वश्रुतक्रियापदेषु वाक्येषु भवतीत्यध्याहारो ऽन्यत्र दृष्टः, उच्यते। वतिनिर्देशे उपमाने सत्ता ऽसत्ता वा या प्रसिद्धा सोपमेये ऽतिदेश्या यथोशीनरवन्मद्रेषु यवाः सन्ति, न सन्तीति, ततः पुंसि स्त्रीप्रत्ययस्याभावात्स्त्रियामप्यभावोऽतिदिश्यत इति न भविष्यतीत्येव वाक्यशेषः परिकल्पनीयस्तदा त्वनूङित्यनेन सामानाधिकरण्यात्स्त्रिया इति प्रथमार्थे षष्ठी, पुंवदिति सप्तमीसमर्थाद्वतिः, तत्र च प्रागेव समासाद्विग्रहवाक्य एव स्त्रीप्रत्ययस्य कृतत्वाच्च तस्योत्तरपदे परतो न क्रोडादिवद्वच इतिवत् प्रागभावः शक्यः प्रतिपादयितुमिति लुक् तद्धितलुकीत्यादिवत्कृतस्य निवृत्तिरेव प्रतिपाद्या, विग्रहवाक्य एव कृताः स्त्रीप्रत्यया उत्तरपदे परतो निवर्तन्ते लुप्यन्त इत्यर्थः। यदा तु पुंवत् स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदार्थग्रहणं भवति स्त्रियाः स्त्र्यर्थस्य पुंस इव पुमर्थस्येव कार्यं भवतीत्यर्थः, तदा च षष्ठीसमर्थाद्वतिः। यदा तु

स्त्र्यर्थवाची शब्दः स्त्रीशब्देनोच्यते तदा शब्दग्रहणं, स्त्रीयाः स्त्रीलिङ्गस्य शब्दस्य पुंवद्रूपं भवतीति रूपातिदेशः, वृत्तिविषये पुंशब्दसम्बन्धिनः कार्यस्यातिदेष्टव्यस्याभावात्, तत्र च प्रत्यासत्तेः पुंभावभाजः स्त्रीशब्दस्य प्रयोगान्तरे पुमांसमाचक्षाणस्य यद्रूपं तदेवातिदिश्यते न यस्य कस्य चित्, अनूङिति षष्ठ्यर्थे प्रथमा, तत्रार्थग्रहणे स्त्रीशब्दो मुख्यः, अर्थस्य तूत्तरपदेन पौर्वापर्यमनूङ्स्त्वं च स्वतोऽनुपपन्नमिति शब्दद्वारकमाश्रयणीयम्, इतरयोस्तु पक्षयोः स्त्रीशब्दो गौणः, पौर्वापर्यादिकं तु समञ्जसमिति न प्रमाणतः पक्षविशेषपरिग्रहः सम्भवतीति निर्दोषतः पक्षः परिग्राह्यः, तत्राद्ये पक्षे एतभार्य इत्येतशब्दाद्वर्णादनुदात्तादिति ङीपि तकारस्य च नकारे एकदेशविकृतस्यानन्यत्वादेतशब्दाद्भाषितपुंस्कात्पर ईकार इति तन्निवृत्तावप्यर्थस्य स्त्रीत्वमनिवृत्तमिति नकारः श्रूयेत, न च सन्नियोगशिष्टत्वादीकारनिवृत्तौ नकारस्य निवृत्तिः, उत्तरपदनिमित्तायाः स्त्रीप्रत्ययनिवृत्तेर्नकारनिवृत्त्याख्ये पूर्वविधौ स्थानिवद्भावे सत्यन्यतराभावस्यासिद्धेः, न च नकारस्यापि अधिकारविहितत्वादीकारवत्पुंवद्भावेनैव निवृत्तिः, तस्य भाषितपुंस्कात्परत्वाभावात्, अप्रत्ययत्वेनोङ्सादृश्याभावाच्च, तथा पट्वी भार्यास्य पटुभार्य इति निवृत्तस्यापि स्त्रीप्रत्ययस्य स्थानिवद्भावाद्यणादेशः स्यात्, अथ तूत्तरपदे परतोऽनूङ् स्त्रीप्रत्ययो भाषितपुंस्काच्च भवतीति न क्रोडादिबह्वच इतिवत् प्रागभाव एवात्र विधेयः, तत्सामर्थ्याच्च विग्रहवाक्य एव प्राप्तोन्तरङ्गोपि स्त्रीप्रत्ययो न क्रियते इत्युच्येत तदैतद्दोषाभावेपि लुगलुगस्त्रीविषयद्विस्त्रीप्रत्ययेषु दोषः । लुक्, वतण्डस्यापत्यं स्त्री वतण्डाच्च लुक् स्त्रियां, शार्ङ्गरवादिपाठान्ङीन्, वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिकेति पुंवत् कर्मधारयेति ईकारस्य निवृत्तावपि अर्थगतस्य स्त्रीत्वस्यानिवृत्तत्वाल्लुक् स्त्रियामिति यञो लुक् प्राप्नोति । स्यादेतत् । स्त्री ई स्त्रीति ईकारप्रश्लेषेण स्त्रियां य ईकारस्तत्र परतो लोपः, अत्र तु पुंवद्भावेनेकारस्यानुत्पन्नत्वाल्लुक् न भविष्यतीति, तच्च, इतरेतराश्रयप्रसङ्गात्, कथं, शार्ङ्गरवादिषु वतण्डशब्दः कृतयञ्लुक् पठ्यते,

ततश्चाकृते लुकि ईकारो नास्ति, अकृते चेकारे लुको ऽप्रसङ्गः । अलुक्, गर्ग स्यापत्यं स्त्रियः, गर्गादिभ्यो यञ्, यञश्चेति ङीप्, गार्ग्यः स्त्रियः, गार्ग्यश्च ता वृन्दारिकाश्च गर्गवृन्दारिका इति ङीपि निवृत्ते ऽपि स्त्रीत्वस्यानिवृत्तत्वा-द्यञञोश्च स्त्रियामिति लुङ् प्राप्नोति, वाक्यवदलुगेव स्यात्, अस्त्रीवि-षयः, कुञ्जस्यापत्यं स्त्री गोत्रे कुञ्जादिभ्यश्च्फञ्, गोत्रं चरणैः सहेति जातित्वान् ङीष्, कौञ्जायनी चासौ वृन्दारिका च कौञ्जायनवृन्दारिका, ङीषि निवृत्तेपि स्त्रीत्वस्यानिवृत्तेर्व्रातच्फञोरस्त्रियामित्यस्त्रीविषयो न स्यात्, द्विस्त्रीप्रत्ययः, गर्गस्यापत्यं स्त्री गर्गादिभ्यो यञ्, प्राचां ष्फ त-द्धितः, षिद्गौरादिभ्यश्चेति ङीष्, गार्ग्यायणी चासौ वृन्दारिका च गार्ग्यवृन्दारिके-त्यादौ यत्र द्वौ स्त्रीप्रत्ययौ तत्र यो भाषितपुंस्कात्परः ष्फो नासावुत्तरपदे, ङीषा व्यवधानात् यश्चोत्तरपदे ङीष् नासौ भाषितपुंस्कात्परः, ष्फेण व्य-वधानात्, तस्य च स्त्रियामेव विहितत्वात् इति पुंवद्भाव एव न स्यात्, तथा इडविडोपत्यं स्त्री जनपदशब्दात्क्षत्रियादञ्, दरदोपत्यं स्त्री द्व्यञ्-मगधेत्यण्, तयोरतश्चेति लुक्, इडविड्दरत्स चासौ वृन्दारिका च ऐडविडवृन्दारिकात्र पुंवद्भावो न स्यात् अधिकारविहितस्य कस्य चित्प्रत्ययस्याभावात्, द्वितीये तु पक्षे ऽर्थस्य पुमर्थत्वेऽतिदिष्टे तद्वाची शब्दः प्रवर्त्तनइति· नैते दोषाः किं तु ख्यित्यनव्ययस्येति ह्रस्वत्वस्यास्य पुंवद्भावस्य विप्रतिषेधो नोपपद्यते भिन्नविषयत्वात्, अचो ह्रस्वत्वमर्थस्य पुंवद्भावः, ततः कालिंमन्येत्यत्र विप्रतिषेधे परमिति ह्रस्वत्वमिष्टं तन्न प्राप्नोति, शब्दपक्षे तु द्वयोरप्येकविषयत्वाद्विप्रतिषेधोस्ति, पुंवद्भावस्याव-काशः, यत्र खिदन्तं नास्ति दर्शनीयभार्यः, ह्रस्वत्वस्यावकाशः पुंवद्भावो नास्ति, कालिंमन्यः पुमानिति, कालिंमन्या स्त्रीत्यत्रोभयप्रसङ्गे परत्वाद् ह्रस्वत्वं भवति, न च कृतेपि ह्रस्वत्वे पुनः प्रसङ्गविज्ञानात्पुंवद्भावप्रसङ्गः, सकृद्गतिन्यायस्याश्रयणात्, न चार्थपक्षेप्यमत्यप्येकविषयत्वेऽसम्भवाद्विप्र-तिषेधः, असम्भवादित्यस्यैवासिद्धेः, यद्यपि हि पुंवद्भावे सति स्त्रीप्रत्य-यस्य निवृत्तौ दीर्घान्तत्वाभावाद्ध्रस्वस्याप्रवृत्तिः, तथापि ह्रस्वे प्रवृत्तेप्य-र्थस्यानिवृत्तत्वात्पुंवद्भावः प्राप्नोत्येव, तदेवमाद्ययोर्दुष्टत्वात्तृतीयं पक्ष-

माश्रित्याह। 'भाषितःपुमान्येनेत्यादि'। भाषितःपुमान्येन शब्देनेति शब्देन्यपदार्थे बहुव्रीहिराश्रीयते, ततः स्त्रियां पुंसि च वर्त्तमानस्य यस्य प्रवृत्तिनिमित्तं भिद्यते तस्यापि प्राप्नोति द्रोणीभार्यः पात्रीभार्य इति, द्रोणशब्दः परिमाणे पुल्लिङ्गः, गवादन्यां स्त्रीलिङ्गः, पात्रशब्दोद्धर्चादित्वात्परिमाणे पुंल्लिङ्गः भाजनविशेषे तु स्त्रीलिङ्गः, सर्वत्राप्यत्र प्रवृत्तिनिमित्तभेदेपि य एव प्रयोगान्तरे पुमांसमाख्यत् स एव संप्रति स्त्रियं वर्ततइति स्यादेव पुंवद्भाव इति मत्वा विशिनष्टि। 'समानायामाकृताविति'। भाष्यमन्योयमतो व्याचष्टे। 'एकस्मिन्प्रवृत्तिनिमित्तइति'। स भाषितपुंस्कः शब्दः, अयन्तावदर्थो विवक्षित इत्यर्थः। यथा पुनरयमर्थः सूत्राक्षरैरेव लभ्यते तथा पृच्छति। 'तदेवमित्यादि'। तदेतदर्थरूपम् एवं प्रकारं कथं भवतीत्यर्थः। प्रवृत्तिनिमित्तलक्षणेन्यपदार्थे संप्तम्यर्थे बहुव्रीहिरित्युत्तरम्। एतदुक्तं भवति, यस्मिन्प्रवृत्तिनिमित्ते पुमान् भाषितः पुमांसमाचक्षाणस्य यत्प्रवृत्तिनिमित्तं तेन युक्तं स्त्र्यर्थमाचक्षाणो भाषितपुंस्क इति, नन्वेवमपि द्रोणीभार्य इत्यादौ दोषः स्यादेव, कथं, यस्यां गवादन्यां द्रोणीशब्दो वर्तते सोपि यदा अर्थ इत्युच्यते तदा भाषितपुंस्केन प्रवृत्तिनिमित्तेन युज्यते, तत्र चार्थं शब्दप्रवृत्तिनिमित्तमप्यर्थ्यमानत्वाद्गवादन्यां संनिहितमिति तत्र वर्त्तमानो द्रोणीशब्दः स्वयं तत्प्रवृत्तिनिमित्तमनभिदधानोपि वस्तुतस्तद्युक्तमर्थमाह। नैतदस्ति। एवं हि भाषितपुंस्कग्रहणमनर्थकं स्यात् सर्वत्र सुलभत्वात्, अतो यः शब्दो भाषितपुंस्केन प्रवृत्तिनिमित्तेन युक्तं स्वार्थं तेनैव रूपेणाह न रूपान्तरेण स भाषितपुंस्को गृह्यते, द्रोणीशब्दस्तु द्रोणीत्वजातियुक्तेन रूपेण गवादन्यां वर्त्तते नार्थ्यमानतया, एवमपि द्यौर्भार्या यस्य द्युभार्य इत्यत्र दिवुशब्दस्य स्त्रीलिङ्गस्य स्वर्ग इति पुंल्लिङ्गः प्राप्नोति, येनैव रूपेण स्वर्गशब्देनोच्यते तेनैव रूपेण दिवुशब्देनापीति कृत्वा, एवं तर्हि प्रत्यासत्तेर्यस्य पुंवद्भावो विधीयते तेनैव यत्र पुमान् भाषित इति विज्ञायते, आत्मनः प्रयोगान्तरे पुमांसमाचक्षाणस्य यत्प्रवृत्तिनिमित्तं तद्युक्तं स्वार्थं सम्प्रत्याचक्षाणस्य स्त्रीशब्दस्य पुंभाषणदशायां यद्रूपं तदेवात्रापि भव-

तीत्यर्थः । आतिदेशिकभेदाच्च पुंवदिति वतिनिर्देशः । अनूङिति पर्युदासे सति नञिवयुक्तन्यायेन ऊङ्सदृशस्य टाबादेर्ग्रहणादेडवि-डवृन्दारिकेत्यादौ स्त्रीप्रत्ययाभावाच्च स्यादिति प्रसज्यप्रतिषेधं दर्श-यति । 'ऊङोभावोनूङिति' । 'भाषितपुंस्कादनूङिति' । यद्ययम-समासः स्यादनूङिति तदा प्रथमास्यात् लुप्तषष्ठीकं वा, षष्ठीपक्षे ऽयमर्थो भवति भाषितपुंस्कात्परस्य स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति ऊङन्तस्य तु नेति, ततश्च पुंवद्भावभाजः स्त्रीशब्दस्य भाषितपुंस्कत्वं विशेषणं नस्यात्, तत्र को दोषः, इह च प्रसज्येत अङ्गारका नाम शकुनयः तेषां कालिकाः स्त्रियः तत एताः कालिकावृन्दारिका इति, एतच्छब्दाद्भाषितपुंस्कात्परः कालिकाशब्द इति तस्य स्त्रीविषयस्याप्यङ्गारकशब्दता स्यात्, शक्यन्ते हि ताः साहचर्यादङ्गारकशब्देनाभिधातुं तथाश्वस्य वडवा पुरुषस्य योषित् हंसस्य वरटा कच्छपस्य डुलीत्यादावपि प्रसङ्गः, दर्शनीयभार्य इत्यादौ च न स्यात्, नह्यत्र दर्शनीयशब्दो भाषितपुंस्कात्परः, प्रथमायां तु भाषितपुंस्कादित्यनेन सामानाधिकरण्यात्स्त्रिया इति पञ्च-मी, षष्ठ्यां कस्य चिदर्थस्यासम्भवात्, ततश्च भाषितपुंस्कात् स्त्रीलिङ्गात्पर ऊङोऽन्यः प्रत्ययः पुंवदित्यर्थो भवति तत्र स एव दोषो यः प्रथमपक्षे । तदेवं समासे दोषप्रसङ्गाद्व्यधिकरणपदो बहुव्रीहिराश्रयणीय इत्या-ह । 'भाषितपुंस्कादनूङित्यादि' । 'अलुक्च निपातनात्पञ्चम्या इति'। अलौकिकत्वादस्य निपातनादित्यपरिहारः, लुगपि तर्हि न प्राप्नोति अलौकिकत्वादेवेति यत्किंचिदेतत् । अनूङिति षष्ठ्यर्थे प्रथमा, तदयमर्थोवस्थितः, भाषितपुंस्कात्स्वस्मादूङोभावो यस्मिन्, कोर्थः यस्मिन् स्त्रीशब्दे भाषिपुंस्कात्पर उङ् कृत इत्यर्थ इति, अपर आह भाषितपुंस्कादिति षष्ठ्यर्थे पञ्चमी, सर्वमन्यत्पूर्ववत्, भाषितपुंस्कस्य स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवति ऊङन्तस्य तु नेति, नन्वेवमाश्रीय-माणे यत्र भाषितपुंस्कस्यैवानन्तरमुत्तरपदं तत्रैव स्यात् दर्शनीयभार्य इत्यादौ, अत्र हि भाषितपुंस्कस्य दर्शनीयशब्दस्य टापश्चैकादेशः पूर्व प्रत्यन्तवद्भावाद्भाषितपुंस्कग्रहणेन गृह्यते, गार्गी चासौ वृन्दारिका च

गार्ग्यवृन्दारिकेत्यादौ न स्यात्, योऽत्र भाषितपुंस्को गार्ग्यशब्दो न तस्यानन्तरमुत्तरपदं, ङीपा व्यवधानात्, यस्य चानन्तरं गार्गीशब्दस्य नासौ भाषितपुंस्कः, स्यादेतदेवं, यदि प्रयोगान्तरे भाषितपुंस्कस्य सम्प्रति स्त्रियां वर्त्तमानस्य पुंवद्भाव उच्येत, स्त्रियां वर्त्तमानस्य तदैव भाषितपुंस्कस्य पुंवद्भावं ब्रूमः, सम्भवति च स्त्रियां वर्त्तमानस्य तदैव भाषितपुंस्कत्वं भाषितपुंस्केन प्रवृत्तिनिमित्तेन युक्तां स्त्रियमाहेति कृत्वा, एवं च स्त्रीशब्दस्यैवानन्तरउत्तरपदे पुंवद्भाव इति सर्वत्र सिद्ध्यति । 'ग्रामणि दृष्टिरस्येति' । अत्र ग्रामणिशब्दो ऽपरित्यक्तस्वलिङ्ग एव दृष्टिशब्देन समानाधिकरणो भवति, अत्र यदि पुंवद्भावः स्याच्चपुंसकहृस्वत्वं निवर्त्तेत । 'कथमित्यादि' । अनवयवभूतगर्भसंबन्धः स्त्रियां गर्भिणीशब्दस्य प्रवृत्तिनिमित्तं, पुंसि त्ववयवभूतगर्भसंबन्धः, प्रसूतप्रजातशब्दयोरपि स्त्रियां गर्भमोचननिमित्तं, पुंसि तु गर्भाधानम् । 'कर्त्तव्योऽत्र यत्न इति' । अन्तर्वर्त्तिवस्तुसंबन्धमात्रं गर्भिणीशब्दस्य प्रवृत्तिनिमित्तमवयवत्वानवयवत्वेन तन्त्रम्, एवं प्रसूतप्रजातशब्दयोरपि आधानविमोचनत्यागेनापत्यसंबन्धमात्रं निमित्तमाश्रीयतइत्ययमत्र यत्नः । 'ब्रह्मबन्धूभार्य इति' । ऊङो निवृत्तिर्न भवति । न कोपधाया इत्यत्रैवोङ्ग्रहणे कर्त्तव्ये पृथक्प्रतिषेधादस्य वैलक्षण्यं ज्ञायते । तेन ब्रह्मबन्धूवृन्दारिकेति पुंवत्कर्मधारयेति निषेधविषये विधीयमानो ऽपि पुंवद्भावो न भवति, एष चार्थो ऽनूङित्यस्य तत्रानुवृत्तेर्लभ्यते, अपूरणीप्रियादिष्वित्ययं तु प्रतिषेधस्तत्रैव कर्त्तव्यः, नह्यस्य पुंवत्कर्मधारयेत्यत्रानुवृत्तिरिष्यते, महानवमी महाद्वादशी अक्षयतृतीया कृष्णचतुर्दशीत्यादौ पूरण्यामपि कर्मधारये पुंवद्भावस्येष्टत्वात् । 'प्रधानपूरणीग्रहणं कर्त्तव्यमिति' । प्रधानं या पूरणी तस्यामेव प्रतिषेधो भवतीति वक्तव्यमित्यर्थः । एतच्च प्रधाने कार्यसम्प्रत्ययाल्लभ्यते । 'कल्याणपञ्चमीकः पक्ष इति' । अत्र तिरोहितावयवभेदः पक्षो ऽन्यपदार्थ इति तत्र पूरण्या अननुप्रवेशान्नास्ति प्राधान्यं, कल्याणपञ्चमा रात्रय इत्यादावुद्भूतावयवभेदा रात्रयो ऽन्यपदार्थस्तत्र यथा प्रथमाद्या रात्रयः समासाभिधेया एवं पञ्चम्यपीति

पूरण्याः प्राधान्यम्, अथ दृढभक्तिः शोभनभक्तिरित्यत्र कथं पुंवद्भावः, यावता प्रियादिषु भक्तिशब्दः पठ्यते ऽत आह । 'दृढभक्तिरित्येव-मादिष्विति' । स्त्रीवाचित्वं पूर्वपदस्याविवक्षितमतो दृढभक्तिरित्येव-मादिसिद्धिरित्येवं चोद्यसमाधानं कर्त्तव्यमित्यर्थः । दृढशब्दोऽत्र दार्ढ्य-निवृत्तिपरस्तत्र दार्ढ्यनिवृत्तिपरायां चोदनायां स्त्रीलिङ्गोपादानमकिञ्चि-त्करमिति भावः । न चैवं सूत्रस्यानाद'रणीयत्वं, लिङ्गविशेषविवक्षायां दर्शनीयभार्य इत्याद्यनिष्टप्रसङ्गात् । अथेह कथं भवितव्यं पट्वीमृद्व्यौ भार्ये अस्येति, पट्वीमृदुभार्य इति भवितव्यं, यस्योत्तरपदमनन्तरं तस्य पुंवद्भावो नेतरस्येति ।

"तसिलादिष्वाकृत्वसुचः" ॥ अनुत्तरपदार्थमारम्भः । 'ततस्तत्रे-ति'। प्राग्दिशो विभक्तिरिति विभक्तित्वात्त्यदाद्यत्वे टाप्, अनेन पुंवद्भावः, इह के चित्तसिलादिषु पठ्यन्ते येषु पुंवद्भावो नेष्यते, के चिच्चान्यत्र पठ्यन्ते येषु पुंवद्भाव इष्यते, तस्मादाह । 'परिगणनमिति' । त्रलतसोरु-दाहृतं, तरप्तमपोर्दर्शनीयतरा दर्शनीयतमा, चरट्जातीयरोः, पटुचरी, पटुजातीया, कल्पदेशीयरोः, दर्शनीयकल्पा दर्शनीयदेशीया, देश्यप्रत्य-यस्य नास्ति पाठः । रूपप्पाशपोः, दर्शनीयरूपा, पटुपाशा, थम्थालोः, इदमस्थमुः, किमश्चेति विहितस्थमुः, प्रकारवचने थाल्, अनया प्रकृत्या इत्थं, कया प्रकृत्या कथं, तया तथा, दार्हिलोः, तस्यां वेलायां तदा तर्हि, तिल्थ्यनोः, वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि, वृकी प्रशस्ता वृकतिः, तातिलो नास्ति पाठः, अजाविभ्यां थ्यन्, अजाभ्यां हिता अजथ्या, अत्र घरूपकल्पेषु ङ्यन्तस्य परत्वात् ह्रस्वः, पट्वितरा, पट्वि-तमा, पट्विकल्पा, पट्विरूपा । 'शसि बह्वल्पार्थस्येति' । बह्वल्पार्थादि-त्ययमपि शस् तसिलादिषु द्रष्टव्य इत्यर्थः । 'हास्तिकमिति' । यद्यत्र पुंवद्भावो न स्यात् तदा हस्तिनीशब्दस्य यस्येति लोपे कृते तस्य स्थानिवत्त्वादसिद्धवदत्राभादित्यसिद्धत्वाच्च नस्तद्धित इति टिलोपो न स्यादिति पुंवद्भावो विधीयते, ठक्छसोश्चेत्यनेन पुंवद्भावो न लभ्यते

१ रमणीयत्वमिति ४ पु॰ पा॰ ।

ङसा सहचरितस्य ठको ग्रहणात् । 'श्यैनेयो रौहिणेय इति'। श्येतरोहिताभ्यां वर्णादनुदात्तादिति ङीन्नकारौ, अत्र पुंवद्भावे सति श्यैतेयो रौहितेय इति स्यात् । 'कथमित्यादि'। यदि ढे पुंवद्भावः प्रतिषिध्यते ततो ऽग्नेः स्त्री वृषाकप्यग्निकुसितकुसिदानामुदात्त इति अग्निशब्दान् ङीपि कृते ऐकारे आयादेशे च अग्नायी, सा देवतास्य अग्नेर्ढगिति, सर्वत्राग्निकलिभ्यां ढगिति ढकि पुंवद्भावनिषेधादाग्नायेय इति प्राप्नोति, तत्कथमाग्नेय इति । 'कर्तव्योत्र यत्न इति'। के चिदाहुः । अढइत्यपनीयानपत्यइति वक्तव्यम् । इदमपि सिद्धं भवति, कुण्डिन्या अपत्यमिति गर्गादिभ्यो यञ्, तत्र पुंवद्भावाभावाद्यस्येति लोपे तस्य स्थानिवद्भावावस्तद्धितइत्यसति टिलोपे कौण्डिन्य इति भवति, पुंवद्भावे तु सति कौण्ड्य इति प्राप्नोति, तथा सपत्न्या अपत्यं शिवादित्वादण्, तत्र पुंवद्भावाभावात् सापत्न इति भवति, पुंवद्भावे तु सति नित्यं सपत्न्यादिष्विति विहितयोर्ङीन्नकारयोर्निवृत्तयोः सापत इति स्यात् तदेवमनपत्यइतिवचनाद् ढेप्यनपत्ये पुंवद्भवति स आग्नेय इति, अपत्येतु न भवति श्यैनेयो रौहिणेय इति, यद्यनपत्यइत्युच्यते गर्गस्यापत्यं स्त्री गार्ग्यायणी तस्या अपत्यं गोत्रस्त्रियाः कुत्सने ण चेति णप्रत्यये कृते पुंवद्भावो न प्राप्नोति ततश्च गार्ग्यायणो जाल्म इति स्यात्, गार्ग्यो जाल्म इति चेष्यते, तस्मादनपत्य इति न शक्यं वक्तुं, कथं कौण्डिन्यः, आगस्त्यकौण्डिन्ययोरिति निपातनात् सिद्धं, कथं सापत्नः, शत्रुपर्यायः सपत्नशब्दोस्ति व्यन्सपत्नइतिलिङ्गात्, स शार्ङ्गरवादिषु पठितव्यः, ततः शिवाद्यण्, तस्मात् स्त्रीभ्यो ढगित्यत्रैव पुंवद्भावप्रतिषेध इति, व्याख्यानमेवात्र शरणम् । 'ठक्छसोरिति'। छसः सित्त्वात् सिति चेति पदसञ्ज्ञाविधानाद्भत्वाभावाद् वचनं, ठग्रहणं किमर्थम् । इकादेशे कृते भस्याढे इत्येव सिद्धे ठावस्थायामेव यथा स्यात्, किमेवं सति भवति, इसुसुक्तान्तात्क इति कादेशः सिद्धो भवति, अन्यथा यदीकादेशे कृते पुंवद्भावः स्यात्ततो यथा माथितिक इत्यत्रेकादेशे कृते कादेशो न भवति एवं भावत्क इत्यत्रापि न स्यात् ॥

"क्यङ्मानिनोश्च" ॥ अयमस्या इयमस्या इति वैयधिकरण्य-प्रदर्शनार्थमिदमुक्तम् । 'पूर्वेणैव सिद्धमिति' । एकस्या एव कर्मत्वात्कर्तृत्वाच्च सामानाधिकरण्यस्याभावात् ॥

"न कोपधायाः" ॥ मद्रेषु भवा मद्रिका, वृजिका, मद्रवृज्योः कन् । 'वैलेपिकमिति' । अण्महिष्यादिभ्यः, अत्र भस्याढे तद्धितइति ञ्चौपसंख्यानिकी प्राप्तिः प्रतिषिद्ध्यते, पूर्वेषु तु सौत्री । 'तद्धितवुग्रहणमिति' । तद्धितस्य यः ककारः वोश्च यः ककारः तस्येति वक्तव्यमित्यर्थः । 'पाकभार्य इति' । पाकशब्दः प्रथमवयोवाची, ततो ङीबपवादो ऽजादित्वाट्टाप् ॥

"सञ्ज्ञापूरण्योश्च" ॥ सञ्ज्ञाशब्दा ये दानादिक्रियानिमित्ताः पुंसि च स्त्रियां च लोके प्रयुज्यन्ते तदर्थः सञ्ज्ञाप्रतिषेध, ये त्वेकद्रव्यनिमित्ता देशनिमित्ता वा सञ्ज्ञाशब्दास्तत्राभाषितपुंस्कत्वादेवाप्रसङ्गः । 'दत्तायते गुप्तायतइति' । अत्र यद्यपि सत्यसति वा प्रतिषेधे विशेषाभावस्तथापि वस्तुतः प्रतिषेधस्य विषय इत्येतावता ऽस्योपन्यासः ॥

"वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" ॥ वृद्धेर्निमित्तं णकारः, इह निमित्तग्रहणं न कर्त्तव्यं, वृद्धेस्तद्धितस्येत्येव वक्तव्यं, वृद्धेर्यस्तद्धितः, कश्च वृद्धेस्तद्धितः, यस्तस्या निमित्तमेवं सिद्धे निमित्तग्रहणाद्व्यधिकरणपदो बहुव्रीहिः, अपर आह, षष्ठीसमासादर्शआद्यच्प्रत्यय इति, यद्वा निमित्तग्रहणाद्बहुवचनान्तस्य समासः, वृद्धीनां तिसृणामपि निमित्तं वृद्धिनिमित्तमिति, वतुस्त्वाकारस्यैव निमित्तम् । इह तु सर्वस्मै हिता सार्वा सा भार्या यस्य सा सार्वभार्य इति यद्यपि सर्वपुरुषाभ्यामिति णप्रत्यये आकार एव वृद्धिर्भवति तथापि नासौ स्वरूपेण वृद्धेर्निमित्तं किं तर्हि णित्त्वेन, तच्च तिसृणामपि निमित्तं, मध्ये भवा मध्यमा, मध्यान्मः, काण्डं लुनातीति काण्डलावी, कर्मण्यण्, टिड्ढाणञिति ङीप्, यत्तदेतेभ्यः परिमाणे वतुप्, आ सर्वनाम्नः, उगितश्चेति ङीप्, तावती, तत्पुरुषाश्रयणे ऽस्यापि प्रतिषेधः स्यात्, बहुव्रीहौ तु णकारादेरभावान् न भवति ।

'काषायीति' । तेन रक्तं रागादित्यण् । 'लौहीति' । प्राणिरजतादिभ्योञ्, खदिरशब्दः पलाशादिः, ईषा रथावयवविशेषः ॥

"स्वाङ्गाच्चेतोऽमानिनि" ॥ अमानिनीति वार्त्तिके दर्शनात्सूत्रे प्रक्षिप्तं, स्वाङ्गाच्चोपसर्जनादिति ङीष्, दीर्घकेशी, सहनञ्विद्यमानपूर्वाच्चेति प्रतिषेधादकेशा ॥

"जातेश्च" ॥ कठबह्वृचयोर्गोत्रं च चरणैः सहेति जातित्वान् ङीष् । 'अर्थमित्यादि' । व्याख्यानमत्र शरणम् ॥

"पुंवत् कर्मधारयजातीयदेशीयेषु" ॥ ननु कर्मधारये स्त्रियाः पुंवदित्यादिना सिद्धः पुंवद्भावः, जातीयदेशीययोरपि तसिलादिष्विति, किमर्थोऽयमारम्भ इत्यत आह । 'प्रतिषिद्धार्थोऽयमिति' । प्रतिषिद्धोऽपि पुंवद्भावो यथा स्यादित्येवमर्थमित्यर्थः । प्रतिषेधार्थोऽयमिति पाठे प्रतिषेधविषयः प्रतिषेधशब्देनोक्तः । निवृत्तिवचनो वार्थशब्दः । 'कुक्कुट्यादीनामित्यादि' । अस्त्यर्थमसमानाधिकरणार्थे वचनम् । 'न वेत्यादि' । उपसंख्यानं प्रत्याचष्टे, एवं न वा वक्तव्यं, किं कारणं, स्त्रीपूर्वपदस्याविवक्षितत्वात्, नात्र स्त्रीलिङ्गं पूर्वपदं विवक्षितम्, उभयोरण्डमुभयोः पदं, तत्र प्रकरणादिना स्त्रीत्वावसायः, आरभ्यमाणेपि पुंवद्भावे समाश्रयणीयः, अनारम्भेपि तथा भविष्यति, यदि तर्हि स्त्रीलिङ्गेन समासः क्रियते तदा स्त्रीप्रत्ययस्य श्रवणं प्राप्नोति, एवं तह्यनभिधानात् स्त्रीलिङ्गेन समासो न भविष्यति, यद्यपि तावदत्रैतच्छक्यते वक्तुम्, इह तु कथं मृग्याः क्षीरं मृगक्षीरमिति, नहि पुंसः क्षीरेण सम्बन्धोऽस्ति, अत्रापि जात्यन्तरनिवृत्तिपरत्वाच्चोदनायाः स्त्रीत्वमकिञ्चित्करत्वादविवक्षितं, यत्र तु लिङ्गविशेष उपकारकस्तत्रासौ विवक्षित एव यथाऽजामूत्रेण पर्युक्षितं दातव्यमिति । 'पूर्वपदार्थोऽत्र जातिरिति'। कुक्कुटाण्डादौ पूर्वपदार्थो जातिः, स च सामान्येन स्त्रीत्वादिविशेषरहितेन रूपेण विवक्षित इत्यर्थः । 'सिद्धादिष्विति' । तत्र खिति हिप्रतिषेधः स्त्रियाः पुंवदित्यत्रैवोदाहृतः, घादिषु नद्या ह्रस्वो भवतीत्यस्यावकाशः, नर्त्तकितरा नर्त्तकितमा नर्त्तकिरूपा, नर्त्तकिकल्पा, । यत्र पुंव-

द्भावः प्रतिषिध्यते न कोपधाया इति । 'तसिलादिष्विति' । पुंवद्भावस्यावकाशः यद् ङ्यन्तं न भवति दर्शनीयतरेत्यादि । पट्वितरेत्यादावुभयप्रसङ्गे विप्रतिषेधः, केणो ह्रस्वो भवतीत्यस्यावकाशः नर्तकिका, पुंवद्भावस्यावकाशो दरदो पत्यं स्त्री, द्व्यञ् मगधेत्यण्, तस्यातश्चेति लुक्, ततः प्रागिवात्कः, तसिलादिष्विति पुंवद्भावाद्दारदशब्दः, प्रत्ययस्थादितीत्वं दारदिका। ननु च परिगणितास्तसिलादयः, न च कप्रत्ययस्तेषु समस्ति, एवं तर्हि विप्रतिषेधादेव कप्रत्ययेऽपि तत्राभ्युपगम्यतइति अनुमीयते, पट्विका मृद्विकेत्यादावुभयप्रसङ्गे परत्वाद् ह्रस्वः, सर्वत्र चात्र सकृदित्याश्रयणाद् पुंवद्भावाभावः । अनूङिति यदुक्तं तस्य प्रयोजनं दर्शयति । 'इहेत्यादि' । 'तद्राजप्रत्ययस्येति' । ये द्व्यचस्तेषु द्व्यञ्मगधेत्यण्, शेषेषु जनपदशब्दादित्यञ्, पृथ इति थकारान्तः ॥

"घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्यो ऽनेकाचो ह्रस्वः" ॥ चेलादीनां वृत्तिविषये कुत्सनवचनत्वात्तैः कुत्सितानि कुत्सनैरिति समासः, ङ्य इत्यत्र ङ्याश्छन्दसि बहुलमित्यादिवदागमः प्राप्तः सौत्रत्वाच्च कृतः । 'दत्तातरेति' । ननु च स्वाङ्गाच्चेत इत्यत ईत इत्यनुवर्तिष्यते, एवमपि ग्रामणीतरः, अत्रापि प्राप्नोति, स्त्रियामिति वर्त्तते, एव मपि ग्रामणीतरा अत्रापि प्राप्नोति, स्त्रियामिति वर्त्तते, स्त्रिया ईतः स्त्रीवाचिन ईकारस्येत्यर्थः, ग्रामणीशब्दे त्वनर्थक ईकारः, शेषप्रकृत्यर्थं तर्हि ङीब्ग्रहणं, क्रियमाणे हि ङीब्ग्रहणे ङ्योनेकाच इति श्रुतत्वात्तदपेक्षः शेषो लभ्यते, अङीब् या नदी ङ्यन्तं च यदेकाजिति, अन्तरेणापि ङीब्ग्रहणं प्रक्लृप्तः शेषः । कथमीत इति वर्त्तते, अनीच्च या, नदी ईदन्तं च यदेकाजिति तदेन्ङीग्रहणं तिष्ठतु तावत् ॥

"नद्याः शेषस्यान्यतरस्याम्" ॥ भाषितपुंस्कादनूङिति निवृत्तम् । 'कश्च शेष इति' । यदि च यत्र पूर्वसूत्रेण ह्रस्वो न विवक्षितः स शेषः, ततो यदभाषितपुंस्कं यच्च भिक्षायामाकृतौ भाषितपुंस्कमनेकाज्ङ्यन्तं तस्यापि ह्रस्वत्वं प्रसज्यते । 'आमलकीतरा द्रोणीतरेति' । अत्रापि पूर्वेण विहितत्वादिति प्रश्नः । पूर्वसूत्रे यस्साक्षात्कृतं तदपेक्षः शेष इत्युत्तरं, शेष-

ग्रहणं शक्यमकर्त्तुं, कथं, नद्या अन्यतरस्यां ह्रस्व इत्युत्सर्गः, तस्यानेकाच ईतो नित्यह्रस्वत्वमपवादः, तस्मिन्नित्ये प्राप्ते उगितश्चेति विभाषा ऽऽर-भ्यते, यद्येवं नद्या अन्यतरस्यामित्यत्र भाषितपुंस्कादित्यनुवर्त्स्यते वा न वा, यद्यनुवर्त्स्यते स्त्रितराःस्त्रितमात्र न प्राप्नोति, अथ नानु वर्त्स्यते द्रोणीतरा ऽत्रापि प्राप्नोति, तस्मात्कर्त्तव्यं शेषग्रहणं, तस्मिंश्च क्रियमाणे श्रुतापेक्षं शेषत्वं यथा विज्ञायेतेति पूर्वसूत्रे ङीग्रहणमपि कर्त्तव्यम् । 'लक्ष्मीतरेति'। अवितॄस्तन्त्रिभ्य ईः, लक्षेर्मुट् चेतीकारप्रत्ययान्तो लक्ष्मीशब्द इति कृदन्तो भवति, स तर्हि प्रतिषेधो वक्तव्यः, न वक्तव्यः, कथं, स्त्रिया इत्यनुवर्त्तते तेन नदीं विशेषयिष्यामः, स्त्रिया नद्या इति, न च कृन्नदी स्त्रीवाचिनी, नदीसंज्ञा ऽपि तर्हि न प्राप्नोति, उक्तोत्र परिहारो नदीसंज्ञाप्रकरणे ॥

"उगितश्च" ॥ 'पुंवद्भावो ऽप्यत्र पक्षे वक्तव्य इति'। भाष्ये नैतद् दृष्टं, प्रकर्षयोगात्प्रागित्यादिना वक्तव्यं प्रत्याचष्टे, विवक्षा हि शब्दव्यु-त्पत्तेः प्रधानं कारणं, न चेह प्रकर्षयोगात्प्राक् स्त्रीत्वं विवक्ष्यते, तस्मा-दस्त्रीप्रत्ययान्तादेवातिशायनप्रत्ययः क्रियते, तदन्तस्य तु स्त्रीत्वविव-क्षायां स्त्रीप्रत्यय इति मन्यते ॥

"आन्महतः समानाधिकरणजातीययोः" ॥ 'महतः पुत्रो महत्पुत्र इति'। ननु चात्रान्महत इत्येतावानेव योगः कर्त्तव्यः, ततो जातीये चेति द्वितीयः, तत्र पूर्वस्मिन् योगे उत्तरपदेन समासः संनिधाप्यते, स च लक्षणप्रतिपदोक्तपरिभाषया सन्महदित्यादिना यो विहितः स एव ग्रहीष्यते, स च समानाधिकरण एवेति अनर्थकं समानाधिकरणग्रहणं तदेतदाशङ्कते तावत् । 'लक्षणोक्तत्वादिति' निराकरोति । 'बहुव्रीहा-वपीति' । 'तदर्थमिति' । बहुव्रीहावपि यथा स्यादित्येवमर्थमि-त्यर्थः । लक्षणप्रतिपदोक्तपरिभाषाया निवृत्त्यर्थमिति वा । इह अमहान् महान्सम्पन्नो महद्भूतश्चन्द्रमा इति, महच्छब्दो भूतशब्दश्चैकस्मिन्नर्थे चन्द्र-मसि वर्त्तते इति सामानाधिकरण्यादात्वं प्राप्नोति । स्यादेतत् । अभूत-तद्भावे च्विर्विधीयते, अभूततद्भावश्च कः, कारणस्य विकारात्मना ऽभूतस्य तदात्मना भावः, तत्र प्रकृतिः कर्त्री न विकृतिः, तथा

च सङ्गीभवन्ति ब्राह्मणाः पटीभवन्ति तन्तवः अत्वं त्वं संपद्यते त्वद्भवतीति प्रकृत्याश्रयेण बहुवचनप्रथमपुरुषौ दृश्येते न विकृत्याश्रयेणै-कवचनमध्यमपुरुषौ, ततश्च भूत इति क्तप्रत्ययो भवन् क्रियायाः कर्त्तर्यमह-त्युत्पन्नो न तु विकारे महति, ततः किं, अमहतो भूतेन सामानाधिक-रण्यं न तु महतः, नह्यवस्थावन एकत्वेप्यवस्थयोः सामानाधिकरण्यं सं भवति, नहि भवति बालश्चासौ स्थविरश्चेति, भवति तु बालश्चा-सौ देवदत्तश्चेति, अतो वैयधिकरण्यादात्वाभाव इति, -यद्येवममहतो महती सम्पन्ना ब्राह्मणी महद्भूता ब्राह्मणीति पुंवद्भावोपि न स्या-द्वैयधिकरण्यादेव, यथा प्रकृतेः कर्तृत्वं दृष्टं तथा विकृतेरपि दृश्यते, तथा च पस्पशायां भाष्यं सुवर्णपिण्डः खदिराङ्गारवर्णे कुण्डले भवति इति, तथा क्लृपि सम्पद्यमाने चतुर्थी वक्तव्येति सम्पद्यकर्त्तरि विधीयमाना चतुर्थी विकाराद्भवति मूत्राय कल्पते यवागूरिति न प्रकृतेः, तथा असङ्घो ब्राह्मणाः सङ्घो भवति अपटस्तन्तवः पटो भवतीति विकाराश्रयं वचनं दृश्यते, तत्र यदि विकृतेः कर्तृत्वमाश्रित्य सामानाधिकरण्याश्रयः पुंवद्भावो विधीयेत आत्वमपि स्यात्, अथ प्रकृतेः कर्तृत्वाद्वैयधिकरण्यादात्वं न स्यात् पुंवद्भावो पि न स्यात्, उच्यते, दर्शितं तावदिदं यथा च्विविषये द्वयो-रपि प्रकृतिविकृत्योः कर्तृत्वमिति, युक्तं चैतत्, यदि विकृतेः कर्तृत्वमा-श्रित्य प्रत्ययः, यदा चैकोर्थः प्रकृतिविकारात्मक आश्रीयते तदा परिणा-मव्यवहारः, उक्तं च

जहद्धर्मान्तरं पूर्वमुपादत्ते यदापरम् ।
तत्त्वादप्रच्युतो धर्मः परिणामस्स उच्यते ॥

इति, यदा त्वन्यतरव्यवस्था न विवक्ष्यते तदा च्वेरभावः तन्तवो भवन्ति पटो भवतीति, तत्र योयं पूर्वकं धर्मं जहदुत्तरं चोपाद-दत्संमूर्च्छितोर्थः सञ्जायमानः सम्पद्यकर्त्तेति चोच्यते तदभेदाच्च पूर्वोत्तरावस्थयोरपि कर्तृत्वमत एतदपि निरस्तम्, असत्या उत्तरावस्थाया उत्पत्तौ शशविषाणमप्युत्पद्येत सत्याश्च पूर्वावस्थाया उत्पत्तौ सर्वे एव पटादयः सर्वदोत्पद्यमाना एव भवेयुरिति, कथं निरस्तं, किं सदुत्पद्यते

किञ्चासत्, पूर्वोत्तरयोरवस्थयोरनुवर्त्तमानं वस्तु तस्माच्च भिन्नेन नाप्यभिन्नेन केन चिद्रूपेणोत्पद्यते यथा मृद्वस्तु घटरूपेण। यद्येवं पूर्वावस्थयैव किमपराद्धं, यत्सैव नोत्पद्यते, न किंचिदपराद्धम्, असती तु सा कथं कर्त्री स्यात्, विनष्टायां हि तस्यामुत्तरावस्थोत्पद्यते, यथा घटः पिण्डावस्थायाम्, अतो मृद्वस्त्वेव तेनतेन पिण्डादिरूपेण परिणमतइति युक्तम्, एवमामूलप्रकृतितः, सा तु प्रकृत्यन्तरनिरपेक्षैव तेनतेन पृथिव्यादिरूपेण परिणमतइति, तदेवं स्थितमेतत्संमूर्च्छितोर्थात्मा सम्पद्यकर्त्ता तदभेदाच्च पूर्वोत्तरावस्थयोरपि कर्तृत्वमिति। उक्तं च

पूर्वावस्थामविजहत्संस्पृशन् धर्ममुत्तरम्।
संमूर्च्छितइवार्थात्मा जायमानोऽभिधीयते॥

इति। तदेवं सति च्व्यर्थे वाक्ये क्वचित्प्रकृतेरेव कर्तृत्वम्, च्व्यन्तस्य गतित्वाद्गतीनां च क्रियाविशेषणत्वादन्यद्धि भवनम् अन्यद्धि सङ्घीभवनं तत्र केवले भवने सङ्घः कर्त्ता सङ्घीभवने तु ब्राह्मणः, यथा व्याकरणस्य सूत्रं करोतीति सूत्रं तद्विशेषणं, व्याकरणं सूत्रयतीत्यत्र विशिष्टकरोतेर्व्याकरणं कर्म तद्वदत्रापि। तत्र महद्भूतश्चन्द्रमा इति च्व्यन्तोयं महच्छब्दो भूतशब्दस्य प्रवृत्तिनिमित्ते भवने पर्यवस्यति, भूतशब्दस्तु महत्त्वेनासंस्पृष्टश्चन्द्रमः स्वरूपे वर्त्ततइति वैयधिकरण्यादात्वाभावः। महद्भूता ब्राह्मणीत्यत्र तु मृगक्षीरादिवत्स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धं, यत्र तु स्त्रीत्वं विवक्षितं न भवत्येव तत्र पुंवद्भावः, अगोमती गोमती सम्पन्ना गोमतीभूता ब्राह्मणीति। वृत्तिकारस्तु विकृतेः कर्तृत्वाश्रयेण सामानाधिकरण्य सत्यपि परिहारमाह। 'गौणत्वान्महदर्थस्येति'। गौणमुख्ययोर्हि मुख्ये संप्रत्ययो भवति, तद्यथा, गौरनुबन्ध्योऽजोऽग्नीषोमीय इति न वाहीको ऽनुबध्यते, स्वशास्त्रेपि स्वरूपमित्यत्र रूपग्रहणेन ज्ञापितरूपवदर्थोपि सन्त्रमिति मुख्यार्थस्य महच्छब्दस्यात्र ग्रहणाद्गौणार्थस्यात्वाभावः, च्व्यन्तेषु हि एकस्य वस्तुनः प्रकृति-

१ सद्भाभिधीयमान इति ४ पु॰ पा॰।

विकारात्मकतया द्व्यात्मकत्वं गम्यते, पटीभवन्तीति ह्युक्ते प्रागपटः संप्रति पटात्मना परिणमन्तदति प्रतीयते, पटो भवतीत्युक्ते नैवं प्रतीयते किं तु पटो रक्तादिरूपेण भवतीत्यपि गम्यते, तत्र केवलविकाराव-स्थावाचकस्य पटशब्दस्य प्रागवस्थायामनुगतावस्थायां च वृत्तिर्न लक्षणा-मन्तरेणोपपद्यते,अपर आह। महत्वेन परिणामोन्मुखे ऽमहति महच्छब्दस्य वृत्तिः, अत्र च प्रमाणं पटो भवतीति वाक्ये रक्तादिरूपेण भवतीत्यपि गम्यते, पटीभवतीत्यत्रापटः पटो भवतीत्येव गम्यते, एवमर्थे प्रवृत्तिरुप-चारमन्तरेण नोपपद्यते इति गौणार्थत्वादात्वाभाव इति मन्तव्यम्। यदि तर्हि पुंवद्भावस्तु विशेषमनुपादाय विधीयमानो गौणार्थस्यापि भव-ति,शब्दविशेषोपादाने हि गौणमुख्यन्यायः, एवं तु गोमतीभूतेत्यत्र तु पुंवद्भावनिवृत्तये यतितव्यं, यदि तर्हि शास्त्रेषु मुख्यार्थस्य ग्रहणं, कथं तर्हि वाहीके वृद्ध्यात्वे भवतः, गौर्वाहीको गां वाहीकमिति, उच्यते, पदान्तरसंबन्धे सति पदस्य गौणार्थत्वाभिव्यक्तिः, विभक्त्यन्तं च पदान्त-रेण संबद्ध्यते, ततश्च पदस्य पदान्तरसंबन्धे सति यत्कार्यं प्राप्तं तत्रैवासौ न्यायः, न प्रातिपदिककार्येष्विति मुख्यएव स्वार्थे साक्षादिमति वृद्ध्यात्वे अनुभूय गोशब्दो वाहीके वर्त्तिष्यते, इह तु महच्छब्दस्योत्तरपदे परतो विधीयमानमात्वं तस्यामवस्थायां मुख्यार्थस्यैव भवितुमर्हति, अनेनैव न्यायेन च तस्य गोशब्दस्य गोभवदित्यत्र ओदिति प्रगृह्यसंज्ञा न भवति, अग्निसोमौ माणवकावित्यत्राग्नेस्तुस्तोमसोमा इति षत्वं न भवति, ईद-ग्नेरितीत्वं च। 'महदात्वइत्यादि'। समुच्चये चशब्दो नान्वाचये, तेन यत्रैव पुंवद्भावस्तत्रैवात्वम्। 'अष्टाकपालमिति'। अष्टसु कपालेषु संस्कृ-तमिति तद्धितार्थे समासः, संस्कृतं भक्षा इत्यण्, तस्य द्विगोरिति लुक्। 'अष्टकपालमिति'। समाहारे द्विगुः। पात्रादित्वात्स्त्रीत्वाभावः। 'अष्टागवेनेति'। अष्टौ गावो युक्ता अस्मिन्निति त्रिपदो बहुव्रीहिः, पूर्व-योर्द्वयोरुत्तरपदे द्विगौ गोरतद्धितलुकीति टच्समासान्तः, तत्र दीर्घत्वेन युक्तार्थसंप्रत्ययाद्युक्तशब्दस्य निवृत्तिः, समाहारद्विगोर्वा साहचर्यादभेदो-पचाराद्युक्तार्थे वृत्तिः। 'तपरकरणं विस्पष्टार्थमिति'। न भिन्नकालानां

निवृत्त्यर्थमनणत्वात्, नापि गुणाभिधानां तत्कालानां ग्रहणमभेदकत्वाद्गुणानाम्। आनङ्प्रकरणएवास्मिन्वक्तव्येत्राादिति वचनं योगविभागार्थं तेनाष्टाकपालादावात्वसिद्धिः, एवं चैकादशेन्यत्राप्यात्वं भवति, तथा च प्रागेकादशभ्योछन्दसीति प्रयोगः॥

"द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः"॥ अत्र संख्यातानुदेशो न भवति, यदि स्याद् अष्टनोशीतौ प्रतिषेधः स्यात्, तथा च तस्य वैयर्थ्यं प्रतिषिद्धेप्यात्वे सवर्णदीर्घत्वेन भवितव्यं, द्वादश द्वाविंशतिरित्यादौ समाहारे द्वन्द्वः, स नपुंसकमित्येतत्तु न भवति लोकाश्रयत्वाल्लिङ्गस्य। 'द्वित्रा इति'। द्वौ वा त्रयो वेति वार्थे संख्ययाव्ययासन्नेति समासः, बहुव्रीहौ संख्येये डच्, द्विर्दश द्विदशाः, सुजर्थे समासः॥

"त्रेस्त्रयः"॥ संन्धिवेलादिषु त्रयोदशशब्दस्य पाठात्सकारान्तोयमादेशः॥

"विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्"॥ 'सर्वेषांग्रहणमित्यादि'। असति हि तस्मिन् अनन्तरस्य त्रेस्त्रय इत्यस्यैव विकल्पः स्यात्॥

"हृदयस्य हृल्लेखयदण्लासेषु"॥ 'अणन्तस्य ग्रहणमिष्यत इति'। व्याख्यानात्, अत्र व्यावर्त्यं दर्शयति। 'घञि त्विति'। यदा चाणन्तस्य ग्रहणं न घञन्तस्य तदा लेखग्रहणस्य ज्ञापकत्वमुपपद्यते॥

"वा शोकष्यञ्रोगेषु"॥ हृदयशब्देनेत्यादि यदुक्तं तचानुमन्यन्ते, अत एव विकल्पविधानात्, पद्दचोमासहृदित्यत्र हृदादेशविधानाच्च॥

"पादस्य पदाज्यातिगोपहतेषु"॥ आकारान्तोयमादेशो ऽविभक्तिकः। 'अज्यतिभ्यामिति'। अज गतिक्षेपणयोः, अत सातत्यगमने। 'पदगइति'। डप्रकरणे ऽन्यत्रापि दृश्यत इति डः। 'उपदेशएवेति'। समसनक्रियानन्तरमेव प्रागेव समासस्य प्राप्तस्वरादित्यर्थः। 'अन्तोदात्तो निपात्यतइति'। अन्यथा ऽऽन्तर्यत आद्युदात्तः स्यात्। तेनेत्यादिना ऽन्तोदात्तनिपातस्य प्रयोजनमाह। पदाजिरित्यादिनोपदेशग्रहणस्य, यदि कृत्स्वरे कृते सत्युत्तरकाले पदशब्दोन्तोदात्त आदेशः स्यात्तदा सतिशिष्टत्वात्तेन कृत्स्वरो बाध्येत उपदेशएव त्वन्तोदात्ता-

देशे हृस्वर एव सति शिष्टो भवति, न चान्तोदात्तनिपातनस्य वैयर्थ्यं, पदोपहत इत्यत्र श्रूयमाणत्वादिति पिण्डार्थः ॥

"पद्यत्यतदर्थे" ॥ 'इके चरताविति'। चरत्यर्थे य इक् प्रत्ययः कृत्प्रत्ययस्तत्रेत्यर्थः, एतद्वार्त्तिकादर्शनात्पर्पादिषु पादः पच्चेति पठितम्। 'शरीरावयवस्येति'। व्याख्यानमत्र शरणम्। अपर आह। पूर्वत्र तावच्छरीरावयवस्य ग्रहणं तस्यैवाज्यादिषु करणत्वसम्भवात्, इहापि स एवानुवर्त्तते, ऋचः श इत्यत्र ऋग्विषये शरीरावयवस्यासम्भवात्चतुर्थभागवचनस्य ग्रहणमिति। 'तेनेत्यादि'। पणपादमाषशतादित्यत्र हि परिमाणवचनैः पणादिभिः साहचर्यात्परिमाणस्य पादस्य ग्रहणं न शरीरावयवस्य। 'द्विपाद्यमिति'। तेन क्रीतमित्यत्रार्थे यत्प्रत्ययः, इदमप्यत्र शक्यं वक्तुं, पादेन यद्विशेष्यते, पादस्य यो यत्कश्च पादस्य यत्, यस्ततो विहितः, द्विपाद्यमित्यत्र तु पादशब्दान्ताद् द्विगोर्यद्विहित इति ॥

"हिमकाषिहतिषु च" ॥ पादस्य हिमं शीतं पद्धिमम्, पादौ कषन्तीति पत्काषिणः, पादचारिणः सुप्यजाताविति णिनिः, पदाभ्यां हन्यतइति पद्धतिः ॥

"ऋचः शे" ॥ शे इति शस्प्रत्ययस्येदमेकदेशानुकरणमन्यस्य शशब्दस्यासम्भवात्। ननु च सम्भवत्ययं पादेशेते अधिकरणे शेतेरित्यच्, पादशइति, नास्त्यस्य सम्भवः, नहि ऋक्पादे कश्चिच्छेते, यच्च लोमादिभ्यः शस्तस्याप्यसम्भव एव, लोमादिषु पादशब्दस्याभावात् ॥

"वा घोषमिश्रशब्देषु" ॥ 'पन्निष्क इति'। निष्कशब्दः सुवर्णजातिवचनः, पादशब्दः परिमाणवचनः कर्मधारयः समासः ॥

"उदकस्योदः संज्ञायाम्" ॥ 'उदमेघइति'। षष्ठीसमासः, सादृश्यात्पुरुषस्य संज्ञा, पितुरप्रसिद्धत्वात्पुत्रेण व्यपदेशः। उदकं वहतीति कर्मण्यण्, उदवाहः। क्षीरोदइति बहुव्रीहिः। अत्र केचिदाहुः। उदकशब्देन समानार्थ उदशब्दोऽस्ति तथा च संज्ञायामपि प्रयुज्यते। अप्रसंनोदइति, इदं वचनं संज्ञायामुदकशब्दस्य प्रयोगनिवृत्त्यर्थमिति । एवं तु वक्ष्यमाणो विकल्पोऽनर्थकः स्यात् ॥

"पेषंवासवाहनधिषु च" ॥ असंज्ञार्थमिदम् । 'उदधिरिति' । कर्मण्यधिकरणे चेति किप्रत्ययः, घटादिरत्रोदधिः, [1]समुद्रे पूर्वेणैव सिद्धः ॥

"एकहलादौ पूरयितव्येऽन्यतरस्याम्" ॥ 'एकोऽसहायइति' । यद्ययमेकशब्दः संख्यावचनः स्यात्तर्ह्येकेत्यनर्थकं स्यात्, नहि द्वौ च बहवो वा आदिभूता क्वचित्सम्भवन्ति, तस्मादसहायवचन एकशब्दः । नन्वेवमप्यस्य व्यावर्त्त्यं न सम्भवति, कथम्, एकैकवर्णवर्त्तित्वाद्वाचः, यदि ह्यनेकस्य वर्णस्य युगपदुच्चारणं स्यात्तदा स्थालीशब्दोऽनेकहलादिः, यदि वा क्रमेणोच्चारिता अपि वर्णा अवतिष्ठेरन् तदापि युगपद्वर्णयोरुपलम्भादादित्वं स्यात्, यतस्तु नोच्चारणे युगपदुपलब्धौ वा वर्णानां यौगपद्यं, तस्मादेकस्यैवादित्वमिति न किञ्चिदेकग्रहणेन शक्यं व्यवच्छेत्तुम्, एवं तर्ह्येकग्रहणसामर्थ्याद्विशिष्टमसहायत्वमाश्रीयते, किं पुनस्तत्, आनन्तर्यं, तदेतदाह । 'तुल्यजातीयेनानन्तरेणेति' । हल्त्वेन तुल्यजातीयत्वेन तुल्यस्थानादिभिर्भिन्नजातीये व्यवहिते च सहायत्वाप्रसिद्धेरेवमुक्तम्, ॥

"मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च" ॥ द्रवद्रव्यसंयुक्ताः सक्तवो मन्थाः । 'उदकेन मन्थइति' । तृतीयेति योगविभागात्समासः, अथ तु मथ्यतइति क्रियाशब्दस्तदा कर्तृकरणे कृता बहुलमिति समासः, सक्त्वौदनाभ्यामन्नेन व्यञ्जनमिति, बिन्दुवज्रवीवधैः षष्ठीति, भारहारगाहैः कर्मण्यणन्तैरुपपदमिति समासः, उदकस्य वज्रं क्रूरं, यदपां क्रूरमिति दर्शनात्, अन्येपि यथासम्भवं समासा भवन्त्येव उदकं वज्रमिव भिन्दानो हृदयमसाहिनोदवज्रः ॥

"इको ह्रस्वो ऽङ्यो गालवस्य" ॥ 'ग्रामणिपुत्रइति' । सत्सूद्विषेत्यादिना क्विप्, अग्रग्रामाभ्यां नयतेरिति णत्वम् । गार्गीपुत्र इति । गार्ग्यशब्दाद्यञश्चेति ङीप्, यस्येति च, हलस्तद्धितस्य । 'कारीषगन्धीपुत्रइति' । ष्यङः संप्रसारणं, संप्रसारणस्येति दीर्घः । 'काण्डीभूतमिति' । ऊर्यादि-

---

[1] न समुद्र इति ३ । ४ पु॰ पा॰ ।

च्विहाचश्चेति निपातसंज्ञायामव्ययत्वं, स्त्रीवेषधारी नर्त्तकः पुरुषो भ्रुकुंसः, इहालाबुकर्कन्धुजम्बुफलमिति फलशब्दउत्तरपदे जम्ब्वाह्रस्वत्वं, द्वन्द्वे जम्ब्वां मुत्तरपदे कर्कन्ध्वा ह्रस्वत्वम्, अलाब्वास्तु न प्राप्नोति, कर्कन्ध्वा अनुत्तरपदत्वात्, एवं तर्ह्येवं विग्रहः करिष्यते अलाबूश्च कर्कन्धूश्च अलाबुकर्कन्ध्वौ ते च जम्बूश्च अलाबुकर्कन्धुजम्ब्वस्तासां फलमलाबुकर्कन्धुजम्बुफलमिति, एवमपि जम्ब्वाः पूर्वनिपातः प्राप्नोति, एवं कर्कन्धुजम्ब्वोरपि द्वन्द्वे द्रष्टव्यं, जम्बुशब्दो राजदन्तादिषु द्रष्टव्यः ॥

"एक तद्धिते च" ॥ एकेत्यविभक्तिको निर्द्देशः, समानाधिकरणे हि स्त्रियाः पुंवद्भावेनैव सिद्धत्वात्। व्यधिकरणार्थमिदम्। 'एकत्वमिति'। असहायादिवचनोयमेकशब्दः संख्यावचनस्य तु त्वतलोर्गुणवचनस्येति पुंवद्भावेनैव सिद्धं, किं पुनः कारणं स्त्रीलिङ्ग एवोदाह्रियते न पुनर्यथाश्रुतः पुल्लिङ्गो नपुंसकलिङ्गो वेति तत्राह। 'लिङ्गविशिष्टस्येति'। स्त्रीलिङ्गस्यैव ह्रस्वविधानमर्थवद् भवति नेतरस्य, तस्य स्वत एव ह्रस्वान्तत्वात्। ननु चास्तु स्वत एवान्तो ह्रस्वो यस्त्वसावादिरेकारस्तदर्थमितरस्यापि ग्रहणमर्थवत्, अत आह 'अचेति'। स्यादेतदेवं यदि गृह्यमाणेनैकशब्देनाचश्चेत्युपस्थापितोऽज्विशेष्येत एकशब्दस्य योच् यत्र कुत्र स्थितइति, इह तूपस्थापितेनाचा गृह्यमाण एकशब्दो विशेष्यते एकस्य ह्रस्वो भवति किंविशिष्टस्य अचः, अजन्तस्येति, तत्रालोन्त्यस्येत्यन्त्यस्य ह्रस्वेन भाव्यं तच्च टाबन्तस्यैवार्थवत् नेतरस्य, इतिकरणो हेतौ ॥

"ङ्यापोः संज्ञाछन्दसोर्बहुलम्" ॥ बहुलग्रहणात्क्वचिदनुत्तरपदेपि भवति, अनुगार्यन्ति नयो गर्भिण्यइति, एवं कृत्वा फाल्गुनी पौर्णमासीति प्रत्युदाहरणोपपत्तिः, कर्मधारये पुंवद्भावः प्राप्नोति। 'ऊर्णम्रदा इति ऊर्णावत् म्रदीयसीति यावत्, छान्दस ईयसीशब्दस्याकारः, तैत्तिरीयास्तु दीर्घमधीयते ऊर्णम्रदसं चास्तृणामीति ॥

"इष्टकेषीकामालानां चिततूलभारिषु" ॥ 'इष्टकचितमिति'। कर्तृकरणे कृता बहुलमिति समासः। 'इषीकतूलमिति'। षष्ठीसमासः। मालाम्बिभर्तीति मालभारिणी, सुप्यजातौणिनिः, प्रायेण तु

हरितिमधीयते, प्रयोगस्तु बिभर्तेः, मल्लिका मालभारिण्य इति । 'इ-ष्टकादिभिस्तदन्तस्यापि ग्रहणं भवतीति'। यथा तु भवति तथा ऽलुक्प्रकरणएवोक्तम् ॥

"खित्यनव्ययस्य" ॥ इह ह्रस्वश्रुत्याच इत्युपस्थाप्यते, तत्र यदि पूर्वपदेनाज्विशेष्येत पूर्वपदस्याचो ह्रस्वो भवति यत्र तत्र स्थितस्येति, ततो वाङ्मन्यइत्यादावपि प्राप्नोति, तस्मादचा पूर्वपदं विशेष्यते, अजन्तस्य पूर्वपदस्येति, तत्र कालिंमन्येत्यादावपि मुमि कृतेऽजन्तत्वाभावाद् ह्रस्वाभाव इत्यत आह । 'मुमा ह्रस्वो न बाध्यतइति'। कुत इत्यत आह । 'अन्यथा हीति'। उच्यते चेदमजन्तस्य ह्रस्व इति, यदि पूर्वं मुम् स्याद्वचनमिदमनर्थकं स्यात्तस्मान्मुमा ह्रस्वो न बाध्यते, कथं पुनर्मुमा ह्रस्वबाधः शङ्कितः, यावता स्तनन्धयादौ चरितार्थस्य मुमः कालिंमन्येत्यादौ ह्रस्वेनैव बाधः शङ्कनीयः, तस्मादयमस्यार्थः, यथा पूर्वं मुमा ह्रस्वो न बाध्यते तथा सूत्रस्यार्थो वर्णनीयः, अजन्तस्य ह्रस्वो विधेयः न तु पूर्वपदसम्बन्धिनोचो ह्रस्व इति तस्मिन्पक्षे मुमि कृतेऽपि ह्रस्वप्रवृत्तिसम्भवादनवकाशत्वाभावात् मुमि कृते पश्चाद्ध्रस्वः स्यात्, पूर्वं तु मुमा बाध्येतेति, यत्पुनरुक्तं मुम एव ह्रस्वेन बाधः शङ्कनीय इति, अत्र परिहारमुत्तरसूत्रे वक्ष्यति, कथं पुनरत्र खिदन्तस्य ग्रहणं यावता ज्ञापितमेतदुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्न भवति तत्राह । 'अनव्ययस्येत्येतदेवेति'। धातोरेव खितो विधानान्नाव्ययात्परःखित्प्रत्ययः सम्भवति, तस्मादव्ययप्रतिषेधादत्र तदन्तग्रहणमित्यर्थः ॥

"अरुर्द्विषदजन्तस्य मुम्" ॥ 'अरुन्तुदइति'। विध्यरुषोस्तुदइति खश्, तुदादित्वाच्छः, सकारात्पूर्वं मुमि कृते सकारस्य संयोगान्तलोपः । 'द्विषन्तपइति'। द्विषत्परयोस्तापेरिति खच्, खचि ह्रस्वः, मुमादि पूर्ववत् । 'विदुन्मन्यइति'। वसुस्रंसुध्वंस्विति दत्वं, यरोऽनुनासिकेऽनुनासिको वा, अन्तग्रहणमनर्थकं वर्णग्रहणे सर्वत्र तदन्तविधेर्भावादित्यत आह । 'अन्तग्रहणमित्यादि'। समीपवचनोन्तशब्दः, अच्चासावन्तश्चेति अजन्तः, निपातनाद्विशेषणस्य परनिपातः, कः पुनरसौ पूर्वसूत्रे विहितो ह्रस्वस्तेन

पूर्वपदस्य तदन्तविधिः, एतदुक्तं भवति, योऽयमस्य सूत्रस्य समीपभूतो यः पूर्वसूत्रे विहितो ह्रस्वस्तदन्तस्य मुम् इति, यतो ह्रस्वे कृते मुम् भवतीति, एतेनैतदपि निरस्तं मुम एव ह्रस्वेन बाधप्रसङ्ग इति, कथं तन्निमित्तकत्वान्मुमः, ह्रस्वनिमित्तको ह्येष मुम् भवति, यद्येवं स्तनन्धयादौ यत्र ह्रस्वो न क्रियते तत्र मुम् न प्राप्नोति, किं पुनः कारणमत्र ह्रस्वो न क्रियते प्रयोजनाभावात्, अस्ति प्रयोजनं, किं, मुम् यथा स्यादिति, इदानीमेव ह्युक्तं ह्रस्वनिमित्तको मुमिति ॥

"इच एकाचो ऽम्प्रत्ययवच्च" ॥ 'अमागमो भवतीति'। कथमस्यागमत्वं, मित्त्वात्, यद्येवं मकार इत्संज्ञकः प्रयोगे श्रवणं न प्राप्नोति, श्रियंमन्यः भ्रुवंमन्य इति, नैवास्य मकारस्य श्रवणं किं तर्हि मुमः, ननु च नाप्राप्ते मुम्यारभ्यमाणोऽयमागमस्तं बाधेत, न बाधेत, उक्तं तत्र अन्तग्रहणं कृताजन्तकार्यप्रतिपत्त्यर्थमिति, तेनास्मिन्नपि प्रकृते भविष्यति; वयन्तु ब्रूमः। नैवायमित्संज्ञको मकारः, अम् प्रत्ययवद्भावेन न विभक्तौ तुस्मा इति प्रतिषेधात्, यद्येवमादेशः प्राप्नोति, अम् प्रत्ययवद्भावात्परो भविष्यति, आगमव्यपदेशस्तु यौगिकः समीप आगच्छतीति, यथा नप्वाभ्यां पदान्ताभ्यामित्यत्रैचः, द्वितीयोऽपि वा मकारः संयोगान्तलोपेन लुप्तनिर्दिष्टो द्रष्टव्यः। यद्यत्र प्रत्ययवच्चेत्येतावदुच्येत गांमन्य इत्यत्रौतोम् शसोरित्याकारो न स्यात्, शसा सहचरितस्यामस्तत्र ग्रहणात्, इह च स्त्रींमन्य इत्यमि पूर्व इति पूर्वरूपं न स्यात् प्रथमयोरिति तत्रानुवृत्तेः, इह च नरंमन्य इति ऋतोऽङि सर्वनामस्थानयोरिति गुणो न स्यात्, सामान्यातिदेशे विशेषानतिदेशात्, यत्र हि सामान्यशब्देनातिदेशस्तत्र विशेषाणामशब्दार्थत्वात्सामान्यनिबन्धनमेव कार्यं प्राप्यते, यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति ब्राह्मणमात्रप्रयुक्तं कार्यमतिदिश्यते न माठरादिविशेषप्रयुक्तं, तद्वदत्रापि प्रत्ययमात्रप्रयुक्तयोरियङुवङोरेवातिदेशः स्यात् नत्वाकारादेरिति मत्वाह। 'अम् प्रत्ययवच्चेति'। एतदेव विवृणोति। 'द्वितीयैकवचनवच्चेति'। ननु चात्रैकममग्रहणं यदि तेनागमो निर्दिष्टः प्रत्ययो न विशेषितः स्यात्, अथ प्रत्ययो विशेष्यते

आगमो न निर्दिष्टः स्यादित्यत आह । 'अमिति हीत्यादि' । नन्वत्रापि पक्षे ऽमुप्रत्ययप्रयुक्तयोरात्वपूर्वत्वयोरेवातिदेशः स्याच्च गुणस्य सर्वनामस्थानमात्रनिमित्तस्य, नतरामियङुवङोः प्रत्ययमात्रनिमित्तयोः, स्यादेतदेवं, यद्यमि यदाहत्य विहितं तस्यैवातिदेशः स्यात्, वयन्त्वमि यदुक्तं सामान्यनिबन्धनं विशेषनिबन्धनं वा तत्सर्वमतिदिशामः। 'त्वहम्मन्यइति' । अत्र त्वथंमन्यइति प्राप्नोति, येषामेको मकारः प्रत्ययवद्भावात् परोऽयमिति पक्षः, येषामपि द्वितीयस्तेषामचः परोम् प्राप्नोति, येषां त्वित्संज्ञको मकारस्तेषामत्रापि को दोष इति चिन्त्यम् । नन्वजग्रहणानुवृत्तेरेवात्र न भविष्यति, उपसमस्तस्य पृथगनुवृत्तिर्दुर्ज्ञानेति मन्यते । 'लेखाभ्रुंमन्यइति'। पूर्ववद् ह्रस्वत्वं मुमागमश्च । 'अथेहेत्यादि' । भाष्ये अथेह कथमित्यारभ्य श्रिमन्यमिति भवितव्यमिति स्थितं, स्थापितमित्यर्थः, तेन भिन्नकर्तृकत्वं ना शङ्कनीयम् । ननु च स्त्रीलिङ्गः श्रीशब्दस्तत्कथं श्रिमन्यमिति रूपमित्याशङ्क्योपपादयति । 'तच्चेदमिति' । अर्थान्तरे हि वर्तमानाः शब्दाः केचित्स्वलिङ्गत्यागेन वर्तन्ते यथा यष्ट्यादयः शब्दाः पुंयोगात्स्त्रियां वर्तमानाः यष्टी प्रचरी गणिकेति, के चित्तु स्वलिङ्गोपादानेन यष्टीः पुरुषान् प्रवेशयेति, तत्रेह प्रथमा विधा भाष्यकारस्याभिप्रेता, तेन स्वमोर्नपुंसकादित्यमो लुकि कृते श्रिमन्यमिति भवति, यद्येवं सुपो धातुप्रातिपदिकयोरित्यस्यापि लुकोतिदेशः प्राप्नोति तस्याप्यमि दृष्टत्वात्, अथाम्विधानसामर्थ्यादस्य लुको नातिदेशः, स्वमोर्नपुंसकादित्यस्यापि न स्यात् । उच्यते । येन नाप्राप्तइति वा मध्येपवादा इति वा सुपो धातुप्रातिपदिकयोरित्यस्यैव लुको विधानसामर्थ्याद्बाधः, न स्वमोर्नपुंसकादित्यस्य, एवमप्येकपदाश्रयत्वाल्लुगन्तरङ्गो विपर्ययादागमो बहिरङ्ग इत्यन्तरङ्गे लुकि कर्तव्ये बहिरङ्गोमागमो नास्त्येव तत्कृतो लुक्, नात्र बहिरङ्गपरिभाषा शक्याश्रयितुम्, अनुस्वारोपि हि न स्याद् अहन्तुदो द्विषन्तप इति, तस्मादत्र लुकि सति श्रिमन्यमिति भवति, येषां त्वमो मकार इत्संज्ञकः प्रयोगे तु मुमः श्रवणं तेषामकारमात्रस्य लुकि सति मुमः श्रवणप्रसङ्गः ॥

"वाचंयमपुरन्दरौ च" ॥ 'वाचंयमइति' । वाचि यमो व्रतइति खच् । 'पुरंदरइति' । पूःसर्वयोर्दारिसहोरिति खच्, खचि ह्रस्वः, उभयस्यापि पूर्वपदस्यामन्तत्वं निपात्यते ॥

"कारे सत्यागदस्य" ॥ सत्यङ्कारः समयकरणम्, अशपथेपि परत्वाद् हावं बाधित्वा कारे मुमेव भवति, अगदंकारो विषप्रतिपक्षद्रव्यविशेषकरणं, भक्षंकारो यागविशेषे द्रव्यभक्षणस्य करणं, भक्षङ्करोतीति वा भक्षङ्कारः, कर्मण्यण् । 'धेनुंभव्येति' । भविष्यन्ती धेनुरुच्यते, भव्यगेयेति यत्कर्त्तरि । 'लोकंपृणेति' । पृणोतिः पूरणकर्मा मूलविभुजादित्वात्कः, 'अनभ्याशमित्यइति' । इतिस्तुशासित्यादिना क्यप्, एतव्यमित्यम् । अनभ्याशंदूरम्, अनभ्याशमित्यः, दूरतः परिहर्त्तव्य उच्यते । 'भ्राष्ट्रमिन्धः अग्निमिन्धइति' । कर्मण्यण्, घञन्तेन वा षष्ठीसमासः । 'तिमिङ्गिलइति' । मत्स्यविशेषः । तिमिङ्गिलतीति पूर्ववत्कः, ह्रस्वम् । अचि विभाषेति लत्वं, तिमिङ्गिलगिलः, अयमपि मत्स्यविशेष एव । 'गिलगिले चेति' । यदा गिलं गिलतीति गिलगिलः तिमिङ्गिलगिलइति व्युत्पत्तिस्तदेदमुपसंख्यानं, यदा हि तिमिंगिलं गिलतीति तिमिङ्गिलगिलइति व्युत्पाद्यते तदानार्थं एतेन । 'उष्णंकरणं भद्रङ्करणमिति' । षष्ठीसमासौ । 'पुत्रङ्घेति' । टकारो ङीबर्थः । 'केचित्त्वित्यादि' । तेषां पक्षउपसंख्यानमिदं नारब्धव्यम् । अन्यत्रापि ङीत्यादिना शार्ङ्गरवादिपाठमेव द्रढयति । अन्ये तु शार्ङ्गरवादिपाठं नेच्छन्ति ॥

"श्येनतिलस्य पाते ञे" ॥ 'श्येनपातास्यां क्रियायामिति' । यद्यपि घञः सास्यां क्रियेति ञ इत्यत्र क्रियाग्रहणं प्रकृत्यर्थविशेषणं न प्रत्ययार्थः, श्येनपातास्यां तिथौ श्येनपाता तिथिरिति तत्रोदाहृतत्वात्, तथाप्यस्यामिति स्त्रीलिङ्गमात्रस्य प्रत्ययार्थत्वात्क्रियाया अपि प्रत्ययार्थत्वमविरुद्धम् । 'श्येनंपातेति' । पतनं पातः, श्येनस्य पातः, कर्त्तरि षष्ठ्याः समासः, ततो घञः सास्यामिति ञः ॥

"रात्रेः कृति विभाषा" ॥ 'कृदन्तउत्तरपदइति' । यद्यप्याधारक्विबन्तस्य रात्रिशब्दस्यानन्तरस्तृजादिः कृत्संभवति तथापि तस्य गौणार्थ-

त्वादग्रहणमिति सामर्थ्यादुत्तरपदाधिकारेऽप्यत्र तदन्तविधिर्भवति । 'रात्रिंचर इति' । रात्रौ चरतीति चरेष्टः । 'रात्रिमट इति' । अटतीत्यटः, पचाद्यच्, साधनं कृतेति समासः । 'अप्राप्तविभाषेयमिति' । ननु चोभयत्र विभाषेयं युक्ता, रात्रिंमन्येत्यादौ खिदन्ते प्राप्ते ऽन्यत्राप्राप्त इत्यत आह । 'खिति हि नित्यं मुम् भवतीति' । पूर्वविप्रतिषेधेनेति भावः ॥

"न लोपो नञः" ॥ नञः सानुबन्धकस्य ग्रहणं पामादिभ्यो नः पामनपुत्र इत्यादौ माभूत्, अथ क्रियमाणेऽपि सानुबन्धकग्रहणे स्त्रैणपुत्र इत्यत्र कस्मान्न भवति, प्रत्ययञित्त्वस्य वृद्धिस्वरयोश्चरितार्थत्वात्, निपातञित्त्वस्य चाचरितार्थत्वात्, पूर्वपदेन वा नञ् विशेष्यत इति अपूर्वपदत्वान्न भविष्यति, एवं च कृत्वाऽनुबन्धोच्चारणमपि न कर्त्तव्यमपूर्वपदत्वादेव पामनपुत्रे न भविष्यति । 'अवक्षेपे तिङीति' अवक्षेपो निन्दा । नञो णिति वा नञोऽनिति वा सिद्धे लोपवचनं साकच्कार्थमित्याहुः ॥

"तस्मान्नुडचि" ॥ 'नञ एव हि स्यादिति' । तस्मिन्निति निर्दिष्टे पूर्वस्येति वचनात् । नञश्च नुटि सत्यनिष्टं रूपं स्यात्, नलोपविधानमनर्थकं स्यात्, तस्माद्ग्रहणे तु सति पञ्चमीनिर्देशस्य बलीयस्त्वादुत्तरस्यैव भवति । ननु यदि नञ एव स्यान्नाचीति नलोपमेव प्रतिषेधेत्, तद्वचनन्तूत्तरपदस्यैव भविष्यति, तस्मादेवं वक्तव्यं नाप्राप्ते नलोपे आरभ्यमाणो नुट् तस्य बाधकः स्यात्, तस्माद्ग्रहणेतु सति निमित्तमेव नुटो नलोपो भवति । अथ नुगिति पूर्वान्त एवायं कस्मान्न कृतः, एवं हि नञ एव स्यादित्येवमपि दोषो न भविष्यति, तत्रायमप्यर्थः, तदोः सः सावित्यत्र तदोरित्यपनीय तोरिति वर्णग्रहणमेव कर्त्तव्यं, परादौ त्वनेन करोतीत्यत्र नुटो नकारस्यापि प्रसङ्गादशक्यं वर्णग्रहणं तत्राह । 'पूर्वान्ते हीति' । 'ङमुट् प्राप्नोतीति' । नलोपः प्रातिपदिकान्तस्येति नलोपो विधानसामर्थ्यान्न भवतीति भावः । अत्रापि पक्षद्वयं कर्त्तव्यं नाप्राप्ते नलोपे आरभ्यमाणो नुक् तस्य बाधकः स्यादिति ॥

"नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु

---

१ ङमो ह्रस्वादचि ङमुण्नित्यमिति प्राप्नोतीति मुद्रितमूलपुस्तके पाठः ।

प्रकृत्या" ॥ 'नभ्राडिति'। भ्राजभासेत्यादिना क्विप्, व्रश्चादिषत्वं, जश्त्वं डकारः, तस्य वावसानइति पक्षे चर्त्वे टकारः। 'पादि'ति शब्दान्तमिति'। तनूनपादुच्यते, अपांनपादित्यादावनपुंसकेपि दर्शनादुभेवनस्पत्यादिष्वित्यत्र पातेः क्विपि निपातनात्तुगित्यभिधानाच्चापपाठोयं, पाद्विति क्विबन्तमिति पाठः, शत्रन्तमित्यस्य चानन्तरं नरेने मन्तव्यमित्यध्याहार्यम्। 'औणादिकः किप्रत्यय इति'। इगुपधात्किरित्यनेन, कं सुखम्, अकं दुःखं, तद्यत्र नास्ति स नाकः स्वर्गः।

"दुःखेन यन्न संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्॥

इति हि पठन्ति। यत्र नपुंसकादिविषये निपात्यमस्तीति ते तथैव ग्राह्याः, इतरेषु तूत्तरपदमात्राणि गृहीत्वा नञ् प्रकृत्येत्येव वाच्यम्, एवं सिद्धे सति समुदायपाठः प्रसिद्ध्युपसंग्रहार्थः, तेन नासत्यावित्याश्विनोरेव भवत्यन्यत्रानसत्या इत्येव, एवमन्यत्रापि यथासम्भवं द्रष्टव्यम्। प्रकृत्येति वचनमुत्तरार्थम् इह तु निपातनादेव सिद्धम्॥

"एकादिश्चैकस्य चादुक्" ॥ एकादिरिति बहुव्रीहिः, आदिशब्दो व्यवस्थावचनः। 'एकान्नविंशतिरिति'। पूर्वं नञो विंशत्यादिभिः समासं कृत्वा पश्चात्तृतीयासमासः कर्त्तव्यः। किमर्थं पुनः पूर्वान्तोयमादुक् क्रियते न परादिराडुट् क्रियते, एवमेकस्येत्यागमिनिर्देशार्थं न कर्त्तव्यं भवति, प्रकृतस्य नञ एवागमित्वादित्यत आह। 'पूर्वान्तश्चायमिति'। यरो ऽनुनासिके ऽनुनासिको वेत्यत्र न पदान्ताट्टोरनामित्यतः पदान्तग्रहणमनुवर्त्तते, अविड्भ्रः बध्नातीत्येवमादिषु माभूदिति, परादौ सति दकारः पदान्तो न स्यादिति अनुनासिको न स्यात्, अथानुट् क्रियेत, एवमपि पक्षे दकारश्रवणं न स्यात्तदिदमुक्तम्। 'अनुनासिको विकल्पेन यथा स्यादिति'। किमर्थं पुनरादुक् क्रियते अदुगेव नोच्येत सवर्णदीर्घत्वे तावत् सिद्धम्, अतो गुणइति पररूपत्वं चाकारोच्चारणसामर्थ्यादेव न भविष्यति,

१ पातेः शत्रन्त इति मुद्रितमूलपुस्तके पाठः।

२ सांख्यतत्त्वकौमुद्यां तु यन्न दुःखेन संभिन्नं, तत्सुखं स्वःपदास्पदमिति पाठ उपलभ्यते।

यदि स्याद्धकमेव विदध्यात्, सवर्णदीर्घत्वं तु यं विधिं प्रत्युपदेशोऽनर्थक इति न्यायाद्भविष्यति। वृत्तिकारेण तु प्रतिपत्तिलाघवार्थमादुगयं व्याख्यातः॥

"नगो ऽप्राणिष्वन्यतरस्याम्"॥ 'गमेर्डप्रत्ययइति'। डप्रकरणे अन्यत्रापि दृश्यतइति॥

"सहस्य सः संज्ञायाम्"॥ 'सहयुध्वेति'। युध्यतेः क्वनिप् राजनि युधिकृञः। सहे चेति सादेशः। 'उदात्तो निपात्यतइति'। अन्यथा तु किं स्यादित्यत आह। 'उदात्तानुदात्तावेतौ हीति'। सहशब्दे निपाता आद्युदात्ता इति सशब्द उदात्तः, शेषनिघाते हशब्दो ऽनुदात्तः, तेनासावुदात्तानुदात्तवान् तस्य स्थाने भवन् सशब्द आन्तर्यतः स्वरितः स्यात्, तन्माभूदेष दोष इति उदात्तो निपात्यते। यद्येवमव्ययीभावेपि तस्यैवोदात्तत्वं श्रूयेत तत्राह। 'स चेति'। अयमभिप्रायः। समासे कृते समासस्वरश्च प्राप्नोति अयं चादेशस्तत्र परत्वादस्मिन्नादेशे उदात्ते ऽभिनिर्वृत्ते पुनः प्रसङ्गविज्ञानात्समासस्वरः, स च सति शिष्ट इति तस्यैव श्रवणम्, उदात्तनिपातनस्य तु यत्र पूर्वपदप्रकृतिस्वरत्वं बहुव्रीहितत्पुरुषयोस्तत्रैव श्रवणमिति। 'सेष्टि सपशुबन्धमिति'। अन्तवचने ऽव्ययीभावः॥

"ग्रन्थान्ताधिके च"॥ 'सकलमिति'। कला कालविशेषः, तत्सहचरितो ग्रन्थोपि कला, एवं समुहूर्त्तमित्यत्रापि। ससंग्रहमित्येतत्तु प्रमादाल्लिखितम्, अत्र ह्यव्ययीभावे चाकालइति वक्ष्यमाणेनैव सिद्धः सभावः। 'कालवाचिन्युत्तरपदइति'। कालादयः शब्दा यद्यपि तत्सहचरितग्रन्थपरास्तथाप्यधीतइति पदान्तरप्रयोजनसमधिगम्यत्वाद्ग्रन्थपरत्वं बहिरङ्गमिति कालाश्रयः प्रतिषेध एव स्यादिति मन्यते। 'सद्रोणेति'। तेन सहेति तुल्ययोगइति बहुव्रीहिरयं, तेन वोपसर्जनस्येति विकल्पे प्राप्ते नित्यार्थं वचनम्॥

"द्वितीये चानुपाख्ये"॥ 'अप्रधानो यः स द्वितीय इति'। तत्रैव लोके द्वितीयशब्दस्य प्रयोगात्, स्वामिभृत्ययोर्हि स्वामिनं प्रति भृत्यो द्वितीय इत्युच्यते, न विपर्ययेण, व्याख्यायते इत्यस्य विवरणम्। 'प्रत्यक्षेणोपलभ्यतइति'। घञर्थे कविधानमिति कः कर्मणि। 'साग्निरिति'। पूर्ववद्बहुव्रीहिः, इदमपि नित्यार्थं वचनम्। कल्यादय इत्यादिना अनु-

पश्यत्वं दर्शयति, कपोतश्चेदमारमुपहन्यात्ततश्च कपोतेनार्थिरनुमीयते विद्युद्वात्ययोश्च रक्षः पिशाचं, वर्त्ततइति वार्त्ता ॥

"अव्ययीभावे चाकाले" ॥ 'अकालवाचिनीति' । स्वरूपग्रहणं न भवति ग्रन्थान्ताधिके चेत्यत्र ग्रन्थग्रहणात्, तर्हि समुहूर्त्तमित्यादौ यथा स्यादित्येवमर्थं, यदि चात्र स्वरूपग्रहणं भवति तदा मुहूर्त्तादौ निषेधाभावादनेनैव सिद्धत्वादनर्थकं तत्स्यात् । 'सचक्रमिति' । यौगपद्येऽव्ययीभावः । 'सपुरमिति' । ऋक्पूरब्धूरित्यकारः समासान्तः । 'सहपूर्वाह्णमिति' । साकल्येऽव्ययीभावः ॥

"वोपसर्जनस्य" ॥ उपसर्जनस्येत्यस्य सहशब्दे विशेष्ये सहयुध्वा सहकृत्वेत्यत्रापि स्यात्, अनर्थकञ्च विशेषणं स्यात्, सहशब्दस्य चासत्त्ववाचित्वाद् द्वन्द्वो न सम्भवति, समासान्तरे च सह उपसर्जनमेव तस्मादुत्तरपदेन सन्निधापितस्य समासस्यैवेदं विशेषणं विज्ञायते, तत्राप्यवयवद्वारा समासस्योपसर्जनसंज्ञाया अभावात् सर्वत्र च समासे कश्चिदवयव उपसर्जनमेव, उच्यते चेदमुपसर्जनस्येति ततश्च सर्वावयवद्वारा विज्ञायते, तदिदमुक्तम् । 'उपसर्जनसर्वावयव इति' । 'तदवयवस्येति' । उपसर्जनस्येत्यवयवयोगे षष्ठीति दर्शयति । 'सहकृत्वप्रियइति' । वा प्रियस्येति पूर्वनिपातविकल्पः । 'इह बहुव्रीहौ यदुत्तरपदमिति' । उत्तरपदाधिकारात्, सर्वोपसर्जनस्य बहुव्रीहेराश्रयणाच्च तत्सम्बन्धिन्येवोत्तरपदे सहशब्दस्यानन्तरे सभावेन भाव्यमिति भावः । 'तत्पर; सहशब्दो न भवतीति' । पूर्वत्र तावन्न भवति, कृत्वशब्देन व्यवधानात्, उत्तरत्रापि सहकृत्वेत्येतदुत्तरपदं न कृत्वशब्दः ॥

"प्रकृत्याशिष्यगोवत्सहलेषु" ॥ प्रकृत्याशिषीत्येतावत्सूत्रं, परिशिष्टं भाष्यवार्त्तिकदर्शनात्सूत्ररूपेण पठितं, नेति वक्तव्ये प्रकृतिवचनं वैचित्र्यार्थम् ॥

"समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु" ॥ 'समानस्येति योगविभाग इति' । अपर आह सहशब्दः सदृशवचनोऽस्ति यथा सदृशः सख्या ससखीति, तस्यायमस्वपदविग्रहो बहुव्रीहिः, समानो धर्मोऽस्य, समानः पक्षोऽस्य, समाना जातिरस्य, वोपसर्जनस्येति सभावः, समानशब्दस्य तु

समानजातीय इत्यादि भवति, योगविभागे तु तस्य नित्यत्वादेतत्सिध्यति । अत एव भाष्यवार्त्तिकयोर्योगविभागस्यानोपन्यास इति ॥

"ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु" ॥ 'सज्योतिरिति' । समानं ज्योतिरस्येति बहुव्रीहिः, यस्मिञ्ज्योतिष आदित्ये नक्षत्रे वा उपनिपतितमानस्यास्तमयादनुवर्त्तमानमाशौचं सज्योतिरित्युच्यते, सरूपाणामेकशेषः, स्थानान्ताद्विभाषा सस्थानेनेति-निर्देशाद्बहुव्रीहावप्ययं सभावो भवति न तु पूर्वापरप्रथमचरमजघन्यसमानेति प्रतिपदोक्तएव तत्पुरुषे ॥

"चरणे ब्रह्मचारिणि" ॥ चरणशब्दः कठकलापादौ शाखाविशेषे मुख्यः, तदध्यायिषु पुरुषेषु गौणः, तदिह मुख्यो गृह्यते, समानो ब्रह्मचारी सब्रह्मचारीति, तच्चरति तदनुतिष्ठतीत्यर्थः । 'ब्रह्मचारीति' । व्रतइति णिनिः, एवं ब्रह्मचारिशब्दं निरूप्य सब्रह्मचारीशब्दं निर्वक्तुकामः समानशब्दस्यार्थमाह । 'समानस्तस्यैव ब्रह्मणः समानत्वादिति' । 'तस्यैवेति' । पूर्वमुक्तस्य, इतिकरणो हेतौ, यस्माद्ब्रह्मचारिणां समानत्वं तद्विवक्षितं तस्मादयं वक्ष्यमाणसब्रह्मचारिशब्दस्यार्थो भवति, तमेव दर्शयति । 'समाने ब्रह्मणीति' । समाने साधारण इत्यर्थः, एकस्मिन्काले एकेन ब्रह्मणा एकशाखाध्ययनार्थं ययोर्व्रतमादिष्टं तावन्योन्यं सब्रह्मचारिणावित्यर्थः । एतच्च चरणग्रहणाल्लभ्यते, तद्धि चरणे समाने यथा स्यादाकारादौ माभूदित्येवमर्थं कृतम्, एवं चरणे गम्यमानइत्यस्यापि चरणे समानत्वेन गम्यमानइत्ययमर्थो द्रष्टव्यः ॥

"तीर्थे ये" ॥ सतीर्थ्य एकगुरुकः ॥

"विभाषोदरे" ॥ 'यप्रत्ययान्त इति' । पूर्वसूत्रे य इति यकारादेः प्रत्ययस्य ग्रहणं यप्रत्ययोन्ते समीपे यस्य स तथोक्तः, तत्र यदा सभावस्तदा सोदर्यः, यदा तु न तदा समानोदर्ये शयित इति यत् ॥

"दृग्दृशवतुषु" ॥ 'वतुग्रहणमुत्तरार्थमिति' । समानशब्दे इदमभावात् । 'दृक्षे चेति' । छान्दसमेतदिति केचित्, भाष्ये सदृक्षइत्यनुदाहृतत्वात्तस्मिन्पक्षे क्सप्रत्ययोऽपि छन्दस्येव ॥

"इदंकिमोरीश्की" ॥ 'इयान्कियानिति'। घस्येयादेशे कृते यस्येति चेतीकारलोपः।'किमिदंभ्यां वो घ इति वतुबिति'। नासतो वतुपो वकारस्य घकारः शक्यो विधातुमिति वतुपोप्यनेनैव विधानमिति भावः ॥

"आ सर्वनाम्नः" ॥ अकारोच्चारणमतो गुणे पररूपत्वं माभूत्, आकारविधानं त्वन्तस्य निवृत्त्यर्थं स्यात्, लोपविधौ तु गौरवं भवति ॥

"विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" ॥ व प्रत्ययो यस्मात्स वप्रत्ययः। 'विष्वद्र्यङिति'। अञ्चतेः क्विनि लोपे उगिदचामिति नुम्, संयोगान्तलोपः, क्विन्प्रत्ययस्य कुरिति कुत्वं नकारस्य ङकारः। 'अद्रि-सध्र्योरिति'। वार्त्तिकस्य साधारणत्वादिह सध्रिशब्दोपादानम्, अश्व-मञ्चति अश्वाची, अञ्चतेश्चोपसंख्यानमिति ङीप्, अच इत्यकारलोपः, चाविति दीर्घत्वं, विष्वगुपपदेति विष्वग्युक्, सत्सूद्विषेत्यादिना क्विप्। 'विष्वगञ्चनमिति'। ल्युट्, कथं पुनरत्र प्रसङ्गः, यावता उत्तरपदइत्यु-च्यते, न चात्राञ्चतिरुत्तरपदं किं तर्हि ल्युडन्तं, न च तदादिविधिरस्ति, अप्रत्ययग्रहणादेव तदादिविधिरित्यत आह। 'वप्रत्ययग्रहणमिति'। यदि धातुग्रहणे तदादिविधिर्न स्याद्वप्रत्ययग्रहणमकर्त्तव्यं स्यात्, कृतं तु तदादिविधिं ज्ञापयति। अत्र प्रयोजनमाह। 'तेनेति'। 'अयस्कृत-मिति'। असति तु ज्ञापने अयस्कृदित्यादौ यत्र करोतिमात्रमुत्तरपदं तत्रैव स्यात्। 'विश्वाची च घृताची चेति'। वेदपाठोयं प्रदर्शितः, न तु घृताचीत्युदाहरणं, प्राप्त्यभावात्। उपसंख्याने स्त्रियामित्येतेन नार्थः, पुंस्यपि हि क्वचिदद्र्यादेशो न दृश्यते तस्माद्विष्वञ्चौ प्राणापानाविति। 'कद्रीचीति'। किंशब्दस्य टेरद्र्यादेशः, पूर्ववन्ङीप्लोपदीर्घत्वादि ॥

"तिरसः तीर्यलोपे" ॥ 'यदा ऽस्य लोपो न भवतीति'। अकारस्य लोपे सतीत्ययं त्वर्थो न भवति व्याख्यानात् ॥

"सध मादस्थयोश्छन्दसि" ॥ सधमादोद्युम्नि इति केचिदाहुः। अस्मिन्मन्त्रे द्युम्निरित्यादिकमपां विशेषणं, सधमाद इत्यपि तत्स-मानाधिकरणं शसन्तं, मादयतेः क्विबन्तस्य रूपं, मादः छन्दसि सधादेशो दृश्यते बहुलम्, आत्वा वृहन्तो हरयो युजाना, अर्वागिन्द्रसधमादो

वहन्तु इत्यादावपीति, अपर आह । मदनं मादः, मदो ऽनुपसर्गइत्यपि प्राप्ते छान्दसो घञ्, तेन सह वर्त्ततइति सधमाद इति, रेवतीस्थः सधमादइत्यादौ तु सधमादो यज्ञः, सह माद्यन्ति देवा अस्मिन्निति कृत्वा ॥

"द्व्यन्तरुपसर्गेभ्यो ऽप ईत्" ॥ उदाहरणेषु द्विर्गता आपोऽस्मिन्नित्यादि विग्रहः, ऋक्पूरब्धूरित्यकारः समासान्तः । 'समापवामेति' । ईत्वे प्रतिषिद्धे अन्येषामपि दृश्यतइत्यकारस्य दीर्घः, अपर आह । समशब्दस्यात्र प्रयोगः, समा आपो ऽस्मिन्निति समापइति । 'अपशब्दं प्रतीत्यादि' । इह यत्क्रियायुक्ताः प्रादयस्तं प्रति तेषामुपसर्गत्वम्, अपशब्दश्च न क्रियावचनस्तस्माद्वस्य प्रादेरन्यत्रोपसर्गत्वं तदुपलक्षणार्थमुपसर्गग्रहणं विज्ञायते ॥

"ऊदनोर्देशे" ॥ 'अवग्रहार्थमिति' । यत्र समासावयवानां रूपाणि प्रदर्श्यन्ते पदकारैः सो ऽवग्रहः ॥

"अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु" ॥ उदाहरणेषु विशेषणसमासः । 'गहादिष्वन्यशब्दो द्रष्टव्य इति' । तेषामकृत्स्नत्वात् । 'दुगागमो ऽविशेषेणेत्यादि' । छप्रत्यये परतो ऽविशेषेण सामान्येन दुक्कर्त्तव्यः कीदृशे छे सकारके कारकशब्दसहिते कारकशब्दे चेत्यर्थः । कारकच्छयोरिति पाठे पूर्वनिपातलक्षणस्यानित्यत्वात्तस्य परनिपातः, अन्येष्वाशीरादिषु सप्तसु षष्ठीतृतीययोर्निर्दिष्टत्वेष्वेव प्रतिषेधइत्यर्थः । कथमेतल्लभ्यतइत्याह । 'अस्य चेति' । अषष्ठीतृतीयास्थस्येत्येव सिद्धे द्विर्नञ उपादानं प्रतिषेधस्यानित्यत्वज्ञापनार्थं, व्याख्यानप्रकारश्चायं, शक्यं हि वक्तुं द्विर्नञ उपादानं दार्ढ्यार्थमिति ।

"कोः कत्तत्पुरुषे ऽचि" ॥ उदाहरणेषु कुगतिप्रादयइति समासः ॥ 'कूष्ट्रइति' । एतदेव तत्पुरुषग्रहणं ज्ञापकम् अस्मिन्प्रकरणे ऽप्रतिपदोक्तोऽपि समासो गृह्यतइति, तेन ज्योतिर्जनपदेति सभावो बहुव्रीहावपि भवति । 'त्रावुपसंख्यानमिति' । कत्र्यादिभ्यइति वचनात्सिद्धम् ॥

"का पथ्यक्षयोः" ॥ अनीषदर्थ आरम्भः । कुत्सितः पन्थाः कापथः । पूर्ववत्समासान्तः । 'काक्षइति' । अक्षशब्देन तत्पुरुषः अक्षिशब्देन बहुव्रीहिर्वा, बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ॥

"ईषदर्थे" ॥ 'कामधुर्मिति'। कुमतीति समासः, कुः पापार्थे इत्येतत्तु प्रायिकम् 'कास्त्रमिति'। ननु चात्र कोः कत्तत्पुरुषे चेति कद्भावः प्राप्नोति अस्य त्वनजादिरवकाशः, तत्राह। 'अजादावपीति'॥

"विभाषा पुरुषे" ॥ 'अप्राप्तविभाषेयमिति'। ईषदर्थे इत्यस्य निवृत्तत्वात्। नन्वेवं सत्युभयत्र विभाषेयं युक्ता, ईषदर्थे प्राप्तत्वादन्यत्र चाप्राप्तत्वादत आह। 'ईषदर्थे त्विति'। ईषदर्थे चेत्यस्यावकाशः कामधुर्मिति, विभाषा पुरुषे इत्यस्यावकाशः कुत्सितः पुरुषः कापुरुषः, ईषत्पुरुष इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः ॥

"कवञ्चोष्णे" ॥ छन्दस्यन्यत्रापि दृश्यते, न कवादिभ्यो न हि ते पृणन्तीति, कवाशब्दोऽपि दृश्यते केवलः, कवातिर्यङ्ङि वोपतिष्ठेतेति ईषत्तिर्यङ्ङित्यर्थः ॥

"पृष्टोदरादीनि यथोपदिष्टम्" ॥ निरुक्तादिशास्त्रसिद्धानामसमासपदानामुणादयो बहुलमिति सिद्धिरुक्ता, अनेन तु समासपदानां जीमूतवलाहकादीनां सिद्धिरुच्यते, प्रकारवचनोऽयमादिशब्द इति दर्शयति। 'पृषोदरप्रकाराणीति'। व्यवस्थार्थे त्वादिशब्दे यथोपदिष्टमित्यनर्थकमिति भावः। प्रकारमाह। 'येष्विति'। 'यथोपदिष्टमिति'। वीप्सायामयमव्ययीभाव इत्याह। 'यानियानीति'। दिशिरुच्चारणक्रियः, उच्चार्य हि वर्णानाह उपदिष्टा इमे वर्णा इति, कैः पुनरुपदिष्टानि, शिष्टैः, शिष्टाः पुनरकामात्मानो यथार्थवेदिनो यथाविहितभाषिणश्च किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारगाः यानधिकृत्येदमुच्यते ॥

आविर्भूतप्रकाशानामनुपप्लुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥
अतीन्द्रियानसंवेद्यान् पश्यत्यार्षेण चक्षुषा ।
ये भावान्वचनं तेषां नानुमानेन बाध्यते ॥

इति, यदि तर्हि शिष्टाः शब्देषु प्रमाणं किमष्टाध्याय्या क्रियते, शिष्टपरिज्ञानार्थाऽष्टाध्यायी, कथमष्टाध्यायीमधीयानो ऽन्यं पश्यत्यनधीयानं, ये चानुविहितास्तान् प्रयुञ्जानं स पश्यति नूनमस्य दैवानुग्रहः स्वाभावो वा यदसौ नाष्टाध्यायीमधीते अथ च यत्र तु विहिताः शब्दा-

स्तम्भयुक्ते मूलकन्यायात्तत्र स्वयं जानाति, सेना शिशुपरिज्ञानार्थोऽष्टा- भागी, जीवनस्य जलस्य मूतो भाजनं जीमूतः यथा कुसूलो धान्यानां, सं बिलं, पिशिते मांसं, वृसी तृणमयमासनम्। 'एवमन्येऽपीत्यादि'। अन्य- त्रमहीशब्दे उपपदे सुपि स्थः, सकारस्य तकारः, महीशब्दस्य ह्रस्वः, 'इत्थिचितारमिति'। विशेषणसमासः । 'वाग्वादइति'। कर्मण्यण् । 'षोडशेति'। वयसि दन्तस्य दतृ,उगित्त्वान्नुम्। 'धासु वेति'। उत्वस्यायं विकल्पः, उत्वपक्षे तु ष्टुत्वं नित्यमेव भवति, अत्रोत्तरपदशब्देन धाप्रत्ययो ऽभिधीयते पद्यते गम्यतेऽनेनार्थइति पदम्, उत्तरं च तत्पदं च उत्तर- पदम्। 'षड्धेति'। न पदान्ताट्टोरनामिति ष्टुत्वप्रतिषेधः। 'नानाधि- करणवाचिनइति'। अर्थगतं बहुत्वं शब्दे समारोप्य धास्विति बहुवचन- निर्देशः, तेनाधिकरणविचाले चेति विहितस्य धाप्रत्ययस्येदं ग्रहणम् । 'षड्धेति, । आतोनुपसर्गे कः, स्त्रियां टाप्प्रत्ययः, लाक्षणिकत्वादस्या- ग्रहणमिति चेत् इत्वमपि क्विबन्ते प्रसङ्गः। 'नाश्यतइति'। णश अद- र्शने ण्यन्तः। 'दभ्यतइति'। दम्भु दम्भे। 'स्वो रोहावेति'। लोडु- त्तमद्विवचने। 'वर्णागम इत्यादि'। कौ जीर्यतइति कुञ्जरइत्यत्र नका- रस्य वर्णस्यागमः। 'हिनस्तीति'। सिंहइत्याद्यन्तयोर्वर्णयोर्विपर्ययो व्यत्यासः, षोडइत्यत्र षकारस्योकाररूपापत्तिः, वर्णविकारः, पृषोदर इत्यादौ तकारादेर्वर्णस्य विनाशः, यस्य धातोर्योऽर्थः प्रसिद्धः, तस्मा- दर्थान्तरेण योगस्तदर्थातिशयेन योग इत्येतत्पञ्चविधं निरुक्तं निर्वचन- प्रकारः, शब्दानां तदन्तेन सूत्रेणोच्यतइति श्लोकार्थः ॥

"संख्याविसायपूर्वस्याह्नस्याहनन्यतरस्यां ङौ" ॥ 'द्व्यह्नइति'। तद्धितार्थइति समासः, कालाट्ठञ्, तस्य द्विगोर्लुगनपत्यइति लुक्, राजाहः- सखिभ्यष्टच्, नाह्नोऽह्नएतेभ्य इत्यह्नादेशः। 'द्व्यह्नीति'। विभाषा ङिश्योरि- त्यल्लोपविकल्पः। 'व्यह्न इति'। प्रादिसमासः, शेषं पूर्ववत्। 'सा- याह्नइति'। एकदेशिसमासः, ननु नायं पूर्वापरादिसूत्रे न पठ्यते तत्कथमस्यै- कदेशिसमासस्तत्राह। 'एकदेशिसमासइत्यादि'। नाह्नोऽह्न एतेभ्य इत्यत्र तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः, अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेरिति

प्रक्रान्ताः संख्यादयः परामृश्यन्ते, यदि च पूर्वादय एवैकदेशिना समस्येरन् सायंशब्दात्परस्याह्नो ह्रादेशः स्यात्, एतेभ्य इत्यनेन तस्यापरामृष्टत्वात्, ततश्च तत्र पूर्वस्याह्नशब्दस्येह ग्रहणमनुपपन्नं स्यात्तस्मात्सायशब्दस्य समासस्तावदनुमीयते, तत्र सामान्येन ज्ञापकमाश्रीयते अन्यस्यापि भवतीति, एवं हि प्रयोजनान्तरमपि सिध्यति तद्दर्शयति । 'तेनेति' । स्यतेरन्तकर्मणः सायशब्दो घञन्तो ऽहरवसानवचनः, । 'पूर्वाह्णइति' । समासादि पूर्ववत्, अह्नोदन्तादिति णत्वम् ।

"ढ्रलोपे पूर्वस्य दीर्घोऽणः" ॥ रेफे अकार उच्चारणार्थः, यद्ययं बहुव्रीहिस्तत्पुरुषः स्यात् तदाणः पूर्वत्वं नोपपद्यते, लोपस्याभावरूपत्वाद्यद्यपि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते, एवमपि करणीयमित्यादावण्यनीयरो रेफस्य लोपे परतः पूर्वस्य दीर्घप्रसंग इति तत्पुरुषत्वे दोषं दृष्ट्वा काष्ठेकालवद्व्यधिकरणपदो बहुव्रीहिरित्याह । 'ढकाररेफयोर्लोपो यस्मिन्निति' । अत्र लिङ्गं भव्यगेयप्रवचनीयेति निर्देशः । 'लीढमिति' । लिह आस्वादने, निष्ठा, ढत्वधत्वष्टुत्वढलोपेषु रूपं, मिह सेचने, गुह संवरणे, मुह वैचित्ये । पूर्वग्रहणमनर्थकं तस्मिन्निति निर्दिष्टे पूर्वस्येति सिद्धेरित्यत आह । 'पूर्वग्रहणमित्यादि' । सति पूर्वग्रहणे यद्यपि ढलोपे वचनप्रामाण्यादनुत्तरपदेपि स्यात् रलोपे त्वनुत्तरपदे न स्यात्, नीरक्तमित्यादावुत्तरपदस्यापि संभवात् । 'आतृढमिति' । तृहू हिंसायां यस्य विभाषेतीट् प्रतिषेधः, क्वचिदातृंढमिति पाठः, तदसत्, सेट्त्वादस्य धातोः दृढः स्थूलबलयोरिति हलोपो निपात्यते । 'आवृढमिति' । वृहू उद्यमने ॥

"सहिवहोरोदवर्णस्य" ॥ 'ऊढइति' । अत्रासत्यवर्णग्रहणे वहत इतिस्थिते न तावदोत्वं ढलोपनिमित्तत्वात्, अत्र पूर्वत्रासिद्धमिति ढत्वादीनामसिद्धत्वात्पूर्वं यजादित्वात्संप्रसारणं तस्मिन्कृते पूर्वत्वे वोकारस्योत्वं प्राप्नोति, भाष्ये त्ववर्णग्रहणं प्रत्याख्यातम्, अन्तरङ्गाणि ढत्वादीनि वर्णाश्रयत्वात् बहिरङ्गं संप्रसारणं प्रत्ययविशेषत्वात्तस्याप्यसिद्धत्वात् पूर्वत्रासिद्धमित्यस्यानुपस्थानं, यद्वा ढलोपस्यौत्वदीर्घविधौ निमित्तत्वेनाश्रयणादत्र विषये ढत्वादीनामसिद्धत्वं नास्ति, ततः प्रागेव संप्रसा-

रत्वात्परत्वात् ढत्वादिषु कृतेषु वढइतिस्थिते संप्रसारणं च प्राप्नोत्योत्वं च परत्वादोत्वं ततः संप्रसारणं पूर्वत्वं च न पुनरोत्वं, तस्मिन्नेव प्रयोगे कृतत्वात्तदभावे निमित्तसद्भावाद्दीर्घत्वं प्रवर्तिष्यतइति । 'वर्णग्रहणं किमिति' । ओदस्येति वक्तव्यमिति प्रश्नः । 'कृतायामपीत्यादि' । उत्पूर्वाद्वहेर्लुङि तामादिषु सिचि वृद्धौ सलोपढत्वादीनि, तत्रेदानीमसति वर्णग्रहणे मात्रिकस्योच्यमानो दीर्घस्य न स्यात्, नन्ववर्णः सवर्णान् गृह्णातीत्याकारस्यापि ग्रहणं भवति तत्राह । 'तादपि परस्तपरइति' । इदमेव वर्णग्रहणं लिङ्गं तपरस्तत्कालस्येत्यत्र पञ्चमीसमासोप्याश्रीयतइति, तेनैतच्च चोदनीयं सहिवहोरस्यौदित्येवं कस्माच्च कृतमिति ॥

"साढ्यै साढ्वा साढेति निगमे" ॥ साढेति तृचि रूपमित्यपपाठोयम्, आषाढोऽग्निर्बृहद्वयाः, अषाढमुग्रं सहमानम्, आषाढं युत्सुपृतनासु, अषाढाय सहमानायेत्यादौ निष्ठायामात्वदर्शनात्तस्मान्निष्ठायां रूपमिति पाठः, सूत्रवृत्तौ च साढेति ह्रस्वान्तं छेतव्यं यदि तृजन्तेपि क्वचिदात्वं दृश्यते, तदान्यतरत्सूत्रे इतिकरणस्य प्रकारार्थत्वात्साध्यम् ।

"संहितायाम्" ॥ अनन्तरैर्योगैरुत्तरपदे कार्यं विधीयते, उत्तरपदं च समासे भवति तत्र नित्यमेव संहितया भवितव्यं, संहितैकपदे नित्येति वचनात्, अवग्रहेपि क्वचित्कार्यं दृश्यते क्वचिच्च, इकः काशे अनूकाशमित्यनु–काशमिति, अष्टनः संज्ञायाम्, अष्टाबन्धुरमित्यष्टा–बन्धुरमिति, अतो न तेष्ववश्यमस्योपयोगइति, यत्रानुत्तरपदे कार्यं विधीयते तदुदाहरति । "वक्ष्यति द्व्यचोतस्तिङ इति" । अत्र हि तिङन्तस्य समासासंभवादुत्तरपदइति न संबध्यते । 'विद्माहित्वेति' । विदेर्लट्,मस् विदो लटो वा ॥

"कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य" ॥ 'तदिह लक्षणं गृह्यतइति' । तत्रैव लक्षणशब्दस्य प्रसिद्धत्वात् विष्टादिपर्युदासाच्च, दात्रादिशब्द उपमानात्तदाकारे चिह्ने वर्तते ॥

"नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ" ॥ उपनह्यतइत्युपानत्, संपदादित्वात्कर्मणि क्विप्, न हो धः । 'परीणदिति' । उपसर्गा-

दसमासेपीति षत्वम् । 'नीवृदिति' । नीवृदादौ कर्तरि क्विप्, व्यधेव हिज्यादिसंप्रसारणं, 'चतीषाहमिति' । पूर्वपदादितिषत्वम् । 'परीतहिति' । अनुदात्तेति लोपस्य क्ङिज्झल्निमित्तकत्वात् क्वौ च तदभावात् गमादीनामितीत्यनुनासिकलोपे तुक् ॥

"वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम्" ॥ 'कोठरावणमिति' । वनं पुरगेतिणत्वम् ॥

"वले" ॥ 'वलप्रत्ययो गृह्यतइति' । वल्यभावेन मतुपा साहचर्यात्, तेन वल संवरणइत्यतः पचाद्यचि यत्प्रातिपदिकं तत्र दीर्घो न भवति । वलय इत्येव, भर्तृवलः ॥

"मतौ बह्वचो ऽनजिरादीनाम्" ॥ 'संज्ञायामिति मतोर्वत्वमिति' । यद्यप्युदाहृतेषु मादुपधायाइति वत्वं सिद्धं तथापि संज्ञायामत्रापि परत्वादनेनैव वत्वं युक्तं, प्रत्युदाहरणे च व्रीहिमतीत्यत्रापि नानेन वत्वमित्येतदुपन्यस्तम्, अजिरादिष्वबह्वचां पाठ उपसमस्तार्थः ॥

"इको वहेपीलोः" ॥ ऋषीवहादयः षष्ठीसमासाः, वहशब्दः पचाद्यजन्तः ॥

"उपसर्गस्य घञ्यनुष्ये बहुलम्" ॥ उपसर्गाद्घञो ऽविधानादुत्तरपदाधिकारे ऽप्यत्र तदन्तविधिर्विज्ञायतइत्याह । 'घञन्तउत्तरपदइति' । 'वीमार्गइति' । मृजेर्वृद्धिः, कृत्रिमं, करणेन निर्वृत्तं, पुरुषव्यापाराभिनिर्वृत्तमित्यर्थः । निषीदत्यस्मिन्पापमिति निषादः, हलश्चेति घञ् ॥

"इकः काशे" ॥ 'पचाद्यच्प्रत्ययान्तोयं काशशब्दइति' । न घञन्तः, तत्र पूर्वेणैव सिद्धं, यथा निगमे प्राकाशावध्वर्यवे ददातीति, इको वहेपीलोरित्यत्र पूर्वपदमात्रस्येष्यते, इह तूपसर्गस्य, तेन द्विरिकइत्युक्तम् ॥

"दस्ति" ॥ 'दाइत्येतस्येत्यादि' । अत्र तकारादिशब्दः कर्मधारयः । 'तस्मिन्परतइति' । यस्मिन्विधिस्तदादाविति वचनात्तदादावुत्तरपदे परतइत्यर्थः । दाइत्येतस्य संबन्धी यस्तकारस्तदादावुत्तरपदे दीर्घ इत्ययमर्थो विवक्षितः । 'नीत्तमिति' । ननु चात्र तकार आदिर्न

१ अनुदात्तेत्यादि तदभावादित्यन्तो ग्रन्थः २ । ३ । पु॰ नास्ति ।

भवति, यस्तावदच उपसर्गात्त इति तकारः सो ऽलोन्त्यस्येत्यन्तस्य क्रियते, योपि दकारस्य खरि चेति तकारः सोऽप्यस्मिन्दीर्घे कर्तव्ये ऽसिद्ध इत आह । 'अच उपसर्गात्त इत्यादि' । उच्यते चेदं तकारादावुत्तरपद इति, यदि चर्त्वमसिद्धं स्याद्दीर्घविधिरनर्थकः स्यादत आश्रयात्सिद्धं चर्त्वं तेन तकार आदिरुत्तरपदस्य संभवतीत्यर्थः । यद्यपीत्यनेनैतद्दर्शयति द्वितकारपक्षस्याश्रयणे न किञ्चिद्दुष्टव्यमिति । 'सुदत्तमिति' ॥

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तं चेति चेष्यते ॥

इत्यनयेष्वात्र ददादेशः ॥

"छन्दसि च" ॥ 'अष्टाकपालमिति' । आन्महत इत्यत्राष्टनः कपाले हविषीति अष्टागवं शकटमिति च व्युत्पादितम्, इदं तु व्युत्पत्तिविकल्पप्रदर्शनार्थमात्वं वा दीर्घो वेति ॥

"विश्वस्य वसुराटोः" ॥ 'विश्वाराडिति' । विश्वस्मिन्राजत इति सत्सूद्विषेत्यादिना क्विप् । 'यत्रास्यैतदिति' । पदसंज्ञाविषय इत्यर्थः ॥

"ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" ॥ मन्त्र इति प्रकृते ऋग्ग्रहणं मन्त्रविशेषप्रतिपत्त्यर्थम्, घ इति स्वरूपग्रहणं न तरप्तमपोः, छन्दसि घशब्दस्यैव दीर्घदर्शनात् । 'उत वाघास्यालादिति' । भार्याया भ्राता स्यालस्ततः पञ्चमी । 'तङिति थादेशस्य ङित्त्वपक्षे ग्रहणमिति' । लोण्मध्यमपुरुषबहुवचनस्य थस्य लोटो लङ्वदित्यतिदेशेन यस्तादेशस्तस्य यदा ङित्त्वं तदा ग्रहणमित्यर्थः । 'शृणोत ग्रावाण इति' । तप्तनप्तनथनाश्चेति तबादेशः, अत्र पित्त्वान्ङित्त्वं नास्ति, तङिति प्रत्याहारग्रहणमिति तु वृत्तौ न क्वापि पाठो दृश्यते, यच्च तत्रोक्तं लोण्मध्यमपुरुषबहुवचनादारभ्या महिङो ङकारात्प्रत्याहार इति तदप्ययुक्तम्, वर्णान्तरविच्छेदेन प्रत्याहारायोगात् । 'उरुष्याण इति' । उरुष्यतिः कण्ड्वादियगन्तो रक्षति कर्मा लोट्, सेर्हिः, अतो हेरिति लुक्, न इत्यस्य नश्च धातुस्थोरुषुभ्य इति णत्वम् ॥

"इकः सुञि" ॥ सुञिति निपातस्य ग्रहणं तस्य च ञकारोऽत्रैव विशेषणार्थः, । 'ऊषुण इति' । उकारस्य दीर्घः ॥

“द्व्यचोऽतस्तिङः” ॥ ‘भवतेति’। लोण्मध्यमपुरुषबहुवचनम्। ‘वक्षि यक्षीति’। वहेर्यजेश्च लेड्,सिप्,सिब्बहुलं लेटीत्ययं तु विधिर्न भवति, बहुलवचनात्, बहुलं छन्दसीति शपो लुक्, वहेर्ढत्वं, यजेः षत्वं, षढोः कः सि,द्वयोरपि देवानावह यज चेत्यग्निं प्रति भरद्वाजस्य वचनम् ॥

“निपातस्य च” ॥ एवशब्दश्चादिषु पाठान्निपातः, अच्छगत्यर्थवदेष्वित्यच्छशब्दः ॥

“अन्येषामपि दृश्यते” ॥ मन्त्रइति निवृत्तम्,। ‘केशाकेशीति’। तत्र तेनेदमित्यादिना बहुव्रीहिः, इच् कर्मव्यतिहारे। ‘जलाषाडिति’। छन्दसि सह इति ण्विः, सहेस्साडः स इति षत्वम्। ‘पूरुषइति’। पुरुषशब्दस्याद्यचो दीर्घः। ‘शुनोदन्तेत्यादि’। तत्र श्वादंष्ट्रइति बहुव्रीहिरन्यत्र तत्पुरुषो बहुव्रीहिर्वा। दंष्ट्रेति ह्रस्वान्तस्य ग्रहणाद्दीर्घान्ते नायं दीर्घो भवतीत्याहुः। अन्ये तु दीर्घान्तमेव पठन्तोऽविशेषेणेच्छन्ति ॥

“चौ” ॥ ‘अञ्चतिर्गृह्यतइति’। चवर्गस्य तु ग्रहणं न भवति व्याख्यानात्। ‘दधीचइति’। ननु चान्तरङ्गत्वाद्यणादेशेनैव प्राग्भवितव्यम्, अकारलोपो भस्य विधीयते, भसंज्ञा च यकारादावजादौ च संभवतीति बहिरङ्गः, दीर्घत्वं तु लोपमपेक्षतइति बहिरङ्गमत आह। ‘अन्तरङ्गेऽपीति’। एवं मन्यते, इह दीर्घश्रुत्या अचश्चेत्युपतिष्ठते, तत्राचा पूर्वपदं विशेष्यते, अजन्तस्य पूर्वपदस्येति, यदि च यणादेशः स्यान्न क्वाप्यजन्तपूर्वपदं स्यात्, प्राच इत्यादावपि पूर्वमेव सवर्णदीर्घत्वप्रसङ्गस्तस्मादन्तरङ्गोऽपि विधिर्बाध्यतइति, अत्र च लिङ्गं प्रतीच इति निर्देशः ॥

“संप्रसारणस्य” ॥ ‘अकृत एवेत्यादि’। कारीषगन्धिपुत्र इति स्थिते ह्रस्वत्वं च प्राप्नोति अनेन दीर्घत्वं च, तस्यावकाशः, ग्रामणि कुलं, ह्रस्वाभावपक्षे दीर्घस्यावकाशः, पक्षान्तरउभयप्रसङ्गः, यद्यपि ह्रस्वाभावपक्षे सावकाशं दीर्घत्वं तथापि तेन परत्वाद् ह्रस्वो बाध्यते, अथेदानीं दीर्घे कृते पुनः प्रसङ्गः[1] कस्मान्न भवति तत्राह। ‘पुनः प्रसङ्गविज्ञानं चेति’।

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
षष्ठस्याध्यायस्य तृतीयः पादः ॥

१ प्रसङ्गाद्ध्रस्वत्वमिति ॥ पु॰ पा॰।

"अङ्गस्य" ॥ 'अधिकारोयमिति' । स्वरितत्वात् । इह केचिन्मन्यन्ते प्रागभ्यासविकारेभ्योयमङ्गाधिकारः, एवं हि 'गुणो यङ्लुको'रित्यत्र लुग्ग्रहणं न कर्त्तव्यं भवति, कथं, प्रत्ययलक्षणेनैव सिद्धं,[1] यदि त्वभ्यासविकारेष्वयमधिकारः स्यात्ततोऽङ्गाधिकारविहितमि[2]ति नलुमताङ्गस्येति प्रतिषेधः स्यादिति । वृत्तिकारस्तु मन्यते यदि प्रागभ्यासविकारेभ्योऽङ्गाधिकारः, वव्रश्चेति वृश्चतेर्लिटि लिट्यभ्यासस्योभयेषामिति रेफस्य सम्प्रसारणे उरदत्वे हलादि[3]शेषे च कृते वकारस्यापि सम्प्रसारणं प्राप्नोति, तस्य न सम्प्रसारणे सम्प्रसारणमिति प्रतिषेध इष्यते, स न प्राप्नोति, उरदत्वस्यासम्प्रसारणत्वात्, न च तस्य स्थानिवत्त्वम्, अपरनिमित्तत्वात् । आ सप्तमाध्यायपरिसमाप्तेः पुनरङ्गाधिकारे सत्युरदत्वं परनिमित्तकं भवति, अङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपात् । यदुक्तं लुग्ग्रहणं न कर्त्तव्यं भवतीति, तदपि न, नहि तत्राङ्गाधिकारविहितस्यैव प्रतिषेधः, कस्य तर्हि, लुमता लुप्ते प्रत्यये वस्तुतो यदङ्गं तस्य प्राप्तं यत्कार्यमाङ्गमनाङ्गं वा तस्य सर्वस्य प्रतिषेधः । तस्मादासप्तमाध्यायपरिसमाप्तेरयमङ्गाधिकारो युक्त इति, हूत इत्यादौ यजादित्वात्सम्प्रसारणम् । 'जीनइति' । ग्रहिज्येतिसूत्रेण सम्प्रसारणं, ल्वादिभ्य इति निष्ठानत्वम् । 'निवृतं दुवृतमिति' । वेञ् तन्तुसन्ताने, यजादिः, अत्राङ्गेनन्तर्भूतयोर्निर्दुरोरवयवौ यौ हलौ तदाश्रयं दीर्घत्वं न भवति । 'क्रिमिणामिति' । क्रिमिपामन्शब्दाभ्यां मत्वर्थे पामादिभ्यो नः, पामनो नलोपः, स्त्रियां टाप्, द्वितीयैकवचनम्, अत्र नामिति समुदायस्याप्रत्ययत्वात्र तदपेक्षं पूर्वस्याङ्गत्वमिति नप्रत्ययापेक्षयाङ्गत्वेपि दीर्घत्वं न भवति, पामनामित्यत्र नलोपे कृते ऽजन्तत्वाद् दीर्घप्रसङ्गः । न च नलोपस्यासिद्धत्वम्, असुब्विधित्वात्, नह्यस्यां दशायां दीर्घत्वं सुब्विधिर्भवति । अस्तु वाऽसिद्धत्वं, नोपधाया इति दीर्घत्वप्रसङ्गः, भिस्सा चोदनः, भिस्सटा

१ सिद्धत्वादिति पा· इं· पु· ।
२ इतीति नास्ति· इं· पु· ।
३ हलादिशेषे इति नास्ति· इं· पु·

दधि । ननु क्रिमिणामित्यत्र प्रत्ययस्यार्थवत्त्वेऽपि समुदायोऽनर्थकः, परस्परासम्बन्धात्, एवं भिस्साभिस्सद्वयोर्भिस्शब्दः, ततश्चार्थवद्ग्रहणे नानर्थकस्येत्येव न भविष्यति तत्राह । 'अङ्गाधिकार इत्यादि' । सन्सम्प्रसारणदीर्घत्वैत्वतातङियङुवङ्नुट्ह्रस्वत्वनत्वे चाङ्गस्येत्यधिकारे प्रयोजनं, सनि दीर्घः प्रयोजनं, दधि सनोतीति दधिसेत्यत्र माभूत्, सम्प्रसारणदीर्घत्वं निरुतं दुरुतमित्यत्र माभूत्, एत्वमेर्लिङि वान्यस्य संयोगादेः, निर्यायात् निर्वायादित्यत्र माभूत्, तातङ् निपातस्य तोर्माभूत् जीव तु त्वम्, इयङुवङ् श्रियं वर्षम् इत्यत्र माभूत्, नुट्, ह्रस्वनद्यापो नुट्, कुमारी आमित्याहेत्यत्र माभूत्, ह्रस्वत्वं केणः, कुमारी कस्मै स्पृहयति, कुमार्याः कं सुखं कुमारीकमित्यत्र मा भूत्, नत्वम्, अपो भि अब्भार इत्यत्र माभूदित्येवमर्थं कर्तव्योऽङ्गाधिकारस्सोन्यार्थः कृतो नामीत्यत्रापि दीर्घत्वं व्यवस्थापयति अभिमते विषये नियमयति । 'अर्थवद्ग्रहणपरिभाषयेति' । उपलक्षणमेतत् । आनेमुक्, प्राण इत्यत्र माभूत् । अकृत्सार्वधातुकयोर्दीर्घो दधि यातमित्यत्र माभूत् । इत्येवमर्थं लक्षणप्रतिपदोक्तपरिभाषा नञिवयुक्तन्यायश्च नाश्रयितव्यो भवति । षष्ठी स्थानेयोगेति वचनादङ्गस्येति स्थानषष्ठीयं, ततश्चातो भिस ऐसित्यत्रात इति पञ्चम्यन्तमङ्गस्येत्यस्य षष्ठ्यन्तस्य सामानाधिकरण्येन विशेषणं नोपपद्यत इत्यकारमात्रस्य ग्रहणात् ब्राह्मणभिस्से यादावपि प्रसङ्गः । अवयवषष्ठ्यादीनां चाप्रसिद्धिः, ततश्च ऊदुपधाया गोहोऽङ्गस्येति स्थानषष्ठ्या अन्त्येल्युपसंहाराद्गोहश्चान्त्यस्य स्यादुपधायाश्चेति वचनादुपधामात्रस्य च, एवं शास इदङ् हलोरित्यादावपीत्याशङ्कायामाह । 'अङ्गस्येति'[1] । 'सम्बन्धसामान्ये षष्ठीति' । अयमभिप्रायः । अधिकारोयं स च परार्थः, षष्ठीस्थाने योगेत्यपि परिभाषा परार्था, न च परार्थयोः परस्परं सम्बन्धोऽस्ति, यथोक्तं गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति, ततश्चाङ्गस्येति षष्ठी स्वभावप्रयुक्तं सम्बन्धसामान्यमेवार्थमभिधत्त इति । 'यथायोगमिति' । यस्मिन्योगे यस्य सम्बन्धविशेषस्याभिव्यञ्जकमस्ति तस्मिन्योगे तत्रैव विशेषे पर्यवस्यतीत्यर्थः ।

१ अङ्गस्येति नास्ति इं. पु. ।

तद्यथा । 'हन्तेर्जः' इत्यादौ स्थानषष्ठी, 'ऊदुपधाया गोहः' इत्यवयवषष्ठी, 'युवोरनाकौ' वित्यादौ निमित्तनिमित्तिसम्बन्धे षष्ठी, लोकवत्तद्यथा लोके देवदत्तस्येत्यभेदेन प्रवृत्ता षष्ठी पुत्रः पाणिः कम्बल इति प्रतिसम्बन्धिवशात्तत्रतत्र विशेषे पर्यवस्यति । 'अथ वेत्यादि' । पूर्वं विवक्षितोऽपि षष्ठ्यर्थः सामान्यरूप इत्युक्तमिदानीं तु प्रयोगसाधुत्वायैव षष्ठ्युच्चार्यते न त्वर्थविवक्षयेत्युच्यते, अवश्यं च यया कया चन विभक्त्या निर्देष्टव्यं, षष्ठ्यनुरोधस्तु बाहुल्येन तदर्थस्योपयोगित्वमात्रत्वात् । 'यथायोगं विभक्तिषु विपरिणम्यतइति' । लोकवदेव । तद्यथा उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनं देवदत्तं, किमनेन कृत्यं देवदत्तेनेति, तेन 'तो भिस ऐस' इत्यत्र पञ्चम्या विपरिणामे सति अकारान्तादङ्गादित्ययमर्थो भवति, आदिशब्देन 'युष्मदस्मद्भ्यां ङसोऽश्' इत्येवमादिर्गृह्यते । अपिशब्देनैतद्दर्शयति न केवलं षष्ठ्यर्थएव सप्त विशेषः सिध्यति, अपि तु पञ्चम्यर्थेपीति, पूर्वत्र तु पक्षे 'अतो भिस ऐस' इत्यत्र निमित्तनिमित्तिसम्बन्धे षष्ठी, अङ्गस्य निमित्तं यो भिस्, कस्याङ्गस्य निमित्तं यस्मिन्नङ्गमित्येतद्भवति, कस्मिंश्चैतद्भवति, प्रत्यये ॥

"हलः" । 'हल इति किमिति' । केनेदानीमुदाहरणेषु दीर्घसिद्धिः, एवं मन्यते, यथा शेषइति लक्षणं चाधिकारश्च, तथाङ्गस्येत्येतदपि, ततश्चाभिमते विषये दीर्घो भविष्यतीति, अतिप्रसङ्ग इति सूत्रम् । 'विद्धो विचित इति' । व्यध ताडने, व्यच व्याजीकरणे, ग्रहिज्यादिना संप्रसारणम् । 'अण इत्येवेति' । 'ढ्रलोपे पूर्वस्य दीर्घोणः' इत्यतः । न च तस्येकः काशइतोऽण्ग्रहणेन विच्छेदः । तत्र हि विरोधाभावादिण्ग्रहणेनाणेव विशेष्यते इकोण इति, अथेदानीं चावित्यारभ्याण इत्येवानुवर्तिष्यते नेक इति । 'तृतीयेति वा निपातनादिति' । मा नामाण इत्येतदनुवृतत्, द्वितीयतृतीयचतुर्थेति योयं निर्देशस्तस्मादेव निपातनादनृणो दीर्घत्वं न भविष्यतीत्यर्थः ।

नन्वेकमङ्गग्रहणं प्रकृतं तद्धलो यदि ।
विशेषणं स्यात्कार्यित्वमङ्गस्येह न लभ्यते ॥

ततश्च विद्धमित्यादावपि दीर्घः प्रसज्यते ।
अथ निर्दिश्यते कार्यो नाहलः स्याद्विशेषणम् ॥
ततो निहतमित्यादावपि दीर्घत्वमापतेत् ।
सकृच्छ्रुतस्य चैकस्य युज्यते नोभयार्थता ॥

अत आह । 'अङ्गग्रहणमित्यादि' ।

आवर्तमानं वस्त्वेकमप्यनेकस्य शेषताम् ।
भजते भाजनं यद्वन्नृणामसहभोजने ॥

"नामि" ॥ नामित्येतस्य शास्त्रे क्वचिदप्यविहितत्वात्तत्परिज्ञानार्थमाह । 'नामिति षष्ठीबहुवचनमित्यादि' । नामीति दीर्घपाठस्तु न समीचीनः, । 'आगतनुट्कमिति' । गत्यर्थत्वान्नुमेः कर्मणि कर्तरि वा क्तः । आगतो नुडनेन आगतो वा नुडं तदागतनुट्कम् । 'अग्नीनामित्यादि' । अकारान्तस्य तु 'सुपि चे'ति दीर्घः सिद्धः । 'कर्तृणामिति' । नन्वण इति वर्तते, तत्राह । 'अण इत्येतदिति' । 'न तिसृचतसृ'तिप्रतिषेधादिति भावः । 'उत्तरार्थमिति' । 'नोपधाया' इति दीर्घत्वं सनुट्के आमि यथा स्यात् पञ्चानां सप्तानां, 'षट्चतुर्भ्यश्चे'ति नुट्, चर्मणामित्यादावनुट्के मा भूत् । 'कृते च नुटि दीर्घत्वप्रतिपत्त्यर्थमिति' । आगतनुट्कस्य ग्रहणमित्यनुषङ्गः । 'अन्यथा हीत्यादि' । यद्यागतनुट्कस्य ग्रहणं न क्रियेत ततोऽग्निआमिति स्थिते दीर्घत्वं च प्राप्नोति नुट् च, परो नुट्, नित्यं दीर्घत्वं, कृतेपि नुटि प्राप्नोत्यकृतेपि, ततो दीर्घे कृते ह्रस्वत्वाभावादेव न स्यात्, योयं सिद्धान्ते निमित्तत्वेनोपादानादयमेव सिद्धो नुट् स एव न स्यादित्येवशब्दस्यार्थः । ननु चाह नायं ह्रस्वान्तान्नुडिति, न च नित्यत्वाद्दीर्घे कृते क्वचिदपि ह्रस्वान्तमस्ति, तत एवं विज्ञास्यामः भूतपूर्वं यद् ह्रस्वान्तमिति, ननु चेदं संप्रति ह्रस्वान्तमस्ति, 'न तिसृचतसृ' तिसृणां, चतसृणां, नैतदस्ति, इह तावच्चतसृणामिति षट्चतुर्भ्यश्चेति नुट् सिद्धः, तिसृणामित्यत्रापि 'ह्रस्वनद्यापो नुडित्यत्र त्रेस्त्रय इत्यतस्त्रेरित्यनुवृत्तेरेव नुट् सिद्धः, यदा तर्हि 'नृ चे'ति दीर्घत्वप्रतिषेधस्तदास्त्यवकाशः, न चैकमुदाहरणं योगारम्भं प्रयोज-

र्यात, यद्येतावत्प्रयोजनं स्यान्नद्यापो नुडित्येव ब्रूयात्, ह्रस्वग्रहणात्तु भूतपूर्वगतिर्विज्ञायते, यद्येवमस्थ्नां दध्नाम्, 'अस्थिदधिसक्थ्यक्ष्णा' मित्यनङि कृतेपि भूतपूर्वमेतद्ध्रस्वान्तमिति नुट् प्राप्नोति, ततश्च नोपधाया इति दीर्घत्वे नलोपे च अस्थानामिति प्राप्नोति, यद्वा यदा नुड्विधौ भूतपूर्वगतिस्तदा नुण्नित्यो भवति, अनङ् त्वनित्य इति पूर्वं नुटि कृते ऽस्थीनामिति प्राप्नोति, द्विपदामित्यादौ पादस्य लोपे कृते नुट् प्रसंगः, एवं पद्भ्वोमासित्यत्र ये ह्रस्वान्तस्यादेशास्तेष्वपि प्रसङ्गो योज्यः, तस्मान्न शक्यं भूतपूर्वगतिविज्ञानं, यच्चोक्तं त्रेरित्यनुवृत्तेरेव तिसृणामित्यत्र नुट् सिद्ध इति, तदप्यप्रमाणं, नहि द्वयोरन्यतरस्य वा ऽपेक्षायामसत्यां चकारे चासत्यनुवृत्तिः स्वध्यवसाना, तस्मादन्यथा हि नुडेव न स्यादिति स्थितमेतत् । उक्तमेवार्थं संग्रहश्लोके पठति । 'नामिदीर्घ इति' । यदि नुटमकृत्वा आमीत्येव सूत्रं क्रियेतेत्यर्थः । 'वचनादिति' । वचनसामर्थ्याद्भूतपूर्वगतिर्विज्ञायतइति भावः । 'यत्र तचास्तीति' । तिसृणामित्यत्र यत्र दीर्घत्वं नास्ति स वचनस्यावकाश इत्यर्थः । 'नोपधायाश्चेति' । चशब्दः समुच्चये ॥

"न तिसृचतसृ" ॥ सूत्रे षष्ठीद्विवचनस्य लुका निर्द्देशः । 'तिसृणां चतसृणामिति' । कथंपुनरत्र दीर्घप्रसङ्गः, यावताजन्तस्य दीर्घो नामीति, न चात्राजन्तता सम्भवति, कथं, तिसृआम् इति स्थिते नुट् प्राप्नोति 'अचि र ऋत' इति रादेशश्च, परत्वाद्रादेशस्तत्राह । 'इदमेवेति' ॥

"छन्दस्युभयथा" ॥ 'तिसृ चतसृ इत्येतयोरिति' । अविशेषेण तु विकल्पो दृश्यते, अयं पितृणामग्निः, धाता धातृणामिति तैत्तिरीयके ह्रस्वः, बह्वृचे दीर्घः ॥

"नृ च" ॥ 'केचिदत्रेति' । छन्दस्युभयथेत्यतः । ये त्वनुवर्त्तयन्ति ते पूर्वसूत्रे तिसृचतसृग्रहणमनुवर्त्तयन्ति ॥

"नोपधायाः" ॥ अनजन्तार्थ आरम्भः, न इति षष्ठ्येकवचनान्तं, सौत्रत्वान्निर्द्देशस्य यकारलोपस्यासिद्धत्वमनाश्रित्याद्गुणः । अपर आह,

नेत्यविभक्तिको निर्देशः, अकारश्चोच्चारणार्थ इति, पञ्चानामित्यादौ सुब्विधौ नलोपस्यासिद्धत्वान्नान्तत्वम्, उपधाग्रहणमाद्यचो माभूत् । नैतदस्ति प्रयोजनं, दीर्घश्रुत्योपस्थापितमचं नान्परतया विशेषयिष्यामः, उत्तरत्र च सर्वनामस्थानपरतया, तत्र येन नाव्यवधानमित्येकेन वर्णेन व्यवधाने भविष्यति, उत्तरार्थन्तु, इन्हन्पूषार्यम्णां शावित्यत्र दीर्घविधे-रुपधानियमादिति वक्ष्यति तदर्थमुपधाग्रहणम् ॥

"सर्वनामस्थाने चासंबुद्धौ" ॥ 'राजनीति' । विभाषा ङिश्योरि-त्यल्लोपाभावपक्षे दीर्घत्वप्रसङ्गः, एवं चर्मणामित्यादावपि प्रसङ्गः ॥

"वा षपूर्वस्य निगमे" ॥ अत्र दीर्घश्रुत्योपस्थापितस्याचो विशेषणमुपधाग्रहणं, षपूर्वस्येत्येतदपि तस्यैव विशेषणं, तेन पुल्लिङ्गस्याविरोध इति मन्यमान आह । 'षपूर्वस्याच इति' । 'ऋभुक्षाणमिति' । ऋभुक्षिशब्द उणादिषु निपातितः, 'इतोत्सर्वनामस्थान'इत्यकारः ॥

"सान्तमहतस्संयोगस्य" ॥ सकारे ऽकार उच्चारणार्थः, सान्तो यस्य स सान्तः, सान्तेति पृथक्पदं लुप्तषष्ठीकं संयोगस्य विशेषणं, तद्विशिष्टसंयोगो नकारस्य विशेषणं, महच्छब्दोपि तस्यैव विशेषणं, सर्वनामस्थानइत्यनेनानुवृत्तेन सान्तः संयोगो महच्छब्दश्च विशेष्यते, तेन हंसः हंसावित्यत्र दीर्घाभावः । 'महतश्चेति' । यो नकार इत्यपेक्ष्यते । 'तस्येति' । नकारस्य, कः पुनर्नकारस्योपधायाश्च संबन्धः, यावता यस्मिन्समुदाये योन्त्यादलः पूर्वः स तं प्रत्युपधा, सत्यम्, इह तु गत्यभावात्सामीप्यलक्षणः संबन्धः, नकारसमीपवर्तिन्यास्तमेव नकारान्तं समुदायं प्रत्युपधाया इत्यर्थः । कल्पसूत्रेषु च प्रौढोय व्यवहारः । तद्यथा विसर्जनीयोऽनत्यत्तरोपधो रिफितइति । 'श्रेयानिति' । 'प्रशस्यस्य श्रः' । उगिदचामिति नुम् । 'श्रेयांसीति' । 'जश्शसोः शिः, 'नपुंसकस्य झलच'इति नुम् । 'महानिति' । बृहन्महच्छतृवच्चेति वचनादुगिदचा-मिति नुम् ॥

"अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्" ॥ 'आप इति' । अप्शब्दस्य नित्यं बहुवचनान्तत्वाद् द्विवचनैकवचनयोरसंभवः ।

'बह्वाम्मीति' । बहुव्रीहिः । अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति तदन्तविधिरभ्युपगतः, किं पुनरत्रेष्टव्यं, न तावदृक्पूरब्धूरिति प्राप्तस्य समासान्तस्याभाव इत्याह । 'तत्रेति' । यत्पुनरेष्टव्यं तद्दर्शयति । 'नित्यमपीति' । कृताकृतप्रसङ्गित्वान्नित्यो नुम् । 'जनापवादानिति'। न लोकाव्ययेत्यादिना तृन्योगे षष्ठीप्रतिषेधात् कर्मणि द्वितीयैव भवति, एतच्च तृचन्तत्वाभिव्यक्तये प्रयुक्तम्, एतेन कटस्येति व्याख्यातं, 'तुरिष्ठेमेयस्सु' 'तुश्छन्दसीतिवत् सामान्यनिर्देशे कर्त्तव्ये तृन्तृचोर्भेदेनोपादाने प्रयोजनं चिन्त्यम् । 'अव्युत्पत्तिपक्षइति' । नावश्यं व्युत्पत्तिकार्यं भवत्येतदतः कृकमिकंसेत्यत्र कंसग्रहणाल्लभ्यते, ज्ञापकादिति भावः । 'व्युत्पत्तिपक्षइति' । नमेस्तृचि मकारस्य पकारः, नप्ता, नयतेस्तृनि षुक् गुणश्च नेष्टा, त्विषेश्चोपधायाः, त्वष्टा, क्षदेस्तृन्यनिट्त्वं, क्षत्ता, होता पोता, तृनेव, प्रपूर्वाच्छासेस्तृच्, अनिट्त्वं च, प्रशास्ता । 'एवं भूतानामिति' । अस्यैव विवरणं संज्ञाशब्दानामिति ॥

"इन्हन्पूषार्यम्णां शौ" ॥ 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति' इन्ग्रहणेन तदन्तं गृह्यते, इतरेभ्योऽपि केवलेभ्यः शिर्न संभवति, कथं, हविति हन्तेः क्विबन्तस्य ग्रहणं, ब्रह्माद्युपपदाच्च हन्तेःक्विब्विहितः, इतरौ च पुल्लिङ्गौ, तस्मात्सर्वैरेव तदन्तविधिर्विज्ञायतइत्याह । 'इन्हन्पूषचर्यम्णित्येवमन्तानामिति' । 'बहुदण्डीनीति' ।

वैषम्यपरिहारार्थमाद्ययोर्बहुपूर्वयोः ।
उपन्यासो बहुत्वं च पूषादौ कालभेदतः ॥

इति, इह दण्डीनि ब्राह्मणकुलानि ब्रह्महाणि ब्राह्मणकुलानि, इत्यन्तरेणापि बहुशब्दमाद्ययोरिन्हन्नित्येतयोरुदाहरणत्वेनोपन्यासः संभवतीति चोद्यं, वैषम्यपरिहारार्थं तु बहुपूर्वयोरुपन्यास इत्युत्तरं, वृत्रहा इन्द्रः, स एकः, एवं पूषार्यमणौ, तेषां कथं बहुत्वं विशेषणमिति चोद्यं, मन्वन्तरादिकालभेदेनेन्द्रादयो भिद्यन्तइत्युत्तरम् । यद्वा बहुषु यज्ञेष्वाहूता इन्द्रादयो यैर्ब्राह्मणकुलैस्तानि तथोच्यन्ते ।

ननु च 'सर्वनामस्थाने चासंबुद्धा' विति दीर्घत्वं सिद्धं तत्किमर्थो ऽयमारम्भ इत्याह। 'सिद्धे सत्यारम्भ इति'। 'इन्नादीनामुपधायाः शावेवेति'। विपरीतस्तु नियमो न भवति इन्नादीनामेव शाविति, सर्वनामानि, तान्येकवचनद्विवचनबहुवचनान्येकश इति निर्देशात्। 'वृत्रहणाविति'। नन्वत्रास्तु 'सर्वनामस्थाने चासंबुद्धा' विति प्राप्तस्य दीर्घस्य नियमेन व्यावृत्तिः, 'अनुनासिकस्य क्विझलोःक्ङिती' ति प्राप्तो दीर्घः कस्मान्न भवति, नह्यसौ तस्य नियमः, अप्रकृतत्वादसंशब्दितत्वाच्च, सत्यं, नियमविधानसामर्थ्यात्तु तस्याप्यनेन निवृत्तिः, अस्त्वेवं सर्वनामस्थाने, विभक्त्यन्तरे तु सर्वत्रानुनासिकलक्षणो दीर्घः प्राप्नोत्यत आह। 'दीर्घविधिरिति'। य इह शास्त्रे इन्नादीनां दीर्घविधिस्तं विनियम्य तस्य नियमं कृत्वा, क्व, सुटि सर्वनामस्थाने, उपलक्षणमेतत्, तेन शसादेशोपि शिर्गृह्यते, इतिशब्दो हेतौ, स च भिन्नक्रमः श्लोकान्ते द्रष्टव्यः, ततः किं कुर्यात्, शौ नियमं पुनर्विदध्यात्। एवकारो भिन्नक्रमो नेत्यस्यानन्तरं द्रष्टव्यः, एकस्मिन्योगे नियमद्वयस्य कर्तुमशक्यत्वाद्योगविभागः कर्त्तव्य इत्यर्थोदुक्तं भवति, इन्हन्पूषार्यम्णामित्येको योगः, सर्वनामस्थानइति च वर्त्तते, इन्नादीनां च सर्वनामस्थानएव दीर्घो भवतीत्यर्थः, अत्र हन्व्यतिरिक्तानां ग्रहणमुत्तरार्थं, ततः शाविति द्वितीयो योगः, सर्वनामस्थानेपि शावेव न सर्वत्र, ततः सौ चेति सूत्रं विधेयम्,। एवं च योगद्वये क्रियमाणे च सति यदिष्टं संपद्यते तद्दर्शयति। 'भ्रूणहनीति तथास्य न दुष्येदिति'। तथेति योगद्वये सतीत्यर्थः। अस्येति, आचार्यस्य। भ्रूणहनीति सप्तम्येकवचने 'विभाषा ङिश्यो' रित्यल्लोपाभावपक्षे ऽनुनासिकलक्षणो दीर्घो न भवतीत्यर्थः। सप्तम्येकवचनमुपलक्षणं सर्वत्र दीर्घप्रसंगस्योक्तत्वात्, एवं योगविभागेन चोद्यं परिहृत्यैकस्मिन्योगे परिहर्त्तुमाह। 'शास्मीति'। शास्मि उपदिशामि तं प्रकारं येनैकयोगेपि दोषाभावः। अत्रापि सुडिति सर्वनामस्थानं लक्ष्यते सर्वनामस्थानग्रहणं निवर्त्य अनाश्रितसर्वनामस्थानत्वविशेषे प्रत्ययत्वमात्राश्रयेण, शौ नियमं कुरु वा, एवं वा कुरु पूर्वोक्तं वा प्रकारमित्यर्थः, असत्यपि शास्त्रीयेधिकारे लौकिकापेक्षालक्षणः

स्यात् संबन्ध इति तन्निवृत्त्यर्थमाह । 'अप्यसमीत्येति' । अपेक्षालक्षणमपि संबन्धमनाश्रित्येत्यर्थः । एवं च विशेषमनपेक्ष्य शौ नियमः क्रियमाणः प्रत्ययत्वेन तुल्यजातीये सर्वत्र प्रत्ययान्तरे निवृत्तिं करोति, यथेत्र वृत्रहेवाचरति वृत्रहायतइति क्यङि 'अकृत्सार्वधातुकयो' रित्यपि दीर्घो न स्यादत आह । 'दीर्घविधे रिति' । निर्द्धारणएषा षष्ठी, जातावेकवचनम्, उपधाशब्देन उपधालक्षणं दीर्घत्वमुच्यते, दीर्घविधानमध्ये उपधालक्षणस्य दीर्घस्य नियमादित्यर्थः । एतच्चोपधाग्रहणानुवृत्तेर्लभ्यते । हन्तेर्या हन्तयः, तस्मिन्यो दीर्घविधिस्तत्र न दोष इत्यर्थः । क्वचित्तु हन्तेति निपातोभिमुखीकरणार्थः पठ्यते, अत्रा[1]पि यिग्रहणमुपलक्षणं, दण्डीभूतइत्यत्र 'च्वौ चे' त्यपि दीर्घो भवत्येव । इदानीमसत्यपि योगविभागे सर्वनामस्थानापेक्षायां सत्यामपि न दोष इत्याह । 'सुट्यपीति' । अपिशब्दो प्रकृतप्रतिषेध इत्यनेन संबन्धनीयः । वाशब्दः पक्षान्तरं द्योतयति । अत्रापि सुडिति सर्वनामस्थानोपलक्षणं, तदयमर्थः । अथ वा सुटि सर्वनामस्थाने प्रकृते प्रकरणादपेक्ष्यमाणे, एतेन लौकिकमधिकारमभ्युपगच्छति, शास्त्रीयस्तु नैवाभ्युपगम्यते । 'अनवकाशइति' । हेतुगर्भमिदं विशेषणं, यतो ऽनवकाशः शौ नियमोऽतो ऽप्रकृतस्याप्यनुनासिकदीर्घस्य प्रतिषेधे व्यावृत्तौ कर्त्तव्याय्ममपि प्रवर्त्तते । कथमनवकाशत्वमत आह । 'यस्य हीति' । द्विविधं सर्वनामस्थानं शिः सुट् च, तत्र शिर्नपुंसकस्य संबन्धी, तत एतस्य विधानात्, सट् तु स्त्रीपुंसयोः, 'सुडनपुंसकस्ये' ति वचनात्, ततश्च यस्य नपुंसकस्य संबन्धिनि शौ नियमः क्रियते सुटि सर्वनामस्थानसंज्ञके नैतन्नपुंसके[2]संभवति, अनपुंसकस्येति वचनात्, हिशब्दो हेतौ, यस्मादेवं तेन कारणेन तत्र सर्वनामस्थाने सुटि नियन्तव्यं व्यावर्त्यं दीर्घत्वं न संभवतीति सामर्थ्यादविशेषण नियम आश्रीयते, एतदुक्तं भवति, यदि प्रकरणप्राप्तं सर्वनामस्थानत्वं शेराश्रीयते तदा नपुंसकसंबन्धित्वमप्याश्रयणीयमुभयाश्रयणे वायमर्थो भवति, दचादीनां नपुंसकानां शावेव

१ अत्रापीति नास्ति इं॰ पु॰ ।
२ नपुंसकलृमिति पाठः इं॰ पु॰ ।

सर्वनामस्थाने दीर्घत्वमिति, एवंविधस्य नियमस्य किं तुल्यजातीयं व्यावर्त्तनीयं नपुंसकानामेवैषां सर्वनामस्थानान्तरं, न च तदस्तीति नियमविधानसामर्थ्यात्प्रकरणप्राप्तं सर्वनामस्थानत्वं सामर्थ्यप्राप्तं च नपुंसकत्वमुभयमप्यविशेषात्परित्यज्य प्रत्ययमात्रे स्त्रीपुंससंबन्धिनि दीर्घत्वं व्यावर्त्यतइति । विनियम्य,साधु नियम्य, । इन्तेरनुनासिकस्येत्यादिना प्रथमश्लोकं व्याचष्टे,सर्वनामस्थानइत्यादिना द्वितीयस्य पूर्वार्द्धं, यस्त्वित्यादिना पश्चार्द्धं, अथ वेत्यादिना तृतीयश्लोकम् । 'अनुवर्त्तमानेपीति' । लौकिक्यत्रानुवृत्तिर्विवक्षिता न शास्त्रीया स्वरितत्वनिबन्धना, तथा हि सति सामर्थ्यप्राप्तस्य नपुंकत्वस्यैव परित्यागः स्यात्, न वचनप्राप्तस्य सर्वनामस्थानत्वस्य, सामर्थ्यादित्युक्तं तदेव दर्शयति । 'शिशब्दो हीति' । 'अविशेषेणेति' । नपुंसकत्वं सर्वनामस्थानत्वं च विशेषमनाश्रित्येत्यर्थः । पूर्वं नपुंसकत्वाप्रसञ्जनेन केवलसर्वनामस्थानत्वाश्रयेण नियमो दोषप्रसङ्गात्तथा नाश्रीयतइत्याद्ययोः श्लोकयोरुक्तं, वृत्तिकारस्तु सर्वनामस्थानत्वपरित्यागेन केवलनपुंसकत्वाश्रयणमपि दोषप्रसङ्गादेव सर्वथा न कार्यमित्याह । 'तत्र त्विति' । तुशब्दोपिशब्दस्यार्थे भिन्नक्रमश्चैतदित्यस्यानन्तरं द्रष्टव्यः, तत्रैतस्मिन्नियमे क्रियमाणे नपुंसकस्येत्येतदपि विशेषणं नाश्रीयतइत्यर्थः । किमेवं सति सिद्धं भवति तद्दर्शयति । 'तेनेति' । तदाश्रयणे ह्ययमर्थः स्यात्, इनादीनां नपुंसकानां शावेव दीर्घत्वमिति, ततश्च भ्रूणहनि ब्राह्मणकुले इत्यादावेव दीर्घत्वं न स्यात् न लिङ्गान्तरे, तस्मान्नपुंसकत्वमपि विशेषणं नाश्रयणीयमिति भावः । कथं पुनरप्रकृतस्यासंशब्दितस्य नपुंसकत्वस्याश्रयणप्रसङ्ग इत्याह । 'सर्वनामस्थानविधाने त्विति' । सर्वनामस्थानमिति तटस्थमुपलक्षणं, यदिदं सर्वनामस्थानं शिशब्दस्तस्य यद्विधानं जश्शसोरित्येतत् तत्रेत्यर्थः । सर्वनामस्थानसंज्ञाविधाने त्विति पाठे यो ऽयं सर्वनामस्थानसंज्ञः शिशब्दस्तद्विधानइत्यर्थः । सर्वनामस्थान[1]संज्ञाविधाने त्विति प्रसिद्धः पाठः, न तत्र समीचीनमर्थं पश्यामः, तथाहि । शि सर्व-

१ सर्वनामस्थानेति नास्ति इं॰ पु॰ ।

नामस्थानमित्येतत्संज्ञाविधानं तत्र नपुंसकग्रहणमस्ति । अथ शिशब्दस्य नपुंसकत्वाव्यभिचारादार्थोनपुंसकस्याश्रयणं, तदत्रैव सूत्रे शक्यते वक्तुं, किमुच्यते संज्ञाविधाने त्विति, अथावश्यमयमत्र पाठो योज्यस्तदाह: प्रश्लेष:, स च धात्वर्थानुवादी,सर्वनामस्थानसंज्ञस्याविधानं सर्वनामस्था[1]नसंज्ञाविधानं तत्रेति, स एवार्थो यं पूर्वमवोचाम, तुशब्दो हेतौ, अपि स्यादिति संभावनायां, यस्मान्नपुंसकादेव शेर्विधानं तस्मात्तत्र शिशब्दे क्रियमाणस्य नियमस्य नपुंसकविषयता संभाव्यतइत्यर्थः ॥

"अत्वसन्तस्य चाधातोः" ॥ 'अत्रेत्यादि' । ननु च परत्वान्नित्यत्वाच्च नुमेव पूर्वं प्राप्नोति तत्राह । 'यदि हीति' । इह दीर्घश्रुत्याचः स्थानित्वं, तच्च न स्वरूपेण किं तर्हि उपधाया इत्यनुवृत्तेरुपधात्वनिबन्धनम्, अत एवाजन्तस्य दीर्घाभाव, तस्मात्स्थानिन्येवात्र निमित्तशब्दः प्रयुक्तः । 'पिण्डग्रस्[2]मेवइति' । ग्रसु ग्लसु अदने, वस आच्छादने, क्विप्,ननु चानर्थकत्वादेवात्र न भविष्यति, मूलोदाहरणेषु त्वसुन्प्रत्ययस्यार्थवत्त्वात्सिद्धमत आह । 'अनर्थकोपीति' । अत्रैव हेतुमाह । 'अनिनस्मिन्ग्रहणानीति' । अयमेव धातुप्रतिषेधो ज्ञापयति अस्तीयं परिभाषेति । नैतदस्ति ज्ञापकम्, अस्त्यर्थमेतत्स्यात् शत्रूनस्यात् शत्रूनस्यतीति शत्रूव इति, तस्माद्वचनमेवेदम्, अतुग्रहणे त्वर्थवतोतुशब्दस्याभावादेवानर्थकस्य ग्रहणम्, अन्तग्रहणमनर्थकं केवलयोरत्वसोरभावादेव सिद्धमत आह । 'अन्तग्रहणमित्यादि' । उपदेशो लक्षणवाक्यानि गणपाठश्च, प्रयुज्यतइति प्रयोगः, उपदेशे प्रयोग उपदेशप्रयोगः उपदेशे यत्प्रयुज्यते शब्दरूपं तदेकदेशस्याप्यत्वसन्तस्य परिग्रहार्थमित्यर्थः । असति पुनरन्तग्रहणे कस्य ग्रहणं न स्यादित्यत आह । 'इतरथा हीति' । मतुब्ग्रहणमुपलक्षणं, 'कुमुदनडवेतसेभ्यो ड्मतुप्' इत्यस्यापि ग्रहणं न स्यात् । किं कारणमित्यत आह । 'उपदेशइति' । रूपनिर्ग्रहो, रूपनिश्चयः, स यद्यपि लौकिके प्रयोगे भवति, अनुबन्धयुक्तं तु

१ सर्वनामस्थानसंज्ञाविधानमिति नास्ति इं पु० ।
२ ग्रसं वास्ते इति अधिकं मुद्रितमूलपुस्तके ।

रूपमुपदेशएव निश्चीयतइत्युपदेशइत्युक्तम् । 'नायमत्वन्त इति' । यद्यपि तावता ऽवधेरतुरन्तस्तथापि न तत्पर उपदेशः, यत्परश्चोपदेशो न सोत्वन्तः, पकारान्तत्वात्, ततश्च तस्य ग्रहणं न स्यात्, अन्तग्रहणसामर्थ्यात्तु तावतोऽप्यवधेरत्वन्तस्य ग्रहणम् ॥

"अनुनासिकस्य क्विझलोः क्ङिति" ॥ अङ्गाक्षिप्तस्य झला विशेषणात्तदादिविधिः, क्ङितीत्येतत्संभवव्यभिचाराभ्यां झलादेरेव विशेषणम् । 'प्रतानित्यादि' । 'तमु काङ्क्षायां, शमु उपशमे, दमु ग्लानौ, एतेभ्यः क्विप्, मो नोधातोरिति नत्वम्, । 'यङ्लुगन्तात्तासिति' । तस्य सार्वधातुकमपिदिति ङित्त्वं, वस्तुकथनं चैतत्, न त्वनेन निष्ठाशङ्का वार्यते, ङिति खल्वपीत्युपक्रमात्, किं च निष्ठायामिटा भवितव्यं, न चोदित्त्वाद्यस्य विभाषेति प्रतिषेधः, एकाच इति तत्रानुवृत्तेः ॥

"अज्झनगमां सनि" ॥ अत्र यद्युपधाया इत्यनुवर्त्तेत अजन्तेषु व्यञ्जनस्य दीर्घप्रसङ्गः, तस्मान्निवृत्तं, यद्येवं हनिगम्योरलोन्त्यस्य दीर्घप्रसङ्गः, तत्र । अचश्चेत्युपस्थानात् । न चैवमभ्यासस्य प्रसङ्गः, हन् स इति स्थिते परत्वाद्दीर्घत्वे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम्, अस्तु वा ऽभ्यासस्यापि दीर्घः, ह्रस्व इति ह्रस्वो भविष्यति । 'जिघांसतीति' । अभ्यासाच्चेति कुत्वम् । 'अधिजिगांसतइति' । इङश्चेति गमिरादेशः । इह बहवो गमयः, गम्लृ सृप्लृ गताविति धातुः, णौ गमिरबोधने, सनि चेतीणादेशः, इणवदिक इति वक्तव्यमितीक आदेशः, इङश्चेतीङादेशश्चेति, तत्राविशेषात्सर्वत्र प्रसङ्गे सत्याह । 'गमेरिङादेशस्येति वक्तव्यमिति' । इण इक इङश्चैक एवादेशः स इङोपलक्ष्यते, अतो धातुमेकं वर्जयित्वा त्रयाणामादेशस्य ग्रहणं, तथा च वक्ष्यति अजादेशस्य गमेरिति, एवं चेणिकोरादेशस्यापि गमेर्भावकर्मणोरात्मनेपदइङभावे झलादौ सनि 'अज्झे'ति दीर्घो भवत्येव, सञ्जिगांस्यतइति । 'सञ्जिगंसतइति' । गमेः 'समो गमृच्छी'त्यात्मनेपदं विहितं, तत्र चाकर्मकादिति वर्त्तते तेन सनन्तादपि पूर्ववत्सन इत्यात्मनेपदमकर्मकादेव भवति, ततश्च मातरमित्यपपाठः, माचेति तृतीयान्तं पठितव्यम् । 'सञ्जिगांसदिति' । सम्पूर्वाद्गमेः सन्, सकर्मक-

स्वात्परस्मैपदं छान्दसत्वादिडभावः, 'बहुलं छन्दस्यमाङ्योगेपी' त्यड-भावः, प्रायेण तु वृत्तौ साड्क्लं पठ्यते । इहेत्यादिना गमेरिङादेशस्येति वक्तव्यमित्येतत्प्रत्याचष्टे, कथं पुनः सनि दीर्घइत्येतावति सूत्रे क्रियमाणे ऽजन्तस्यैव दीर्घत्वं लभ्यते ऽत आह । 'तच्चाचेत्यादि' । सनि दीर्घ इति सूत्रे क्रियमाणे ऽङ्गस्येति वर्त्तते, दीर्घश्रुत्या वा ऽचश्चेत्युपतिष्ठते, तत्र विशेषणविशेष्यभावं प्रति कामचारादुत्तरत्र हनिगम्योर्दीर्घविधानाद्धृष्यमा-णमङ्गमचा विशेष्यते, तेन त्वचाङ्गं, विशेषणेन तदन्तविधिर्भवतीति सिद्धं-मजन्तस्य दीर्घत्वं, यथा ऽकृत्सार्वधातुकयोरित्यत्र तस्मादिहाज्ग्रहणं न कर्त्तव्यं, किमर्थं तर्हि क्रियतइत्याह । 'तत्क्रियतइति' । प्रवृत्तिभेदेन, व्यापारभेदेन, तमेव दर्शयति । 'ग्रजन्तस्येति' । एवं चाज्ग्रहणं साम-र्थ्यादावर्त्ततइत्युक्तं भवति ॥

"तनोतेर्विभाषा" ॥ 'उपसंख्यानेनेति' । तनिपतिदरिद्राणा-मुपसंख्यानमित्यनेन ।

"क्रमश्च क्त्वि" ॥ ग्रनुनासिकस्य क्विझलोः क्ङितीति नित्यस्य दीर्घस्यापवादोयं विकल्पः । 'उपधाया इति' । यद्यप्युपधाग्रहणं पूर्व-मेव निवृत्तं तथाप्यचश्चेत्युपस्थानादन्यस्य चाचोसम्भवादेवमुक्तम् । 'क्रमित्वेति' । 'उदितो' वेति पक्षे इट् । 'वहि रङ्गोपि ल्यबादेश इति' । एतच्चादो जग्धिर्ल्यप्ति कितीत्यत्र ल्यब्ग्रहणेन ज्ञापितम् ॥

"च्छ्वोः शूडनुनासिके च" ॥ यद्यत्र केवलस्य छस्य ग्रहणं स्यात्तदा पृच्छेरुपदेशानन्तरं तुकि कृते क्तप्रत्यये परतश्छकारमात्रस्य शादेशे षत्वे तुकः ष्टुत्वे पृट्ष्टइत्यनिष्टं रूपं स्यात् । न च निमित्ताभावे नैमित्तिकस्या-प्यभाव इति तुको निवृत्तिः, नहीदं वचनं नापि न्यायः, नहि कृतस्य निवृत्तौ कश्चिन्न्यायः, कथं तर्हि स्यातेत्यत्र सत्वे कृते ष्टुत्वस्य निवृत्तिः, नात्र कृतमेव ष्टुत्वं निवर्त्तते किं तर्हि तस्यासिद्धत्वात्पूर्वमेव सत्वं, तत्र ष्टुत्वस्य प्राप्त्यभावः, तदेवं वितुक्कस्य ग्रहणे दोषं दृष्ट्वाह । 'च्छ इत्येतस्य सतुक्कस्येति' । कथं पुनर्ज्ञायते च्छेत्यस्य सतुक्कस्य ग्रहणमिति, यजयाड्वेति नङो ङित्करणात्, तद्धि विश्न इत्यत्र गुणो माभूदिति, सतु-

कृष्येव शादेशे लघूपधत्वाद्गुणप्रसङ्गः, वितुक्कस्य तु शादेशे तकार उपधा नेकारः, संयोगे गुर्विति गुरुसञ्ज्ञस्य, पृच्छेस्तु क्ङितीति सम्प्रसारणार्थं ङकारो ङित्त्वं न भवति, 'प्रश्ने चासन्नकाल' इति निपातनात्, तस्मात्सतुक्कस्य ग्रहणम्, एवं च कृत्वा पृष्टप्रतिवचनमिति निर्देशोपपत्तिः। ननु सतुक्कस्य ग्रहणेऽप्यलोन्त्यस्येति छमात्रस्य प्रसङ्गः, नह्यनर्थकेऽलोऽन्त्यविधिरस्ति, अथ सतुक्केन छेनाङ्गस्य विशेषणात्तदन्तस्याङ्गस्याऽलोऽन्त्यस्य प्रसङ्गः, तदापि निर्दिश्यमानस्यादेशा भवन्तीति सह तुका भविष्यति। 'अन्तरङ्गत्वादिति'। उपदेशानन्तरं प्रसङ्गादन्तरङ्गत्वं, षत्वस्तु बहिरङ्ग, कथम्, उत्पन्ने प्रत्यये ऽङ्गसञ्ज्ञा, अङ्गस्य च शादेशः, न च वार्णादाङ्गं बलीयः, भिन्नकालत्वात्। 'औणादिके नप्रत्यय इति'। साक्षात्सिवेरविहितोऽपि बाहुलकान्नप्रत्ययः। 'पुगन्तलघूपधगुणात्पूर्वमूट् क्रियते इति'। अन्तरङ्गत्वादिति वक्ष्यमाणो हेतुरिहाप्यपकृष्यः, गुणो हि बहूपेतो बहिर्भूतप्रत्ययापेक्षश्च, ऊट् तु विपर्ययादन्तरङ्गः, तेन स एव पूर्वं क्रियते, तत्र कृतेऽन्तरङ्गत्वाद्यणादेश इति, अन्तर्भूतानपेक्षत्वाद्यणोऽन्तरङ्गत्वं, गुणस्तु पूर्ववदेव बहिरङ्गः। 'नानाश्रयत्वाच्चेति'। यत्रैकमेव निमित्तीकृत्याङ्गवर्णयोर्युगपत्प्राप्तिस्तत्र वार्णादाङ्गं बलीयः, तथा ऽचो ञ्णिति वृद्धेरवकाशो गौरिति, यणोऽवकाशो दध्यत्रेति, चकार्त्यत्र कृञ इति स्थिते उभयप्रसङ्गे परामपि वृद्धिं बाधित्वान्तरङ्गत्वाद्यणि प्राप्ते वार्णादाङ्गं बलीय इति वृद्धिर्भवति। 'शब्दप्राडिति'। व्रश्चादिषत्वं, जश्त्वचर्त्वे। 'गोविडिति'। विच्छ गतौ, गां विच्छायतीति विगृह्य 'आयादय आर्द्धधातुके वे'त्यायप्रत्ययाभावपक्षे क्विप्। 'अक्षद्यूर्हिरण्यष्ठ्यूरिति'। दिविष्ठिविभ्यां क्विप्, सुभ्रातुष्ठिवुष्वष्कतीनां प्रतिषेध इति सत्वाभावः। ननु चान्तरङ्गे यणि बहिरङ्गस्योठो ऽसिद्धत्वाद्यणादेशेन नात्र भवितव्यमत आह। 'असिद्धं बहिरङ्गमन्तरङ्ग इति'। नानानन्तर्य इत्यस्यायमर्थः, यत्रान्तरङ्गे बहिरङ्गे वा ऽचोरानन्तर्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्त्तत इति, एतच्च षत्वतुकोरसिद्ध इत्यत्र ज्ञापितम्। 'कुभ्यामिति'। कठोऽवकाशो ब्रूतः ब्रूतवान्, उत्त्वस्यावकाशोऽ-

र्विमलवु, वुभ्यामित्यादावुभयप्रसङ्गे परत्वादूठ् प्रसङ्गः, तस्मात्क्ङिती त्यत्रानुवर्त्तयितव्यमिति भावः । 'केचिदित्यादि' । तेषां मते हि दिविप्रभृतीनां यङ्लुगन्तानां तिप्सिपोरीडभावपक्षे ऊठि सति देदिवीति देद्योति, देदिवीषि, देद्योषीति, पूर्वत्र तु पक्षे वलिलोपे देदेति देदेवीति । 'कथं वुभ्यां वुभिरिति ऊठि कृतइति' । क्ङितीत्यस्याननुवृत्तत्वात् अत्रापि परत्वादूठा भाव्यम्, । ऊठि च कृते वूभ्यां वूभिरिति भवितव्यमिति प्रश्नः । 'दिव उदि'ति तपरकरणादित्यादि' । अत्र हि तपरकरणं न कर्त्तव्यं यतोऽर्द्धमात्राकालस्य व्यञ्जनस्य मात्राकालो ह्रस्व एव सिद्धस्तत्क्रियते लक्षणान्तरेणापि दीर्घो माभूदिति, तेन परमप्यूठं बाधित्वा दिव उदित्यनेन मात्राकालो भविष्यतीत्यर्थः । अथ वा ऊठि कृतइत्यस्य परेण परिहारग्रन्थेन संबन्धः, तत्रायमर्थः । क्रियतां सामान्येन क्ङिति वान्यत्र च ऊट्, कृते तु तस्मिन्नेकदेशविकृतस्यानन्यत्वात्तस्यैवोठः स्थाने तपरत्वान्मात्राकालो भविष्यति । 'तेषामित्यादि' । क्ङिद्ग्रहणे हि निवृत्ते सति वृत्रादावपि शस्यानेन विधानाद्व्रश्चादिसूत्रे छशग्रहणं न कर्त्तव्यं, शकारस्य षत्वविधानेनैव सर्वस्य सिद्धत्वात्, ये तु क्ङिद्ग्रहणमनुवर्तयन्ति तेषां वृजादौ शत्वस्याभावाच्छस्यैव षत्वं विधातव्यं, तत्रापि सतुक्कस्य ग्रहणम्, ऊडयं यदि टित्स्यादाद्यन्तौ टकितावित्यादिः प्रसज्येत, अस्तु वकारस्य, वलि लोपे सति अतक्रूरित्यादि सिद्धं, न च नाप्राप्ते वलिलोपआरभ्यमाण ऊड्लोपस्य बाधकः स्यादिति शङ्कनीयं, भिन्नजातीयत्वात्, ऊडागमः, लोप आदेशः, न च भिन्नजातीयं बाधकं भवति[1], नहि दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेति दध्नः कम्बलो बाधको भवति । सत्यम् । उत्तरसूत्रे स्थानिभेदाद् द्वावूठौ स्याताम्, एको वकारात्पूर्वोऽपर उपधायाः, तस्मादूठष्टित्वमवश्याङ्गीकर्त्तव्यमितिमन्यमानस्तदङ्गीकरणे प्रयोजनमाह । 'ऊठष्टित्करणमिति' । एवं ब्रुवता एत्येधत्यूट्स्विति ठकारस्य चर्त्वेन निर्देश इत्युक्तं भवति, यदि ठकारो न क्रियते ततो वृद्धिविधावपि नोपादीयेत, ततश्च प्रऊहते प्रोह-

[1] अतक्रूरित्यादि सिद्धमिति इं० पु० अधिकम् ।

तदत्यत्रापि स्यात् । 'वाह ऊठित्ययमपि ठिद्वेति' । अन्यथा तस्य वृद्धिविधौ ग्रहणं न स्यात्, अत्रापि टकारस्याश्रवणं जश्त्वचर्त्वाभ्याम् ॥

"ज्वरत्वरस्रिव्यविमवामुपधायाश्च" ॥ ज्वर रोगे, ञित्वरा संभ्रमे, स्रिवु गतिशोषणयोः, अव रक्षणे, मव बन्धने । 'ज्वरत्वरेत्यादि' । वस्तुकथनम् ॥

"राल्लोपः" ॥ 'मूर्छति' । मूर्छा मोहसमुच्छ्राययोः । 'हुर्छति' । हुर्छा कौटिल्ये । ननु च पूर्वत्र सतुक्कस्य छकारस्य ग्रहणं वितुक्कस्यायं तत्कथमत्र लोप इत्याह । 'राल्लोपइत्यादि' । ननु यदि नाम रेफात्परः सतुक्कश्छकारो न संभवति किमेतावता ऽप्रकृतस्यासंस्थितस्य केवलस्य छस्य ग्रहणं भवति, तस्मादेवं व्याख्येयं, पूर्वत्र द्विच्छकारो निर्देशः, तत्रैकः सतुक्को ऽपरस्तु केवलो गृहीतस्तत्र च राल्लोपे सतुक्कस्य छस्यासंभवात्केवलो गृह्यतइति, यदि द्विच्छकारकः पूर्वत्र निर्देशः, च्छ्वोरिति निर्देशो नोपपद्यते, कथं, समाहारद्वन्द्वे एकवचनप्रसङ्गः, नैष दोषः । पूर्वं द्वयोश्छकारयोः समाहारद्वन्द्वं कृत्वा पश्चाद्वकारेणेतरेतरयोगे द्वन्द्वः करिष्यते, एवमपि द्वन्द्वाच्चुदषहान्तात्समाहारइति समासान्तः प्राप्नोति, तर्हि छकारवकारयोः समाहारद्वन्द्वं कृत्वा तेन सह सतुक्कस्य छस्येतरेतरयोगे द्वन्द्वो भविष्यति, यदि पूर्वत्र वितुक्को गृह्यते वाञ्छतेः क्विपि शत्वं प्राप्नोति, इष्टमेवैतत्संगृहीतं वाशे। वांश इत्येव भवितव्यम् ॥

"असिद्धवदत्रा भात्" ॥ आ भादितिनिर्देश आ कडारादित्यनेन व्याख्यातः, सिद्धशब्दो निष्पन्नवचनः, न सिद्धो ऽसिद्धो यः पुनः सिद्धोऽपि सिद्धकार्यं न करोति । 'स तेन तुल्यं वर्ततइति' । असिद्धवत्, किं पुनस्तत्, प्राधान्यात्कार्यमिति प्राप्तं, शास्त्रं हि कार्यार्थत्वादप्रधानं, कार्यस्य चासिद्धत्वे आदेशलक्षणप्रतिषेध एव सिद्ध्येत्, आगाहि जहीति, न तूत्सर्गलक्षणस्य भावः, एधि शाधीति, कार्यस्यासिद्धत्वे ह्ययमर्थः, आ भाच्छास्त्रीयं कार्यं प्रवृत्तमपि प्रवृत्तकार्यं न करोतीति, अतः प्रवृत्तकार्यनिबन्धनस्यैव कार्यस्य प्रतिषेधः स्यात्, च न एधि शाधीत्यत्र एत्व-

शाभावनिबन्धनं किंचित्कार्यं प्राप्तं यस्य प्रतिषेधो विज्ञायेत, आभीयं तु शास्त्रं स्वकार्यं कुर्यादेव, अत एत्वशाभावशास्त्राभ्यां स्वकार्ययोरेत्वशाभावयोः प्रवर्त्तितयोः स्थानिनोरभावात्तन्निबन्धनं धित्वं न स्यादेव। शास्त्रासिद्धत्वे त्वयमर्थः, आभीयं शास्त्रं निमित्तमपि स्वकार्यं न करोतीति, अत एत्वशाभावशास्त्राभ्यां स्वकार्ययोरेत्वशाभावयोरप्रवृत्तत्वादनिवर्त्तितत्वाच्चैत्वधिभावशास्त्रस्य स्थानिबुद्धिरेव वर्त्ततइति तन्निबन्धनं कार्यं सिध्यति, अतो व्यापकत्वाच्छास्त्रस्यैवासिद्धत्वम्, आ भादिति शास्त्रस्यैव विषयत्वेन निर्देशाच्च। यद्ययं स्वतन्त्रविधिः स्यात्तदा भाद्ग्रहणं विषयनिर्देशार्थं वा स्यात्, आ भाच्छास्त्रे ऽत्र कर्त्तव्ये ऽसिद्धवदिति, असिद्धवद्भवतो वा निर्देशार्थम्, अत्रग्रहणं तु विषयार्थम्, आ भाच्छास्त्रं तदसिद्धवद्भवति अत्रैवाभीये शास्त्रे कर्त्तव्यइति, तत्राद्ये पक्षे असिद्धवद्भवतो निर्देशाभावाद्यत्किं चनाष्टाध्याय्यां कार्यं तत्सर्वमाभीये कर्तव्ये असिद्धवत्, ततश्च धिन्विकृण्व्योर चेत्यस्यासिद्धत्वाद्धिनुते कृणुतइत्यतो लोपो न स्यात्, अत्रग्रहणं चानर्थकं स्यात्, अपरिपूर्णत्वादध्याहारेणैवा भाद्यत्तत्र कर्त्तव्यइत्यर्थलाभात्, द्वितीये तु पक्षे समानाश्रयत्वं विशेषो न लभ्येत, ततश्च प्रशमय्येति मितो ह्रस्वस्यासिद्धत्वाल्लघुपूर्वो मकारो न भवतीति ल्यपि लघुपूर्वादित्ययादेशो न स्यात्, प्रबेभिदय्येति, भिदेर्यङन्ताद् णिचि यस्य हल इति यलोपस्यासिद्धत्वाल्लघुपूर्वादुत्तरो णिज्न भवति, यकारेण व्यवधानादित्ययादेशो न स्यात्, प्रस्तनय्येति, अदन्तात्स्तनशब्दइत्यस्माद् णिच्यल्लोपस्यासिद्धत्वाल्लघोरेव परो णिच् न तु लघुपूर्वादित्ययादेशाप्राप्तिः। पशुं सनोतीति जनसनखनेति विट्,विड्वनोरित्यात्वं, सनोतेरन इति षत्वं, पशुषाः, ततः शसि पशुषो नवाजानित्याद्यावात्वस्यासिद्धत्वा'दातो धातो'रित्यालोपो न स्यात्। चाखायितेति, खनेर्यङि द्विर्वचनात्परत्वा'द्ये विभाषे'त्यात्वे द्विर्वचने तृचि आत्वस्यासिद्धत्वा 'द्यस्य हल' इति यलोपः स्यात्, पपुष इत्यादौ च दोषो वक्ष्यते, अधिकारे आ भाद्ग्रहणं चानर्थकं स्यात्, अधिकारादेव तदर्थलाभात्। तथाहि। 'श्नान्नलोप' इत्यत्रास्मिन्नुपस्थिते सति श्नादु-

त्तरस्य नकारस्य लोपो भवति स चासिद्धवद्भवती'त्ययमर्थो भवति, एवम-नुदात्तोपदेशेत्यादावपि, तत्किमसिद्धवद्भवतो निर्देशार्थेनाभाद्ग्रहणेन, न चासिद्धवद्भवत इयत्तावधारणार्थमाभाद्ग्रहणम्, अधिकारे ह्यस्मिन्न-वध्यनिर्देशाद्युवोरनाकावित्यादीनामपि असिद्धत्वं स्यादिति वाच्यं, ङ्याप्-प्रातिपदिकादितिवदन्तरेणाप्यवधिनिर्देशमधिकारपरिमाणावगतेः । न-न्वसत्याभाद्ग्रहणे ऽधिकारेऽस्मिन्सति यत्रैतदधिकृतं तदेव सूत्रं तद्वि-हितं वा कार्यमत्रग्रहणेन परामृश्येत, अन्यस्य संनिहितस्याभावात्, ततश्च 'श्नाल्लोप' इत्यस्यायमर्थः स्यात्, श्नादुत्तरस्य नकारस्य लोपो भवति, स चासिद्धवद्भवत्यत्रैव, श्नाल्लोपे कर्त्तव्यइति, एवं सर्वत्र, ततश्च चिणो लुगित्यत्रैवेष्टं सिध्येदकारितरामिति,गतः गतवानित्यादा-वन्यस्मिन्नाभीये ऽन्यस्याभीयस्यासिद्धत्वानापादनादतो लोपादि स्यादेवा-भाद्ग्रहणं तु कृत्वा विधावाश्रीयमाणे तस्यैव संनिहितस्यात्रग्रहणेन परा-मर्शादाभीयमाभीयेऽसिद्धवत्स्वस्मिन्नन्यस्मिन्वेत्ययमर्थो लभ्यते । उच्यते । अधिकारेऽप्यस्मिन्सति अनुदात्तोपदेशेत्यादौ तत्रैव कर्त्तव्ये तस्यैवासि-द्धवचने न किंचित्प्रयोजनमस्तीति तत्कार्यविशेषरूपपरित्यागेन इदम-सिद्धवद्भवति अत्र कर्त्तव्यइत्येवं सामान्यरूपेण परामर्शादन्यस्मिन्नप्यन्य-स्यासिद्धत्वं भविष्यति, तदेवमाभाद्ग्रहणमतिरिच्यमानं विषयार्थं विज्ञा-यते, अधिकाराच्चासिद्धवद्भवतोवगतिः, अत्रग्रहणं तु समानाश्रयत्वप्रति-पत्त्यर्थं, यद्युभे अप्याभीये एकमेव निमित्तमाश्रित्य प्राप्नुतः, तत्रान्योन्य-स्मिन्नसिद्धवद्भवति, किमत्रग्रहणमतिरिच्यतइत्यतः समानाश्रयत्वप्रति-पत्तिः, नेत्याह, अवरार्थएवायं, तथाहि । अनुदात्तोपदेशेत्यत्रास्मिन्नुप-स्थिते सत्ययमर्थो भवति, अनुदात्तोपदेशानां लोपो भवति झलादौ क्ङिति परतः, स चासिद्धवद्भवति, कुत्र कर्त्तव्ये,अत्र यदा भात्तत्रेति, कोर्थः, क्ङित्यनुनासिकलोपो भवतीत्युक्तम्, यत्रैव क्ङिति निमित्ते सति यदाभीयं प्राप्नोति तत्र कर्त्तव्यइति, एवं सर्वत्र, एवं च विस्पष्टमत्तरेणैव समानाश्रयत्वं प्रतिपादितं भवति । यद्ययमधिकारस्ततो यत्रास्योपस्थानं

१ अत्र कर्त्तव्ये इत्यधिकम् इ॰ पु॰ ।

तत एवारभ्य यदा भात्तत्रैव तस्यासिद्धत्वं स्यात् न तु स्वस्मात्पूर्वस्थितरेषु, यद्वैशस्येन हि वक्ता आङुच्चार्यते तत एवारभ्य मर्यादाभिविधिप्रतिपत्तिः, यथा आ पाटलिपुत्राद्वृष्टो देव इति, एवं च घ्वसोरेद्धावित्यस्यायमर्थो भवति, अस्तेर्हौ एकारः, स चेत आरभ्य यदा भात्तत्रासिद्धवदिति, ततश्च पूर्वत्र धित्वे नासिद्धवत्स्यात्, स्वतन्त्रे तु विधौ अत्रैव प्रदेशे आङर्थं प्रतिपादयन् अत एवारभ्य यदा भात्तदसिद्धवद्भवत्यत्रैव कर्त्तव्यइति, श्नान्नलोपइत्यारभ्य चत्व्यत्रास्त्वोत्येवमन्तानां सर्वेषामेवान्योन्यस्मिन्नसिद्धत्वमापादयति। उच्यते। द्वौ पक्षौ शब्दाधिकारश्चार्थाधिकारश्च, ततश्च शब्दाधिकारे स्यादेष दोषः, अर्थाधिकारे त्वस्मिन्नेव प्रदेशे आङर्थं प्रतिपादयन् पूर्ववत्प्रतिपादयति, स च प्रतिपादितार्थोदुत्तरत्रोपतिष्ठते, उपस्थितश्च तत्रतत्रोपस्थितेनात्रग्रहणेन विशेष्यतइति सर्वमिष्टं सिद्धं, तदनेन सूत्रेणायमर्थः सम्पादितः, 'आवलोप' इत्यारभ्यापादपरिसमाप्तेर्यानि सूत्राणि तान्यन्योन्यस्मिन्नसिद्धवद्भवन्ति, तानि चेत्तुल्यनिमित्तानीति, तदेतत्सर्वं वृत्तौ यथास्थानं योज्यं, तदाश्रयमेव भवतीत्यत्रासिद्धवदिति वक्ष्यमाणमपकृष्टव्यं, विभिन्नाश्रयं व्याश्रयं विभिन्ननिमित्तमित्यर्थः। 'असिद्धवचनमित्यादि'। उत्सृज्यते आदेशेन निवर्त्यतइत्युत्सर्गः स्थानी, स लक्षणं निमित्तं यस्य तदुत्सर्गलक्षणं, तस्य भावः, प्रवृत्तिर्यथा स्यात्, एतच्च शास्त्रासिद्धत्वाश्रयणाल्लभ्यतइत्युक्तम्। 'आगहीति'। बहुलं छन्दसीति शपो लुक्, अनुदात्तोपदेशेत्यादिनानुनासिकलोपः। 'जहीति'। हन्तेर्जः। 'अभाजीति'। भञ्जेश्च चिणीत्यनुनासिकलोपः, रागः, 'रञ्जेश्च' 'घञि च भावकरणयोरित्यनुनासिकलोपः। 'अत्रग्रहणं किमिति'। यद्यपि समानाश्रयत्वप्रतिपत्त्यर्थमिति पूर्वमेवात्रग्रहणस्य प्रयोजनमुक्तं तथापि समानाश्रयत्वप्रतिपत्तेः किं फलमिति प्रश्नावसरोऽस्त्येव। 'पपुष इति'। पा पाने, 'आतो लोप इटि च'। 'चिच्युष इति'। चिञ् चयने, 'एरनेकाच' इति यणादेशः। 'लुलुविषइति'। लूञ् छेदने, कथं पुनरत्र व्याश्रयत्वमित्याह। 'आलोपादीनि हीति'। नन्वेवमपि नैवात्राल्लोपादीनि सिध्यन्ति, अन्तरङ्गाणि हि तानि, अन्तर्भूतस-

म्प्रसारणापेक्षत्वात्, बहिरङ्गं सम्प्रसारणं, बहिर्भूतविभक्त्यपेक्षत्वात्, ततः किम्, असिद्धं बहिरङ्गमन्तरङ्गे, तत्राह । 'असिद्धं बहिरङ्गमन्तरङ्ग इत्यादि'। 'एतदिति'। वचनापेक्षं नपुंसकत्वं, किमिति न प्रवर्त्तते ऽत आह । 'एषा हीति'। 'आ भाच्छास्त्रीयेति'। वाह ऊडित्यत्र ज्ञापितत्वात्, ततः किमित्याह । 'तस्यामिति'। अन्तरङ्गबहिरङ्गयोर्युगपत्सन्निधानं नास्तीति, परिभाषया सह यौगपद्यमेष्टव्यं, परिभाषासन्निधावन्तरङ्गबहिरङ्गयोरवस्थानाभावादित्यर्थः। वसुसम्प्रसारणं चेक्तं परिभाषाया आल्लोपादीनां चाश्रय इति समानाश्रयत्वमप्यस्ति, एतच्च नाजानन्तर्यइत्यनाश्रित्योक्तम्, आल्लोपादयो ह्यचोरानन्तर्यमाश्रित्य प्राप्नुवन्ति। 'वुग्युटाविति'। तत्र युटा तावत्सिद्धत्वं न वक्तव्यं, युड्विधानसामर्थ्यात् यण् न भविष्यति, तत्र यकारद्वयश्रवणार्थं युड्विधानं, यणो मयो द्वे भवत इति द्विर्वचनविधानात्, 'हलो यमां यमि लोप' इति पक्षे लोपविधानाच्च पक्षे यकारद्वयश्रवणस्य सिद्धत्वात्, वुको ऽपि सिद्धत्वं न वक्तव्यं, कथं नाप्राप्ते उवङ्यारभ्यमाणो वुक् तस्यापवादो भविष्यति। ननु च बाधकप्रवृत्तिवेलायां यद्दृश्यते तद्बाधकेन निवर्त्तितं न प्रवर्त्तते, उवङ्निरवकाशे वुकि प्रवर्त्तमाने ऽसिद्धत्वात्स्वमात्मानमदर्शयन्नशक्यो बाधितुमिति वुकि कृते तस्यासिद्धत्वात्स्यादेव, एवं तर्हि वुङ् करिष्यते, भुवो लुङ्लिटोरुदुपधाया इति सूत्रमस्तु, तत्र च 'ओः सुपी' त्यत ओरित्यनुवर्त्तिष्यते, तेन भुवोऽङ्गस्योपधाया उकारस्य ऊद्भवतीत्याश्रयणे उवङि कृतऊकारो भविष्यति, यद्येवं बभूव बभूविथेति गुणवृद्ध्योरवावोश्च कृतयोरुवर्णोउपधा न भवतीत्यूत्त्वं न स्यात्, तत्रापीन्धिभवतिभ्यां चेति पितोपि लिटः कित्त्वाद्गुणवृद्ध्योरभावे उवङि ऊद्भविष्यति, यद्येवमिन्धिभवतिभ्यां चेति सूत्रं कर्त्तव्यं स्यात्, वुकि पुनः क्रियमाणे इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वादिति न्यायात्तच्च कर्त्तव्यं भवति, अवश्यं च वुको नित्यत्वमाश्रित्य बभूवेति साधयितव्यम्, अन्यथा ऽचो ञ्णितीत्यत्रेक इत्यनुपस्थानादनिग्लक्षणा वृद्धिः स्यादेव, एवं तर्हि नार्थो वुका नापि कित्त्वेन, ओः सुपीत्यत्रावर्णमपि प्रश्लिष्यते, अकारो-

कारयोरानुके कृते र्भसिङ्सोश्चेति पूर्वैकादेशेन निर्देशात्, तेन बभूविथेति गुणवृद्ध्योरवावोश्च कृतयोरवर्णस्याप्युपधाया ऊद्भविष्यति, बभूवतुरित्यादावुवङि कृते उवर्णस्यापि, यद्येवमोः सुपीत्यवर्णस्यापि निर्देशात्कीलालपः पश्येत्यादावपि यण् स्यात्, परत्वादातो धातोरिति लोपो बाधको भविष्यति, लोपस्यावकाशः संयोगपूर्वाकारान्तो धातुः, अकारप्रश्लेषस्योत्तरत्रावकाशः, बभूव, बभूविथ, कीलालपः पश्येत्यत्रोभयप्रसङ्गे परत्वादाकारलोपः, विप्रतिषेधे ह्यसिद्धत्वं नास्तीति ज्ञापयिष्यते । एवमपि कीलालपौ सर्वनामस्थाने भसञ्ज्ञाया अभावादाकारलोपाप्रसङ्गाद्यण् स्यात्, एवं तर्ह्योः सुपीत्यत्रापि श्नुधात्वित्यतो य्वोरित्यनुवर्त्तिष्यते, ततश्चाकारोकारसमुदायनिर्देशेपि य्वोरित्यनेन विशेषणसामर्थ्यादुकारस्यैव यण् भविष्यति न त्ववर्णस्येति, सामर्थ्यादवर्णग्रहणमुत्तरार्थमेव सम्पद्यते, तदेवं सत्यप्यस्मिन्योगे वुग्युटोः सिद्धत्वं न वक्तव्यमिति भाष्ये स्थितम् । ये त्वाहुः, भुवो वुग्लुङ्लिटोरित्यत्र य्वोरित्यनुवर्त्तनीयम्, उवर्णान्तस्य भुवो वुग्यथा स्यात् बोभाव, बोभविथेति यङ्लुकि पिति लिटि इन्धिभवतिभ्यां चेत्यत्र श्तिपा निर्देशादसति कित्त्वे गुणवृद्ध्योः कृतयोरनुवर्णान्तस्य माभूदित्येवमर्थम्, एवं च बभूव बभूविथेत्यत्रापि गुणवृद्ध्योः कृतयोः वुकोऽप्रसंगादनित्यत्वादिन्धिभवतिभ्यां चेति कित्त्वमारम्भणीयं, तत्र च ङिदित्यधिकारात्कित्त्वङित्त्वयोरुभयोरपि विधानाद्बभूवेत्यनिमित्तत्वापि वृद्धिर्न भवति, एष एव च कित्त्वे श्तिपा निर्देशं वुकि च तदभावं कुर्वतः सूत्रकारस्याभिप्राय इति तेषां वुकः सिद्धत्वं वक्तव्यमेव, न च वत्करणं स्वाश्रयमपि यथा स्यादिति वुकः सिद्धत्वं लभ्यते, सत्यसति वा वतावतिदेशेप्यातिदेशिकाविरुद्धस्वाश्रयकार्यानिवर्त्तनात्सिद्धत्वासिद्धत्वयोस्तु विरोधात्कथं वतिना सिद्धत्वप्रापणं कथं वा विषयविभागो लभ्येत, स्थानिवदित्यादौ तु वतिमन्तरेण संज्ञा स्यादिति वत्करणमतिदेशार्थं सत् स्वाश्रयप्रतिपत्त्यर्थं वर्ण्यते, एवं तर्हि श्नसोरल्लोप इति तपरकरणाल्लिङ्गात्क्वचित्सिद्धत्वमनुमीयते, तद्धि आस्तामित्यादावाटो मा भूदिति । यदि चेदमसिद्धत्वं नित्यं स्यात् आटोऽसिद्धत्वादेव लोपो न

भविष्यतीति किं तपरकरणेन, तत्करणं तु प्रतिपत्तिलाघवार्थमेव, तथा च 'सत्वतुक्कोरसिद्धः,' 'गेतोर्णादि'त्यादौ वतिमन्तरेणापि परत्र परशब्दप्रयोगादेवातिदेश आश्रितः, तत्रापि चाविहतुं स्वाश्रयं भवत्येव। अत्राङ्मर्यादायां यदि स्याद्भाधिकारीयस्यासिद्धत्वं न स्यात्, न चाभाद्ग्रहणं विषयार्थम्, असिद्धवद्भवतस्तु परिज्ञानमधिकारादेवेत्युक्तम्, अतो मर्यादार्थेप्याङि भाधिकारे ऽप्यस्योपस्थानं न विहन्यते, तस्मादेवं वक्तव्यं भाधिकारीये कर्त्तव्ये भाधिकारीयस्य पूर्वस्यैव प्रकरणस्याप्यसिद्धत्वं नोक्तं स्यादिति। सत्यम्। अयमेव दोषः, तत्र सूर्येणैकदिगिति अणि कृते यस्येति लोपः, ङीप्, पुनरणो यस्येतिलोपः, अत्रेदानीं 'सूर्यतिष्ये' ति यलोप इष्यते सौरी बलाकेति, स न प्राप्नोति, भाधिकारीये यलोपे यस्येति लोपस्यासिद्धत्वाभावादकारस्यानुपधात्वात्, स्थानिवद्भावश्च यलोपविधिं प्रति निषिद्धः, तमिमं मर्यादापत्ते दोषं दृष्ट्वाह। 'आ भादित्ययमभिविधावाङिति'। 'भाधिकारेप्यसिद्धवद्भवतीति'। भाधिकारेपि यदवस्थितं तत्रापि कर्त्तव्ये तत्रत्यमन्यच्चासिद्धवद्भवतीत्यर्थः, एवं व्याख्याता वृत्तिः। कानि पुनरस्य योगस्य प्रयोजनानि, इह पादोस्यास्तीति, 'अत इनिठनौ, पादिकः, उदकं वहतीत्यण्, संज्ञायामुदभावः, उदवाहस्यापत्यमत इञ्, औदवाहिः, सारणवारणशब्दाभ्यां ल्युडन्ताभ्यामत इञ्, सारणिः, वारणिः, शातनपातनशब्दाभ्यां टित्त्वान्ङीप्, शातनी, पातनी, स्रंसेध्वंसेर्ण्यन्तात्कर्मणि यक्कि स्रंस्यते ध्वंस्यते, अत्र यस्येतिलोपे णिलोपे च कृते पद्भाव, ऊठ्, नस्तद्धिते, अल्लोपोनः, अनिदितामित्येते विधयः प्राप्नुवन्ति, लोपस्यासिद्धत्वाच्च भवन्ति, तत्र। अचः परस्मिन्निति स्थानिवद्भावेनाप्येतानि सिद्धानि, 'शाहा' वित्यत्र शास् हाविति पदच्छेदः, शासः शासित्ययमादेशो भवति, किमर्थमिदम्, इत्वबाधनार्थं, ततो हुझल्भ्य इति धित्वं, धि चेति सलोपः, शाधीति सिद्धं, धि सकारे सिचो लोप इति नाश्रीयते, चकाधीत्येव भवितव्यमिति निर्णीयते, 'श्नसोरल्लोपवभ्यासलोपश्चे' त्यत्रापि श्नसोरल्लोप इत्यतो विषयार्थमल्लोप इत्यनुवृत्तेरल्लोपविषयत्वं भवदकारस्यैव भविष्यति, ततः पूर्ववद्घ्वस्वसलोपयो-

रेधीति सिद्धम्, इह च कुरु इति कृ उ हि इति स्थिते हिलुक्च प्राप्नोति गुणश्च, परत्वाद्गुणे कृते 'अत उत्सार्वधातुके' इत्युत्वं च प्राप्नोति हिलुक्च, नित्यत्वाद्धिलुकि कृतेपि सार्वधातुकग्रहणसामर्थ्याद्भूतपूर्वेपि तस्मिन्नुत्वं सिद्धम्, । 'लुङ्लङ्लृङ्क्ष्वडुदात्त' इत्यत्रोपदेशइत्यनुवृत्तेर्द्विलकारकनिर्दुशाश्रयणाद्वा लुङादिषु लावस्थायामेवाडाटौ भवत इति अकारि ऐक्षीत्यत्र चिणो लुगिति नित्ये लुकि कृते ऽडाटौ सिद्धौ, एवं चासन्नित्यत्रापि प्रागेव श्नसोरल्लोपादाटि कृते तपरकरणाल्लोपाभावः, एवं चायन्नित्यत्रापि इणो यणिति यणादेशात्प्रागाटि सति सिद्धमिष्टं, यद्येवम् ऐज्यत औप्यतेति, लङो लावस्थायां यजिवप्योरनजादित्वादटि सति आटश्चेति वृद्धिर्न स्यात्, अत्र परिहारमाडजादीनामित्यत्र वक्ष्यामः। अतो हेरित्यत्र च उतश्च प्रत्ययादित्यतः प्रत्ययग्रहणापकर्षणाज्जहीत्यत्र हन्तेर्जभावे लुङ् भविष्यति। 'अतो लोप' इत्यत्र चानुदात्तोपदेशेत्यत उपदेशग्रहणानुवृत्तेरुपदेशे यदकारान्तं तस्य लोप इति गतः गतवानित्यत्रानुनासिकलोपे कृते संप्रत्यकारान्तत्वेपि तदभावः, इहापि तर्हि न स्यात् 'धिन्विकृण्व्योर च' धिनुतः, नोपदेशग्रहणेनाङ्गमभिसम्बध्यते यदङ्गमुपदेशकाले ऽकारान्तमिति, अपि तु आर्द्धधातुकमभिसम्बध्यते, आर्द्धधातुकोपदेशे यदकारान्तमिति, एतदुक्तं भवति यदार्द्धधातुकमुत्पन्नं न मुहूर्त्तमात्रमप्यनकारान्तात्परं तत्र तदन्तस्य लोप इति धिनुत इत्यत्र चोप्रत्ययसन्नियोगेनाकारविधानादुप्रत्यय उत्पन्नो न कदा चिदपि अनतः पर इति, इह च मघमस्यास्तीति छन्दसीवनिपौ चेति वनिबन्ताच्छस्, श्वयुवमघोनामिति सम्प्रसारणं, मघ उ अस् इति स्थिते सम्प्रसारणमाश्रित्य यस्येति लोपः प्राप्तस्तस्यासिद्धत्वाच भवति, नात्रासिद्धत्वं लभ्यते, व्याश्रयत्वात्, शसि सम्प्रसारणं, सम्प्रसारणे यस्येति लोपः, तस्मान्मघवच्छब्दोप्युत्पन्नं प्रातिपदिकं, ततश्च तद्धिताभावादेव लोपाभावः, इह च कं स्विद्गर्भं प्रथमं दध्राप इति, दधातेर्लिटि धा इरे इति स्थिते नित्यत्वाद्विरयोरे इति छान्दसो रेभावः, लिट् छन्दसि सार्वधातुकमपीति शप्, शपः श्लुः, द्विर्वचनम्, 'ई हल्यघो' रिति प्रतिषेधात्तु 'श्नाभ्यस्तयो-

रात ' इति सिद्धो लोपः, घुव्यतिरिक्तेषु माप्रभृतिषु छान्दसत्वाद्यथादर्शनं भविष्यति, इह तर्हि कुर्वः कुर्मः कुर्यादिति, कुउवस् कुउमस् कुउयात् इति स्थिते 'नित्यं करोतेः' 'ये चे'ति लोपश्च प्राप्नोति करोतेर्गुणश्च, तत्रोभयोर्नित्ययोः परत्वाद्गुणे कृते अत उत्सार्वधातुकइत्युत्वं बाधित्वा नित्यत्वादुकारलोपे कृते सार्वधातुकपरउप्रत्यये विधीयमानमुत्वं न स्यात्, न च सार्वधातुकएव परतः शक्यमुत्वं विधातुं, तथाहि सति कुरुत इत्यादौ विकरणव्यवायेपि न स्यात्, क्व तर्हि स्यात् यत्र विकरणस्य लोपः, कुर्यात् कुर्म इत्यादौ, यद्यप्यत्रापि स्थानिवद्भावाद्व्यवधानं तथापि वचनादीदृशं व्यवधानमाश्रीयते, तस्माद्भवतीदं प्रयोजनं, न प्रयोजनं, सत्यप्युकारलोपे तस्य स्थानिवद्भावात्प्रत्ययलक्षणेन वा अत उदित्यत्र म्वोर्य इत्यनुवृत्तेर्वा उत्वं भविष्यति । इह तर्हि कारिष्यतइति चिण्वदिटो- सिद्धत्वाण्णिलोपो भवति, अन्यथा अनिटीति प्रतिषेधः स्यात्, तत्र चिण्व- दिट् चेति चकारः समुच्चये, इट् च यच्चान्यत्प्राप्नोति, किं चान्यत्प्राप्नोति, णिलोपः, अवश्यं चकारेणैव णिलोपः समुच्चेतव्यः, अन्यथा चिण्वदिटोसि- द्धत्वेपि बलादिलक्षणेनेटा सेड्बुद्धिरेव णिलोपशास्त्रस्यास्मिन्विषये वर्त्त- तइति लोपो नैव स्यात्, 'चिणोलुगि'त्यत्र चानुदात्तोपदेशेत्यतः क्ङिद्ग्रह- णमनुवर्त्य तस्य चिण इति पञ्चम्या षष्ठ्यां प्रकल्पितायां चिण उत्तरस्य क्ङितो लुग्विधीयते, तेनाकारितरामित्यादौ तपो न भविष्यति, इह तर्हि शुन इति 'श्वयुवमघोना'मिति संप्रसारणे शुअन् अस् संप्रसारणपूर्वत्वं बाधित्वा अल्लोपोन इत्यकारलोपे सति विभक्तेरनुदात्तनिवृत्तिस्वरः प्राप्नो- ति, कृतेस्मिन्योगे संप्रसारणस्यासिद्धत्वाच्च संयोगाद्वमन्तादिति प्रतिषेधा- दल्लोपे ऽसति संप्रसारणपूर्वत्वे सति एकादेश उदात्तेनोदात्तइत्याद्युदात्तं पदं भवति, नात्राल्लोपे सत्युदात्तनिवृत्तिस्वरस्य प्रसंगो 'न गोश्वन्साव- वर्णा'ति प्रतिषेधात्, नैव उदात्तनिवृत्तिस्वरस्य प्रतिषेधः, कस्य तर्हि, तृतीयादिस्वरस्य, स च श्वभ्यां श्वभिरिति हलादौ विभक्तावुदात्तलोपा- भावे चरितार्थः, एवं तर्हि न लक्षणप्रतिषेधं शिष्मः, किं तर्हि येन केन चित्प्राप्तस्य तृतीयादिस्वरस्य, यत्र तर्हि तृतीयादिर्नास्ति शुनः पश्येति,

तत्रोदात्तनिवृत्तिस्वरः प्राप्नोति, एवं तर्हि तृतीयादिग्रहणमपि निवर्तिष्यते, अविशेषेण विभक्तिस्वरमात्रस्य प्रतिषेधः, ज्ञापकाद्वा सिद्धं, यदयं श्वन्शब्दं गौरादिषु पठति तज्ज्ञापयति नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति । एवमपि विद्यते विशेषः, अल्लोपेन वा निवृत्तौ सत्यां पूर्वत्वेन वा अल्लोपे सति बहवः श्वानो यस्यामिति बहुव्रीहेरुपधालोपित्वाद् 'न उपधालोपिन' इति ङीपा भाव्यं बहुशुनीति, तदभावे तु बहुश्वेति भवति, गौरादिङीषोप्यनुपसर्जनाधिकारादत्राप्रसङ्गः, किञ्च ज्ञापकात्सामान्येन वा निषेधादुदात्तनिवृत्तिस्वराभावेपि कथमाद्युदात्तं पदं भवति, नह्यल्लोपे सत्येकादेशस्वरोस्ति, ततश्च सर्वानुदात्तं पदं स्यात्, तदेतद्भवति प्रयोजनं, न प्रयोजनम्, अन्तरङ्गत्वात्पूर्वत्वं भवति, न च वार्णादाङ्गस्य बलीयस्त्वं, व्याश्रयत्वात्, विभक्तिरल्लोपस्य निमित्तं, पूर्वत्वस्य तु श्वन्शब्दाकारः, इह तर्हि भूयानिति भूभावस्यासिद्धत्वादोर्गुणो न भवेदिति, दीर्घोच्चारणसामर्थ्याच्च भविष्यति, अस्ति दीर्घोच्चारणे प्रयोजनं, किम्भूत्वेति, निपातनादप्येतत्सिद्धमुत्तरपदभूम्नीति, इदं च सूर्यतैष्यादिक् सौरी बलाकेति द्वयोरकारयोर्यस्येति लोपेपि वचनसामर्थ्याद्भूतपूर्वगत्योपधाश्रयणाल्लोपो भविष्यति, तदेवं न सन्ति प्रयोजनानि, प्रतिपत्तिगौरवपरिहारार्थं सूत्रमारब्धम् ॥

"श्नान्नलोपः" ॥ नेति पृथक्पदं लुप्तषष्ठीकं, तेनोत्तरत्रोपधाग्रहणेन नकारो विशेष्यते । 'श्नमयमुत्सृष्टमकारो गृह्यतइति' । अन्यस्य श्नस्यासंभवात् । 'अनक्तीति' । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, भञ्जो आमर्दने, हिसि हिंसायां, शकारवतोग्रहणं किम् । इह माभूत् नन्दिता नन्दकः, एवं वक्ष्यामि नावलोपोऽनिदितामिति, ततो हल उपधायाः क्ङितीति, अनिदितामित्येव, इहापि न स्यात् हिनस्तीति, पाघ्रादिभ्यो नः, अस्य च ग्रहणं स्यात्, एवं तर्हि क्ङितीति वर्तते, सत्सप्तमी चैषा क्ङिति सतीति, तेन हिनस्तीत्यत्र तिपः पित्त्वादङित्त्वेपि श्नममेव ङितमाश्रित्य लोपो भविष्यति, इहापि तर्हि प्राप्नोति नन्दमान इति, चानशो ङित्त्वात्, एवं तर्हि नकारमेव क्ङित्त्वेन विशेषयिष्यामः,

क्ङिति नशब्दादिति, तस्मान्नाचलोप इति वक्तव्यमिति पृच्छति। 'शकारवतो ग्रहणं किमिति'। 'यज्ञानामिति'। यजयाचेत्यादिना नङ्, श्चुत्वं, तस्यासिद्धत्वान्नशब्द एवायम्, ननु यद्यपि नामि दीर्घादयं लोपः परः, सुपि चेत्येतद्दीर्घत्वमस्मात्परं तत्र कृते नादिति व्यपदेशाभावादेव लोपो न भविष्यत्यत आह 'सुपि चेत्यादि'। 'स्थानिवद्भावादिति'। पूर्वस्मादपि विधौ स्थानिवद्भावात्। अथ गृह्यमाणेपि शकारवतो ग्रहणे विश्नानां प्रश्नानामित्यत्र कस्मान्न भवति। ननु संप्रति श्नरूपत्वादत्रैव प्राप्नोति अत आह। 'विश्नानामिति'। अत्र संग्रहश्लोकः॥

नान्नस्यायं विधेयो ननु लुबनिदितां नन्दिता चापि सिध्ये-
द्धिंसेने प्राप्तिरेवं क्ङिति सति तु तथा नन्दमानो न सिद्धेत्।
क्ङित्वाच्चेव्याथ यत्नाद्बहुवचनविधौ दुष्यति स्थानिवत्त्वा-
द्विश्नानां लक्षणोक्तप्रतिपदवचनात्सिद्ध एवेत्यदोषः॥

लोपनं लुप्,लोप इत्यर्थः। राल्लोप इति प्रकृते लोपग्रहणं विस्पष्टार्थम्॥

"अनिदितां हल उपधायाः क्ङिति"॥ इकार इत्संज्ञको येषां ते इदितः, ततोन्ये ऽनिदितः, तेषां विशेषणं हल इति, व्यत्ययेन त्वेकवचनम्। 'सनीस्रंस्यतइति'। नीग्वञ्च्वित्यादिना ऽभ्यासस्य नीगागमः। 'नानन्द्यतइति'। टुणदि समृद्धौ, यङ्,दीर्घोकितः। 'नह्यतइति'। कित्परत्वेन नकारो विशेष्यते, येन नाव्यवधानमित्येकेन व्यवधानमाश्रीयतइत्येतत्तु दुर्ज्ञानमिति भावः। 'लगिकम्प्योरिति'। इदित्त्वाद्वचनं, कृच्छ्रप्राप्तिरत्रोपतापो न रोगः, शरीरविकारइत्येव सिद्धत्वात्, शरीरविकारोत्र व्याधिरुच्यते, न स्वाभाविकः स्थौल्यादिः। 'विलगितः विकम्पितइति'। गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तः। 'मित्त्वादुपधाह्रस्वत्वमिति'। एतदेव मित्त्ववचनं ज्ञापकं रञ्जेरक्ङित्यप्युपधालोपो भवतीति। 'रजकरजनरजःसूपसंख्यानमिति'। कित्त्वात्सिद्धं, कित एते औणादिकाः प्रत्ययाः, 'क्वुन् शिल्पिसंज्ञयोः'। रजकः, पुंयोगान्ङीष्, रजकी, अपुंयोगे तु नैव ङीषा भवितव्यं, रञ्जेः क्युन्, रजनः, स च बाहुलकात्कित्, रजनी, भूरञ्जिभ्यां किच्चेत्यसुन्, शिरः, रजः॥

"दंशसञ्जस्वञ्जां शपि" ॥ 'परिष्वजतइति'। ष्वञ्ज परिष्वङ्गे, अनुदात्तेत्, उपसर्गात्सुनोतीत्यादिना षत्वम् ॥

"रञ्जेश्च" ॥ 'पृथग्योगकरणमुत्तरार्थमिति'। उतरत्र रञ्जेरेवानुवृत्तिर्यथा स्यात् दंशिप्रभृतीनां माभूत् ॥

"घञि च भावकरणयोः" ॥ 'राग इति'। 'हलश्चे'ति करणाधिकरणयोर्घञ्, चजोः कुघिण्ण्यतोरिति कुत्वम् ॥

"स्यदो जवे" ॥ जवो वेगः। 'गोस्यदइति'। गोर्गतिविषयो वेग इत्यर्थः। 'तैलस्यन्दइति'। तैलस्य स्रवणमित्यर्थः ॥

"अवोदैधौद्मप्रश्रथहिमश्रथाः" ॥ उन्दी क्लेदने, इन्धी दीप्तौ, श्रन्थ मोचनहर्षयोः ॥

"नाञ्चेः पूजायाम्" ॥ उदाहरणे मतिबुद्धिपूजार्थेत्यादिना वर्त्तमाने क्तः, 'क्तस्य च वर्त्तमान' इति कर्त्तरि षष्ठी, अथ नाञ्चेरिटीत्येव कस्मान्नोक्तं, नैवं शक्यं वक्तुम्, इह हि न स्यात्, समञ्चते गुरुः, गुरुं समभ्यागत इति, इड्विधौ वृत्तिकारो वक्ष्यति, निष्ठायां यस्य विभाषेतिप्रतिषेधे प्राप्ते क्त्वायां, तथा 'उदितो वे'ति विकल्पे प्राप्ते पूजायां नित्यमिड्विधीयते इति तेन गुरुमङ्क्त्वेति पूजायामसाधुरेव ॥

"क्त्वि स्कन्दिस्यन्दोः" ॥ 'न क्त्वा सेडिति कित्त्वप्रतिषेधादेवेति'। तेन सेटः क्त्वाप्रत्ययस्योदाहरणं न प्रदर्शितमिति भावः ॥

"जान्तनशां विभाषा" ॥ मक्त्वा मङ्क्त्वा, नष्ट्वा नंष्ट्वा, 'मस्जिनशोर्झली'ति नुम्। अन्तग्रहणं विस्पष्टार्थं, वर्णग्रहणादेव तदन्तविधिलाभात् ॥

"शास इदङ्हलोः" ॥ अङाक्षिप्तस्य प्रत्ययस्य हला विशेषणात्तदादिविधिरित्याह। 'हलादौ च क्ङितीति'। 'क्वौ च शास इति'। नित्यत्वात्क्विपो लोपे हलादेरभावाद्वचनं,प्रत्ययलक्षणेन तु सिद्धं, यत्र कार्यं वर्णरूपमेव निमित्तत्वेनाश्रीयते तद्वर्णाश्रयत्वात्प्रत्ययलक्षणेन न भवति यथा रायः कुलं

रैकुलमित्यायादेशः, यत्तु वर्णविशिष्टप्रत्ययनिमित्तं तद्भवत्येव, यथा अनु-बोहिति, हलादौ पिति सार्वधातुके विधीयमानस्तृणह इमागमः, इदम-पीत्वं हलादौ क्ङिति प्रत्यये विधीयमानं लोपेपि भवति । 'आशी-रिति'। सकारस्य रुत्वे 'र्वोरुपधाया' इति दीर्घः । अथाशास्ते आशास्य-मान इत्यत्र कस्मान्न भवतीत्याह । 'यस्माच्छासेरिति' । अङ्विधौ ताव-त्परस्मैपदिभ्यामर्त्तिसर्तिभ्यां साहचर्यात्परस्मैपदिनः शासेर्ग्रहणम्, इहा-प्यङ्संसर्गाद्विशिष्टस्य शासेर्ग्रहणं संसर्गस्य विशेषाव[1]गतिहेतुत्वात्, यथा सवत्सा धेनुरानीयतां सकलभा सकिशोरेति गवादिर्धेनुः प्रतीयते, ननु च नात्राङ् केवलो निमित्तमपि तु हलादिरपि, स चात्मनेपदिनोपि संभवति तत्कृतः संसर्गाद्विशिष्टस्य प्रतीतिः। नैष दोषः। साधारणासाधा-रणासंबन्धिसंनिपाते यस्यासाधारणः संबन्धी संनिहितस्तस्यैव ग्रहणं भवति, यथा वृद्धानां किशोरीणां च मध्ये धेनवो बध्यन्तामित्युक्ते वडवा धेनवो बध्यन्ते, तस्मादङ्हलोर्द्वयोरप्युपादाने यस्माच्छासेरङ् विहितस्तस्यैव ग्रहणं, 'शासिवसिघसीनां चे' ति षत्वविधौ शासिमात्रस्य ग्रहणं द्रष्टव्यं, आशिषि लिङ्लोटा वित्यादिनिर्देशात् ॥

"शा हौ" ॥ 'उपधाया इति निवृत्तमिति' । तद्ध्युपधाग्रहणं क्ङितीत्यनेन संबद्धम्, इह च क्ङिद्ग्रहणं निवृत्तमिति वक्ष्यति, तेन तत्संबद्धमुपधाग्रहणं च निवृत्तम् । 'स्थानेयोगा षष्ठी भवतीति' । एतच्च शब्दाधिकारपक्षस्याश्रयणाल्लभ्यते, अर्थाधिकारे त्विहाप्यवयव-संबन्धा[2]च्च सर्वस्य स्यात् । 'क्ङितीत्यपि निवृत्तमिति' । उत्तरत्र पुनः क्ङिद्ग्रहणात् । 'तेनेति'। अन्यथा सार्वधातुकमपिदिति वचनात्पित्त्वपक्षे ङित्त्वाभावाच्छाभावो न स्यात्, माभूत्पित्त्वपक्षे, दृश्यमानस्तु प्रयोगो ऽपित्त्वपक्षेप्युपपद्यते ऽत आह । 'शाधीत्याद्युदात्तमपीति' । यदि तु पिति शाभावो न स्यात् तदा शाधीत्येतत्सति शिष्टेन प्रत्ययस्वरेणा-

१ स्यतीति इं· पु· पा· ।
२ संबन्धे एव स्यादिति इं पु· पा· ।

न्तोदात्त एव स्यात्, आद्युदात्तमपि दृश्यते, तस्मात्पित्यपि शाभाव एव द्रष्टव्यः, इहाहाविति वक्तव्यम्, उपधाया इत्येव, आकारस्याकारवचनमित्त्वबाधनार्थं, ततो हुझल्भ्यो हेर्द्धिरिति धित्वं, 'धि चे' ति सकारलोपः, येषां तु धि सकारे सिचो लोप इति पक्षस्तेषां शाभाव एव विधेयोऽन्यथा उपधाया इत्यस्य निवृत्तावपि सकारस्याकारे तस्यासिद्धत्वादत्रापि धित्वं लभ्यते, उपधायास्तु पूर्वेणेत्वमाशङ्क्येताविरो[1]धात् ॥

"हन्तेर्जः" ॥ श्तिपा निर्द्देशो यङ्लुङ्निवृत्त्यर्थः ॥

"अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" ॥ उपदिश्यन्तइत्युपदेशाः, अनुदात्ताश्च ते उपदेशाश्च, उपदिश्यमानावस्थायामनुदात्ता इत्यर्थः । अनुनासिकेति पृथक्पदं लुप्तषष्ठीकमनुदात्तोपदेशानां विशेषणं, तेन तदन्तविधिः । 'यमिरमीत्यादि' । यमिर्यमन्तेष्विति श्लोको वक्ष्यते । 'वनतेरिति' । वन षण संभक्तौ । 'सनोतेरात्वं वक्ष्यतीति' । 'जनसनखनां सञ्झलोरित्यनेन । अतत अतथा इति । 'तनादिभ्यस्तथासो' रिति सिचो लुक् । 'इह च यथा स्यादिति' । अन्यथा क्तिनि नित्स्वरेण संप्रत्युदात्तत्वाच्च स्यात् । 'इह च मा भूदिति' । अन्यथा प्रत्ययस्वरे कृते शेषनिघाते संप्रत्यनुदात्तत्वाच्छान्तइत्यादावपि स्यात् ॥

"गमः क्वौ" ॥ 'अध्वगत इति' । अध्वनो गन्तार इत्यर्थः । अनुनासिकलोपे कृते ह्रस्वस्य तुक् । 'संयदिति' । संपूर्वाद्यमेः क्विप् । 'परीतदिति' । तनोतेः क्विप्, 'नहिवृतिवृषी' त्यादिना पूर्वपदस्य दीर्घः । 'ऊ चेति' । चकारादनुनासिकलोपश्च । 'अग्रेगूरिति' अनुनासिकलोपे कृते अकारस्य ऊकारः, क्वचिद् ऊङिति ङकारः पठ्यते, न तस्य प्रयोजनमस्ति, 'ओः सुपी' ति यणादेशो धातुत्वाद्भवति, अग्रेग्वौ, अग्रेग्वः । 'अग्रेभ्रूरिति' । एवं च कृत्वा अचि श्नुधात्वित्यत्र भ्रूग्रहणं न कर्त्तव्यं धातुत्वादेव सिद्धम् ॥

१ अविरोधादिति नास्ति इं० पु० ।

"विड्वनोरनुनासिकस्यात्" ॥ 'अबेगा इत्यादि'। यद्यप्यकार-विधानेपि सवर्णदीर्घेण सिद्ध्यति, अतो गुणइति पररूपत्वे हि अतोलोपमेव विदध्यात्, ये त्वकारोपधा न भवन्ति तदर्थं दीर्घोच्चारणं घुण घूर्ण भ्रमणे, अन्येभ्योपि दृश्यन्त इति वनिप्, त्वा वा, घूरावा, चिणु वावा, ऋणु रावा, ओगट अवावा ॥

"जनसनखनां सञ्झलोः" ॥ झल्शब्देनात्र झलादिर्गृह्यते, अङ्गेनाक्षिप्तस्य प्रत्ययस्य झला विशेषणात्, क्ङिद्ग्रहणं तस्य विशेषणं, प्रकृतं तु झल्ग्रहणं सनो विशेषणम्। 'तदिहेति'। वाक्योपन्यासे। 'विप्रतिषेधादिति'। सनोतेस्सनोत्यादिपाठस्यावकाशोऽन्यत्तनादि कार्यं, 'तनादिकृञ्भ्य उः,' 'तनादिभ्यस्तथासो'रिति, इह त्वात्वविधौ सन्ग्रहणस्यावकाशः सन्, सिषासति, स्यतः सातवानित्यत्रोभयप्रसङ्गे परत्वादात्वं भवति। ननु चासिद्धकाण्डे वक्ष्यति, पूर्वत्रासिद्धे नास्ति विप्रषेधो ऽभावादुत्तरस्येति, यत्र किलैकस्याप्यसिद्धत्वे विप्रषेधाभावस्तत्र का कथा द्वयोरप्यसिद्धत्वइत्यत आह। 'घुमास्थागापाजहातीत्यादि'। 'विप्रतिषेधो भवतीति'। विप्रतिषेधेन व्यवस्थायां क्रियमाणायामसिद्धत्वं न भवतीत्यर्थः। कथं कृत्वा ज्ञापकं, हल्ग्रहणस्यैतत्प्रयोजनं हलादौ यथा स्यादिह माभूत् गोदः कम्बलद इति, यदि चात्र विप्रतिषेधो न स्याद्धल्ग्रहणमनर्थकं स्यात्, अस्त्वत्रेत्वं, तस्यासिद्धत्वादियङादेशे असत्याल्लोपे तत्सिद्धं स्यात्, सति विप्रतिषेधे आल्लोपस्यावकाशः पाणित्रमङ्गुलित्रमिति, ईत्वस्य दीयते मीयते, गोदइत्यादावसति हल्ग्रहणे परत्वादीत्वं स्यादिति हल्ग्रहणमर्थवद्भवति। नैतदस्ति ज्ञायकं, व्यवस्थार्थमेतत्स्यात्, असति हि तस्मिन्नीत्वस्यासिद्धत्वादाल्लोपः, तस्यासिद्धत्वादीत्वमिति चक्रकमव्यवस्था प्राप्नोति, नास्ति चक्रकप्रसङ्गः, नह्यव्यवस्थाकारिणा शास्त्रेण भवितव्यं, शास्त्रतो नाम व्यवस्था, तत्र पूर्वमीत्वं तस्यासिद्धत्वादाल्लोपः, लोपेनावस्थानं भविष्यति, एवमपि कुत एतत् ईत्वास्यासिद्धत्वादाल्लोपः, लोपेनावस्थानमिति, न पुनर्विपर्ययः स्यात्, पूर्वमाल्लोपः, तस्यासिद्धत्वादीत्वमीत्वेन व्यवस्थानमिति। एवन्तर्हि यदि व्यव-

स्वार्थमेतस्याश्चैवायं हल्ग्रहणं कुर्वीत, अविशेषेणायमीत्वं कृत्वा तस्या-जादौ लोपमपवादं विदधीत, कथमिदमस्ति आतो लोप इटि च, ततो घुमास्थागापाजहातिसां लोपो भवति इटि चाजादौ च क्ङितीति, किमर्थं पुनरिदमित्त्वं, वक्ष्यति तस्य बाधनार्थं तत्, ईद्भवति घ्वादीनां, तत एर्लिङि, वान्यस्य संयोगादेः, न ल्यपि, मयतेरिदन्यतरस्यां, ततो यति च, यति च ईद्भवति, आत इत्येव, सोयमेवं लघीयसा न्यासेन सिद्धे सति यति यद्धल्ग्रहणं करोति तद्गरीयांसं यत्नं मारभते, तज्ज्ञापय-त्याचार्यो भवतीह विप्रतिषेध इति, इह झल्ग्रहणं शक्यमकर्त्तुं, कथं योगविभागः कर्त्तव्यः, जनसनखनामनुनासिकस्याकारादेशो भवति, झलि क्ङिति, ततः सनि च, जनसनखनामाकारादेशो भवति झलीत्येव॥

"ये विभाषा"॥ 'जायतइति'। यक्। 'नित्यं आदेशो भवतीति'। तस्यानवकाशत्वात्, तेन श्यनि जायतइत्येव भवति न तु कदाचिज्जन्यत-इति॥

"सनः क्तिचि लोपश्चास्यान्यतरस्याम्"॥ अस्यग्रहणमनन्तरस्य क्तिचो मा भूद्व्यवहितस्यापि धातोरेव यथा स्यात्, क्रियमाणे हि तस्मि-न्कार्यित्वेन प्राधान्याद्व्यवहितस्यापि धातोरेव परामर्शो भवति। अन्यतर-स्यांग्रहणमनर्थकं, विभाषेति प्रकृतत्वादत आह। 'अन्यतरस्यांग्रह-णमिति'। ननु नैतद्विस्पष्टनीयं प्रकृतमनुवर्त्ततइति, तदाह। 'ये संबद्धं हीति'॥

"आर्द्धधातुके"॥ 'चिकीर्षितेति'। सनन्तात्तृच् भवतीति सर्व-त्रातो लोपे कृते अतो दीर्घो यञीत्यस्य कोवकाशः, वचनात्पचाव इत्यादौ लोपं बाधित्वा दीर्घोस्तु, तत्र चरितार्थमदुपदेशाल्लसार्वधातुकानुदात्त-त्वमिति तदपि न ज्ञापकं सार्वधातुके ऽतो लोपाभावस्य, यत्तर्ह्यदिप्र-भृतिभ्यः शपो लुकं शास्ति तज्ज्ञापयति न शपो ऽतो लोप इति, तदाह। 'अदिप्रभृतिभ्यः शप इति'। ये तर्हि न गुणवृद्धिभाजोऽदिप्रभृतयस्तेषा-मदादिषु पाठोनर्थकः, सत्यम्। वृत्तत्वं वृत्ततेत्यादावतो लोपे आर्द्धधातु-

१ अदिप्रभृतिपाठेति इं॰ पु॰ पा॰।

काधिकारस्य प्रयोजनं, वेभिद्यते इत्यत्र अपि सार्वधातुके न भवति, यङो यकारोपदेशस्तु हलन्तेषु चरितार्थः। 'कायतीति'। विधानं प्रत्ययलक्षणार्थमियङर्थं च स्यात्। 'यान्तीति'। ननु 'श्नाभ्यस्तयोरातः' इत्येवनियमार्थं भविष्यति सार्वधातुके श्नाभ्यस्तयोरेवेति। नैतदस्ति। विपरीतोऽपि नियमस्स्यात् श्नाभ्यस्तयोः सार्वधातुकएवेति, तदा च यय-तुरित्यादौ न स्यात्, श्नाग्रहणं तूत्तरार्थं स्यात्। 'अदातामिति'। लुङ्, गातिस्थाघ्वित्यादिना सिचो लुक्। 'चिण्वद्भावे सति वृद्धिः स्यादिति'। नन्वतो लोपो वृद्धेः पूर्वविप्रतिषेधेन, तद्यथा चिकीर्षकइति, अदिहनिमावाप्रभृतिभ्यः शपो लुग्विधानेन सार्वधातुकेतो-लोपाभावस्य ज्ञापितत्वात्स्वाश्रयोऽतो लोपो माभूच्चिण्वद्भावात्तु चिणि तस्य दर्शनात्स्यादेव, वृत्तिकारेण तु प्राप्तिमात्रमाश्रित्य वृद्धिः स्यादित्युक्तं, दोषोपलक्षणं वा वृद्धिग्रहणं, लोपेपि रूपासिद्धिरेव। 'ततो युक् प्रसज्येतेति'। आद्गुणस्तु वार्णत्वाच्च लभ्यते, इट्प्रसङ्गस्तु विशेषा-भावाच्चोक्तः, प्रयोजनसंग्रहश्लोको गतार्थः। 'भ्रस्जोरोपधयोरमन्यतरस्यां,' 'दीङो युडचि क्ङिती'त्यत्र तु नास्य प्रयोजनं, कथं, भृज्जतेः सार्वधा-तुके तुदादित्वाच्छः, तत्र ग्रहिज्यादिसूत्रेण संप्रसारणं, दीङोपि दिवा-दित्वान् श्यना भाव्यमित्युक्तान्येव प्रयोजनानि।

असिद्धत्वनिवृत्त्यर्थं द्वितीयाध्यायगोचराः।
आदेशा नेह विहिता, वुगाल्लोपौ प्रयोजनम् ॥

अन्यथा

अस्त्यादेशस्य भवतेरसिद्धत्वाच्च वुग्भवेत्।
न चाचख्युरित्यादावाल्लोपः स्यादसिद्धितः ॥

"भ्रस्जो रोपधयोरमन्यतरस्याम्" ॥ रमित्ययं रोपधयोर्यदि स्थाने भवति मित्त्वमस्यानर्थकं स्यात्, अथाचोन्त्यात्पर आगमो रोपधयोः श्रवणं प्राप्नोति तत्राह। 'रोपधयोरिति'। 'स्थानषष्ठीनिर्देशादिति'। रोप-धयोरिति तावत्स्थानषष्ठी, स्थानं च प्रसङ्गः, रोपधयोः प्रसङ्गे रम् प्रयु-ज्यते, रोपधे न प्रयुज्येते इत्यर्थः। प्रयुज्यमानश्च रम् मित्त्वादन्त्या-

वचः परः प्रयुज्यते, यस्य तु देशान्तरे विधानं नास्ति स स्थानिदेश एव भवति, तत्प्रसङ्गे हि तस्य विधानं, विशिष्टदेशस्य स्थानिनः प्रसङ्गः, इह तु मित्त्वेनायं न्यायो बाध्यते, स्थानषष्ठीनिर्देशसामर्थ्यात्तु देशान्तरे प्रयुज्यमानोऽपि रोपधे निवर्त्तयतीति सर्वमवदातम् । भारद्वाजीयास्तु सनः क्तिचीत्यतो लोपग्रहणमनुवर्त्त्य रोपधयोर्लोपं रमागमं चान्यतरस्यां विदधति । 'भ्रज्जनमिति' । ल्युटि सकारस्य जश्त्वं दकारस्तस्य चुत्वं जकारः । 'पूर्वविप्रतिषेधेनेति' । रमोऽवकाशः भ्रष्टा भ्रष्टुं, संप्रसारणस्यावकाशः भृज्जति, सार्वधातुकत्वादत्र रमोऽप्रसंगः, भृष्टः भृष्टवानित्यत्र पूर्वविप्रतिषेध, अथैवं कस्मान्नोक्तं भ्रस्जो रम्वदन्यतरस्यामिति, भ्रस्जेः संबन्धी रसिति योऽयं संघातस्तस्य च इत्ययमादेशो भवतीत्यर्थः । तस्याक्ङिति गुणे कृते भर्जनमित्यादि रूपं भवति, चकाराभावपक्षे तु भ्रज्जनमिति, क्ङिति चकारपक्षे भृष्टमिति तदभावपक्षे तु ग्रहिज्यादिसूत्रेण संप्रसारणे सति तदेव रूपं भवतीति पूर्वविप्रतिषेधो न वक्तव्यो भवति । उपदेशग्रहणमपि नानुवर्त्यं, नह्यत्र पक्षे रीकः प्रसंगोऽस्ति, अत्रापि पक्षे पूर्वविप्रतिषेधो वक्तव्यः, क्व, सिचि वृद्धावभार्क्षीदिति, अन्यथा चकारविकल्पं बाधित्वा परत्वाद्धलन्तलक्षणा वृद्धिर्नित्यं प्राप्नोति, रमभावे तु क्रियमाणे परत्वाद्वृद्धौ कृतायामपि पुनः प्रसङ्गविज्ञानमिति सिद्धमभार्क्षीदिति । न चान्तरङ्गत्वात्पूर्वमृकारः, न सिच्यन्तरङ्गमस्तीति वक्ष्यमाणत्वात् । एवं तर्हि नित्यत्वादृभावः, स हि कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि, एकदेशविकृतस्यानन्यत्वात्, शब्दान्तरप्राप्तिरपि नास्ति, वृद्धिस्तु कृते ऋभावे ऋकारस्याकृते त्वकारस्येति शब्दान्तरप्राप्तेरनित्या, तस्मादृकार एव विधेयः, तथा तु न कृतमित्येव, भ्रस्जेर्भृज्जिरित्युच्यमाने यङ्लुकि दोषः, साभ्यासस्य भृज्जिभावः प्राप्नोति, इष्यते तु तत्रापि रोपधयोरेव निवृत्तौ रमभावश्च बरीभृज्यत इति, यद्धि संप्रसारणे 'रीगृत्वत इति वक्तव्य'मिति रीक्, तस्य तन्मध्यपतितस्य तद्ग्रहणात्प्रसङ्गः ॥

"अतो लोपः" ॥ 'धिनुतः कृणुत इति' । हिवि दिवि धिवि प्रीणनार्थाः, कृवि हिंसाकरणयोः, लट्, तस्य तस्, 'धिन्विकृण्व्योर च' इति

उप्रत्ययो ऽकारोन्तादेशश्च, तस्य चोप्रत्यये ऽतो लोपः, एकवचने त्वन्तरेणातो लोपमुप्रत्ययस्य गुणे कृते ऽतो गुणइति पररूपेणापि सिद्धिः। 'चेता स्तोतेति'। तपरकरणस्य पृथग्व्यावर्त्यस्य दर्शयिष्यमाणत्वात्तद्रहितस्याकारमात्रस्येदं प्रत्युदाहरणम्, एवं च गुणवृद्धोर्दीर्घेषु चरितार्थत्वाद्ध्रस्वेषु लोपप्रसङ्गः, ननु च परत्वाद्गुणो भविष्यति, तस्मात्कुटादिषु[1] गु पुरीषोत्सर्गे ध्रुव गतिस्थैर्ययोरित्यत्र लोपप्रसङ्ग उदाहार्यः। 'याता वाता इति'। असति तकारे ऽत्रापि लोपप्रसङ्गः, आतो लोप इटि चेत्येतद्विषयार्थं भविष्यति, आत इत्येवाजादौ च क्ङितीति नान्यत्रेति। नैतदस्ति, विपरीतोऽपि नियमः स्यात्, आत एवेटि नान्यस्येति, तथा च चिकीर्षितेत्यत्र न स्यात्। 'वृद्धिदीर्घाभ्यामिति'। 'अचो ञ्णिती'ति वृद्धेरवकाशः गैरिति, अतो लोपस्यावकाशः चिकीर्षितेति, चिकीर्षक इत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः, वृद्धौ तु युकि चिकीर्षायक इति स्यात्, अकृत्सार्वधातुकयोरित्यस्य दीर्घस्यावकाशः चीयते, अतो लोपस्यावकाशः स एव, चिकीर्ष्यतइत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधः॥

"यस्य हलः"॥ यस्येति यद्यागन्तुको ऽकारः, ततो वर्णग्रहणम्, अन्यथा तु संघातग्रहणमिति पक्षद्वयसम्भवादाह। 'यस्येति संघातग्रहणमिति'। श्रुतस्याकारस्याविवक्षायां कारणाभावादिति भावः। 'अतो लोप इत्यनेनैव सिद्धत्वादिति'। अस्तु तर्हि नियमः, यस्य हल एव नान्यतः, लोलूयिता पोपूयिता, कैमर्थ्याद्धि नियमो भवति विधेयं नास्तीति कृत्वा, इह चास्ति विधेयं, किम्, अन्त्यस्य लोपः प्राप्तः सर्वस्य विधेयः, तत्रापूर्वो विधिरस्तु नियमो वेति, अपूर्वो विधिरेव भविष्यति, एवमपि क्यस्य विभाषायां दोषः, समिधमिच्छति समिध्यति, समिध्यतेस्तृच्, इट्, समिधिता, यदा लोपस्तदा सर्वस्य लोपः, यदा त्वलोपपक्षस्तदा सर्वस्यालोपः प्राप्नोति, संघातग्रहणे हि यस्य हल इत्यनेन येन नाप्राप्तिन्यायेन अतो लोपो बाध्यो यलोपो ऽपि क्यस्य विभाषेति विकल्पेन बाध्यः, ततश्च पक्षे संघातस्यैव श्रवणं स्यात्, यलोपवदल्लोपस्यापि

१ कुटादिष्विति नास्ति इं पु ।

विकल्पेन बाधनादित्यत आह । 'हल इति वेत्यादि' । एवं च क्यस्य विभाषेति यकारस्यैव विकल्पेन लोपोऽकारस्य त्वतो लोप इत्यनेन नित्यमिति, सिद्धमिष्टमवश्यं चातो लोप एवाश्रयितव्यः, अन्यथा पापचक इत्यादावत उपधाया इति वृद्धिः स्यात्, स्थानिवद्भावाच्च भवति, तस्मात्संघातस्य ग्रहणमवयवशस्तु लोप इति, तदेव युक्तम् । 'मव्यितेति' मव्यतिः संयोगान्तोऽस्ति, ज्वरत्वरादिसूत्रे तु वकारान्त उदाहृतः ॥

"क्यस्य विभाषा" ॥ क्यस्येति क्यच्क्यङोः सामान्येन ग्रहणं, क्यषस्तु हलन्तादसम्भवः । 'समिधमिवात्मानमाचरतीति' । अपपाठोऽयम् । एवं हि क्यङो वाक्यं न प्रदर्शितं स्यात्, क्यचश्च द्वितीयं वाक्यमनर्थकं स्यात्, विधिभेदाज्ञानर्थकमिति चेत्, यत्रेत्रमधिकरणाच्चेति वक्तव्यमित्यस्यापि प्रदर्शनीयं स्यात्, तस्मात्समिदिवाचरतीति पाठः, अत्र के चित्कयङ्ग्रहणमिच्छन्ति, क्यस्येति कितो यकारस्य ग्रहणे तात्पर्यम्, आदित्वं ककारस्याविवक्षितं वदन्ति । नेति वयम् । आदित्वाविवक्षायां प्रमाणाभावात् ॥

"णेरनिटि" ॥ इयङादिभिरेव सर्वस्य विषयस्यावष्टब्धत्वादनवकाशो णिलोपस्तेषां बाधक इत्याह । 'इयङ्यणित्यादि' । ननु पाचयतेः पाति,योजयतेर्योक्तिरित्युदाहरिष्यति, यथासङ्ख्यो युजिति युजि प्राप्ते क्तिचजादिभ्य इति क्तिन्प्रत्ययः, क्तिच्चापुनरयं द्रष्टव्यः, तत्कथमनवकाशः । उच्यते । यत्रैतावत्प्रयोजनं स्यादनिटीति न वक्तव्यं स्यात्, अतोऽनिटीति वचनादार्द्धधातुकमात्रविषयतास्यावसीयते, ततश्च युक्तमियङादीन्प्रत्यपवादत्वं, वार्त्तिककारेण तु पूर्वविप्रतिषेधः पठितः 'णयल्लोपावियङ्यणगुणवृद्धिदीर्घेभ्यःपूर्वविप्रतिषेधेने'ति। 'अततक्षदिति' । अत्र चङो ङित्त्वाद्गुणस्याप्रसङ्गः, संयोगपूर्वत्वादेरनेकाच इति यणोऽप्यप्रसङ्गः, इयङ एवायं विषयः, असत्येषोऽपि सति पुनः प्रसङ्गविज्ञानात् भवन्नपि लोपोऽन्त्यस्य स्यात् । 'आशिशदिति' । एरनेकाच इति यणोऽत्र प्रसङ्गः । अत्र सत्यपि यणि आसिद्धत्वात्पुनः प्रसंगविज्ञानेन वा णिलोपे सति सिद्धमिष्टम्, एवं गुणवृद्धिदीर्घविषयेऽपि द्रष्टव्यं, न च गुणवृद्ध्योरयादेशप्रसंगः, वार्णादाङ्गं

क्लीय इति णिलोपः । 'ज्ञीप्सतीति' । 'आप्ज्ञप्यृधामित्' 'अज्झनगमां सनी'ति दीर्घप्रसङ्गः, अनिटीति शक्यमस्तु, कथं कारयिता, 'निष्ठायां सेटीत्येतन्नियमार्थं भविष्यति, सेटि यदि भवति निष्ठायामेवेति, विपरीतस्तु नियमो न भवति निष्ठायां सेट्येवेति, अनिटोऽनिष्ठाया असंभवात्, असंभवश्चोत्तरसूत्रे वक्ष्यते, अथ वा 'अयामन्ताल्वाय्येत्न्विष्णुष्वि' त्यत्र णेरिति योगविभागः क्रियते, सेट्याद्युध तुक्के णेरयादेशो भवति लोपस्यापवादः ॥

"निष्ठायां सेटि" ॥ 'सेटीति किमिति' । अनिटि पूर्वेण सिद्धत्वात्सेडर्थमेवेदं सूत्रं भविष्यतीति प्रश्नः, सामर्थ्यात्पूर्वसूत्रप्राप्तेरेव व्यावृत्तिरित्युत्तरम् । 'संज्ञपितइति' । 'वा दान्तशान्तपूर्णे'त्यत्र ज्ञपेर्निपातनमाश्रीयते ज्ञप्तः ज्ञपित इति । 'अथ पुनरिति' । प्रतिपत्तृविप्रतिपत्त्या संदिग्धाभिधानम् । 'कालावधारणार्थमिति' । सेड्ग्रहणे क्रियमाणे यदा निष्ठा सेड्भवति तदा लोपो भवति न प्रागिति कालावधारणं लभ्यते, किं पुनः स्याद्यद्येवमर्थं सेड्ग्रहणं न क्रियेत तत्राह । 'अकृते हीति' । 'णिलोपे सतीति' । नित्यत्वात्, स हि कृतेपीटि प्राप्नोत्यकृतेपि, इट् पुनरनित्यः, णिलोपे सत्येकाच इति प्रतिषेधात्, यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यं, नहि वालिसुग्रीवयोर्युध्यमानयोर्भगवता रामेण वालिनि हते सुग्रीवापेक्षया वालिनो दौर्बल्यं मन्यन्ते शूरमानिनः । सत्यं, कार्यगतभावाभावविवक्षायां तु तत्राश्रीयते । 'इट्प्रतिषेधः प्रसज्येतेति' । एकदेशविकृतस्यानन्यत्वात्, एतच्च पूर्वस्मादपि विधौ स्थानिवद्भावमनाश्रित्योक्तं, भाष्ये तु सूत्रमिदं प्रत्याख्यातं सप्तमे, णेरध्ययने वृत्तमित्ययं योगस्त्रेधा विभक्तव्यः, क्रमविपर्ययश्चाश्रयणीयः, णेरित्येको योगः, तत्र निष्ठायां नेडिति वर्तते, ण्यन्तादुत्तरस्या निष्ठाया इण्न भवति, ततो वृत्तं, वृत्तमिति निपात्यते, णिलोपः, किमर्थमिदं, नियमार्थम्, अत्रैव निष्ठायां णेर्लोपो भवति नान्यत्रेति, क्व माभूत्, कारितं हारितं, कैमर्थक्यान्नियमो

१ व्याख्यातु-इति इं· पुस्तके पाठः ।

भवति, विधेयं नास्तीति कृत्वा, इह चास्ति विधेयं, किं, गुणाभावः, एवं तर्हि तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणादेकस्य नियमार्थत्वमपरस्य गुणनिषेधार्थत्वं भवति, ततोऽध्ययने, वर्तेरध्ययनएव णिलोप इति ॥

"शमिता यज्ञे" ॥ 'तृचि संबुध्यन्तमेतदिति'। उदाहृताभिप्रायमेतत्, सूत्रे तु शुद्धप्रथमैकवचनान्तं, सर्वासु च विभक्तिषु निपातनं प्रथमैकवचनस्याविवक्षितत्वात्, तथा च सूत्रार्थकथनसमये इहादौ तृचीति सामान्येनोक्तं, प्रयोगेपि तथाविध एव शमितारो यदत्र सुकृतमिति, शमितृभ्यश्चैवैनन्तविरहितृभ्यश्चेति च, शामित्रमिति तद्धितेपि भवति, सूत्रे च संबुध्यन्त विवक्षितं चेच्छमितर्यज्ञइति प्राप्नोति ॥

"अयामन्ताल्वाय्येत्न्विष्णुषु" ॥ 'गण्डयन्तइति' गडि सेचने घटादिः, मडि भूषायाम्, आभ्यामौणादिको झच्, 'झोन्तः'। 'स्पृहयालुरिति'। स्पृहिगृहीत्यादिना आलुच्। 'स्पृहयाय्यइति'। श्रुदक्षिस्पृहिभ्य आय्यः। 'स्तनयित्नुरिति'। औणादिक इत्नुच्। 'पारयिष्णवइति'। णेश्छन्दसीति इष्णुच्। 'नेति वक्तव्ये इति'। णिलोपे हि प्रतिषिद्धे गुणे सत्ययादेशः सिद्धः, मात्रालाघवं च भवति। 'उत्तरार्थमिति'। ल्यपि लघुपूर्वादित्यत्र न गुणो नाप्ययादेशः ॥

"ल्यपि लघुपूर्वात्" ॥ अत्र केचिदाचार्येण ल्यपि लघुपूर्वस्येति षष्ठ्यन्तमध्यापिताः, अन्ये पञ्चम्यन्तं, तत्राद्यपक्षे प्रशमय्येत्यादौ व्यञ्जनान्ते न स्यात्, नह्यत्र णिर्लघुपूर्वः किं तर्हि व्यञ्जनपूर्वः, न चाव्यवहिते संभवति व्यवहितं पूर्वमाश्रयितुं युक्तं, प्रचकाश्य गत इत्यादावतिप्रसङ्गश्च, क्व तर्हि स्यात्, प्रगणय्य प्रस्तनय्येत्यादौ, यद्यप्यत्राल्लोपे कृते णिर्लघुपूर्वो न भवति, स्थानिवत्त्वादल्लोपस्यासिद्धिरपि नास्ति तथापि भूतपूर्वलघुपूर्वतामाश्रित्यात्रैव स्यात्, तथा प्रोचकीर्य्येत्यादावपि प्रसङ्गः, संप्रति गुरुपूर्वत्वेपि भूतपूर्वगत्या, तस्माद् द्वितीयं पक्षमाश्रित्य व्याचष्टे। 'लघुपूर्वाद्वर्णादिति'। नन्वत्रापि पक्षे प्रशमय्येत्यादौ ह्रस्वादीनामसिद्धत्वादयादेशाप्रसङ्गः, क्व तर्हि स्यात्, मृदमाचष्टइति णिचि 'प्रकृत्यैकाजि'ति प्रकृ-

विभाषाट्टिलोपाभावे प्रमृदय्य गत इत्यादौ स्यादत आह । 'ह्रस्वयलोपाल्लोपानामिति' ॥

"विभाषापः" ॥ आपॢ लम्भने चुरादिः, आपॢ व्याप्तौ स्वादिः, द्वयोरपि ग्रहणम् । इह इङ् अध्ययने, णिच् 'क्रीङ्जीनां णा'वित्यात्वम्, अर्त्तिह्रीत्यादिना पुक्, अध्याप्य गत इत्यत्रापि प्राप्नोति, आप्‌रूपस्य भावात्, तस्मात्सानुबन्धको निर्द्देशः, आपृलिति पठितव्यम्, आप्लृशब्दान्ङसिः, ऋकारलृकारयोः सवर्णत्वादत उदित्युत्वम्, 'उरण् रपर' इत्यत्र रप्रत्याहारग्रहणाल्लपरत्वं सकारस्य संयोगान्तलोपः, तर्त्तिह तथा पठितव्यं, नेत्याह । 'इङादेशस्येति' ॥

"निष्ठायामण्यदर्थे" ॥ 'ण्यतः कृत्यस्यार्थौ भावकर्मणी इति' । यद्यपि भव्यगेयादावाप्लाव्यापात्यशब्दयोः कर्त्तापि पक्षे ण्यदन्तयोर्वाच्यस्तथापि णिचः संनिधानात्तदीयो ण्यदर्थ एव पर्युदस्यते । 'प्रक्षीणमिदं देवदत्तस्येति' । अधिकरणवाचिनश्चेति कर्त्तरि षष्ठी । 'अधिकरणइति' । क्तः प्रत्यय इत्यनुषङ्गः । एवमक्षितमिति भावइत्यत्रापि ॥

"वाक्रोशदैन्ययोः" ॥ 'क्षितायुरिति' । पूर्ववत्कर्त्तरि क्तः । 'क्षीणकइति' । अनुकम्पायामिति कन् । प्राप्तविभाषेयम् । अण्यदर्थे-इत्येव, क्षितं सर्वमस्य, क्षितमस्य तपस्विनः ॥

"स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशे ऽज्झनग्रहदृशां वा चिण्वदिट् च" ॥ चिणीव चिण्वत्तत्र तस्येवेति सप्तमीसमर्थाद्वतिः, स्यसिच्सियुट्तासिष्विति प्रतियोगिनि सप्तमीनिर्द्देशात्, यथा मथुरावत्पाटलिपुत्रे प्रासाद इति । 'भावकर्मविषयेष्विति' । अनेन भावकर्मणोरिति विषयसप्तमीति दर्शयति । भावकर्मणोर्ये स्यादयो वर्त्तन्ते तेष्विति तु विज्ञायमाने सीयुडेको विशेषितः स्यात्, स्यादयो न विशेषिताः स्युः, भावकर्मणोर्लादेशवाच्यत्वात्सीयुटश्च तद्भक्तत्वात्, अथ भावकर्माभिधायी प्रत्ययो भावकर्मशब्दाभ्यामभिधीयते तदायमर्थः स्यात् भावकर्मवाचिनि प्रत्यये परतो ये स्यादय इति, तदा

स्यादयो विशेषिताः सीयुड्विशेषितः, नहि तद्रूपस्य तेन सह पौर्वापर्यं संभवति, तस्मात्सर्वानुग्रहाय विषयसप्तम्येव युक्ता । 'यदा चिण्वदिडागमो भवतीति' । चकारस्य संनियोगार्थत्वात् । 'कस्येति' । षष्ठीनिर्दिष्टस्यागमो भवति स्यादयस्तु सप्तमीनिर्दिष्टाः, अञ्झनग्रहदृशामिति षष्ठीनिर्दिष्टम्, अङ्गस्येति च वर्तते, अतोऽजन्तादीनामङ्गानामेवागमित्वं युक्तमिति विपर्ययं मन्यमानस्य प्रश्नः । 'स्यसिच्सीयुट्तासीनामेवेति' । कथमित्याह । 'ते हि प्रकृता इति' । संनिहिता इत्यर्थः । नन्वङ्गमपि प्रकृतं योग्यविभक्तिकं च तत्राह । 'अङ्गस्य त्विति' । 'लक्ष्यविरोधादिति' । यद्वा सप्तमे योगविभागः क्रियते, आर्धधातुकस्येट्, परिभाषेयं, यो यावान्कश्चिदिडागमः स सर्व आर्धधातुकस्यैव द्रष्टव्यः, तेनायमपीडागमः स्यादीनामेव भवति नाङ्गस्य । 'कानि पुनरिति' । चिणि यदेवाहत्य विहितं तदेवातिदिश्यते आहोस्वित् चिणि दृष्टमात्रमिति प्रश्नः । तत्र द्वितीयः पक्ष आश्रीयत इति श्लोकेन दर्शयति । 'चिण्वद्वृद्धिरिति' । यथा चिणि वृद्धिः तथा स्यादिष्वपीष्यते, घानिष्यते एतदेकं प्रयोजनम्, एवमुत्तरत्रापि । प्रत्येकं संबन्धेन यथायोगमतिदेशो योज्यः । 'दायिष्यतइति' । 'आतो युक् चिण् कृतो'रिति युक् एतच्चिणयाहत्य विहितं, यच्च हो हन्तेर्ञ्णिन्नेष्विति कुत्वमघानीत्यत्र दृष्टं तदपि प्रयोजनं घानिष्यतइति, यच्च चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति दीर्घविकल्पविधानं तदपि प्रयोजनम्, एतदपि चिणयाहत्य विहितं शमिष्यते शामिष्यतइति । शमेर्णिचि 'मितां ह्रस्वः, लृटि स्ये चिण्वद्भावेन दीर्घविकल्पः, 'णेरनिटीति' णिलोपः । नन्वनिटीत्युच्यते सेट् चायमत आह । 'इट् चासिद्ध इति' । आ भाच्छास्त्रीये णिलोपे कर्तव्ये आ भाच्छास्त्रीयश्चिण्वदिडसिद्धः, तेनानिडादित्वात्सिद्धो णिलोप इत्यर्थः । 'मे इति' । सूत्रकारायमाणस्य वचनम् । ननु चास्य चिण्वदिटोऽवकाशः ये ऽनिटः, येषु ऋद्धनोः स्य इत्यादि प्रतिपदविधानं नास्ति, आर्धधातुकस्येत्यस्यावकाशः सेड् योऽस्य विषयो न भवति, यस्तु सेडस्य च सूत्रस्य विषयस्तत्र परत्वा 'दार्ध-

धातुकस्येड्वलादे'रित्ययमेव प्राप्नोति, तत्कथमसिद्धत्वमत आह । 'नित्यश्चायमिति'। अयं चिण्वदिण्नित्यः, कृतेऽपि वलादिलक्षणइट् प्राप्नोति, अकृतेऽपि, नह्ययं वलादित्वमपेक्षते । अस्मिंस्तु कृते वलादिलक्षण इण्न प्राप्नोति, तस्माद्वल्निमित्त इडनित्यः । विघातो निमित्ताभावादप्रवृत्तिः, सोऽस्यास्तीति विघाती, तदेवं नित्यत्वात्सेड्भ्योऽप्यनेनैवेड् भवति, अयं चासिद्ध इति न भवति णिलोपाभावदोषः, अवश्यं चानेनैव सेड्भ्योऽपीडिष्टव्यः, अन्यथा एतदिट्संनियुक्तश्चिण्वद्भावोऽपि न स्यात्, न च शब्दान्तरप्राप्तेरस्याप्यनित्यत्वम्, आकृतिपक्षे शब्दान्तरत्वाभावात् । 'प्रकृतस्येटो दीर्घत्वमिति'। वलादिलक्षणस्य प्रकृतत्वात् । 'गुणे कृतइति'। परत्वान्नित्यत्वाच्च । 'उपदेशग्रहणाद् भवतीति'। यद्यपि करोतिरुत्तरकालमनजन्त उपदेशेत्वजन्त एव, यदि चिणि दृष्टमात्रस्यातिदेशो हनि णिङादेशा अपि प्राप्नुवन्ति, तेषामपि तत्र दृष्टत्वादत आह । 'अङ्गाधिकारविहितमिति'। अङ्गस्येति प्रकृत्य यद्विहितं चिणि दृष्टं तदेवातिदिश्यते, संनिहितत्वात्, न च हनिणिङामादेशा एवंविधा इति तेषामनतिदेशः । अत्र वार्तिकं, 'वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेने'ति, वधभावस्यावकाशः, वध्यात्, वध्यास्तां, वध्यासुः, चिण्वद्भावे हन्ग्रहणस्यावकाशः, घानिष्यते, अघानिष्यत, अघानिषाताम् । अघानिषत घानिषीष्टेत्यत्रोभयप्रसङ्गे चिण्वद्भावो भवति विप्रतिषेधेन । अथेदानीं चिण्वद्भावे पुनः प्रसङ्गविज्ञानात् वधादेशः कस्मान्न भवति, सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति, ननु द्वितीयाध्याये, तत्रार्धधातुकइति विषयसप्तमी, ततः किमन्तरङ्गो वधभावः, नैतदस्ति । लिङीति विशेषनिर्देशात्परसप्तमी, यत्र तु विशेषनिर्देशाभावो ऽस्तेर्भूरित्यादौ तत्रैव विषयसप्तमी भव्यादिसिद्धये ॥

"दीङो युडचि क्ङिति" ॥ 'दीङ इति पञ्चमीनिर्देशादिति'। षष्ठ्यां ह्यस्यां दीङ एवादितो युट् स्यात्, पञ्चम्यां तूभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति अचीति सप्तम्याः षष्ठ्यां प्रकल्पितायामजादेर्युड्

भवति, सप्तमीनिर्दिष्टस्य तदादिविध्यर्थश्च । 'विधानसामर्थ्याच्चेति' । यदि युटोऽसिद्धत्वेन यणादेशः स्यात् युड्विधानमनर्थकं स्यात् । उपदिद्युवतीति रूपे विशेषाभावात्, न च यकारद्वयश्रवणाद्विशेषः, 'हलो यमां यमि लोप' इति पक्षे यलोपविधानात् । न च पक्षे श्रुतिभेदः, 'यणो मय' इति द्विर्वचनविधानादेव सिद्धत्वात्, श्रुतिभेदेऽपि व्यञ्जनात्परस्यैकस्यानेकस्य वा यकारस्य कीदृश इति चिन्त्यम् । 'उपदानमिति' । 'मीनातिमिनोतिदीङां ल्यपि च'त्यात्वं, दीङ इत्यनुबन्धनिर्देशात् यङ्लुकि माभूदिति ॥

"आतो लोप इटि च" ॥ इहाचि क्ङित्यार्धधातुकइति त्रयाणां प्रकृतत्वाद्विशेषणविशेष्यभावे च कामचारात्तेषामन्यतमेनानुभूतान्यतरविशेषणेनाऽनुभूतोभयविशेषणेनाननुभूतविशेषणेन वा इटः समुच्चयसंभवाद् द्वादश पक्षाः संभवन्ति । तत्र यदि तावद्विशेषणासंबन्धात्प्रागेवाचा इटः समुच्चयः, अङ्गाक्षिप्तश्च प्रत्ययो वा विशेष्यते, इटि अजादौ च प्रत्ययइति विज्ञायते, तदेड्ग्रहणमनर्थकं भवति, अजादेरिटोऽजादिना प्रत्ययेन समुच्चयासंभवात्, तदा च क्ङिदार्धधातुके अजादेरेव विशेषणे व्यवतिष्ठते नेटः, हलादेरिटः क्ङित्त्वासंभवात्, आर्धधातुकत्वाव्यभिचाराच्च, ततश्च दासीयेत्यादौ लोपप्रसङ्गः, अथ क्ङिद्विशिष्टेनाचा समुच्चयः, क्ङित्यजादौ भवतीटि चेति, ततोऽक्ङिदर्थमनजाद्यर्थं चेड्ग्रहणं भवति पपिथ दासीयेति, अथार्धधातुकविशिष्टेनाचा समुच्चयस्ततोऽक्ङिदर्थमनजाद्यर्थमनार्धधातुकार्थं चेड्ग्रहणं, पपिथ, दासीय, व्यत्यरे, इतीण्मात्रे लोपप्रसङ्गः, तदेवमचा समुच्चये चत्वारः पक्षाः, एवमार्धधातुकेन, एवं क्ङितेति द्वादशपक्षाः । तयोरप्युभयविशिष्टयोस्तएव दोषा यांस्त्ववोचाम । अथाविशेषितेनार्धधातुकेन समुच्चयस्तदानार्धधातुकार्थमिड्ग्रहणमिति व्यत्यरइत्यत्रैव प्रसङ्गः, अथ क्ङिद्विशिष्टेनार्धधातुकेन समुच्चयस्तदाऽक्ङिदर्थमनार्धधातुकार्थमिड्ग्रहणं, पपिथ, व्यत्यरे, अथाज्विशिष्टेनार्धधातुकेन समुच्चयः, अनजाद्यर्थमनार्धधातुकार्थं चेड्ग्रहणं दासीय, व्यत्यरे, अथाज्विशिष्टेन क्ङिता समुच्चयः, ततोऽनजाद्य-

र्थमक्ङिदर्थं चेड्ग्रहणं दासीय, पपिथ, यथार्द्धधातुकविशिष्टेन क्ङिता समुच्चयः, तदानार्द्धधातुकार्थमक्ङिदर्थं चेट्ग्रहणं, व्यत्परे, पपिथ, । तदेवमेकादशपक्षा दुष्टाः, द्वादशः पक्षः शिष्यते ऽर्विशिष्टेन क्ङिता समुच्चय इति, अत्र च पक्षे अच्यार्द्धधातुक इति विशेषणाद्रुयमविशेषाद् द्वावपि क्ङिदिटावुपनिपततीति अक्ङिदर्थमेवेड्ग्रहणं भवति, तेन पपिथेत्यादावाल्लोपो भवति दासीय व्यत्परे इत्यनजादावनार्द्धधातुके च न भवति। स एष निर्दोषः पक्षस्तमिममाश्रयति। 'इट्यजादावार्द्धधातुक इति'। 'क्ङिति चेति'। अजादावार्द्धधातुक इत्यनुषङ्गः। 'दासीयेति'। आशिषि लिङ्, उत्तमैकवचनमिट्, 'इठेत्'। अत्र सीयुट इड्भक्तत्वादिटो ऽजादित्वाभावः॥

"ईद्यति"॥ दीर्घविधानमुत्तरार्थम्, अध्यगीष्ट। इह तु गुणेन भवितव्यमिति ह्रस्व एव विधेयः॥

"घुमास्थागापाजहातिसां हलि"॥ माग्रहणेन मेङ् प्रणिदाने, माङ् माने मा मान इति सर्वेषां ग्रहणम्, एवं गा इत्यत्रापि गाङ्गतौ, गै शब्दे, गा स्तुतौ छन्दसि, इणो गा लुङि, इणवदिक इति वक्तव्यं, गाङ् लिटीति, सर्वेषां गारूपाणां ग्रहणं, गामादाग्रहणेष्वविशेष इति वचनात्। 'जुहातीति'। ओहाक् त्यागे। 'जिहातेरिति'। ओहाङ् गतावित्यस्य। भृञामिदित्यभ्यासस्येत्वे सति जहातीति निर्देशो नोपपद्यते। कामं हागित्यपि निर्देशेन भवति जिहातेः प्रसंगस्तथा तु न कृतमित्येव। 'एतद्वेत्यादि'। यथा चैतज्ज्ञापकं तथा जनसनखनामित्यत्रोक्तम्। ईत्वे वकारप्रतिषेधः, वकारस्य निमित्तभावेन प्रतिषेधो वकारप्रतिषेधः, वकारादावीत्वं न भवतीत्यर्थः। 'आतो मनिन्क्वनिब्वनिपश्च'। घृतं पिबन्ति घृतपावानः, वसां वसापावानः, क्वनिपीत्वं न भवति, धीवरी पीवरीत्यत्र त्वौणादिकमीत्वं ध्याप्योर्वा संप्रसारणं, तथा च स्थः क चेत्यत्र क्विपि ईत्वाभाव उदाहृतः॥

"वान्यस्य संयोगादेः"॥ 'स्थेयादिति'। अन्यस्य ग्रहणे ऽक्रियमाणे पूर्वयोगो ऽन्येषु सावकाशः, अयमपि ग्लायादित्यादिषु, स्थेयादित्यत्रोभयप्रसङ्गे परत्वादयमेव विधिः स्यादित्यन्यस्य ग्रहणम्॥

"न ल्यपि" 'यदुक्तमिति'। ईत्त्वं न त्वनन्तरमेत्त्वम्, प्राप्त्यभावात् ॥

"मयतेरिदन्यतरस्याम्" ॥ 'अपमित्येति'। उदीचां माङो व्यतीहारइति क्त्वाप्रत्ययः, ह्रस्वे कृते तुक् ॥

"आड्जादीनाम्" ॥ ऐज्यतेत्यादौ यजिवपिवहीनां हलादित्वादाट् न प्राप्नोति, संप्रसारणे कृते ऽजादित्वाद्भविष्यति, परत्वाल्लादेशेभ्यः प्रागटा भवितव्यं, ततो लादेशः, ततो यक्, ततः संप्रसारणेन, अत आह । 'इहेति'। लादेशस्यान्तरङ्गत्वं लकारमात्रापेक्षित्वात् । अडागमस्तु लकारविशेषमङ्गं चापेक्षतइति बहिरङ्गः, कृताकृतप्रसंगित्वाद्विकरणस्य नित्यत्वं, नन्वडागमोपि कृतेपि विकरणे प्राप्नोत्यकृतेपीति नित्य एव, ततश्च परत्वादडागम एव प्राप्नोति, तत्राह । 'शब्दान्तरप्राप्तेरिति'। शब्दान्तरप्राप्तिमेव दर्शयति । 'कृते हीति'। अङ्गस्याडागमः कृते विकरणे विकरणान्तमङ्गमकृते तु धातुमात्रमित्यस्ति शब्दान्तरप्राप्तिः । ननु विकरणोपि शब्दान्तरप्राप्तेरनित्यः । तथाहि । स कृते ऽडागमे तदादेर्धातोर्भवति अकृते तु धातुमात्रात्, अत आह । 'शब्दान्तरस्येति'। षष्ठीनिर्दिष्टस्य यद्विधीयते आगम आदेशो वा तद्विषया परिभाषा न पञ्चमीनिर्देशइत्यर्थः । 'नित्यत्वादेवेति'। एवकारः पौनर्वचनिकः, नित्यत्वादडागमं बाधतइति पूर्वमुक्तमत्रापि स एव हेतुरिति । अडागमस्तु संप्रसारणे कृते न प्राप्नोति, आटा बाधितत्वात्, यस्य निमित्तं लक्षणान्तरेण विहन्यतइति तु न सार्वत्रिकमिति भावः । अयं योगः शक्यो ऽकर्तुम् । अजादीनामपि पूर्वसूत्रेणाडेवास्तु, कथमाटश्चेति वृद्धिः, आटश्चेति वक्ष्यामि, इहापि तर्हि प्राप्नोति अकार्षीत्, अचीति वर्तते, एवमपि स्वपेर्लङ् सिप्, अड्गार्ग्यगालवयोरिति सिपो ऽट्, इत्वं, इणि चेत्युत्वम्. अस्वपोइसचित्यत्र वृद्धिप्रसङ्गः, अजादौ धातौ वृद्धिं वक्ष्यामि, तर्हि धाताविति वक्तव्यं, न वक्तव्यं, यदेतदुपसर्गादृति धाताविति तत्पूर्वत्रापकृष्यते, आटश्चेत्यत्र चकारस्तस्यैव विधेः समुच्चयार्थः, आटो विध्यन्तरं बाधित्वा वृद्धिरेव यथा

स्यात्तेनाटिटदित्यादौ परमप्यतो गुणे पररूपं बाधित्वा वृद्धिरेव भवति, यथा सिद्धान्तेऽपि, औसीयत् औङ्कारीयत् 'उस्यपदान्तात्,' 'ओमाङोश्चे'ति पररूपं न भवति, उत्तरार्थं तद्योगवचनं छन्दस्यपि दृश्यते सुरुचो वेन आवः, अट एवात्र छान्दसं दीर्घत्वं भविष्यति, पूर्वो न्यायः इति, यथा आसचित्यत्रापि लावस्थायामेवाटि कृते अअसल इति स्थिते आटश्चेति वृद्धिश्च प्राप्नोति लादेशश्च, तत्रान्तरङ्गत्वाल्लादेशः, वृद्धिर्ह्यटमचं च निमित्तमपेक्षते, कृते लादेशे वृद्धिश्च प्राप्नोति श्नसोरल्लोपश्च, तत्रान्तरङ्गत्वाद्वृद्धिः, नानाश्रयत्वाच्च वार्णादाङ्गं बलीय इति नास्ति, कृतायां वृद्धौ तपरकरणादाकारस्य लोपाभावः, इह च आयन्निति इणो लङि आटि अइअन्, आटश्चेति वृद्धिः प्राप्नोति इणो यणिति यणादेशश्च, तत्रान्तरङ्गत्वाद्वृद्धिः, नानाश्रयत्वाच्च वार्णादाङ्गं बलीय इति नास्ति, इणो यण् एरिति योगविभागादिवर्णान्तस्येणो यण्विधानादेकारस्य तदभावादायादेशे सिद्धमिष्टम् । अत्र श्लोकौ ।

> अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
> आस्वपोहसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ॥
> पररूपं गुणेनाट ओमाङोरुसि तत्समम् ।
> छन्दोर्थं बहुलं दीर्घ इणस्त्योरन्तरङ्गतः ॥

इति ।

"न माङ्योगे" ॥ यद्ययमनन्तरस्याट एव प्रतिषेधः स्यात्तत्संयुक्तमेव प्रतिषेधं कुर्यात् आडजादीनाममाङ्योगइति, असंयुज्य तु प्रतिषेधात्सर्वस्य प्राकरणिकस्य प्रतिषेधो विज्ञायतइत्याह । 'लुङ्लङ्लृङ्क्षु यदुक्तं तच्च भवतीति' । तत्र लृङ उदाहरणं न प्रदर्शितं माङ्योगे तदसंभवात्, ङित्त्वविशिष्टस्योपादानमस्मदादेशो यो माशब्दस्त्वामौ द्वितीयाया इति तद्योगे प्रतिषेधो माभूत्, सुखिनं मा अकार्षीदिति, अथ कथं मा वालिपथमन्वगाः, स्वच्छन्दमनुवर्त्तन्ते न शास्त्रमृषयः किल ॥

"बहुलं छन्दस्यमाङ्योगेऽपि ॥ 'मा वः क्षेत्र इति'। वः युष्माकं क्षेत्रे भार्यायां परबीजानि परेषां बीजानि मा वाप्सुः, उप्तानि मा भूवन्, वपेः कर्मणि लुङ्, व्यत्ययेन परस्मैपदं, झेर्जुस्, सिच्, वदव्रजेति वृद्धिः, क्वचित्तु माङ् योगेऽपि भवति इति प्रक्रम्याधाप्सुरिति पठ्यते तथाध्ययनं तु न क्वचिद्दृष्टम् । 'अभित्था इति'। भिदेस्थास्, झलो झलीति सिचो लोपः । 'आवरिति'। पूर्वसूत्रे वृत्तावेव व्युत्पादितम् ॥

"हुश्नुवो रे" ॥ 'दध इति'। ननु चात्र परत्वाद्रेभावे कृते अन-आदित्वादाल्लोपो न प्राप्नोत्यत आह । 'धाञो रेभावस्यासिद्धत्वा-दिति'। नन्वेवमपि रेभावे कृते तस्यैवेडागमः प्राप्नोति, न च रेभावस्य वैयर्थ्यं, कृसृभृप्रभृतिष्वनिट्सु चरितार्थत्वादित्यत आह । 'अत्रेति'। कथं पुनर्लातलिङःस्य तस्य इरशब्दस्य रेशब्दस्य रेभावो भवति, कथं वा स्वप्रवृत्तिमपेक्ष्य तस्मिन्निडागमे कृते पुनः स्वयं प्रवर्तमानस्यात्माश्रयदोषो न भवति, तत्राह । 'तदर्थं चेति'। द्विवचननिर्देशाद् दोषद्वयं न भव-तीत्यर्थः ॥

"अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" ॥ इश्च उश्च य्वू, तयोर्य्वोः, ह्रस्वयोरिदं ग्रहणं दीर्घयोरपि तु कार्यं भवति सवर्णग्रहणात्, य्वोरि-तिवर्णोवर्णाभ्यां श्न्वादीनां तदन्तविधिः, तत्र निर्दिश्यमानस्यादेशा भवन्तीत्येवान्त्यस्य सिद्धेर्ङकारो विस्पष्टार्थः । 'आप्नुवन्तीत्यादि'। यस्सं-योगपूर्वमेकाच् तदिहोदाहरणम्, अन्यत्र हुश्नुवोः सार्वधातुके इरनेकाच इति यणा भाव्यं, लुलुवतुरित्यादिकं तु भवत्येव, ओः सुपीति वचनात् । 'इयङुवङ्भ्यामिति'। गुणवृद्ध्योरवकाशः, चेता गोः, इयङुवङोरव-काशः, चिक्षियतुर्लुलुवतुः, चयनं चायकः लवनं लावक इत्यत्रोभयप्रसङ्गे विप्रतिषेधः । 'तनुवमिति'। अधातुत्वादप्राप्तउवङ् विधीयते । 'तन्व-मिति'। वा छन्दसीत्यमि पूर्वत्वाभावे यण् । 'विश्वमिति'। 'विभ्व इति'। सत्सूद्विषेति क्विप् । अत्र नित्यमोः सुपीत्यनेन यण् प्राप्तः, स्वर्गादिषु यजुर्वेदइयङुवङौ, बह्वृचे यण् ॥

"अभ्यासस्यासवर्णे" ॥ पूर्वमङ्गस्याजादौ प्रत्यये विधानादिद-मारभ्यते । 'इयेषेति' । अत्र गुणस्य स्थानिवद्भावविषये यद्वक्तव्यं तद् द्विर्वचनेचीत्यत्रोक्तम् ॥

"स्त्रियाः" ॥ 'स्त्री इत्येतस्येति' । स्त्रीप्रत्ययान्तानां स्त्र्यर्थवृत्तेर्वा शब्दस्य ग्रहणं न भवति, 'आएनव्या:' 'कुमार्यौ वयसी'त्यादिनिर्दे-शात् । 'उत्तरार्थमिति' । उत्तरत्र स्त्रिया एवानुवृत्तिर्यथा स्यात् श्नुधातु-भ्रुवां माभूत् ॥

"इणो यण्" ॥ अत्र सूत्रार्थकथनानन्तरं क्वचित्पठ्यते, अन्तरङ्ग-त्वादिको यणचीति सिद्धे समानाश्रये वार्णादाङ्गं बलीय इति ज्ञापनार्थं वचनमिति, तदयुक्तं, इयङादेशापवादोयमिति वक्ष्यति तत्कथमियङ्-विषये यण् प्रवर्त्तते । 'इयङादेशापवादोयमिति' । इयङादेशस्यैवाप-वाद इत्यर्थः । कुत इत्याह । 'मध्येपवादा इति' । एवं सति यदिष्टं सिद्धं तद्दर्शयति । 'गुणवृद्धिभ्यामिति' । यदि तु नाप्राप्ते विध्यन्तरे आर-म्भात्सर्वमेव विध्यन्तरं यण् बाधेत गुणवृद्धिविषयेपि स्यात् । अथेणो नेत्येव कस्मान्नोक्तम्, इयङादेशे हि प्रतिषिद्धे इको यणचीत्येव यण् भवि-ष्यति, अहो सूक्ष्मदर्शी देवानांप्रियः यदिदमपि न दृष्टम्, ईयिव, ईयिम, कर्मणि ईयिरे, अत्रेयङि प्रतिषिद्धे सवर्णदीर्घः स्यात्, तस्माद्यणेव विधेयः॥

"एरनेकाचोऽसंयोगपूर्वस्य" ॥ 'तेन संयोगो विशेष्यतइति'। यद्य-प्यन्यपदार्थं प्रति गुणभूतः संयोगस्तथापि स एव विशेष्यते, धातोरित्य-नुवृत्तस्य प्रयोजनान्तराभावात्, अस्तीदं प्रयोजनमिवर्णं विशेषयिष्यामी-ति, नैतदस्ति, यद्यधातोरिवर्णो ऽसंयोगपूर्वो भवितव्यमेव तस्य यणा 'इको यणची'ति, तद्यथा कुमार्यौ कुमार्य इति । ननु ग्रामणीवद्-धातोः पूर्वसवर्णं बाधित्वा यण् माभूदिति धातुनैवेवर्णो विशेषणीयः, नेत्याह, इयङ्बाधनार्थो यण्, न चाधातोरियङः प्रसङ्गोस्ति, तत्कथमधातु-निवृत्त्यर्था धात्वनुवृत्तिरुपपद्यते, तस्मात्सुष्ठूक्तं गुणभूत एव संयोगो वि-शेष्यतइति । 'अङ्गविशेषणं माभूदिति' । अन्यथाधिकारेण संनिहितस्य तस्यैव विशेषणं स्यादसंयोगपूर्वग्रहणं, ततश्च यवक्रि[illegible] यवक्रिय इति,

अत्रापि प्रसज्येत, नह्यचाङ्गस्य संयोगः पूर्वावयव इति, ननु च य्वोरिति प्रकृतं तत्र एरित्यनुच्यमाने ओरपि यण् स्यात् लुलुवतुरित्यादौ, ततश्च तन्निवृत्त्यर्थमपि स्यादित्यत आह । 'लुलुवतुर्लुलवुरित्येतस्मिन्निति'। इह एरित्यनुच्यमानेनैनैवोरपि सिद्धत्वादोः सुपीत्येतन्नियमार्थं भवति, ओः सुप्येवेति, विपरीतस्तु नियमो न भवति ओरेव सुपीति, न भूसुधियोरिति यण्प्रतिषेधात्, ततश्चास्मादेव नियमाल्लुलुवतुरित्यादौ सिद्धत्वादेरित्येतदोनिवृत्त्यर्थं नोपपद्यतइति पूर्वोक्तमेव प्रयोजनं, यदि त्वसंयोगपूर्वयोरिति द्विवचननिर्देशेन य्वोरेवैतद्विशेषणमुच्येत तर्ह्येरिति शक्यमकर्तुम्। 'इहापि न स्यादिति'। यदि धातुना संयोगो न विशेष्येतेति भावः। क्वचिदिहापि यथा स्यादिति पाठस्तत्र प्रकृतत्वाद्यणादेश इत्यर्थः। 'गतिकारकाभ्यामित्यादि'। इष्टिरेवैषा। 'परमनियाविति'। भावे कर्त्तरि वा क्विप्॥

"ओः सुपि"॥ 'सकृल्ल्वाविति'। क्रियाविशेषकत्वात्सकृदित्यस्य कारकत्वम्। 'कटप्रुवाविति'। क्विब्वचीत्यादिना क्विप् दीर्घश्च॥

"वर्षाभ्वश्च"॥ न भूसुधियोरिति प्रतिषेधे प्राप्ते वचनम्। 'पुनर्भ्वश्चेत्यादि'। एवं च पुनर्वर्षाकारेषु भुव इति सूत्रन्यासः॥

"न भूसुधियोः"॥ भूशब्देन तदन्तस्य ग्रहणं केवलस्य यण्प्राप्त्यभावात्। न चोवङः प्रतिषेधः, विप्रतिषिद्धत्वात्, 'वर्षाभ्वश्चे'त्यारम्भाच्च। 'सुधियाविति'। ध्यायतेः क्विप्, दृशिग्रहणात्संप्रसारणम्॥

"हुश्नुवोः सार्वधातुके"॥ अनेकाचोसंयोगपूर्वस्य ओरिति चानुवर्त्तते, यद्यपि हुश्नुवोरुवर्णान्तत्वमव्यभिचारि तथाप्यसंयोगपूर्वग्रहणमोर्विशेषणं यथा स्यात् हुश्नुवोर्माभूदित्येवमर्थमनुवर्त्त्यमोरित्येतत्, हुश्नुविशेषणे हि तक्ष्णुवन्तीत्यादावेव प्रतिषेधादाप्नुवन्तीत्यादौ न स्यात्, तत्र श्नुप्रत्ययान्तस्यासंयोगपूर्वस्येति व्यधिकरणे षष्ठ्यौ, श्नुप्रत्ययान्तस्याङ्गस्यावयवो ऽसंयोगपूर्वो य उकारस्तस्येत्यर्थः। अनेकाच इति त्वङ्गेन समानाधिकरणमेव, सार्वधातुकग्रहणं जुहोत्यर्थं न श्न्वर्थमव्यभिचारात्। 'जुह्वतीति'। अदभ्यस्तात्। 'जुह्वदिति'। नाभ्यस्ताच्छतुरिति

नुम्प्रतिषेधः । 'योयुवति रोरुवतीति' । युरु इत्येताभ्यां यङ्लुगन्ताभ्यां लटि पूर्वत्रक्रिरुद्भावः । 'इदमेवेत्यादि' । एतच्च 'यङोचि चे'त्यत्र छन्दोनुवृत्तिमाश्रित्योक्तं, जयादित्यस्तु तत्र छन्दोनुवृत्तिं नाशिश्रियत् । कथं पुनरेतज्ज्ञापकमित्याह । 'छन्दसि हीति' । छन्दसि यङ्लुगन्त-निवृत्त्यर्थं श्नुग्रहणं न भवति, ततः परस्य तिङ आर्द्धधातुकत्वात्, यणादेशस्याप्रसङ्गादित्यर्थः । तथा चात्र वार्तिकं 'यङ्लुगर्थमिति चेदार्द्धधातुकत्वात्सिद्ध' मिति । स्यादेतत् । यङ्लुगन्तादन्यद्व्यावर्त्यं भविष्यति, अतो न ज्ञापकं श्नुग्रहणमित्यत आह । 'न चेति' । 'असंयोगपूर्वमिति' । असंयोगपूर्वावर्णान्तमित्यर्थः । अत्र ओरित्यनु-वृत्तेर्मिमतइत्यादौ न भविष्यति, अनेकाच इत्यनुवृत्तेर्युवन्तीत्यादौ, अयु-वन्नवचित्यत्राप्यटोसिद्धत्वादेकाच्त्वमेव, असंयोगपूर्वस्येत्यनुवृत्तेः प्रोर्णुव-न्तीत्यत्र न भविष्यति, तन्वन्तीत्यादौ च भवितव्यमेव यथा, तस्माद्य-ङ्लुगन्तादन्यद् व्यावर्त्यं न सम्भवति, आह च श्नुग्रहणमनर्थकमन्य-स्याभावादिति ॥

"भुवो वुग्लुङ्लिटोः" ॥ 'अभूवन्निति' । गातिस्थेत्यादिना सिचो लुक् । 'अभूवमिति' मिपोऽम्भावः । लुङ्लिटोरिति किं, भवति भविष्यति, शप्स्ययोर्न भवति । यदि क्ङितीत्यनुवर्तिष्यते, अभूवमित्यत्रापि तर्हि न स्यात्, एवं तर्ह्योरित्यनुवर्तिष्यते, गुणे कृते अनुवर्णान्तत्वाच्च भविष्यति, अभूवमित्यत्र 'भूसुवोस्तिङी'ति गुणप्रतिषेधादुवर्णान्तत्वं, नात्र शक्यमोरित्यनुवर्तयितुम्, एतच्चन्धिभवतिभ्यां चेत्यत्र विस्तरे-णोक्तम् ॥

"ऊदुपधाया गोहः" ॥ उदाहरणेषु णिच् ण्वुल्, णिनिः, आभीक्ष्ण्ये णमुल्, घञित्येते प्रत्ययाः, सर्वत्र गुणे कृते ओकारस्य ऊकारः । 'उपधाया इति किमिति' । ओरित्यनुवृत्तेरोकारस्य भवि-ष्यति स चोपधैवेति प्रश्नः । ननु च ओरित्युच्यते न चास्योपधोकारः सम्भवति, ओरित्यनुवृत्तिसामर्थ्याद्गोह इति विषयोपलक्षणं भवि-ष्यति, न तु कृतगुणप्रतित्त्यर्थम् । 'अन्त्यस्य माभूदिति' । नोपलक्षण-

त्वे प्रमाणमस्ति, ततश्चासम्भवादोरित्यस्य निवृत्तावन्त्यस्य स्यात् । 'गमहनजनखनघसा'मिति लोप उपधाया यथा स्यादित्युत्तरार्थमप्यवश्यमुपधाग्रहणं कर्तव्यमिति भावः । 'विकृतग्रहणं विषयनियमार्थमिति' । गुह इत्युच्यमाने धातुनिर्देशोऽयं भवति, ततश्च क्वचिद्विषयेऽपि सत्स्वरूपप्रयुक्तमूत्वं स्यात् । तस्मादूत्वस्य विशिष्टो विषयो निर्दिष्टो यथा स्यादिति विकृतस्य कृतगुणस्य ग्रहणं कृतं, विषयार्थतां स्पष्टयति । 'यचेति' । गुणविषये यथा स्यादित्यर्थः । 'अयादेशप्रतिषेधार्थं च केचिदिच्छन्तीत्यादि' । पूर्वत्रिषयावधारणे तात्पर्यमित्युक्तं तच्चाकृक्ङितीत्युच्यमाने सिद्ध्यति, लाघवार्थं तु गोह इत्युक्तं, तच्च कालावधारणार्थमप्यर्थाद्भवति, गुणोत्तरकालमूत्वमिति, इदानीं तूभयत्रापि तात्पर्यमित्युक्तं भवति । गुणविषये भवति तत्रापि कृते गुण इति । यदि हि प्रागेव गुणादूत्वं स्यात् तदा 'ल्यपि लघुपूर्वा'दित्ययादेशे तस्यासिद्धत्वाल्लघुपूर्वात् इकार इत्ययादेशः स्यात्, यदा तु गुणे कृते तस्य स्थाने ऊत्वं तदा तस्यासिद्धत्वेऽप्योकारस्य गुरुत्वादयादेशाभावः सिद्ध्यतीति, तदेतद् दूषयति । 'व्याश्रयत्वादिति' । कथं व्याश्रयत्वमित्याह । 'णावूत्वमिति' ॥

"दोषो णौ" ॥ किमर्थं दुषेर्विकृतस्य ग्रहणं क्रियते न दुष इत्येवोच्येत, विषयार्थमिति चेत्, न, णाविति विषयस्य साक्षान्निर्देशात्, प्रदूष्य गत इत्यादावयादेशप्रतिषेधार्थमिति चेत्, न, दत्तोत्तरत्वात्, उक्तोत्तरमेतत्, व्याश्रयत्वादसिद्धत्वं नास्तीति, तस्माद्दुष इत्येव वक्तव्यमत आह । 'विकृतग्रहणमिति' । क्रमः प्रस्तावः, प्रकरणमित्यर्थः ॥

"वा चित्तविरागे" ॥ चित्तविरागश्चित्तस्याप्रीतता, प्राप्तविभाषेयं, णावित्येव, चित्तस्य दोषः ॥

"मितां ह्रस्वः" ॥ 'रजयतीति' । रञ्जेर्णौ मृगरमणउपसङ्ख्यानमित्युपधालोपः ॥

"चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" ॥ 'न ह्रस्वविकल्प एव विधीयतेति' । एवमपि ह्रस्वपक्षे अशमीति सिद्ध्यति, पक्षान्तरे अशामीति

यथाप्राप्तं दीर्घ एवावस्थास्यतइति भावः । 'शमयन्तं प्रयुङ्क्त इति'। यद्यपि चिण्विषये कर्म प्रदर्शनीयं भूतकालश्च, तथापि णिजुत्पत्तये हेतुव्यापारमात्रप्रदर्शनमत्र विवक्षितं न कर्ता नापि वर्त्तमानः काल इति न दोषः । 'णिलोपस्य स्थानिवद्भावादिति'। स्थानिवद्भावे हि सति यस्मिंश्चिण्णमुल्परो णिः, न तस्मिन्मित्त्वं, पूर्वेण णिचा व्यवधानात्, यस्मिंश्च मित्त्वं न स चिण्णमुल्परः, परेण णिचा व्यवधानात्, ततश्च ह्रस्वविकल्पो न स्यात् पूर्वेण नित्यमेव तु ह्रस्वः स्यात् । ननु दीर्घविकल्पेपि यावता स्थानिवद्भावः कथमिवैतत्सिद्ध्यति, तत्राह । 'दीर्घविधौ त्विति'। न पदान्तद्विर्वचनेत्यादिना स्थानिवद्भावप्रतिषेधाद्दीर्घविकल्पस्यायं विषय एवेत्यर्थः । 'तथेत्यादि' । अत्र दीर्घविधौ त्वजादेशो न स्थानिवद्भवतीत्यनुषङ्गः, शमेर्यङ्, द्विर्वचनं, नुक्, णिच्यतो लोपः, यस्य हलः, शंशमि इति स्थिते यदा ततश्चिण्णमुलौ भवतः, तदा दीर्घविकल्पः सिध्यति, अजादेशस्य स्थानिवत्त्वाभावादित्यर्थः । एतदेव स्पष्टयति । 'योसाविति'। 'यश्च यङ्कारइति'। णौ लुप्यतइत्यनुषङ्गः । एवं तावद्दीर्घविधौ त्वजादेशो न स्थानिवद्भवतीत्येतत्स्पष्टीकृतं, णिलोपस्य स्थानिवद्भावाद् ह्रस्वविकल्पो न स्यादिति यदुक्तं तत्समर्थयते। 'ह्रस्वविकल्पेत्विति'। णेर्णिः, णिणिः, सोन्तो यस्य स णिण्यन्तः, एतेन यङ्ण्यन्तइति व्याख्यातम् । 'असिद्धिरेवेति'। कस्य, प्रकृतत्वाद्दीर्घस्य, एवकारेण तु शब्देन चैतद्दर्शयति । णिचमाश्रित्य वृद्धिविधानादस्ति दीर्घस्य शङ्का, णिलोपस्य तु स्थानिवद्भावादयं विकल्पो न स्यादित्येत्र दोषः, यङ्ण्यन्ते तु भवतु नामायं विकल्पस्तथापि पक्षे दीर्घस्य श्रवणं न सिध्यति, णिचमपेक्ष्य वृद्धौ कर्त्तव्यायामतो लोपस्य स्थानिवद्भावाद्दीर्घस्यानुत्पेवादिति। स्यादेतत् । दीर्घविकल्पे विधीयमाने यदि नाम स्थानिवद्भावोनास्ति तथापि नैवात्र दीर्घः सिध्यति, असिद्धवदत्राभादिति णियङोर्लोपस्यासिद्धत्वादित्यत आह । 'व्याश्रयत्वादिति'। व्याश्रयत्वमेव दर्शयति । 'णौ हीत्यादि'। किं च हेड वेष्टने घटादिः, तस्य ह्रस्वाभावपक्षे अहेडीति स्यात, दीर्घे तु ह्रस्वस्य कृते अहीडीति भवति, तस्मादतोपि हेतोर्दीर्घ एव विकल्पनीयः ॥

"ल्हादो निष्ठायाम्"॥ ह्लादी सुखे च, ईदित्वान्निष्ठायामनिट्, क्वचित्पठ्यते 'ह्लादइति योगविभागः क्रियते, क्तिन्यपि यथा स्यात् प्रल्हत्तिरिति,' भाष्ये तु नैतद्दृष्टम् ॥

"छादेर्घेऽद्व्युपसर्गस्य"॥ 'उरश्छद इति'। 'छद आवरणे, चुरादिर्णिच्, पुंसि संज्ञायामिति करणे घः, कर्मणि षष्ठ्या समासः, ननु चात्र घे परतो ण्यन्तमङ्गं तस्योपधाऽकारः, न च सा ह्रस्वभाविनी, न च शक्यं वक्तुं णिलोपे कृते आकारो ह्रस्वभाविन्युपधेति, णिलोपस्यासिद्धवदत्राभादित्यसिद्धत्वादचः परस्मिन्निति स्थानिवद्भावाच्चात आह। 'णिलोपस्य चेति'। अपर आह। णाविति वर्त्तते, घे परतो यो णिस्तत्र यदङ्गं तस्योपधाया ह्रस्वः, छादेरिति चेकानिर्द्देशो न णिचेति। ननु यत्र त्रिप्रभृतयः सन्ति द्वावपि तत्र स्तस्ततश्चाद्व्युपसर्गस्येत्येव सिद्धं किं सूत्रशिष्टया ऽत आह। 'उत्तरा हीति'। एतदेव लोकव्यवहारेण द्रढयति। 'नहीति'॥

"इस्मन्त्रन्क्विषु च"॥ 'अर्च्चिशुचिहुसृपिच्छा[1]दिभ्य इसि' रितीसिप्रत्ययः, मनिन् सर्वधातुभ्यः, ष्ट्रन्सर्वधातुभ्यः, योगविभागाद्द्विप्रभृत्युपसर्गादपि भवति समुपच्छदिः॥

"गमहनजनखनघसां लोपः क्ङित्यनङि"॥ 'जघ्नतुरिति'। अभ्यासाच्चेति कुत्वम्। 'जज्ञ[2]तुरिति'। जन जनने परस्मैपदी जौहोत्यादिकः नकारस्य चुत्वम्। 'जज्ञ इति'। जनीप्रादुर्भावे, अनुदात्तेत् दैवादिकः। 'जक्षतुरिति'। लिट्यन्यतरस्यामित्यदेर्घस्लादेशः, घकारस्य चर्त्वे, शासिवसिघसीनां चेति षत्वम्। 'अक्षन्निति'। 'लुङ्सनोर्घस्लृ' मन्त्रे घसेति च्लेर्लुक्। 'अचीत्येवेति'। अचि श्नुधात्वित्यतः, तस्य तु क्ङिति वाचित्यत आरभ्योपयोगो न प्रदर्शितः, क्वचिद्व्यभिचाराभावात्, क्वचिदसंभवात्, इह तूपयोगः, तथा चोत्तरसूत्रे हलि चेति वक्ष्यति॥

---

१ छदिभ्यइति पा॰ ई॰ पु॰।
२ जज्ञुरिति पा॰ ई॰ पु॰।

"तनिपत्योश्छन्दसि" ॥ 'वितत्निरइति'। लोपविधानसामर्थ्यादसिद्धत्वेपि तस्यात एकहल्मध्यइत्येत्वाभ्यासलोपौ न भवतः। 'पप्तिमेति'। लिट्, मस्, इट्॥

"घसिभसोर्हलि च" ॥ सूत्रे चकारस्य पाठो ऽनार्षः। तथा च वार्त्तिकं हलचहणमपरिभाष्यमन्यत्रापि दर्शनादिति। 'तथा न क्रियतइति'। यदि क्रियेत अनच्कत्वाद् द्विर्वचनं न स्यादितिभावः। पूर्वत्राचीत्यधिकारादिह हलीत्युक्तं, तदुपादानादचि न स्यादिति चकारेण समुच्चयः, यदि पूर्वत्रैवाचीत्यनुवर्त्तते नेहेत्युच्येत ततो हलि चेति शक्यमकर्त्तुमुत्तरार्थं तु तत्कृतम्॥

"हुझल्भ्यो हेर्धिः" ॥ 'हलादेरिति'। हुझल्भ्य इति पञ्चम्या हलीति सप्तम्याः षष्ठीप्रकल्प्यतइति भावः। यद्येवं यस्मिन्विधिरित्यस्याभावात्तदादिविधिर्न स्यात्, हलीत्यनुवृत्तिसामर्थ्याद्धलन्तस्याभावाच्च भविष्यति। 'भिन्धीति'। श्नसोरल्लोपः। 'प्रीणीहीति'। ई हल्यघोः। 'जुहुतामिति'। लोटो लङ्वत् तसस्ताम्। 'रुदिहीति'। शब्दान्तरप्राप्त्या द्वयोरप्यनित्ययोः परत्वादिटि कृते पुनर्द्धित्वप्रसङ्गः। 'इहेत्यादि'। धित्वस्यावकाशोऽनाशिषि जुहुधीति, तातङोवकाशो हुझल्भ्यो ऽन्यः, जीवतात्त्वमिति, आशिषि हुझल्भ्यः तूभयप्रसङ्गे परत्वात्तातङ्, अथ कृतेपि तस्मिन् स्थानिवद्भावाद्धित्वं कस्मान्न भवति, तत्राह। 'तत्र कृतइति'। भिन्धकि च्छिन्धकीत्यत्रापि तर्हि परत्वेन धित्वे कृते अकच्च स्यादित्य आह। 'भिन्धकीति'। अपर आह, स्थान्यादेशयोर्द्वयोरपीकार उच्चारणार्थः, हकारस्य धकार आदेशः, हलीत्यपि नानुवर्त्यं, न काप्यनिष्टप्रसङ्ग इति॥

"श्रुशृणुपॄकृवृभ्यश्छन्दसि" ॥ 'उरु[1]णस्कृधीति'। नश्च धातुस्थोरुषुभ्य इति णत्वं, कः करदिति विसर्जनीयस्य सत्वम्। 'अन्येषामपि दृश्यतइति दीर्घत्वमिति'। न केवलं शृणुधी गिर इत्यत्र, श्रुधीहवम्, अपावृधीत्यत्राप्यनेनैव दीर्घत्वम्। 'अतोन्यत्रेति'। शृणुधीत्यतोन्येषु सर्वोदाहरणेषु॥

१ उरुकृदिति मुद्रितमूलपुस्तके नास्ति।

"अङ्गितश्च" ॥ 'मलोपाभावस्त्विति'। अनुदात्तोपदेशेत्यादिना यो मलोपस्तस्याभावः । 'अङ्गित्वादेवेति'। नासौ यत्र साध्य इत्येवशब्दार्थः । 'यमेः शपो लुगिति' बहुलं छन्दसीत्येव, एव मुत्तरत्रापि ॥

"चिणो लुक्" ॥ चिण इति पञ्चमी न षष्ठी विधानसामर्थ्यात् । 'प्रत्ययस्येति'। प्रत्ययस्य लुक्श्लुलुप इति वचनादङ्गाधिकाराच्चैतल्लभ्यते, तेनाकारितरामिति तशब्दस्य तरप आमश्च यः संघातस्तस्य युगपल्लुङ् भवति, प्रत्येकं प्रत्ययत्वेपि सङ्घातोऽप्रत्ययो ह्ययम् । ननु चेदमस्मिन्नसिद्धमिति भेदनिबन्धनो विषयविषयिभावस्तत्कथं चिणो लुक्चिणो लुक्येवाऽसिद्धो भवति अत आह । 'चिणो लुगित्येतदिति'। अथ वा क्ङितीतिवर्तते, चिण इति पञ्चमी तस्य षष्ठीं प्रकल्पयिष्यति, तेन क्ङितः प्रत्ययस्य लुग्विधीयमानस्तरपो न भविष्यति ॥

"अतो हेः" ॥ 'गच्छेति'। इषुगमियमां छः । 'धावेति'। धावु गतिशुध्योः, पाघ्रादिसूत्रेण सर्त्तेर्धावादेशः । 'लुनीहिति'। प्वादीनां ह्रस्वः, ई हल्यघोः, ननु चात्रानवर्णान्तत्वादेव न भविष्यति, ईत्वमेव हि परत्वाद्भवति तत्राह । 'ईत्वस्येति'। नन्वेवमप्युत्तरसूत्रे उतः प्रत्ययादिति यदुपात्तमुपाधिद्वयं तस्मादेवात्र प्रत्युदाहरणद्वयेपि न भविष्यति, यदि च लुनीहीत्यत्र परत्वादीत्वं भवति ततोसिद्धत्वं नास्ति, विप्रतिषेधविषये तदभावस्योक्तत्वात्, तस्मादत इत्यस्य इहि अधीहीति प्रत्युदाहरणं, तपरकरणस्य याहि वाहीति ॥

"उतश्च प्रत्ययादसंयोगपूर्वात्" ॥ उतः प्रत्ययादित्यनयोर्विशेषणविशेष्य भावे कामचारः, तत्र

उकारस्य विशेष्यत्वे तेन नास्ति तदन्तता ।
न सम्भवति चोकारः प्रत्ययान्तो यदा पुनः ॥
विशेष्यते उकारेण प्रत्ययस्तत्तदन्तता ।
आश्रीयते प्रत्ययस्य तत्पक्षद्वयसम्भवः ॥

तत्राद्ये पक्षे तनु कुरु इत्यादावेव स्यात्, सुनु चिनु इत्यादौ तु न स्यात्, तथा उकारस्य प्रत्ययस्यासंयोगपूर्वत्वादसंयोगपूर्वग्रहणमस्मिन्पक्षे

धातुविशेषणं विज्ञायेत, ततश्च चिणु इत्यादौ न स्यात्, चिणु हिंसायां तानादिकः, अत्र धातो गुणो न भवतीत्याहुः । तस्मादुकारो विशेषणं तेन तदन्तविधिः, यद्येवं तनु कुरु अत्र न प्राप्नोति इकार एवात्र प्रत्ययो न तदन्तः, अत्रापि तदन्तः, कथं, व्यपदेशिवद्भावात् । एवं स्थिते ॥

अक्रसंयोगपूर्वत्वमुकारान्तविशेषणम् ।
आप्नुहीत्यत्र हेर्लुक् स्यात्प्रतिषेधस्तु तत्त्वहि ॥
तस्माद्विशेषणमिदमुकारस्यैव गृह्यताम् ।

ननु च येन विधिस्तदन्तस्येति उकारस्तदन्तस्य सञ्ज्ञा, ततः किं,

सञ्ज्ञिप्रत्यायनपरा सञ्ज्ञा तस्या विशेषणम् ।
अयुक्तमिति चेदत्र समाधिरभिधीयते ।
विशेषणं तदन्तस्य सञ्ज्ञा, सत्यं, तथापि तु ।
विशेषणात्वस्फुरणात्प्रागेवो तोर्विशेषणम् ।
स्यादस्य संयोगपूर्वत्वं, पश्चात्तु विशेषणम् ।
प्रत्ययस्येति, नैवेह किञ्चिदस्ति तिरोहितम् ॥

तदिदमुक्तम्, 'योयमुकारोऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति' । 'युहि इहीति' । ननु जुहोतेः परस्य हेर्धित्वविधानादेव धातोः परस्य न भविष्यति, सत्यं, विशिष्टविषयमेतज्ज्ञापकं स्यादिति प्रत्ययग्रहणं छन्दसि चेति च वक्तव्यमिति, एवं च कृत्वोत्तरसूत्रे ऽन्यतरस्यांग्रहणं न कर्त्तव्यं भवति ॥

"लोपश्चास्यान्यतरस्यां म्वोः" ॥ अस्येत्यनेनोकारान्तः प्रत्ययः प्रत्यवमृश्यते, अस्येत्यनुच्यमाने म्वोरिति षष्ठ्याश्रयणे न म्वोरेव लोपो विज्ञायेत, एवंचोतश्च प्रत्ययादसंयोगपूर्वादिति पञ्चमी न बाधिता भवति । 'लुगितिवर्त्तमानइत्यादि' । यदि हि प्रकृत एव लुक् क्रियेत सर्वस्यैव प्रत्ययस्य स्यात् । लुगादयः सर्वादेशा इति सञ्ज्ञाविधाववो-चाम, सर्वस्य लोपे कृते सुन्वः सुनुव इति न सिध्येत् तस्मादन्त्यस्य लोपार्थं लोपग्रहणं, किं च कुर्वः कुर्म इत्यत्र लुकि सति गुणो न स्यात् न लुमताङ्गस्येति प्रतिषेधात्, लोपे तु सति भवति ॥

"नित्यं करोतेः" ॥ 'करोतेःप्रत्ययान्तस्येति' । उतश्च प्रत्ययादि-

त्यनुवृत्तेर्लभ्यते, उकारलोपस्येत्यादिना सोपपत्तिकां दीर्घप्राप्तिमनूद्य प्रतिषेधं दर्शयति'। आरम्भसामर्थ्यादेव सिद्धे नित्यग्रहणं विस्पष्टार्थम् ॥

"अत उत्सार्वधातुके" ॥ 'करोतेरुप्रत्ययान्तस्येति'। उतश्च प्रत्ययादित्यनुवृत्तेर्लभ्यते।'सार्वधातुकइति किमिति'। सत्यपि सार्वधातुकग्रहणे स्यतास्यन्तस्य प्रसङ्गः करिष्यावः कर्त्तारावित्ति। स्यतासिभ्यां व्यवधानाच भविष्यति, कुरुत इत्यत्रापि तसुप्रत्ययेन व्यवधानाच स्यात्, तस्मात्सार्वधातु केपरतः करोतेरङ्गस्येत्यर्थासम्भवात्सार्वधातुके परतो यदङ्गं तदवयवस्य करोतेरित्याश्रयणीयम्, एवं च स्यतास्यन्तस्यापि प्रसङ्ग इत्युतश्च प्रत्ययादित्यवश्यमनुवर्त्यम्,उप्रत्ययान्तात्करोतेः परं क्ङित्सार्वधातुकमेवेति प्रश्नः।'भूतपूर्वपीति'। कुरुहि इति स्थिते उत्वं च प्राप्नोति हि लुक्च,नित्यत्वाद्धिलुकि कृते क्ङितः परस्याभावादुत्वं न स्यात्प्रत्ययलक्षणं च न लुमताङ्गस्येति प्रतिषिद्धं, तस्माद्भूतपूर्वेपि सार्वधातुके यथा स्यादिति सार्वधातुकग्रहणम्। असिद्धो हिलुक् तस्यासिद्धत्वादुत्वं भविष्यति, तस्माद्विस्पष्टार्थं सार्वधातुकग्रहणं,यथा पुनरस्योत्तरत्राप्युपयोगाभावः तथा तत्रतत्र वक्ष्यते। इह यद्यपि भाव्यमानोप्युकारः सवर्णान् गृह्णाति तथाप्यान्तर्यतो मात्रिकस्यातो मात्रिक उकार एव भविष्यति नार्थस्तकारेण तत्राह। 'तपरकरणमिति'। असति हि तस्मिन्नुप्रत्ययमाश्रित्योकारस्य लघूपधलक्षणो गुणः स्यात् स माभूदिति तपरकरणं, तस्य हि प्रयोजनं लक्षणान्तरेणापि दीर्घो माभूत् ॥

"श्नसोरल्लोपः" ॥ तपरकरणं किम्। आटो माभूत्, आस्ताम् आसन्, असिद्ध आट्, एवं तर्ह्याभीयस्यासिद्धत्वमनित्यमिति ज्ञापनार्थं तपकरणम्। अथात्र सार्वधातुकाधिकारस्योपयोगो नेत्याह। श्नः सार्वधातुक एव, अस्तेरार्द्धधातुके भूभावेन भाव्यं, नन्वनुप्रयोगे भूभावो नास्ति ईहामासुः। सत्यं, तत्र द्विर्वचने हलादिशेषे च कृते येन नाप्राप्तिन्यायेनातो गुणे इति पररूपं बाधित्वा अत आदेरिति दीर्घत्वे कृते परस्याकारस्य सत्यपि लोपे सिद्धमिष्टम् ॥

"श्नाभ्यस्तयोरातः" ॥ 'लुनतइति'। लट्, आत्मनेपदेष्वनतइति झस्यादादेशः। 'लुनतामिति'। लोटि आमेतः। 'अलुनतेति'। लङ्,

मिमतइत्यादौ भृञामिदितीत्वम् । 'यान्ति वान्तीति'। असति हि आभ्यस्तग्रहणे अतो गुणइत्यत्र तपरकरणस्य यानमित्यादावङ्कृतिति चरितार्थत्वादिह लोप एव स्यादितिभावः । 'अलुनादिति'। उत्तरसूत्रे ङ्कृतितीत्यस्य सम्बन्धः स्थित एवेति नायमीत्वस्य विषयः, इहाकारेणाभ्यस्तविशेषणादाकारान्तस्य लोपो जायतीत्यत्र न भवति, तत्र निर्दिश्यमानस्यादेशा इति वा अलोन्त्यस्येति वा आकारस्यैव लोप इत्यादिमत्वा व्याख्यातम् । 'आइत्येतस्याभ्यस्तानां चाकारस्येति'। आकारान्तानामिति तु व्याख्येयम्, अत्रापि श्ना सार्वधातुक एव सम्भवति, एवमभ्यस्तमप्याकारान्तं, ववतुरित्यादौ भवत्येव लोपः ॥

"ई हल्यघोः" ॥ 'लुनन्तीति'। असति हल्ग्रहणे ईत्वलोपयोः पर्यायः स्यात्, एकविषयत्वात् । घुसंज्ञकेष्वेव वा लोपः स्यात्, अत्रापि पूर्ववत् सार्वधातुकमेव सम्भवति ॥

"इद्दरिद्रस्य" ॥ इदमपि सार्वधातुकएवान्यत्र लोपविधानात् । 'सिद्धश्चेति'। यथा प्रत्ययविधौ प्रत्ययविधानकालएव सिद्धो भवति तथा लोपः कर्त्तव्यः, आर्द्धधातुकइति विषयसप्तम्याश्रयणीदिति भावः । 'आकारान्तलक्षणइति'। आर्द्धधातुकइति परसप्तम्यां तस्योत्पत्तिं प्रतीत्य लोपः कर्त्तव्यः, ततश्च श्याद्व्यधेत्याकारान्तलक्षणो णप्रत्ययः स्यात्, तत्र कृते ऽनेन लोपश्च प्राप्नोति युक्च, तत्र लोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वं, युकस्तु लोपे कृते ऽप्राप्तिः, ततश्च उभयोरप्यनित्ययोः परत्वाद्युक् स्यात्, अथापि लोपः स्यादेवमपि अदरिद्र इत्यत्राचुकावशक्तावित्येव स्वरो न स्यात्, ईषद्दरिद्रमित्यत्र चातो युजिति युच् स्यात्, । 'दरिद्रायकइति'[1]। ण्वुलि, युक् । 'दरिद्राणा इति'। ल्युट् । 'दिदरिद्रासतीति'। तन्निपतिदरिद्राणामुपसंख्यानमिति व्यवस्थितविभाषा, तेन लोपपक्षे इट्, अन्यत्रेडभावः, । 'अद्यतन्यामिति'। लुङ् एषा पूर्वाचार्यसंज्ञा । 'अदरिद्रासीदिति'। यमरमनमातां सक्चेति, एकाच इति तत्रानुवर्त्तनइत्येकीयं मतं, चिणि अद-

१ दरिद्रायक इति ण्वुलि युगिति नास्ति इ० पु० ।

रिद्रिपदरिद्राय, अलिदरिद्रौ[1] । 'छान्दसं ह्रस्वत्वमिति' । अन्यथा आतो धातोरिति लोपे दरिद्र इति निर्देशः स्यात् ॥

"भियोऽन्यतरस्याम्" ॥ 'हलादौ क्ङिति सार्वधातुकइति' । नैतेषामत्रोपयोगः, तथा च प्रत्युदाहरणं न प्रदर्शितम् । तथाहि । अजादावप्यस्तु बिभ्यतीति, एरनेकाच इति ह्रस्वस्यापि यण् भविष्यति, न चेत्वविधेर्वैयर्थ्यं, हलादौ चरितार्थत्वात्, तथा बिभेतीति अक्ङित्यपि भवतु गुणो भविष्यति, इत्वविधिश्च क्ङिति चरितार्थः, तथाभ्यस्तस्येत्यनुवृत्तेर्भीतइत्यादावार्द्धधातुके न भविष्यति, क्वसावपि तर्हि प्राप्नोति, छान्दसः क्वसुः, दृष्टानुविधिश्छन्दसि ॥

"जहातेश्च" ॥ अत्रापि न सार्वधातुकइत्यस्योपयोगः, अत एवास्य प्रत्युदाहरणं न प्रदर्शितम्, अभ्यस्तस्येत्यनुवृत्तेरार्द्धधातुके न भविष्यति, लिङ्ङादिः ॥

"आ च हौ" ॥ सार्वधातुकमेव हि ॥

"लोपो यि" ॥ अभ्यस्तस्येत्यनुवृत्तेर्यङि न भविष्यति, यद्यपि यकारेण सह द्विर्वचनाज्जहातिरभ्यस्तम् ॥

"घ्वसोरेद्धावभ्यासलोपश्च" ॥ 'देहि धेहीति' । दाञ्धाञो रूपे, दोदाण्धेटां तु विकरणेन हि र्व्यवहितः, देङात्मनेपदी । 'शिदयमिति' । न सूत्रे श्रूयमाणश्शकारो विभक्तिसकारस्य श्चुत्वेनागतः, किं तर्हि चोत्पत्तिको लोपशब्दसम्बन्धी, विभक्तेस्तु हल्ङ्यादिलोप इति भावः । संज्ञाशब्दे च कृतानुबन्धः संज्ञिनः कार्यं सम्पादयति, यथा इमुटष्टित्वम् । एतच्च नानर्थके ऽलोन्त्यविधिरित्यनाश्रित्योक्तम् ॥

"अत एकहल्मध्येऽनादेशादेर्लिटि" ॥ एकशब्दोऽसहायवचनो न सङ्ख्यावचनो, मध्याभावात्, द्विवचनान्तस्य च समासः, द्वयोरेव मध्यसम्भवात्, अत्र लिटीति यदि विधीयमानयोरेत्वाभ्यासलोपयो[2] र्निमित्तनिर्देशः स्यात्, आदेशो न विशेषितः स्यात्, ततश्च नेमतुः,

---

१ आत औणल इत्यौकारेणैव सिद्धे औकारविधानं दरिद्रातेरालोपेकृते चवकार्यमिति निर्णीतत्वादिति–इं· पु· टि· ।   २ लोपयोरिति नास्ति· ई· पु· ।

नेमुः, सेहे, सेहाते, सेहिरे, अत्रापि प्रतिषेधः स्यात्, नत्वसत्वयोः कृतयोरङ्गस्यादेशादित्वा,तस्मात्तुणभूतस्याप्यादेशस्यायं निमित्तनिर्देश इति दर्शयति । 'लिटि परत इति' । लिटि परत्रावस्थिते य आदेशो विधीयते स आदिर्यस्याङ्गस्य नास्तीत्यर्थः । 'चत्तरतुरिति' । अयुक्तमिदमादेशादित्वात्, क्वचित्तु ततत्तुरिति पठ्यते, तदप्ययुक्तं, संयोगान्तत्वेन लिटः कित्त्वाभावात् तस्मात्तत्सरतुः, तत्सरुरिति प्रत्युदाहरणं, त्सर छद्मगतौ । 'चकणतुरिति' । कणतिः शब्दार्थधातुवर्गे भूवादौ पठ्यते । 'जगणतुरिति' । गण संख्याने, चुरादित्वात्तत्र णिच् प्राप्नोति, यदि नेष्यते अनित्यण्यन्ताश्चुरादयः, एतच्च घुषिरविशब्दन इत्यत्र वक्ष्यते । यद्यपि कुहोश्चुरिति चुत्वं लिट्याहत्य न विहितम्, अभ्यासनिमित्ते तु प्रत्यये विधानाल्लिणिनमित्तमपि भवति, सर्वथा लिट्युत्पत्ते पश्चाद्भवति । 'अनैमित्तिके नत्वसत्वे इति' । ततश्च प्रागेव लिडुत्पत्तेस्ताभ्यां भवितव्यं, तेन तदाश्रङ्गं लिटिय आदेशस्तदादि न भवति, यदि[1] लिटा आदेशो विशेष्यते एत्वमलिट्यपि प्राप्नोति, पक्वः पक्ववानिति, नैष दोषः । चकारः समुच्चये,नान्वाचये तेन यत्राभ्यासलोपस्तत्रैवैत्वम्, इह तर्हि स्यात् पिपठिषति, क्ङितीति वर्तते, एवमपि पापठ्यते अत्रापि प्राप्नोति, नैष दोषः । इह ह्यभ्यासकार्येषु ह्रस्वहलादिशेषावुत्सर्गौ, तयोरन्ये ऽपवादास्तत्रेह दीर्घोऽकित इति दीर्घत्वं च प्राप्नोति अनेन लोपश्च, तत्र दीर्घस्यावकाशो बाभाष्यते, अस्य विधेरवकाशः पेचतुः पेचुः, पापच्यतइत्यत्रोभयप्रसङ्गे अपवादविप्रतिषेधाद्दीर्घत्वेनायमभ्यासलोपो बाध्यते, तत्संनियोगशिष्टत्वादेत्वमपि न भविष्यति, अभ्यासविकारेषु उभयसमावेशो यत्र सर्वेषां प्रवृत्तिस्तत्र, इह तु यद्यपि दीर्घत्वे कृतेपि एत्वाभ्यासलोपयोः प्रसङ्गस्तयोस्तु कृतयोर्न दीर्घस्य प्रसङ्ग इति न सर्वेषां प्रवृत्तिः । ननु च बभणतुर्बभणुरित्यादावभ्यासजश्त्वचर्त्वयोरसिद्धत्वादनादेशादित्वात् एत्वाभ्यासलोपाभ्यां भाव्यं, विप्रतिषेधस्य तु जहसतुर्जहसुरित्यादौ यत्र कुहोश्चुरिति चुत्वं क्रियते सोऽवकाशः स्यादत आह । 'इहेति' । अत्रैव ज्ञाप-

१ तर्हीत्यधिकम् ई॰ पु॰ ।

कमाह । 'तथा चेति' । 'रूपाभेदेत्विति' । यत्रादेशस्य स्थानिना सह रूपभेदो नास्ति तत्रेत्यर्थः । 'शसिदद्योरिति' । अभ्यासे चर्चेति सवेच अश्वरोः प्राप्तयोरन्तरतमपरिभाषाव्यापारलब्धमिदं वक्ष्यते प्रकृतिचरां प्रकृतिचरः प्रकृतिजशां प्रकृतिजश इति, तेन शसेः शकारस्य शकारो ददेर्दकारस्य दकार इति, तावप्यादेशादी भवतः, यदि चाभिन्नरूपोऽप्यादेश इहाश्रीयेत तत आदेशादित्यादेव प्रतिषेधे सिद्धे 'न शसददवादिगुणाना' मिति शसिदद्योः प्रतिषेधोऽनर्थकः स्यात्, कृतस्तु ज्ञापयति रूपाभेदे य आदेशः स इह नाश्रीयइति, यदि पुनराश्रीयेत किं स्यादित्यत आह । 'अन्यथेति' । प्रकृतिर्जश् प्रकृतिश्चर्त्वादिर्येषां तेषां न स्यात्, वचनं तु रेणुरित्यादौ चरितार्थम् । 'अहं पपचेति' । उत्तमे णलि णित्त्वाभावपक्षे रूपं, णित्त्वपक्षे तु परत्वाद्वृद्धौ कृतायां तपरकरणादकाराभावादेवाप्रसङ्गः । 'देभतुरिति' । श्रन्थिग्रन्थीत्यादिना लिटः कित्त्वे सति न लोपः । 'नशिमन्योरलिट्येत्त्वमिति' । अलिटीति पादपूरणार्थोऽनुवादः, श्लोको ह्येवं भाष्ये पठितः ॥

नशिमन्योरलिट्येत्वं छन्दस्यमिपचोरपि ।

अनेशन्मेनकेत्येतद्व्योमानं लिङ्गि पेचिरन् ॥

इति । अनेशमिति, भ्रोन्तादेशः, अनेशचस्येषवः, अनेशमिति तु प्रायेण पाठः, तत्र मिपोऽम्भावः । 'त्रिपक्कादिष्विति' । त्रिपकादिषु हि इत्वप्रतिषेधो वक्ष्यते, एतच्च न यासयोरित्यत्राशिषि चोपसङ्ख्यानमित्यनाश्रित्योक्तं,छन्दसीतिवचनान्मेनकेति भाषायां न प्राप्नोति, यदीष्यते पृषोदरादिषु द्रष्टव्यः । 'लुङ्क्रियतइति' । छान्दसत्वात्, बहुलं छन्दसीति वा शपो लुप्तत्वात्, । 'पेचिरन्निति' । पचेरन्निति प्राप्ते, क्वचित्पठ्यते यजिवप्योश्च, आयेजे आवेपे, यजेर्वपेश्च लङि इति छन्दस्यपि दृश्यतइत्यनजादेस्त्वाडिति, अपर आह । लिटि तस्य एशादेशः, सम्प्रसारणपूर्वत्वे वा, छन्दसीत्यनुवृत्तेर्यणादेशः, एत्वाभ्यासलोपौ, उदात्तवता तिङेत्याङः समास इति, तथा चाब्रह्मन्नित्ति यच्छन्स्ययोश्च मनुरायजे पिता, आयेजइत्या येजे इति ॥

"यसि च सेटि" ॥ 'पेविषेति'। क्रादिनियमात्प्राप्तस्येट उपदेशेऽत्वत इति प्रतिषेधे प्राप्ते ऋतो भारद्वाजस्येति नियमात्पत्ते इट्। 'पपक्थेति'। अन्येषां मतेन प्रतिषेधः, थल्ग्रहणमनर्थकं, पेचिथेत्यादावन्यत्र सेटि किस्वात्पूर्वेण भवितव्यमेवात आह। 'थल्ग्रहणं विस्पष्टार्थमिति'। किमत्र विस्पष्टनीयं तद्दर्शयति। 'अक्रिह्वदर्थमित्यादि'। आरम्भसामर्थ्यादेवायं निश्चयः स्याद्यत्र पूर्वेण न सिद्ध्यति तदर्थमिति, बहवश्च विशेषाः प्रकृताः अत एकहलमध्यइत्यादयः, तत्रा सति थल्ग्रहणे सन्देहः स्यात् किमनकारार्थं वचनं ददिविथ, ररादिथ इति, अथानेकहल्मध्यार्थं तत्सरिथेति, अथादेशार्थं बभणिथेति, उताक्लिडर्थं पठित इति उताक्ङिदर्थमिति, तत्रात इत्यादयो विशेषा अनुवर्तन्ते क्ङितीत्येतत्तु निवर्ततइति व्याख्यानमन्तरेण दुर्ज्ञानं, तस्माद्विस्पष्टार्थं थल्ग्रहणं कृतम् ॥

"तृफलभजत्रपश्च" ॥ फल निष्पत्तौ, ञिफला विशरणे, द्वयोरपि ग्रहणम्। 'गुणार्थमिति'। न शसददवादिगुणानामिति प्रतिषेधं बाधितुमित्यर्थः। 'श्रेयतुरिति'। पूर्ववत्किस्वनलोपौ ॥

"राधो हिंसायाम्" ॥ अनेकार्थत्वाद्धातूनां राधो हिंसायां वृत्तिः। ननु च नात्रापूर्वमवर्णग्रहणमस्ति, प्रकृतश्च मात्रिकस्तपरकरणात्, तत्कथमवर्णस्यानएत्वं भवतीत्युक्तमत आह। 'अत इत्येतदिति'। अत इति तावत्स्वरितत्वादुपतिष्ठते, तत्तपरत्वकृतस्य कालविशेषस्य मात्रात्मकस्यासंभवात्तमपास्यावर्णमात्रं प्रतिपादयति। 'अथ वेति'। पूर्वत्र स्वन इति विरोध्युपादानादात इत्यस्यानभिसंबन्धः। 'एकहल्मध्ये चेति'। अत्र एकहल्मध्ये इत्येव, अत आतइति च द्वयमपि नानुवृत्तम्, एकहल्मध्यइत्यनुवृत्तेर्यत्तच्छब्दाध्याहारेण स्थानी लभ्यतइत्यर्थः ॥

"फणां च सप्तानाम्" ॥ बहुवचननिर्देशादाद्यर्थो गम्यतइत्याह। 'फणादीनामिति'। फण गतौ, राजृ दीप्तौ, टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ, स्यमु स्वन ध्वन शब्दे, इत्येवं फणादयः सप्त, अत्र राजप्रभृतीनामप्येत्वमवर्णस्य भवति, उक्तोऽत्र न्यायो राधोहिंसायामित्यत्र ॥

"न शसददवादिगुणानाम्" ॥ अत्र वस्तुतो यो गुणसंज्ञकोऽका-रस्तत्रैव यदि प्रतिषेधस्तर्हि विधिप्रतिषेधयोरेकविषयत्वाद्विकल्पः स्यात्, ततश्च 'या नृथमुत्रसा' मिति यद्गुणग्रहणं तदेवादितः पाठं स्यात्, तस्मा-द्गुणग्रहणेन तच्छब्दरूपितस्य तद्भावितस्य ग्रहणमित्याह । 'गुण इत्येव-मभिनिर्वृत्तस्य चेति' । तस्य संबन्धी यो ऽकार इत्यर्थः । संबन्धित्वमपि तस्य तत्स्थानिकत्वात्तदवयवत्वाच्च यथायोगं वेदितव्यम् । 'शशसतु-रिति' । शसु हिंसायां, दद दाने, अनुदात्तेत्, टुवम् उद्गिरणे । 'विशश-रतुरिति' । शॄ हिंसायाम्, ऋच्छत्यृतामिति गुणः, यदुक्तं गुणइत्येवमभिनि-र्वृत्तस्येति तदुदाहरणं दर्शयति । 'गुणशब्दाभिनिर्वृत्तस्येति' । उरण् रपर इत्यत्र सिद्धं तु प्रसङ्गे रपरत्वादिति वचनाद्गुणो भवन्नेव रेफशिरस्को ऽभिनिर्वर्तते, एवमभिनिर्वृत्तस्यार् शब्दस्यावयवोऽकारः, लुलविथेत्यत्र तु अभिनिर्वृत्तस्योकारस्य स्थाने ऽवादेशस्तदवयवोऽकारः, क्वचित्पठ्यते गुण-शब्देनात्र शसादीनां ग्रहणसामर्थ्यात्तद्भावितस्यग्रहणमित्य कारमात्रस्य हि ग्रहणे शसिदद्योर्वकारादीनां च ग्रहणमनर्थकं स्यादिति किल तस्यार्थः ॥

"अर्वणस्त्रसावनञः" ॥ ऋकार उगित्कार्यार्थः, तेन सर्वनाम-स्थाने नुम् भवति । 'स च नञ उत्तरो न भवतीति' । चेदित्यनुषङ्गः । 'अर्वतीति' उगित्त्वाचान्तत्वाद्वाङीप् । 'आर्वतमिति' । तद्धितेपि भवति, असाविति प्रसज्यप्रतिषेधो न पर्युदासस्तेन नञिवयुक्तन्यायाभा-वाद्विभक्तेरेव ग्रहणं न भवति, तथा च सुश्चेत्परो न भवतीति प्रथमै-कवचनस्य वात्र ग्रहणं न सप्तमीबहुवचनस्य, व्याख्यानात् ॥

"मघवा बहुलम्" ॥ मघवेति षष्ठ्यर्थे प्रथमा । 'मघोन इति' । श्वयुवमघोनामिति संप्रसारणं पूर्वत्वमाद्गुणः । ननु च मघमस्यास्तीति-मघवान्, मघमिति धननाम, छन्दसीवनिपौ वक्तव्याविति वनिप्, संप्र-सारणे कृते पूर्वस्य भसंज्ञायां यस्येति लोपप्रसङ्गः, व्याश्रयत्वादसिद्धत्व-मपि नाशङ्कनीयं, शसि संप्रसारणे यस्येति लोपः, य एवं तर्ह्यन्यदेवेदम-व्युत्पन्नं भविष्यति, तथा चैतस्य भाषायां प्रयोग उपपद्यते, यथा तु भाष्यं तथा न केवलमस्यैव अर्वणोपि भाषायामसाधुः प्रयोगः । आह हि ।

'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' ॥

ऋधातोर्वनिपि गुणे च कृते अर्वन्निति रूपं, तस्माद्धिचि मतुपि अर्वन्तावित्यादि सिद्धं भवति, वनिप्यर्वाणमित्यादि, मघशब्दादपि प्रत्ययद्वये सिद्धं भवति, नार्थः सूत्रद्वयेनेत्यर्थः । मघोन इत्यादौ तु यस्येतिलोपाभावश्छान्दसत्वादेव । 'माघवनमिति' । अचिति प्रकृतिभावः ॥

"पादः पत्" ॥ 'पादिति' । 'पादशब्दोलुप्ताकारो गृह्यत इति' । पादयतेः क्विबन्तस्याप्यत्र ग्रहणमिति येन विधिस्तदन्तस्येत्यत्र भाष्यकारेणोक्तं,तस्मादपिशब्दाध्याहारेणायं ग्रन्थोयोज्यः, लुप्ताकारः पादशब्दोपि गृह्यते, पादयतेः क्विबन्तोपि, अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यात्तदन्तस्याङ्गस्येत्यत्रापि तस्य चाङ्गस्येति द्रष्टव्यं, तदन्ते तु वक्तव्यमस्तीति तस्यैव प्राधान्येनोपन्यासस्तद्दर्शयति । 'स चेति' । यद्यपि पाच्छब्देन तदन्तः समुदायःप्रत्याय्यते तथापि विशेषणत्वेन यो निर्दिश्यते तत्रापि यतः षष्ठी श्रूयते तस्यैवादेशः, न प्रतीयमानस्य समुदायस्येत्यर्थः । 'द्विपद इति' । द्वौ पादावस्येति बहुव्रीहिः, संख्यासुपूर्वस्येत्यन्तलोपः । 'द्विपदिकामिति' । पादशतस्य संख्यादेरिति वुन् लोपश्च, व्याघ्रपाच्छब्दो गर्गादिः ॥

"वसोः संप्रसारणम्" ॥ 'पेचुष इति' । पचेः क्वसुः, एत्वाभ्यासलोपौ, कथं पुनर्व्यनुबन्धकस्य क्वसोर्ग्रहणमित्याह । 'वसुग्रहण इति' । एतच्च शत्रादेशस्य वसोरुकारानुबन्धकरणाल्लभ्यते, तस्य ह्येतदेव प्रयोजनमिह सामान्यग्रहणं यथा स्यादिति, उगित्कार्यस्य स्थानिवद्भावेनैव सिद्धत्वात् ॥

"वाह ऊठ्" ॥ 'वाह इति' । वहेर्ण्विप्रत्ययान्तस्य ग्रहणं, ण्विश्च सोपपदाद्विहित इति सामर्थ्यादत्र तदन्तविधिरित्याह । 'वाह इत्येवमन्तस्येति' । 'संप्रसारणं भवतीति' । संप्रसारणग्रहणानुवृत्तिं दर्शयति । तेन वकारस्य स्थाने भवति, अन्यथान्त्यस्य स्यात्, उदाहरणेषु 'छन्दसि सहः,' 'वहश्चेति' ण्विः । 'अर्थेत्यादि' । वाह इत्येतावता

प्रकृतं संप्रसारणमेव विधेयमिति प्रश्नः । का रूपसिद्धिरित्याह । 'संप्रसारणे कृतइति' । 'गुणे चेति' । कृतइत्यनुषङ्गः । णिवप्रत्ययमपेक्ष्य प्रत्ययलक्षणेन गुणः । नन्वेवं शालीन्वहतीत्यादावनकारान्तउपपदे शाल्यूहइति न सिध्यति, तत्राह । 'अनकारान्ते चेति । अकारादकारान्तउपसर्गेपीति द्रष्टव्यं, तेन प्रोह इत्यादावेङि पररूपप्रसंग इति न चोदनीयम् । 'ज्ञापनार्थमिति' । कथमेतज्ज्ञापकमित्याह । 'तस्यां हि सत्यामिति' । बहिरङ्गस्य बहिरङ्गत्वं बहिर्भूताज्ज्ञादिप्रत्ययापेक्षत्वात्, अन्तर्भूताण्यपेक्षत्वाद्गुणोन्तरङ्गः ॥

"श्वयुवमघोनामतद्धिते" ॥ 'शौवमिति' । नस्तद्धितइति टिलोपः । 'यौवनमिति' । यूनो भावइति 'हायनान्तयुवादिभ्योण्, अणितिप्रकृतिभावः, मघवा देवतास्य माघवनः, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद्युवतिशब्दस्यापि संप्रसारणप्रसंगस्तथा मघवत इत्यादौ 'मघवा बहुल' मिति चादेशे कृते एकदेशविकृतस्यानन्यत्वात्प्रसंगइत्याह । 'श्वादीनामित्यादि' । कथमेतल्लभ्यतइत्याह । 'एतदर्थमिति' । 'अन इत्युभयोः शेष इति' । न त्वनन्तास्यैव, योगविभागसामर्थ्यात्, न चैवमपि मघवतेत्यादावेकदेशविकृतस्यानन्यत्वात्प्रसंगः, सामान्यातिदेशे विशेषानतिदेशात् ॥

'अल्लोपोनः" ॥ अदिति पृथक् पदं लुप्तविभक्तिकं, तेनातो धातोरित्यादौ केवलस्य लोपशब्दस्य संबन्धः । 'राजकीयमिति' । गर्त्तोत्तरपदाच्छ इत्यधिकारे राज्ञः क चेति छः, ककारस्यान्तादेशः, अचेकदेशविकृतस्यानन्यत्वात्प्रसंगः ॥

"वपूर्वहन्धृतराज्ञामणि" ॥ किमिदं नियमार्थमाहो स्विद्विध्यर्थं, कथं चेदं नियमार्थं कथं वा विध्यर्थं, यञ्चिति प्रकृतिभावोनन्तस्यैव टिलोपस्य तदाल्लोपस्य प्रकृतिभावेनानिर्वर्तितत्वात्पूर्वेणैव सिद्धे नियमार्थम्, अथाविशेषेणाल्लोपटिलोपयोर्द्वयोरपि प्रकृतिभावस्ततो विध्यर्थम्, तत्रापि नियमपक्षे यदि तावदेवं नियमः वपूर्वादीनामण्येवेति तत इह न स्यात् तात्क्षण्यः,सामनादौ तु प्रसंगः । अथाप्येवं नियमः वपू-

बादीनामेवाप्नोति भवेत्, इह न स्यात् सामनो वैमनः, तावण्यस्त्वच तु प्रसंगः, अथाप्युभयनियमः स्यात्, बपूर्वादीनामेवाणि, बपूर्वाद्दीनामणेवेति, एवमपि सामनो वैमनस्तावण्य इति सिद्धं सामसु साधुः सामन्योऽत्र प्राप्नोति, तस्मादुभयोः प्रकृतिभाव इत्याश्रित्य विपर्ययमिदमित्याह । 'तस्याकारस्य लोपो भवतीति'। 'तात्त्वरति'। इदमर्थेऽञ्, अपत्ये तु कारिलक्षणो ण्यो भवति । 'उभावपि न भवत इति'। टिलोपमात्रव्यावृत्तिर्निषेधेनापि सिध्यति, तत्प्रकृत्येतिवचनान्निवृत्तिरुभयोरपि ॥

"विभाषा ङिश्योः" ॥ जसःशी, औङ आपः, नपुंसकाच्चेति येयं शीशब्दस्तस्येह ग्रहणं न जस्शसोः शिरित्यस्य ह्रस्वान्तस्य, तत्र संज्ञाया अभावात् ॥

"न संयोगाद्वमन्तात्" ॥ स्याद्वकारमकाराभ्यां संयोगस्य विशेषणात् तदन्तविधिरचेति विस्पष्टार्थमन्त[1]ग्रहणम् ॥

"अचः" ॥ 'अच इत्ययमञ्चतिर्लुप्तनकारो गृह्यतइति'। प्रत्याहारग्रहणं तु न भवति, यदि स्यादजन्तस्याङ्गस्य लोपो भवतीत्यर्थः स्यात्ततश्चातो धातोरित्येतदनर्थकं स्यात्, यच्च क्षुमागवागुदक्प्रतीचो यदिति निर्दिशति, यच्च चाविस्याह, ततो ज्ञायते अञ्चतेरेवाच ग्रहणमिति, एतेन पचाद्यचोप्यग्रहणम् ॥

"आतो धातोः" ॥ 'एवमादि सिद्धं भवतीति'। सूचादुच्चिरस्मदादिप्रयोगेपीति भावः । सूत्रे तु सौत्रो निर्देश इत्येव सिद्धम् ॥

"मन्त्रेष्वाङ्यादेरात्मनः" ॥ आङिति पूर्वाचार्यप्रक्रियया तृतीयैकवचनस्य ग्रहणम् । 'आङोऽन्यत्रापि दृश्यतइति'। तस्मादाङीति न वक्तव्यमित्यर्थः । आत इत्यनुवृत्तेरादेरित्यपि शक्यमकर्तुम्। 'त्मन्येति'। सप्तम्येकवचनस्य याशब्द आदेशः ॥

"तिविंशतेर्डिति" ॥ तिग्रहणं किम् । अन्त्यस्य माभूत्, टिलोपोऽन्त्यस्य लोप उत्तरसूत्रेण, सिद्धे सत्यारम्भो नियमार्थः स्यात्, डित्येव यथा

१ अन्तवागिति· पा· ई· पु· ।

स्यादन्यत्र यस्येति लोपो माभूदिति । यद्यपि विधिनियमसंभवे विधे-रेव न्यायस्त्वम्, एवमप्यारम्भसामर्थ्यादलोन्त्यस्येत्येतस्मिन् बाधिते समु-दायस्यैव षष्ठीनिर्दिष्टस्य लोपप्रसंगो न त्वसंशब्दितस्य तिशब्दस्य लोपः सिध्यति, नियमपक्षे तु सति तत्सामर्थ्यादलोन्त्यस्येत्यस्यानुपस्थानात्सर्वस्य तिशब्दस्य भवति, त्रिंशं विंशकमित्यादौ तिलोपे कृते यतो गुणे पररूपत्वं, यस्येतिलोपस्तु न भवति, तिलोपस्यासिद्धत्वात् ॥

"टेः" ॥ 'हित्यभस्यापीति'। अवयार्थस्तु इकारो न भवति, कृत्तुपि तावदृषे तत्राप्नोति वर्तते, न च इकारवता प्रत्ययेन तत्रामा गम्यते देशः, हेपि प्रावृट्शरत्कालदिवां जइति निर्दिष्टत्वाच्च अवयार्थो इकारः। 'मन्दुरज इति'। ङ्यापोः सञ्ज्ञाछन्दसोर्बहुलमिति ह्रस्वः ॥

"नस्तद्धिते" ॥ 'तैषामिति'। अचिति प्रकृतिभावः प्राप्त इत्य-नुषङ्गः। 'पीठेन सर्पतीति पीठसर्पी, कलापिशब्दात्प्रोक्तार्थे कलापिनोण्, छन्दोब्राह्मणानि च तद्विषयाणि, तदधीतइत्यण्, प्रोक्ताल्लुक्, कालापाः, एवं कौथुमाः, किं पुनः कारणमुपचार आश्रीयते, न पुनर्मुख्यार्थवृत्तिभ्यां तेन प्रोक्तमित्यस्मिन्नर्थे ऽण् क्रियतइत्यत आह। 'शैषिकेष्विति'। केचित्तित-लिशब्दं पठन्ति तिलानां तलं तितलं, पृषोदरादिः, तदस्यास्तीति तितली । 'एवं लाङ्गला इति' । उपचारादि सर्वमतिदिशति, उत्तरेषु त्रिष्विदमर्थेण्, एवमाश्मनइत्यत्रापि, चार्म इत्यत्र विकारे, चार्मेण इत्यत्रेदमर्थे, विकारेपि कोशादन्यत्र । 'शौव इति'। तस्येदमित्यण्, अत्र परत्वाद्वृद्धिप्राप्तौ द्वारादित्वात्तत्प्रतिषेधे ऐजागमे च कृते टिलोपः। 'शौवनोन्यइति'। विकारावयवयोस्तु प्राणिरजतादिभ्योञिति प्रकृतिभावाभावा-च्छौव इत्येव भवति। 'के पुनरिति'। प्रातिपदिकगणे पाठाभावात्कथः, आदिशब्दस्य प्रकारवचनत्वादाकृतिगणोयमित्युत्तरम् । 'सायम्प्रातिक-मिति'। यथाकथञ्चित्कालवृत्तेरपि भवतीत्युक्तत्वात्कालसमुदायेपि ठञ् एव भवति, येषां च विरोधः शाश्वतिक इति निर्देशादिसुसुक्ता[1]न्तात्क इति कादेशाभावः। 'शाश्वतमिति'। भाष्यकारवचनादण् प्रत्ययः ॥

---

१ इसुसुक्तान्तात्कइति नास्ति· ई· पु·।

“अङ्गुष्ठस्योरेव” ॥ ‘अङ्ग इति’। न सङ्ख्यादेः समाहारइति सङ्ख्यादेरस्य प्रतिषेधः। ‘द्व्यहीनइति’। तद्धितार्थे द्विगुः, समायाः खः, द्विगोर्वा, राज्यहः सम्वत्सराच्चेति खः। ‘आङ्गिकमिति’। आर्हीयष्ठक्। ‘एवकारकरणं विस्पष्टार्थमिति’। विपरीतनियमनिरासार्थं तु न भवतीत्याह। ‘अङ्ग एवेति’। विपरीते हि नियमे अन्यस्य खे टिलोपाप्रसङ्गादात्माध्वानौ खइति प्रकृतिभावविधानमनर्थकं स्यादिति भावः॥

“ओर्गुणः” ॥ बाभ्रव्यादौ गोत्रे यञ्, शङ्क्वादौ प्राक्क्रीतीय उगवादिभ्यो यत्, औपगवादावपत्येऽण्। ‘सञ्ज्ञापूर्वको विधिरित्यादि’। भाष्येनुक्तमपि प्रयोगबाहुल्यादुक्तम्। तद्धितइत्येव,वोतो गुणवचनात् षष्ठी॥

“ढे लोपोकद्र्वाः” ॥ मद्रबाहुशब्दाद्वाहन्तात्सञ्ज्ञायामित्यूङ्, कद्रुशब्दादपि कद्रुकमण्डल्वोश्छन्दसि सञ्ज्ञायामित्यूङ्, ताभ्यामपत्ये स्त्रीभ्यो ढक्,अन्यत्र चतुष्पाद्भ्यो ढञ्, कमण्डलुपद आदधीतेति बह्वृचब्राह्मणं, सृगालो जम्बुः, शिवा जम्बूः। जम्ब्वा जम्बवजम्बुकः॥

“यस्येति च” ॥ इश्च अश्च यं, समाहारद्वन्द्वे ‘घ्यन्तादजाद्यदन्तं विप्रतिषेधेने’ति अशब्दस्य पूर्वनिपातः सौत्रत्वाच भवति, यशब्दस्य तु ग्रहणं न भवति लिङ्गात्, यदयं गर्गशब्दस्य यञि कुमारशब्दस्य तु ङीपि लोपं निर्दिशति, वोतो गार्ग्यस्य, कुमार्या वयसीति, अत एव निर्देशादकारे तावद्धस्वस्य ग्रहणं, तत्साहचर्यादिकारेपि, कार्यं तु दीर्घस्यापि भवति, सवर्णग्रहणात्। ‘दाक्षीति’। इतो मनुष्यजातेरिति ङीष्, सखिशब्दादपि सख्यशिश्वीति भाषायामिति, सर्वत्र सवर्णदीर्घत्वेन रूपं सिध्यति किं लोपेन तत्राह। ‘सवर्णदीर्घत्वे हीति’। ‘अतिसखेरिति’। अतिक्रान्तः सखीमिति तत्पुरुषे लिङ्गविशिष्टपरिभाषया ‘राजाहःसखिभ्यष्टजि’ ति टच् न भवति, तस्यानित्यत्वात्, तत उपसर्जनह्रस्वत्वम्। ‘एकादशस्येति’। ङीपा सह कृतस्य। ‘असखीति प्रतिषेधः स्यादिति’। कथं पुनः सखिशब्दस्योच्यमानोतिसखिशब्दस्य प्रतिषेधः स्यात्, तदन्तविधिना, ग्रहणवता प्रातिपदिकेन तदन्तविधि-

नैरस्ति, एवं मन्यते कार्यकालं संज्ञापरिभाषमिति पक्षे घेर्ङितीत्यत्र घिसंज्ञाया उपस्थानादङ्गाधिकारे तस्य च तदुत्तरपदस्य चेत्यस्ति तदन्तविधिरिति, यद्वा शेषस्येकारोकारमात्रस्य घिसंज्ञा, न तदन्तस्य, ततः किम्, असखीत्यपि सखिशब्देकारस्य प्रतिषेधो न सखिशब्दस्य, एकादेशे च सखिशब्देकार एवायमिति तदन्तेऽपि प्रतिषेधः स्यादेव, लोपे तु सति यद्यप्युपसर्जनह्रस्वत्वे कृते रूपमविशिष्टं तथापि तस्य लाक्षणिकत्वान्न भवति प्रतिषेधः। दौलेयादौ इतश्चानिञ इति ढक्। बलाकासुमित्राशब्दौ बाह्वादी। 'सौर्य इति'। तेनैकदिगित्यण्, एतच्च सूर्यागस्त्ययोश्छे च ङ्यां चेत्यनपेक्ष्योदाहृतम्। 'इयङुवङ्भ्यामिति'। इयङुवङोरवकाशः श्रियौ भ्रुवौ, लोपस्यावकाशो दौलेयः, कामण्डलेयः।

"सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः"॥ यद्यत्र भत्वेन सूर्यादयो विशेष्यन्ते सूर्यादीनां भसंज्ञानामिति, ततः सूर्यस्य स्त्री सूरी, आगस्त्यस्य अगस्तीत्यादौ यत्र सूर्याद्येव भसंज्ञकं तत्रैव स्यात्सौरी बलाकेत्यत्र तु न स्यात्, नह्यत्र सूर्यशब्द ईति भसंज्ञकः किं तर्ह्यणन्तं, तस्मादनाश्रितरूपस्य भमात्रस्य लोपेन संबन्धः। सूर्यादिभिर्यकारो विशेष्यतइति दर्शयन्नाह। 'सूर्यतिष्यागस्त्यमत्स्येत्येतेषामिति'। भसंज्ञकस्य यो यकार उपधा तस्य लोपो भवति स चेत्सूर्यादीनां संबन्धीत्यर्थः। 'सौरीति'। अत्र ईति परतो भसंज्ञकमङ्गमणन्तं तस्य यकार उपधा यथा भवति तथा दर्शयति। 'अणि यो यस्येति लोप इति'। 'व्याश्रयत्वादिति'। अणि यस्येति लोपः, ईति यलोप इति व्याश्रयत्वम्। 'ईकारे तु य इति'। लोप इत्यपेक्षते। 'तस्याणन्तस्येति'। भसञ्ज्ञकस्याणन्तस्य यकार उपधा भवतीत्यर्थः। स्थानिवद्भावस्तु द्वयोरपि यस्येति लोपयोर्यलोपविधिं प्रति प्रतिषिद्धः। 'मत्स्यचरीति'। मत्सी भूतपूर्वेति चरट्, तसिलादिष्विति पुंवद्भावः, टित्वान्ङीप्, भवत्यत्र मत्स्यचरशब्द ईति भसंज्ञकः, मत्स्यसंबन्धी च यकारो न त्वसौ भसञ्ज्ञकस्योपधेति लोपाभावः। 'यग्रहणमुत्तरार्थमिति'। इह तु सूर्यादिसंबन्धी भसञ्ज्ञकस्योपधायकार एव न वर्णान्तरमिति नार्थस्तेन। 'सौरीयइति'। सौर्यशब्दाद्वृद्धाच्छः, एवमागस्तीयः। 'आगस्त्य

इति'। अपत्ये ऋष्यण्। 'तिष्यपुष्ययोरिति'। तिष्यस्य सूत्रेणैव प्राप्ते नक्षत्राणि नियमः, पुष्यस्याप्राप्ते विधिः, सूत्रे त्वर्थग्रहणे सिध्यस्यापि प्रसङ्गः,। 'अन्तिकस्येत्यादि'। छन्दस्येतदिष्यते। 'ककारादेः शब्दस्येति'। ककारस्याकारस्य चेत्यर्थः। 'आद्युदात्तश्चेति'। प्रत्ययस्वरस्यापवादः। 'अन्तितइति'। अपादाने चाहीयरुहोरिति तसिः। 'का[1]देश्चेति'। कशब्दस्येत्यर्थः। 'अन्तिषदिति'। सत्सूद्विषेत्यादिना क्विप्, बहुचास्तु व्यस्तमधीयते।'ये चेति'। दृश्यतइत्यपेक्षते। 'अन्तियइति'। भवे छन्दसीति यत्। कादिलोपस्यासिद्धत्वाद्यस्येति लोपाभावः॥

"हलस्तद्धितस्य" ॥ 'त[2]द्धितइति निवृत्तमिति'। उत्तरसूत्रे पुनस्तद्धितग्रहणात्, तेनायमीत्येव विधिः॥

"आपत्यस्य च तद्धिते ऽनाति" ॥ 'गार्गकमिति'। गोत्रोक्षोष्ट्रेत्यादिना वुञ्, सङ्काशादिभ्यो ण्य इति वुञ्छणादिसूत्रेण चातुरर्थिकः, ततो धन्वयोपधाद्वुञिति जातादावर्थे। 'तद्धितग्रहणमित्यादि'। सोमो देवतास्येति सोमाट्ट्यण्, टित्त्वान्ङीप्, तत्र परतो ऽनापत्ययकारस्याप्यस्य हलस्तद्धितस्येति लोपो यथा स्यादित्येवमर्थमिह तद्धितग्रहणं कृतम्, अन्यथा हि प्रकृतं तद्धितग्रहणमिहानुवर्त्तनीयं, तस्मिंश्चानुवर्त्तमाने तत्सम्बद्धमीतीत्यपि सम्बध्येत, [3]तच्चोभयमिह संबध्यमानं पूर्वसूत्रेपि सम्बध्येत, ततश्च पूर्वेणैव सिद्धे सत्युभयत्र तद्धितइति चेति नियमोयं विज्ञायेत, आपत्यस्यैवानाकारादौ तद्धिते ईति चेति, ततो यथा तद्धिते ऽनापत्यस्य न भवति साङ्काश्यकइत्यादौ, तथा ईत्यपि न स्यात्, सौमी इष्टिरिति। तद्धितग्रहणे तु सति तेन पूर्वयोगे तद्धितग्रहणस्य निवृत्तिराख्यातेत्यापत्यानापत्ययोर्द्वयोरपि पूर्वेण ईति लोपो विधीयतइति सौमी इष्टिरित्यत्रापि यलोपः सिध्यतीत्यतस्तद्धितग्रहणम्। ननु च यद्युभयस्यायं नियमः स्याद्योगविभागोनर्थकः स्याद्धल आपत्यस्य

[1] ककारादेश्चेति मुद्रितमूलपुस्तके पाठः। ई॰ पु॰ तादेश्चेति पाठो दृश्यते।
[2] तद्धित इति निवृत्तमिति मुद्रितमूलपुस्तके नास्ति।
[3] तच्चोभयमिह संबन्ध्यमानं पूर्वसूत्रेपि संबन्ध्येतेति ई॰ पु॰ नास्ति।

तद्धितस्यानातीत्येकमेव योगं कुर्यात्ततो योगविभागादन्यतरस्यैवानुवृत्तिः, तत्राप्यनातीतिवचनात्तस्यैव, एवमपि दोषो ऽनापत्यस्य तद्धितेपि प्राप्नोति, कथम्, आपत्यस्य यदि भवति अनाकारादावेवेति नियमसम्भवात्, साङ्काश्यकादौ लोपः स्यादेव, अनाकारादाविति नियमः, तत आका-रादावापत्यानापत्ययोर्द्वयोरपि लोपप्रसङ्गो यत्रानापत्ये आकारादौ सम्भ-वति, अथ न सम्भवति तदा न कश्चिद्दोषः, आपत्यस्यैव तद्धिते तत्राप्य-नाकारादेवेति नियमद्वयाश्रयणात् ॥

"क्यच्व्योश्च" ॥ 'गार्गीयतीति'। क्यचि चेतीत्वम्। 'गार्गा-यतइति'। अकृत्सार्वधातुकयोर्दीर्घः, क्यषस्त्वापत्यादसम्भवः। 'गार्गी-भूतइति'। अस्य च्वावितीत्वम् ॥

"बिल्वकादिभ्यश्छस्य लुक्" ॥ बिल्वकादीनामस्मिन्प्रदेशे प्राति-पदिकगणे पाठाभावात्तत्परिज्ञानार्थमाह। 'नडादिष्विति'। नडादिषु बिल्वादयस्तावत्पठ्यन्ते, तत्र कुकि कृते यद्रूपं ककारान्तं तदिहानुकृतं, बिल्वक आदिर्येषामिति विग्रहः समासः, अशत्वेतु क्रियमाणे रूपविनाश-प्रसङ्गाच्च कृतमित्यर्थः। तेन बिल्वक आदिर्येषामिति अज्ञातादिषु यः कस्तदन्तानां ग्रहणं नाशङ्कनीयं, पाठाभावात्। 'कग्रहणं किमिति'। कृतकुगागमेभ्यः परस्तादन्यो न सम्भवतीति प्रश्नः। कथं पुनः कुको निवृ-त्तिप्रसङ्ग इत्याह। 'अन्यथा हीति'। इदमेव कग्रहणं ज्ञापकमस्येषा परिभाषेति। 'यकारमात्रस्येति'। उपधाया इत्यनुवृत्तेस्तस्यैव स्यात्-यापि तन्निवृत्तमेवमप्यादेः परस्येति परस्य प्रसङ्गादनिष्टमेव ॥

"तुरिष्ठेमेयस्सु" ॥ दोहीयसीत्यत्र घत्वादीनामसिद्धत्वात्पूर्वं तृशब्दस्य लोपे कृते पश्चान्निमित्ताभावात्तेषामभावः, लोपो भव-तीत्युक्तन्तत्रान्त्यस्य प्राप्नोत्यत आह। 'सर्वस्येति'। कारणमाह। 'अन्त्यस्य हीति'। नन्वेवमनन्तरो लुगेव विधेयः, एवं सुखमेव सर्वस्य निवृत्तिर्लभ्यते ऽत आह। 'लुगित्येतस्मिन्निति'। कः पुनस्तदनुवृत्तौ दोषः स्यादत आह। 'तथाहीति'। न च पूर्वमेव गुणो भवति अन्तर-ङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इतिवचनात्। 'इमनिच्ग्रहणमुत्तरार्थ-

मिति'। नेहार्थं, तृशब्दात्तस्यासम्भवात्, न चेदमेव कल्पकं भवितुमर्हति, उत्तरार्थतयाप्युपपत्तेः। नन्वेवमजादी गुणवचनादेवेति नियमाद्विष्ठेयसुनोरपि न सम्भवोत अाह। 'इतरौ त्विति'॥

"टेः"॥ 'णाविष्ठवदिति'। सप्तमीसमर्थाद्वतिः, णाविति प्रतियोगिनि सप्तमीनिर्देशात्, तेनेष्ठनि यत्कार्यं तदतिदिश्यते न त्विष्ठनो यत्कार्यं तदपि, तेन बहूनाचष्टे बहयतीत्यत्रेष्ठस्य यिट् चेति णयेव भवति, तदभावे तत्सन्नियोगशिष्टो भूभावोऽपि न भवति। केचित्तु भूभावमुदाहरन्ति भावयतीति। 'एतयतीति'। टिलोपातिदेशेनैव सन्नियोगशिष्टत्वादेकारनिवृत्तावपि स्त्रियां पुंवद्वचनं सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थं, तेन श्यैनेयः, ऐनेय इत्यादि सिद्धं भवति। अपर अाह इडविडमाचष्टे ऐडविडयति, दरदमाचष्टे दारदयतीत्यत्रमादौ पुंशब्दातिदेशार्थं पुंवद्वचनमिति। ननु चेडविडादीनामिष्ठनि पुंवद्भावो न दृष्ट, इष्ठन एव तत्रासम्भवात्, नेष्ठनि दृष्टस्यातिदेशः किं तर्हि सम्भावितस्य, अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात्, प्रातिपदिकग्रहणं प्रकृतिमात्रोपलक्षणम्। तेन द्रोणीमाचष्टइत्यादावपि टिलोपो भवति, नात्र पुंवद्भावो ऽस्ति, अभावित पुंस्कत्वात्। लिङ्गविशिष्ट परिभाषया वा ङीबन्तस्य ग्रहणम्। उक्तं हि, प्राक् यथाकथं चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टं गृह्यतइति। स्थवयतीत्यादावत उपधाया इति वृद्धिर्न भवति, अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति वचनात्। अस्यार्थः। अङ्गाधिकारविहिते कस्मिंश्चित्कार्ये वृत्ते पुनःकार्यान्तरस्य वृत्तौ प्राप्तायामविधिस्तस्य कार्यस्य, तच्चेदङ्गं निष्ठितं भवति, प्रयोगार्हं भवति, यत्र त्वनिष्ठितमङ्गं तत्र भवत्येव वृत्तिः, प्रापयति स्थापयतीति, कर्तारमाचष्टइत्यादौ तृशब्दस्य तुरिष्ठेमेयःस्विति लोपो भवति न वेति चिन्त्यम्॥

"स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः"॥ यद्यपि प्रकृतो लोपशब्दो भावसाधनः तथापीह कर्मसाधनोऽपि ज्ञायते, यणादि परं लोप इति सामानाधिकरण्येन निर्देशात्, तदाह। 'यणादिपरं लुप्यतइति'। 'पूर्वग्रहणं विस्पष्टार्थमिति'। इको गुणवृद्धी इति

वचनाल्लुप्तावशिष्टस्य य इक् तस्य गुणो भविष्यतीति भावः । अत एव वचनादजादी प्रत्ययौ भवत इति । इमनिच् तु पृथ्वादिष्वपठितेभ्यो न भवत्यनभिधानात् ॥

"प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः" ॥ प्रियस्थिरोरुगुरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते तेनैतेभ्यिमनिजनुवृत्तेश्चरितार्थत्वादितरेभ्यिमनिचः कल्पकमेतद्वचनं न भवति, तदाह । 'तेनान्येषामिति' ॥

"बहोर्लोपो भू च बहोः" ॥ 'भूयानिति' । आदेः परस्येत्यादेर्लोपः । 'अन्यथा हीति' । यदि पुनर्बहोरिति नोच्येत ततो यथा लोपः प्रत्ययानां भवति तथा भूभावोऽपि तेषामेव स्यात्, पर्यायेण तत्र लोपश्चादेर्भूभावः सर्वस्य शक्यते वक्तुं, पृथङ्निर्देशात्प्रत्ययानां न भविष्यति, अन्यथा भूलोपो बहोरिति ब्रूयात्, एवं च कृत्वोत्तरपदभूम्नीति निर्देश उपपद्यतइति ॥

"इष्ठस्य यिट् च" ॥ 'लोपापवादो यिडागमइति' । नाप्राप्ते तस्मिन्नारम्भात् । 'तस्मिन्निति' । लोपापवादभूते, यदि तु लोपोऽप्यनुकृष्य विधीयते तदा इकारो नोच्चारणार्थः ॥

"ज्यादादीयसः" ॥ 'लोपश्चेति' । यदि लोपो यिटा न व्यवहितः स्यात्तेनैव ज्यायानिति सिध्यतीति कृत्वा आदिति न वक्तव्यं स्यादिति भावः । कथं पुनर्लोपे सिद्धिरित्याह । 'लोपे हीति' । अङ्गाक्षिप्ताकारइत्यच कृतीति नानुवर्ततइति भावः । उरुयेत्यादौ छान्दसत्वाद्दीर्घाभावः ॥

"र ऋतो हलादेर्लघोः" ॥ 'परिगणनं कर्तव्यमिति' । एवं च हलादेर्लघोरिति न वक्तव्यम् । 'मातयतीति' । उणादीनामव्युत्पन्नत्वात् तुरिष्ठेमेयःस्विति तृशब्दस्य लोपो न भवति, अत्र परत्वाट्टिलोपं बाधित्वा रभावः प्राप्नोति ॥

"प्रकृत्यैकाच्" ॥ 'इष्ठेमेयस्सु परत इति' । यदि त्विष्ठादीनामिहानुवृत्तिर्न स्यात्तदा स्रिये हितं प्राक् क्रीताच्छः, स्रीयं, स्रा देवतास्य स्रः स्थालीपाक इत्यत्र यस्येति लोपो न स्यात्, ततश्च स्रीयमित्यत्रेयङा-

देशः स्यात्, तस्मादनुवर्त्या इष्ठादयः । 'स्रजिष्ठइति' । अथ प्रादयः किमित्युपेक्षिताः, प्रेष्ठः, प्रेयान्, स्थेष्ठः, स्थेयानिति, प्रभिहृत्वात्प्रा-दीनां टिलोपो यस्येति लोपश्च न भविष्यतः, इह तर्हि श्रेष्ठः श्रेयानिति, प्रकारोच्चारणसामर्थ्याल्लोपो न भविष्यति, तस्माद्विन्मतोर्लु-क्येवास्योदाहरणस्य संभवः, यद्येवं नाप्राप्ते टिलोपे आरभ्यमाणो विन्म-तोर्लुक् लोपं बाधिष्यते, सत्यं, विन्नन्तस्य मत्वन्तस्य च टिलोपः प्राप्तस्तं बाधते, यस्तु तयोर्लुकि कृते अवशिष्टस्य टिलोपः प्राप्नोति तस्य कथं बाधकः स्यात्, नहि तस्मिन्नाप्राप्ते विन्मतोर्लुगारभ्यते, अवश्यं चैतदेवं विज्ञेयम्, अवशिष्टस्य यष्टिलोपस्तं न बाधतइति, अन्यथा यत्रावशिष्टमने-काच् तत्रापि टिलोपो न स्यात्, ततश्च वसिष्टः वसीयानिति प्रत्युदाह-रणं नोपपद्यते, एवं चातिशयेन ब्रह्मवान् ब्रह्मिष्ठः, अवशिष्टस्य नस्तद्धित-इति टिलोपो भवति, बहृचब्राह्मणं च तस्माद्ब्राह्मणं ब्रह्मिष्ठं कुर्वीतेति, तथातिशयेन पयस्वी पयिष्ठ इति भवति, न तु पयसिष्ठ इति, अपर आह

इष्ठेमेयस्स्वनेकाचोप्यवशिष्टस्य नेष्यते ।
टिलोपो भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि ॥

इति । 'प्रकृत्येत्यादि' । राज्ञोपत्यं राजन्यः, राजश्वशुराद्यत्, मनोरपत्यं मनुष्यः, मनोर्जातावञ्यतौ षुक्, ताभ्यां समूहे गोत्रोक्षोष्ट्र-त्यादिना वुञ् । 'आपत्यस्य चेत्यादि' । एतच्चानयोरपत्यवाचित्व-मङ्गीकृत्योक्तं, यदा तु जातिमात्रमुभयत्र शब्दार्थः, अपत्यार्थस्तु नास्त्ये-वेति पक्षस्तदानापत्यत्वादेव लोपस्याप्रसङ्गाचार्थः प्रकृतिभावेन ॥

"इनण्यनपत्ये" ॥ 'सांकूटिनमिति' । कूट दाहे, दीर्घोपधः, अभिविधौ भावइनुण्, अणिनुणः ॥

"गाथिविदथिकेशिगणिपणिनश्च" ॥ मत्वर्थीयेनन्ता एते, गाथा-शब्दो व्रीह्यादिः, विदथो यज्ञः ॥

"संयोगादिश्च" ॥ अयमपत्यार्थ आरम्भः ॥

"अन्" ॥ अनपत्यइति निवृत्तम् । 'सामनो वैमनइति' । तस्येदमित्यण्, सुयज्ञोङ्वनिप्, हृस्वस्य तुक्, सुत्वा, तस्यापत्यं सौत्वनः ॥

"ब्राह्मो ऽजातौ" ॥ 'योगविभागोत्र क्रियतइति' । यदि न क्रियेत तदापत्यइत्यनुवर्तते वा न वा, तत्रानुवृत्तावनन्तरसूत्रेण प्रकृतिभावप्रतिषेधात्स्तद्धितइत्येव टिलोपस्य सिद्धत्वान्नियमार्थमेतद्भवति, अजातावेवापत्ये इति, तत्रापत्ये सिद्धमिष्टं ब्राह्मो नारदः, ब्राह्मणजातिरिति, अनपत्ये तु जातावजातौ च न क्वचिट्टिलोपः स्याद्ब्राह्मी ओषधिर्ब्राह्मं हविरिति, अननुवृत्तौ तु विधिनियमसम्भवे विधिरेव ज्यायानिति अनपत्ये 'अचि' ति प्रकृतिभावे प्राप्ते अजातौ टिलोपार्थं विध्यर्थमेतद्भवति, तत्र ब्राह्मं हविरित्यादि सिद्धं, ब्राह्मी ओषधिरिति न सिध्यति अजाताविति प्रतिषेधात्, ब्राह्मणी ओषधिरिति प्राप्नोति, अपत्ये च जातौ ब्राह्मण इति न सिध्यति, पूर्वसूत्रेण प्रकृतिभावे प्रतिषिद्धे टिलोपप्रसङ्गादिति भावः । विभक्तस्यार्थमाह । 'ब्राह्मइत्येतदिति' । 'सामर्थ्यादिति' । अपत्ये पूर्वेणैव टिलोपस्य सिद्धत्वाद्ब्राह्म इत्येतावता नियमस्य कर्तुमशक्यत्वाच्च, तत्रापत्येपि ब्राह्मो नारद इति परत्वादनेनैव टिलोपः । 'अपत्ये वेति' । अन्यथा अनपत्ये वापत्ये च जातौ प्रतिषेधः स्यात्, प्रसज्यप्रतिषेधश्चायमित्याह । 'अपत्ये जाताविति' ॥

"कार्मस्ताच्छील्ये" ॥ 'णत्वेवमिति' । यदि तु णप्रत्ययोयमित्यर्थः । 'नस्तद्धित इति टिलोपः सिद्ध इति' । अणि हि प्रकृतिभावः । 'ज्ञापनार्थमिति' । एवं च छत्रादिभ्यो णिति लाघवाय कर्तव्यं, णवचने प्रयोजनाभावात् । 'ताच्छीलिक इति' । तुल्यजातीयविषयत्वाज्ज्ञापनस्यैतल्लभ्यते, तेन तदस्यां प्रहरणं, प्रज्ञाश्रद्धार्चेत्यादिके णे टीलोपो भवति ॥

"दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि" ॥ 'उपचारादिति' । मुख्यस्याध्ययनासम्भव उपचारे हेतुः । भ्रौणहत्येति तु निपातनानर्थक्यं, 'हनस्तोचिण्णलोरि' ति तकारस्य सिद्धत्वात्, न च नस्तद्धितइति टिलोपप्रसङ्गः, उभयोरनित्ययोः परत्वात्तस्यैव भावादत आह । 'हनस्तोचिण्णलोरिति' । धातुस्वरूपग्रहणे तत्प्रत्यये धातोरित्येवं विहितो यस्स-

त्रैव कार्यं विज्ञायते, न च ष्यञेवं विहितः किं तर्हि प्रातिपदिकादित्येवं, तेनात्र नो निपात्यते, कथं पुनर्ज्ञायते धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायतइति, अत एव निपातनात्, एवं तर्हि कुत्वनिवृत्त्यर्थं निपातनं, मैत्रम् । 'एवं तर्हि 'न क्वादे' रित्यत्र प्रकरणे भूयात्रः ष्यञीत्युच्यत्, अतस्तत्त्वार्थमपि निपातनं सत् ज्ञापकमेव, ऐत्त्वाकशब्दोऽयमाद्युदात्तो ऽन्तोदात्तश्चेष्यते, तत्रान्यतरस्य पाठे इतरस्योकारलोपो न सिद्ध्यति, तत्राह । 'स्वरसर्वनाम्नेति' । उदात्तादीनामविभागेनावस्थानमेकश्रुतिः, सर्वनामवत्सर्वनाम, यथैव हि तस्यापत्यमित्यादौ उपगुप्रभृतीनविशेषान्सर्वनाम प्रतिपादयति तथैकश्रुतिरप्युदात्तादीन्स्वरविशेषानिति एकश्रुतेः सर्वनामत्वम् । 'इयादेशापवाद इति' । केकयादिसूत्रेण प्राप्त इयादेशः, इह मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते, यस्कादिषु प्रत्ययसिद्ध्यर्थे, यस्कादिषु लुगर्थं, केकयादिसूत्रे इयादेशार्थम्, इदं चतुर्थं युलोपार्थम्, तत्र द्विर्ग्रहणमकर्त्तुं शक्यमित्यभिप्रायेणाह । 'अथ किमर्थमिति' । 'लुगर्थः पाठो न कर्त्तव्य इति' । यञञोरित्येव सिद्धत्वात् । परिहरति । 'नैतदस्तीति' । 'अण् प्राप्नोतीति' । यदि तु सङ्घाङ्कलक्षणेष्वित्यस्यानन्तरं न मैत्रेयादित्युच्येत तदा त्रीणि ग्रहणानि नार्थो निपातनेन । 'यलोप इति' । यशब्दस्य लोप इत्यर्थः ॥

"ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि" ॥ 'मलोपो निपात्यतइति' । तस्यासिद्धत्वाद्यस्येति लोपाभावः । एवमप्यकृत्सार्वधातुकयोर्दीर्घ इति दीर्घः प्राप्नोति, अङ्गवृत्तेः पुनर्वृत्तावविधिवचनाच भविष्यति । क्वचित्तु मकारलोप इति पठन्ति । तत्र यस्येति लोपे कृते प्रत्ययाकारस्य श्रवणम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां षष्ठस्याध्यायस्य
चतुर्थः पादः ॥
अध्यायश्चायं समाप्तः ।

**शुभं भवतु ।**

१ तथा हि इति इं पु॰ पा॰ ।
२ हरिहरेति इं पु॰ पा॰ ।

श्रीगणेशाय नमः ॥

# अथ सप्तमोऽध्यायः ।

# काशिकाव्याख्या पदमञ्जरी ।



"युवोरनाकौ" ॥ शास्त्रस्य लाघवार्थं युवू प्रत्ययौ उपदिष्टौ, तयोरनेनानाकावादेशौ विधीयेते, तत्रतत्र ह्यनाकयोरेवोपदेशे शास्त्रस्य गौरवं स्यात्, इह कस्मान्न भवति, यु मिश्रणे, युतः, युतवान्, उदितोर्युवोरिदं ग्रहणं, कथम्, ल्युडादिषूकारो ऽनुनासिक इत्सञ्ज्ञकः, एवमपि वूत्त्वा वूतः वूतवान् अत्र प्राप्नोति, ऊठस्त्वनुदितवकाशः, अथार्थवतो युवुशब्दस्य ग्रहणम्, अनर्थकश्चायम्, तेन धात्वन्तस्य न भवति, भुज्युः मृत्युः कंयुः शंयुः ऊर्णायुरित्यादावुकारस्यानित्सञ्ज्ञकत्वादादेशाभावः । यदि तर्हि ल्युडादिषूकार इत्सञ्ज्ञकः नन्दनः कारकः, उगिदचामिति नुम् प्राप्नोति, उगितो झलन्तस्य नुम्, न चैतौ झलन्तौ, तर्हि झल्ग्रहणं कर्त्तव्यं, नेत्याह, यदेतन्नपुंसकस्य झलच इति झल्ग्रहणं तत्पुरस्तादपकृष्यते, उगिदचां सर्वनामस्थाने धातोर्झलः, युजेरसमासे, ततो नपुंसकस्य, झलइत्येव, ततोऽचः, नपुंसकस्येत्येव, तच्चावश्यं झल्ग्रहणमपकृष्टव्यम्, अन्यथोगितो लिङ्गविशिष्टस्यापि नुम् प्रसज्येत गोमती भवती, इह तर्हि नन्दना कारिका उगितश्चेति ङीप् प्राप्नोति, ज्ञापकात्सिद्धम्, यदयं क्वचिद्वुवू षिट्टितौ करोति, शिल्पिनिष्वुन्, ट्युट्युलौ तुट् चेति, तज्ज्ञापयति न युवोरीकारो भवतीति, नैतदस्ति ज्ञापकम् । षित्करणं ङीषर्थम्, टित्करणमनुपसर्जनार्थम्, टितो ह्यनुपसर्जनात् ङीप् भवति, उगितः पुनरविशेषेण, तथा शातनपातनशब्दौ ल्युडन्तौ गौरादिषु पठितौ, तत्र शातनितरा पातनितरा, नद्याः शेषस्यान्यतरस्याम्, उगितश्चेत्युगिल्लक्षणो ह्रस्वविकल्पः प्राप्नोति । ननु चोगित इत्येवमुगित्संज्ञाशब्दनेन या नदी विहिता तस्यास्तत्र ग्रहणं, नेत्याह । इह हि दोषः स्यात्, भोगवतितरा, गौरिमतितरा, शार्ङ्गरवादि-

कीनन्तावेतौ तत्र ह्रस्वविकल्पो न स्यात्, इष्यते चात्र[1] ह्रस्वविकल्पो भाष्यकारेण, तस्मान्नैवं शक्यम् उदितोर्युवोर्ग्रहणम् इति, न चेदेवं युतः युत्वा भुज्युः शंयुरित्यत्रापि प्राप्नोति, तत्राह। 'अनुनासिकयवयोरिति'। सन्ति हि यवाः सानुनासिका निरनुनासिकाश्च, तत्र येषामादेश इष्यते तेषु यकारवकारावनुनासिकौ पठितव्यौ, तेन न क्वाप्यनिष्टप्रसङ्गः। 'प्रत्यययोरिति'। वस्तुकथनमेतत्, न त्वप्रत्ययनिवृत्त्यर्थं, तथाविधस्यानुनासिकस्य यवो ऽसम्भवात्। 'मृत्युरिति'। भुजिमृङ्भ्यां युक्त्युकाविति सूत्रे सहनिर्दिष्टत्वादिदमुदाहृतं, शक्यते ह्यत्र वक्तुमङ्गस्य यो युवू, को वाङ्गस्य युवू, ययोरङ्गमित्येतद्भवति, कयोश्चैतद्भवति, प्रत्यययोः। न चैव प्रत्यय इति। आनर्थक्याच्च ट्युट्युलोस्त्वनादेशे कृते पश्चात्तुडित्यर्थवत्त्वं प्रत्ययत्वं च, किमुच्यते ऽनुनासिकत्वं न प्रतिज्ञायत इति, न पुनर्न पठ्यत इत्यत आह। 'प्रतिज्ञानुनासिक्या इति'। प्रतिज्ञयानुनासिक्यं येषां ते तथोक्ताः, सर्वत्र पाठाभावात्सतोपि वा पाठस्य सङ्कीर्णत्वात्प्रतिज्ञासमधिगम्यमेवानुनासिकत्वमित्यर्थः। युवोरिति समाहारद्वन्द्वश्चेत्स नपुंसकमिति नपुंसकत्वे सति औत्त्वगुणवृद्धितृज्वद्भावेभ्यो नुम् पूर्वविप्रतिषिद्धमिति वचनाद् घेर्ङितीति गुणं बाधित्वा इकोचि विभक्ताविति नुमि सति युवुन इति भवितव्यम्, इतरेतरयोगद्वन्द्वे तु द्विर्वचने यणादेशे च सति द्वयोर्वकारयोः श्रवणप्रसङ्गः, स्थानिवद्भावाद्धलि लोपो ऽपि नास्ति, तत्कथमयं निर्देश इत्याह। 'युवोरिति'। 'नपुंसकलिङ्गता चेति'। न भवतीति वक्ष्यमाणेन संबन्धः। मध्ये हेतुः। 'लिङ्गमशिष्यमिति'। 'छान्दसो वर्णलोप इति'। अकृतएव यणादेशे उकारस्य लोपः, कृते वा तस्मिन्नन्य[2]तरस्य वकारस्य, अपर आह। कर्मधारयोयम्, अवयवधर्मेण समुदायस्य व्यपदेशः। युश्चासौ समुदायो युवुलक्षणो वुश्चासाविति तत्र समुदायस्य क्वचिदभावादवयवयोरेवानाकादेशाविति।

"आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" ॥ फकारादि-

---

१ अत्रापीति इं॰ पु॰ पा॰।
२ इतरस्येति इं॰ पु॰ पा॰।

ष्वकार उच्चारणार्थः, व्यञ्जनमात्रं स्थानि, अन्ते फढखच्छघामित्यनचक-निर्देशात्, एवं च निरनुबन्धकपरिभाषा न प्रवर्त्तते । 'आढ्यकुलीन इति' । अपूर्वपदादिति वचनात्कुलात्ख इत्यनेन सपूर्वपदादपि खो भवति, फक्क नीचैर्गतौ, ढौक्ट तौकृ गत्यर्थौ, इह प्रत्ययाद्युदात्तत्वं संज्ञासंनियोगेन विधानादन्तरङ्गम्, एते त्वायन्नादयोऽङ्गाधिकारे विधानाद्बहिरङ्गाः, ततश्च यत्र स्वरार्थो ऽनुबन्धो नास्ति शिलाया ढो वृद्धाच्छ इत्यादौ तत्राद्युदात्तत्वे कृते पश्चाद्भवन्त एते आदेशा अस्वरकस्याच उच्चारणासम्भवादनियतस्वराः स्युरित्याशङ्क्याह । 'आयन्नादय इत्यादि' । अयमभिप्रायः । प्रत्ययादीनां फकारादीनामङ्गसम्बन्धाव्यभिचारात्प्रयोजनाभावादिहाङ्गस्येति न सम्बध्यते, तेन एतेऽप्यन्तरङ्गाः, तत्र परत्वादेतेषु कृतेषु पश्चादाद्युदात्तत्वमिति । अत्रैव ज्ञापकमाह । 'तथा चेति' । यदि प्रत्ययस्वरे कृते आयन्नादय आदेशाः स्युस्ततो घशब्दाकारस्योदात्तत्वे कृते घकारस्य हलः स्रंसनधर्मिणः स्रंसनधर्मिण्यनुदात्तआदेशे कृतेन्तोदात्तत्वं सिद्धमिति चित्करणमनर्थकं स्यादिति भावः । 'इयङिति' । 'वावचनं ज्ञापकमिति' । यदि धातुप्रत्ययानामप्येते आदेशाः स्युर्वतेरिट्छङित्येव ब्रूयात्, न च छङि सति वलादिलक्षणे इटि कृते अनादित्वादियादेशो न स्यादिति वाच्यम्, इदानीमिव ह्युक्तमन्तरङ्गा आदेशा इति । अपर आह । यदि धातुप्रत्ययेष्वेतज्ज्ञापकं प्रातिपदिकप्रत्ययेष्वपि शक्यं वक्तुं यदयमीयसुनं शास्ति तज्ज्ञापयत्याचार्यो न प्रातिपदिकप्रत्ययानामिमे आदेशा [1]इति, यदि स्युस्तर्हिच्छसुनमेव विदध्यात् । एतावन्तश्च प्रत्ययाः, धातुप्रत्ययाः प्रातिपदिकप्रत्ययाश्चेति, उच्यन्ते चादेशास्ते वचनात्सर्वत्रैव स्युरिति । 'इत्सञ्ज्ञया भवितव्यमिति' । न च वचनसामर्थ्यादित्सञ्ज्ञाया बाधनमित्याह । 'तद्धितेषु हीति' । 'प्रतिविधानं कर्त्तव्यमिति' । प्रतिविधानं तु प्राचामवृद्धात्फिन्बहुलमिति फिनो नित्करणादित्सञ्ज्ञाया अभाव इति । न च फेश्छ चेत्यत्र फिनः फिञश्च सामान्यग्रहणार्थं नित्करणं, वृद्धादित्यधिकाराद्धि फिञ एव तत्र ग्रहणं न फिनः ॥

[1] भवन्तीति, यदि स्युस्तरप्रत्ययमीयसुनाविति कथुर्नमिति इं॰ पु॰ पा॰ ।

"झोन्तः ॥ 'आदिग्रहणं निवृत्तमिति'। तदनुवृत्तौ हि शयान्ते इत्यत्र शीङो लेटि लेटोडाटाविति लावस्थायामेव प्राप्ते आटि सति झकारस्यानादित्वान्न स्यात्, कथं पुनः समासनिर्दिष्टानामेकदेशोनुवर्तते, नैष दोषः। अनाश्रितार्थकं शब्दमात्रं स्वरितत्ववशादनुवर्त्तते इति पक्षे यस्यैव स्वरितत्वं प्रतिज्ञातं तस्यैवानुवृत्तिः, अर्थाधिकारपक्षे तु समासार्थस्यैकत्वात्तस्यैवानुवृत्तिः स्याद्वा न वा, यद्वा प्रत्ययग्रहणं पूर्वसूत्रे पृथक् पदं लुप्तविभक्तिकं, तेन तस्यैवानुवृत्तिर्भविष्यति, आदेशे त्वकार उच्चारणार्थः, तेन पचन्तीत्यादौ श्रवणं न भवति ॥

"अदभ्यस्तात्" ॥ 'ददतीत्यादि'। जुहतीत्यादौ यत्रोपदेशानन्तरमभ्यस्तसञ्ज्ञा तत्राप्यवश्यं विकरणाभावः प्रतीक्ष्यः, अन्यथा नित्यत्वाच्छपि कृते तेन व्यवधानान्न स्यात्, ततश्च ददतीत्यादावपि शपः श्लावभ्यस्तसञ्ज्ञायामदादेशो भवति। 'जुसादेशेन तु बाध्यतइति'। तस्यानवकाशत्वात्। 'अत्राप्यादेशे कृते प्रत्ययाद्युदात्तत्वं भवतीति'। उत्तरत्रेति भावः। इह त्वभ्यस्तानामादिरिति स्वरो भवति ॥

"आत्मनेपदेष्वनतः" ॥ अनभ्यस्तार्थमिदं वचनम्। 'चिन्वतामिति'। लोट्, टेरेत्वम्, आमेतः। 'च्यवन्तइति'। ननु चात्रापि प्रागेव शपः परत्वाददादेशप्रसङ्गः, अनतइत्यस्य तु बेभिद्यन्तइत्यादिरवकाश इत्यत आह। 'नित्यत्वादिति'। 'झकारविशेषणं किमिति'। श्रुतानामात्मनेपदानामधिकृतस्य प्रत्ययस्य वा विशेषणे को दोष इति प्रश्नः। 'शयान्तेइति'। अत्राङ्गस्यानन्तरमात्मनेपदमाटस्तद्ग्रहणेन ग्रहणात्, झकारस्त्वाटा व्यवहितः, अन्तादेशस्त्वङ्गविशेषणानुपादानादत्रापि भवति ॥

"शीङो रुट्" ॥ 'झादेशस्यात इति'। ननु च नेहाद्ग्रहणमस्ति, यदपि प्रकृतं तदपि प्रथमानिर्दिष्टं, षष्ठीनिर्दिष्टेन चेहार्थः, शीङ इत्येषा पञ्चमी अदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति, तस्मादित्युत्तरस्येति। 'शेरतइति'। सार्वधातुकावयवस्य झस्यादादेशस्तदागमो रुट्

१ इहापीति· इं· पु· पा·।

तद्ग्रहणेन गृह्यते, अवयवस्य समुदायं प्रत्यवयवत्वं लोकेपि दृश्यते, यथा देवदत्तस्याङ्गुलिरिति, सार्वधातुकस्याप्यवयवो रुडिति शीङः सार्वधातुके गुण इति गुणो भवति, किं पुनः कारणं रुडागमो झादेशस्यातो विधीयते, न झकारस्यैव विधीयते, एवं हि न षष्ठी प्रकल्प्या भवत्यत आह । 'इडयमिति' । यदि तु झकारासञ्जनेन पूर्वान्तः क्रियेत शेरतइत्यत्र गुणो न स्यादनिगन्तत्वात् तस्मात्परादिरेव वक्तव्यः, स यदि झकारस्यैव स्यात् ततो यथा शयान्तैइत्यत्राटा व्यवहितत्वाज्झस्यादादेशो न भवति तथा शेरतइत्यत्रापि न स्यात् रुटा व्यवहितत्वात् । ननु च युक्तमाटा व्यवधानं, सहि सार्वधातुकभक्तस्तदेव न व्यवदध्यात्, झकारं तु व्यवदधात्येव, रुट् पुनर्झकारभक्तः स कथं तस्य व्यवधायकः । उच्यते । गृह्यतां ताव-त्तद्ग्रहणेन तथापि निर्दिश्यमानस्यादेशा भवन्तीति यदत्र निर्दिश्यते झ इति विशिष्टं रूपं न तदनन्तरं, यश्चानन्तरो रेफझकारसमुदायो न स निर्दिश्यतइति न स्यादेवादेशः । अपर आह । आदेशो न स्यादिति, कोर्थः, झस्य न स्यादिति, कस्य तर्हि स्यात् आदेः परस्येति रुट एव स्यात्, न च रुटो वैयर्थ्यं स्यात्, झकारस्य श्रवणार्थत्वादिति, तच्चिन्त्यम-नेकाल्त्वात्सर्वादेशः प्राप्नोति, सर्वादेशे रुटो वैयर्थ्यमिति चेत् किं कुर्मो माभूदादेशः, शीङ इत्यनुबन्धोच्चारणं यङ्लुङ्निवृत्त्यर्थं, व्यतिशेश्यते, गुणोपि न भवति, तत्राप्यनुबन्धनिर्देशात् ॥

"वेत्तेर्विभाषा" ॥ 'संविद्रतइति' । 'समो गमृच्छी' त्यादिनात्म-नेपदम् । 'वित्तइत्यादि' । विद विचारणे, रुधादिरनुदात्तेत्, सत्तालाभा-र्थयोस्तु विकरणव्यवधानादेवाग्रहणम्, अत्र च बहुवचनं प्रत्युदाहरणम्, इतरयोरुपन्यासो विचारणार्थस्येदं बहुवचने रूपमिति प्रदर्शनार्थम्, विदन्ते इति रूपस्य लाभार्थं तौदादिके स्वरितेत्त्वादात्मनेपदे एकवचने 'शे मु-चादीना' मिति नुम्यपि कृते सम्भवात् । किं च वेत्तेरिति श्तिपा निर्दे-शादेव यङ्लुकि न भवति, व्यतिवेविदतइति ॥

"बहुलं छन्दसि" ॥ 'बहुलवचनादन्यत्रापि भवतीति'। एतद-

र्थमेव विभाषाग्रहणे प्रकृतेपि बहुलग्रहणं कृतम् । 'अहृश्रमिति' । 'हरितो वे' ति वाह ॥

"अतो भिस ऐस्" ॥ 'अतिजरसैरिति' । अत्रैव चैकारस्य श्रवणार्थमैसादेशः कृतः, वृक्षैरित्यादावैसादेशेपि वृद्ध्या रूपं सिद्धम्, अतो गुणइति पररूपं तु न भवति, यदि स्यादिसमेव विदध्यात् । 'परत्वा-दिति' । इत्वस्यावकाशो वृक्षेषु, ऐसोवकाशः कृतएत्वे, प्रागेत्वादुभय-प्रसङ्गे परत्वादेत्वप्रसङ्ग इति चेन्मन्यसे अत ऐस् क भविष्यति, एत्वे कृते-मुख्यमकारान्तं न भवतीति प्रश्नः । 'कृतएत्वे भैतपूर्व्यादिति' । भूतपू-र्वस्य भावो भैतपूर्व्यं, सांप्रतिकाभावाद्भूतपूर्वगतिराश्रीयतइति भावः । 'एस् तु नित्यस्तथा सतीति' । एवं हि सत्यैस्भावो नित्यः, कृताकृतप्रस-ङ्गित्वादेत्वं त्वैसि कृते न प्राप्नोति, अफलादित्वात्, न च तत्र भूतपूर्व-गतिः, मुख्यस्यैव सम्भवात्, एतच्चोद्यपरिहारमुत्सर्गापवादभावमनाश्रित्य कृतं द्रष्टव्यं, तदाश्रयणे हि नाप्राप्तएत्वआरम्भादैसपवाद इत्ययुक्तो विप्रतिषेधः स्यात् ॥

"नेदमदसोरकोः" ॥ इदमदसोरिति भिसपेक्षया सम्बन्धल-क्षणा षष्ठी । 'एभिरिति' । त्यदाद्यत्वं, हलि लोप इतीद्भागस्य लोपः । 'अमीभिरिति' । ऐसि प्रतिषिद्धे बहुवचने भल्येदित्येत्वम्, एत ईद्बहुवच-नइतीत्वमत्वे, अकोरित्येतदनर्थकं, कथं, विशिष्टरूपाश्रयोयं प्रतिषेधः, इदमदसोरिति तत्राकचि कृते रूपभेदादेव न भविष्यति, तत्राह । 'अ-कोरित्येतदेवेति' । ज्ञापनस्य प्रयोजनं सर्वके इत्यादौ सर्वनामकार्यप्रवृत्तिः, इमौ द्वौ प्रतिषेधावुच्येते द्वावपि शक्याववक्तुं, कथम्, एवं हि वक्ष्यामि, इदमदसोः कादिति, तन्नियमार्थं भविष्यति, इदमदसोः कादेव नान्यत इति, नैतदस्ति, विपरीतोपि नियमः स्यात्, इदमसोरेव कादिति, ततश्च सर्वकैरित्यादौ न स्यात्, एभिरित्यादौ च स्यादेव तन्मध्यपरिभाषा च न ज्ञापिता स्यात्, क्वचित्तु वृत्तावेव पठ्यते, इदमदसोः कादिति नोक्तं, विपरीतोपि नियमः स्यादिदमदसोरेव कादितीति ॥

"टाङसिङसामिनात्स्याः" ॥ 'अतिजरसिनेत्यादि' । समासे ह्रस्वत्वे कृते इनादेशः, ततः सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशः, एवमतिजरसादित्यत्राप्यादादेशे कृते जरसादेशः । ननु च टाङस्योरेवाजादित्वात्प्रागिनादादेशाभ्यां जरसादेशः प्राप्नोति, स हि नित्यः, परश्च, तत्र कृते ऽनदन्तत्वादेवेनादादेशयोरभावे ऽतिजरसा अतिजरस इति भवितव्यं, नैष दोषः । एवं हि इनादेशस्यादादेशस्य च विधानमनर्थकं नादेशोऽदादेशश्च विधेयः स्या,त्का रूपसिद्धिः, इह तावद्वृत्तेणेति एत्वे योगविभागः करिष्यते, बहुवचनेझल्येत्, ओसि च, तत आङि च, आङि च परतोऽत एत्वं भवति, तत्र स्थानिवद्भावान्नशब्दे परत एत्वं वृत्तेण, नैव शक्यम्, इह सूनेनेति, हलि लोप इति इद्रूपलोपे सति एनेति प्राप्नोति, हलि लोप इत्यपनीय झलि लोप इति सूत्रं करिष्यते, तत्र नकारस्याझल्त्वाल्लोपाभावः, न स शक्यो झलि लोपो वक्तुम्, इह हि न स्यात् अयाविष्टाजनयत्, अयेति इदमश्चतुर्थ्येकवचनस्य सुपां सुलुगित्यादिना यादेशः, सुपि चेति दीर्घाभावः छान्दसः, तत्रा स्याझजादित्वादिद्रूपलोपो न स्यात्, तस्माद्धलि लोप एव कर्त्तव्यः, ततश्चानेनेति न सिद्ध्यति, एवं तर्ह्यनाप्यक इति द्विनकारकोयं निर्देशः, तत्रादेशसंबन्धी पदान्तत्वाल्लुप्तः, नश्च आप् च नाप्, तत्र परत इदो ऽनादेश इति सूत्रार्थाश्रयणाद्दिद्रूपलोपापवादो नशब्दे परतो नादेश एव भविष्यति, यद्येवमादेशेन लोपस्यासिद्धत्वाद्राजेत्यादाविव सूत्रे दीर्घप्रसङ्गः, आनाप्यक इति । नैष दोषः । सुपां सुलुगिति लुकि कृते न लुमताङ्गस्येति प्रतिषेधः वृत्तादित्यत्रापि सवर्णत्वनैव सिद्धम्, अकारोच्चारणसामर्थ्यादतो गुणे पररूपं न भविष्यति, तदेवमिनादेशस्यादादेशस्य च विधानसामर्थ्यात्पूर्वमिनादादेशौ पश्चाज्जरसादेश इत्येषामभिप्रायः । 'यथा त्वित्यादि' । भाष्ये हि पूर्वोक्तप्रक्रियाश्रयणेन नादेशो ऽदादेशश्च व्यवस्थापितः, यदि चैतद्रूपद्वयमिष्टं स्यात्, तयोरादेशयोः प्रत्याख्यानमनुपपन्नं स्यात्, तत्र सन्निपातपरिभाषया जरसादेशाभावादतिजरेणातिजरादिति भाष्यकारस्याभिप्रेतमिति केचित्, प्रागेव जरसादेशे ऽतिजरसा अतिजरस इत्यभिप्रेतमित्यन्ये ॥

"ङेर्यः" ॥ 'ङेरिति चतुर्थ्येकवचनस्य ग्रहणमिति'। तस्य हि ङेरिति रूपं प्रतिपदोक्तं सप्तम्येकवचनस्य घेर्ङितीति गुणे लाक्षणिकं, यद्यपि ङेरिति विभक्त्यन्तमुपात्तं तच्चोभयोरपि लाक्षणिकं, तथापि प्रत्ययात्पूर्वस्य भागस्य लाक्षणिकत्वप्रतिपदोक्तत्वापेक्षया परिभाषाप्रवृत्तिः, यद्येवं ङेराम्नद्याम्नीभ्य इत्यत्राप्येवमेव प्रसङ्गः, तस्माद्व्याख्यानमेवात्र शरणं, लिङ्गं च, तस्मै प्रभवति, तदस्मै दीयते, तस्मै हितं, तदस्यां प्रहरणमिति क्रीडायां ण इत्यादि। 'वृत्तायेति'। सुपि चेति दीर्घः, कथं पुनरकारसन्निपातकृतो यशब्दस्तद्विघातनिमित्तं भवत्यत आह। 'सन्निपातलक्षणइति'। अनित्यत्वं तस्याः कष्टाय क्रमणइति निर्देशादवसीयते ॥

"सर्वनाम्नः स्मै" ॥ 'भवतइति'। द्विपर्यन्तास्त्यदादय इति वचनादन्यत्र त्यदाद्यत्वाभावादनकारान्तत्वम्। 'अन्वादेशे ऽशादेशे कृतइति'। अनन्वादेशे त्वत्रास्मै इत्यानुपूर्व्यात्सिद्धं, कथं, नात्राकृते स्मैभावे हलादिर्विभक्तिः, हलादौ चेद्रूपलोपः, न चाकृते इद्रूपलोपे एकादेशः प्राप्नोतीति। न चाद्गुणप्रसङ्गः, नित्येनेद्रूपलोपेन बाधितत्वात्। 'एकादेशः प्राप्नोतीति'। नित्यत्वात्, वाक्यसंस्कारपक्षे चैतच्चोद्यं, तद्ध्यर्थप्रतिपादनाय लोके प्रयुज्यते, तदेव च शास्त्रेविभ[1]ज्यान्वाख्यायते। 'अन्तरङ्गत्वादिति'। एकपदाश्रयत्वादन्तरङ्गत्वं, पदद्वयाश्रयत्वादेकादेशो बहिरङ्गः ॥

"पूर्वादिभ्यो नवभ्यो वा" ॥ द्वये पूर्वादयः, 'सूत्रपाठ[2]पठिता गणपाठपठिताश्च, सर्वनाम्न इति चेहानुवर्त्तते, तत्रासति नवग्रहणे ङसिङ्योर्येन सर्वनामसञ्ज्ञा स गणपाठ एव गृह्यतइति नवग्रहणम्, इह जसिङसिङीनां शीस्मात्स्मिनः पूर्वादिभ्यो नवभ्यो वा, औङ आपः, शी नपुंसकाच्चेति सूत्रन्यासः कर्त्तव्यः, एवं जसि विभाषार्थानि त्रीणि सूत्राणि न कर्त्तव्यानि भवन्ति, तथा तु न कृतमित्येव ॥

१ अपीति इं· पु· पा·।
२ पाठेति इं· पु· नास्ति।

"जसः शी" ॥ 'दीर्घोच्चारणमुत्तरार्थमिति'। इह त्वत इत्यधिकाराद्गुणेन भवितव्यमिति, ह्रस्वेपि सिद्धं, न च सर्वे कृत्रिणा इत्यत्र षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वाद्ध्रस्वाश्रयस्य नित्यस्य तुकः प्रसङ्गः, तत्र हि पदान्तपदाद्योरयं एकादेशस्तस्यैवासिद्धत्वम् ॥

"औङ आपः" ॥ औङ इति निर्द्देशं क्रियमाणमनुवादपूर्वमाक्षिपति। 'औकारोयमिति'। कोयं प्रकारः, कुत्सितोयं सूत्रप्रणयनप्रकारः, सिद्धस्य ह्यनुवाद उपपद्यते, यथा ङेर्य इति, अयं तु न क्वापि सिद्धइति, परिहरति। 'सामान्यार्थ इति'। औत इत्युच्यमाने प्रथमाद्विवचनस्यैव स्याचिरनुबन्धकत्वात्, न सानुबन्धकस्यौटः, यद्यपि टकारः प्रत्याहारार्थत्वात्समुदायानुबन्धस्तथापि प्रत्ययानुबन्धत्वमपि तस्याविरुद्धं, द्वयो अपि हेतवो भवन्ति, तद्यथा 'आम्राश्च सिक्ताः पितरश्च प्रीणिता' इति, औट इत्युच्यमाने प्रथमाद्विवचनस्य न स्यात्, तस्माद्द्वयोरपि सामान्यग्रहणार्थो ङकारानुबन्धनिर्द्देशः। नन्वसतोनुवादोनुपपन्न इत्याक्षेपस्तत्र प्रयोजनाभिधानमसङ्गतं, नैष दोषः औदौटोरौङिति विधिवाक्यमस्मादेवानुवादादनुमास्यते तस्यैव प्रयोजनाभिधानं पुनश्चोदयति। 'तस्य चेति'। तस्य ङकारानुबन्धस्यासञ्जने ऽस्मिन्नेवं विज्ञायमाने ङित्कार्यं याडाप इत्येतत्ते एवं वादिनस्तव श्यां,शीशब्दे परतः, प्रसक्तं, प्रसजतु नाम तत्राह। 'स दोष इति'। दोष इत्यनेन सामानाधिकरण्यात्स इति पुल्लिङ्गनिर्द्देशः, परिहरति। 'ङित्त्वइति'। वर्णमात्रनिर्द्देशइति विवक्षितं, वृत्तभङ्गभयात्त्वस्थाने मात्रशब्दःप्रयुक्तः, याडाप इत्यत्र ङितीति यदनुवृत्तं न स बहुव्रीहिः, ङ्[1]इद्यस्येति, किं तर्हि कर्मधारयः, ङश्चासाविच्चेति, ततः किमित्यत आह। 'वर्णे यत्स्यादिति'। 'यस्मिन्विधिस्तदादावल्ग्रहणे'। अयं तावन्ङित्त्वमभ्युपेत्य परिहार उक्तः, ङित्त्वमेव तु नास्तीत्याह'। 'वर्णश्चायमिति'। चशब्दो वार्थे पठितः, वर्णो वायमित्येव वा पाठः, औङिति वर्णो वायमुपात्तो न प्रत्ययः, ङकारस्तु मुखसुखार्थो यथा चदोरबित्यत्र दकारः, अङ्गा-

१ ङइद्यस्येति नास्ति ई० पु०।

विप्तस्य प्रत्ययस्य तेन विशेषणादौकारान्तस्य प्रत्ययस्येत्यर्थः । वर्णरूपतया चौकारग्रहणे सति द्वयोरप्यौकारयोर्ग्रहणं भवति प्रत्ययविषयत्वादननुबन्धकपरिभाषायाः । 'ङित्त्वेऽप्यदोष इति' । ङित्त्वे सति यो दोषः सोऽपि न भवति, ङित्त्वस्यैवाभावादित्यर्थः, पूर्वेण वा परिहारेणास्यान्वयः, परिहारान्तरमाह । 'निर्देशोऽयमिति' । पूर्वाचार्याणां हि सूत्रे द्वयमप्येते द्विवचने चौङिति पठ्यते, तदाश्रयेणायं निर्देशः, तेन द्वयोरपि ग्रहणं भवति, न च ङित्कार्यप्रसङ्गः, नहि पूर्वाचार्यानुबन्धैरिह कार्याणि क्रियन्ते ॥

"जश्शसोः शिः" ॥ 'कुण्डमिति' । जातिशब्दोऽप्ययं यदार्थप्रकरणादिना जात्याधारभूतायामेकस्यां व्यक्तौ वर्तते, तदा वृत्तिविषयएकवचनो भवतीति संख्यैकवचनादिति जस् भवति, अर्थप्रकरणाद्यभावे तु तत्र प्रत्युदाहृतं घटंघटं ददातीति ।

"अष्टाभ्य औश्" ॥ 'कृताकारोऽष्टन्शब्दो गृह्यतइति' । कृताकारस्यानुकरणमष्टाशब्दो न तु विभक्तौ लक्षणवशादात्वं कृतमित्यर्थः । 'कृताकारस्य ग्रहणं किमिति' । आत्ववतोऽनुकरणं किमित्याश्रितमित्यर्थः, यदाऽऽत्वं भवति तदैव यथा स्यादित्युत्तरम् । 'अष्टेति' कथं पुनरात्वात्वाभावः, यावता नहि तद्विधौ विकल्पः संनिहित इत्यत आह । 'एतदेवेति' । इहाष्टन इति वक्तव्यं, यथाष्टन आ विभक्तावित्यत्र, एवं सिद्धे अष्टाभ्य इति निर्देशात्कृतात्वस्यानुकरणमिति तावन्निश्चितं, तस्य चैतत्प्रयोजनं यदात्वं भवति तदैव यथास्यादिति । यदि च नित्यमात्वं स्यात्कृतात्वस्यानुकरणमनर्थकं स्यात्, व्यावर्त्याभावादिति भावः । ननु चाष्टनो दीर्घादिति दीर्घग्रहणेनायमर्थो ज्ञापितः, तद्वा ज्ञापकमिदं वा, कोऽत्र विशेषः, इहेयत्तावद्वक्तव्यं षड्भ्यो लुगित्यस्यायमपवाद इति । षस्यैवेत्यवधारणं द्रष्टव्यम् । कारणमाह । 'नाप्राप्ते हीति' । अयं हि लुग्वाक्ये समासे च सर्वत्र प्राप्नोति । 'तस्मिन्प्राप्ते चेति' । स हि समासएव प्राप्नोति न तु वाक्ये । 'अष्टपुत्रइति' । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधतइति वचनाद्वाक्यावस्थायामेव प्राप्तोप्यौश् न क्रियते, औश एव वा स्यानिवद्भावाल्लुक् । 'तदन्तग्रहणमपेक्ष्यतइति' । षड्भ्या-

धिकारे तस्य च तदुत्तरपदस्य चेति वचनात्, यद्येवं यत्राष्टशब्दार्थे उप¹सर्जनं तत्रापि प्राप्नोत्यत आह । 'प्रियाष्टान इत्यत्रेति' । यथा पुनरत्रात्वं न भवति तथा तद्विधावेव वक्ष्यते ॥

"षड्भ्यो लुक्" ॥ 'षट्प्रधानादिति' । षट्संज्ञकानामर्थः प्रधानं यत्र तस्मादित्यर्थः । 'प्रियषषइति' । अन्यपदार्थप्रधानोयं बहुव्रीहिः, सर्वनामसंख्ययोरुपसंख्यानमिति षषः पूर्वनिपाते प्राप्ते वा प्रियस्येति प्रियशब्दस्य पूर्वनिपातः ॥

"स्वमोर्नपुंसकात्" ॥ सु इति प्रथमैकवचनस्य ग्रहणं न सप्तमीबहुवचनस्य, अमा एकवचनेन साहचर्यात्, तद्ब्राह्मणकुलमित्यत्र परत्वात्त्यदाद्यत्वे कृते लुङ् प्राप्नोति, अतोमित्यम्भावेन बाधितत्वात्, तस्मात्त्यदादिभ्यश्चेति वक्तव्यमत आह । 'तद्ब्राह्मणकुलमित्यत्रेति' । 'नित्यत्वाद्धेति' । लुका त्यदाद्यत्वं बाध्यतइत्यनुषङ्गः, कथं पुनर्लुको नित्यत्वं, यावता त्यदाद्यत्वे कृते अतोमित्यपवादविधानात्सोप्यनित्य एवात आह । 'लुको हीति' । यदि ह्यतोमित्येतच्च स्यादकारान्तमप्यङ्गं लुको निमित्तं स्यादेव, ततः किमित्यत आह । 'यस्य चेति' । त्यदाद्यत्वं तु लुकि कृते नैव प्राप्नोति, न लुमताङ्गस्येति निषेधात्, यद्येवं तदपि लक्षणान्तरेणैव बाध्यते, नानाबत्वस्य प्रतिषेधः । कस्य तर्हि प्रत्ययलक्षणस्य, प्राप्तिर्हि प्रत्ययलक्षणेन ॥

"अतोम्" ॥ अत्रामिति पदच्छेदो न तु मिति, तथाहि सति लाघवाय मत इत्येव ब्रूयात्, किमर्थं पुनरम्विधीयते न मकार एवोच्येत, द्वितीयैकवचनेप्यादेः परस्येत्यकारस्य मकारे कृते ऽन्त्यस्य मकारस्य संयोगान्तलोपेनैव सिद्धमिष्टं, दीर्घप्रसंगस्तु, सुपि चेति दीर्घः प्राप्नोति, न च दीर्घविधौ सन्निपातपरिभाषा प्रवर्त्तते, वृक्षायेत्यादावपि प्रसङ्गात्, तस्मादमेव विधेयः, अपर आह । अम्विधानसामर्थ्यादतिजरसमित्यत्र जरसादेशो भवतीति, तच्चिन्त्यं, सन्निपातपरिभाषया जरसादेशस्याप्रसङ्गात्, अम्विधानं तु दीर्घबाधनेन चरितार्थमिति ॥

१ यद्यत्रमष्टशब्दार्थो यत्रोपसर्जनमिति पुस्तकान्तरे पाठः ।

"अड्डु डतरादिभ्यः पञ्चभ्यः"॥ 'अद्डादेशो भवतीति'। विव-क्षितादेशरूपप्रति[1]पादनाय ष्टुत्वं न कृतं, कथं पुनर्ज्ञायते डिदयमादेश इति, यदि हि डित्र स्याडुतरादिभ्यः पञ्चभ्योऽदित्येव ब्रूयात्, किंपुनः कारणं सावेव दीर्घनिवृत्तिः प्रयोजनमुच्यते न स्वमीत्याह। 'इह त्विति'। 'एवं तर्हीति'। पूर्वसूत्रविहितममनुवर्त्य डतरादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्प्य त[2]स्यैवामो दकारो विधास्यत इति चोद्यार्थः। 'हेकतरदि-त्यत्र संबुद्धिलोपो माभूदिति'। अयं च दोषः पूर्वस्मिन्नपि पक्षे समानः। ननु च संबुद्धिलोपे हल्ङ्याब्भ्य इत्यतोऽपृक्तग्रहणमनुवर्त्यि-ष्यतइह चादेः परस्येत्यमोऽकारस्य दकारे कृते मकारस्य संयोगान्त-लोपः, तस्यासिद्धत्वाचायमपृक्तः, एवमद्दादेशो नापृक्तः, यद्यपृक्तग्रहणम-नुवर्त्तते हे काण्डेत्यमोपि न स्यादिति दोषः। तदिदमुक्तम्। 'अपृक्त-श्चेदमो दोष इति'। संबुद्धिलोपे अपृक्तश्चेल्लुप्यते अमो न स्यादिति दोषः, अथ निवृत्तमपृक्तग्रहणं ततो निवृत्ते डतरादिषु दोषः, हेकतरदित्यादौ लोपः स्यादिति, अतो डित्त्वाददुडादेशविधानात्तस्य च डित्वाच संबु-द्धिलोपः, नापि पूर्वसवर्णदीर्घत्वमित्यर्थः। य[3]दि पुनः पूर्वसूत्रविहितम-ममनुवर्त्य तस्यैवाद्दादेशोविधीयते शक्यं डित्त्वमकर्त्तुम्॥

"नेतराच्छन्दसि"॥ 'अतोमित्यस्यानन्तरमेवेति'। अमादेशए-वादुडादेशस्यापवादो भविष्यति, ततश्च नेति वक्तव्यं न भवतीति भावः॥

"युष्मदस्मद्भ्यां ङसोऽश्"॥ 'शित्करणं सर्वादेशार्थमिति'। अन्यथाऽऽदेः परस्येत्यादेः स्यात्। ननु चाकारस्याकारवचने प्रयोजनाभा-वादाद्यनुसंहारे बाधिते ऽलोन्त्यस्येति मकारस्याकारे सति अतो गुणइति पररूपेणैव सिद्धमत आह। 'अन्यथा हीति'। आदेशइति व्यपदेश आदेशव्यपदेशः, यस्यादेशस्य प्रयोजनं नास्तीति मन्यसे तस्यैव स्यादि-त्येवशब्दार्थः, किं पुनरादेशव्यपदेशेन प्रयोजनं यत आदेरेव स्यात्, तत्राह। 'ततश्चेति'। ह्यर्थे वः पठितः। ततो ह्यादेशव्यपदेशाद्योचीति

१ प्रदर्शनायेति २ पु॰ पा॰।  २ तस्यैवेति नास्ति इं॰ पु॰।
३ यदि पुनरित्यादिकं नास्ति इं॰ पु॰।

यत्वं न स्यात्, यत्वाभावः प्रयोजनमादेशव्यपदेशस्य स्यादित्यर्थः, योचीत्यत्र युष्मदस्मदोरनादेशइतिवर्त्तते। ननु चानादेशो या विभक्तिरित्येवं तत्र विज्ञास्यते, नहि तदादिविधिरस्ति यत अनादेशादाविति विज्ञायेत, ततश्च सत्यप्यादेशादित्वे विभक्तेरनादेशत्वात्स्यादेव यत्वमिति व्यर्थमेवाकारस्याकारविधानम्। एवं मन्यते। सर्वे सर्वपदादेशा इति न्यायेनादिविकारद्वारेण विभक्तेरेवादेशो विधीयतइति विभक्तिरेवादेश इति। सर्वे सर्वपदादेशा इत्यत्र न पदशब्देन सुप्तिङन्तमुच्यते, किं तर्हि पद्यते गम्यतेऽनेनार्थ इति पदं, ततश्च पचन्त्वित्यत्र यथा तिशब्दस्य तु शब्दो भवति तद्वदत्रापि ङसेरेव विधीयतइति भवत्येवादेशत्वं विभक्तेः॥

"ङे प्रथमयोरम्"॥ 'ङे इत्यविभक्तिकोऽयं निर्देशइति'। प्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणमिति वक्ष्यति, तदत्र समासे सति बहुवचनप्रसङ्ग इति भावः। प्राधान्यलक्षणस्य प्रथमार्थस्येहासंभवात्सन्निवेशविशेषापेक्षया प्रथमस्य ग्रहणमिति तावन्निश्चितं, तिङ्प्रथमयोस्तु युष्मदस्मद्भ्यामसंभव एव, तत्र प्रत्यययोर्ग्रहणं विभक्त्योर्वेति संशयः[1], यदि स्त्रीलिङ्गनिर्देशस्ततो विभक्त्योर्ग्रहणं पुंलिङ्गनिर्देशे तु प्रत्यययोः, तत्र निर्णयमाह। 'प्रथमयोश्च विभक्त्योरिति'। एतदेव स्पष्टयति। 'प्रथमाद्वितीययोरिति'। कथं पुनः प्रथमाशब्देन द्वितीयोच्यते[2], साहचर्यात्। ननु सकृत्प्रयुक्तः शब्दो मुख्यवृत्तिर्वा भवतु जघन्यवृत्तिर्वा न पुनरुभयवृत्तिः, सत्यम्। प्रथमाद्वितीयासमुदाये जघन्यवृत्तिरेवायमुद्भूतावयवभेदश्च समुदाय इति द्विवचनं, कथं पुनर्ज्ञायते विभक्त्योर्ग्रहणमिति, द्वितीयायां चेत्यात्वविधानात्, तद्ध्यादेशार्थमुच्यते, अनादेशे युष्मदस्मदोरनादेशइत्येव सिद्धत्वात्। यदि चात्र विभक्त्योर्ग्रहणं स्यादेवमस्यादेशार्थतोपपद्यते ननु च योचीति यत्वबाधनार्थं तत्स्यात्, यद्येतावत्प्रयोजनं स्याद्यत्वमेवायं विशिष्य ब्रूयात् योऽच्यपीति, आबितिप्रत्याहारोऽनाप्यकइतिवत्, यतस्तु द्वितीयायामात्वं शास्ति ततो ज्ञायते विभक्त्योरिह ग्रहणमिति॥

---

१ सन्देह इति पुस्तकान्तरे।
२ कथम्पुनर्द्वितीया प्रथमाशब्देनोच्यतइति पुस्तकान्तरे।

"असो न" ॥ नेत्यविभक्तिकोनिर्द्देशः, तथा च पूर्वसूत्रेण प्राप्तस्यायमम: प्रतिषेध इति भाष्ये शङ्कितं, कः पुनः, प्रतिषेधे सति दोषः, यावता ऽमि प्रतिषिद्धे योचीति यत्वे प्राप्ते द्वितीयायां चेत्यात्वे कृते प्रथमयोः पूर्वसवर्णदीर्घत्वे कृते तस्माच्छसो नः पुंसीति नत्वे च युष्मानिति सिद्ध्यत्येव। सत्यं पुंसि सिद्ध्यति, स्त्रीनपुंसकयोस्तु न सिद्ध्यति, तदिदं दर्शितं, 'युष्मान् अस्मान् ब्राह्मणीरित्यादि'। 'अलिङ्गे वा युष्मदस्मदी इति'। लिङ्गानुशासने तथापाठात्, उदाहरणे त्वादेः परस्येत्यकारस्य नकारे सकारस्य संयोगान्तलोपः॥

"भ्यसो भ्यम्" ॥ 'एत्वं प्राप्नोतीति'। सुपि चेति दीर्घस्याप्युपलक्षणमेतत्। 'अङ्गवृत्तइत्यादि'। अस्यार्थः पूर्वमेव व्याख्यातः। 'केचित्पुनरित्यादि'। येषां शेषे लोपोन्त्यस्य लोपस्तेषामतो गुणे पररूपत्वमेकादेश। स्वरश्च। 'एत्वनिवृत्त्यर्थमिति'। अत्रापि दीर्घत्वस्याप्युपलक्षणम्, एत्वनिवृत्त्याचाकारोच्चारणस्यार्थवत्वात्सवर्णदीर्घत्वं तेषां न भवति। 'येषां त्विति'। अन्त्यलोपपक्षे मतभेदो भ्यमादेशो ऽभ्यमादेश इति, टिलोपपक्षे त्ववश्यमभ्यमादेशः,अन्यथा रूपासिद्धेः। नन्वेवं स्वरे दोषः,कथम्, अनुदात्तस्य च यत्रोदात्तलोप इत्यत्र कर्षात्वतो घञोन्त उदात्त इत्यन्तोदात्तग्रहणमनुवर्त्तते,ततश्च भ्यमोन्तोदात्तत्वं प्राप्नोत्यत आह। 'उदात्तनिवृत्तिस्वरश्चेति'। न तत्रान्तग्रहणमनुवर्त्तते, उच्चारणक्रमे प्रत्यासत्त्या चादेरेवोदात्तत्वं भवतीत्यर्थः॥

"साम आकम्" ॥ 'सामिति षष्ठीबहुवचनमागतसुट्कं गृह्यत इति'। अङ्गसंज्ञानिमित्तस्यान्यस्यासंभवात्। 'अथ किमर्थमागतसुट्को गृह्यतइति'। यद्यपि षष्ठीबहुवचनम गतसुट्कं गृह्यतइति प्रकृतमिह तु प्रत्ययापेक्षया पुल्लिङ्गनिर्द्देशः, नपुंसकलिङ्गमेव वा पठितव्यं, अर्थेति न प्रयोजनप्रधान:प्रश्नः किं तर्हि युष्मदस्मद्भ्यां परस्यैवं विधस्यासंभवप्रधानः, अत एवाह। 'नह्यादेशविधानकाले सुड्भवतइति'। सुड्विधावाज्जसेरसुगित्यत आदित्यनुवर्त्तते, अकारान्तत्वं च युष्मदस्मदोः शेषे लोप इत्यन्त्यस्य लोपे भवति, कश्च शेष आदेशः। अनादेशे यत्वात्वयोर्विधानात्, आदेशत्वं चाकमादेशे सति, न च त्यदाद्यत्वेनाकारान्तत्वं, त्यदाद्यत्वं

प्रति द्विपर्यन्तास्त्यदादय इति स्मरणात्। तस्मादादेशविधानकाले सुण्न विद्यते, उत्तरत्रादौ त्वादेशविधानकाले ऽसत एव सुट उपादानम् अथापि तस्योपादाने प्रयोजनमस्तीत्याह। 'तस्यैव त्विति'। यद्यसुट्को दृश्येत ततः पूर्वोक्तेन न्यायेन पश्चाद्भवतः सुटः केन निवृत्तिः स्यात्। 'स्थानिन्यन्तर्भूतत्वादिति'। तेन सहस्थानित्वेनोपादानसामर्थ्यादिति भावः। एतच्च पाक्षिकं प्रयोजनं, कतरस्मिन्पक्षे, यदा शेषे लोपोन्त्यलोपस्तदा, यदा तु टिलोपस्तदा पश्चादपि सुटः प्रसंगाभावान्नैतत्प्रयोजनम्। 'दीर्घोच्चारणमित्यादि'। अन्यथाती गुणे पररूपत्वं स्यात्। न त्वकारोच्चारणसामर्थ्याच्च भविष्यति, अन्यथा ऽकमेव विदध्यादत आह। 'अकमि त्विति'॥

"आत औ णलः"॥ पपावित्यादौ पा अ इति स्थिते युगपत् त्रीणि कार्याणि प्राप्नुवन्ति, द्विर्वचनं सवर्णदीर्घत्वमेकादेश औत्वमिति, तत्र येन क्रमेणैतानि कर्तव्यानि तद्दर्शयति। 'अत्रेति'। लित्स्वरं तु नोपन्यस्यति, सर्वथान्तोदात्तत्वसिद्धेः, उक्तक्रमे हेतुमाह। 'एकादेशादिति'। यदि पूर्वमेकादेशः स्यात्पृथग्भावाभावादौत्वं न स्यादित्यनवकाशं तत्। 'परत्वादेकादेश इति'। अत्र वृद्धिरेकादेशस्तस्य स्थानिवद्भावाद्द्विर्वचनं, स्थानिवद्भावस्तु द्विर्वचनेचीति, तत्र ह्यचीति न स्थानिवद्भावस्य निमित्तनिर्देशः किं तर्ह्यजादेशस्य, द्विर्वचननिमित्ते ऽचि योऽजादेश इति, तेन संप्रत्ययपरत्वाभावेपि स्थानिवद्भावो भवत्येव, ओकारौकारयोर्लाघवे विशेषाभावात्प्रयोगसमवाय्यौकार एव विहितः अपर आह आङ्प्रश्लिष्टाकार ओकारस्तस्योच्चारणे प्रयत्नलाघवं भवति, विश्लिष्टाकार औकारस्तस्योच्चारणे प्रयत्नगौरवं भवति, तद्विधानं दरिद्रात्यर्थं ददरिद्रौ अत्र दरिद्रातेरार्धधातुके लोपो वक्तव्य इत्याकारलोपेप्यौकारस्य श्रवणं भवति, यद्यपि सिद्धश्च प्रत्ययविधाविति वचनाल्लिटि विवक्षितएवाकारलोपे सत्यौत्वस्याप्रसङ्गः यद्यपि च कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामि सति णल एवासंभवस्तथाप्यौत्वविधानसामर्थ्याद्द्वयमप्येतच्च भवति॥

१ प्रश्लिष्टोऽपृथग्भूतोऽकारोयस्मिन्निति प्रश्लिष्टाकारः विश्लिष्टः पृथग्भूतोऽकारोयस्मिन्निति विश्लिष्टाकारः। इति इं पु॰ टि॰।

"तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्" ॥ 'जीवतात्त्वमिति'। अत्र स्थानिवद्भावेन तातङो हियहणेन ग्रहणादतो हेरिति लुक् प्राप्नोति। नैषदोषः। हुझल्भ्यो हेर्धिरित्यनुवर्त्तमाने पुनरतो हेरिति हिग्रहणं हिरेव योहिस्तस्य यथा स्यात्स्थानिवद्भावेन यो हिस्तस्य माभूदित्येवमर्थम्। 'ङित्करणमित्यादि'। यद्यपि सर्वादेशतायाः प्राग्गुणवृद्धिप्रतिषेधार्थत्वमनिश्चितं तथापि सर्वादेशत्वेपि ङित्वस्य प्रयोजनं तातङि संभवति अनङादिषु नैव सर्वादेशत्वे प्रयोजनं संभवतीति तेष्वनन्यार्थेङित्त्वे गुङिच्चेत्येतत्सहसा प्रवर्त्तते, तातङि तु प्रयोजनान्तरसंभावनया कियानपि विलम्बो भवति, तेनास्मिन्विषये उत्सर्गापवादयोस्तुल्यकाला प्रवृत्तिरित्यपवादमपि ङिच्चेत्येतद्बाधित्वाऽनेकाल्शित्सर्वस्येत्येतदेव परत्वात्प्रवर्त्ततइति भावः। एतच्च ङिच्चेत्यत्र सम्यगुपपादितं, तत्र ब्रूतादित्यादौ गुणप्रतिषेधः मृष्टादित्यत्र वृद्धिप्रतिषेधः। 'ङित्त्वाच्चास्येति'। ननु च ङित्कार्यं भवतु स्थानिवद्भावप्राप्तपित्त्वात्पित्कार्यमपि को विरोधो ऽत आह। 'ङिच्च पिन्न भवतीति'। वचनमिदं सार्वधातुकमपिदित्यत्र योगविभागेन कल्पितम्। 'ब्रुव ईडिति'। उपलक्षणमेतत् तृणह्यद्भवान् इत्यत्र तृणहइम्न भवतीति। तातङि ङित्त्वमित्यादि श्लोकद्वयं क्वचित्पठ्यते, तातङि व्यवस्थितं ङित्त्वं संक्रमकृत्स्यात्, संक्रमो नाम गुणवृद्धिप्रतिषेधः, अर्हार्थे लिङ्, गुणवृद्धिप्रतिषेधकृद्भवितुमर्हति, अन्त्यविधिश्चेत्, अन्त्यविधिहेतुत्वादन्त्यविधिर्ङित्त्वं, करणसाधनो वा विधिशब्दः, अन्त्यस्य यथा स्यादित्येवमर्थं चेत् ङित्त्वमित्यर्थः। निराकरोति। तच्च तथा न, चशब्दोवधारणे प्रतिषेधेन संबध्यते, तत् ङित्त्वं तथा सति नैव कर्त्तव्यम्, एहरित्यस्यानन्तरं तुह्योस्तादाशिषीति वक्तव्यमेहरित्येव, एवं सिद्धे ङित्करणं गुणवृद्धिप्रतिषेधार्थमिति निश्चीयते, न च सर्वादेशतामन्तरेण तत् तत्प्रतिषेधार्थत्वं ङित्त्वस्योपपद्यतइति सर्वादेशस्तातङ् भवति। ननु चान्त्यविधिश्चास्तु, अवयवे कृतं लिङ्गमितिन्यायेन गुणवृद्धिप्रतिषेधार्थश्चास्तु ङित्करणसामर्थ्यादित्याशङ्क्य परिहारान्तरमाह। 'हेरधिकारादिति'। अतो हेरित्यत्र लोपविधौ हुझल्भ्यो हेर्धिरित्यतो

हेरित्यधिकारे सत्येव योऽयं हेरित्यधिकारस्तं ज्ञापकमाह सूत्रकारस्तस्य ह्येतत्प्रयोजनं हिरेव यो हिस्तस्य यथा स्यात्स्थानिवद्भावेन यो हिस्तस्य माभूदिति, तच्च सर्वादेशत्वे सत्युपपद्यते। ननु च हिरेव यो हिस्तस्य यथा स्याद्विकृतो यो हिस्तस्य माभूदित्यन्त्यादेशत्वेपि तातङो हेरित्यधिकार उपपद्यतइत्याशङ्क्य साक्षात्परिहारमाह। 'तातङो ङित्त्वसामर्थ्यादिति'। ङित्त्वसामर्थ्यात्किलायमन्त्यविधिः स्यात् तच्च सामर्थ्यं नास्ति, सर्वादेशत्वे ऽपि प्रयोजनसंभवात्, ततश्च पूर्वोक्तया रीत्या विप्रतिषेधात्सर्वादेश एव तातङ् भवति, अनङ् सावित्यादावनङादीनां नैवं ङित्त्वसामर्थ्याभावः, तेन तेन्त्यविकारदा जाताः॥

"विदः शतुर्वसुः"॥ 'विद ज्ञानइति'। सत्ताविचारणार्थयोरात्मनेपदित्वेन शतुरसम्भवः, लाभार्थस्य तूभयपदित्वेन शतुः सम्भवेपि तुदादित्वाद्विकरणेन व्यवधानमिति ज्ञानार्थस्यैव लुग्विकरणस्य परस्मैपदिनो ग्रहणमिति भावः। 'क्वसोरपि सामान्यग्रहणार्थमिति'। अन्यथा वसः सम्प्रसारणमित्युच्यमाने निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्। ननु च क्रियमाणेप्युकारानुबन्धे एकानुबन्धकत्वादस्यैव ग्रहणं स्यात्तत्राह। 'एकानुबन्धकग्रहणइति'॥

"समासे ऽनञ्पूर्वे क्त्वो ल्यप्"॥ पूर्वशब्दोवयववचनः, अनञ्पूर्वावयवो यत्र समासे सोनञ्पूर्वः,। 'प्रकृत्येति' समानकर्तृकयोः पूर्वकाल इति क्त्वा, कुगतिप्रादय इति समास, ल्यपि सति ह्रस्वस्य तुक्। 'पार्श्वतः कृत्येति'। आद्यादित्वात्सप्तम्यन्तात्तसिः, स्वाङ्गे तस्प्रत्यये कृभ्वोरिति क्त्वा, तृतीयाप्रभृतीन्यन्यतरस्यां, क्त्वा चेति, समासः। 'नानाकृत्य द्विधाकृत्येति'। नाधार्थप्रत्यये च्व्यर्थे इति क्त्वा, पूर्ववत्समासः। 'कृत्वा हृत्वेति' हृत्वेत्येतत्प्रत्युदाहरणम्, अत्र कृत्वाशब्दो नञ्सदृशः पूर्वोस्ति, समुदायस्तु समासो न भवति। 'परमकृत्वेति'। सन्महदित्यादिना समासः, तुमर्थाधिकाराद्भावे क्त्वा प्रत्ययः, पारम्यमपि क्रियाया एव विशेषणमिति समानाधिकरण्यं, कथं पुनरिदं प्रत्युदाहरणं यावता भवत्येवायमनञ्पूर्वः समास इत्यत आह। 'अजित्वा हीति'।

अनञ् इति पर्युदासोऽयं, तत्र नञिवयुक्तन्यायेन नञ्सदृशमव्ययं परिगृह्यते, तेन नञ् अनव्ययं च परमशब्दादिकमनञ् न भवति, अभेदादनव्ययत्वाच्च। 'ह्यस्त्वाकालक इत्यादिष्विति'। आदिशब्देन पीत्वास्थिरक इत्येवमादेर्ग्रहणं, यत्रोत्तरपदे क्रिया नोपादीयते तत्राध्याहृतक्रियापेक्षः क्त्वाप्रत्ययः, सापेक्षत्वेऽपि निपातनात्समासः। 'निपातनाल्ल्यबादेशो न भवतीति'। न प्राकरणिकः समास एव तत्र निपात्यते किं तर्हि यस्य लक्षणं नास्ति तत्सर्वमिति भावः। 'निर्धारणे सप्तमीति'। जातावेकवचनं वचनव्यत्ययो वा। 'समास एव निर्धार्यत इति'। निर्धारणस्य तुल्यजातीयापेक्षत्वात्, कथं पुनः समासः क्त्वान्तो भवति यावता प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं, न च समासात् क्त्वा विहितः। अथ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्समासस्य क्त्वान्तता[1], एवमपि प्रकृत्य पार्श्वतःकृत्येत्यादावेव स्यात् उच्चैःकृत्येत्येवमादौ तु न स्यात्, अगतित्वादकारकत्वाच्चेत्याशङ्क्याह। 'स चेति'। तत्र निर्दिश्यमानस्यादेशा भवन्तीति क्त्वामात्रस्यैव ल्यब् भवति। ननु प्रत्ययविषये पूर्वेण परिभाषाद्वयेन तदन्तविधिव्यवस्था न तु येन विधिस्तदन्तस्येत्यनेन, तत्राह। 'तथा चेति' कथं पुनरेतज्ज्ञापकमित्याह। 'गतिकारकपूर्वस्य त्विति'। कथं नास्ति प्रसङ्ग इत्याह। 'नञ्गतिरिति'। अदो जग्धिर्ल्यप्ति कितीत्यत्र यदुक्तं जग्धौ सिद्धेऽन्तरङ्गत्वादि- त्यादि तत्स्मारयति। 'प्रधाय प्रस्थाये[2]त्येवमादिष्विति'। के पुनरन्तरङ्गा विधयः, हित्वदत्वात्वेत्वदीर्घत्वशूडिटः, हित्वं दधातेर्हिः, हित्वा, प्रधाय। दत्वं, दोदद्घोः, दत्वा, प्रदाय। आत्वं जनसनखनां सञ्झलोः, खात्वा प्रखाय प्रखन्य, इत्वं द्यतिस्यतिमास्थामित्ति किति स्थित्वा प्रस्थाय, ईत्वं, घुमास्थागापाजहातिसां हलि पीत्वा प्रपाय, दीर्घत्वम्, अनुनासिकस्य क्विझलोः क्ङिति, शान्त्वा, प्रशम्य, शूठ्, च्छ्वोः शूडनुनासिके च, पृच्छ आपृच्छ्य, ऊठ्, द्यूत्वा, इट्, उदितो वा, देवित्वा, प्रदीव्य, असेटि सति न क्त्वा सेडिति कित्त्वप्रतिषेधाद्गुणः स्यात्। पूर्वग्रहणं किमर्थम्,

१ त्वान्तत्वमिति इं पु· पाठ। २ एवमिति नास्ति मुद्रितमूलपुस्तके।

अनञीत्येवोच्यमाने बहुव्रीहिः स्यात्, अविद्यमानो नञ् यस्मिन्नसावनञिति, तथा च स्त्रैणीकृत्येत्यत्रापि प्रतिषेधः स्यात्, पूर्वग्रहणे तु सति, तस्य नियतदेशावयववचनत्वान्नायं दोषः, लित्करणं प्रचिक्रीर्ष्येत्यत्र प्रत्ययात्पूर्वस्य स्वरार्थं, प्रकृत्येत्यादौ तु धातुस्वरेणै सिद्धम्, पित्करणं तुगर्थम् ॥

"क्त्वापि छन्दसि" ॥ 'अपिशब्दाल्ल्यबपीति'। स च समासेऽसमासे च भवति, अप्राप्तिविषये ल्यपः प्रापणार्थत्वादपिशब्दस्य, अन्यथा वा छन्दसीत्येव वाच्यं स्यात्, तथा च छन्दोविधानमनुविदधानः कल्पसूत्रकारा अपि प्रयुञ्जते आज्येनाञ्जत्वा आज्येत्यादि ॥

"सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" ॥ सुशब्द आदेश उच्यमाने अन्ये सुपो न प्राप्नुवन्ति, तस्मात् सुग्रहणमपनीय सुड्ग्रहणं कर्तव्यमित्याह। 'सुपां सुप इति'। 'तिङां तिङ इति'। एतच्च व्यत्ययो बहुलमिति सिद्धं, सुपां सुप इत्ययमपि तस्यैव प्रपञ्चः। तत्त्वावन्तीति प्राप्तइति तु युक्तः पाठः। 'आर्द्रे चर्मन्निति'। ननु च पूर्वसवर्णेनाप्येतत्सिद्धं, कथं चर्मन् इ इति स्थिते इकारस्य पूर्वसवर्णे नकारस्तत्र परतःस्वादिष्विति पदसंज्ञायां सत्यां पूर्वस्य नकारस्य लोपः, तत्रायमप्यर्थः, नङि संबुद्ध्योरित्यत्र ङिग्रहणं न कर्तव्यं भवति, अप्रातिपदिकत्वादेव विभक्तिनकारस्य लोपाप्रसङ्गात्, पूर्वस्य तु नकारस्येष्ट एव लोपः, नैतदस्ति। अत्र हि पूर्वसवर्णो भवन्नान्तर्यतो निरनुनासिकस्य निरनुनासिको दकार एव स्यात्, अस्तु संयोगान्तलोपो भविष्यति, नात्र संयोगान्तलोपः प्राप्नोति, स्वादिष्विति पदसंज्ञायां सत्यां पूर्वनकारस्य लोपे सति असंयोगान्तत्वात्, नलोपो हि संयोगान्तलोपे सिद्धः, एवं तर्हि न ङिसंबुद्ध्योरित्यत्र ङिग्रहणं करिष्यते, तत्र नलोपाभावे संयोगान्तलोपः,। तदेवमस्यान्यथासिद्धत्वादुदाहरणान्तरमाह। 'हविर्द्धाने[1] यत्सुन्वन्तीति'। यत् इ इति स्थिते अत्र यदि पूर्वसवर्णो दकारः स्यात्त्यदाद्यत्वे सति स्यानिवद्भावात्स्मिन् भावः प्राप्नोति तस्मादत्र लुगेव कर्तव्यः, अनेकाल्सु च भ्यामादिषु अन्त्यस्य पूर्वसवर्णे पूर्वभागस्य श्रवणप्रसङ्गः, तस्मात्तत्रापि लुगेव कर्तव्यः ॥

१ हविर्धानयोरिति इं० पु० पा०।

'धीतीत्यादि'। धीतिमतिसुष्टुतिशब्देभ्यस्तृतीयैकवचनस्य पूर्वसवर्ण इकारः, सवर्णदीर्घत्वम्। 'न ताद्ब्राह्मणादिति'। तच्छब्दाद्ब्राह्मणशब्दाच्च शस्, तस्याद्दादेशः, न विभक्तौ तुस्मा इति इत्संज्ञाप्रतिषेधः 'या देव विप्रतात्, त्वा महान्तमिति बह्वृचाः। 'यूयं वयमिति प्राप्तइति'। प्रमादपाठोयं, तथाहि। न युष्मे वाजबन्धव इत्यत्र मन्त्रे ऋताश्वमेधनाम्नो राज्ञोदानं स्तूयते, व्यत्ययेन द्वयोर्बहुवचनं, वाजमित्यन्ननाम, अन्नप्रदानेन सर्वेषां बन्धवस्तेषां संबोधनं हे बाजबन्धवः, युष्मे युष्मासु अधीत्यस्यानेन संबन्धः, स च सप्तम्यर्थानुवादी, निनित्सुश्च निन्दनशीलोपि मर्त्यो युष्मासु अवद्यं न धारयति नावधारयति. अवद्याभावादित्यर्थः,। अस्मे इन्द्राबृहस्पती इत्यत्रापि रयिं धत्तमिति क्रिया, दधातिश्च दानार्थः, तस्माद्युष्मासु अस्मभ्यमिति युक्तः पाठः, यूयादेशइत्याद्यपि न पठितव्यम्। 'अनुष्टुभेतिप्राप्तइति'। अध्रिगुप्रैषे तु ताअनुष्ठ्योच्यावयतादिति अनुपूर्वात्तिष्ठतेरातश्चोपसर्गइत्यङ्, अनुष्ठानमनुष्ठा तयाऽनुष्ठ्या। 'प्रबाहवेति'। घेर्ङितीति गुणः, ननु 'ङित्त्वे विद्यादुर्णनिर्द्देशमात्रं वर्णं यस्यातच्च विघातदाद्या'वित्युक्तं, सत्यं, ङित्करणसामर्थ्यात्तु गुणः। 'प्रबाहुनेतिप्राप्तइति'। बाहुनेति तु युक्तः पाठः, प्रशब्दस्याख्यातेन संबन्धात्, अयाचो ऽकारः सुपि चेति दीर्घनिवृत्त्यर्थः॥

"अमो मश्"॥ 'अमिति मिबादेशो गृह्यतइति'। द्वितीयैकवचनस्य ग्रहणं न भवति छन्दसि दृष्टानुविधानाद्वक्ष्यमाणेषु बाहुल्येन तिङां निर्द्देशात्,। 'वधीमिति'। हन्तेर्लुङ्, लुङि चेति वधादेशः, च्लेः सिच्, इट्, मिपोम् भावः, तस्य मश् अकार उच्चारणार्थः, अस्तिसिचोपृक्तइतीट्, इट ईटीति सिचो लोपः, सवर्णदीर्घत्वम्। 'शित्करणं सर्वादेशार्थमिति'। अन्यथा ह्यलोन्त्यस्येति मकारस्य मकारवचने प्रयोजनाभावात्सर्वादेशो भविष्यत्यत आह। 'मकारस्यापीति'। यथा मो राजि समः क्वावित्यत्रेति भावः। पञ्चमीनिर्द्देशाभावात्त्वादेः परस्येत्येतन्न भवति, अथोच्यते द्विमकारकोयं निर्द्देशः करिष्यते, तत्रैकस्य संयोगान्तलोपेपि वधीमित्यादि सिद्धमिति, एवमपि लाघवं नास्ति

विशेषः. किं च संयोगान्तलोपस्यासिद्धत्वादपृक्तलक्षण इट् एव स्यात् । एवं तर्हि यकारादिः करिष्यते, किं यकारो न श्रूयते, वलि लुप्तनिर्दिष्टो यकारः, नात्र किं चित्प्रमाणमस्ति, तस्माच्छित्करणम् ॥

"लोपस्त आत्मनेपदेषु" ॥ 'अदुहेति' । दुहेर्लङ्, आत्मनेपदेष्वनतइति झस्यादादेशः, बहुलं छन्दसीति रुट्, तकारस्य लोपे द्वयोरकारयोरतो गुणे पररूपत्वम् । 'शये इति' । शेतइत्यत्र तलोपे कृते अयादेशः । 'दुहामिति' । लोट् टेरेत्वम्, आमेतः, तलोपः । 'अपीत्यधिकारादिति' । एवं चात्मनेपदेष्विति वचनं तस्यैव प्रपञ्चः ॥

"यजध्वैनमिति च" ॥ 'वकारस्य च यकार इति' । बह्वृचास्तु वकारमेवाधीयते, तत्र मलोपमात्रं निपात्यते ॥

"तस्य तात्" ॥ 'लोण्मध्यमपुरुषबहुवचनस्येति' । प्रथमपुरुषैकवचनस्य तु ग्रहणं न भवति छन्दसि दृष्टानुविधानात् पूर्वोत्तराभ्यां बहुवचनाभ्यां वा साहचर्यात् । 'कृणुतादिति' । कृवि हिंसाकरणयोः, धिन्विकृण्व्योर चेत्युप्रत्ययः, वकारस्य चाकारः, अतो लोपः ॥

"तप्तनप्तनथनाश्च" ॥ 'शृणोतेति' । श्रुवः शृ चेति श्नुप्रत्ययः शृभावश्च, पित्त्वे सति ङित्त्वाभावाद्गुणः । 'दधातनेति' । अत्रापि पित्त्वाभावाच्छ्नाभ्यस्तयोरित्याकारलोपाभावः । 'जुजुष्टनेति' । व्यत्ययेन परस्मैपदं, तुदादित्वाच्छः, तस्य बहुलं छन्दसीति श्लुः, द्विर्वचनं, जुषेरनुदात्तेत्वाज्जुषध्वमिति प्राप्तइति तु युक्तःपाठः । 'यदिच्छतेति प्राप्तइति' । बह्वृचास्तु सोत्रस्तो मरुतो यतिष्ठनेत्यस्यामृचि यतिष्ठनेति पठन्ति, यतिस्थनेति पदकाले, तत्रास्तेरूपम् ॥

"इदंतो मसि" ॥ मसीत्यविभक्तिको निर्द्देशः, इकार उच्चारणार्थः, अन्तशब्दोवयववचनः, इत् अन्तो यस्य स इदन्तः, तपरकरणमसंदेहार्थं यन्तइत्युच्यमाने संदेहः स्यात्, किं यकारान्त ईदन्त इदन्तो वेति, तत्र यदि सकारोपमर्द्देन इकारान्तमभिप्रेतं स्यात्मस इदित्येव वाच्यं स्यात्तस्मादवस्थित एव सकार इकार उपसृज्यते, अन्तग्रहणाच्च तद्ग्रहणेन गृह्यते, ततश्च टित्वादेरागमलिङ्गस्याभावेपि अर्थादागमोयं

संपद्यते, तदिदमुक्तं, मसः सकारान्तस्येत्यादि, एवं च मस इगिति वक्तव्यं, प्रत्याहारसंदेहप्रसङ्गात्तथा नोक्तम् ॥

"क्त्वो यक्" ॥ 'दत्वायेति'। दो दद्घोः, सौभाग्यमस्मै दत्वाय, दत्वायास्मभ्यं द्रविणेह भद्रमित्यादिमन्त्रगतमुदाहरणं, दत्वाय सविता धियमिति क्वचित्पठ्यते, तत्र तैत्तिरीयकास्त्त्वायेति पठन्ति । 'क्त्वापि छन्दसीत्यादि'। एवं हि पुनः क्त्वाग्रहणं न कर्त्तव्यं भवति ॥

"आज्जसेरसुक्" ॥ जसेरिति पूर्वाचार्यानुरोधेन निर्देशः । 'ब्राह्मणास इति'। असुकि कृते जसः सकारस्य श्रवणम्, असुकः सकारस्य विसर्जनीयः 'ये पूर्वासइत्यादि'। चोद्यं। 'उपरासइति'। अपरशब्दस्यादेरकारश्छान्दसः. यदि पुनरयं पूर्वान्तः क्रियेत अस्य जस्यसुगिति नैवं शक्यम्, अतो गुणे पररूपत्वं हि स्यात्. अकारोच्चारणं तूत्तरसूत्रे दध्यस्यतीत्यादौ श्रवणार्थं स्यात्, सकृद्गतावित्यादिपरिहारः, यद्यप्येतत्सर्वनामसंज्ञायाः पूर्वादिषु जसि विकल्पनादेव सिद्धम् उभयासो जातवेदः स्यामेत्यत्र तु शीभावप्रसङ्गः, अत्र हि प्रथमचरमेति विकल्पं बाधित्वा सर्वादिषु पाठान्नित्या संज्ञा भवति सा ह्यन्तरङ्गा ॥

"अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" ॥ 'अश्वस्यतीति'। असुकोकारः पूर्वत्र ब्राह्मणास इत्यादौ चरितार्थं इत्यतो गुणइति पररूपत्वं भवति, नः क्यइति नियमादपदान्तोकारः । 'मैथुनेच्छायामिति'। अश्वविषयेच्छा यदा मैथुनार्था भवति न त्वारोहणाद्यर्था तदैवासुगभवति, मैथुनेच्छापरत्वाच्च प्रयोगस्याश्ववृषोपादानमतन्त्रमिति मनुष्यादिविषयेपि प्रयुज्यते, इति रामो वृषस्यन्तीमिति । 'तृष्णातिरेकइति'। अभ्यवजिहीर्षातिरेकः, क्षीरलवणविषय इच्छातिरेको यदाभ्यवहारार्थो न तु होमाद्यर्थस्तदेत्यर्थः । 'सर्वप्रातिपदिकेभ्य इति'। तादर्थ्ये एषा चतुर्थी सर्वप्रातिपदिकार्थं सर्वेषां प्रातिपदिकानामित्यर्थः ।

"आमि सर्वनाम्नः सुट्" ॥ इमे बहव आमः ङस्ओस्आम्, ङेराम् नद्याम्नीभ्यः, किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे, कास्प्रत्ययादाममन्त्रे लिटि, तेषु कस्येदमामो ग्रहणमित्याह । 'आमिति षष्ठीबहुवचनं गृह्यत-

इति'। 'तस्य हि परत्वादिति'। सुटो नुटश्च षष्ठीबहुवचनमव-काशः, आट्प्रभृतीनां चतुर्थ्येकवचनादि, ङेराम उभयप्रसङ्गे परत्वादाडादयो भवन्ति, तेषु कृतेषु सकृद्गतिन्यायाश्रयणात् सुट्नुटौ न भवतः। 'यश्च घादामुरिति'। किमेतिङव्ययघादाम्वित्येषः। वस्त्वर्थे, तुरेव वा पठितव्यः। 'आम् च लिटीति'। लिटि परतो य आम् कास्प्रत्ययादिति विहित इत्यर्थः। 'न तौ सर्वनाम्नः परौ स्त इति'। तेनात्र ताव-त्तयोरग्रहणं, यस्य चात्र ग्रहणं तस्यैवोत्तरत्राप्यधिकार इति बुद्धिभाव-पि तयोरग्रहणमिति भावः। आचारक्विबन्तानां सर्वादीनां सर्वार्थत्वाभा-वात्सर्वनामसंज्ञाभावात्सर्वनाम्नो लिट्यामोसंभवः, यस्तु मन्यते इह सामान्यग्रहणे सति यथासंभवं प्रकरणे कार्यप्रतिपत्तिः, ततश्च तयोरपि नुट्प्रसङ्ग इति तं प्रति परिहारान्तरमाह। 'सानुबन्धकाविति वेति', सामान्यग्रहणे तु सति पचतितरामित्यत्र यस्येति लोपं बाधित्वा परत्वा-न्नुट् स्यात्, कारयां चिकीर्षामित्यत्र तु नित्यत्वादयामन्तेत्ययादेशे ऽतो लोपे च कृते ह्रस्वाभावान्नास्ति नुटः प्रसङ्गः। 'उत्तरार्थमिति'। त्रेस्त्रय इत्यामि परतो यथा स्यात्। 'इह त्विति'। पञ्चमीनिर्देशस्त्वादित्य-नुवृत्तेन सामानाधिकरण्यादवसीयते, एवं च कृत्वा हलि सर्वेषामितिनि-र्देशोपपत्तिः॥

"त्रेस्त्रयः"॥ त्रेरिति षष्ठी, न पञ्चमी, त्रिणां त्रयाणामिति निर्देशात्॥

"ह्रस्वनद्यापो नुट्"॥ 'पञ्चमी ह्रस्वनद्याप इति'। नामीति लिङ्गेन, अन्यथाङ्गनिमित्तस्य नामो नह्यस्ति संभवः॥

"षट्चतुर्भ्यश्च"॥ 'पञ्चानामिति'। नुटि कृते नोपधाया इति दीर्घः। न लोपः प्रातिपदिकान्तस्य। 'षण्णामिति'। झलां जशोन्तइति षकारस्य डकारो यरो ऽनुनासिकइति डकारस्य णकारः, ष्टुत्वम्, अथ ष्णान्ता षडिति रेफस्य प्रक्षेपणेन रेफान्ताया अपि संख्याया षट् संज्ञा कस्मान्न विहिता, एवं ह्यत्र चतुर्ग्रहणं न कर्तव्यं भवति, तथा षट्-चिचतुर्भ्यो हलादिरित्यत्रापीत्यत आह। 'रेफान्ताया इति'। 'बहुवच-

ननिर्देशादिति'। शब्दप्राधान्ये हीतरेतरयोगे द्विवचनेन भाव्यं समाहारद्वन्द्वे त्वेकवचनेन भाव्यम्, अर्थप्राधान्ये तु षट्संज्ञका एव प्रत्येकं बह्वर्थाश्चतुःशब्दश्चेत्युपपद्यते बहुवचनम्, अत्रामः परत्वं शब्दद्वारकम्। 'परमषण्णामिति'। अत्रापि षडर्थप्राधान्यात्तत एव पर आम् भवति, बहुव्रीहौ त्वन्यपदार्थस्य प्राधान्यात्च षडर्थापेक्षं परत्वमिति न भवति। 'प्रियपञ्चामिति'। अल्लोपे कृते चुत्वं ञकारः॥

"श्रीग्रामण्योश्छन्दसि"॥ 'नित्यार्थं वचनमिति'। अन्यथा भाषायामिव विकल्पः स्यात्, छन्दसि नुडेव चेद्दृश्यते तस्य च लक्षणमस्ति, कोयं विकल्पप्रसङ्ग इति चिन्त्यमेतत्। 'सूताश्च ते ग्रामण्यश्चेति'। नेदं कर्मधारयस्य वाक्यं किं तर्हि बहुवचनान्तयोर्यदेतरेतरयोगे द्वन्द्वस्तदा नुड्विधेः प्रयोजनं, यदैकवचनान्तयोः समाहारद्वन्द्वं कृत्वा एकशेषः क्रियते तदा ह्रस्वान्तत्वादेव नुट् सिद्ध इति न प्रयोजनमिति दर्शयति। एवं च तेशब्दो न पठितव्यः। अत्रापि नुडेव चेद्दृश्यते तस्य च निर्वाहोस्ति, इतरेतरेतरयोगद्वन्द्वो न करिष्यते, तदेवमिदं सूत्रं भाष्ये प्रत्याख्यातम्॥

"गोः पादान्ते"॥ छन्दसीत्यधिकारादृक्पादस्यैव ग्रहणं न श्लोकपादस्येत्याह। 'ऋक्पादान्तइति'॥

"इदितो नुम् धातोः"॥ कुडि दाहे, हुडि संघाते।
अङ्गाधिकारान्नुमयं प्रत्यये परतो भवेत्॥
कुण्डेत्यादौ, ततश्च क्विन् स्याच्चाकारो गुरोर्हलः॥

इत्याशङ्क्याह। 'अर्थमिति'। अत्र प्रमाणमाह। 'तथाहीति'। कथं पुनरेतज्ज्ञापकं यावता इक्श्तिपौ धातुनिर्देशे वक्तव्याविति इक्प्रत्यये कृते ऽङ्गसंज्ञायां सत्यां नुमा भवितव्यमिति लक्षणवशादेव नुमनुषक्तयोर्ग्रहणं कर्तव्यम्। एवं मन्यते। नायमिका निर्देशः किं तर्ह्यागन्तुकेनेकारेण, तत्राप्राप्तो नुमिति, नात्र किंचित्प्रमाणमस्तीत्याशङ्क्याह। 'धातुग्रहणं चेति'। धातुत्वमेवापेक्षितं न त्वङ्गत्वमित्येवमर्थं धातुग्रहणं नान्यत्किंचित्प्रयोजनमस्तीति भावः। ननु च भेत्ता अभैत्सीदित्यत्राधात्वोरस्तासिसिचोरिदितोर्नुम्निवृत्त्यर्थं धातुग्रहणं स्यादत आह।

'तासिसिचोरिति' । ननु चामंस्तेत्यादौ आत्मनेपदं ङित्त्वमपेक्ष्य सिजन्तस्यानिदितामिति लोपो माभूदित्येतत्सिचीदित्कार्यं स्यादित्यत आह । 'अमंस्तेत्यादाविति' । यथा हनः सिजिति कित्त्वविधानमस्य लिङ्गं तथा तत्रैव प्रतिपादितं, तासेस्तर्हीदित्करणं मन्तेत्यादौ आत्मनेपदैकवचनस्य डादेशे कृते टिलोपे च मनत् आ इति स्थिते नकारस्योपधालोपो माभूदित्येवमर्थं स्यादत आह । 'मन्तेत्यत्रेति' । नकारलोपो न भवतीत्यनुषङ्गः, जयादित्यस्तु आभीयमसिद्धत्वमनित्यमाश्रित्य तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्यवोचत्, तन्मते धातुग्रहणं तासिनिवृत्त्यर्थं कर्त्तव्यमिति उपदेशे नुम् भवतीत्यत्र यत्नान्तरमास्थेयम् । इह भिदिर्प्रभृतिषु इकारस्योपदेशेऽनुनासिक इदितीत्सञ्ज्ञा रेफस्यापि हलन्त्यमिति, ततश्चेदित्त्वान्नुम् प्राप्नोति तत्राह । 'इरितामिति' । इरितामिर उपसङ्ख्यानमित्योपसङ्ख्यानिकी समुदायस्येत्सञ्ज्ञा न प्रत्येकं सौत्री, ततश्चानिदित्त्वान्नुम् न भवतीत्यर्थः । नन्वेवमपि स्वरितेत्त्वनिबन्धनमात्मनेपदं न प्राप्नोति भिदिर्प्रभृतिषु, तस्मात्प्रत्येकपक्षे परिहारो वाच्य इति मत्वा प्रत्येकपक्षे परिहारमाह । 'अत्रयवशोपीति' । अपर आह । इदित इति नायं बहुव्रीहिः किं तर्हि कर्मधारयः, ततश्च वर्णग्रहणमिदं भवति, तत्र तदन्तविधिनेत्सञ्ज्ञकेकारान्तस्य धातोर्नुमिति, अथेदितो धातवो नुमनुषक्ता एव कस्मान्न पठिताः, एवं हीदं न कर्त्तव्यं भवति, नुम् ग्रहणं तावदुत्तरार्थं कर्त्तव्यमिदितां च भूयस्त्वात्प्रत्येकं नकारोच्चारणादिदमेव सूत्रं लघीयः ॥

"शे मुचादीनाम्" ॥ मुचादयो मुच्लृ मोचनइत्यारभ्य तुदादिष्वागणान्ताद्वेदितव्याः । 'के पुनस्तृम्फादय इति' । व्यवस्थावाचिन्यादिशब्दे निरनुषङ्गाणामपि ग्रहणप्रसङ्गादिति प्रश्नः, प्रकारवाच्यादिशब्दः, प्रकारश्च सादृश्यं तच्च नकारानुषक्ततयेत्युत्तरं, यदि सानुषङ्गाणां पुनर्नुम् विधीयते एवं सति परस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोर्नकारमकारयोः श्रवणप्रसङ्ग इत्यत आह । 'तेषामिति' । यथास्य नुमोऽपि लोपः कस्मान्न भवति तत्राह । 'स चेति' । 'विधानसामर्थ्या-

दिति'। अयं च मुचादिष्वेव लोपाभावस्य हेतुः, तृम्फादिषु तु परन-कारलोपस्य विधौ लुङ्न्यायेनासिद्धत्वादेव पूर्वनकारस्य लोपाभावः सिद्धः, अथ मुचादिष्वेव तृम्फादयः कस्मान्न पठिता इत्यत आह। 'ये त्विति'। अयमभिप्रायः। सानुषङ्गाणां निरनुषङ्गाणां च तन्त्रेणार्थनिर्देशः, तत्र यदि सर्वे मुचादिषु पठ्येरन् निरनुषङ्गाणामपि नुम् प्रसङ्गः, सानुषङ्गाणां निष्कृष्य पाठे द्विरर्थनिर्देशेन गौरवप्रसङ्ग इति॥

"मस्जिनशोर्झलि"॥ 'मङ्क्तेति'। टुमस्जो शुद्धौ, तृच्, एकाच इतीट् प्रतिषेधः, अन्त्याज्जकारात्पूर्वो नुम्, स्कोः संयोगाद्योरन्ते चेति सलोपः, कुत्वम्, अनुस्वारपरसवर्णौ। 'नंष्टेति'। रधादिभ्यश्चेतीडभावपक्षे नुम्। 'मज्जनमिति'। जकारे परतः सकारस्य श्चुत्वे जश्त्वे च प्राप्ते जश्त्वस्यासिद्धत्वात् श्चुत्वं, शकारस्य जश्त्वं जकारः। 'मस्जेरित्यादि'। यद्यन्त्यादचः परः स्यात्तदा नस्जानां समुदायस्यैका संयोगसञ्ज्ञेति सकारस्यासंयोगादित्वाल्लोपो न स्यात्, अथापि सजयोः पृथक् संयोगसञ्ज्ञामाश्रित्य लोपः स्यादेवमपि तस्य लोपस्यासिद्धत्वाच्चकार उपधा न भवतीति तस्य लोपो न स्यात्, तस्मादन्त्याज्जकारात्पूर्वः सजयोर्मध्ये नुमेषितव्यः॥

"रधिजभोरचि"॥ रध हिंसासंराध्योः, जभ जृभी गात्रविनामे, इहास्य नुमोवकाशो रन्धनं ररन्धतुरित्यादि, अत उपधाया वृद्धेरवकाशः पाचकः पाठकः, रन्धक इत्यादावुभयप्रसङ्गे परत्वाद्वृद्धिः प्राप्नोति, तत्राह। 'परापि सतीति'। वृद्धिस्तु नुमि कृते न प्राप्नोति, अकारस्यानुपधात्वादित्यनित्या। 'रद्धेति'। रधादिभ्यश्चेति पक्षे इडभावः, झषस्तथोर्धो ध इति तकारस्य धत्वम्, इह जभेरचि, रधेर्लिटि च, नेटीति सूत्रन्यासः कर्त्तव्यः, तथा तु न कृतमित्येव॥

"नेट्यलिटि रधेः"॥ 'नुमि कृतइत्यादि'। ननु चेटि सत्यजादित्वान्नुमा भवितव्यं, प्रागेव चेटः कित्त्वं प्राप्नोति, न चालिटीत्यस्य वैयर्थ्यं, चल्यर्थकत्वात्, एवं हि धातोरित्यनुवृत्तेरुपदेश एव नुम् भवति। अचीत्येषा तु विषयसप्तमी। 'अयेति'। येषां छान्दसः कसुस्तेषामेव

विचारो नास्ति छन्दसि दृष्टानुविधानात् । 'एत्वाभ्यासलोपयोः कृत-योरिति' । वस्वेकाजाद्घसामित्यत्र कृतद्विर्वचनानामेकाचां ग्रहणादेव-मुक्तम् । 'तत्र कृते नुमागमइति' । अचीतिवचनात् । 'तस्येत्यादि' । यद्यपि ररन्धिवेत्यादिवत् क्वसावप्यातिदेशिकं कित्त्वं नास्ति तथाप्यौपदे-शिकं कित्त्वमाश्रित्य नलोपो भवतीत्यर्थः । 'अथेत्यादि' । एवं सति-नेट्यलिटीति द्वावपि प्रतिषेधौ न वक्तव्यौ भवत इति भावः । 'विपरी-तमवधारणं संभाव्येतेति' । एवकारे तु क्रियमाणे न लाघवे विशेषः ॥

"रभेरशब्लिटोः" ॥ रभ राभस्ये, अनुदात्तेत् ॥

"लभेश्च" ॥ डुलभष् प्राप्तौ, अनुदात्तेत्, । 'लम्भो वर्त्ततइति' । उपसर्गादेव खल्घञोरिति नियमस्य वक्ष्यमाणत्वादपपाठोयम् । खनो घ चेति चकाराद्भगः पदमितिवत् घप्रत्यय इत्येके । 'योगविभाग उत्त-रार्थं इति' । उत्तरो विधिर्लभेरेव यथा स्याद्रभेर्माभूत्, किं च शब्लिटोर्यथा-संख्यनिरासार्थश्च ॥

"आङो यि" ॥ अत्र धातोरित्यनुवृत्तेरुपदेशावस्थायामेव नुमा भवितव्यं, तस्माद् यीति विषयसप्तमीत्याह । 'यकारादौ प्रत्यये विषयइति' । प्रागित्यादिना विषयसप्तम्याश्रयणस्य फलं दर्शयति । 'तत्रेत्यादि' । रूपे तु नास्ति विशेषः, ण्यत्प्रत्ययेपि वृद्ध्या नैव भवि-तव्यं, नित्ये नुमि सति विहितनिमित्तत्वात्, । 'यति पुनरुत्तरपदा-द्युदात्तत्वं स्यादिति' । यतो नाव इत्युत्तरपदाद्युदात्तत्वात् । 'आलभ्य इति' । यक् । 'अनुषङ्गलोपः क्रियतइति' । एतेन यक्ल्यपौ व्याख्यातौ । तेन यीति सामान्योक्तावपि ण्यदेवोदाहृत इति भावः ॥

"उपात्प्रशंसायाम्" ॥ अत्र प्राप्तिरेव धात्वर्थः, प्रशंसा तु गम्यमानतया विशेषणमतो यस्य प्राप्तिर्यतो वा प्राप्तिः प्रशंसाहेतुर्भ-वति तत्रोदाहरणं, विपर्यये तु प्रत्युदाहरणम् ॥

"उपसर्गात् खल्घञोः" ॥ 'सिद्धे सतीति' । लभेश्चेत्यनेन । 'उप-सर्गादेवेति' । विपरीतस्तु नियमो न भवति उपसर्गात्खल्घञोरेवेति, सुधिवक्त्यः प्रलम्भनइति निर्देशात् ॥

"न सुदुर्भ्यां केवलाभ्याम्" ॥ केवलशब्दः शब्दोपात्तादन्यस्य सजातीयस्याभावमाचष्टे, यथा हि ॥

केवलाभ्यामिहैताभ्यां प्रवेष्टव्यमितीरिते ।
अन्यस्य पुरुषस्यैव प्रवेशः प्रतिषिध्यते ॥
न शुकादेस्तथेहापि परस्परयुताविमौ ।
एकाकिनौ विजातीयसहितौ वापि केवलौ ॥

सुदुर्लभं सुलभं दुर्लभम् अतिसुलभमित्युदाहरणानि । 'सुलाभो दुर्लभ इति' । भावे घञ्, कर्मणि तु खल् भवति, यद्वा सुः क्षेपे, यथा सुषिक्तं नामेति, दुर्निन्दायां यथा दुर्ब्राह्मण इति, तेन कृच्छ्राकृच्छ्रार्थस्याभावात्खलभावः । 'तृतीयां मत्वेति' । तृतीयापक्षे त्विदं प्रत्युदाहरणमित्यर्थः । अथ पञ्चमीपक्षेकस्माच प्रत्युदाहरणमित्याह । 'पञ्चम्या हीति' । न च तदापि प्रसुलम्भमिति प्रत्युदाहरणम्, उक्तं हि भाष्ये नैषोऽस्ति प्रयोग इति । 'अतिसुलभमित्यत्रेति' । उपसर्गादित्यनुवृत्तेरुपसर्गयोः सुदुरोरिह ग्रहणमितिभावः, अतिरतिक्रमणे चेत्यतः कर्मप्रवचनीयसंज्ञा, तया चोपसर्गसंज्ञा बाध्यते, एकसंज्ञाधिकारात् । 'पञ्चमीनिर्द्देशपक्षेपीति' । एवं च सर्वथा केवलग्रहणस्य कर्त्तव्यत्वात्क्रमव्यतिक्रमे कारणाभावात्पूर्वंतृतीयाश्रयणेन प्रत्युदाहरणं दर्शितम् ॥

"विभाषा चिण्णमुलोः" ॥ 'तेनानुपसृष्टस्य विकल्प इति' । तथा च वार्त्तिकं चिण्णमुलोरनुपसर्गस्येति ॥

"उगिदचां सर्वनामस्थानेऽधातोः" ॥ 'धातुवर्जितानामिति' । नेदमधातोरित्यस्यार्थप्रदर्शनं, तस्यान्यपरत्वात् । तस्मादञ्चतिग्रहणं नियमार्थमिति यदुच्यते तत्सिद्ध एवायमर्थः प्रदर्शितः[२] । अधातोरित्यस्य त्वर्थप्रदर्शनेउगितामङ्गानामञ्चतेश्चाधातोश्चोगितो नुम् भवतीति प्रदर्शनीयम् । 'अञ्चतेश्चेति' । अचितिप्रत्याहारग्रहणं तु न भवति नपुंसकस्य

१ शब्दार्थमिति इ॰ पु॰ पाठः ।
२ प्रकाशित इति पा॰ इ॰ पु॰ ।

झलच इति पुनरञ्ग्रहणात्, तत्र हि प्रत्याहारस्यैव ग्रहणं नाञ्चतेः झलन्तत्वात्। 'भवानिति'। अत्वसन्तस्य चेति दीर्घः। 'श्रेयानिति'। सान्तमहत इत्यादिना दीर्घः। अत्रावयवे कृतं लिङ्गं समुदायस्यापि विशेषकं भवतीत्यङ्गस्योगित्त्वम्। 'प्राङिति'। ऋत्विगित्यादिना क्विन्, सुः, हल्ङ्याब्भ्यो दीर्घादिति संयोगान्तलोपौ, क्विन्प्रत्ययस्य कुरिति कुत्वं नकारस्य ङकारः। 'अञ्चतिग्रहणं नियमार्थमिति'। नञ्चधातोरिति प्रतिषेधादप्राप्ते विध्यर्थमेतद्भवति, एवं ह्यधातोरिति न वक्तव्यं नियमादेव सिद्धेः। 'उखास्रदिति'। वसुस्रंस्वित्यादिना दत्वम्। 'अधातोरिति किमिति'। अञ्चतिग्रहणान्नियमादेव धातोर्न भविष्यतीति प्रश्नः। 'अधातुभूतपूर्वस्यापीति'। यस्य कदाचिदधातुत्वं दृष्टं तस्य संप्रति धातुत्वे सत्यपि यथा स्यादित्यर्थः। 'गोमत्यतेरिति'। सुप आत्मनः क्यच्, अविद्यमानः प्रत्ययो ऽप्रत्ययः, स पुनः क्विप्, अतो लोपः, क्यस्य विभाषेति यलोपः, नुम्, गोमान्, कथं पुनरत्र दीर्घत्वं, यावता ऽत्वसन्तस्य चाधातोरित्युच्यते, नैष दोषः। अधातोरिति तत्र विभज्यते, तत्सामर्थ्यादसन्तस्यैव प्रतिषेधः, नात्वन्तस्य, अत एव तत्र वृत्तौ असन्तस्यैव प्रत्युदाहरणमुपन्यस्तम्॥

"युजेरसमासे"॥ 'युङ्, युञ्जौ, युञ्ज इति'। पूर्ववत्क्विबादि। 'अश्वयुगिति'। सत्सूद्विषेत्यादिना क्विप्, एतदेवासमासवचनं ज्ञापकम् अङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणं भवतीति। 'युजेरितीकारनिर्देशादिति'। नायमिका धातुनिर्देशः, किं तर्हि धातुपाठगतस्येकारस्यानुकरणमिति भावः। 'युजमिति'। संपदादित्वाद्भावे क्विप्॥

"नपुंसकस्य झलचः"। 'त्रपूणीति'। यद्यप्यत्रेकोचि विभक्ताविव्येव नुम् सिद्धस्तथाप्यचिति प्रत्याहारग्रहणस्यानन्यार्थत्वादनेनैव नुम् भवति, कः पुनरत्र विशेषस्तेन वा नुमि सत्यनेन वा, न तु[1] कश्चिद्विशेषो न्यायस्तु प्रदर्शितः। यद्येवं माकारि प्रत्याहारग्रहणमकार एव गृह्यतां झलत इति, कः पुनरेवं लाघवे विशेषः, किं चात्र प्रत्याहारग्रहणा-

१ न खल्विति पा॰ ई पु॰।

दुगिदचामित्यत्रास्वतेर्ग्रहणं न प्रत्याहारस्येत्युक्तं तदपि विघटितं स्यात् । 'बहुपुरीति' । बहवः पुरो येषामिति बहुव्रीहावृक्पूरब्धूःपथामानक्ष इत्यकारः समासान्तः प्राप्तः समासान्तविधेरनित्यत्वाच्च भवति । विमला द्यौयेषु तानि विमलदिवि दिनानि, इह झल्लक्षणस्य नुमो ऽवकाशो यदनुगिन्नपुंसकं सर्पींषि धनूंषि, उगिल्लक्षणस्यावकाशो यदुगिदनपुंसकं गोमान् यवमान्, उगितो झलन्तस्य नपुंसकस्योभयप्रसङ्गे परत्वादनेनैव नुम् भवति, अस्तु कृते पुनः प्रसङ्गविज्ञानादुगिल्लक्षणोऽपि नुम् प्राप्नोति, कथं पुनरेकमन्त्यमचमपेत्यानेकस्य परत्वं संभवति, मा नाम संभूत्प्रयोगे, विधानकाले तु संभवति, यथा पचतीति लटः शपश्च, तत्र तुदन्ती नुदन्तीत्यत्र परस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोर्द्वयोर्नकारयोः श्रवणं प्राप्नोति, न व्यञ्जनपरस्यैकस्यानेकस्य वा तुल्यजातीयस्य व्यञ्जनस्य श्रवणं प्रति विशेषोऽस्ति, इह तर्हि कृषन्ति रुषन्तीत्यत्र परस्य नुमोनुस्वारपरसवर्णयोः कृतयोः पूर्वस्याझल्परत्वादनुस्वारपसवर्णौ न स्त इत्यट्कुप्वाङ्नुम्व्यवायेपीति णत्वं प्राप्नोति, यदा पुनरेको नुम् तदा तस्यानुस्वारश्च प्राप्नोति णत्वं च, तत्र णत्वस्यासिद्धत्वादनुस्वारे कृते परसवर्णः, तस्यासिद्धत्वाण्णत्वाभावः सिद्धः, तस्मादुगिल्लक्षणस्य प्रतिषेधो वक्तव्य इत्याशङ्कयाह । 'उगितो झलन्तस्येति' । सकृद्गतिन्यायो ऽत्राश्रीयतइत्येवकारेण दर्शयति । 'अनेनैवेति' । 'अन्त्यात्पूर्वइति' । रेफजकारयोर्मध्यइत्यर्थः ॥

"इकोऽचि विभक्तौ" ॥ 'इक इति किमिति' । पूर्वत्र यदज्ग्रहणं तदिहैव कर्त्तव्यं नपुंसकस्य झलः, अचोचीति, तेन तु हलन्तस्य न भविष्यति, संध्यक्षरान्तं तु नपुंसकं नास्त्येवेति प्रश्नः, अत एवादन्तं प्रत्युदाहरति न हलन्तम् । 'अचीति किमिति' । त्रपुभ्यामित्यादौ हलादौ सत्यपि नुमि स्वादिष्विति पदसंज्ञायां सत्यां न लोपः प्रातिपदिकान्तस्येति लोपेनैव सिद्धमिष्टमिति प्रश्नः । इतरोऽपि विदिताभिप्राय आह । 'उत्तरार्थमिति' । अस्थिदधिसक्थ्यक्ष्णामनङचि यथा स्यात् हलादावस्थिभ्यामित्यादौ माभूत्, पुनश्चोदयति । 'यद्येवमिति' ।

परिहरति । 'इह त्विति' । 'हे त्रपो इति' । अत्र प्रागेव गुणान्नुमः प्रसङ्गः, गुणे कृते ऽनिगन्तत्वादप्रसङ्गः । स्यादेतत् । अस्त्वत्र नुम् स्वमोर्नपुंसकादिति सोर्लुकि सुबन्तं पदमिति पदसंज्ञायां नलोपो भविष्यतीति, तत्राह । 'न ङिसंबुद्ध्योरिति' । 'ननु चेत्यादि' । एवकारो भिन्नक्रमः प्रतिषेधेन संबध्यमान औपचारिकमपि विभक्तेरस्तित्वं प्रतिषेधति, द्विविधं विभक्तेरस्तित्वं, मुख्यमौपचारिकं च, तत्र मुख्यं श्रूयमाणाया इतरलुप्तायाः प्रत्ययलक्षणेन, तदिह लुप्तत्वान्मुख्यं तावन्नास्ति, प्रत्ययलक्षणप्रतिषेधेनौपचारिकमपि नास्त्येव, तत्र विभक्तावित्युच्यमानो नुम् कः प्रसंगो यत्सर्वथैवासत्यां विभक्तौ स्यात्, नैव प्राप्नोति नार्थ उग्रहणेन । 'एतदेवेत्यादि' । अन्यथा उग्रहणं न कुर्यात्, कृतं तु ज्ञापयति अत्रागन्ते नपुंसके संबुद्धिविषये प्रत्ययलक्षणप्रतिषेधो न भवतीति । तथाचेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति । संबुद्धौ चेति वर्तमाने[1] ह्रस्वस्य गुण इति विहितो गुणः सम्बुद्धिगुणः । 'तौम्बुरवमिति' । विकारे ओरञ् । 'इकोचीत्यादि' । इकः अचीत्युच्यते व्यञ्जनादौ माभूत् त्रपुभ्यां त्रपुभिः, अस्तु लोपः, अस्त्वत्र नुम् न लोपःप्रातिपदिकान्तस्येति नलोपो भविष्यति, स्वरः कथं, पञ्चत्रपुभ्यां पञ्चत्रपुभिः, इगन्ते उत्तरपदे द्विगौ पूर्वपदं प्रकृत्या भवतीत्येष स्वरो न प्राप्नोति, नुमि सत्यनिगन्तत्वात्, नलोपेपि कृते स्वरविधौ तस्यासिद्धत्वादनिगन्तत्वमेव । 'स्वरो वै श्रूयमाणेपि लुप्ते किन्न भविष्यतीति' । वैशब्दः क्षमायां, श्रूयमाणेपि वै नकारे स्वरो भवति पञ्चत्रपुणो पञ्चत्रपुणः, स लुप्ते किं न भविष्यति, यत्र शास्त्रवशेन संभवो न प्रत्यक्षेण तत्र किं न भविष्यति, भविष्यत्येव, किं पुनः कारणं श्रूयमाणेपि नुमि स्वरो भवति, संघातभक्तःसो नोत्सहते तदुत्तरपदेगन्ततां विहन्तुं, यदि चान्तरङ्गः स्वरः प्रागेव विभक्त्युत्पत्तेर्भविष्यति, अत्र तर्हि अतिराभ्यामतिराभिरिति, अतिरिभ्यामिति स्थिते नुमि कृते तेन व्यवधानाद्रायो हलीत्याकारो न

१ अधिकृत्येति पा॰ ई॰ पु॰ ।

प्राप्नोति, नलोपेपि कृते सुब्विधौ तस्यासिद्धत्वाद्व्यवधानमेव, संघातभक्तो नुम् तमेव न व्यवदध्यात्, रैशब्दं तु व्यवदधात्येव, अथाप्यङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति रैशब्दान्तस्याङ्गस्यात्वविधानान्नास्ति नुमाङ्गस्य व्यवधानं, तथापि निर्दिश्यमानस्यादेशा भवन्तीति रैशब्दस्य व्यवधानमेव, अथाप्यङ्गस्यात्वमेवमपि नुम एवात्वं प्राप्नोति, तत्र पूर्वस्य यणि सति अतिर्याभ्यामिति स्यात्, तथा प्रियतिसृभ्यां ब्राह्मणकुलाभ्यामित्यत्र प्रियत्रिभ्यामिति स्थिते तिसृभावो न स्यात्, नुमा व्यवधानात् । नलोपेपि कृतइत्यादि पूर्ववत् । नैष दोषः । 'रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि' भवतः । व्यवधानादिति कर्मणि ल्यब्लोपे पञ्चमी, नुमा व्यवधानं प्राप्यापि भवत इत्यर्थः । विभक्तिविधानदशायां यदानन्तर्यं तत्तत्राश्रीयते न त्वादेशविधानदशायामिति भावः । नुमा अपीत्यत्र संहिताया अविवक्षितत्वात्सवर्णदीर्घत्वं न कृतम्, अन्ये मध्ये हि शब्दं पठन्ति, अपिशब्देनैतत्सूचयति, प्रकारान्तरेणाप्यात्वतिसृभावौ सिद्ध्यत इति, तत्कथम् अतिरिभ्यामितिस्थिते नुमात्वयोरुभयोरप्यनित्ययोः परत्वादात्वमेवं तिसृभावः, तत्र सकृद्गतिन्यायाश्रयणेन नुमभावः, सत्यपि वा नुमि न कश्चिद्दोषः, एवं तर्हि नुम्नुटोर्विप्रतिषेधार्थमजग्रहणं कृतं, ह्रस्वनद्यापो नुड् इत्यस्यावकाशः, अग्नीनां वायूनां, नुमोवकाशः त्रपुणी जतुने, त्रपूणां जतूनामित्यत्रोभयप्रसंगे पूर्वविप्रतिषेधेन नुडिष्यते । नामीति दीर्घो यथा स्याद् इति । स च विप्रतिषेधोऽजग्रहणे सत्युपपद्यते, द्वयोरप्यनित्यत्वेन तुल्यबलत्वात्, असति हि त्वज्ग्रहणे कृताकृतप्रसङ्गित्वान्नित्यत्वान्नुमेव स्यात्, एतदपि प्रयोजनं दूषयति । 'नुड्वाच्य इति' । क्रियमाणेप्यज्ग्रहणे नुट् तत्र वाच्यः, वचनेनैव साध्योऽन्यथा परत्वान्नुमेव स्यात् । ततश्चाज्ग्रहणं कर्तव्यं पूर्वविप्रतिषेधश्च वक्तव्य इति यत्नद्वयमाश्रयणीयम्, तत्राज्ग्रहणमकृत्वा एक एव नुडर्थो यत्नः कर्त्तव्य इत्यर्थः । इदं तर्हि प्रयोजनं तेनैव यत्नेन नुटि तत्रैवानजादौ नुम् माभूत्, अस्तु, लोपो भविष्यति, नलोपस्यासिद्धत्वादनजन्तत्वान्नामीति दीर्घत्वं न स्यात्, माभूदेवं, नोपधाया इत्येवं भविष्यति, इह तर्हि

शुत्रीनाम्, इन्हन्पूषार्यम्णां शौ, सौ चेति[1] नियमाद्दीर्घत्वं न स्यात्, प्रतिपदोक्तस्येनस्तत्र ग्रहणं, लाक्षणिकश्चायम्. एवं प्रत्याख्याते ऽस्यग्रहणे प्रयोजनमाह । 'उत्तरार्थं त्विति'। तुशब्दस्तदर्थं, यद्युत्तरत्रास्य प्रयोजनं तर्हि तत्रैव कर्त्तव्यमत आह । 'इह किंचिदिति'। तुशब्दस्य यण् न कृतः इकोसवर्णे शाकल्यस्येति प्रकृतिभावविधानात्, त्रपो इत्यत्र तु संबुद्धौ शाकल्यस्येतावनार्षे इति प्रगृह्यत्वादवादेशाभावः, केचिदत्र हे त्रपो हे त्रपु इति द्वैरूप्यमिच्छन्ति, प्रत्ययलक्षणप्रतिषेधस्यानित्यत्वं ज्ञाप्यते, न त्वस्मिन्विषये सर्वथैवाभाव इति वदन्ति, तथा च भाष्ये हे त्रपु हे त्रपो इति द्वयमप्युदाहृतम्, अन्ये तु हे त्रप्विति प्राप्ते हे त्रपो इति भवतीति भाष्यं व्याचक्षाणा नित्यमेव गुणमिच्छन्ति, तथा च वृत्तौ गुण एवोदाहृतः।

"तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य" ॥ नपुंसकस्येति यत्षष्ठ्यन्तं प्रकृतं तदिह भाषितपुस्कमित्यनेन संबन्धात्प्रथमान्तं संपद्यते। 'पुंवदिति'। पुंशब्देन तुल्यमित्यर्थः। केन पुनः प्रकारेण पुंशब्देन तुल्यं वर्त्ततइत्यपेक्षायामाह। 'यथेति'। नुम्ह्रस्वयोरभावः पुंशब्दे दृष्टस्तद्द्वारेण यत्सादृश्यं तदिहातिदिश्यते, अन्यस्य कस्य चित्तृतीयादिषु पुंशब्देन सादृश्यस्यासंभवात्, तेनार्थान्नुम्ह्रस्वयोः प्रतिषेधोयं संपद्यते। नन्वेवमपि प्रकृतत्वान्नुम एवाभावातिदेशो युक्तो न ह्रस्वस्य, ततश्च ह्रस्वस्यावस्थितत्वात्तदाश्रयाणां गुणनाभावनुडौत्वानां प्रतिषेधो वक्तव्यः, गुणः, घेर्ङिति, ग्रामण्ये कुलाय, नाभावः, आङो नास्त्रियां, ग्रामण्या कुलेन, नुट्, ह्रस्वनद्यापो नुट्, ग्रामण्यां कुलानाम्, औत्वम्, औत्, अच्च घेः, ग्रामण्यां ब्राह्मणकुले। नैष दोषः। अतिदेशसामर्थ्याद्ध्रस्वाभावोप्यतिदिश्यते, अन्यथा प्रतिषेधमेव गालवस्य विदध्यात्। 'ग्रामणीर्ब्राह्मण इति'। भाषितपुंस्कप्रदर्शनमेतत्। 'ग्रामणि ब्राह्मणकुलमिति'। नपुंसकह्रस्वत्वं भवति, अतस्तदभावोतिदिश्यतइत्यनेन दर्शितं, परिशिष्टमुदाहरणं शुचि-

[1] एतस्माच्चियमादिति इ॰ पु॰ पाठः।

आम्रवणकुलमिति प्रक्रमाभेदाय दर्शितं, प्रत्युदाहरणेषु यथायोगं नित्यमेव नुम्ह्रस्वौ भवतः। 'पीलु फलमिति'। विकारे ओरञः फले लुक्। समानायामाकृतावित्यस्यैव विवरणं 'तुल्येप्रवृत्तिनिमित्तइति'। यद्योगाद् द्रव्ये शब्दनिवेशस्तत्प्रवृत्तिनिमित्तं ग्रामनयनादि। अस्त्वेवं प्रकृते किमायातं तत्राह। 'इह त्विति'। पुंसि शब्दस्य या प्रवृत्तिस्तत्र वृक्षाकृतिः वृक्षावान्तर जातिर्निमितमित्यर्थः। 'फलाकृतिर्नपुंसकइति'। प्रवृत्तिनिमित्तशब्दस्येत्यनुषङ्गः, फलाकृतिः फलावान्तरजातिः, तत्र यद्यपि पीलोः फलमिति व्युत्पत्तौ वृक्षावान्तरजातिरप्यङ्गीकृता तथापि न सा फले प्रवृत्तिनिमित्तं, किं तर्हि फलावान्तरजातिरेवेति। भिद्यते निमित्तं तद्वेतद्वेवमित्यादि स्त्रियाः पुंवदित्यत्रैतद्व्याख्यातं तत एवावधार्यम्। 'कीलालपेनेति'। ह्रस्वस्य निवृत्तावातो धातोरिति लोपः स्यात्॥

"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः"॥ अनङो द्वितीयोकार उच्चारणार्थः,ङकारोन्तादेशार्थः,अस्थ्यादयो नब्विषयस्यानिसन्तस्येत्याद्युदात्ताः, शेषमनुदात्तं, तत्रान्तर्यतोनुदात्तआदेशे प्राप्ते उदात्तवचनमस्येत्यादावल्लोपोन इत्यकारलोपे अनुदात्तस्य च यत्रोदात्तलोप इति विभक्तेरुदात्तत्वार्थं, विभाषा ङिश्योरित्यल्लोपाभावपक्षे त्वकारस्य उदात्तस्य श्रवणं भवति अस्थनीति, तथा छन्दस्यपि दृश्यतइत्यत्र इन्द्रो दधीचो अस्थभिरिति। 'एतैरस्थ्यादिभिरित्यादि'। अत्राङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति तदन्तस्य तावद्ग्रहणं भवति तथा नपुंसकस्येत्यनुवृत्तं श्रुतत्वादस्थ्यादीनां विशेषणं न प्रकृतस्याङ्गस्य, तेनानपुंसकस्यापि तस्य ग्रहणं, किमर्थं पुनरस्थ्यादयो नपुंसकत्वेन विशेष्यन्ते यदृच्छाशब्दानां पुल्लिङ्गानां माभूत् दधिर्नाम कश्चित्तेन दधिनेति, नैतदस्ति प्रयोजनम्।

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु॥

एवं तर्हि नपुंसकस्येत्यनुवृत्तस्यान्वयप्रदर्शनमात्रं कृतम् एतैरस्थ्यादिभिर्नपुंसकैरिति॥

"छन्दस्यपि दृश्यते" ॥ छन्दसीत्येव सिद्धे ऽपि दृश्यतइत्येतत्सर्वोपाधिव्यभिचारार्थम्, अन्यथारम्भसामर्थ्यात्कस्य चिदेव व्यभिचारः शङ्क्येत, तदिदमुक्तम्। 'यत्र विहितस्ततोन्यत्रापि दृश्यतइति'। 'अस्थन्वन्तमिति'। अनङि कृते अतो नुडिति मतुपो नुट् अनङो नकारस्य लोपः ॥

"ई च द्विवचने" ॥ 'अक्षी इति'। अक्षि औ इति स्थिते औङः शी भावः, पूर्वस्य ईकारस्तत्र प्रथमयोः पूर्वसवर्ण इति दीर्घस्य दीर्घाज्जसि चेति नित्ये प्रतिषेधे प्राप्ते वा छन्दसीति पक्षे पूर्वसवर्णदीर्घत्वम्। अकः सवर्णे दीर्घ इति वा दीर्घत्वम्। ननु चासत्यप्यस्मिन्वचने पूर्वसवर्णदीर्घत्वेनैव सिद्धं, नात्र पूर्वसवर्णदीर्घत्वं प्राप्नोति परत्वान्नुमा बाध्यते, एवं तर्हि छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः, मधोस्तृप्ता इवासतइत्येवमाद्यर्थं, तेन पुंवद्भावेन नुमि शीभावे चासति पूर्वसवर्णदीर्घत्वेनापि सिद्धमक्षी इति, सत्यं, स्वरस्तु न सिध्यति, अक्षिशब्दस्य नब्विषयस्यानिसन्तस्ये त्याद्युदात्तत्वात्, न च पुंवद्भावेन स्वरस्याप्यभावातिदेश इष्यते, तस्मात्स्वरार्थमत्रापीकार एव विधेयः ॥

"नाभ्यस्ताच्छतुः" ॥ 'ददतीति'। श्नाभ्यस्तयोरात इत्याकारलोपः, जक्षित्यादौ जक्षित्यादयः षडित्यभ्यस्तसंज्ञा, कथं पुनश्चतुर्भिर्योगैर्व्यवहितस्य नुमः प्रतिषेधः शक्यो विज्ञातुमित्याह। 'शतुरनन्तरो न विहित इति'। अनन्तर ईकारः शत्रन्तस्य न विहितः, एवं तदनन्तरइति यावद्विहितान्वेषणे नुमि पर्यवसानम् ॥

"आच्छीनद्योर्नुम्" ॥ 'अवर्णान्तादङ्गादुत्तरस्य शतुरिति'। सूत्राक्षरैस्तावदयमेवार्थः प्रतीयत इत्येवं व्याख्यातं न पुनरयं व्यवस्थितः सूत्रार्थः, दूषणस्य वक्ष्यमाणत्वात्, तस्माचाप्रदर्शितविषयं दूषणं शक्यं वक्तुमिति विषयप्रदर्शनपरमिदं द्रष्टव्यम्। 'याती कुले इति'। नपुंसकाच्चेत्यौङः शीभावः। 'याती ब्राह्मणीति'। उगितश्चेति ङीप्। 'करिष्यतीति'। लृट्, लृटः सद्वा, स्यतासी लृलुटोः इत्यस्य इट्। 'अत्रेत्यादि'। चोद्यम्, अन्तरङ्गत्वं पुनरेकादेशस्य शतृमात्रापेक्षत्वात्, नुमस्तु बहिरङ्गत्वं शीनद्युत्पत्त्यपेक्षत्वात्। व्यपवर्गो भेदः, इदमवर्णान्तमङ्गमयं शतृप्रत्यय

इत्येवं रूपः, स एकादेशे कृते नास्ति क्षीरोदकवत्, तद्यथा क्षीरोदके संयुक्ते न ज्ञायेते इदं क्षीरमिदमुदकममुष्मिन्नवकाशे क्षीरममुष्मिन्नवकाशे उदकमिति। 'अवर्णान्तादङ्गादुत्तरस्य शतुरिति न युज्यते वक्तुमिति'। यथा पूर्वमवोचस्तथा न युज्यतइत्यर्थः। तथा हि सर्वत्रैवावर्णस्य निवृत्त्या भवितव्यं क्वचिल्लुका अदती घ्नतीति, क्वचिच्छ्लुना जुह्वतीति, तुदतीत्यादावेकादेशेन, लुनतीत्यादौ श्नाभ्यस्तयोरात इत्याकारलोपेन। स्यादेतत्। एकादेशविषयेऽन्तादिवद्भावेन व्यपवर्गो भविष्यतीति, तत्राह। 'उभयत आश्रयइति'। यत्र च पूर्वं परं चोभयं युगपदाश्रीयते न तत्रान्तादिवद्भावोऽस्तीति, यथा उपसर्गादृध्नस्व ऋच्छतेः, प्रार्च्छते, एतेर्लिङि अभीयादिति। इहाप्यवर्णान्तमङ्गं शता चेत्युभयं युगपदाश्रीयते, इति नास्त्यन्तादिवद्भावः, एतर्ह्युच्यते चेदमवर्णान्तादङ्गादुत्तरस्य शतुरिति,[1] न च सम्प्रत्येवंविधः शता क्वचित्सम्भवति तत्र भूतपूर्वगतिराश्रयिष्यते पूर्वं यः शता अवर्णान्तादङ्गादुत्तर आसीदिति तत्राह। 'भूतपूर्वगत्याश्रयणेवेति'। समाधिः, समाधानं, परिहारः। 'अवर्णान्ताच्छब्दादिति'। अङ्गादिति द्रष्टव्यम्, अन्यथा ददतीत्यादावपि प्रसङ्गात्, भवति ह्यत्रापि शत्रवयवादकारात्परस्तकारः, कथं पुनरवर्णान्तस्याङ्गत्वमेकादेशस्यान्तवद्भावात्, नहीदानीं परस्यादिवत्त्वं विवक्षितं, तकारस्य स्वयमेव शत्रवयवत्वात्, एवं तेन तकारेण पुनरङ्गस्य तदन्त विधिः, अङ्गस्येत्येतदत्रावर्त्यते। 'अपरे पुनरिति'। अत्रापि, पक्षे युगपदुभयं नाश्रीयते किं तु क्रमेणेत्यस्त्यन्तादिवद्भावः। ननु च तुदन्तीत्यादावन्तादिवद्भावादवर्णान्तमङ्गं भवतु तथापि न ततः परं शीनद्यौ, तकारेण व्यवधानादित्यत आह। 'तत्रेति'। प्रकृतो नुम् प्रतिषेधेन संबद्ध इति तदनुवृत्ता विहापि प्रतिषेध एव विकल्पेन, शीनद्योर्वा नुम् न भवति अवर्णान्तादिति, केन पुनः प्रसङ्गः, इदमेव ज्ञापकं स्यात् अस्ति शीनद्योर्नुमिति, ततश्च कुर्वतीत्यादावनवर्णान्तादित्यं नुमः प्रसङ्गः, मैवं विज्ञायीति नुम्ग्रहणम्॥

---

१ न च संप्रत्येवंविधः शता क्वचित्संभवतीति नास्ति· २ बु·।

"शप्श्यनोर्नित्यम्" ॥ 'इत्येतयोः शतुरिति'। एतयोः संबन्धी यः शता तस्येत्यर्थः, संबन्धश्च निमित्तनिमित्तिभावः, क्वचित्तु संबन्धिन इति पठ्यते। 'नित्यग्रहणमिति'। ननु चारम्भसामर्थ्यादेव नित्यं भविष्यति तत्राह। 'इहेति'॥

"सावनडुहः" ॥ इह चतुरनडुहोरामुदात्त इत्यामागमः सर्वनामस्थानमात्रे विधीयमानः सोऽन्यत्र सावकाशो निरवकाशेन नुमा बाध्येत, तथा संबुद्धेरन्यत्र सो सावकाशो नुम् संबुद्धौ विशेषविहितेनाम् संबुद्धावित्यनेन बाध्येतेत्याशङ्क्याह। 'अत्र केचिदित्यादि'। कथं पुनरादित्यस्यानुवृत्तौ सत्यामप्याममोः कृतयोर्नुम् भवति, न पुनरयं एवानडुहि नित्यः संनिहितोऽकारस्तत एव परः स्यात्। उच्यते। एवं सति मिदचोन्त्यात्पर इति परिभाषा बाध्यते, तत्राबाधेनोपपत्तौ सत्यां बाधो न न्याय्यः, तत्र यथापरिभाषा न बाध्यते आदित्यनुवृत्तिश्च सार्थिका भवति तथा वक्तव्यं, यदि चाममोः कृतयोर्नुम् स्यादेवमुभयमनुगृहीतं स्यादिति कृतयोरेव तयोर्नुम् भविष्यति। 'अमामौ च न बाध्येते इति'। न केवलममेव न बाध्यते अपि त्वाममावुभावपि न बाध्येते इत्यर्थः। अमत्र दृष्टान्तत्वेनोपात्तः, यथाम् न बाध्यते तथा आमितिभावः, न पुनरमो नुमा बाधशङ्का, अमो विशेषविहितत्वात्। 'आमम्भ्यां च नुमिति'। न बाध्यतइति वचनविपरिणामेनानुषङ्गः, अत्रापि यथा आमा न बाध्यते तथा ऽमापीत्यर्थः, न पुनरामा नुमो बाधशङ्का, तस्य सामान्यत्वात्। 'अपरे त्वित्यादि'। इच्छन्तीति वचनादिष्टिरेवेयमिति केचित्। अन्ये त्वाहुः। भवतु वा सामान्यविशेषयोः संनिधौ बाध्यबाधकभावः, इह त्वनेकेन योगेन व्यवधानम्, असति हि संभवे बाधनं भवति, इह च अस्ति संभवो यदुभयं स्यादित्याममोर्नुमश्च समावेश इति। 'यथेति'। अत्र माप्राप्ते द्विवचने दीर्घ आरभ्यते, अथ च संभवात्प्रकरणभेदाच्च समावेशः। 'बहूनङ्वांहि ब्राह्मकुलानीति'। परत्वादामि कृते पुनः प्रसङ्गविज्ञानाच्चपुंसकस्य झलच इति नुम् भवति॥

१ रक्षितेति इ पु० पाठः।

"दृक्स्ववस्स्वतवसां छन्दसि" ॥ इदृङित्यादौ त्यदादिषु दृशो-
ऽनालोचने कञ्चेति क्विनि नुमि च कृते पूर्ववत्कुत्वम् ॥

"दिव औत्" ॥ धातोः प्रतिषेधो वक्तव्यः, अक्षद्यूरिति, एकदे-
शविकृतस्यानन्यत्वादूठि कृते दिवशब्द एवायमिति प्रसङ्ग इति, अधा-
त्वधिकारात्सिद्धम्, अधातोरित्यनुवर्तते, कुतः प्रकृतम्, उगिदचां सर्वनाम-
स्थानेऽधातोरिति, यदि तदनुवर्तेत नपुंसकस्य झलच इत्यत्रापि संब-
ध्येत, ततश्च काष्ठतक्षि ब्राह्मणकुलानीत्यत्र न स्यात्, तस्मादशक्यं तद-
नुवर्तयितुं, ततश्च धातोः प्रतिषेधो वक्तव्य एवेत्याशङ्क्याह । 'दिव् इति
प्रातिपदिकमित्यादि ॥

"पथिमथ्यृभुक्षामात्" ॥ 'पन्था इति' । इतोत्सर्वनामस्थान-
इतीकारस्याकारः, सवर्णदीर्घत्वं, थोन्थः, अनुनासिकस्य नकारस्यान्तर्यतो
ऽनुनासिक आकारः कस्माच्च भवतीत्याशङ्क्याह । 'स्थानिन्यनुनासिके-
पीति' । अत्र कारणमाह । 'भाव्यमानेनेति' । के चिद्भाव्यमानोऽण्
सवर्णान्न गृह्णाति इति पठन्ति, तेषामप्यण्ग्रहणं ग्राहकोपलक्षणार्थं,
तेनाकारोऽपि भाव्यमानो ग्राहको न भवति, तपरस्तत्कालस्येत्यनेन तु
ग्रहणशङ्का, उक्तं हि तत्र, अनणि विध्यर्थमेतदिति । स्यादेतत् । माभूत्स
वर्णग्रहणम् अनुनासिकस्यैव तु सूत्रउच्चारणात्स एव स्यादित्यत
आह । 'शुद्धो ह्ययमिति' । अकारविधाने अतो गुणे पररूपं स्यात्,
अकारविधानं तु नकारनिवृत्त्यर्थं स्यात्, लोपविधौ गैरवप्रसङ्गात्तस्मा-
दाकार एव विहितः ॥

"इतोत्सर्वनामस्थाने" ॥ अद्वचनं किमर्थं ह्रस्वस्य श्रवणं यथा
स्यात् । नैतदस्ति । सो तावदकः सवर्णदीर्घत्वं भवति, अन्यत्रापि
नोपधायाः सर्वनामस्थाने इति दीर्घेण भाव्यं, तस्मात्प्रकृत आकार एव
विधेयोत आह । 'आदिति वर्तमानइति' । यत्रायं विहितोऽकारः चपूर्वो
भवति तत्रास्य प्रयोजनमित्यर्थः । तदेव दर्शयति । 'ऋभुक्षणमित्य-
त्रेति' । अकारविधौ त्वेकमेव रूपं स्याद् दीर्घविकल्पस्तु तक्षणां तक्षाणा-
मित्याद्यर्थं स्यात्, स्थानिन्यादेशे च तपरकरणं मुखसुखार्थम् ॥

"थो न्थः" ॥ 'पथिमथोरिति'। त्रयाणां प्रकृतत्वेप्येतयोरेव थकारसम्भवात्सम्बन्धः, आदेशे ऽकार उच्चारणार्थः। स्यादेतत्। थेरन्थ इति सूत्रमस्तु, अकारोपि विवक्षितोस्तु, थिशब्दस्यान्थ आदेशः, एवं च कृत्वा इतोदिति न वक्तव्यमिति, तदपि वक्तव्यम्, ऋभुक्षिन्शब्दार्थम् ॥

"भस्य टेर्लोपः" ॥ 'पथ्यादीति'। प्रत्येकमभिसंबन्धाद्भस्येत्येकवचनम्। 'विरोधादिति'। सर्वनामस्थाने भसंज्ञाया अभावो विरोधः। 'इह न संबद्ध्यतइति'। उत्तरार्थं त्वनुवर्त्ततएवेति भावः ॥

"पुंसो ऽसुङ्" ॥ असुङो ङकारो ऽन्तादेशार्थः, उकार उच्चारणार्थः। 'पुमानिति'। पुंस्शब्दस्योगित्वान्नुम्, स हि पूञो डुमसुन्निति व्युत्पाद्यते, डकारष्टिलोपार्थः, उकार उगित्कार्यार्थः, बहुपुंसीति ङीबुगिल्लक्षणो भवति। नकारः स्वरार्थः, मकारे ऽकार उच्चारणार्थः। 'इहेत्यादि'। चोद्यम्। 'प्रागेव च प्रत्य[1]योत्पत्तेरिति'। प्रत्ययः, सर्वनामस्थानम्। 'समासान्तोदात्तत्वमिति'। पुम्शब्दोकारस्य। 'अनिष्टः स्वर इति'। संसनधर्म्मिणः सकारस्य हलः स्थाने तद्धर्मा ऽनुदात्त आदेशः स्यादित्यर्थः। ननु चोकारस्य कृतमपि समासान्तोदात्तत्वमसुङि कृते ऽनन्त्यत्वान्निवर्त्स्यति, असुङश्चान्त्यत्वात्प्रवर्त्स्यति। नैतदस्ति। अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङो ऽसिद्धत्वात्प्रवृत्तस्य निवर्तनायोगाच्च। 'तदर्थमित्यादि'। परिहारः। अर्थशब्दो निवृत्तिवचनः, तस्यानिष्टस्वरस्य निवृत्त्यर्थमित्यर्थः। 'उपदेशिवद्वचनमिति'। उपदेशोस्यास्तीत्युपदेशी, सकारः, स यथोपदेशावस्थायां संनिहितस्तथा ऽसुङी त्यर्थः। सर्वनामस्थानइति विषयसप्तम्याश्रयणीयेत्युक्तं भवति, तत्र समासान्तस्वरमेव परत्वादसुङि कृते पश्चादुदात्तत्वं भवदसुङ एवाकारस्य भवतीति सिद्धमिष्टम्, यद्येवं पुमानित्यादावसमासेपि उपदेशावस्थायामसुङि कृते प्रातिपदिकस्वरो भवन्नसुङ एव स्यादित्यत आह। 'पुमानित्ययं पुनरिति'। पुम्शब्दे प्रत्ययो निर्दिष्टुक्तं, तत्सामर्थ्यादाद्युदात्तत्वम् ॥

---

१ विभक्त्युत्पत्तेरिति पाठो मुद्रितमूलपुस्तके।

"गोतो णित्" ॥ गाङ्कुटादिसूत्रे यावन्तः पक्षा इहापि तावन्त एव, तएव गुणा दोषाश्च, तद्वदेव चातिदेशपक्ष आश्रीयते, यदाह । 'णिद्वतीति'। पत्र परशब्दः प्रयुक्तोन्तरेणापि वतिं वत्यर्थं गमयति यथा सिंहो माणवक इति, णिदित्यनेन सामानाधिकरण्यात्सर्वनामस्थानइति सप्तम्यन्तं प्रथमया विपरिणम्यते, तत्र सर्वनामस्थानस्य णित्कार्यं विधेयं न संभवतीति णिति यत्कार्यं तत्सर्वनामस्थाने पूर्वस्यातिदिश्यते,तदाह । 'णित्कार्याणि तत्र भवन्तीत्यर्थं इति'। 'चित्रगुरिति'। बहुव्रीहौ गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वम्, अत्रासति तपरकरणे ऽङ्गाधिकारे तदन्तविधेरभ्युपगमात्सर्वे सर्वपदादेशा इति न्यायेन स्थानिवद्भावेन गोशब्दान्तत्वात् णिद्भावः प्राप्नोति, तपरकरणे तु तत्कालार्थे सति न भवति भिन्नकालत्वात्, तपरस्तत्कालस्येत्यत्राणित्य[1]स्य निवृत्तत्वादनणोपि तत्कालनियमो भवतीति मन्यते। 'कथमिति'। ह्रस्वस्य गुणः, जसि चेति गुणे कृते सत्यपि तकारे स्थानिवत्त्वात् तत्कालत्वाणित्त्वं प्राप्नोत्येवेति प्रश्नः। न च स्थानिवद्भावविषये लक्षणप्रतिपदोक्तपरिभाषा, तस्य वैयर्थ्यप्रसङ्गात्, अङ्गवृत्ते इत्यादिपरिहारः। 'णित्त्वं न भवतीति'। णित्कार्यं न भवतीत्यर्थः। भवतु संबुद्धाविष परिहारः, जसित्ववादेशमन्तरेणानिष्ठितत्वादङ्गस्य नायं परिहार इत्याशङ्क्याह । 'अथ वेति'। यच्चेत्यादिनार्थद्वारकं विशेषसम्बन्धमाह । आनन्तर्यलक्षणे तु संबन्धे चित्रगुशब्दादपि प्रसङ्गः, यदि तह्यर्थद्वारकसंबन्धाश्रयणादेव चित्रगुशब्दे ऽप्रसङ्गः, किमर्थं तपरकरणमित्याह । 'तपरकरणं तु निर्देशार्थमेवेति' । स्पष्टनिर्देशार्थमेवेत्यर्थः । इतरथा गोरित्युच्यमाने गुशब्दस्यापि निर्देशः संभाव्येत । 'केचिदित्यादि'। एवं पाठे प्रयोजनमाह । 'द्योशब्दादपीति'। ये तर्ह्येवं न पठन्ति तेषां कथं द्योशब्दे णिद्भाव इत्यत आह । 'गोत इत्येतदेवेति'। कथं पुनरेतदोकारान्तोपलक्षणं द्रष्टुं शक्यमित्यत आह । 'वर्णनिर्देशेषु हीति'। वृद्धिरादैच्, अतो लोप इत्यादौ वर्णनिर्देशएव तपरत्वं दृष्टं, तस्मात्तपरकरणादिह ओकारान्तोपलक्षणं विज्ञायते ॥

१ अणित्यहणस्येति पाठः ह॰ पु॰ ।

"णलुत्तमो वा" ॥ 'णित्कार्यं वा तत्र भवतीत्यर्थ इति'। एतेन पक्षे णित्कार्यस्याभावाद्वा णिद्भवतीत्युच्यते न तु पक्षे णकारस्येत्संज्ञाप्रतिषेधादिति दर्शयति। एतच्च पूर्वत्र कार्यातिदेशाल्लभ्यते। 'चकारेति'। णित्त्वपक्षे वृद्धिरन्यदा तदभावः॥

"सख्युरसंबुद्धौ" ॥ अत्रापि णिदित्यनेन सामानाधिकरण्यात्सर्वनामस्थानइति प्रथमान्तं, तत्रोत्तरार्थमसंबुद्धाविति सप्तम्यन्तस्योपात्तस्य यथेहान्वयस्तथा दर्शयति। 'असंबुद्धौ यः सखिशब्द इति'॥

"अनङ् सौ" ॥ सर्वनामस्थानप्रकरणात्संबुद्धिपर्युदासाच्च साविति प्रथमैकवचनस्य ग्रहणं न सप्तमीबहुवचनस्य, आकारविधाने सोर्हल्ङ्यादिलोपो न स्यात्, एवं तर्हि सोऽडादेशो विधीयताम्। एवं सिद्धे यदनङं शास्ति तज्ज्ञापयति अनङ एव क्वचिच्छ्रवणमस्तीति, तेन यद्वक्ष्यति संबुद्धावपि पक्षे ऽनङिष्यतइति तदुपपन्नं भवति॥

"ऋदुशनस्पुरुदंसोनेहसां च" ॥ संबुद्धावपि पक्षेनङिष्यतइति यदुक्तं तदाप्तागमेन द्रढयति। 'तथा चोक्तमिति'। संबोधने, संबुद्धौ, त्रयाणां रूपाणां समाहारस्त्रिरूपं, पात्रादिः। कानि पुनस्तानि रूपाणीत्यत आह। 'सान्तमित्यादि'। सान्तमनङोभावपक्षे, नान्तं नलोपाभावपक्षे, अदन्तं नलोपपक्षे, मध्यन्दिनस्यापत्यं माध्यन्दिनिराचार्यः, वष्टि, इच्छति, भागुरिमतमस्य साधुत्वं चिन्त्यमिति जक्षित्यादयः षडिंत्यत्रावोचाम, तथा व्याघ्रपादपत्यानां मध्ये वरिष्ठो वैयाघ्रपद्य आचार्यो, नपुंसके नपुंसकसंबन्धिनि इगन्ते,हे त्रपो इत्यादौ गुणं वष्टीति श्लोकस्यार्थः॥

"तृज्वत् क्रोष्टुः" ॥ 'क्रोष्टुशब्दस्तुन्प्रत्ययान्त इति'। क्रुश आह्वाने, सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्। 'संज्ञाशब्द इति'। तुन्प्रत्ययस्य संज्ञायां[1] विधानात्, जम्बुकस्य चेयं संज्ञा, वस्तुस्वरूपकथनमेतत्। पञ्चानन्तरं तस्येति पठितव्यम्। क्रोष्टुरिति सूत्रे षष्ठीनिर्देशात्।

1 संज्ञायामिति० इ० पु० पा०।

'तृज्वद्भवतीति'। तृच इव तृज्वत्। 'तत्र तस्येवेति षष्ठीसमर्थाद्वतिस्तदेतत्सर्वमुत्तरग्रन्थे स्पष्टीकृतम्। 'तृजन्तस्य यद्रूपं तदस्य भवतीति'। प्रत्ययग्रहणपरिभाषया तृजन्तस्येति लभ्यते। अतिदेशो ऽनेकप्रकारः, निमित्तव्यपदेशतादात्म्यशास्त्रकार्यस्वरूपविषयः, तत्रेहादितस्त्रयाणामसंभवादनतिदेशः, शास्त्रकार्यातिदेशयोश्चायं विशेषः, शास्त्रातिदेशे तेनतेन शास्त्रेण कार्याणि भवन्ति, कार्यातिदेशे त्वतिदेशवाक्येनैवेति, तत्र विप्रतिषेधे फलविशेषः, तद्यथा कर्मवत्कर्मणेत्यत्र शास्त्रातिदेशे कर्मकर्तरि भावकर्मणोरित्येतद्बाधित्वा स्वाश्रयं कर्तृत्वमाश्रित्य शेषात्कर्तरि परस्मैपदप्रसङ्गः। कार्यातिदेशे त्वात्मनेपदमेव परत्वाद्भवतीति, इह तु नैवं विशेषः संभवतीति तयोरभेदमाश्रित्य विचारः प्रवर्त्तितो महाभाष्ये किं पुनरयं शास्त्रातिदेश आहोस्विद्रूपातिदेश इति, तत्र शास्त्रस्य शास्त्रं प्रत्यासन्नमिति शास्त्रातिदेशः प्राप्नोति, प्राधान्यात्तु रूपातिदेशप्रसङ्गस्तदर्थत्वादतिदेशान्तराणां, तत्राद्ये पक्षे आहत्य तृचि यच्छास्त्रं तद्वातिदिश्यते, अनाहत्य वा, यदि तृच्छब्दवच्छास्त्रमतिदिश्यते तत आहत्येति पक्षः, अथ तृच्छब्दे चकार एव विवक्षितः, चकारः स्वरार्थः, तकारस्त्वप्रसिद्धाशङ्कानिवृत्त्यर्थः, ऋज्वदित्युच्यमाने अप्रसिद्धाश्रयोतिदेशः शङ्क्येत, ऋक्पूरित्यृक्शब्दनिबन्धनस्य वा समासान्तस्यातिदेशः शङ्क्येत, तस्मात्तृजन्ते यदृकारप्रयुक्तं शास्त्रं कार्यं वा तदतिदेशेनाहत्येति पक्षस्तत्राहत्येतिपक्षे अप्तृन्तृजिति दीर्घत्वमेकमतिदिष्टं स्यादनङ्गुणपरत्वान्यनतिदिष्टानि, अनङ्, ऋदुशनस्पुरुदंसोनेहसां च, ऋतो ङिसर्वनामस्थानयोः, उरण् रपर इति, नह्येतानि तृच्संशब्दनेन विधीयन्ते। ननु च दीर्घत्वे तिदिष्टे ऽनङादीन्यप्यतिदिष्टान्येव भवन्ति, कथं, दीर्घविधौ उपधाया इति वर्त्तते, अचश्चेति चोपतिष्ठते, ततश्च तृजन्तस्येव तुन्नन्तस्यापि दीर्घो भवतीत्युक्ते उपधाया अचो दीर्घो भवतीत्युक्तं भवति, न चाकृतेष्वनङादिषु तुन्नन्तस्योपधा दीर्घभाविनी संभवति, जसि गुणादेशयोः संभवतीति चेत् नह्येकमुदाहरणं योगारम्भं प्रयोजयति, यद्येतावत्प्रयोजनं स्यादप्तृन्तृजित्यत्रैव क्रोष्टुग्रहणं कुर्यात्। नन्वेवं स्त्रियां च, विभाषा तृती-

याविष्वचीत्येवमर्थं पुनस्तृज्वत्क्रोष्टुरिति वक्तव्यं स्यादिति गौरवं स्यात्, स्यादेतत्। ऋचि र ऋत इत्यस्यानन्तरं क्रोष्टुः स्त्रियां, विभाषा तृतीयादिष्वचीति रादेशार्थं वक्ष्याभीति[1] नास्ति गौरवमिति। एवमपि क्रोष्टुः क्रोष्टरि पञ्चक्रोष्टृभी रथैरिति न सिध्यति, नाप्युदात्तयणो हल्पूर्वादिति स्वरः, तुवन्तस्याद्युदात्तत्वात्तदेवं जसि दाघीतिदेशेपि नातिदेशाश्रयणं व्यर्थमिति न तत्सामर्थ्यादनङादीनामाक्षेपतः सिद्धिरित्याहत्यपक्षो दुष्ट एव, अथानाहत्य पक्षः, अनङादीन्यतिदिष्टानि दीर्घत्वमनतिदिष्टं, नहि तद्वत इत्येवं विधीयते, अत्र तृजितिसमुदाय एव विवक्षितः, न त्वृकारः, न चाहत्यपक्ष आश्रीयते किं तर्हि तृचि यद्दृष्टं यत्किंचननिबन्धनं तस्य सर्वस्यातिदेशः, एवमप्यङ्गप्रकरणादङ्गाधिकार एव विहितं यत् शास्त्रं कार्यं तदेवातिदिश्येत न विप्रकृष्टमनाङ्गं यथाचि रवद्भावेन वृद्ध्यादीन्येव भवन्ति, न इनि णिङादेशः, ततश्च रपरत्वमनतिदिष्टं स्यात्, रपरत्वमप्याङ्गं कार्यकालं संज्ञापरिभाषम्, ऋतो ङि सर्वनामस्थानयोर्गुणो भवति, उपस्थितमिदं भवत्युरण् रपर इति, स्त्रियां चेत्यत्र तर्हि क्रोष्ट्रीत्यत्रानाङ्गयोरीकारयणोरतिदेशो न स्यात्, वचनाद्भविष्यति, न तृजन्तस्य स्त्रियामाङ्गं किं चिदस्ति, स्त्रियामप्याङ्गं किंचिद्रस्ति, पञ्चभिः कर्तृभिः क्रीता रथः पञ्चकर्त्ता रथः, हे पञ्चकर्त्तः पञ्चकर्तरीति स्त्रीलिङ्गे कर्त्तृशब्दे ङिसंबुद्ध्योर्दृष्टस्य गुणस्यातिदेशः स्त्रियां चेत्यत्र संभवति, नहि संबुद्धौ तृज्वत्कोष्टुरित्यनेन सिद्धिः, असंबुद्धावित्यधिकारात्, ङौ विभाषा तृतीयादिष्वचीति विकल्पः स्यात्, स्यादेतत्, स्त्रियां चेत्यत्र न किंचिन्निमित्तमुपादीयते, ततश्च प्रागेव विभक्त्युत्पत्तेः स्त्रियां वर्त्तत इत्येवं तृजन्ते दृष्टस्यातिदेशः, न च तदाङ्गं संभवतीति अनाङ्गस्याप्यतिदेश इति, एवमपि पञ्चभिः क्रोष्टृभिः क्रीतैरथैः पञ्चक्रोष्टृभी रथैरित्यत्र न कथं चन तृजन्तरूपप्रादुर्भावः संभवति, तथा विभाषा तृतीयादिष्वचीत्यत्रापि क्रोष्टरीति आङ्गस्य गुणस्यातिदेशसंभवात् क्रोष्ट्रा क्रोष्टुरिति यण्शास्त्रमुत्वशास्त्रं चानाङ्गं नातिदिश्यते, नापि स्वरः, ननु तत्रापि तृतीयादिग्रहणसामर्थ्यादनाङ्ग-

[1] वक्तव्यमिति ई॰ पु॰ पा॰।

मप्यतिदिश्येत, अन्यथा विभाषा क्रोष्टुवदित्येव ब्रूयात्। नैतदस्ति। अभावातिदेशार्थं तृतीयादिग्रहणं स्यात्, वतिनिर्देशेप्यभावातिदेशस्यापि दृष्टत्वात्, यथा मरुभूमिवदस्मिन्ग्रामे जलमिति, शास्त्रेपि तृतीयादिषु भाषितपुंस्कमित्यत्र नुमूहस्वयोरभावोतिदिश्यते, यदा हि प्रत्यासत्तेराद्यमेवातिदेश्यमिति स्थितं तदा न सर्वासु तृतीयादिषु भावातिदेशः संभवतीति यस्य शास्त्रस्य भावस्तृजन्ते दृष्टः तुजन्तेपि तस्य भावोतिदिश्यते, यस्य त्वभावस्तृजन्तेपि तस्याभावोतिदेश्यः स्यात्, ततश्च क्रोष्ट्री क्रोष्ट्रा इत्यत्रापि घिसंज्ञायोर्गुणनाभावयोरभावोतिदिष्टः स्यात्, तदेवं शास्त्रातिदेशस्य बहुच्छिद्रत्वाद्रूपातिदेश एवायमाश्रयणीयः, तदाह। 'रूपातिदेशोयमिति'। यद्येवं यस्य कस्य चित्तृजन्तस्य रूपमतिदिश्येत पक्ता वक्तेति तत्राह। 'प्रत्यासत्तेरिति'। अथैतस्मिन् रूपातिदेशे प्रयोगसमवायि यद्रूपं क्रोष्टा क्रोष्टारौ पञ्चक्रोष्टृभी रथैः क्रोष्ट्रो क्रोष्ट्रा क्रोष्टुः क्रोष्टरीत्येवं, सावाकारान्तं द्विवचनादावारन्तं स्त्रियां क्वचिद्रेफान्तं क्वचिदकारान्तं, तृतीयादौ रेफान्तं ङसिङसोरुकारान्तं ङावरन्तमिति, तदतिदिश्यते, आहोस्विच्छास्त्रीयं यद्रूपं ण्वुल्तृचौ तृज्वत्क्रोष्टुरित्युपदेशवाक्ये ऽतिदेशवाक्ये च श्रुतं तदतिदिश्यते, तत्राद्ये पक्षे उदात्तयणो हल्पूर्वादिति स्वरो न सिद्ध्यति, नहि क्रोष्ट्रीत्यादावृकारावस्था कदा चिद्दृष्टा यतोयमुदात्तयणः स्यात्, तस्माद् द्वितीयः पक्ष आश्रयणीयस्तदाह। 'तच्च क्रोष्टृ इत्येतदिति'। नन्वत्रापि पक्षे उपदेशवाक्येऽतिदेशवाक्ये च तृशब्दस्योदात्तस्योच्चारणाभावादुच्चारितस्य वा गुणानामभेदकत्वेनाकिंचित्करत्वात्स्वरस्यातिदेशो न स्यात्, सत्यं, चकारग्रहणसामर्थ्यात्तस्याप्यतिदेशो भविष्यति तदाह। 'अन्तोदात्तमिति'। यद्वा माभूत्स्वरस्यातिदेशस्तृजन्तरूपेऽतिदिष्टे तृज्बुध्या यथा दीर्घादीनि स्वेनस्वेन शास्त्रेण भवन्ति स्वरोप्येवमेव भविष्यति वतिनिर्देशाच्चायमतिदेश आश्रितः, यदि वतिनिर्देशमकृत्वा स्थान्यादेशभाव एवाश्रीयेत न किंचिदनिष्टं, तथा तु न कृतमित्येव॥

"स्त्रियां च"॥ क्रोष्टुशब्दस्तृज्वद्भवतीत्येतत्त्वर्थकथनं, षष्ठ्यन्तं तु युक्तं पठितुम्, अन्ये त्वेतद्वृत्त्यपर्यालोचनया पूर्वसूत्रेपि क्रोष्टुरिति प्रथमान्तं

मन्यन्ते, अनुक्रियमाणरूपविनाशप्रसङ्गात्तु तृज्वद्भावो न कृतः, वति-रपि तृतीयासमर्थादेव, तृजन्तेन तुल्यं वर्त्ततइति तद्रूपभाक्त्वेन तुल्यत्व-मिति रूपातिदेशत्वम्, एवं च पूर्वसूत्रेष्वाद्यन्ते तस्येति न पठितव्यम् । 'तृजन्तस्य यद्रूपं तदस्य भवतीति' । एतच्चार्थकथनम्, अत्र विभक्ताविव्यनु-वर्त्तते चेत् क्रोष्ट्री भक्तिरस्येति बहुव्रीहौ भक्तिशब्दस्य प्रियादिषु पाठा-त्पुंवद्भावाभावे क्रोष्ट्रीभक्तिरिति न सिद्ध्यति, समासार्थाया विभक्तेर्लुप्तता लुप्तत्वात्, अथ वाक्यावस्थायामेव तृज्वद्भावो भविष्यति, अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते, तस्माचात्र विभक्तिर्निमित्तत्वेन शक्या आश्र-यितुम्, किं तर्हि निमित्तमित्याह । 'के चिदित्यादि' । कथं पुनर्गौरा-दिषु पाठे ङीष्प्रत्ययो निमित्तं भवति, स्त्रियामिति नैवं विज्ञायते स्त्रियामर्थेइति, कथं तर्हि स्त्रिया ई स्त्री स्त्रियामिति, स्त्रीत्वस्य द्योतको य ईकारस्तत्रेत्यर्थः, अर्थगतं च स्त्रीत्वमीकारे आरोप्य स्त्रिया-मिति नदीसंज्ञानिमित्तावामाटौ क्रियेते, एवं वदतामनिष्टमाह । 'तेषामिति' । 'पञ्चक्रोष्टृभिरिति' । तद्धितार्थे समासः, आर्हीयस्य ठ-को ऽध्यर्द्धपूर्वेति लुक्, लुक्तद्धितलुकीति स्त्रीप्रत्ययस्यापि लुक्, तत्र न लुम-ताङ्गस्येति प्रतिषेधादीकारनिमित्तस्तृज्वद्भावो न सिद्ध्यति, अन्तरङ्गाणां च विधीनां लुका बाधनात् न पूर्वमेव तृज्वद्भावो लभ्यते, तत्र सर्व-नामस्थाने पूर्वेणैव सिद्धस्तृज्वद्भाव इति तृतीयादावसिद्धिरुक्ता, सर्व-नामस्थानेपि संबुद्धौ पूर्वेणासिद्धिरेव हे पञ्चक्रोष्टरिति, तथा शसि पञ्च-क्रोष्टून्, तथा तृतीयादिष्वजादिष्वप्युत्तरसूत्रेण विकल्पः प्राप्नोति, पञ्चक्रोष्ट्रा पञ्चक्रोष्टुना, नन्वारब्धेप्यस्मिन्परत्वाद्विकल्प एव प्राप्नोति, अन्त-रङ्गत्वादयमेव नित्यो विधिर्भवति । तत्र प्रतिविधेयमिति वचन-मेवात्र शरणं, ये तर्हि गौरादिषु न पठन्ति तेषां किं निमित्तं, न किं चिदित्याह । 'ये त्वित्यादि' । 'स्त्रियां च वर्त्तमानइति' । सूत्रान्तरानु-रोधेन चशब्दः पठितः । ननु च यद्यपि न शब्देन किंचिन्निमित्तमाश्रीयते, अङ्गस्येति त्वाश्रीयते, अङ्गे चाश्रिते प्रत्ययोप्याश्रित एव, यथोक्तमङ्गस्येत्यत्र वव्रश्चेत्यस्य सिद्धये, सत्यं, कार्यकालं संज्ञापरिभाषं, तदुक्तं तत्र हि पक्षे

उरबित्यङ्गसंज्ञासूत्रमुपतिष्ठते, ततश्च प्रत्ययरत्यस्याङ्गसंज्ञायामुरवत्वं च प्रति निमित्तभावः सन्निधेरविशिष्टत्वात्, इह तु यथोद्देशपक्ष आश्रीयते, ततश्च वस्तुतोऽङ्गस्य स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य तृज्वद्भावो विधीयते न तु परनिमित्तमाश्रीयते, अङ्गसंज्ञा च प्रत्ययलक्षणेन भविष्यति, अङ्गस्येति वचनाल्लब्धाङ्गसंज्ञस्य यत्कार्यं प्रत्ययलक्षणं तदेव प्रतिषिध्यते, न चाङ्गसंज्ञाङ्गस्य कार्यम्। 'अन्तोदात्त एव क्रोष्ट्रीशब्दो भवतीति'। गौरादिषु पाठे ङीष्प्रत्ययस्वरेणान्तोदात्तः, अत्रापि पक्षे उदात्तयणो हल्पूर्वादित्यन्तोदात्त एवेति एवशब्दस्यार्थः। केचित्तु ङीषोऽप्युदात्तयणा इत्येवोदात्तत्वम्, अन्यथा[1] ङीषि परतस्तृज्वद्भावे चित्स्वरस्य सति शिष्टत्वेन ङीषोऽनुदात्तत्वप्रसंग इत्याहुः॥

"विभाषा तृतीयादिष्वचि"॥ अप्राप्तविभाषेयम्। स्त्रियामिति नानुवर्तते, पञ्चक्रोष्ट्रित्यादावन्तरङ्गत्वात्पूर्वेण नित्यस्तृज्वद्भाव इत्यवोचाम, तेनोभयत्र विभाषापि न भवति। 'पूर्वविप्रतिषेधेनेति'। तृज्वद्भावस्यात्रावकाशः क्रोष्ट्रे, पुंसे, नुम्नुटोरवकाशः त्रपुणे जतुने, अग्नीनां वायूनां, प्रियक्रोष्टुन इत्यादावुभयप्रसङ्गे पूर्वविप्रतिषेधः, अथ किमर्थं तृज्वद्भावो विधीयते, यावता क्रुशेरेव तृचि क्रोष्ट्रित्यादि सिद्ध्यति, तुन्नन्तस्यासंबुद्धौ सर्वनामस्थाने स्त्रियां च प्रयोगो माभूत् तृजन्तस्यैव यथा स्यात्, विभाषा तृतीयादिष्वचीत्येतर्त्तर्हि किमर्थं, तृजन्तस्यैव क्रोष्ट्रित्यादि सिद्धं, तुन्नन्तस्य क्रोष्टुनेत्यादि, यथैव तर्ह्यजादावुभयं भवति तथा हलादावपि स्यात्, एवं शस्यपि तुन्नन्तस्यैव च तत्र प्रयोग इष्यते, तेनैतदपि नियमार्थं तृतीयादावेवोभयं तत्राप्यजादावेवेति। यस्तु मन्यते अभिधानस्वभावादेव तुंस्तृचोर्व्यवस्थितविषयः प्रयोग इति तं प्रति सूत्रत्रयमपि शक्यमकर्तुम्॥

"चतुरनडुहोरामुदात्तः"॥ अत्र सर्वनामस्थानइति स्वर्यते, न तृतीयादिष्विति। आगमानुदात्तत्वबाधनार्थमुदात्तवचनम्। 'तदन्तविधिरत्रेष्यतइति। अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनात्। 'प्रिय-

१ इतरथेति· ई· पु· पा·।

चत्वा इति'। 'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमिति' चतुर्शब्दस्य पूर्वनिपाते प्राप्ते वा प्रियस्येति प्रियशब्दस्य पूर्वनिपातः॥

"अम् संबुद्धौ"॥ चतुःशब्दस्य केवलस्य संबुद्ध्यभावादुपसमस्तस्योदाहरणम्, अनडुहस्तु प्रक्रमाभेदाय तदन्तविधिरत्रेष्यतइति प्रदर्शनाय च तदन्तस्योदाहरणम्॥

"ऋत इद्धातोः"॥ 'किरतीति'। कॄ विक्षेपे, गॄ निगरणे तुदादी। 'आस्तीर्णं विशीर्णमिति'। स्तॄञ् आच्छादने, शॄ हिंसायां, हलि चेति दीर्घः, रदाभ्यामिति निष्ठानत्वम्। 'मातॄणामिति'। दीर्घत्वे कृतेपि लाक्षणिकत्वादेवात्र न भविष्यतीत्यत आह। 'लाक्षणिकस्यापीति'। किं प्रयोजनमित्याह। 'चिकीर्षतीत्यादि'। अतस्तदर्थं धातुग्रहणमिति भावः। कॄ चित्तु वृतावेवैतत्पठ्यते॥

"उपधायाश्च"॥ पूर्वेण ऋकारान्तस्य धातोरित्वमुक्तम्, उपधायामपि यथा स्यादित्ययमारम्भः। ननु पूर्वयोगे धातुना ऋकारं विशेषयिष्यामः, धातोर्य ऋकारो यत्र तत्र स्थित इति, इहापि तर्हि प्राप्नोति ऋकारमिच्छति ऋकारीयतीति, एवमपि कृतस्येतीयता सिद्धम्, ऋत इत्यनुवृत्तेरन्यस्य न भविष्यति, तथा तु न कृतमित्येव। 'कीर्त्तयतीति'। कॄत संशब्दने चुरादिः॥

"उदोष्ठ्यपूर्वस्य"॥ 'पूर्त्ता इति'। पॄ पालनपूरणयोः, न ध्याख्यापॄमुर्च्छिमदामिति निष्ठानत्वप्रतिषेधः। 'मुमूर्षतीति'। मृङ् प्राणत्यागे। 'सुस्मूर्षतीति'। स्मृ चिन्तायां, सुस्वूर्षतीति पाठे स्वृ शब्दोपतापयोः, सनीवन्तर्द्धेत्यादिनेडभावपक्षे रूपं, पूर्व एव तु युक्तः पाठः, पृथगुदाहरणस्य वक्ष्यमाणत्वात्। 'दन्त्योष्ठ्यपूर्वापीत्यादि'। ओष्ठ्यत्वमात्रं विवक्षितं नेतरव्यावृत्तिरिति भावः। 'ओष्ठ्योत्रेत्यादि'। यथा हल इत्यत्राङ्गेन हल् विशेष्यते तेन संप्रसारणं तेन च पुनरङ्गं तथेहाप्यङ्गस्यावयव ओष्ठ्यः पूर्वो यस्मात्तदन्तस्याङ्गस्येति। 'इत्वोत्वाभ्यामित्यादि'। इत्वोत्वयोर्दर्शितान्युदाहरणान्यवकाशः, गुणवृद्ध्योरवकाशः, चयनं चायकः, उभयप्रसङ्गे

विप्रतिषेधः। 'वास्तरवमिति'। नात्र गुणस्य नित्यत्वं लक्ष्यभेदात्। पूर्वं डीगन्तलक्षणो गुणः प्राप्नोति, हस्वोत्वयोः कृतयोर्लघूपधलक्षणः॥

"बहुलं छन्दसि"॥ ततुरिर्जगुरिति'। तॄगॄभ्यामादृगमहनेति किन् प्रत्ययः, उत्वं, तस्य द्विर्वचनेचीति स्थानिवद्भावात्तॄगॄरित्येतस्य द्विर्वचनम्, उरदत्वम्। 'पप्रितमर्ममिति'। पॄ इत्येतस्मात्पूर्ववत्किन्, हस्वोत्वयोरभावे यण्, तस्य स्थानिवद्भावाद् द्विर्वचनम्, अतिशायने तमप्॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
सप्तमस्याध्यायस्य प्रथमः पादः॥

"सिचि वृद्धिः परस्मैपदेषु"॥ अत्र सिचि परस्मैपदेष्विति द्वे अपि परसप्तम्यौ, तत्र सिचोऽङ्गापेक्षं परत्वं, परस्मैपदानां सिजपेक्षम्, इको गुणवृद्धी इति वचनादिक इत्युपतिष्ठते, तच्चेकाङ्गस्य विशेषणात्तदन्तविधिर्भवतीत्याह। 'इगन्तस्याङ्गस्येति'। उदाहरणेष्वस्तिसिचोऽपृक्तइतीट्, सेटः सिच इट इंटीति लोपः, ननु चान्तर्भूतसिज्मात्रापेक्षत्वाद्गुणोऽन्तरङ्गः, बहिर्भूतं परस्मैपदं सिचं चापेक्षतइति वृद्धिर्बहिरङ्गा, ततश्च पूर्वं गुणे कृते इगन्तस्याङ्गस्येति नोपपद्यतइत्यत आह। 'अन्तरङ्गमपीति'। यथैव तर्हि गुणं बाधते तथोवङमपि बाधेत, तत्राह। 'न्यनुवीन्यधुवीदित्यत्रेति'। णू स्तुतौ, धूञ् विधूनने कुटादि, यत्र हि वृद्धिः प्रवर्त्तते तत्रान्तरङ्गं बाधेत इह तु प्रतिषेधादप्रवृत्ता सती नोत्सहते बाधितुं, ननु च यथा गुणो बाध्यते एवं प्रतिषेधोपि न बाधनीयः, येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति, गुणे च नाप्राप्ते वृद्धिरारभ्यते प्रतिषेधे च प्राप्ते चाप्राप्ते चेति। अथैवं कस्मान्न कल्प्यते अन्तरङ्गत्वाद्गुणे कृते वचनादनिकोपि वृद्धिर्भवति, यथाचैषीदित्यादावेकारस्य, अहौषीदित्यादावोकारस्येति, तत्रायमर्थः, ह्म्यन्तक्षणेत्यत्र णिश्विग्रहणं न कर्त्तव्यं भवति, कथम्, अनयीत् अश्वयीदित्यादौ अन्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तानां ह्म्यन्तेत्येव प्रतिषेधः सिद्धः, नैवं शक्यं कल्पयितुम्, एवं हि कल्प्यमाने अभैत्सीदित्यादौ व्यञ्जनस्यापि वृद्धिप्रसङ्गः, वदव्रजहलन्तस्याच इत्येषा व्यञ्जनवृद्धिं बाधिष्यते, नाप्राप्तायां तस्यामारम्भात्, यत्र तर्हि सा

प्रतिषिध्यते अनन्दीदवेवीदित्यादौ, तत्र व्यञ्जनस्य सिचि वृद्धिः प्राप्नोति । नैष दोषः । नेटीत्यनेन हलन्तस्य या च यावती च वृद्धिः प्राप्नोति वदव्रजेति वा सिचि वृद्धिरिति वा सा सर्वा प्रतिषिध्यते, इह तर्हि अगवीदिति गोशब्दस्याचारक्विबन्तस्य सिचि वृद्धिः प्राप्नोति, अत्राप्यन्तरङ्गत्वादवादेशे कृते हलन्तलक्षणाया वृद्धेर्नेटीति प्रतिषेधः, अतो हलादेर्लघोरिति विकल्पस्तु सत्यपि सिचि वृद्धिरिग्लक्षणात्वे भवति, इह तर्हि न्यनुवीत् न्यधुवीदिति, क्ङिति चेति प्रतिषेधो न प्राप्नोति, अनिग्लक्षणत्वात्, माभूत्प्रतिषेधः, अन्तरङ्गत्वादुवङादेशो भविष्यति, इह च अकार्षीदिति, गुणे रपरत्वे च कृते हलन्तलक्षणा वृद्धिः, यत्रापि सा प्रतिषिध्यते अतारीदस्तारीदिति तत्राप्यतोल्रान्तस्येति वृद्धिः सिद्धा, इह तर्ह्यलावीदयावीदन्तरङ्गत्वाद्गुणावादेशयोः कृतयोर्हलन्तलक्षणाया नेटीति प्रतिषेधे अतो हलादेर्लघोरिति विकल्पः प्राप्नोति, अतो ल्रान्तस्येत्यत्र वकारोपि प्रश्लिष्यते, किं वकारो न श्रूयते, लुप्तनिर्दिष्टो वकारः, इहापि तर्हि प्राप्नोति माभवानवीद् अमवीदिति, णिश्विग्रहणमिह पक्षे न कर्त्तव्यमित्युक्तं, तयोः स्थाने अविमवी प्रक्षे॰प्स्यामि, यत्तर्हि लाघवमस्मिन्पक्षे प्रदर्शितं णिश्विग्रहणं न कर्त्तव्यं भवतीति तदेवं सति हीयते, किं चागवीदित्यत्राप्यतो हलादेर्लघोरिति विकल्पं बाधित्वा वकारप्रश्लेषाद्वित्या वृद्धिः प्राप्नोति, तथा चिप्रभृतिभ्यो यङ्लुगन्तेभ्यो लुङि अचेचायीदित्यादौ गुणायादेशयोः कृतयोर्यान्तानां नेति प्रतिषेधः प्राप्नोति, तथा चिरिणोति जिरिणोत्योरचिरायीदजिरायीद्, तस्मादन्तरङ्गमपि गुणमेषा वृद्धिर्वचनाद्बाधत इत्येतदेव सांप्रतं, न पुनरन्तरङ्गस्य प्रवृत्तिमभ्युपेत्य वचनादनिकोपि भवतीति, किं पुनः कारणमियमेव कल्पना भवति, णिश्विग्रहणात्, अन्यथा णिश्विग्रहणं न कर्त्तव्यं भवतीत्यनन्तरमेवोक्तम् ॥

"अतो ल्रान्तस्य" ॥ अन्तशब्दोयमस्त्यवयववचनः, वस्त्रान्तो वसनान्त इति, अस्ति समीपवचनः, उदकान्तं गत इति, तत्राद्ये पक्षे ल्रान्त-

---

१ प्रक्षेप्तव्याविति इं॰ पु॰ पा॰ ।

स्येति बहुव्रीहिः, अङ्गमन्यपदार्थः, अन्यस्यार्थस्यासम्भवात्, तत्र वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव सिद्धत्वादन्तग्रहणमतिरिच्यते, तस्मात्समीपवचनोऽन्तशब्दस्तत्रापि यदि षष्ठीसमासः स्याद्रेफलकारयोः समीपभूतस्याता वृद्धिर्भवतीति, ततो लविरधिप्रभृतिष्वेव स्यात्, यदि परसमीपवचनोऽन्तशब्दः, अथ तु समीपमात्रवचनस्तदा इष्टविषये तावत्सिध्यति, अनिष्टेपि तु विषये प्राप्नोति, तथा अखल्लीदित्यत्रापि प्रसङ्गः, तस्मात्कर्मधारयः, निपातनाच्च विशेषणस्य परनिपातः, समीपभूतौ रेफलकारौ लान्तशब्देन विवक्षितौ, कस्य समीपभूतावित्यपेक्षायामत इत्यनेन संबन्धः, एवं विशेषिताभ्यां रेफलकाराभ्यामङ्गस्य विशेषणात्तदन्तविधिः, अतः समीपभूतौ यौ रेफलकारौ तदन्तस्याङ्गस्येति, यद्येवमेकत्वादत इत्यस्य तस्य च रेफलकारयोः विशेषणे सत्र उपत्तीणत्वान्न वृद्धिभाङ् निर्दिष्टः स्यात्, विशेषणत्वेनापि तावदकारस्य श्रुतत्वात्तस्यैव वृद्धिर्भवतीत्यदोषः, तदिदमुक्तं, रेफलकारौ यावतः समीपभूतावित्यादि, वयं तु ब्रूमः । समीपभूतरेफलकारान्तस्याङ्गस्यातः स्थाने वृद्धिर्भवतीत्येवाक्षरव्यापारः, तत्र कस्य समीपभूतावित्यपेक्षायां संनिधानादतः समीपभूताविति गम्यतइति, अपर आह रश्च लश्च लम्, आगन्तुकोऽकारः, षष्ठ्या लुका निर्देशः, अत्र लेणाङ्गस्य विशेषणात्तदन्तविधौ लान्तस्याङ्गस्य योऽकारस्तत्र वृद्धिर्भवति, कीदृशस्यातः, समीपभूतस्य, संनिधानाच्च लं प्रति समीपभूतस्येति, अन्तशब्दश्च समीपमात्रवचनो न तु परसमीपवचन इति । उदाहरणेषु क्षर संचलने, त्सर छद्म गतौ, ज्वल दीप्तौ, ह्वल चलने । 'न्यखोरीत्यमीलीदिति' । खुर छेदने, मील निमेषणे । 'मा भवानित्यादि' । अट गतौ, अश भोजने, माङः प्रयोग अडागमनिवृत्त्यर्थः । 'अवधीदखल्लीदिति' । वधिर्गत्यर्थः, खल्लिराशुगमने । अथान्तग्रहणं किमर्थं, न ल इत्येवोच्येत, इहापि तर्हि प्राप्नोति अवधीदखल्लीदिति, अकारमेव सिचपरत्वेन विशेषयिष्यामः, लान्तस्याङ्गस्य योऽकारस्तस्य सिच्यनन्तरे वृद्धिर्भवतीति, न च रेफलकारान्तस्याङ्गस्य योऽकारस्तस्य सिजव्यवहितः संभवतीति सामर्थ्यात् येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमा-

अयिष्यते; अथ वा अतो हलादेर्लघोरित्यस्यानन्तरमिदं कर्त्तव्यं, तत्रायमप्यर्थः, अत इत्यपि न वक्तव्यं भवति, तत्र लघोरित्यनुवृत्तेरखल्लीदित्यादौ न भविष्यति, एवमपि चतुश्शब्दादाचारक्विपि लुङि सिचि चकारस्यापि प्राप्नोति, तत्रापि सिचा ऽऽनन्तर्यं विशेषयिष्यामः, तत्र यथा अचकासीदित्यत्रातो हलादेर्लघोरिति चकाराकारस्य वृद्धिर्न भवति तत्कस्य हेतोः, सिचा आनन्तर्यं विशेष्यतइति, एवं चतुश्शब्देपि न भविष्यति, एवं च कृत्वा लघोरित्यपि न वक्तव्यं भवति, तथा तु न कृतमित्येव ॥

"वदव्रजहलन्तस्याचः" ॥ 'विकल्पबाधनार्थमिति' । अतो हलादेर्लघोरिति विकल्पो वक्ष्यते, नेटीति प्रतिषेधे प्राप्तइति तु नोक्तं, विकल्पस्यैव वस्तुतः प्राप्तत्वात् । 'अत्रेत्यादि' । वदव्रज्योरित्येको योगः, अच इति द्वितीयः, तत्राङ्गेनाज्विशेष्यतइति, अङ्गस्य योच् यत्र तत्र सिचस्तस्येति, तेन हलन्तस्य सिद्धा वृद्धिरिति भावः । किं पुनः कारणमङ्गेनाज्विशेष्यते न पुनरचा ऽङ्गमजन्तस्याङ्गस्येति, असंभवात्, अचिकीर्षीदित्यादौ अदन्तस्य तावन्नेटीति प्रतिषेधः, आकारान्तं तु सिचि न संभवति यमरमनमातां सक्चेति सन्निधानात्, संभवे वा नास्ति विशेषः सत्यां वा वृद्धावसत्यां वा, इगन्तस्य तु सिचि वृद्धिरित्येव सिद्धा वृद्धिः, एजन्तमप्यात्वविधानान्नैव संभवति, [1]अगवीदित्यत्र तु नेटीति प्रतिषेधः, तदेवमङ्गेनाज्विशेष्यतइति सहृदयमभिधानम्, एवं प्रत्याख्याते हल्ग्रहणे प्रयोजनमाह । 'तदेतदिति' । किं पुनः कारणमन्तरेण हल्ग्रहणं हल्समुदायस्य परिग्रहो न सिद्ध्यत्यत आह । 'अन्यथा हीति' । एतच्च यदा वृद्धिभागजेव हिच्चरत्वेन विशेष्यते तदा वेदितव्यम्, अङ्गे तु विशेष्यमाणे सर्वत्र सिध्यति, न चैवमचकासीदित्यादिष्वनेकाचु पूर्वस्याप्यचो वृद्धिप्रसङ्गः, नेटीति प्रतिषेधात्, न चानेकाजनिडस्ति, न चापावीदित्यादावडः प्रसङ्गः, किं कारणं, लुङि यदङ्गं सिजन्तं तद्भक्तोडागमस्तद्ग्रहणेनैव गृह्यते न तु सिचि यदङ्गं तद्ग्रहणेन, यत्रापि सिचो लुक् क्रियते, अदात् अधात् इति, तत्र सिच्परत्वाभावाद्वृद्धेरप्रसङ्गः । 'उदवोढामिति' । वहेर्लुङ् तस·

१ अगवीदित्यादि ई· पु· नास्ति ।

स्ताम्, सिच् वह् स्तामिति स्थिते वृद्धिश्च प्राप्नोति ढत्वादीनि च,¹आदिपदेन झलो झलीति सिचो लोपः, झषस्तथोर्धो ध इति धत्वं ष्टुत्वं ढलोप इत्येतेषां ग्रहणं, तत्र ढत्वादीनामसिद्धत्वात्पूर्वं वृद्धिः क्रियते पश्चात् ढलोपनिमित्तमोत्वम्, अथ तस्य पुनर्वृद्धिः कस्माच्च भवति तत्राह । 'तत्र कृतइति' । 'कृतत्वादिति' । यद्यप्योकारस्य न कृता वृद्धिस्तथापि प्रयोगेऽस्मिन् कृतेति भावः । 'यत्र त्विति' । नह्योकारत्वनिबन्धनो वृद्ध्यभावः किं तु कृतत्वनिबन्धन इति भावः । सोढा अभिभूता अमित्रा येन स सोढामित्रः ॥

"नेटि" ॥ उदाहरणेषु दिवु क्रीडादौ, सिवु तन्तुसन्ताने, कुष निष्कर्षे, मुष स्तेयइति धातवः । ननु चेत्यादि चोद्यं, नैतदेवमित्यादि परिहारः, उभयमप्येतत्सिचिवृद्धिसूत्रे व्याख्यातम् ॥

"ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्" ॥ उदाहरणेषु ग्रह उपादाने, स्यमु स्वन ध्वन शब्दे, टुवम् उद्गिरणे, व्यय वित्तसमुत्सर्गे, क्षणु हिंसायां, श्वस प्राणने, जागृ निद्राक्षये, ऊन परिहाणे ईल प्रेरणे चुरादौ, टुओश्वि गतिवृद्ध्योः, रगे लगे सगे संवरणे, कखे खगे कगे हसनइति धातवः, ऊनयत्यैलयत्योर्नानयतिध्वनयतीति चङः प्रतिषेधः । 'यदि च पूर्वं गुणः स्यादित्यादि' । एतदपि सिचि वृद्धिसूत्रएव व्याख्यातम् । अथ जागृग्रहणं किमर्थमिति येन पृष्टं स एव यथैतच्च कर्त्तव्यं तथा दर्शयति । 'जागोविचिण्णल्ङित्स्विति' । 'कृते गुणे इत्यादि' । अङ्गवृत्ते पुनर्वृत्तावविधिरित्येतत् नाश्रितं निष्ठितत्वस्य दुर्ज्ञानत्वात् । 'अथ त्विति' । अन्यथा वृद्धिविषये गुणविधानमनर्थकं स्यादिति भावः । 'तथा चेति' । चिण्णलोः प्रतिषेधेन उत्तरकालभाविवृद्धिमात्रं न भवतीति सामान्येन ज्ञाप्यते न तूपधालक्षणवृद्धिर्न भवतीत्येवं विशेषेणेति भावः । जागृग्रहणे सति अयं सूत्राणां प्राप्तिक्रमः, जागृस्ईत् इति स्थिते पूर्वं यण् प्राप्तः, तमपवादत्वात्सार्वधातुकार्धधातुकयोरिति गुणो बाधते, तमपि सिचि वृद्धिः, तामपि जागर्तिगुणः, तत्र कृते हलन्तलक्षणा वृद्धिः, तस्या

१ मूलकारोक्तां प्रवृत्तोति इं· पु· पा· ।

नेटीति प्रतिषेधः, ततो ऽतो हलादेर्लघोरिति विकल्पः, ततो ऽतो- ऽऽन्तस्येतिनित्या वृद्धिः, ततोयं प्रतिषेध इति, आह च ।

गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधो ऽतो यण्पूर्वाः प्राप्तयो नव ॥

"अतो हलादेर्लघोः" ॥ 'न्यकुटीत् न्यपुठीदिति'। कुट कौटिल्ये, पुट संश्लेषणे, नन्वत्र कुटादित्वान्ङित्त्वे सति क्ङिति चेति प्रतिषेधादेव वृद्धिर्न भविष्यति किमत्रात इत्यनेन तत्राह। 'अत इत्येतस्मिन्नसतीति'। 'अतक्षीदरक्षीदिति' तक्षू त्वक्षू तनूकरणे, रक्ष पालने, सिच्परत्वेनाङ्गस्य विशेषणादत्र प्रसङ्गः। 'अथेह कस्मान्न भवतीति'। यदि सिच्परत्वेनाङ्गं विशेष्यते ततोत्रापि प्रसङ्ग इति प्रश्नः, सिच्परत्वेनाकारो विशेष्यतइ- त्याश्रित्योत्तरम् । 'येन नाव्यवधानमिति वचनप्रामाण्यादिति'। अपिप- ठिषीदित्यादावनन्तरस्याकारस्यातो लोपेन भवितव्यं, ननु चोभयोरप्य- नित्ययोः परत्वाद्वृद्धिः प्राप्नोति, अस्तु वृद्धिः, आतो लोप इटि चेत्याकार- लोपो भविष्यति, न भविष्यति, परत्वात्सगिटौ स्याताम्, एवं तर्हि यय- ल्लोपावियङुवङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धावित्यतो लोपो भवि- ष्यति, यथा चिकीर्षक इत्यत्र, युक्तं तत्राचोऽञ्णितीति वृद्धिरन्यत्र चरितार्था, इयं तु सिच्यनन्तरस्यातो विधीयमाना निरवकाशा, एवं तर्हि हलन्तस्ये- त्यनुवृत्तेरनन्तरोकारो न संभवतीत्येतत्सामर्थ्यम् । 'अथ त्विति'। व्यवधानेन भवितव्यमिति स्थिते हला व्यवधानमिति कल्पनायां लघु- ग्रहणं कर्तव्यम्, एकेन वर्णेनेति तु कल्पनायां न कर्तव्यमित्यर्थः ॥

"नेड्वशि कृति" ॥ 'वशि कृतीति'। सप्तमीनिर्देशस्तदादिवि- ध्यर्थः । तस्य च वयं पुरस्तात्करणस्य प्रयोजनं क्रादिसूत्रे वक्ष्यामः, ईशितेत्यादेरुपन्यासः प्रकृत्याश्रयः प्रतिषेधो न सिध्यतीति प्रदर्शनार्थः । 'ईश्वर इति'। स्थेशभासेत्यादिना वरच् । 'दीप्रमिति'। नमिकम्पी- त्यादिना रः । 'भस्मेति'। अन्येभ्योपि दृश्यन्त इति मनिन् । चौरादिके त्वनुत्पत्तिपक्षाश्रयणेनापि सिद्धम् । 'याच्ञेति'। यजयाचेत्यादिना नङ् । 'संभवोदाहरणप्रदर्शनमिति'। एतावन्त्युदाहरणानि संभव-

न्तीति प्रदर्शनार्थमित्यर्थः । 'रुदिव रुदिम इति' । असति हलादिग्रहणे रुदादिभ्यः सार्वधातुकइत्यस्यापि इटोऽत्र प्रतिषेधः स्यात्, तस्य त्ववशादिरवकाशः । 'रोदितीति' । क्वचिद्रुदिव रुदिमेति लिटि पठ्यते, तदयुक्तं, क्रादिनियमादेवेटः सिद्धत्वात् ॥

"तितुत्रतथसिसुसरकसेषु च" ॥ 'क्तिन्क्तिचोः सामान्येन ग्रहणमिति'। रोदितीत्यस्य तिप एकानुबन्धकस्याप्ययहणं कृतात्यनुवृत्तेः । 'दीप्तिरिति'। क्तिचावादिभ्य इति क्तिन्। 'औणादिकस्यैवेति'। एतच्च भूयोभिरौणादिकैः साहचर्याल्लभ्यते । 'तितुत्रेष्विति'। अस्मिन् सूत्र इत्यर्थः । 'अग्रहादीनामिति'। ग्रहादिव्यतिरिक्तानां धातूनां सबन्धिषु तितुत्रादिषु प्रतिषेध इत्यर्थः । आदिशब्दः प्रकारइत्याह । 'ग्रहप्रकारा इति'। कः पुनः प्रकार इत्याह । 'येषामिति'। 'निकुचितिरिति'। कुञ्चेः पूर्ववत् क्तिन्, उपधालोपः, कुच शब्दकरणे इत्येतस्माद्वा क्तिन् ॥

"एकाच उपदेशेऽनुदात्तात्" ॥ अनुदात्तादिति बहुव्रीहिः, न विद्यते उदात्तो यस्मिन्सोऽयमनुदात्तः, पारिभाषिके त्वनुदात्ते ऽजमात्राणामिणादीनामेव ग्रहणं स्यात्, नाज्झल्समुदायरूपाणाम्पचिप्रभृतीनां, ततश्च तेषामनुदात्तोपदेशोनर्थकः स्यात्, अथ वा ऽनुदात्ताच्कत्वात्समुदाय एवानुदात्त इत्युच्यते, यथाऽनुदात्तं पदमिति । उपदेशः प्रकृतिपाठः । 'अनुदात्तश्चेति'। उपदेशइत्यपेक्षते, उभयविशेषणं चेतदिष्यते, अन्यतरविशेषणं तु यदि विज्ञायेत उपदेशएकाचः सम्प्रत्यनुदात्तादिति, इहापि च प्रसज्येत लविष्यति पविष्यतीति, भवति ह्येतत् प्रत्ययस्योदात्तत्वे शेषनिघातेन सम्प्रत्यनुदात्तम्, इह च न स्यात् कर्ता कर्तुम्, नित्स्वरेण संप्रत्युदात्तत्वात्, प्रकृतिपाठे चैषामनुदात्तोपदेशोनर्थकः स्यात् । अथ विज्ञायेत उपदेशेनुदात्तादेकाचः श्रूयमाणादिति, क्रादिसूत्रे नियमो नोपपद्येत, चकृव चकृमेत्यादौ श्रूयमाणरूपस्यानेकाच्त्वाद्विधिरेव स्यात्, तत्र को दोषः, बिभिदिव बिभिदिम अत्रेडागमो न स्यात् । ननु च संप्रत्यनेकाच्त्वादत्र प्रतिषेधस्याप्रसङ्गादेवेड् भविष्यति, इह तर्हि पेचिव पेचिम, एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादिट्प्रतिषेधः प्राप्नोति, परत्वादिटि कृते एत्वा-

भ्यासलोपौ भविष्यतः, नित्यावेत्वाभ्यासलोपौ, कृतेपीटि प्राप्नुतो ऽकृतेपि, इट् पुनरनित्यः, कृतयोस्तयोरेकाचः श्रूयमाणादिति प्रतिषेधात् । एवं तर्हि थलि च सेटीत्यत्र सेड्ग्रहणं कालावधारणार्थं भविष्यति, कथं, तत्र थल्ग्रहणं न कर्त्तव्यं, सेटीत्येतावता सिद्धम्, अत एकहल्मध्यइत्यादिसर्वमनुवर्त्तते, किद्ग्रहणमेकं निवृत्तं, न च थलोन्यः सेड् क्लिल्लिट् संभवति, सोयमेवं सिद्धे यत्थल्ग्रहणं करोति तस्यैतत्प्रयोजनं किता सह समुच्चयार्थं, थलि च किति च सेटि एत्वाभ्यासलोपौ भवत इति, तत्र किति पूर्वेणैव सिद्धे कालावधारणार्थमिदं वचनमिटि कृते एत्वाभ्यासलोपौ यथा स्यातामकृते माभूतामिति, यथा निष्ठायां सेटीत्यत्र, एवमपि विधित्सति विच्छित्सतीत्यत्र नित्यत्वाद् द्विर्वचने कृते एकाचः श्रूयमाणादिति प्रतिषेधो न स्यात् । तस्मादुभयविशेषणमुपदेशग्रहणम्, अत एवेदं मध्ये पठितं, यद्युभयविशेषणं बेभिदिता, चेच्छिदिता, अत्रापि प्राप्नोति, अल्लोपस्य पूर्वस्मादपि विधौ स्थानिवद्भावाच्च भविष्यति, यङ्लुगन्ते तर्हि प्राप्नोति बेभेदिता चेच्छिदिता, यत्रैकाज्ग्रहणं किंचित्पञ्चैतानि न यङ्लुकीति वचनाच्च भविष्यत्ति । 'के पुनरिति' । पाठे संकरसंभवात्प्रश्नः, असंकरेण पठितव्या इत्युत्तरम् । 'प्रविभक्ता इति' । स्वरान्तहलन्तऋकारादिव[illegible]र्थः । श्लोकेष्वनिड्ग्रहणमनुदात्तोपलक्षणं, षष्ठीसप्तम्यश्च धातुविषयनिर्धारणे द्रष्टव्याः । 'श्विडीङिति' । समाहारद्वन्द्वे द्वितीयान्तम् । 'ग[illegible]ति' । श्लोकपूरणार्थं, स्वभावकथनमेतत्, म[1]त्,मत्तः । निबोधत, अवगच्छत । 'द्रुयेत्यादिश्लोकयोर्द्वयोर्विवरणम्, इति स्वरान्ता इत्यस्य पुनः पाठो निगदव्याख्यानतां दर्शयितुं द्रष्टव्यः । अन्ये तु पूर्वं न पठन्ति । 'यमिर्यमन्तेष्विति' । 'श्यनि पठ्यते इति' । दिवादौ पठ्यते इत्यर्थः । 'प्रतिषेधवाचिनामिति' । इट्प्रतिषेधं कुर्वतामाचार्याणां मतेनेत्यर्थः । 'दहिर्दुहिरिति' । यद्विषयः संशयः पुरुषाणां नास्ति ते मुक्तसंशयाः, तन्त्रान्तरं, व्याकरणान्तरम्, आपिशलादि । 'सहेर्विकल्प इति' । तीषसहेत्या-

१ सचिबोधतेति मुद्रितमूलपुस्तके पाठः पदमञ्जर्यसंमतः ।

दिना। 'सविकल्पाविति'। विकल्पस्तद्विषयः संशय इत्यर्थः। 'स्वरूपेणैव ससंशयाविति'। तौ स्तो न इत्यपि संशयस्तत्रेत्यर्थः। 'दृशिं दृशिमिति'। पुराणं चिरन्तनं व्याकरणं ये ऽधीयते ते पुराणगाः। पाठेषु, धात्वादिषु। ऋदुपधानामित्यादिना तेष्वनुदात्तोपदेशस्य प्रयोजनान्तरं समुच्चिनोति। एवं च श्लोकेष्वनिट इत्यस्यानुदात्तोपलक्षणत्वं निश्चितम्। 'रुधिः सराधिरिति'। 'न्याय्यविकरणयोरिति'। न्याय्य उत्सर्गः, शब्विकरणयोरित्यर्थः। क्वचित्तु तथैव पाठः, केचिद्भौवादिकं सिधिमुदितं पठन्ति षिधु गत्यामिति, तेन तस्य क्त्वायां विकल्पितेट्त्वान्निष्ठायां यस्य विभाषेति प्रतिषेधेन भवितव्यं, तथा दैवादिकस्य भौवादिकस्य च बुधेरर्थे रूपे वा विशेषो नास्ति ततश्चैक एवायं बुधिर्विकरणद्वयार्थे तु द्वयोर्गणयोः पाठः, तस्य चार्द्धधातुकलक्षण इडप्युक्तः, प्रतिषेधोपीत्येकविषयत्वाद्विभाषितेट्त्वं, ततश्च तस्यापि निष्ठायां प्रतिषेधेन भवितव्यमिति मन्यमानं प्रत्याह। 'निष्ठायामपीति'। सिधेरुदित्त्वं तावदनन्यार्थं, न च यथाकथं चिदिटो भावाभावौ निष्ठायां निषेधस्य निमित्तं किं तर्हि विकल्पवाचिना विभाषादिशब्देन विकल्पितेट्त्वमिति भावः। 'तर्पिं तिपिमिति'। तिपित्तपी इति पाठः, नीचेन स्वरेणानुदात्तेन पठितान्प्रतीहि निबोधतेति, प्रस्तावात्प्रतीतेति पाठः, प्रतीहीति पाठे उत्तरानुरोधः। 'विद्धयनिट्स्वरान्निति'। 'तेप्तेति'। तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे। 'क्रोप्तेति'। कुप स्पर्शने। 'पचिं वचिमिति'। 'सृजिमृजीति'। समाहारद्वन्द्वः, अनिट्त्वस्य हेतुः स्वरो येषां ते ऽनिट्स्वराः, ततोस्य विकल्पेन भवितव्यमिति, तेनानिट्स्वरार्थोनुदात्तपाठो न भवति। 'अमागमोपीति'। तेन तदर्थोप्यनुदात्तपाठो न भवति। तत्कस्मादिहानिट्कारिकासु पठ्यतइत्यत आह। 'केचिदित्यादि'। युक्तं चैतदित्याह। 'निजादिषु हीति'। निजां त्रयाणां गुणः श्लावित्यत्र पठिता निजादयः, अत्रैव व्याकरणान्तरानुमतिं दर्शयति। 'तथा चेति'। 'अवधीदिति'। किं पुनरयमुपदेशेनुदात्तः, ओमित्याह। क्व पुनरस्योपदेशः, हनो वध लिङीति, किमेकाज्ग्रहणं न निवर्त्तयिष्या-

मीत्यनुदात्त उपदिश्यते, नह्यस्यान्यदनुदात्तत्वे प्रयोजनं, न ब्रूमोस्मिन्नुपदेशेयमनुदात्त इति, हन्तिरनुदात्तस्तस्य स्थाने भवन्स्थानिवद्भावेनानुदात्तः, क्रियमाणेपि तर्ह्येकाज्ग्रहणे यावता स्थानिवद्भावः कस्मादस्य प्रतिषेधो न स्यात्, एकाजुपदेशस्य स्थान्यलाश्रयत्वादनल्विधाविति प्रतिषेधादिति चेद्धन्त्वेवमनुदात्तव्यपदेशोपि स्थान्यलाश्रयत्वात्कथमिवास्य स्यात्। स्यादेतत्। नात्र स्थानिवद्भावेन प्रसङ्गः, किं तर्ह्युपदेशग्रहणेन, यथा कर्त्ता कर्तुमित्यादौ रूपभेदे स्वरभेदे च भवति तत्कस्य हेतोर्यः स उपदेशेनुदात्तः स एवेमामवस्थामापन्न इति कृत्वा, न तु स्थानिवद्भावादेवमिहापि य उपदेशेनुदात्तो हन्तिः स एवायमिति उपदेशग्रहणात्प्रसङ्ग इति, क्रियमाणेपि तर्ह्येकाज्ग्रहणे कथमिवास्य व्यावृत्तिः, यावता उपदेशग्रहणस्योभाभ्यां संबन्धः, य उपदेशे एकाच् स एवायमिति स्यादेव प्रसङ्गः, तस्माद्धेराद्युदात्तनिपातनं कर्त्तव्यं तत्सामर्थ्याद्धन्त्युपदेशविषयानुदात्तस्वाश्रयेपि प्रतिषेधो न भवति, नह्येतदाद्युदात्तत्वं प्रयोगसमवायि, प्रत्ययस्वरेण बाधितत्वादित्येवमत्र परिहारो वाच्यः, एकाज्ग्रहणमुत्तरार्थम्[1]॥

"श्र्युकः किति"॥ येषां प्रकृत्याश्रयः प्रतिषेधो नास्ति तदर्थमिदं श्रितः श्रितवान्, युतः युतवान् इति, सनीवन्तर्द्धेति विकल्पितेट्त्वाद्यस्य विभाषेति प्रतिषेधः सिद्धः। 'केचिदित्यादि'। यथा ग्लाजिस्थश्च क्स्नुरित्यत्रोक्तं क्स्नोर्गित्त्वाच्च स्थ ईकार इत्यादि। यदि गकारः प्रश्लिष्यते श्र्युकः कितीति निर्देशो नोपपद्यते गकारे परतो हशि चेत्युत्वं प्राप्नोति, चर्त्वे च कृते कुप्वोःᳲकᳲपौ चेत्येव विधिर्भवति, चर्त्वस्यासिद्धत्वादुत्वमेव प्राप्नोति, तत्राह। 'सौत्रत्वादिति'। अत्रापि ग्रन्थे वर्णयन्तीत्यस्य संबन्धः, तदेतद्दूषयति। 'ग्लाजिस्थश्च ग्स्नुरित्यत्रेति'। आकारप्रश्लेषे सति तिष्ठतेराकारान्तादित्यर्थो भवति, तिष्ठतिश्चाकारान्त एव, तत्र विशेषणमुत्तरकालभावीकारनिवृत्त्यर्थं विज्ञायते, ततश्च।

कथं प्रकृतिनिर्द्देशे पञ्चम्यां परतः श्रुतः।
आकारोयं विधेयः स्यादिति चोद्यमपाकृतम्॥

---

[1] एकाज्ग्रहणन्त्विति पाठः ई० पु०।

'स्थास्नोः'। स्थास्नुशब्दस्य। 'न किंचिदेतदिति'। एतद्गकारप्रश्लेषवर्णनमशोभनमित्यर्थः। ग्स्नुप्रत्ययस्य गित्त्वे हि गप्रश्लेषोऽत्र युज्यते, किंत्वेपि तिष्ठतेरीत्वमुक्तादुतेर्निवर्त्तते। 'तीर्णे इत्यत्रापि यथा स्यादिति'। इह तु तीर्त्वा पूर्त्वेति आनुपूर्व्यात्सिद्धं, कथं, तृत्वा पृत्वा इति स्थिते यावदिट्प्रतिषेधो न प्रवर्तते तावदित्वोत्वे न प्राप्नुतः, किं कारणं, क्ङितीत्युच्यते, न चाकृतइट्प्रतिषेधे क्त्वा किद्भवति, न क्त्वा सेडिति प्रतिषेधात्, किं च भो इत्वोत्वे किति विधीयेते, न किति विधीयेते, किति तु विज्ञायेते, कथमित्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन, तस्मात्प्रागेव संनिहितं कित्त्वमाश्रित्येट्प्रतिषेधे प्रवृत्ते इत्वोत्वे भवतः, कृतयोस्तर्हि तयोः प्रतिषेधनिमित्तस्योगन्तत्वस्यापगमात्पुनरिट् प्रसङ्गः, तस्मिंश्च सति न क्त्वा सेडिति कित्त्वप्रतिषेधाद्गुणे सति तरित्वा परित्वेति प्राप्नोति, नैतदस्ति, प्रसङ्गावस्थायामेव प्रतिषेधेन बाधितस्य भ्रष्टावसरस्य पुनः प्रवृत्त्ययोगात्, इह च तितीर्षति मुमूर्षतीति नाकृतइटः प्रतिषेधे सनः कित्त्वमझलादित्वादसति च कित्त्वे गुणस्यायं विषय इति इत्वोत्वयोरप्रसङ्ग इति, आनुपूर्व्यात्सिद्धमित्येव, यदि वा तृस इति स्थिते ऽनवकाशत्वादिट् सनि वेति ऋकारान्तनिमित्त इड्विकल्पः प्रवर्त्तते, तत्रेडभावपक्षे कित्त्वाद्गुणे निषिद्धे इत्वोत्वयोः कृतयोरपि विकल्पेन बाधितस्येड्लक्षणस्य भ्रष्टावसरत्वेन पुनः प्रवृत्त्ययोगात्सिद्धमिष्टं, तस्मात्तीर्णे इत्यत्र चोपदेशाधिकारस्योपयोगः। कस्मात्पुनरसत्युपदेशाधिकारेऽत्र न स्यादित्यत आह। 'इत्वे हि कृतइति'। किं पुनः कारणमित्वमेव तावद्भवति, नित्यत्वात्, माभूदित्यादि चोदकः, कस्य पुनरित्यादीतरः। ऋत इत्यादि चोदकः, यद्येवमित्यादीतरः। 'स्थानिवद्भावादिति' चोदकः, अनल्विधावित्यादीतरः, अल्विधित्वं पुनरर्गिति प्रत्याहारग्रहणात्, ननु चेत्वोत्वयोः कृतयोः संप्रत्यृकाराभावेप्येकदेशविकृतस्यानन्यत्वात्स एव धातुर्यस्य सनि विभाषा विहितेतीट्प्रतिषेधो भविष्यति। नैतदस्ति, आदितश्चेति योगविभागेन ज्ञापयिष्यते, यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति, ततश्च ऋकारान्तत्वमुपाधिरिड्विकल्पे स चेत्वे कृते नास्तीति कथं प्रतिषेधः स्यात्। 'तस्मा.

दित्यादि'। यस्मादेवमसत्युपदेशग्रहणे तीर्ण इत्यत्र प्रतिषेधो न सेत्स्यति[1] तस्मादुपदेश इत्यनुवर्तनीयम्। 'तथा च सतीति'। उपदेशइत्यनुवर्त्तमाने सतीत्यर्थः। 'अत्रापि प्राप्नोतीति'। जागर्तेरुपदेशावस्थायामुगन्तत्वात्। 'तदर्थमिति'। जागरित इत्यादिसिद्ध्यर्थं, जागरित इत्यादाविट्प्रतिषेधनिवृत्त्यर्थमिति वा, तथा च वार्त्तिकम्। एकाज्ग्रहणं जागर्त्यर्थमिति। पूर्वसूत्रेनुपयोगादिहार्थमेकाज्ग्रहणमित्यर्थः। भाष्यकारस्त्वाह, यस्य क्वचिदिड्विकल्पो दृष्टः स धातुराश्रीयते, यस्य विभाषेति, न तु तद्गतं विकल्पकारणमृकारादि, भवति चेत्वोत्वयोः कृतयोरयमपि स एव धातुरिति तीर्ण इत्यादौ सिद्धः प्रतिषेध इति, यद्येवं विभाषा गमहनविदविशामिति विशिना साहचर्यात्तौदादिकस्य विदेः क्वसाविटि विकल्पिते दैवा[2]दिकस्यापि विदेर्निष्ठायां प्रतिषेधः प्राप्नोति, विदितः विदितवानिति, न, धातुभेदात्, कथं धातुभेदः, अर्थभेदादनुबन्धभेदाद्विकरणभेदाच्च। तदेवं नार्थ उपदेशाधिकारेण नापि एकाज्ग्रहणानुवृत्त्या, किमर्थं तर्हि पूर्वसूत्रे एकाज्ग्रहणं यङ्लुगन्तनिवृत्त्यर्थम्। ननु च क्रियमाणेप्येकाज्ग्रहणे यङ्लुगन्तस्य प्रतिषेधः प्राप्नोति, उपदेशग्रहणस्योभयविशेषणत्वात्। यथा बिभित्सतीति। तत्रैतत्स्यात् क्रियमाणे एकाज्ग्रहणे यत्रैकाज्ग्रहणं किं चिदिति वचनाद्यङ्लुगन्तस्य न भवतीति तच्च वार्त्तमक्रियमाणेपि चैकाज्ग्रहणे वचनान्तराश्रयणेन यङ्लुगन्ते[3]पि परिहारः, तदेव वचनमेवं पठ्यतां यत्रोपदेशग्रहणमिति, अनुदात्तोपदेशलक्षणोनुनासिकलोपोपि तर्हि यङ्लुगन्तानां तसादिषु न स्यात्, तथा इवन्तानां दिविप्रभृतीनां यङ्लुगन्तानामपि सनीड्विकल्पः प्राप्नोति, क्रियमाणे पुनरेकाज्ग्रहणे न भवति, एकाच इति तत्रानुवृत्तेः, यदि नेष्यते एवं वक्ष्यामि उपदेशेनुदात्ताच्च यङ्लुक इति, अधिकारोयं, यत्रैकाज्ग्रहणेन यङ्लुगन्तस्य व्यावृत्तिरिष्यते, तत्रोपतिष्ठते एवमपि वावृतु वरणइति दिवादावनेका-

---

१ भविष्यतीति पा॰ ई॰ पु॰।

२ आदादिकस्येति ई॰ पु॰ पाठः।

३ यङ्लुगन्तस्येति ई॰ पु॰ पा॰।

लुदिदनुदात्तेत्पठ्यते, तथा च भट्टिकाव्ये प्रयोगः, ततो वावृत्यमानो ऽसौ रामः शालां न्यविवृतेति, तस्योदितो विकल्पितेटो निष्ठायां यस्य विभाषेति प्रतिषेधः प्राप्नोति, एकाज्ग्रहणे तु क्रियमाणे न भवति, एकाच इति तत्रानुवृत्तेः, तथा च निष्ठायां सेटीत्यत्रापि वृत्तिकारेणोक्तम्, अथ पुनरेकाच इति तत्रानुवर्त्ततइत्यादि, अन्ये पुनर्भाष्यकारेणैकाज्ग्रहणस्य प्रत्याख्यातत्वादेतदिष्यतइत्याहुः। तथा च वृत्तिकारेणापि पाक्षिकत्वेनैवोक्तं अथ पुनरेकाच इति तत्रानुवर्त्ततइति कृतमतिविस्तरेण ॥

"सनि ग्रहगुहोश्च" ॥ चकार उगन्तकर्षणार्थः। न चेको झलिति सनः कित्त्वात् उगन्तानां पूर्वेणैव सिद्धिः, किं कारणं, झलादौ सनः कित्त्वं, न चान्तरेणेट्प्रतिषेधं सन् झलादिर्भवति, तेन येषु प्रकृत्याश्रयः प्रतिषेधो नास्ति तेष्वनेनैवेटि प्रतिषिद्धे झलादित्वे सनः कित्त्वमित्येष क्रमः। 'जिघृक्षतीति'। रुदविदेत्यादिना सनः कित्त्वं, ग्रहिज्यादिसूत्रेण संप्रसारणं, हो ढः, षढोः कस्सि, एकाचो बशो भष्। 'जुघुक्षतीति'। गुहू संवरणे, स्वरितेत्, हलन्ताच्चेति सनः कित्त्वम्, अथ चकारेणोगिदिव श्रयतिरपि कस्मान्नानुकृष्यते ऽत आह। 'श्रिस्वृयूर्ण्वित्यादि' ॥

"कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि" ॥ 'क्रादय एव लिट्यनिटइति'। लिट्येव क्रादयो ऽनिट इत्येष तु विपरीतोऽत्र नियमो न भवति, क्रादीनामनुदात्तोपदेशसामर्थ्यात्। 'कृतलब्धक्रीतकुशलाः'। 'तमधीष्टो भृतः'। 'परिवृतो रथः' 'स्तुतस्तोमयो'रित्यादिनिर्देशाच्च। केन पुनरेषामिट्प्रतिषेधः सिद्धः, यतो नियमार्थो यमारम्भ इत्यत आह। 'अनुदात्तोपदेशानामित्यादि'। वृङ्वृञ्भ्यामन्ये ऽनुदात्तोपदेशास्तेषां प्रकृत्याश्रय एकाच उपदेशइतीट्प्रतिषेधः सिद्धः। वृङ्वृञोस्तु प्रत्ययाश्रयः श्र्युकः कितीत्येषः। तस्मादुभयस्यापि प्रकृत्याश्रयस्य प्रत्ययाश्रयस्य च। कथं पुनरयं प्रत्ययाश्रयस्य नियमः, यावता वृग्रहणं वृञस्थलि विध्यर्थं संभवति, नहि तत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ उदात्तत्वात्, नापि प्रत्ययाश्रयः, थलः कित्त्वाभावात्, असति प्रत्ययाश्रयस्य नियमे ववरिथेत्यादावपि न स्यादित्यत आह। 'वृञो हीति'। व्यवस्था, नियमः, इह तुष्टोथेत्यादौ, अतो भारद्वाजस्येत्येतस्माद्वि-

यमादिट् प्राप्नोति, ययियेत्यादिवत् । यथा हि ययिथ, पपिथेत्यादावार्द्धधातुकस्येतीट् प्राप्त एकाच इति निषिद्धः पुनः क्रादिनियमात् प्राप्नोव-स्तास्वत्थलीति प्रतिषिद्धस्तत उतो भारद्वाजस्य थलि प्रतिषेधो नान्येभ्य इति नियमात्पक्षे इड्भवति तथात्रापि स्यात्, कथं खलु क्रादिनियमस्य बा-धकम् अचस्तास्वदिति प्रतिषेधं बाधमानो भारद्वाजनियमः क्रादिप्रतिषेधं न बाधेत। कसृभृवृइत्येतेषु पुनर्नायं दोषस्तेषामृकारान्तत्वेन भारद्वाजपक्षे-पीटः प्रतिषेधात्, एवं तर्हि स्तुद्रुस्रुश्रुवां ग्रहणं विध्यर्थं भविष्यति, असति हि विधेये नियमो भवति, इह चास्ति विधेयं, किं, थलि भारद्वाजनियमादिटः प्राप्तस्य प्रतिषेधः, इतरेषान्तु क्रादीनां ग्रहणं नियमार्थं भविष्यतीति । विभि-विव लुलुविवेत्यादावपि न दोषः, कथं पुनस्तुष्टुमः, अत्र हि क्रादिनियमादिट् प्राप्नोति, नैष दोषः । स्तुद्रुस्रुश्रुवां ग्रहणमुभयोरपि प्रतिषेधार्थं, यश्च क्रा-दिनियमादिट् प्राप्तः यश्च भारद्वाजनियमात्तयोरुभयोरपीत्यर्थः । यद्येवं येन नाप्राप्तिन्यायेन क्रादिनियममेव स्तुद्रुस्रुश्रुवां प्रतिषेधो बाधेत न तु विकल्पेन प्राप्तं भारद्वाजनियमं, ततश्चासौ स्यादेवेत्याशङ्क्याह । 'स्तुद्रु-स्रुश्रुवां त्विति' । एतच्च पुरस्तात्प्रतिषेधकाण्डकरणाल्लभ्यते । तथाहि । प्राप्तिपूर्वकत्वात्प्रतिषेधस्य पूर्वं विधिप्रकरणं पठितव्यमार्द्धधातुकस्येत्या-रभ्य ईडजनोर्ध्वे चेत्येवमन्तं, पश्चात्प्रतिषेधप्रकरणं, तद्यथान्यत्रापि कर्त्तरि कर्मव्यतिहारे, न गतिहिंसार्थेभ्य इति, तत्रायमर्थो द्विरिड्ग्रहणं न कर्त्तव्यं भवति प्रकृतमनुवर्त्तते, नन्वेवं रुदादिभ्यः सार्वधातुकइति सार्वधातुकग्र-हणं लिङः सलोपोनन्त्यस्येत्यत्र विच्छिद्येत, एवं तर्हि न वृद्भ्यश्चतुर्भ्य इत्यत्रैव पठितव्यमेवं हि विध्युत्तरकालश्च प्रतिषेधः कृतो भवति, द्विश्चे-ड्ग्रहणं न कर्त्तव्यम्भवति, सार्वधातुकग्रहणं च सलोपेन विच्छिद्यते, अपि च द्विःप्रतिषेधो न कर्त्तव्यो भवति, सोयमेवं सिद्धे यत्पुरस्तात्प्रतिषेधकाण्डं करोति तस्यैतत्प्रयोजनमनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्येतेति, यदि तु भारद्वाजनियमात्परमिदं काण्डं क्रियेत ततो मध्येपवादन्यायेन भारद्वाजनियमोचस्तास्वदिति प्रतिषेधमेव बाधेत न तु क्रादिनिषेधमिति पुरस्तात्प्रतिषेधकरणे न कश्चिद्दोषः । अपर आह ।

यत्र तत्र वा प्रतिषेधकरणमस्तु, सर्वथा तु भारद्वाजनियमोऽवस्तास्त्वदिति योगद्वयेन थलि यः प्रतिषेधः प्राप्तस्तस्यैव नियामकः, अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति, ततश्च स्तुद्रुस्रुश्रुवामपि भारद्वाजनियमेनावस्तास्त्वदिति प्रतिषेध एव निवर्त्तते न तु क्रादिप्रतिषेध इति तन्मते पुरस्तात्प्रतिषेधकरणस्य प्रयोजनमुत्तरत्र दर्शयिष्यामः । 'कृञोसुट इति वक्तव्यमिति' । कृतेपि सुटि करोतिर्भवत्येवेति प्रतिषेधप्रसङ्गः ॥

"श्वीदितो निष्ठायाम्" ॥ श्विग्रहणं किमर्थं न संप्रसारणे कृते परस्य पूर्वत्वे चोगन्तत्वे सति श्र्युकः कितीत्येव सिद्धं, न सिध्यति, श्वित इति स्थिते परत्वादिट् प्राप्नोति, अथापि पूर्वं संप्रसारणमेवमपि श्र्युकः कितीत्यत्रोपदेशइत्यनुवृत्तेरस्य चोपदेशे इदन्तत्वाच्च सिध्यति । 'डीङ इत्यादि' । डीङयं स्वादीनां मध्ये पठ्यते, ते च ओदितः, स्वादय ओदित इति वचनात्कथमेतज्ज्ञापकमित्यत आह । 'स हीति' । निष्ठातः निष्ठातकारस्य अनन्तरस्य विधीयतइति इटि सत्यानन्तर्यं विहन्येत, एवञ्च सति श्वयतेरप्यत्र ग्रहणं शक्यमकर्त्तुम्, तथा ओलस्जीप्रभृतीनामपि उक्तेनैव न्यायेनेडभावस्य सिद्धत्वात् ॥

"यस्य विभाषा" ॥ यस्य विभाषेत्यनुवादवाक्यम्, अत्र चेड्विहित इति वाक्यशेषः, यत्तदोर्नित्यसंबन्धात्तस्य निष्ठायामिण्न भवतीति प्रतिषेधवाक्यं संपद्यते । 'निपातनादिडागम इति' । अपर आह । अनित्योयं प्रतिषेधः, कृती छेदनइत्यस्य ईदित्करणसामर्थ्यात्, यदि ह्ययं विधिर्नित्यः स्यात्से सिचीत्यनेन विभाषितेट्त्वादनेनैव प्रतिषेधस्य सिद्धत्वादीदित्करणमनर्थकं स्यादिति ॥

"आदितश्च" ॥ 'आश्वस्तो वान्त इति' । भाष्यवार्तिकयोरनुक्तमपि प्रयोगबाहुल्यादुक्तम् । 'योगविभागकरणं किमिति' । योगविभाग एव तावद्दोषः । अपि च एकयोगत्वे चकारो न कर्त्तव्यो भवतीति प्रश्नः । एवं चोत्तरग्रन्थे चकारो न पठितव्यः, पठ्यमानस्तु अनुक्तसमुच्चयार्थो व्याख्येयः, कथं पुनरेकयोगत्वे भावादिकर्मभ्यामन्यत्र प्रतिषेधः सिद्धस्तत्राह । 'अन्यत्रेति' । 'यदुपाधिरिति' । उपाधिरभिधेयादिर्भेदकः

यद्युपाधीनां भेदकत्वं न स्याद्योगविभागोऽनर्थकः स्यात्, भेदकत्वे तु तेषां भावादिकर्मणोर्विकल्पविधानात्कर्तृकर्मणोः प्रतिषेधो न स्यादिति तदर्थो योगविभागः कर्त्तव्यः, किमेतस्य ज्ञापने प्रयोजनमित्यत आह। 'तेनेति'। 'लाभार्थस्य विभाषेति'। अत्र हेतुर्वक्ष्यते, यदि तर्ह्युपाधिर्भेदकस्तत उदितो वेति क्त्वाप्रत्यये भाववाचिनि विकल्प इति निष्ठायामपि भावएव प्रतिषेधः स्यान्नार्थान्तरे, शब्देनाश्रीयमाणो ह्युपाधिर्भेदकः, न चोदितो वेत्यत्र भाववाचित्वं शब्देनाश्रितं, तथा च तेन निर्वृत्तं निवृत्तेनद्यूतादिभ्य इत्यादेरुपपत्तिः॥

• "विभाषा भावादिकर्मणोः"॥ 'मेदितमनेनेति'। निष्ठा शीङिति कित्त्वप्रतिषेधाद्गुणः। 'प्रमिन्न इति'। आदिकर्मणि क्तः कर्त्तरि चेति कर्त्तरि क्तः। 'सौनागा इति'। सुनागस्याचार्यस्य शिष्याः सौनागाः। 'शकितो घटः कर्त्तुमिति'। यद्यपि शकिः केवलोऽकर्मकस्तथापि तुमुनन्तवाच्यक्रियाविशेषणत्वेन सकर्मको भवति, तथा च कर्मणि लादयो दृश्यन्ते, अयं योगः शक्योऽवक्तुम्। अयमर्थः शक्यते वक्तुमिति॥

"क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु"॥ 'मन्थाभिधानं चेदिति'। समुदायेन चेन्मन्थोऽभिधीयतइत्यर्थः। एतेन समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति दर्शयति। यदि तु धात्वर्थोपाधित्वेनाश्रीयेरन् मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्तइति तदा क्षुभितं मन्थेनेत्यादावपि स्यात्, द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः,दधिमन्थान्मधुमन्थाँश्चेति हि दृश्यते, अन्ये तु मथ्यतेऽनेनेति मन्थनदण्डः, खज्जको मन्थ इत्याहुः। मन्थादिषु क्षुब्धादिशब्दानां चलनादिक्रियायोगो यथासंभवं द्रष्टव्यः। 'उपमानादिति'। उपमानं सादृश्यं, तच्च यथासंभवं द्रष्टव्यं, स्वान्तशब्देन विषयेष्वविक्षिप्तमनाकुलं मन उच्यते, स्वनितं शब्दायितमित्यर्थः। 'मनसेति'। कर्त्तरि करणे वा तृतीया, एवं ध्वनितं तमसेत्यत्रापि। 'लग्नमिति'। लगे लगे ष्टगे संवरणे, अत्र निष्ठानत्वमपि निपात्यते। 'म्लिष्टमिति'। म्लेच्छ अव्यक्ते शब्दे। 'म्लेच्छितमिति' अपभाषितमित्यर्थः। अत्रार्थस्या-

विस्पष्टतया शब्दस्याविस्पष्टत्वम्, अपशब्दानामपि स्वरूपेणाभिव्यक्तत्वात्, उदाहरणेषु वर्णानभिव्यक्तिरविस्पष्टत्वम् । 'फाण्टमित्यादि' । कः पुनरत्रानायासो विवक्षित इत्यत आह । 'यदशृतमित्यादि' । यस्य व्याधेर्यदौषधं जातं [1]तस्य पञ्चधा कल्पना, रसः कल्कः शृतः शीतःफाण्ट इति, रसः स्वरसः, कल्कः पिष्टं, शृतं क्वाथः । शीतो नाम चुण्णमौषधजातमुदके प्रक्षिप्य रात्रावधिवासितमुदकं प्रातः पीयते, तदेवोष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते स फाण्टः, यथाह वाग्भटः, सद्योऽभिषुत्य पूतस्तु फाण्ट इति, पञ्चाप्येते कषायाः, तत्राशृतमिति क्वाथस्य व्यावृत्तिः, अपिष्टमिति कल्कस्य, उदकसंपर्केणेति स्वरसस्य, ईषदुष्णमिति शीतस्य, मात्रशब्दः स्वभावानुवादः, विभक्तरसं, प्रागवस्थाया भिन्नरसं, यदेवंभूतं कषायं तत्फाण्टमित्यर्थः । कषायशब्द उभयलिङ्गः । कथं पुनरेतदनायासशब्देनोच्यते, लक्षणया, यदाह । 'अनायासेनेति' ॥

"धृषिशसी वैयात्ये" ॥ ञिधृषा प्रागल्भ्ये, शसु हिंसायां, षष्ठ्यर्थे प्रथमा, विरूपं यातं गमनं चेष्टितं यस्य स वियातः, अविनीतः, शसेरपीत्यादौ ग्रन्थे इट्प्रतिषेधः सिद्ध इत्यनुषङ्गः । अथ धृषेर्विभाषा भावादिकर्मणोरिति विकल्पे प्राप्ते नित्यार्थं ग्रहणं कस्मान्न भवति तत्राह । 'भावादिकर्मणोरपीति' । एवं चास्य आदित्वे प्रयोजनं चिन्त्यं, धर्षितोऽभिभूतः, पूर्ववदकित्त्वं, विशसितो विकृतः ॥

"दृढः स्थूलबलयोः" ॥ स्थूलो मांसलो दुर्बलोपि, अस्थूलोपि बलवान् बलः । 'बलवति चेति' । सूत्रे अर्शआद्यच्प्रत्ययान्तं बलशब्दं दर्शयति । 'दृहेरिति' । दृहि वृद्धावित्येतावान्पाठ इति वार्तिककारस्य पक्षः, दृह दृहि वृद्धाविति भाष्यकारस्य, अथ किमर्थं हकारस्य लोपो निपात्यते न ढत्वमेव निपात्यतामपरस्य धत्वं ष्टुत्वं ढो ढे लोपः दृढ इति सिद्धमित्यत आह । 'हकारलोपनिपातनमिति' । 'रेफो न स्यादिति' । रादिफ इत्यत्र वर्णादिति नापेक्ष्यते, तेन रशब्दो

१ जातमिति नास्ति ई॰ पु॰ ।

न स्यादित्यर्थः। ढलोपस्यासिद्धत्वे संयोगे गुर्विति गुरुसंज्ञयोपजातया लघुसंज्ञाया बाधितत्वात्तन्निबन्धनकार्याप्रसङ्ग इत्यर्थः। 'इह चेति'। गुरुसंज्ञानिबन्धनकार्यप्रसङ्गश्चेत्यर्थः। 'बृंहितमिति'। बृंहेः प्रत्युदाहरणं, बृहितमिति बृहेः, अत्र च दीर्घादिरूपेण वृद्धमुच्यते॥

"प्रभौ परिवृढः"॥ 'पूर्वेण समानमिति'। इडभावादेर्निपात्यस्य तुल्यत्वात्। 'बृंहेरिति'। बृहि वृद्धाविति वार्त्तिककारस्य पक्षः, बृह बृहि वृद्धाविति भाष्यकारस्य। 'बृहिश्च यदि प्रकृत्यन्तरमस्तीति'। ततस्तस्यापि निपातनमित्यर्थः। 'तदेव प्रयोजनमिति'। असिद्धत्वाभावः। अथ कथं परिवृढय्येत्यत्र ल्यबादेशः, यावता परिवृढमाचष्टइति विग्रहे तत एव णिच् कर्त्तव्यः, समुदायस्य च धातुत्वात् क्त्वाप्रत्ययोपि तत एव कर्त्तव्यः, ततश्च परेरपि क्त्वान्तेन्तर्भावाचायं समासः, इह च पर्यवृढयतीति परिशब्दस्य तिङन्तेन्तर्भावात्तिङ्ङतिङ इति निघातो न स्यादित्यत आह। 'परिवृढमाचष्ट इति विगृह्येति'। णिजुत्पद्यतइति'। ण्यन्तं पठितव्यम्, अण्यन्तपाठे तु विगृह्येति क्त्वाप्रत्ययो न स्यात्, असमानकर्तृकत्वात्। 'संग्रामयतेरेव सोपसर्गादिति'। यदत्र वक्तव्यं तद्भृशादिभ्यो भुव्यच्वेरित्यत्रैवोक्तम्। 'निघातो भवतीति'। अड्द्विर्वचनयोरप्युपलक्षणमेतत्। पर्यवृढयत्। परिविव्रढयिषति। 'परिबृंहितमिति'। बृंहेः प्रत्युदाहरणं, 'परिबृहितमिति'। बृहेः॥

"कृच्छ्रगहनयोः कषः"॥ कषतिर्हिंसार्थः। 'कष्टोग्निरिति'। चीयमानोग्निरत्राग्निशब्देन विवक्षितः, स कष्टो भवति चयनप्रकारस्य दुर्ज्ञानत्वात्। व्याकरणस्य कष्टत्वमिडागमादिव्यवस्थाया दुर्ज्ञानत्वात्। साम्नां कष्टत्वं पर्वभेदस्य स्वरस्य स्तोमादीनां च दुर्ज्ञानत्वात्। 'कारणमपीति'। लक्षणया, कृच्छ्रयतीति कृच्छ्रमिति व्युत्पत्त्या वा॥

"घुषिरविशब्दने"॥ घुष्टा, अविशब्दिता, अवघुषितं, विशब्दितमाविष्कृताभिप्रायमित्यर्थः। चौरादिकस्य चायं प्रयोगः, स एव अस्मिन्नर्थे वर्त्तते। 'द्वावपीति'[1]। घुषिरिति सूत्रोपात्तं रूपं द्वयोरपि

[1] तयोरिहेति मुद्रितमूलपुस्तके पाठः।

सधारणमित्यर्थः । कथं समान्येन ग्रहणं यावता विशब्दने णिचा भवितव्यं, केवलश्चेह घुषिरुपात्तोत आह । 'विशब्दनप्रतिषेधश्चेति' । 'विशब्दनार्थस्यानित्य इति' । अन्ये त्वनित्यण्यन्ताश्चुरादय इति सामान्येन ज्ञापकमाहुः । अपर आह ।

चिति स्मृत्यामितीदित्त्वमत्र ज्ञापकमस्य हि ।
फलं चिन्तित इत्यादौ न लोपो मास्मभूदिति ॥
नित्ये च णिचि सत्यत्र नलोपस्याप्रसङ्गतः ।
चिन्तस्मृत्यामित्येव च पठितव्यं भवेदिति ॥

'अयमपीति' । यद्यप्यवघुषितं वाक्यमाहेत्येतदपि प्रयोजनं तथापि जुघुषुरित्यपि प्रयोग उपपन्न इत्यर्थः ॥

"अभेश्चाविदूर्ये" ॥ 'वि[1]शेषेण दूरं विदूरं ततोन्यदिति' । तत्पुनर्यदासन्नमविप्रकृष्टं वा भवति तद्वेदितव्यम् । 'तस्य भाव आविदूर्यमिति' । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । ननु च न नञ्पूर्वात्तत्पुरुषादिति प्रतिषेधः प्राप्नोति, तत्राह । 'एतस्मादेवेति' । न नञ्पूर्वादित्ययमधिकारस्तेन ततः सूत्रादुत्तरस्य भावप्रत्ययस्य प्रतिषेधस्तत्र क्रियतइत्युत्तरस्येत्युक्तम् ॥

"णेरध्ययने वृत्तम्" ॥ अधीयतइत्यध्ययनमिति कृत्यल्युटो बहुलमिति कर्मणि ल्युट्, निष्ठाविशेषणं चैतत्, अध्ययनाभिधायिन्यां निष्ठायामिति । 'णिलुक्चेति' । प्रत्ययलक्षणेन गुणो माभूदिति णेर्लुक्निपातनं, लोपनिपातने तु गुणः स्यात् । 'वृत्तो गुणो देवदत्तेनेति' । गुणः पाठः पदक्रमसंहितारूपोध्ययनविशेषः स वृत्तः संपादित इत्यर्थः । वृतिरयमित्यादिना सूत्रस्यानारम्भमाशङ्कते । 'अकर्मकइति' । वृत्तं गुणस्य, वृत्तं पारायणस्येति भावे क्तस्य प्रयोगार्थमिदमुक्तम्, अकर्मकत्वे हि भावे निष्ठा भवति, तयोरेवेत्यत्र भावे चाकर्मकेभ्य इत्यनुवृत्तेः, योपि नपुंसके भावे क्तः सोपि सकर्मकेभ्यो न भवति, तयोरेवेत्यत्र क्तमात्रस्य ग्रहणात्, अन्यथा सकर्मकाद्भावे क्ते विधीयमाने कर्मणि द्वितीया प्रसज्येत, ग्रामं गतमोदनं भुक्तमिति, यदि तर्ह्यकर्मकः, कथं वृत्तो गुण इति कर्मणि निष्ठे-

१ विदूरं विप्रकृष्टं ततोन्यदिति मुद्रितमूलपुस्तके पाठः ।

त्याशङ्क्याह । 'स ण्यर्थे वर्तमानइति' । यदि वायं वृतिरकर्मकः स ण्यर्थे वर्तमान इत्येक एव ग्रन्थः, अकर्मका अपि धातवोन्तर्भावितण्यर्थाः प्रयोज्येन कर्मणा सकर्मका भवन्ति, यथा राजयुध्वेति, दृश्यते च वृत्तेरन्तर्भावितण्यर्थस्य प्रयोग इत्याह । 'तेर्ननिर्वृत्तमिति हीति' । न चात्रोपसर्गवशात्सकर्मकत्वं, ण्यर्थगतेः वृत्तेर्णिचि योर्थः । निवर्त्यते यैर्नियमाभिषेकइत्यादौ तदवगतेरित्यर्थः । 'त[1]त्तस्माद्वृत्तेरेवेति' । प्रकृत्यन्तादेवेत्यर्थः । 'वृत्तोगुण इति' । उदितो वेति त्क्वायां विकल्पितेट्कत्वादस्य विभाषेतीट्प्रतिषेधः सिद्धः, तदेवं निपातनमनर्थकमित्येव मतं चोद्यं परिहरति । 'तत्क्रियतइति' । इष्टस्यान्यथासिद्धावप्यनिष्टनिवृत्त्यर्थं निपातनमित्यर्थः । 'अपरे त्विति' । तेषां मते नानेनार्थः सूत्रेण ॥

"वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" ॥ 'दान्तः शान्त इति' । दमिशमी उपशमनार्थे । णिलुगिट्प्रतिषेधयोरनुनासिकस्य क्विझलोरिति दीर्घः, निपात्यमानस्य च णिलुको ऽपरनिमित्तकत्वाद्दीर्घविधिं प्रति निषेधाच्च स्थानवद्भावो नास्ति । 'पूर्णइति' । पूरी आप्यायने दिवादिश्चुरादिश्च । 'दस्तइति' । तसु उपक्षये, दसु च, अत्र ह्रस्वत्वमपि निपात्यते । 'स्पष्टश्छन्न इति' । स्पश बाधनस्पर्शनयोः, छद अपवारणे, अत्रापि ह्रस्वत्वमपि निपात्यते । 'ज्ञप्त इति' ज्ञप मिच्च, चुरादिः, । 'इट्प्रतिषेधो णिलुक्च निपात्यतइति' । चकारात्क्वचि[illegible]यथाह्रस्वत्वं च, क्वचित्पठ्यते । 'ज्ञपेर्भरज्ज्ञपिसनामिति विकल्पविधानादस्य [illegible]भाषेतीट्प्रतिषेधे प्राप्ते विकल्पार्थं निपातनमिति' । एकाज्ग्रहणं यस्य विभाषेत्यत्र नानुवर्त्ततइतिभावः । अत्रादितश्चतुर्णां ग्रहणं शक्यमकर्त्तुम्, कथम्, अन्तर्भावितण्यर्थानां प्रकृत्यन्तानां दान्त इत्यादीनि रूपाणि, अन्यत्र ण्यन्तानां दमित इत्यादीनि ॥

"रुष्यमत्वरसंघुषास्वनाम्" ॥ 'अभ्यान्त इति' । अम गत्यादिषु, पूर्ववद्दीर्घः । 'तूर्ण इति' । ञित्वरा संभ्रमे, ज्वरत्वरेत्यादिनोठ् । 'आदितश्चेतीट् प्रतिषेधे प्राप्तइति' । आदित्वे तु प्रयोजनं मृग्यम् । आत्मने-

[1] तद्वदिहापि ण्यर्थवृत्तेरिति मुद्रितमूलपुस्तके पाठः ।

पदार्थं तावत्कश्चिदनुबन्ध आसञ्जनीयः। कश्चिदाह। आदित्वं यङ्लुगर्थमिति, नहि तत्रायं विकल्पः, एकाच इत्यनुवृत्तेः, आदित्करणसामर्थ्याच्चानुबन्धनिबन्धनोप्यादितश्चेतीट्प्रतिषेधो यङ्लुकि भवति। 'संपूर्वस्य घुषेरिति'। घुषिरविशब्दनइत्यस्यासंपूर्वो ऽवकाशः, घुष्टा रज्जुः अस्य विकल्पस्यावकाशः संपूर्वत्वे सति विशब्दने, संघुष्टं वाक्यमाह, संपूर्वस्याविशब्दने विप्रतिषेधः। 'आङ्पूर्वस्येत्यादि'। क्षुब्धस्वान्तेति निपातनस्यावकाशोनाङ्पूर्वत्वे सति मनोभिधाने, स्वान्तं मन इति, अस्य विकल्पस्यावकाशः आङ्पूर्वत्वे सत्यमनोभिधाने, आङ्पूर्वत्वे मनोभिधाने च सति विप्रतिषेधः॥

"हृषेर्लोमसु"॥ हृष्टानि उत्स्फुटानि, मूर्द्धजाः केशाः, अङ्गान्तरजानि लोमानीति निघण्टुप्रसिद्धिः, कल्पसूत्रकाराणामपि तदनुगुणाः प्रयोगाः, केशश्मश्रुलोमनखं वापयन्तीति। इह तु केशानामपि ग्रहणमित्याह। 'मूर्द्धजान्यङ्गजानि चेति'। अत्र विशेष्यं मृग्यम्। 'सामान्येन गृह्यन्तइति'। कथमित्यत्राह। 'यथेति'। ननु क्रियावचनस्य धातोः कथं द्रव्यात्मकेषु लोमसु वृत्तिरित्यत आह। 'तद्विषये चेति'। प्रतिहताः कठिनद्रव्यखादनेन शीतपीडया वा हता इत्यर्थः॥

"अपचितश्च"॥ 'अपचितोनेन गुरुरिति'। चायृ पूजानिशामनयोः, निशामने चायं प्रयोगः, पूजायां तु मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्ते सति क्तस्य च वर्त्तमानइति षष्ठ्या भवितव्यम्। 'क्तिनि नित्यमिति'। क्तिचावादिभ्य इति क्तिन्, अन्यथा गुरोश्च हल इत्यकारः स्यात्॥

"ह्रु ह्वरेश्छन्दसि"॥ ह्वरेरिति ह्वृ कौटिल्ये, आगन्तुकेकारे गुणेन निर्द्देशः॥

"अपरिह्वृताश्च"॥ 'आदेशस्याभाव इति'। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्द्देशश्छन्दसि तस्यैव प्रयोगदर्शनात्॥

"सोमे ह्वरितः"॥ 'इडागमो गुणश्चेति'। चकारादादेशाभावश्च॥

"प्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च"॥

यसु अदने, स्कम्भु स्तम्भु रोधनार्थौ सौत्रौ, चते याचने, कस गतौ, शसु हिंसायां, शंसु स्तुतौ, शासु अनुशिष्टौ, तॄ प्लवनतरणयोः, वृङ् सम्भक्तौ, वृञ् वरणे, ज्वल दीप्तौ, ह्वर सञ्चलने, क्षमूष् सहने, टुवम् उद्गिरणे, अम गत्यादिषु। 'उत्तभितेति'। 'उदः स्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णः सकारस्य तकारः। 'अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति'। यदि स्यादुत्तभितग्रहणमनर्थकं स्यात्। 'निपातनबहुत्वापेक्षमिति'। तेन छान्दसः प्रयोग एकवचनान्तोऽप्युदाहृत इति भावः। 'इतिकरणः प्रदर्शनार्थ इति'। तस्य प्रकारार्थत्वात्॥

"आर्द्धधातुकस्येड्वलादेः"॥ 'आस्ते वस्तइति'। ननु च रुदादिभ्यः सार्वधातुकइत्येतन्नियमार्थं भविष्यति, रुदादिभ्य एव सार्वधातुकइति, तत्राह। 'रुदादिभ्यः सार्वधातुकइत्येतस्मिन्निति'। नियमे त्वेतस्मिन् विज्ञायमाने विपरीतोऽपि नियमः सम्भाव्यते, रुदादिभ्यः सार्वधातुकएवेति, तत्र च वक्तव्यं रुदविदेति क्त्वासनोः कित्त्वविधानाच्च भविष्यति, अनिटः सनो झलादेर्हलन्ताच्चे[1]त्येव सिद्धत्वात्। क्त्वोऽप्यनिट औपदेशिककित्त्व[2]सद्भावादिति ततश्च प्रतिपत्तिगौरवं स्यात्। ननु चासत्यार्द्धधातुकग्रहणे अङ्गस्येत्यधिकारात्तस्यैवेट् प्राप्नोति, यथा लुङ्लङ्लृङ्क्ष्वडुदात्त इति, ज्ञापकात्सिद्धं, यदयमेकाच उपदेशेनुदात्तादिति प्रत्ययस्येट्प्रतिषेधं शास्ति, यच्च निष्ठायां सेटि न क्त्वासेडित्याह, तज्ज्ञापयति प्रत्ययस्यैवायमिडिति। न च कृत्त्वमित्यादौ प्रातिपदिकप्रत्ययस्य प्रसङ्गः, अत इड्धातोरित्यधिकारात्। एवमपि जुगुप्सते लूभ्यां लूभिरित्यादौ प्रसङ्गः, इदितो नुम् धातोरित्यतो द्वितीयमपि धातुग्रहणमनुवर्तिष्यते, तत्रैकं स्वरूपपदार्थकं, ततश्च धातोरित्येवं धातुसंशब्दनेन विहितस्य धातोः परस्येड्विधानाच्च क्वाप्यनिष्टं रूपं, तदेवं बहुप्रतिविधेयत्वात्प्रतिपत्तिगौरवपरिहारार्थमार्द्धधातुकस्येत्युक्तम्। 'प्रतिषेधनिवृत्त्यर्थमिति'। केन पुनः प्राप्तस्य प्रतिषेधः शङ्क्यते, इदमेव वचनं कल्पकं स्यात् अस्त्यार्द्धधातुकमात्रस्येट्, यतो वलादेः प्रतिविध्यतइति, नेड्वशि कृतीत्यादिकस्तु प्रतिषेधो नियमार्थः स्यात्॥

---

१ हलन्ताच्चेति कित्त्वस्य सिद्धत्वादिति ह॰ पु॰ पा॰।
२ संभवादिति ह॰ पु॰ पा॰।

"स्नुक्रमोरनात्मनेपदनिमित्ते" ॥ स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनमनात्मनेपदनिमित्तएव यथा स्यादन्यत्र माभूदिति। अथ प्रस्तुतः, प्रस्तुतवान्, प्रसुस्तुषति, क्रान्तः, क्रान्तवान्, इत्यत्र 'श्र्युकः किति,' 'सनि ग्रहगुहोश्च' 'यस्य विभाषे'ति प्रतिषेधे प्राप्ते विध्यर्थमेतत्कस्मान्न भवति, पुरस्तात्प्रतिषेधकाण्डकरणात्, तस्य हि प्रयोजनमनाश्रितविधानविशेषस्येण्मात्रस्य प्रतिषेधो यथा स्यादिति, यद्यनात्मनेपदनिमित्तइति प्रसज्यप्रतिषेधः स्नुक्रमोरात्मनेपदनिमित्तत्वे सतीण् न भवतीति, एवं च प्रतिषेधप्रकरणएवैतत्पठितव्यं,तत्रायमप्यर्थः, नञुपादानं न कर्त्तव्यं भवति, तथा तु न कृतमित्येव। अत्र यद्यात्मनेपदशब्देन नञः समासं कृत्वा पश्चान्निमित्तशब्देन षष्ठीसमासः क्रियेत आत्मनेपदादन्यदनात्मनेपदं परस्मैपदमिति यावत्, तस्य निमित्तं, ततश्च यत्र स्नुक्रमौ परस्मैपदनिमित्ते चक्रमिथ, चक्रमिव, चक्रमिम, प्रास्नावीत्, प्रसुस्नुवित्रेत्यादौ तत्रैवेड्भवतीत्यर्थः स्यात्ततश्च कृति न स्यात्प्रस्नविता, प्रस्नवितुं, प्रस्नवितव्यं, प्रक्रमिता, प्रक्रमितुं, प्रक्रमितव्यमिति, तथा चिक्रमिषतीत्यत्रापि न स्यान्नहि सनन्तादुत्पद्यमानस्य परस्मैपदस्य क्रमिर्निमित्तं, परस्मैपदग्रहणमेव च कर्त्तव्यं स्यात्, तस्मादात्मनेपदशब्दस्य निमित्तशब्देन समासं कृत्वा पश्चान्नञा समासः कर्त्तव्यः, प्रसज्यप्रतिषेधे त्वनुन्मेष एवास्य पक्षस्य स्यात्, तत्र यद्यनात्मनेपदनिमित्तइति सप्तम्येकवचनं स्यात्ततोयमर्थः स्यात्, आत्मनेपदस्य यन्निमित्तं ङकारादि तस्मिन्सति न भवतीति, ततश्च प्रस्नवित्रीयतइत्यत्रापि प्रतिषेधः स्याद्विद्यते ह्यत्रात्मनेपदस्य निमित्तं क्यङो ङकार इति। प्रथमाद्विवचनान्तं स्नुक्रमोर्विशेषणमिति दर्शयति। 'न चेत् स्नुक्रमौ आत्मनेपदस्य निमित्तमिति'। वेदाः प्रमाणमिति वदेकवचनं, सूत्रे तु प्रत्येकं निमित्तत्वस्य विवक्षितत्वात् द्विवचनम्, निमित्तशब्दोयमस्ति योग्यतामात्रे कुसूलस्थेष्वपि बीजेषु वक्तारो भवन्ति अङ्कुरनिमित्तान्येतानीति, अस्ति च कुर्वद्रूपे, तत्राद्ये पक्षे कृत्यपि प्रतिषेधः स्यात्, प्रस्नविता प्रस्नवितुं, प्रस्नवितव्यं, प्रक्रमिता, प्रक्रमितुं, प्रक्रमितव्यमिति, अस्ति ह्यत्र यथायोगं

भावकर्मकर्तृविषयत्वादात्मनेपदं प्रति योग्यत्वं तदिह किं विवक्षितमिति पृच्छति। 'क्व च तावात्मनेपदस्य निमित्तमिति'। इतरोपि कुर्वद्रूपपक्षाश्रयणेन परिहरति। 'यत्रेत्यादि'। अत्रैवं व्याख्येयं, यत्रात्मनेपदं तदाश्रयं भवति तत्रैवात्मनेपदस्य निमित्तं, किं पुनस्तद्यत्र तदाश्रयमात्मनेपदं भवतीत्यत आह। 'भावकर्मेत्यादि'। अत्र हि विषये सुक्रम्योः श्रूयमाणमात्मनेपदं भवतीति, कुर्वद्रूपएव निमित्तशब्दो मुख्यः, योग्यतामात्रे त्वौपचारिक इति भावः। ननु च भावकर्मादिषु तएवार्था आत्मनेपदस्य निमित्तं न सुक्रमी, क्व तर्हि प्रतिषेधः स्याद्यत्र हि क्रमिरेव निमित्तम्, अनुपसर्गाद्वा, क्रंसीष्ट क्रंस्यते, नैष दोषः। भावकर्मकर्त्तारः क्रमेश्च वृत्त्यादयः, सर्वमेवैतद्धातोरेव विषयतया विशेषणं, धातुरेव तु साक्षादात्मनेपदस्य निमित्तं, भावादिविषयाद्धातोरात्मनेपदं भवतीति। 'तेनेत्यादि'। यत एवं कुर्वद्रूपमेवात्र निमित्तं तेनायं सत्यात्मनेपदे प्रतिषेध इत्यर्थः। किमुच्यते प्रतिषेध इति, यावता पर्युदासाश्रयेणोपक्रमे व्याख्यातं, तत्राह। 'प्रतिषेधफलं चेदं सूत्रमिति'। सत्यं पर्युदासेपि नियमार्थत्वान्नियमस्य चेतरव्यावृत्तिफलकत्वादेवमुक्तमित्यर्थः। 'प्रस्नोषीष्टेति'। आशिषि लिङ्, भावकर्मणोरित्यात्मनेपदम्। प्रक्रंसीष्टेति, अत्र तु प्रोपाभ्यां समर्थाभ्यामिति कर्त्तरि, सर्वत्रेत्यादिना सूत्रार्थमुदाहरणे दर्शयति। ननु सनन्ताद्विधीयमानस्यात्मनेपदस्य स एव धातुर्निमित्तं न सुक्रमी तत्राह। 'सनन्तादपीति'। पूर्ववदिति वचनात्प्रकृतिगतमेव सनन्तेपि निमित्तमिति भावः। यदा तर्हि सनन्ताद्भावकर्मणोरात्मनेपदं तदा प्रतिषेधो न प्राप्नोति, नहि तदा प्रकृतिगतं निमित्तमपेक्षितं किं तर्हि सनन्तमेव स्वतन्त्रं निमित्तं, पुत्रीयतइत्यादिवत्, एवं तर्हि सनन्ताद्भावकर्मणोरपि पूर्ववत्सन इत्यात्मनेपदं भविष्यति, एतयोरर्थयोः सन्प्रकृतावात्मनेपदस्य दृष्टत्वात्, तत्र यद्यपि सनन्तमपि स्वयमेव निमित्तमुपपद्यते तथापि भावकर्मणोरित्यस्यावकाशः, भूयते, पच्यते, पूर्ववत्सन इत्यस्यावकाशः, शिशयिषते, सनन्ताद्भावकर्मणोरुभयप्रसंगे परत्वात्पूर्ववत्सन इत्यनेन भविष्यति, यदि परं विशेषो नास्तीत्युच्यते तदपि न, अत्रैव विशेषस्य संभ-

वात्, एवमपि न सिध्यति, पूर्ववत्सन इत्यत्र कर्तरि कर्मव्यतिहार इत्यतः कर्तरीत्यनुवृत्तेः, तत्र हि प्रकरणे सर्वत्रैव कर्तरीति संबध्यते, यथापि न संबध्यते एवमपि यदा सनन्तात् णिचि कृते णिचश्चेति भावकर्मणोरिति वा आत्मनेपदं तदा प्रतिषेधो न सिध्यति विक्रंसयते विक्रंस्यत इति, किं च भोस्तदानीमपि प्रतिषेध इष्यते, बाढमिष्यते, यदाह वार्त्तिककारः, सिद्धं तु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात्, क्रमेश्चेति, तदेवमात्मनेपदेन समानपदस्थत्वे प्रतिषेधं कुर्वतो वार्तिककारस्यैवं विधे विषये प्रतिषेध इष्टो लक्ष्यते, यथा पुनर्वृत्तिकारेण व्याख्यातं तथा न प्राप्नोति, कर्तव्योत्र यत्नः । यदि सन्यात्मनेपदे प्रतिषेधः मा कारि निमित्तग्रहणमनात्मनेपद इत्येवास्तु, सति सप्तमी विज्ञास्यते, आत्मनेपदे सति न भवतीति, यद्येतल्लभ्येत कृतं स्यात्तत्तु न लभ्यं, शास्त्रे याः सप्तम्यस्ताः सर्वाः परसप्तम्य इति नियमात्, परसप्तम्यां तु यदि स्नुक्रमोर्विशेषणं स्नुक्रमोरात्मनेपदेनन्तर इति, सिद्धं प्रस्नोषीष्ट, प्रक्रंसीष्ट, प्रस्नोष्यते, प्रक्रंस्यते, तत्र न प्राप्नोति, स्येन व्यवहितत्वात्, अथार्धधातुकस्य विशेषणं स्नुक्रमिभ्यां परस्यार्धधातुकस्यात्मनेपदेऽनन्तर इति, सिद्धं प्रस्नोष्यते प्रक्रंस्यते, प्रस्नोषीष्ट, प्रक्रंसीष्ट, अत्र न प्राप्नोति, सीयुटः आत्मनेपदभक्तत्वात्, उभयथापि प्रचिक्रंसिष्यते, अत्र न प्राप्नोति, नह्यत्र क्रमेस्तत्परस्य सार्वधातुकस्यात्मनेपदमनन्तरं, तस्मान्निमित्तग्रहणं कर्तव्यं तदाह । 'निमित्तग्रहणमित्यादि' । तदात्मनेपदं परं यस्मात्स तत्परः, प्रचिक्रंसिष्यते इत्यादौ स्यप्रत्ययः स परो यस्मात्स तत्परः सन्प्रत्ययः । 'इह त्वित्यादि' । प्रागेव व्याख्यातम् । 'प्रस्नविषायत इति' । रीङ् चतः, वार्त्तिककारमतेप्यत्र प्रतिषेधो न भवति, कथं, समानपदस्थस्येति वचनात्, इडागमेन पदावस्थापेक्षणीया, तत्र वृत्ति विभक्त्यावुत्पन्नायां लक्ष्येपि पदत्वे आत्मनेपदस्यासंनिधानादिट् प्रवर्त्तते, प्रचिक्रंसिष्यत इत्यत्र तु पदावस्थायामात्मनेपदसंनिधानात्प्रतिषेधप्रवृत्तिः । 'आत्मनेपदविषयादिति' । तद्योग्यादित्यर्थः । सन्यात्मनेपदे प्रतिषेध इत्युक्तत्वादिदमारभ्यते, अनुपसर्गात्क्रमेः क्रन्त्वा,

१ सत्यपीति इं॰ पु॰ पा॰ ।

क्रमिता, इत्युभयमपि भवति, अनुपसर्गाद्वेति विकल्पेनात्मनेपदनिमित्तत्वादित्येके । अन्ये त्वात्मनेपदविषयादिति अनन्यभावे विषयशब्दं वर्णयन्तः क्रमितेत्येव भवितव्यमित्याहुः । 'स्नोतेः सनि क्ति चेति' । उपलक्षणमेतत्, क्रमेश्च निष्ठायां यस्य विभाषेति द्रष्टव्यं, प्रतिषेधो भवतीत्यत्र हेतुः प्रागेवोक्तः ॥

"ग्रहो ऽलिटि दीर्घः" ॥ 'ग्रह उत्तरस्येट इति' । कथं पुनरिटो दीर्घत्वं लभ्यते, इडिति यत्प्रकृतं तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्देशेन चेहार्थः, एवं तर्हि षष्ठ्यन्ततयपरं करिष्यामि एवमपि दोषः, प्रकृतमिटमनपेक्ष्येट इत्युच्यमाने ऽविशेषाच्चिण्वदिटोपि दीर्घप्रसंगः, अस्तु तर्हि प्रथमान्तमेव, तत्र दीर्घ इट् भवतीति सामानाधिकरण्येनान्वये सामर्थ्यादीडागमे विधिः संपद्यते, इट् दीर्घ इति चेद्विप्रतिषिद्धं, यदीट् न दीर्घः, अथ दीर्घो नेट्-इट् दीर्घश्चेति विप्रतिषिद्धं, स्यादेतत् । दीर्घ इड्भवतीत्युक्ते सामर्थ्याद्व्यक्तिपरित्यागेन इकारजातिराश्रीयते, दीर्घग्रहणाच्च तद्व्यक्तिसमवेता सा विधीयतइति, एवमपि दोषः, विवरीषतइत्यत्र सनीटि प्राप्ते वृतो वेत्यनेन पक्षे दीर्घइटि च प्रसक्ते सनि ग्रहगुहोश्चेत्युभयस्मिन्नपि प्रतिषिद्धे इट् सनिवेति पक्षे इड्विधीयते, तत्र पुनरिटो विधानाभावात्पक्षे दीर्घ ईकारो न श्रूयेतेति । नैष दोषः । इट् सनि वेत्यत्र दीर्घ इडिति वृत इति चानुवर्तिष्यते, यत्तर्हि विदेशस्थमिटं प्रतिषिध्य पुनर्विधानं तत्र न सिध्यति, जृव्रश्चोःक्त्वि, जरित्वा, जरीत्वा, अत्रोदात्तत्वादिट् प्राप्तः वृतो वेत्यनेन च दीर्घ इट्, ततो द्वयोरपि श्युकः कितीति प्रतिषेधे पुनरिड्विधीयते, न च तत्र दीर्घग्रहणस्यानुवृत्तिसंभवः । ननु च श्युकः कितीत्यत्र नेड्वशीत्यधिकाराद्व्यक्तिपक्षाश्रयणाच्च इट एकमात्रस्य निषेधो न दीर्घस्येटः, ततः किं, वृतो वेत्यनेन विहितो दीर्घ इट् तथैव स्थितः, जृव्रश्चोःक्त्वीत्यनेन चेट् प्रतिप्रसूयते इति जरित्वा जरीत्वेति द्वयमपि सिद्धं[1] भवति, स्यादेवं यद्यागमान्तरमीड्विधीयेत, इह त्विड् दीर्घ इति वचनादिट्कार्य-

१ सिध्यतीति इं० पु० पा० ।

मस्यापि भवत्येव, अन्यथा अग्रहीदित्यत्र ह्म्य[1]न्तक्षणेति वृद्धिप्रतिषेधः, इट ईटीति सिज्लोपश्च, अग्रहीढ्वम्, अग्रहीध्वं, विभाषेट इति मूर्द्धन्य-विकल्पः । जरीत्वेति, न क्त्वा सेडिति क्त्विस्वप्रतिषेध इत्येते विधयो न सिध्येयुः, तस्माद्दिट्कार्यमस्या[2]पीटो भवतीत्यङ्गीकर्त्तव्यं, ततश्च विदेशस्यं प्रतिषिध्य पुनर्विधाने स्थित एव दोषः स्यात्तस्माद्दीर्घं इहग्रहणो विधा-तुम्, एवं तर्ह्यार्द्धधातुकस्येति वर्त्तते, ग्रह उत्तरस्यार्द्धधातुकस्य दीर्घो भवति, इहापि तर्हि प्राप्नोति ग्रहणीयम्, वलादेरिति वर्तते, इहापि तर्हि न प्राप्नोति, ग्रहीता, ग्रहीतुमिति, भूतपूर्वगतिर्विज्ञास्यते, इहापि तर्हि प्राप्नोति, ग्राहक इति, अस्तु तर्हि इडित्येव, ननु चोक्तं षष्ठीनिर्द्दि-ष्टेन चेहार्थ इति ग्रह इति, पञ्चमी इडिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति, तस्मादित्युत्तरस्येति 'प्रकृतस्येति'। आर्द्धधातुकस्येडित्यनन्तरं विहितस्य। 'चिण्वदिटो न भवतीति'। जरीत्वेत्यत्र तु आर्द्धधातुकस्येडित्ययमेवेट् प्रति-षिद्धः प्रतिप्रसूयतइति भवत्येव दीर्घः, इह जरीगृहितेति यङन्तात्तृच्य-ल्लोपयलोपयोः कृतयोर्द्विष्प्रयोगो द्विर्वचनमिति स एवायं ग्रहिरिति दीर्घः प्राप्नोति, पूर्वस्मादपि विधौ यः स्यानिवद्भावः सोपि दीर्घविधौ प्रति-षिद्धः, तस्माद्द्विर्हितविशेषणमिहाश्रयणीयं, ग्रहेर्द्विर्हितमार्द्धधातुकं तस्य य इट् तस्य दीर्घ इति ॥

"वृतो वा"। अत्र यदि वॄ वरणइत्येतस्य तसिला निर्द्देशः स्याद्वृ इत्येव निर्द्दिश्येत, यथा यो यङीति, अथ तस्य ऋकारान्तानां च ग्रहणम्, एवमपि तस्य पृथग्ग्रहणमनर्थकमृकारान्तत्वात्, अथ तस्य ऋकारान्तानां च, तथा च सत्यृतश्च संयोगादेरित्यत्र ऋत इति न वक्तव्यमस्यैवानुवृत्तेः, अथ वृङ्वृञोः ऋकारान्तानां च तथापि वृग्रहणमनर्थकमृकारान्तत्वा-त्तस्माद्वृत्तिकारोपदर्शितानामेव ग्रहणम्। 'वृत इति किमिति'। ऊरिति वक्तव्यमिति मन्यते ॥

"न लिङि" ॥ 'विस्तारिषीष्टेति'। कर्मण्यात्मनेपदम् ॥

१ ह्म्यन्तक्षणेतीति नास्ति ई॰ पु॰ पा॰।
२ दीर्घस्यापीट ई॰ पु॰ पा॰।

"सिचि च परस्मैपदेषु"॥ 'अतारिष्टामिति'। तॄ प्लवनतरणयोः। 'अस्तारिष्टामिति'। स्तृञ् आच्छादने, ञित्त्वादुभयपदी॥

"इट् सनि वा"॥ अत्रातिस्तीर्षतीति परस्मैपदपाठो न युक्तः॥

"लिङ्सिचोरात्मनेपदेषु"॥ 'आत्मनेपदे परइति'। सिच एवैतद्विशेषणं न लिङः, असंभवात्, न चैवं तस्य परस्मैपदेपि प्रसङ्गः, वलादेरित्यधिकारात्, प्रावृषीष्टेत्यादावुश्चेति कित्त्वम्॥

"ऋतश्च संयोगादेर्गुणः"॥ उदाहरणेषु भावकर्मणोरात्मनेपदम्। 'संस्कृषीष्टेति'। समः सुटीत्यत्र संपुंकानां सो वक्तव्य इति वचनात्सत्वम्॥

"स्वरतिसूतिसूयतिधूञूदितो वा"॥ अत्र [1]स्वरतेरनुदात्तत्वादप्राप्ते इतरेषां तु प्राप्ते विभाषा। 'वेति वर्त्तमानइति'। इट् सनि वेत्यतः। 'लिङ्सिचोर्निवृत्त्यर्थमिति'। अन्यथा वाग्रहणसंबद्धयोस्तयोरप्यनुवृत्तिः स्यात्। 'षु प्रेरणइत्यस्य निवृत्त्यर्थं इति'। अन्यथा निरनुबन्धकत्वात्तस्यैव ग्रहणं स्यात्, एवं तर्हि सूङिति वक्तव्यमेवमपि लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति सूयतेरेव ग्रहणं स्याच्च सूतेः, तस्याः परिभाषाया अस्तित्वे ऽयमेव विकरणनिर्देशो ज्ञापकः। 'धू विधूनन इत्यस्य निवृत्त्यर्थं इति'। अन्यथा पूर्ववत्तस्यैव ग्रहणं स्यात्। 'धुवितेति'। कुटादित्वान्ङित्त्वम्। 'स्वरतेरिति'। अस्य विकल्पस्यावकाशः स्वर्त्ता, स्वरिता, ऋद्धनोः स्यइत्यस्यावकाशः, करिष्यति, हरिष्यति, स्वरतेः स्ये उभयप्रसङ्गे विप्रतिषेधः। 'किति तु प्रत्ययइति'। श्र्युकः। ननु चायं विकल्पो यथा एकाज्लक्षणं प्रतिषेधं बाधते तृज्ञादौ, तथा किल्लक्षणमपि प्रतिषेधं बाधेत, न बाधेत, कथं, येन नाप्राप्ते तस्य बाधनं भवति, तस्मादपवादता तावदेकाज्लक्षणमेव प्रतिषेधं प्रत्यस्य भवति, कित्युभयप्रसङ्गे पुरस्तात्प्रतिषेधकाण्डकरणात्प्रतिषेध एव भवति, लिङ्गाच्च, यदयं स्वृयूर्णुभरज्ञपिसनामिति विकल्पं शास्ति, अन्यथा अनेनैव सत्यपि विकल्पस्य सिद्धत्वात्पुनस्तं न

[1] स्वरतेरनुदात्तत्वादप्राप्तविभाषा, इतरेषां तु प्राप्तविभाषेति दे॰ पु॰ पा॰।

विरुध्यात्, वृत्तौ तु विप्रतिषेधशब्देनापि पुरस्तात्प्रतिषेधकाण्डकरणमेव विवक्षितं, समानफलत्वात् ॥

"रधादिभ्यश्च" ॥

रधिर्नशिस्तृपिदृपी द्रुहिर्मुहिर्ष्णुहिष्णिहि ।
रधादयोमी पठिता दिवादिष्वष्ट कृत्स्नभिः ॥

'नंष्टेति'। मस्जिनशोर्झलीति नुम्, तृपिदृप्योरनुदात्तस्य चर्दुपधस्येति पक्षे अमागमः, द्रोढेत्यादौ 'वा द्रुहमुहष्णुहष्णिहा'मिति घत्वढत्वे। 'क्रादिनियमादिति'। ननु च प्रतिषेधस्यासौ नियमः, न च रधादौ कस्य चित्प्रत्ययाश्रयः प्रकृत्याश्रयो वा प्रतिषेधः प्राप्नोति, ययोरपि प्राप्नोति त्रपिदृप्योस्तयोरपि प्रतिषेधे लिट्यनेन व्यावर्तितेप्ययं विकल्पः स्यादेव, विकल्पस्यानियतत्वात्। एवं मन्यते। यावान्कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा तस्य सर्वस्य क्रादिसूत्रेण नियम इति, एवं चोत्तरग्रन्थे प्रतिषेधनियमस्येत्यभावनियमस्येत्येवार्थो द्रष्टव्यः। 'अपर इति'। ननु चास्तु प्रतिषेधस्य प्राबल्यं, किमायातं, नियमस्य प्रतिषेधविषयत्वान्नियमस्यापि प्राबल्यमित्यदोषः। 'नित्यमिटा भवितव्यमिति'। प्रतिषेधाधिकारेण क्रादीनामेव लिटि इण्न भवतीति नियमे विज्ञायमाने धात्वन्तरेषु यावान्कश्चित्प्रतिषेधः स सर्वो मा भूत्, विकल्पस्तु कस्मान्न स्यादिति ॥

निरः कुषः ॥ 'निष्कोष्टेति'। इदुदुपधस्य चाप्रत्ययस्येति षत्वम्। 'निसइति वक्तव्यइति'। प्रादिषु हि निसिति पठ्यते, तथा च निसस्तपताविति निर्देशइति भावः, किमेतस्य ज्ञापने प्रयोजनमित्यत आह। 'तस्येति'। ननु च नित्य एव रुत्वे कृते लत्वं भविष्यति, तत्राह। 'निसो हीति' ॥

• "इण् निष्ठायाम्" ॥ इडिति वर्त्तमाने पुनरिड्ग्रहणं किमित्यत आह। 'इड्ग्रहणं नित्यार्थमिति'। नन्वारम्भसामर्थ्यादेव नित्यमिड्भविष्यति, विकल्पस्य पूर्वेणैव सिद्धत्वादित्यत आह। 'आरम्भो हीति'। यदि तर्हि नित्यार्थमिड्ग्रहणं क्रियते उत्तरत्रापि नित्य एव विधिः स्यादित्यत आह। 'अचेवेति' ॥

"तीषसहलुभरुषरिषः" ॥ 'इषु इच्छायामित्यस्येति'। तौदादिकस्य। 'प्रेषितेति'। एङि पररूपम्। 'उदितं पठन्तीति'। धातुपाठे इच्छार्थमुदितं पठित्वा इहाप्युकारोपादानेन तस्यैव ग्रहणं वर्णयन्तीत्यर्थः। इदमेव चोदित्त्वस्य प्रयोजनं क्त्वायामिड्विकल्पस्यानेनैव सूत्रेण सिद्धत्वात्। ये तूदितं न पठन्ति ते सहिना साहचर्यादिच्छार्थस्य ग्रहणमाहुः। उभयोरप्यकारमात्रं विकरणइति। यथा तु वार्तिकं तथा क्रैयादिकस्याप्यत्र ग्रहणमिष्यते, यदाह, इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेध इति, तन्मते त्रयोपि निरनुबन्धकाः ॥

"सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" ॥ 'भ्रस्जेरेकाच इति'। श्रयतेरुगन्तानां च सनि ग्रहगुहोश्चेति प्रतिषेधः प्राप्त इतरेषां तु नित्यमिट् प्राप्तस्तत्रेदमारभ्यते। 'अर्दिधिषतीति'। लघूपधलक्षणे गुणे अजादेर्द्वितीयस्येति धिस् इत्यस्य द्विर्वचनं, रेफस्य तु न न्द्रा इति प्रतिषेधः। 'ईर्त्सतीति'। आप्ज्ञप्यृधामीदिति ऋकारस्य रपर ईकारः, धकारेण सशब्दस्य द्विर्वचनम्, अत्र लोपोभ्यासस्य। 'बिभ्रज्जिषतीति'। भ्रस्जोरोपधयोरमन्यतरस्याम्। 'बिभ्रक्षतीति'। व्रश्चादिना षत्वं, षढोः कः सि। 'धिप्सतीति'। दम्भ इच्चेतीत्वमित्वं च, हलन्ताच्चेति कित्त्वे नलोपः, पूर्ववदभ्यासलोपः। 'यियविषतीति'। ओः पुयण्ज्यपरइत्यभ्यासस्येत्वम्। 'भृञ् इत्येतस्येति'। दीर्घान्तोयं, तथा च भर इत्यव भवति। 'सिसनिषतीति'। स्तौतिण्योरेवेति नियमादत्र षत्वाभावः। 'सिषासतीति'। षत्वभूते सनि नियमादत्र षत्वम्। 'के चिदत्रेति'। ये त्वेतच पठन्ति ते उपसंख्यानमारभन्ते। 'तितांसतीति'। तनोतेर्विभाषेति पक्षे दीर्घत्वम्। 'पित्सतीति'। सनि मीमाघुरभलभशकपतपदामच इस्, स्कोः संयोगाद्योरिति सलोपः, पूर्ववदभ्यासलोपः। '[1]दिदरिद्रासतीत्येके, दिदरिद्रिषतीति चेति'। इट्पक्षे दरिद्रातेराकारलोपः ॥

"क्लिशः क्त्वानिष्ठयोः" ॥ 'क्लिशित्वेति'। मृडमृदेत्यादिना

१ इदं पाठो मुद्रितमूलपुस्तके नास्ति।

कित्त्वम् । 'विकल्पः सिद्ध एवेति' । उदित्त्वात्स्वरत्यादिसूत्रेण, किमर्थं तर्हि त्काग्रहणमित्यत आह । 'क्लिश उपतापइत्यस्येति' ॥

"वसतिक्षुधोरिट्" ॥ 'उषित्वेति' । पूर्ववत्कित्त्वं, यजादित्वात्संप्रसारणं, शासिवसीत्यादिना षत्वम् । 'वस्तेरित्त्वति' । वस आच्छादनइत्यस्य यङ्लुङ्निवृत्त्यर्थोपि शपा निर्देशो न भवति, तत्रापि क्त्वानिष्ठयोः सामान्यलक्षणेन इड् भवत्येव, वावसितः, वावसितवान्, वावसित्वा, गणाश्रयत्वात्संप्रसारणाभावः ॥

"अञ्चेः पूजायाम्" ॥ 'अञ्चिता अस्येति' । मतिबुद्धीत्यादिना वर्तमाने क्तः, नाञ्चेः पूजायामित्युपधालोपप्रतिषेधः, क्तस्य च वर्तमाने इति कर्तरि षष्ठी ॥

"लुभो विमोहने" ॥ 'लुभित्वा लोभित्वेति' । रलो व्युपधादित्यादिना कित्त्वविकल्पः ॥

"से ऽसिचि कृतचृतच्छृदतृदनृतः" ॥ सइत्यकार उच्चारणार्थः, असिचीति प्रतिषेधात्, तेन स्येप्ययं विकल्पो भवति, कृती छेदने मुचादिः, कृती वेष्टने रुधादिर्द्वयोरपि ग्रहणम्, इदित्त्वस्य प्रयोजनमुक्तं, चृती हिंसाग्रन्थनयोः, उच्छृदिर्दीप्तिदेवनयोः, उतृदिर् हिंसानादरयोः, नृती गात्रविक्षेपे, ईदित्त्वं पूर्ववत् ॥

"गमेरिट् परस्मैपदेषु" ॥ संगंस्यतइति' । समो गम्यृच्छीत्यात्मनेपदम् । 'गमेरिडादेशस्येति' । तेन संजिगंसतइत्यत्र न भवतीति भावः । 'आत्मनेपदेन समानपदस्यस्येति' । इह तु जिगमिषितेवाचरति जिगमिषिन्नीयतइति बहिरङ्गत्वादात्मनेपदस्य प्रतिषेधाभावः, एतच्च प्रश्नविन्नीयतइत्यत्र वार्तिककारमते व्याख्यातम् । 'अन्यत्र सर्वत्रैवेष्यतइति' । कथं पुनरिष्यमाणोपि लभ्यते, योगविभागात्, गमः सकारादाविड् भवतीत्येको योगः, ततः परस्मैपदेष्विति द्वितीयो नियमार्थः, तुल्यजातीयापेक्षत्वान्नियमस्यात्मनेपदविषयइणि[1]वर्ततइति के चिदाहुः । अन्ये मन्यन्ते । परस्मैपदेष्विति सप्तमीनिर्देशादानन्तर्याश्रयणादयमर्थो

१ एव निवर्तत इति पा॰ ई॰ पु॰ ।

भवति, गमेरुत्तरस्य सकारादेरार्धधातुकस्य तिङ्क्ष्वनन्तरेषु यदीड्भवति परस्मैपदेष्वेवेति, ततश्च सङ्गंस्यतइत्यत्रैव व्यावृत्तिः स्यान्न सङ्गंसीष्टेत्यत्र, नापि संजिगंसतइत्यादौ, शपा व्यवधानात् । एकादेशे नास्ति व्यवधानम्, एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव, संजिगंसिष्यतइत्यादौ च नैव स्यात्, तस्मादिष्टिरेवेयम् । अत एवेष्यतइत्युक्तम् । पक्षशेषो नाम ग्रन्थविशेषः । 'तन्मतेनेत्यादि' । अनन्तरोक्तस्य दूषणं न पुनरयं पक्षः स्थापितः, वार्तिकविरोधात् । यदाह । सिद्धं गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधादिति ॥

"न वृद्भ्यश्चतुर्भ्यः" ॥ बहुवचननिर्देशाच्चतुर्ग्रहणाच्चाद्यर्थो गम्यते ।

वृत्तिर्वृधिः शृधिः स्यन्दिश्चत्वारोमी वृतादयः ।

शृधु शब्दकुत्सायाम्, अन्ये प्रसिद्धाः, उदाहरणेषु वृद्भ्यः स्यसनोरिति परस्मैपदम् । 'चतुर्भ्य इति न वक्तव्यमिति' । किं कारणमित्यत आह । 'वृद्ग्रहणं हीति' । यदि व्रुतादिपरिसमाप्त्यर्थं तत्किमायातं वृतादिपरिसमाप्तेरित्यत आह । 'तदेवेति' । अगृह्यमाणविशेषत्वादिति भावः । 'अन्तरङ्गमपीति' । अन्तरङ्गत्वं विकल्पस्यार्धधातुकमात्रापेक्षत्वात् । अयं तु प्रतिषेधो बहिरङ्गः, सकारादिविशेषापेक्षत्वात्, बहिर्भूतपरस्मैपदापेक्षत्वाच्च । ननु चान्येष्वपि वृत्तादिषु आर्धधातुकलक्षणोऽपीडन्तरङ्ग एव, अथ तस्य वचनसामर्थ्यात्प्रतिषेधस्तर्हि विकल्पस्यापि भविष्यति । नैतदस्ति । येन नाप्राप्ते तस्य बाधनं भवति, नाप्राप्तिश्चार्धधातुकस्येडिस्यस्य न तूदिल्लक्षणस्य, यदि परंपरत्वादुदिल्लक्षणमपीटं प्रतिषेधो बाधेत, तदपि न, अन्तरङ्गबहिरङ्गयोर्विप्रतिषेधानुपपत्तेः । कथं तर्हि सत्यपि चतुर्ग्रहणे तस्य प्रतिषेध इत्यत आह । 'चतुर्ग्रहणे हीति' । सति च तस्मिन् चतुर्ष्वां प्रतिषेधेन भाव्यमिति प्रतीतिः, इतरथा संख्याशब्दाभावादेकस्य प्रतिषेधाभावेपि न कश्चिद्बाधः । 'परस्मैपदेष्वित्येवेति' । यद्येवं यत्र वृत्तादिभ्यः परस्यार्धधातुकस्य परस्मैपदमनन्तरं तत्रैव स्यात् वर्त्स्यंतीत्यादौ, विवृत्सतीत्यादौ न स्यात्, शपा व्यवधानात् । एकादे-

शेषि कृते स्थानिवद्भावाद्व्यवधानमेव, विवृत्सिष्यति विवृत्सयतीत्यादौ प्रत्यक्षमेव व्यवधानं कृति परस्मैपदलुकि च परस्मैपदगन्धोपि नास्तीति तत्रापि न स्यादेव तत्राह । 'अत्रापीति' । [1]दृष्टिरेवेयं, विवृत्सिवी-मतवृत्यादौ चोक्त एव परिहारः ॥

"तासि च कृपः" ॥ उदाहरणेषु लुटि च कृप इति परस्मैप-दम् । 'कृपेरपीत्यादि' । अन्यथा कल्प्स्यतीत्यादावेव स्यात् न तु चिकॢ-प्सिता चिकॢप्सत्वमित्यादाविति भावः । इह तु न वृद्भ्यः पञ्चभ्यस्तासि चेति वक्तव्यं, कृपि ग्रहणं तु शक्यमकर्त्तुं, न च वृतादिभ्योपि तासौ प्रसङ्गः, परस्मैपदाभावात्, आत्मनेपदेन समानपदस्थत्वाच्च ॥

"अचस्तास्वत्थल्यनिटो नित्यम्" ॥

यस्थलि क्रादिनियमादिट् प्राप्तः स निषिध्यते ।
पञ्चसूत्र्येत आरभ्य तास्वदित्येष ङेर्वेतिः ॥
उपदेशग्रहोप्यत्र वक्ष्यमाणोपकृष्यते ।
गुणे नित्ये[2] कृतेप्येष ऋदन्ते प्राप्नुयात्कथम् ॥

क्व नित्यमनिडित्यपेक्षायां तासेः सन्निधानात्तत्रैवेति विज्ञायते, यद्वा पूर्वसूत्रात्तासीति वर्त्तते । 'यातेति' । तासावनिट्प्रदर्शनार्थमुप-न्यस्तम् । 'लूत्वेति' । तास्वदित्यनुच्यमाने यत्र क्वापि नित्यानिट-स्थलि प्रतिषेधः स्यात्, लुनातिश्चायं श्र्युकः कितीति प्रतिषेधात्क्विति नित्यानिट्कः । 'ययिव, ययिमेति' । आतो लोप इटि च । 'अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थमिति' । असत्यनिड्ग्रहणे नित्यमित्यनेन प्रतिषेध एव विशेष्येत नित्यमिपन भवतीति । यद्यप्यत्र विकल्पो न प्रकृतस्तथापीदमेव नित्यग्रहणं पूर्वस्य विधेरनित्यत्वं ज्ञापयेत् । सेड्-निवृत्त्यर्थं त्वनिड्ग्रहणं न भवति, कथं, तास्वदित्युच्यते, यथा तासौ न भवति एवं थल्यपीति, न च यस्तासौ सेट् तस्य थलि प्रतिषेधो भवन् तास्वत्कृतो भवति । 'विधोता विधवितेति' । स्वरत्यादिसूत्रेण तासा-

[1] दृष्टिरेवेयमित्यारभ्य अन्यथेत्येतत्पर्यन्तो ग्रन्थ ई० पु० नास्ति ।
[2] गादुणेपि कतवति ई० पु० पाठः ।

विद्विकल्पितः, क्रमेरपि चक्रमिथेति भाव्यं, नहि तासौ नित्यानिट् क्रमिः, आत्मनेपदे इडभावात्परस्मैपदे सेट्त्वात्। 'तासौ विभाषेट स्थलि नित्यमिडागमो भवतीति'। यावान्कश्चिदिडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यतइत्यस्मिन्पक्षइति भावः। यदा तु प्रतिषेधाधिकारेण क्रादीनामेवेण् न भवतीति नियमात्प्रतिषेध एव सर्वो निवर्तते स्वरत्यादिलक्षणस्तु विकल्पो भवत्येवेतिपक्षस्तदा विबुधोथ विबुधविथेत्युभयं भवति, यद्येवं नित्यमनिट इति न वक्तव्यमस्तु यस्तासौ विकल्पितेट् तस्याप्ययं प्रतिषेधः, अतो भारद्वाजस्येति नियमाद्विकल्प एवावस्थास्यते, नैवं शक्यं, स्वरतो हि दोषः स्यात्। भारद्वाजपक्षेपि तस्य प्रतिषेधात् सस्वर्थेत्येव स्यात्, यदा तु विकल्पितेटस्थलि प्रतिषेधोयं न भवति तदा सस्वर्थ सस्वरिथेत्युभयं भवति। 'तास्वदिति वतिनिर्देश इति'। तास्वदित्यस्य वत्यन्तस्य निर्देश इत्यर्थः। तास्वदित्यनुच्यमाने प्रकृतस्य तासीत्यस्यानुवृत्तावप्येतावदेव लभ्येत तासौ नित्यमनिटस्थलीण् न भवतीति, ततश्च यस्तासावसन् असत्त्वादेव नित्यानिट् तस्यापि प्रसज्येत,

तास्वदित्युच्यमाने तु वतेः सादृश्यगोचरात्।
यथा भूतस्य तासौ नेट् तथा भूतस्य थल्यपि॥
इटा न भाव्यमित्येष दोषो नैव प्रसज्यते।
इटस्तास्यसतो धातोर्निषेधे विहिते थलि॥
अभावः सदृशो न स्यात्थलि तास्यसतो भवेत्॥

'जघसिथेति'। स्थानिवद्भावादिडत्यर्तिव्ययतीनामित्येवैष सिद्ध इत्याहुः। 'उत्तरसूत्रेपीति'। एतेनोत्तरार्थ तास्वदित्युच्यतइति दर्शयति। 'अत्रादेशो हीति'। ननु चास्य स्थानी तासावस्ति अस्ति चानिडिति तदादेशस्यापि स्थानिवद्भावात्सत्त्वानिट्त्वे स्यातां, नैतदस्ति। स्थानिवद्भावः शास्त्रीयेषु प्रवर्त्तते, न च तासौ सत्त्वं नाम शास्त्रीयं कार्यम्॥

"उपदेशे ऽत्वतः"॥ अनजन्तार्थ आरम्भः। 'इयष्टेति'। लिट्यभ्यासस्योभयेषामिति अभ्यासस्य संप्रसारणं, व्रश्चादिषत्वम्। 'चकर्षि-

षेति'। कृष विलेखने, भवत्ययं गुणे कृते संप्रत्यकारवान् न तूपदेशे। 'जिघृक्षिषेति'। सनि ग्रहगुहोश्चेतीट्प्रतिषेधाद्भवत्ययं सनि नित्यानिट् न तासौ। 'आनञ्जिथेति'। अत आदेः, तस्मान्नुड्द्विहलः, स्वरत्यादिसूत्रेण तासौ विकल्पितेडयम्॥

"ऋतो भारद्वाजस्य"॥ 'सस्मर्थेति'। स्मृ चिन्तायाम्। 'दध्वर्थेति'। ध्वृ हूर्छने। 'सिद्धे सतीत्यादि'। ऋदन्तानां वृङ्वृञावुदात्तौ, तत्रापि वृङ थल् न सम्भवति आत्मनेपदित्वात्। वृञस्तु ववर्थेति निपातनाद्भाषायामिटा भाव्यं, तस्मात्तयोरिट्प्रतिषेधार्थं तावदेतन्नोपपद्यते, अन्येऽदन्तास्तासौ नित्यानिट इत्यचस्तास्वदित्यनेनैव सिद्धः प्रतिषेधः। ननु च परत्वाद्गुणे कृते रपरत्वे चानजन्तत्वाच्च सिद्ध्यति, पूर्वसूत्रेणाप्यसिद्धिरेव, नह्यकारान्ता उपदेशे ऽत्वन्तः तस्मान्नियमानुपपत्तिः। अस्तु तर्हि दध्वर्थेत्यादौ विध्यर्थमेव, यद्येवं स्यायापचिप्रभृतिषु पूर्वयोगाभ्यां नित्यं थलि प्रतिषेधप्रसङ्गः, जहर्थेत्यादौ भारद्वाजस्येति वचनाद्विकल्पप्रसङ्गः, [1]एवं तर्ह्यचस्तास्वदित्यत्रैव भारद्वाजग्रहणं करिष्यते, तदेवानन्तरयोगेऽप्यनुवर्तिष्यते, इह तु निवर्तिष्यते, सत्यम्, अयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवति, तस्य मतमृकारान्तादन्यत्र ययिथ पेचिथेतीड्भवति ऋकारान्ते नेति, त्वदुक्ते तु न्यासे मतविपर्ययः कृतो भवति, एवं तर्ह्युपदेशग्रहणस्याचस्तास्वदित्यत्रापकर्षादुपदेशेऽजन्तत्वात्सिद्धः प्रतिषेध इति मन्यते, 'ऋत एव भारद्वाजस्येति'। विपरीतस्तु नियमो न भवति ऋतो भारद्वाजस्यैवेति, यदि स्यान्नियमाश्रयणमनर्थकं स्यात्पूर्वोक्तेन प्रकारेण विध्यर्थत्वमेवाश्रयणीयं स्यात्। 'पूर्वयोर्योगयोरिति' ऋकारान्तेष्वनन्तरस्य योगस्याप्राप्तत्वादनन्तरस्य विधिर्वा भवतीति न्यायस्य तावदसम्भवः, यस्य तर्हि प्रसङ्गोऽचस्तास्वदिति तस्यैव नियमो युक्तस्तत्कथं पूर्वयोर्योगयोर्द्वयोरपि विकल्पः, एवं मन्यते द्वयोरनन्तरमस्यारम्भात्तासौ नित्यमनिटां मध्ये ऋत एव भारद्वाजस्य

१ एवं तर्हीत्यारभ्यैवं तर्हीत्यन्तो ग्रन्थः ह॰ पु॰ नास्ति।

नान्येषामित्येवं [1]सामान्याकारेण नियम आश्रयणीय इति। 'तथा हि सतीति'। [2]असति तपरकरणे ऋकारान्तानामप्यत्र ग्रहणं स्यात्तेषां च तासौ सिद्धत्वादचस्तास्वदित्यस्याप्रसङ्गे विध्यर्थमेवेदं स्याच्च ह्रस्वग्रहणेन नियमार्थं, विधिनियमसम्भवे विधेरेव ज्यायस्त्वादित्यर्थः॥

"विभाषा सृजिदृशोः"॥ 'सस्रष्ठ दद्रष्ठेति'। सृजिदृशोर्झल्यमकिति, पूर्ववत्थल्त्वम्।

"इडत्त्यर्तिव्ययतीनाम्"॥ 'अत्र इड्ग्रहणं विस्पष्टार्थमिति'। अथ विकल्पे प्राप्ते नित्यार्थं कस्माच्च भवति तत्राह। 'विकल्पविधाने हीति'। एवमपि प्रतिषेधः प्रकृतस्तन्निवृत्त्यर्थमिड्ग्रहणं स्यादत आह 'प्रतिषेधविधाने इति'॥

"वस्वेकाजाद्घसाम्"॥ वस्वित्यविभक्तिको निर्देशः, वसोरित्यर्थः। 'कृतद्विर्वचनानामिति'। कथं पुनरविशेषोक्तावेव विशेषो लभ्यते, [3]एकाज्ग्रहणसामर्थ्यात्, नहि कश्चिदकृते द्विर्वचनेनेकाजस्ति यन्निवृत्त्यर्थमेकाज्ग्रहणं स्यात्, चिरिजिरिचकाशिभ्यः कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भवितव्यमिति वसोरसम्भवः, ऊर्णोतेस्तु णुवद्भावादेकाज्ग्रहणेनानिवृत्तिः। ननु च जागर्त्तेरस्ति, उषविदजागृभ्योन्यतरस्यामित्यामो विकल्पितत्वात्, वेदेपि जागृवांसो अनुभर्वति द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः, नैकमुदाहरणमेकाज्ग्रहणं प्रयोजयति यद्येतावत्प्रयोजनं स्याज्जागर्तेर्नेत्येव ब्रूयाल्लघीयसी हि साक्षात्प्रतिषेधप्रतिपत्तिः, यदि वा न्यायसिद्धोयमर्थः। तथाहि। द्विर्वचनस्यावकाशः पपाच, इटोवकाशः यत्र कृते द्विर्वचनएकाच् पेचिवान् आदिवान्, बिभिद्वानित्यादौ तूभयप्रसङ्गे नित्यत्वाद् द्विर्वचनम्। 'क्रादिनियमात्प्राप्त इति'। नेड्वशिकृति इति प्रत्याश्रयस्य प्रतिषेधस्य सर्वत्र भावात्क्रादिनियमादेव सर्वत्र वसोरिटः प्राप्तिः। 'आद्ग्रहणमनेकाजर्थमिति'। ननु द्विर्वचने आकारलोपे सति

१ सामानाधिकारेणेति ई० पु० पाठः।

२ असतीत्यारभ्य विभाषा सृजिदृशोरित्यन्तो ग्रन्थः ई० पु० त्रुटितः।

३ लभ्यतइति पा० ई० पु०।

तेषामप्येकाच्त्वादेव सिद्धमत आह । 'द्विर्वचने हीति'। इणिनमित्त आकारलोपो नासति तस्मिन्भवति, ततश्चानेकाच्त्वमित्यर्थः। 'अथा-प्याम्क्रियतइति'। 'आत औ णल' इत्योकारे विधातव्ये औकारविधानेन ज्ञापितमेतत् दरिद्रातेरनित्य आमिति, तेनायमभ्युपगमः दरिद्रिवानिति, नेड्वशिकृतीति प्रतीषेध एव तत्र भवति, अथ घसिग्रहणं किमर्थं यावता द्विर्वचने कृते घसिभसोर्हलि चे'त्युपधालोपे सत्येकाच्त्वादेव सिद्धमत आह। 'घसेरपीति'। 'परत्वादिति'। नित्यत्वञ्चेत्यपि द्रष्टव्यं, तस्य हल्यपि विधानात्।'अनच्कत्वादिति'। स्थानिवद्भावोपि नास्ति हल्-निमित्तत्वादुपधालोपस्य। क्रियमाणे तु घसिग्रहणे नायं दोष इत्याह। 'क्रियमाणे त्विति'॥

"विभाषा गमहनविदविशाम्"॥ 'जग्मिवान् जघन्वानिति'। 'हो हन्तेर्ञ्णिन्नेषु'। 'अभ्यासाच्चे'ति कुत्वम्। 'विशिना [1]तौदादिके-नेति'। यद्यप्यादादिकेन हन्तिना साहचर्यमस्ति तथापि शब्दपरविप्र-तिषेधाद्विशिसाहचर्यमेव व्यवस्थापकमिति भावः। 'ज्ञानार्थस्य त्विति'। सत्ताविचारणार्थयोस्त्वात्मनेपदित्वात् क्वसावसंभव एवेति भावः। 'विद्वा-निति'। पूर्ववदिट्प्रतिषेधः॥

"सनिंससनिवांसम्"॥ क्वसोश्छान्दसत्वादानुपूर्व्याश्च विवक्षित-त्वाच्छन्दस्येवैतन्निपातनम्॥

"ऋद्धनोः स्ये"॥ स्वरत्यादिसूत्रे यदुक्तं स्वरतेरेतस्माद्विकल्पा-दित्यादि तदेव स्मारयति। 'स्वरतेर्वेट्त्वादिति'। वा विकल्पित इडस्य स वेट् तस्य भावो वेट्त्वं, स पुनर्विकल्पितेट्सम्बन्धः॥

"यमरमनमातां सक् च" 'व्यरंसीदिति'। व्याङ्परिभ्यो रम इति परस्मैपदं युक्तमत्र, द्विवचनबहुवचनयोरुदाहरणं, तत्र हि सगिटोः सतो-रस्ति विशेषः, एकवचने त्वयुक्तं विशेषाभावात् तत्राह। 'यमादीना-मिति'। इडन्तग्रहणेत्यत्रापीटीति वर्त्तते, अपासीदित्येतत्तु प्रक्रमाभे-

[1] तौदादिकेनेति मुद्रितमूल पुस्तके नास्ति।

दायोदाहृतं नत्वत्र विशेषोऽस्ति, ननु चात्रापि स्वरे विशेषोऽस्ति माहिमासीदिति, इट्यसत्याद्युदात्तं पदं स्यात्, सति तु तस्य सिज्भक्तत्वाच्चित्स्वरेणोदात्तत्वे 'एकादेश उदात्तेनोदात्त' इत्यन्तोदात्तं पदं भवति, 'तत्रादिः सिचोऽन्यतरस्या'मिति पक्षे आद्युदात्तत्वं पक्षे ऽन्तोदात्तत्वं, नैषोऽस्ति विशेषः, अनिटः सिचः पक्षउपसंख्यानमिति वचनान्माहिकार्षमित्यत्र यथा पक्षे आद्युदात्तत्वं पक्षे चान्तोदात्तत्वं च भवति एवमत्रापि भविष्यति । 'आयंस्तेति' 'समुदाङ्भ्यो यमोऽग्रन्थ' इत्यात्मनेपदं, अनंस्तेत्यत्र कर्मकर्तरि 'न दुहस्नुनमां यक्चिणाविति' चिणः प्रतिषेधः ॥

"स्मिपूङ्रञ्ज्वशां सनि" ॥ ऋ इति धातोर्ग्रहणं न ऋकारान्तानाम्, उत्तरत्र किरादीनामिड्विधानात् । 'पिपविषतइति' । 'ओः पुयण्ज्यपर' इत्यभ्यासस्येत्वम् । 'अञ्जिजिषतीति' । 'अजादेर्द्वितीयस्येति जिशब्दस्य द्विर्वचनं, नकारस्तु न द्विरुच्यते न न्द्रा इति प्रतिषेधात् ॥

"किरश्च पञ्चभ्यः" ॥ किर इति व्यत्ययेनैकवचनं, पञ्चभ्य इति बहुवचनादाद्यर्थावगतिः, कृगॄदृङ्धृङ्प्रच्छतयस्तुदादिषु किरादयः । 'पिपृच्छिषतीति' । रुदविदेत्यादिना सनः कित्त्वं, ग्रहिज्यादि सूत्रेण संप्रसारणम् । 'किरतिगिरत्योरिति' । शेषाणां त्वनुदात्तत्वात्प्रतिषेधः । 'दीर्घत्वं नेच्छन्तीति' । इष्टिरेवेयम् ॥

"रुदादिभ्यः सार्वधातुके" ॥ रुदिस्वप्श्वसनिजक्षिरधादिषु रुदादयः । उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति रुदादिभ्य इति पञ्चम्या सार्वधातुकइति सप्तम्याः षष्ठी प्रकल्प्यते, सप्तमीनिर्देशस्तूत्तरत्रोपयोगं यास्यति । 'प्राणितीति' । 'अनिते'रिति णत्वम् । 'स्वपितेति' । अन्येभ्यस्तु परस्यार्धधातुकस्येटा भवितव्यम् ॥

"ईशः से" ॥ ईश ऐश्वर्ये आदादिकः, से इत्यविभक्तिको निर्देशः । 'ईशिष्वेति' । 'सवाभ्यां वामौ' । एकदेशविकृतस्यानन्यत्वात्सेशब्द एवायम् ॥

"ईडजनोर्ध्वे च" ॥ ईड स्तुतौ अदादिः । 'छान्दसत्वाच्छ्नोलुगिति' । भाषायां तु जायस इत्यत्र नित्यत्वात् श्यनि कृते तेन व्यवधा-

नादिडभावः। 'जन जनने इत्यस्यापीति'। नन्वसौ परस्मैपदी तत्राह। 'तस्य कर्मव्यतिहार इति'। यदि तर्हि तस्याप्यात्मनेपदं संभवति तस्यैव ग्रहणं प्राप्नोति, निरनुबन्धकत्वात्। ईडिना साहचर्यादात्मनेपदिनोपि ग्रहणं भविष्यति। 'तदर्थं केचिदिति'। ये त्वेवं न पठन्ति ते चकारेण कृत्स्नमेव पूर्वसूत्रमनुवर्तयन्ति। 'सकारादेरिति'। स् इति सप्तम्या लुका निर्देशात्तदादिविधिः, यदि तर्हि ईशेरपि ध्वे शब्दे इडागमो भवति, योगविभागो न कर्तव्यः, ईडीशजनां सेध्वयोरिति वक्तव्यम्, एवं हि पृथग्विभक्तिर्नोच्चारयितव्या भवति, चकारश्च न कर्तव्योऽत आह। 'ईशीड्जनां सेध्वयोरिति'। 'लङि ध्वमित्यस्य न भवतीति'। लोट्यपि तर्हि ध्वमित्यस्य न प्राप्नोति तत्राह। 'लोटि पुनरिति'॥

"लिङः सलोपोऽनन्त्यस्य"॥ 'सार्वधातुके यो लिङिति'। नैषा परसप्तमी, सार्वधातुकपरस्य लिङोऽसंभवात्, तस्माद्विषयसप्तमी। जातावेकवचनं, सार्वधातुकेषु मध्ये यो लिङ् सार्वधातुकसंज्ञकस्तस्येत्यर्थः। 'कुर्यादिति'। अत उत्सार्वधातुक इत्युत्वं, ये चेत्युकारस्य लोपः, अत्र यासुट्सुटोः सकारस्य लोपः। 'कुर्युरिति'। झेर्जुस्, यासुट्सकारलोपः, उस्यपदान्तादिति पररूपत्वम्। 'कुर्वीतेति'। सीयुट्सुटोः सलोपः। 'कुर्वीरन्निति'। झस्य रन्, अत्र सीयुट एव लोपः॥

"अतो येयः"॥ सार्वधातुक इति प्रकृतमर्थात् षष्ठ्यन्तं सम्पद्यते तदाह। 'अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्येति'। अवयवसम्बन्धे चैषा षष्ठी, सार्वधातुकस्यावयवस्य याशब्दस्येत्यर्थः। 'इय् इत्ययमिति'। सूत्रे त्वकार उच्चारणार्थः। 'पचेदिति'। इयादेशे कृते अकारेण सहाद्गुणः, वलादिषु वलि लोपः, यकारस्य च श्रवणं पचेयुः पचेयमित्यादौ। 'पचेयुरित्यत्रेत्यादि'। पररूपस्यावकाशः चिनुयुः सुनुयुः,[2] इयादेशस्य तु पचेदित्यादि। पचेयुरित्यत्रोभयप्रसङ्गे परत्वादियादेशः, यदि पूर्वमेव पररूपं स्यात् याशब्दाभावादियादेशो न स्यात्। 'एवमतो लोपस्यापि अा-

१ भवितव्यमिति मुद्रितमूलपुस्तके पाठः।
२ सुनुयुरिति नास्ति ई॰ पु॰।

धकः स्यादिति'। एतच्च मध्येपवादा इति न्यायमनाश्रित्योक्तं, तदाश्रयणे त्वतो लोपस्यैव बाधकः स्यात्। दीर्घस्तु परत्वात्स्यादेव। 'स्यादेतदेवमित्यादि'। दीर्घविधौ तुरुस्तुशम्यमः सार्वधातुकइति प्रकृतं 'भूसुवोस्तिङी'ति च। 'येय इत्यविभक्तिको निर्देश इति'। येय इत्यस्मिन्समुदाये या इत्यविभक्तिको निर्देश इत्यर्थः। 'य इति वेति'। याशब्दात्षष्ठी, 'आतो धातो' रित्याकारलोपः। केचित्तु अतो यास् इति सकारान्तानुकरणं पठन्ति ॥

"आतो ङितः"॥ आकारमात्रस्य ङित्त्वासम्भवादातो ङित इति अधिकरणे षष्ठ्यौ, ङितोऽवयवस्यात इत्यर्थः। उदाहरणेषु स्वरितत्वादात्मनेपदं, ननु गाङ्कुटादिसूत्रे परत्र परशब्दप्रयोगादध्याह्रियमाणो वतिः सप्तमीसमर्थादध्याहर्त्तव्यः, ङितीव ङिद्वदिति, अन्यथा चुकुटिषतीत्यत्र सनो ङित्त्वादात्मनेपदप्रसङ्गादित्युक्तं, सार्वधातुकमपिदित्यत्रापि तदेवानुवर्त्तते, ततश्च पूर्वस्य कार्यं प्रत्येव सार्वधातुकस्य ङित्त्वं न स्वकार्यं प्रतीत्ययुक्तान्युदाहरणानि। लङ्लङोस्तु युक्तमुदाहर्तुम् अपचेतामकरिष्येतामिति' अस्ति ह्यत्रापि स्थानिवद्भावेन ङित्त्वमत आह। 'सार्वधातुकमपिदित्यत्रेत्यादि'। 'मिमाते मिमाथे इति'। असति तपरकरणे श्नाभ्यस्तयोरात इति लोपात्परत्वादयमेव विधिः स्यात् ॥

"आने मुक्" ॥ अत्र आनइति सप्तम्यचरितार्था पूर्वत्र कृतार्थाया अत इति पञ्चम्याः षष्ठीं प्रकल्पयति तस्मिन्निति निर्दिष्टे पूर्वस्येति, तत्र विशेषणविशेष्यभावे कामचारादङ्गेनाद्विशेष्यते न त्वताङ्गमित्यभिप्रायेणाह। 'अकारमात्रभक्तोयमिति'। अङ्गस्यावयवो योऽकारस्तस्य मुगित्यर्थः, किमेवं सति भवतीत्यत्राह। 'अदुपदेशग्रहणेनेति'। उपदेशे अत् अदुपदेशः, यदि त्वकारान्ताङ्गभक्तः स्यात्ततस्तदेवाङ्गं न व्यवदध्यात् तदवयवं त्वकारं व्यवदधात्येवेति स्वरो न स्यात्, न च स्वरविधौ व्यञ्जनमविद्यमानवत्, किं कारणं, हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति परिभाषाया भाष्यकारेण शिथिलितत्वात्, अन्यथा ऽग्निचिद्वानित्यादौ ह्रस्वनुड्भ्यां मतुबिति स्वरप्रसङ्गात्, यदि पुनरयमभक्तो मकारो विकरणप्रत्ययमध्ये

क्रियेत, अभक्ते मुकि स्वरो न स्यादित्येव, यदि पुनरयं परादिः क्रियेत आनस्य मुडिति, परादित्वे दीर्घत्वप्रसङ्गः पचमानः, 'अतो दीर्घो यञी'-ति दीर्घत्वं प्राप्नोति, पाक्षिक एव दोषः, कतरस्मिन्पक्षे, यदि सार्वधातुकइत्येवं तत्, अथ ङीत्येव ततदा न दोषः, तदयं भक्तस्तत्रापि पूर्वान्तः तत्राप्यकारस्य मुगिति स्थितम्। 'यद्येवमिति'। यद्यकारमात्रभक्तत्वात्तद्ग्रहणेन गृह्यतइत्यर्थः। 'अध्यर्द्धमात्र इति'। अर्द्धमधिकं यस्याः सा अध्यर्धा मात्रा यस्यासावध्यर्धमात्रः। 'लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोतीति'। तद्विधावपि तपरनिर्द्देशात्। तत्राह। 'उपदेशग्रहणमिह क्रियतइति'। 'तथा चेति'। यदा द्विमात्रत्वेपि भवति तदा का शङ्काऽध्यर्द्धमात्रत्वइति भावः॥

"ईदासः"॥ आस इति पञ्चम्यचरितार्था पूर्वत्र कृतार्थाया आन इति सप्तम्याः षष्ठीं प्रकल्पयति॥

"अष्टन आ विभक्तौ"॥ सौत्रत्वान्निर्द्देशस्य नल्लोपो न कृतः। 'व्यक्तिनिर्द्देशोयमिति'। यथाश्रुतनिरनुनासिकाकारव्यक्तिर्निर्द्दिश्यतइत्यर्थः। जातिनिर्द्देशस्तु दुष्ट इत्याह। 'आकृतिनिर्द्देशे त्विति'। आकृतिर्जातिर्न संस्थानं, जातिनिर्द्देशे हि शुद्धाया जातेरादेष्टुमशक्यत्वात्तदाधारभूतानां व्यक्तीनां विधानं, तत्र यद्यपि दीर्घोच्चारणसामर्थ्याच्च ह्रस्वप्लुतव्यक्तीनां प्रसङ्गः, दीर्घव्यक्तयस्तु सर्वाः प्रसक्तास्तत्रान्तर्यतोनुनासिकव्यक्तिरेव स्यात्, तस्याः पूर्वेण सह सवर्णदीर्घोप्यनुनासिक एव स्यात्। 'विकल्पेन चायमित्यादि'। यथा च दीर्घग्रहणं कृतात्वनिर्द्देशश्चास्मिन्नर्थे लिङ्गं तथा तत्रैव व्याख्यातम्। 'तदन्तविधिश्चात्रेष्यतइति'। अङ्गाधिकारे तस्य तदुत्तरपदस्य चेति वचनात्, एकवचननिर्द्देशात्स्वरूपस्य ग्रहणं नार्थस्य, तेनोपसर्जनेप्यष्टनि भवति, तत्रापि विकल्पितत्वात्प्रियाष्टा प्रियाष्टानो प्रियाष्टान इत्यपि भवति, तत्रापि भसंज्ञाविषये आत्वपक्षे आतो धातोरित्यकारलोपमिच्छन्ति, प्रियाष्टः पश्येत्यादि, आत्वाभावपक्षे त्वल्लोपे ष्टुत्वं, प्रियाष्ट्णा इत्यादि भवति॥

"रायो हलि"॥ 'मृजेर्वृद्धिरित्यतः प्राग् विभक्त्यधिकार इति'। पूर्वसूत्रान्ते यन्थोयं पठितव्यः॥

"युष्मदस्मदोरनादेशे"॥ 'युष्मदस्मदिति'। पञ्चम्या अदिति भ्यसोद्भावः। 'हलीत्यधिकारादप्यत्र न स्यादिति'। न चादेशो हलादिरस्ति, भ्यसोभ्यमित्ययं तु अभ्यमादेशः। 'उत्तरत्रेति'। योचीति यत्वमादेशे माभूत्त्वमहमित्यादौ शेषे लोप इति शेषव्यवस्थार्थं च। 'तदिहैव क्रियतइति'। लाघवे विशेषाभावात्॥

"द्वितीयायां च"॥ उदाहरणेषु 'ङे प्रथमयोरमि'ति विभक्तेरम्भावः॥

"प्रथमायाश्च द्विवचने भाषायाम्"॥ 'युवयोरिति'। ननु च योचीति यत्वमत्र बाधकं भविष्यति। प्रथमाद्विवचनेपि तर्हि शेषेलोपो बाधकः स्यात्, अथ तस्य वचनाद्बाधः, यत्वस्यापि बाधः स्यात्, पुरस्तादपवादन्यायेन वा यत्वस्यैव बाधः स्यात्॥

"योचि"॥ 'शस्यमकर्त्तुमचीत्येतदिति'। कथम्, अनादिष्टायां विभक्तौ विधीयमानं यत्वमुत्सर्गस्तत्रैव हलादावात्वमपवादः। 'त्वत् मदिति'। 'एकवचनस्य चे'ति ङसेरदादेशः॥

"शेषे लोपः"॥ उपयुक्तादन्यः शेषस्तस्यैव संग्रहश्लोकः। 'पञ्चम्याश्चेत्यादि'। पञ्चम्यादीनां सम्बन्धीनि यान्यद्विवचनानि, अयं तावच्छेषस्तत्र शेषे लोपो विधीयतइति अद्विवचनानीत्येतद्भाषापेक्षं द्रष्टव्यं, छन्दसि तु युवं वस्त्राणीति द्विवचनमपि शेष एव। 'शेषग्रहणं विस्पष्टार्थमिति'। कथं, विभक्तिमात्रे लोपः तस्यानादिष्टायां विभक्तौ यत्वमपवादः, अस्यापि हलादावात्वमपवाद इत्यसङ्करेणात्त्वयलोपाः सिध्यन्ति अनादेशग्रहणं तु क्रियमाणेऽग्रहणे यत्वलोपयोर्विषयविभागार्थं कर्तव्यमेव। 'सन्निपातलक्षण इति'। विभक्तिसन्निपातकृतं युष्मदस्मदोरकारान्तत्वं तद्यदि टापो निमित्तं स्यात्तत्सन्निपातं विहन्यात्। एतच्च त्यदादिशब्दवत्स्त्रीलिङ्गत्वमभ्युपेत्योक्तम्, इदानीं च लिङ्गमेव नास्तीत्याह। 'अलिङ्गे

वेति'। 'केचित्त्विति'। टाग्निश्त्यर्थमेव तएवमिच्छन्ति। 'कथमिति'। यत्राकारो यकारश्च न विहितः स शेषस्तत्र विधीयमानो लोपो अलो'न्त्यस्ये, त्यन्तस्यैव युक्त इति प्रश्नः। अनन्तरोक्तं शेषग्रहणस्य वैयर्थ्यं हृदि कृत्वाह। 'वक्ष्यमाणेति'। आदेशा वक्ष्यमाणा यस्य स वक्ष्यमाणादेशः। कः पुनरसावित्याह। 'ते चेति'। 'मपर्यन्ताद्योन्यः स शेष इति'। स च टिरेव तत्रायं लोप इति स्थानिनोऽधिकरणत्वविवक्षया सप्तमी, किमर्थं पुनर्लोप इत्युच्यते न त्यदाद्यत्वेनैव सिद्धं, न सिध्यति, द्विपर्यन्तास्त्यदादय इति वचनात्, यदा चोपसर्जने युष्मदस्मदी तदा त्यदाद्यत्वं न सिध्यति, टिलोपपक्षे तु सुतरामारम्भणीयम् ॥

"मपर्यन्तस्य" ॥ मपर्यन्तस्येत्यवयवस्य स्थानित्वेन निर्दृशाद्युष्मदस्मदोरित्यवयवषष्ठी विज्ञायते। मः पर्यन्तो ऽवधिर्यस्य स मपर्यन्तः, यद्यपि द्वयोर्द्वौ मपर्यन्तौ तथाप्यभेदविवक्षयैकवचनम्। 'मपर्यन्तस्येति किमिति'। समुदाययोः त्वादेशे आदेशानामप्यदन्तत्वाल्लोपाभाव इति प्रश्नः। 'साकच्कस्य माभूदिति'। तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्प्रसङ्गः। 'सर्वस्य माभूदिति'। साकच्कस्य माभूदिति तु नोक्तं, यस्मादकज्विधावुक्तं त्वया मया त्वयि मयि इत्यत्र सुबन्तस्य प्राक् टेरकजिति। 'अनिष्टं रूपं स्यादिति'। त्वया म्येत्यनिष्टं रूपम्। अथ परिग्रहणं किमर्थं मान्तस्येत्येवोच्येत युष्मदस्मदोर्यो मान्तो भागस्तस्येत्यर्थस्तत्राह। 'मान्तस्येत्येव सिद्धे ऽस्मिन्निति'। अस्मिन्साकच्कस्यादेशाभावे युवकामावकामिति रूपे वा। 'अवधिद्योतनार्थमिति'। पर्यन्तशब्देनावधिं द्योतयामीत्यर्थः, अन्यथा मान्तस्येत्युच्यमाने युष्मदस्मदोः समानाधिकरणं विशेषणं सम्भाव्येत, प्रत्येकसम्बन्धाच्चैकवचनं, ततश्च यत्र मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः, अथापि वैयधिकरण्यमाश्रीयते तथापि यत्र मान्ते तत्र भेदाभावादादेशा न स्युः, व्यपदेशिवद्भावेनापि प्रातिपदिकेन प्रतिषिद्धः, पर्यन्तशब्देन त्ववधि द्योतने तदुपादानसामर्थ्याद्युष्मदस्मदवयवेऽपि युष्मदस्मच्छब्दौ वर्तेते इति

---

१ विधीयमानोऽलोन्त्यस्यैवेति २ पु॰ पाठः।

सर्वत्रादेशसिद्धिः, वैयधिकरण्येन वा सम्बन्धे परिग्रहणसामर्थ्याद्ब्रुपदेशि-वद्भावोऽप्रातिपदिकेनेति प्रतिषेधाप्रवृत्तौ मान्तयोरप्यादेशसिद्धिः। अपर आह सति शेषे पर्यन्तशब्दः, तेन सामानाधिकरण्यासम्भवाद्वैयधिकरण्येनैवान्वयः[1], यदा तु मान्ते युष्मदस्मदी तदा नैवादेशा भवन्ति, तदिदमुक्तं, 'मान्ते माभूद्यदा तदेति'। यदा युष्मदस्मदी मान्ते तदैव माभूत् तदापि वा माभूदित्यर्थः। क्व पुनर्मान्ते युष्मदस्मदी इत्याह। 'युष्मयोरिति'। युष्मानाचष्टे युष्मयति अस्मानाचष्टे अस्मयति णाविष्ठवद्भावे टिलोपः, 'प्रत्ययोत्तरपदयोश्चे' त्यत्रैकवचनाधिकारात्त्वमादेशाभावः। क्विपि णिलोपः। ननु च विभक्तावादेशैर्भाव्यमत्र च णिलोपस्य स्थानिवद्भावाद्व्यवधानमत आह 'स्थानिवत्त्वं चेति'। णेः क्वौ लुप्तत्वा चतल्लोपस्यात्र स्थानिवत्त्वमस्तीत्यर्थः। क्वौ लुप्तं न स्थानिवदिति वचनं न तु क्वौ विधिं प्रति न स्थानिवदित्येवमिति भाष्यकारः, तत्र यो मन्यते मान्तयोरप्यादेशा भवन्तीति तन्मतेनोदाहरणानि, कृदन्तत्वाद्विभक्तयः, एकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदाश्रयविभक्त्यादेशाः प्रकृत्यादेशाश्च त्वादयः, तत्र त्वाहौ सावित्यादिविषये ते भवन्ति, अन्यत्रादेशविभक्तौ लोपः, अजादौ यत्वं, हलादावात्वं, त्वं, युवां यूयं युवां युवां युवान् युष्या युवाभ्यां युवाभिः तुभ्यं युवाभ्यां युष्भ्यं युवत् युवाभ्यां, युवत्, तव युष्योः युवाकं युष्यि युष्योः युवासु, एवमस्मदोपि द्रष्टव्यं, मपर्यन्तापेक्षया तु शेष आश्रीयमाणे मात्परस्याभावाल्लोपाभावात् युष्मभ्यं युष्मदित्यादि भवति, यदा तु त्वामाचष्टे मामाचष्ट इति विगृह्य क्विप् क्रियते तदा प्रत्ययोत्तरपदयोश्चेति त्वमयोः कृतयोः प्रकृत्यैकाजिति प्रकृतिभावादसति टिलोपे ऽत उपधाया इति वृद्धिः, यदि निष्ठितमङ्गं ततो वृद्ध्यभावः, त्वद्स् त्वाद्स् मद्स् माद्स् इति स्थिते मपर्यन्ताभावात्त्वाहौ सावित्यादेरप्रवृत्तौ वृद्धिपक्षे त्वामिति भवति। पक्षान्तरे तु त्वमिति, द्विवचने तु त्वां, जसि त्वं, द्वितीयादिषु तु त्वां त्वां त्वान् त्वया त्वाभ्यां त्वाभिः त्वम् त्वाभ्यां त्वभ्यं त्वत् त्वाभ्यां त्वत् त्व त्वयोः त्वाकं त्वयि त्वयोः त्वासु, एवमस्मदोपि, यदा तु द्विवचना-

१ वैयधिकरण्येनान्वयइति ई० पु० पाठः।

न्ताधिणच् क्रियते तदापि युष्मयत्यस्मयतीति णिचि भवति, विभ-क्त्यभावाद्युवावयोरभावः, एकार्थत्वाभावात्प्रत्ययोत्तरपदयोश्चेत्यस्याप्य-भावः, विभक्तौ तु युवावादेशौ त्वाहौ सावित्यादि विषये तु तएव भवन्ति। ये तु मान्तयोरादेशौ नेच्छन्ति तेषां सौ शेषेलोपपक्षे युषमस-मिति भवति। पक्षान्तरे तु युष्ममस्ममिति, एवमन्यत्रापि द्रष्टव्यं, गहनोयं प्रक्रिया तर्क्क इत्युपरम्यते ॥

"युवावौ द्विवचने" ॥ 'द्विवचनइत्यर्थग्रहणमिति'। वक्तीति वचनं कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट्, द्वयोरर्थयोर्वचने द्विवचने प्रथमा-द्विवचनान्तश्चैतत्तदाह। 'द्विवचने युष्मदस्मदी इति'। के पुनस्ते इत्याह। 'द्व्यर्थाभिधानविषये इति'। एतच्च वचनग्रहणाल्लभ्यते, कथं, द्वित्वइति वक्तव्यं, विभक्तावित्येव, द्वित्वे या विभक्तिस्तस्यामित्यर्थः, अर्थग्रहणे सति यदिष्टं सम्पद्यते तत् दर्शयति। 'यदेति'। पारिभाषिकस्य द्विवचनस्य ग्रहणे तस्यास्मिन्विषयेऽभावाद्युवावादेशौ न स्यातामित्यव्याप्तिः स्यादिति भावः। 'आदेशान्तरेण बाध्येते इति'। बाधस्तु परत्वादित्य-त्रैव वक्ष्यते, अतिक्रान्तं युवामिति सौ जसि चादेशान्तरेण बाधः, द्विव-चनस्य तु पारिभाषिकस्य ग्रहणेपि सिद्धिरिति प्रथमाया अतिक्रमः, उत्तर-त्रापि द्विवचनस्यातिक्रमेऽयमेव हेतुः, तत्र चानादेशे विभक्तौ हलादौ द्विती-यायां चात्वम्, अजादौ यत्वं, शेषे लोपः, ङेप्रथमयोरमित्यादयो विभक्त्या-देशाश्च यथायथं द्रष्टव्याः। 'परत्वादिति'। त्वाहादीनामवकाशः यदा बह्वर्थे युष्मदस्मदी अतिक्रान्तो युष्मानतित्वमत्यहं, युवावयोरवकाशः युवामावां द्व्यर्थत्वे सति, सावुभयप्रसङ्गे विप्रतिषेधः। 'यदा त्वित्यादि'। पारिभाषिकस्य ग्रहणे तत्रापि प्रसङ्ग इत्यतिव्याप्तिः स्यादिति भावः।'अति-क्रान्तौ त्वामतित्वामिति'। प्रथमायाश्च द्विवचने भाषायामित्यात्वं, यदात्र पारिभाषिकस्य ग्रहणं तदा त्वमावेकवचनइत्यत्रापि पारिभाषिकस्यैक-वचनस्य ग्रहणमिति मत्वेदमुदाहृतम्, अथापि तत्राप्यर्थग्रहणं तथापि बह्व-र्थेतिप्रसङ्ग इत्याह। 'अतिक्रान्तौ युष्मानिति'। पूर्ववदात्वम्। 'एवं ज्ञेय-मिति'। अतियुष्माम्। अतियुष्माभ्याम्। अतियुष्मयोः। एवमस्मदः ॥

"यूयवयौ जसि" ॥ 'परमयूयमिति'। अत्र पारम्पर्ययोगो यथासम्भवं द्रष्टव्यः । 'तदन्तविधिरत्र भवतीति'। अङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वचनात् । यद्यपि तदन्तस्य तदापि न सर्वस्य युष्मदस्मदोर्मपर्यन्तस्येत्यधिकारात् ॥

"त्वाहौ सौ" ॥ 'त्वमिति'। यद्यप्यत्र त्वमावेकवचनइति त्वादेशः सिद्धः तथाप्यहादेशस्तावद्विधेयः, तत्र चाहः साविल्युच्यमाने युष्मदोपि प्रसङ्गः, अस्मदोहः साविल्युच्यमाने गौरवं स्यात् । तस्मादत्रापि त्वादेश एव विधेयः, किं चातिक्रान्तो युवां युष्मान्वा ऽतित्वमित्यत्र त्वादेशस्य शङ्कापि नास्ति ॥

"त्वमावेकवचने" ॥ 'एकवचनइत्यर्थनिर्देश इत्यादि'। एतच्च द्विवचनइत्यर्थनिर्देश इत्येतदनुसारेण योज्यम् । अर्थग्रहणे यदिष्टं संपद्यते तद्दर्शयति । 'तदेति'। पारिभाषिकस्य त्वेकवचनस्य ग्रहणेत्र न स्यादित्यव्याप्तिः । 'अतिक्रान्तौ त्वामिति'। तदापि त्वमौ भवत इत्यस्योदाहरणम् । 'अतित्वामिति'। पूर्ववदात्वम् । 'एवमन्यदुदाहर्त्तव्यमिति'। एतदतित्वमत्यह मित्यनेनापि सम्बध्यते । अतियूयम् । अतितुभ्यम् । अतितव । एवमस्मदः । अतित्वामतिमामित्यनेन तु सम्बन्धः स्पष्ट एव । अतित्वां पश्य अतित्वान् अतित्वाभ्याम् । अतित्वाभिः अतित्वभ्यम् । अतित्वत् । अतित्वयोः । अतित्वाकम् । अतित्वयि । अतित्वयोः । अतित्वासु । एवमस्मदः, अत्रानन्तरं यदा युष्मदस्मदी द्वित्वबहुत्वयोर्वर्त्तेते समासार्थस्यैकत्वं तदा त्वमौ न भवतः, अतिक्रान्तं युवामतियुवाम् । अत्यावाम् । अतिक्रान्तं युष्मान् अतियुष्मान् । अस्मान् । एवं नेयमिति पठितव्यं पूर्वानुसारेण गम्यमानत्वान्न पठितम् ॥

"प्रत्ययोत्तरपदयोश्च" ॥ 'एकवचने वर्त्तमानयोरिति'। एकार्थाभिधानविषययोरित्यर्थः, वस्तुकथनं चैतत् न तु शब्दार्थकथनम् । एकवचने इत्यस्य प्रथमाद्विवचनान्तत्वात् । 'त्वदीय इति'। त्यदादीनि चेति वृद्धसञ्ज्ञा, वृद्धाच्छः । 'त्वत्तर इति'। पारम्पर्यवत्प्रकर्षयोगः । 'विभक्तावित्यधिकारादिति'। ननु च पूर्वसूत्रे विभक्ताविति न सम्भंत्स्यते ।

कथमावृद्धेरनुवर्त्तमानं न सम्बन्ध्येत। एवमपि योगविभागो न कर्त्तव्यः त्वमावेकवचने प्रत्ययोत्तरपदयोरित्येकयोग एव कर्त्तव्यः, एवं हि चकारो न कर्तव्यो भवति। नैवं शक्यम्, एवं ह्युच्यमाने यथासङ्ख्यं प्राप्नोति युष्मदः प्रत्यये ऽस्मद उत्तरपदइति। अथ क्रियमाणेपि योगविभागे यावता निमित्तयोः साम्यं कस्मादेव यथासङ्ख्यं न स्यात्, नैष दोषः। चकारोत्र क्रियते स द्वयोरपि द्वे निमित्ते समुच्चेष्यति। 'ननु चेति'। चोदकः, प्रकृतिप्रत्यययोः पूर्वोत्तरपदयोश्च मध्ये या वर्तते सान्तर्वर्त्तिनी विभक्तिः। परिहरति। 'नैवं शक्यमिति'। लब्धुमिति शेषः। किं कारणमित्याह। 'तस्या लुका भवितव्यमिति'। लुक् तु सुपो धातुप्रातिपदिकयोरित्यनेन। 'अन्तरङ्गावित्यादि' चोदकः, विभक्तिमात्रापेक्षत्वादन्तरङ्गत्वं, लुक्तु पश्चादुत्पन्नः प्रत्ययमुत्तरपदं वापेक्ष्य धातुत्वप्रातिपदिकत्वयोरुपजातयोः प्राप्नुवन् बहिरङ्गः, यद्यप्ययं नित्यः तथापि नित्यान्तरङ्गयोरन्तरङ्गमेव बलीयः, यथोक्तं परनित्यान्तरङ्गप्रतिपदविधयो विरोधिनः संनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति। 'एतदेवेत्यादि'। परिहारः। किमेतस्य ज्ञापने प्रयोजनमित्याह। 'तेनेति'। प्रथमेनादिशब्देन गोमत्यतीत्यादेर्ग्रहणं द्वितीयेन दीर्घहल्ङ्यादिलोपयोः, हल्ङ्यादिलोपे हि प्रत्ययलक्षणेन नुमादि स्यादेव लुकि तु न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाच्च भवति, ज्ञापनस्य प्रयोजनान्तरमाह। 'एवं चेति'। पुनश्चोदयति। 'अथेति'। असति हि प्रयोजने ज्ञापकं भवति, अस्ति चात्र प्रयोजनं, किम्, एषामेव त्वाहादीनामादेशान्तराणां बाधनं, सत्येतस्मिन्प्रयोजने न ज्ञापनमुपपद्यतइति परिहरति। 'लक्ष्यस्थित्यपेक्षयेति'। गोमत्प्रिय इत्यादिकं लक्ष्यं लोके साधुभावे स्थितं तदादेशान्तरबाधनार्थेस्मिन्विज्ञायमाने न संगृहीतं स्यात्, तच्चापेक्ष्यं प्रयोगमूलत्वाद्व्याकरणस्य, तस्मात्तदपेक्षया नैतदादेशान्तराणां बाधनार्थं युक्तं विज्ञातुमिति। अपर आह यद्येतदादेशान्तराणां बाधनार्थं स्यात् मपर्यन्तस्येत्यनुवृत्तिरपार्थिका स्यात्, कथमुत्सर्गसमानदेशत्वादपवादानां श्यनादिषु तथादृष्टत्वादिति। नायं नियम उत्सर्गसमानदेशा अपवादा इति, श्नमादिषु व्यभिचारात्, नहि श्नम्

दुजकचः शबादिभिः समानदेशास्तस्माद्यद्यवश्यमुपपत्तिर्वक्तव्या, एवं वक्तव्यमिह त्वाहादयोऽप्यनुवर्त्तन्ते मपर्यन्तस्येति च तत्र त्वाहाद्यनुवृत्त्यैव तद्बाधे सिद्धे मपर्यन्तानुवृत्तिरप्राप्तप्रापणार्था सती ज्ञापकमुक्तस्यार्थस्येति। वयन्तु ब्रूमः मपर्यन्तस्येत्येवानुवर्त्य तस्यादेशौ विधेयौ यदि चान्तरङ्गा आदेशाः स्युः प्रत्ययोत्तरपदयोर्मपर्यन्तस्य न क्वापि सम्भव इति तस्यादेशविधानमनुपपन्नं स्यादिति ज्ञापकमुक्तस्यार्थस्येति॥

"त्रिचतुरोः स्त्रियान्तिसृचतसृ"॥ 'त्रिचतुरोरेव विशेषणमिति'। श्रुतत्वात्। 'नाङ्गस्येति'। विपर्ययात्। तेन किं सिद्धं भवतीत्याह। 'तेनेति'। 'प्रियतिसेति'। अनङ् सौ, ऋदुशनस्पुरुदंसोनेहसाञ्चेत्यनङ्। 'प्रियतिस्राविति'। ऋतो ङिसर्वनामस्थानयोरिति गुणं परमपि बाधित्वाऽस्मत्सूत्रेण रादेशः। 'प्रियतिसृ इति'। इकोचि विभक्ताविव्यस्य ग्रहणेन ज्ञापितं लुमता लुप्तेऽपि क्वचित्प्रत्ययलक्षणं भवतीति, तेन स्वमोर्नपुंसकादिति नित्ये लुकि कृतेऽपि तिसृभावः। 'प्रियतिसृणी इति'। रादेशात्पूर्वविप्रतिषेधेन नुमिति क्वचित्पठ्यते। 'नद्यृतश्चेति कप्न भवतीति'। समस्यमानदशायामृकारान्तस्य तत्र ग्रहणमिति भावः। कबभावे हेतु 'विभक्त्याश्रयत्वादित्यादि'। एवं तावत् स्त्रियामित्यनेन त्रिचतुरोर्विशेषणादव्याप्तिपरिहारो दर्शितः। अतिव्याप्तिरपि परिहृतेत्याह। 'यदा चेति। 'तिसृकेति'। स्वार्थे कप्रत्ययः, अल्पत्वे कुत्सितत्वे सञ्ज्ञायां वा। तत्र विभक्तेर्लुकि कृते तत्र विधीयमानस्तिसृभावो न स्यादिति वचनं, तत्र स्वार्थिकप्रत्ययान्तत्वाद्बहुवचनान्तस्तिसृकाशब्दः सञ्ज्ञेत्येके ग्रामस्य कस्य चिदेषा सञ्ज्ञा रूढिरिति नास्ति बहुवचनप्रसङ्ग इत्यन्ये। 'चतसरीति'। यथा प्रियतिस्रावित्यत्र सर्वनामस्थानलक्षणं गुणं बाधित्वा रादेशो भवति तथा ङावपि प्राप्नोति तथा चोत्तरसूत्रे प्रियतिस्रीति ङावपि रादेशमुदाहरिष्यति पूर्वविप्रतिषेधं च वक्ष्यति। अत्राहुः। अस्मादेव निर्देशादर्थप्रधानयोरेवादेशः। इह तु स्वरूपप्रधानत्वात्तदभावे गुण इति। 'चतस्र इति'। अत्र स्थानिवद्भावा 'च्चतुरःशसी' त्यन्तोदात्तत्वे सति 'उदात्तयणो हल्पूर्वादि'ति शस उदात्तत्वप्रसङ्गः, स निपातन-

स्वरेण बाध्यते, यथैव तर्हि निपातनस्वरः शसि स्वरं बाधते तथा षट्त्रिचतुर्भ्यो हलादिरित्येतं विभक्तिस्वरमपि बाधेत तत्राह । 'चतसृणामित्यत्र त्विति' । तत्र कारणमाह । 'हलादिग्रहणसामर्थ्यादिति' । तत्र हलादिग्रहणस्य चतस्रः पश्येत्येतदेव व्यावर्त्यं नान्यत्किञ्चित् । एतच्च तत्रैवोपपादितं, यदि च निपातनस्वरो विभक्तिस्वरस्यापि बाधकः स्यात्तदान्तरेणापि हल्ग्रहणं विभक्तेः स्वरो न भविष्यति किं हलादिग्रहणेन, तत्क्रियमाणं ज्ञापयति निपातनस्वरं विभक्तिस्वरो बाधतइति । अन्येत्वाहुः । हलादिग्रहणादेव चतस्रः पश्येत्यत्र 'चतुरःशसी'त्यस्याप्रवृत्तिरवसीयते । यदि स्यात्तत 'उदात्तयणो हल्पूर्वादि'ति स्यादेव विभक्तेरुदात्तस्वमिति तद्व्यावृत्तये हलादिग्रहणमनर्थकं स्यात् । तस्मादाद्युदात्तनिपातनमेव न कर्तव्यमिति । तत्राद्युदात्तस्य चतुश्शब्दस्यान्तर्यंत आद्युदात्त एव चतस्रादेशे सति चतसृणामित्यत्र 'षट्त्रिचतुर्भ्यो हलादि'रिति विभक्तेरुदात्तत्वं भवति ॥

"अचि र ऋतः" ॥ 'पूर्वसवर्णो त्वित्यादि' । तिस्रःपश्येत्यत्र 'प्रथमयोः पूर्वसवर्ण' इत्यस्यापवादः, प्रियतिस्रः स्वमित्यत्र 'ऋत उदित्युत्वस्य । प्रियतिस्रि प्रियतिस्रौ प्रियतिस्रस्तिष्ठन्तीत्यत्र 'ऋतो ङिसर्वनामस्थानयो'रिति गुणस्य । ननु यत्र विध्यन्तरस्याप्राप्तिः प्रियतिस्रा प्रियतिस्रे प्रियतिस्रोरिति तत्र इको यणचीत्येव सिद्धमिति विध्यन्तरस्य विषयइदमारभ्यते. तत्र मध्येपवादाः पूर्वान्विधीन्बाधन्तइति उत्वपूर्वसवर्णो बाधतइति युक्तं, गुणविषये तु परत्वात्स एव स्यादित्यत आह । 'परमपि हीति' । 'ऋत इति किमिति' । तिसृचतस्रोरनुवृत्तेरलोन्त्यस्येत्येव सिद्धमिति प्रश्नः । 'तिसृचतस्रोः प्रतिपत्त्यर्थमिति' । तिसृचतस्रोरादेशयोरजादावपि विभक्तौ प्रतिपत्तिर्यथा स्यादित्यर्थः । 'अन्यथा हीति' । ऋत इत्यनुच्यमाने षष्ठीनिर्दिष्टत्वात् त्रिचतुरोरेवायमादेशः स्यात् स च नाप्राप्ते तिसृचतस्रोर्विधीयतइति तयोरपवादः स्यादित्यर्थः ॥

"जराया जरसन्यतरस्याम्" ॥ 'अतिजरांसीति' । अतिजर इ इतिस्थिते यदि पूर्वं नुमागमः स्यात्सोङ्गभक्तोङ्गमेव न व्यवदध्यात् ।

तदवयवं तु जराशब्दं व्यवदधात्येवेति सत्यपि तदन्तविधौ निर्दिश्यमानस्यादेशा भवन्तीति जरशब्दान्तस्याङ्गस्यावयवो यो जराशब्दः तस्य विभक्त्यानन्तर्यं विधीयमानो जरसादेशो न प्राप्नोति। अथापि स्यात् तथापि सकारात्परस्य नुमः श्रवणं स्यात्। तस्मात्परत्वात्पूर्वं जरसादेश एष्टव्यः तत्र कृते झलन्तलक्षणो नुम् अतिजरसं पश्येत्यत्र अतिजर अम् इति स्थिते एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरसादेशे कृते 'स्वमोर्नपुंसका'दिति लुक् प्राप्नोति, न च तदानीमम्भावस्य प्रसङ्गः, अनदन्तत्वात्। ननु चातिजरशब्दस्यादन्तत्वात्तस्यामवस्थायामम्भावेन बाधितस्य लुकः पुनः प्रसङ्गो न युक्तः भ्रष्टावसरत्वात्। नैतदस्ति। नात्राम्भावः प्रवृत्तः परत्वान्नित्यत्वाच्च जरसादेशेन बाध्यते, तत्र कृते लुक्प्रसङ्गः, एवं तर्हि सन्निपातपरिभाषया लुङ् भविष्यति। अजादिसन्निपातेन जरसादेशो निष्पन्नो नोत्सहते तस्य लुको निमित्ततां प्रतिपत्तुं, यद्येवमतिजरसं ब्राह्मणकुलं तिष्ठति अतिजरसैरिति न सिद्ध्यति, कथं सोर्भिसश्चाकारान्तसन्निपातेनाजादिरादेशः कृतोऽकारान्तत्वविघातिनो जरसादेशस्य निमित्तं न स्यात्। इष्टमेवैतत्सङ्गृहीतम्। अतिजरमतिजरैरिति भवितव्यमेव गोनर्दीयस्य पक्षः, तदिदमुच्यते।'इहेत्यादि'। इहेति वाक्योपन्यासे। अतिजरसं ब्राह्मणकुलमित्यादि भवितव्यमित्यन्तं गोनर्दीयस्य मतं न पुनर्लुक्शास्त्रं प्रवर्त्ततइति यदुक्तं यच्चोक्तम् अतिजरं ब्राह्मणकुलमित्यादि तत्रोभयत्रापि हेतुः।'सन्निपातलक्षणइति'। न पुनर्लुक्शास्त्रमित्यत्र पुनःशब्दस्यायमर्थः पूर्वं या लुक्प्राप्तिः साम्भावेन बाधिता या तु जरसादेशे कृते पुनः प्राप्तिः सापि सन्निपातपरिभाषया न भवतीति।'अन्ये त्वित्यादि'। एतच्च 'टाङसिङसामिनात्स्याः' 'अतोभिस ऐसि' त्यत्र व्याख्यातम्॥

"त्यदादीनामः"॥ द्विपर्यन्ता[१] 'इत्यादि'। इष्टिरेवेयम्। यत्तूच्यते शेषे लोपवचनं ज्ञापकमिति तदयुक्तम्। उपसर्जनार्थत्वादतियूयमतिवयमिति। यदा तु शेषेलोपष्टिलोपस्तदा तु सुतरामज्ञापकम्। 'पाठादेव पर्युदस्ता इति'। तथा च सर्वादिसूत्रे वार्तिकं 'सञ्ज्ञोपसर्जनानां प्रतिषेधः

१ मुद्रितमूलपुस्तके द्विपर्यन्तानां त्यदादीनामत्वमिष्यतइति पाठो दृश्यते।

पाठात्पर्युदास इति'। तेन पाठोपजीवनेन प्रवर्त्तमानमिदमपि संज्ञोपसर्जनीभूतानां न भवति। 'त्यदादीति'। त्यदादीनामर्थः प्रधानं यत्र समासे तत्रेत्यर्थः। नहि ते पाठात्पर्युदस्ताः।

"किमः कः"॥ 'तेनाकार एव किमो न विधायत इति'। कथं पुनरकारविधाने क इत्यादि रूपसिद्धिः, यावतान्त्यस्य प्राप्नोति। न चान्त्यस्य पूर्वेण सिद्धः, द्विपर्यन्तास्त्यदादय इत्युक्तत्वात्। अपरे पुनरेतच्चोद्यभयादेवं पठन्ति तेनाकार एव इमो न विधीयतइति, अयमर्थः। इम इत्येतावत्सूत्रमस्तु, त्यदादीनाम इत्येव त्यदादीनां संबन्धिन इमोकारो भवति तत्र नानर्थकेलोन्त्यविधिरिति सर्वस्यैवेमोऽकारो भवति, तेषामेवं पठतामुत्तरत्र किमो ग्रहणं कर्त्तव्यं, न कर्त्तव्यम्। उति होरिति वक्ष्यामि इम इत्येव, ततो वाति, इम इत्येव इमोवकारादेशो भवति, तस्मात्साकचकार्थमेव कादेशो विहितः॥

"कु तिहोः"॥ तिशब्दस्य विभक्तिसञ्ज्ञकस्याभावात्तकारे इकार उच्चारणार्थः। 'कुहेति'। 'वा ह च छन्दसी'ति हप्रत्ययः॥

"क्वाति"॥ 'क्वेति'। किमोदित्यत्प्रत्ययः। अथादेशान्तरकरणं किमर्थं न प्रकृतः कुशब्द एव विधीयते एवं च कृत्वा योगविभागोपि न कर्त्तव्यः, कुतिहात्स्वित्येवास्तु, का रूपसिद्धिः, यणादेशे कृते क्वेति सिद्धम् ओर्गुणस्त्वङ्गवृत्ते पुनर्वृत्ताविति वचनान्न भविष्यति, यणादेशस्त्वनाङ्गत्वाद्भवत्येव तत्राह। 'आदेशान्तरकरणमोर्गुणनिवृत्त्यर्थमिति'। निष्ठिततत्वं दुर्ज्ञानमिति भावः, एवं तर्हि किमोदित्येतत्किमोद्वदिति वक्तव्यं टिलोपे कृते क्वेति सिद्धमत आह। 'किमोद्वदिति चेति'। कथं पुनः प्रत्ययान्तरे रूपसिद्धिः यावता ककारस्य जश्त्वं प्राप्नोति, टिलोपस्यासिद्धत्वान्न भविष्यति, कथमसिद्धत्वम्, असिद्धं बहिरङ्गमन्तरङ्गे, टिलोपो हि डित्प्रत्ययापेक्षत्वाद्बहिरङ्गः, जश्त्वं तु तदनपेक्षत्वादन्तरङ्गम्। 'साकच्कार्थमिति'। साकच्के हि प्रत्ययान्तरे विहिते कद्वेति स्यात्। यथान्यासे तु तत्रापि क्वेत्येव भवति॥

"तदोः सः सावनन्त्ययोः" ॥ साविति प्रथमैकवचनस्य ग्रहणं न सप्तमीबहुवचनस्य 'स्यश्छन्दसि' 'सोचि लोपे चेदि'त्यादि निर्देशात्। नाप्युभयोः, तथाहि सति सीत्येव ब्रूयात्, सकारादौ विभक्ताविति । 'अनत्ययोरिति किमिति' । विशेषणविशेष्यभावे कामचारात्त्यदादिषु सकारान्तस्यासम्भवाच्च त्यदादिभिस्तदोर्विशेषणादनन्त्ययोस्तावत्सिद्धम् । अन्त्यस्य तु त्यदाद्यत्वं भविष्यतीति प्रश्नः, अत्वस्य सोरन्यत्र सावकाशत्वात्सौ परत्वादिदमेव स्यादित्युत्यत्तरं, तत्र केवले सौ पुल्लिङ्गे विशेषाभावात्सम्बुद्धेौ स्त्रियां च प्रत्युदाहृतं, किमर्थं पुनस्तदोरित्युच्यते सवर्णग्रहणमेव क्रियेत, तोःसःसावनन्त्यस्येति । नकारस्यापि तर्हि प्राप्नोति तस्माद्वुड्घि अनेषः अनयम् अनसाविति । नुडयं परादिस्तद्ग्रहणेन गृह्यते ॥

"अदस औ सु लोपश्च" ॥ 'अमुक इति' । अदकस् सु इति स्थिते औत्वप्रतिषेधात्त्यदाद्यत्वं दकारस्य सत्वं सकारादुत्तरस्य [1]चाकचोकारस्य उत्वम् । 'उत्तरपदभूतानामित्यादि' । समासाद्या विभक्तिरुत्पद्यते तदपेक्षत्वादादेशो बहिरङ्गः, ततश्चान्तरङ्गत्वादेकादेशे कृते तस्याविवद्भावादादेशेषु क्रियमाणेषु परमयं परमहमित्याद्यनिष्टप्रसङ्गः, तस्मादकृतसन्धिकार्याणामेवामी आदेशा वक्तव्याः, एतच्च 'नेन्द्रस्य परस्ये'त्यत्र ज्ञापयिष्यते । 'अदसः सोर्भवेदित्यादिः' । अदस औ इत्येतावदेव सूत्रमस्तु, सावित्येव अदस इति पञ्चमी तया पूर्वसूत्रे कृतार्थायाः[2] सप्तम्याः षष्ठ्यां प्रकल्पितायाम् अदस उत्तरस्य सोरौकारो भवतीत्यर्थः, तत्र त्यदाद्यत्वे कृते असाविति सिद्धे किं सुलोपो विधीयते। 'ह्रस्वाल्लुप्येत संबुद्धिः'। यदि सोरौकारो विधीयते तदा हि असावित्यत्र त्यदाद्यत्वे ह्रस्वात्परस्याः संबुद्धेरौकारस्य लोपः स्यात् न हलः । नैष दोषः । हलः सलोपे विधीयते, यद्येवं तत्र हल्ग्रहणं कर्त्तव्यं नेत्याह । 'प्रकृतं हि तत्' । 'हल्ङ्याब्भ्यो दीर्घादित्यत्र । ननु चेदं प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः एवं तर्हि एङ्ह्रस्वादिति पञ्चमी हलिति प्रथमायाः षष्ठीं प्रकल्प-

[1] चाकारस्येति पा· ई· पु· ।
[2] कृतार्था इति इ· पु· पाठः ।

यिष्यति 'तस्मादित्युत्तरस्ये' ति। पूर्वसूत्रवद्वा प्रथमाया एव यथा कथं चिन्निर्वाहो भविष्यति। 'आप एत्वं भवेत्तस्मिन्'। इह तर्हि स्त्रियां संबुद्धौ असा औ इति स्थिते 'आङि चापः' 'संबुद्धौ' चेत्येत्वं प्राप्नोति, प्रकृतेरेव त्वोत्वे टापोभावादेत्वाभावः। न, झलीत्यनुवर्त्तनात्। नैष दोषः 'बहुवचनेझल्ये' दित्यतो झलीति तत्रानुवर्त्तते झलादौ संबुद्धाविति, औत्वे कृते अझलादित्वाच भविष्यति, 'प्रत्ययस्थाच्च कादित्वम्,' इह तर्हि स्त्रियामकचि असका औ इति स्थिते 'प्रत्ययस्थात्कात्पूर्वस्ये'तीत्वं प्राप्नोति प्रकृतेरेव त्वोकारे टापोभावादित्वाभावः, 'शीभावश्च प्रसज्यते'। इह च स्त्रियाम् असा औ इति स्थिते 'औङ आप' इति शीभावः प्राप्नोति, औत्वविधानं तु पुंसि चरितार्थं, पाक्षिक एष दोषः, यदौङ आप इति पूर्वाचार्यनिर्देशस्तदा नास्ति, इतरयोरस्तु पक्षयोरस्ति॥

"यः सौ"॥ 'स्त्रियामयं यकारइति'। नपुंसके तु 'स्वमोर्नपुंसका' दिति लुमता लुप्तत्वात्सोरभावः॥

"हलि लोपः"॥ 'अन्यग्रहणमनुवर्त्ततइति'। यद्यपि तत्प्रथमान्तं तथापि हलीति सप्तम्या तस्य षष्ठी प्रकल्प्यते॥

"मृजेर्वृद्धिः"॥ 'धातोश्च कार्यमुच्यमानमिति'। वस्तुतो धातोर्यत्कार्यमुच्यते तदिह धातोरुच्यमानमिति विवक्षितं, स धातुः स्वरूपेणैव गृह्यतां मा वा, यान्हितेनानुदात्तस्य चर्दुपधस्यान्यतरस्या'मित्ययमप्यमागमो धातुप्रत्ययएव भवति न तु प्रमृड्भ्यामित्यादौ। 'त[1]त्प्रत्ययइति'। धातोरित्येवं विहिते। 'कंसपरिमृड्भ्यामिति'। अत्र तदन्तविधिना प्रसङ्गः॥

"अचो ञ्णिति"॥ तन्दुलनिश्चाय इत्यादौ परिमाणाख्यायां सर्वेभ्य इति घञ्। 'गौः गावौ गाव इति'। अत्र गौरित्येतत्साक्षादुदाहरणमितरत्रावादेशे कृते 'ऽत उपधाया' इत्येव सिद्धम्। 'सखायौ सखाय इति'। अत्रापि सखायावित्येतदुदाहरणं जसि तु 'जसि च'ेति गुणे अयादेशे च कृते पूर्ववत्सिद्धम्। 'च्यौत्नमिति'। बलनाम छान्दसं, तमिच्छ्यौत्नैरायन्ति। किमर्थं पुनरिदमुच्यते यावता जेतृयोतृशब्दाभ्यां प्रज्ञादण्वि

1 मुद्रितमूलपुस्तके धातुप्रत्यये इति पाठः।

श्रैत्रं यौत्रमिति सिद्धं, श्रोत्रमिति उणादयो ऽव्युत्पन्नानि प्रातिपदिकानि, तण्डुलनिश्रायः श्रावको लावक इत्यादौ तु गुणे अयवोश्च कृतयोः 'अत उपधायाः' इत्येव सिद्धम्, एवं कारक इत्यादौ 'गोतो णि' दित्येतद्गोत श्चोर्दिति वक्तव्यं गोत ओकारादेशो भवति सर्वनामस्थाने परतः, कथं सखायौ सखायः, 'सख्युरसंबुद्धौ' वित्येतत्सख्युरैदिति वक्ष्यामि । अचो-च्यते, ञ्णितीति तावदुत्तरार्थं वक्तव्यं किञ्च प्रियमाचष्टे प्राययतीत्यादौ प्राद्यादेशेषु वृद्धिर्न स्यात्, अथ ते दीर्घान्ता विधीयेरन् तदतिगुरु स्यादिति यथान्यासमेवास्तु ॥

"तद्धितेष्वचामादेः" । 'अचामादेरचो वृद्धिरिति' । ननु च इक्परिभाषोपस्थानादिक एव स्थानित्वेन भवितव्यं, यद्यपि तुल्यजातीयस्य निर्द्धारणं भवति यथा गवां कृष्णा संपन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते तथात्राप्यचामादिरजेव, तथापि साक्षादच इति निर्देशाभावादिक्परिभाषोपतिष्ठेतैव इगात्मकस्याच इति, तस्मात्स्थानिनिर्देशार्थमच इति वक्तव्यं, तच वक्तव्यमकृतमनुवर्त्तते, अचो ञ्णितीति, तत्र निर्दिष्टस्थानिकत्वादिक्परिभाषाया अव्यापारः, अथ त्वाष्ट्रो जागत इत्यत्र त्वष्टृजगच्छब्दाभ्यां तस्येदमित्यणि कृते यथाक्रममचो ञ्णिति अत उपधाया इति वृद्धिः कस्मान्न भवति, तत्राह । 'त्वाष्ट्रोजागत इत्यत्रेति' । 'अन्त्योपधालक्षणां वृद्धिं बाधतइति' । परत्वाद्धितिभावः । अन्त्योपधालक्षणाया वृद्धेरवकाशः गौः याचकः, अस्या अवकाशः सुश्रुत् सौश्रुतः, त्वाष्ट्रो जागत इत्यत्रोभयप्रसङ्गे परत्वादादिवृद्धिर्भवति, सकृद्गतिन्यायश्चाश्रीयते न पुनः प्रसङ्गविज्ञानम्, एवं च कृत्वा पुष्करसच्छब्दस्यानुशतिकादिषु पाठोऽर्थवान्भवति, यदि त्वादिवृद्धिविषयेन्त्योपधावृद्धिः स्यात्तदोपधालक्षणयैव वृद्ध्या पौष्करसादेः सिद्धत्वादनुशतिकादिषु तच पठेत्, ठगर्थे तत्र पाठः स्यात् पौष्करसादिकः, नह्यत्रोपधालक्षणा वृद्धिः प्राप्नोति अञ्णित्वात्, नैतदस्ति, नह्यस्माच्छरत्यर्थे ठगुत्पद्यते, अनभिधानात् । यद्वा प्रतिपदविहिते बाह्वादिलक्षण इञ्येवोभयपदवृद्धिः नान्यत्रेति ठगर्थः पाठो न भवति, यत्र त्वादिवृद्धिः प्रतिषिध्यते तत्रान्त्योपधालक्षणा

वृद्धिः कस्माच भवति, व्यसोर्भावो वैयसवम्, इगन्ताच्च लघुपूर्वादित्यण्, व्यापदि भवं वैयापदमिति, तत्राप्यैचौ परत्वात् बाधकाविति सिद्धम् ॥

"किति च" ॥ 'नाडायनः चारायणइति'। नडादिभ्यः फक्। 'आक्षिकः शालाकिक इति'। दीव्यत्यर्थे ठक् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां
सप्तमस्याध्यायस्य द्वितीयश्चरणः ॥

"देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्" ॥ अत्र विशेषणविशेष्यभावे कामचाराद्देविकादिभिरङ्गं विशेष्यते, तेन वा तानि, तत्रापि सामानाधिकरण्येन वैय्यधिकरण्येन वेति चत्वारः पक्षाः। तत्र देविकादिभिः सामानाधिकरण्ये ऽङ्गस्य विशेषणात्तदन्तविधिसम्भवाद्देविकाद्यन्तस्याङ्गस्याचामादेराकारो भवतीत्यर्थः स्यात्। तत्र केवलानां न स्यात्, नहि तदेव तदन्तं भवति, व्यपदेशिवद्भावोपि प्रातिपदिकेन निषिद्धः। यदि तु प्रत्ययविधिविषयः स प्रतिषेधः, तदा केवलानां भवतु तदादौ तु न स्यात्। देविकाकूले भवा दाविकाकूलाः शालय इति। तदन्ते चातिप्रसङ्गः, सुदेविकादौ भवं सौदेविकमिति, अत्र सोरुकारस्याकारः स्यात्। अथ वैयधिकरण्येन विशेषणं देविकादीनां यदङ्गमिति, किं च देविकादीनामङ्गं यत्र च ते ऽवयवभूताः, ततश्च केवलाच स्यात्, नहि स एव तस्यावयवो भवति, व्यपदेशिवद्भावोपि प्रातिपदिकेन प्रतिषिद्धः, यदि तु प्रत्ययविषयः स प्रतिषेधस्तदा केवलानां भवतु तदन्ते त्वतिप्रसङ्गः पूर्ववत्, केवलं तदादावप्रसङ्ग एवास्मिन्पक्षे परिहृतः, अथाङ्गं समानाधिकरणं विशेषणमङ्गं ये देविकादयइति तदा तदन्तेतिप्रसङ्गः परिहृतः तदादौ त्वप्रसङ्गः स्यादेव तदेव तर्हि व्यधिकरणं विशेषणम्, अङ्गस्य[1] ये अवयवभूता देविकादयस्तेषामचामादेराकार इति, तदा केवले तदादौ च न दोषः, किं तु परपदभूतानामपि तेषामाकारप्रसङ्गः तत्र प्राग्रामे पूर्वशांशप इत्यादाविष्ट एवाकारः, सुदेविकादावयामेत्वनिष्टप्रसङ्गः तदेवमेते

१ क्रियाविशेषणत्वाचपुंसकैकवचनमिति ई। पु॰ पा॰

चत्वारोपि पक्षा दुष्टाः, अथापरः पक्षः, अङ्गेन देविकादिभिश्चाचामादिर्विशेष्यते, अङ्गस्याचामादेराकारो भवति स चेद्देविकादीनां संबन्धी भवतीति, अत्र पक्षे केवलेषु तदादौ चाङ्गे नास्ति दोषः, नापि सौदेविकमित्यत्र पूर्वपदस्योत्तरपदस्य वा प्रसङ्गः किं तु प्राग्ग्रामे पूर्वशांशप इत्यादावुत्तरपदभूतानां देविकादीनामाकारो न स्यात्, नैष दोषः, प्राचां ग्रामनगराणामित्यत्रैतदनुवर्तिष्यते । तत्र च वाक्यभेदेन संबन्धः, प्राचां ग्रामनगराणामुत्तरपदस्याचामादेरचो वृद्धिर्भवति । देविकादीनामुत्तरपदानामचामादेराकार इति, अयमपि वृत्तिकारस्य पक्षो न भवति, यद्ययं पक्षो ऽभविष्यत् उत्तरपदवृद्धावप्येतदनुवर्त्स्यतइत्येवावक्ष्यत् ।

कस्तर्हि वृत्तिकारस्य पक्षो ऽ[1]यमभिधीयते ।
परिभाषेयमान्तर्यपरिभाषापवादिनी ॥
देविकादेरचामादेर्यत्र वृद्धिः प्रसज्यते ।
तत्रोपतिष्ठते, तेन सर्वमिष्टं प्रसिध्यति ॥

इति । अनारभ्यमाणे एतस्मिन्देविकादीनामादेरचो वृद्धिर्भवन्ती स्थानेन्तरतमवचनादैकारः प्राप्नोति, तदपवादेनाकारः प्राप्यते, तत्राङ्गं भवतु देविकादयः पूर्वपदमुत्तरपदं वा सर्वथा यत्र देविकादीनामचामादेरचो वृद्धिप्रसङ्गः तत्राकारो भवतीति परिभाष्यते । ननु च अङ्गस्येति वर्तते, सत्यं, नैवमस्याभिसंबन्धः, अङ्गस्याचामादेराकारो भवति स चेद्देविकादीनां संबन्धीति, किं तर्हि देविकादीनामचामादेराकारो भवति स चेदङ्गस्य संबन्धीति, अथैवमभिसंबन्धे किं व्यावर्त्यं, न किं चित्, अनुवृत्तस्य तु संबन्धो वक्तव्य इत्येतावत् । 'साप्याकार एव भवतीति' । उक्तोत्र हेतुः । 'वहीनरस्येति' । वहोस्यास्तीति वही, वही चासौ नरश्चेति वहीनरः, अन्येषामपि दृश्यतइति दीर्घत्वम् । 'वैहीनरिरिति' । अत्राकारवृद्धिः प्राप्ता इकारेण बाध्यते, तस्य त्वैकारवृद्धिर्भवत्येव, नहि तस्यां नाप्राप्तायामिकारो विधीयते, एवं च कृत्वा सूत्रेप्यकार एव विधेयस्तस्याकारवृद्धौ सिद्धमिष्टं तथा तु न कृतमित्येव । 'के चित्त्विति' । विहीनो नरो विहीनरः, पृषोदरादित्वाचशब्दस्य लोपः ॥

[1] योयमधीयते इति १ पु॰ पा॰ ।

"केकयमित्त्रयुप्रलयानां यादेरियः" ॥ 'लौकिकं हि तत्र गोत्रं गृह्यतइति'। मित्त्रयुशब्दो ऽभेदोपचारात्तदपत्यसंताने यदा वर्त्तते न परं प्रकृतावेव तदेदमुच्यते, यदा तु यह्वादिभ्यष्ठञो यस्कादित्वाद् बहुषु लुक् क्रियते तदा पारिभाषिकेऽपि गोत्रे न दोषः, अत्र यद्यपि वृद्धिप्रसङ्गेय-मादेश उच्यते तथापि वृद्धिर्न बाध्यते विषयभेदात्, अचामादेर्वृद्धिः, यादे-रियादेशः, अङ्गं तूभयोर्विशेषणं न कार्यं ॥

"न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" ॥ अत्रार्थद्वयवि-धानाद्वाक्यभेदस्तस्यैव द्योतकस्तुशब्दः, पूर्वावित्यनेन संबन्धादैचाविति प्राप्ते एकवचनं सौत्रं, वृत्तौ तु क्रियाविशेषणत्वा[१]देकवचनम्। 'ताभ्यां तु पूर्वमिति'। 'ऐजागमो भवतीति'। टित्त्वाद्यागमलिङ्गाभावेऽपि पूर्व-शब्देन देशविशेषे भवत्यागम इत्युच्यते, आगच्छतीत्यागम इति। 'वैयसनमिति'। गतिकारकोपपदानां प्राक् सुबुत्पत्तेः समास इत्युत्तरप-दविषयमित्यवोचाम, तेन वैयसनादिषु य्वोः पदान्तत्वं, स्वश्वशब्दः शिवादिः। 'याष्टीक इति'। शक्तियष्ट्योरीकक्, ननु चात्राचामादेः स्थाने यौ य्वौ ताभ्यामित्याश्रयणादेव न भविष्यति, तत्राह। 'यत इम[२]इ-ति'। इण् गतौ, लटः शत्रादेशः, शपो लुक्, इणो यण्, इहासत्यपि प्रतिषेधे वैयसनमित्यादौ व्यसन अ इति स्थिते वृद्धिश्च प्राप्नोति ऐजागमश्च, तत्र वृद्धिरनित्या शब्दान्तरप्राप्तेः, सा ह्यैचि कृते तस्यैव प्राप्नोति तन्मध्य-पतितस्य तद्ग्रहणेन ग्रहणात्, ऐजागमस्तु नित्य इति स एव तावद्भवति, तत्र कृते यद्यपि पुनः प्रसंगविज्ञानाद् वृद्धिस्तथाप्यान्तर्यत ऐकारस्यैकार औकारस्यौकार इति न कश्चिद्दोषः किं प्रतिषेधेन। नन्वसति तस्मिन्वै-याकरणी भार्या अस्य वैयाकरणभार्य इति वृद्धिनिमित्तस्येति पुंवद्भाव-प्रतिषेधः स्यात्, सति तु प्रतिषेधे न भवति, कथं न भवति, यावता वृद्धेर्निमित्तं अणका यस्मिंस्तद्धितइति बहुव्रीहिः, विद्यते चात्र णकारः,

१ क्रियाविशेषणत्वाच्चपुंसकैकवचनमिति इ· पु पा·।

२ मुद्रितमूलपुस्तके यतेश्छात्रा याता इति पाठः स पदमञ्जर्यसंमतः, यत इमे छात्रा इति पाठस्तु युक्तः।

सत्यं, विद्यते, निमित्तं तु न भवति, कुर्वद्रूपे हि निमित्तशब्दो मुख्य इत्युक्तं, ननु च मा भूत्तद्धितेष्वचामादेरित्यस्या वृद्धेर्निमित्तं य एव त्वसौ णित्तद्धिताश्रय ऐज्विधीयते तस्यैव वृद्धिसञ्ज्ञकस्य निमित्तं णकार इति स्यादेव पुंवद्भावप्रतिषेधः, उच्यते, नहि वस्तुतो या वृद्धिस्तस्या यन्निमित्तं अकारादिस्तद्वृति प्रतिषेधः किं तर्हि वृद्धिरित्येवं या विधीयते तन्निमित्ते, अतः पुंवद्भावप्रतिषेधनिवृत्त्यर्थं वृद्धेः प्रतिषेधो वक्तव्य एव, न वक्तव्यः, एकस्मिन्नङ्गे विशेषविहितावैचौ सामान्यविहिताया वृद्धेर्बाधकौ भविष्यतः, सत्यपि सम्भवे बाधनं भवतीति न्यायात्, ततश्च पूर्ववत्पुंवद्भावप्रतिषेधो न भविष्यतीति य्वाभ्यां पूर्वमैजित्येवास्तु, नार्थः प्रतिषेधेनेत्यत आह। 'प्रतिषेधवचनमिति'। प्रतिषेधवचने सति याभ्यां य्वाभ्यां परस्य वृद्धिः प्राप्ता प्रतिषिध्यते, ताभ्यामेव पूर्वावैचौ भवत इत्यर्थो भवति, असति हि तस्मिन् यौ कौ चन य्वौ गृह्येयातां, तस्मादैचोर्विशिष्टो विषयः प्रक्लृप्तो यथा स्यादित्येवमर्थं प्रतिषेधवचनं क्रियतइत्यर्थः। 'दाध्यश्विमाध्वश्विरिति'। दधि प्रियो ऽश्वो यस्य स दध्यश्वः, एवं मध्वश्वः, ताभ्यामत इञ्। ननु वाचामादेरित्यनेन य्वौ विशेषयिष्यामः, अचामादेरचः स्थाने यौ य्वाविति, एवमपि द्वे अशीती अधीष्टः, तद्धितार्थइति समासः, तमधीष्टइति प्राग्वतेष्ठक्, द्व्याशीतिकः, अत्र प्राप्नोति। सति तु प्रतिषेधे तद्धितेष्वचामादेरित्यनुवृत्तेर्याभ्यां परस्य तद्धितेष्वचामादेरिति वृद्धिः प्राप्ता प्रतिषिध्यते, ताभ्यामिति विज्ञायते, अत्र तु संख्यायाः संवत्सरसंख्यस्य चेत्येत्रमुत्तरपदवृद्धिर्विधीयतइति तस्या निषेधाभावादैजागमाभावः सिद्धः। स्यादेतत्। अचामादेरित्यनुवृत्तं स्वरूपपरं सद्वृद्धेर्विशेषणम्, अचामादेरित्येवं या वृद्धिस्तस्याः प्रसङ्गे तदपवादौ य्वाभ्यां पूर्वमैचौ भवत इत्यर्थः, इह तु नैवं वृद्धेः प्रसङ्ग इत्यैचौ न भविष्यत इति। एवमपि य्वावविशेषितौ स्यातां, ततश्च दाध्यश्वादौ प्रसङ्गः। न च सकृच्छ्रुतमचामादेरित्येतदेवोभयं विशेषयितुमर्हति येनाचामादेः स्थाने य्वौ ताभ्यां पूर्वावैचौ भवतः, सति तस्मिन्नचामादेरित्येवं वृद्धेः प्रसङ्ग इत्याश्रयणाच्च क्वापि दोषः स्यात्, न च तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणे

प्रमाणमस्ति, तस्मात्सुष्ठूक्तं प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थमिति । 'उत्तरपदवृद्धेरपीति'। एतच्च तत्रास्याधिकाराल्लभ्यते । 'यत्र त्विति'। एतदप्युत्तरपदेन य्वोर्विशेषणाल्लभ्यते, उत्तरपदस्य यौ य्वौ ताभ्यां परस्य वृद्धिर्न भवति ताभ्यां च पूर्वमैजागम इति । इह इश्च अजश्च यजौ, उश्च अजश्च वजौ, तयोरिदं ऐयजम्, औवजमिति, ऐचोरभक्तत्वादतन्मध्यपतितत्वाच्चाङ्गग्रहणेनाग्रहणादैयजीयमौवजीयमित्यादौ शेषनिघातो न स्यात्, शेषविवक्षायां च वृद्धाच्छो न स्यात्, प्रातिपदिकस्यावृद्धत्वात्, उच्यते । यद्येवंविधमभिधानमस्ति ततः पूर्वशब्द आवर्तयितव्यः, तत्रैको ऽवयववचनः, अपरो व्यवस्थावचनः, य्वाभ्यां पूर्वावैचौ भवतस्तौ चाङ्गस्यावयवाविति, अत्र संग्रहश्लोकौ ॥

नाप्राप्ताया हि वृद्धेः प्रतिपदविधिरैज्बाधको नञ् किमर्थो,
याभ्यां य्वाभ्यां परस्यैच् प्रसजति तत एवैव पूर्वौ यथा स्यात् ॥
मा दाध्यश्वादिके भूदिति ननु विहितौ यावचां स्यानआदे-
र्य्वौ ताभ्यामैजिहैवं न भवति इति चेद् द्वे अशीती अधीष्टे ॥ १ ॥
स्यादैज् द्व्याशीतिकेऽङ्गाद्यच इति विहितस्यैव ऐच्चेत्प्रसङ्गा-
द्व्यौ न स्यातां विशिष्टौ श्रुतमपि च सङ्कोचभयं भेत्तुमर्हम् ।
स्यादेतस्योत्तरत्राप्यधिकृतिरिह च य्वोः पदस्योत्तरस्यै-
वं पूर्वत्रैयलिन्दे भवति न च भवेद् द्वे अशती अधीष्टे ॥

"द्वारादीनां च" ॥ 'दौवारिक इति'। तत्र नियुक्त इति ठक् । 'द्वारपालस्येदं दौवारपालमिति'। सञ्ज्ञापूर्वको विधिरनित्य इति वृद्धलक्षणश्छो न भवति, कलापिनोऽणित्यत्राणग्रहणस्याधिकविधानार्थत्वाद्वा । कथं पुनर्द्वारशब्दस्य पाठे द्वारपालशब्दस्य विधिरयं भवति, तत्राह । 'तदादिविधिश्चात्र भवतीति'। अत्र च कारणं देविकादिसूत्रएवोक्तं, ज्ञापकं चात्र वक्ष्यति । 'सौवरोध्याय इति'। स पुनः शन्तनुप्रणीतः, फिषित्यादिकं, सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति भाष्ये । 'शोभनोऽध्यायः स्वाध्याय इति'। आङत्र मध्ये प्रक्षेप्तव्यः, अन्येषामपि दृश्यतइति वा उत्तरपदादेर्दीर्घत्वम् । 'एवमपीत्यादि'। यद्यत्र स्वशब्दः पठ्यते किमा-

यातं स्वाध्यायशब्दस्य तत्राह। 'तदादावपि हीति'। स्वार्थिकस्वा-
भाविकादयस्तु भाष्यप्रयोगात्साधवः। 'स्फैयकृत इति'। ऋषित्वादण्।
'शौवादंष्ट्रो मणिरिति'। शुनो दन्तदंष्ट्रेति दीर्घत्वं पूर्ववदण्॥

"न्यग्रोधस्य च केवलस्य"॥ 'नैयग्रोध इति'। नीचैर्गतो परोहैर्वर्द्धु-
तइत्यर्थः। 'अव्युत्पत्तिपक्षे तु विध्यर्थमिति'। अपदान्तत्वाद्यकारस्य।
यथास्मिन्नपि पक्षे केवलग्रहणं किमर्थं, यावता न्यग्रोधस्येत्युच्यते, तत्र कः
प्रसङ्गो यत्तदादौ स्यात्। ज्ञापनार्थं तु। एतज्ज्ञापयति, अस्मिन्प्रकरणे
यान्युपात्तानि तानि तदादिवृद्धिभाजोचो विशेषणानीति॥

"न कर्मव्यतिहारे"॥ 'कर्मव्यतिहारे यदुक्तमिति'। यदस्मिन्प्र-
करणे उक्तं तत्कर्मव्यतिहारे न भवतीत्यर्थः॥

"स्वागतादीनां च"॥ व्यावक्रोशीत्यादौ व्यवपूर्वो धातुः कर्म-
व्यतिहारे दृष्ट इति व्यवहारशब्दोपि कर्मव्यतिहारे वर्त्तते, ततश्च पूर्वेणै-
वात्र सिद्धेरत्रास्य पाठोनर्थक इत्याशङ्क्याह। 'व्यवहारशब्दोयमिति'।
'द्वारादिषु स्वशब्दस्य पाठादत्र प्रस[1]ङ्ग इति'। तदादेरपि तत्र ग्रहणं
भवतीत्युक्तमेव॥

"श्वादेरिञि"॥ 'तत्र चेत्यादि'। यदि तत्र तदादिविधिर्न
स्यात् एतद्वचनमनर्थकं, कथं, केवलश्वन्शब्दो द्वारादिषु पठ्यते तत्र कः
प्रसङ्गो यत्तदादेः स्यात्। 'तदादिविधिर्भवतीति'। अस्मिन्प्रकरणे
यदुक्तं तद्वृद्धिभाजोचो विशेषणमित्यस्मिन्नर्थे ज्ञापकमित्यर्थः। 'इकारादि-
ग्रहणं चेत्यादि'। श्वादेरितीति वक्तव्यमित्यर्थः। तत्र वर्णग्रहणे सप्त-
मीनिर्देशात्तदादिविधिः। 'श्वागणिक इति'। श्वगणाट्ठञिति ठञ्। 'तद-
न्तस्येति'। इञन्तस्य। 'श्वाभस्त्रमिति'। इञश्चेत्यण्, तन्निमित्तो वृद्धिप्र-
तिषेध ऐजागमश्च भिन्नकर्तृत्वादशक्य इञाश्रयेण प्रतिषेधेन निवारयितु-
मिति वचनारम्भः॥

"उत्तरपदस्य"॥ उत्तरत्राचामादेरित्यनुवृत्तेरुत्तरपदस्याचामादे-
र्वृद्धिर्विदितव्या, ननु चावयवादृतोरित्यादौ अवयवादित्यादिका पञ्चमी,

१ प्राप्तिरिति मुद्रितमूल पु० पाठः।

तत्रान्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव भविष्यति, अत आह। 'यत्रेति'। आदिपदेन[1] हृद्भगसिन्ध्वन्ते पूर्वपदस्य च, अनुशतिकादीनां च, देवताद्वन्द्वे चेत्येतेषां ग्रहणम्, एषु योगेषु पञ्चमीनिर्देशाभावादसत्यस्मिन्नधिकारे ऽकुस्याचामादेरचो वृद्धिः स्यात् नोत्तरपदस्य, वचनं तु नियमार्थं स्यात्, अत एव प्रोष्ठपदानां नान्यत्र, प्रोष्ठपदानामेव वा जड्ति, वचनसामर्थ्याद्वा पूर्वपदस्यैवानाद्यचो वृद्धिविधानार्थं स्यात्, तस्मादेतदर्थमेवायमधिकारः कर्त्तव्यः, किमिदानीं पञ्चमीनिर्देशेष्वस्यानुयोग एव, नेत्याह। 'पञ्चमीनिर्देशेष्वपीति'। 'वृद्धेश्च व्यपदेशार्थमिति'। उत्तरपदाधिकारे विहिता या वृद्धिरिति व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः। क्व पुनरेवंविधेन व्यपदेशेन प्रयोजनमित्यत आह। 'उत्तरपदवृद्धौ सर्वं चेत्यत्रेति'। सर्वभासः सर्वकार इत्यादौ माभूदित्येवमर्थं तत्रैवमाश्रितम्॥

"अवयवादृतोः"॥ 'ऋतोर्वृद्धिमद्विधावित्यादि'। ऋतोः ऋतुवाचिनः शब्दाद्वृद्धिमद्विधौ वृद्धिनिमित्ते प्रत्यये विधीयमाने तदन्तविधिः, ऋतुशब्दान्तादपि प्रत्ययो भवतीत्यर्थः। किं सर्वत्र, नेत्यत आह। 'अवयवादिति'। अवयववचनात्परो यदा ऋतुवचनस्तदेत्यर्थः। ये त्ववयवानामिति षष्ठीबहुवचनान्तं पठन्ति तेषां न समीचीनोऽर्थः। तथा च सुसर्वार्द्धदिक्शब्देभ्य इति पञ्चम्या निर्देशि[2]। 'पूर्वासु वर्षासु भव इति'। तद्धितार्थइति समासः, अन्ये त्वदिक्शब्दत्वाद्विशेषणसमासं मन्यन्ते। अथात्रापि तदन्तविधिना वर्षाभ्यष्ठगेव कस्मान्न भवत्यत आह। 'अवयवपूर्वस्यैव हीति'॥

"सुसर्वार्द्धाज्जनपदस्य"॥ 'जनपदवाचिन इति'। स्वरूपग्रहणं तु न भवति, उत्तरसूत्रे मद्रप्रतिषेधात्। 'सुसर्वार्द्धेत्यादि'। जनपदवाचिनः शब्दस्यानन्तरे प्रत्यये विधीयमाने तदन्तस्यापि ग्रहणं भवति, यदि सुप्रभृतिभ्यः परः सम्भवतीत्यर्थः॥

---

१ शब्देनेति १। २। पु॰ पा॰।
२ निर्देशइति १-२-पु॰ पा॰।

"दिशोऽमद्राणाम्" ॥ 'पूर्वपाञ्चालक इति'। तद्धितार्थे समासः। 'पौर्वपञ्चालक इति'। अवयववाच्यत्र पूर्वशब्दः, एकदेशिसमासाद्वुञ्प्रत्ययः। अदिक्शब्दत्वादादिवृद्धिरेव भवति, यद्येवं वुञापि न भवितव्यमदिक्शब्दत्वादेव, अस्त्यत्र विशेषः, सुसर्वार्द्धाद्दिक्शब्देभ्य इति तदन्तविधौ शब्दग्रहणं क्रियते दिशि दृष्टः शब्दो दिक्शब्द इत्येवं यथा विज्ञायेत, वृद्धिविधौ तु दिश इत्येतावदुच्यते, अन्ये त्वणन्तमेव प्रत्युदाहरणं पठन्ति ॥

"प्राचां ग्रामनगराणाम्" ॥ प्राचामिति नाचार्यनिर्देशः, जनपदादिभिर्देशैः साहचर्यात्। 'पूर्वेषुकामशम इति'। पूर्वा चासाविषुकामशमी चेति दिक्संख्ये सञ्ज्ञायामिति समासः, ततो भवार्थे दिक्पूर्वपदादसञ्ज्ञायां ञ इति ञप्रत्ययः। 'पूर्वपाटलिपुत्रक इति'। पूर्ववत्समासः, रोपधेतोः प्राचामिति वुञ्, यद्यप्येकमेव पाटलिपुत्रं तथापि पाटलिपुत्रस्यैकदेशे पाटलिपुत्रशब्दस्य वृत्तेः पूर्वत्वविशेषणं युक्तमेव, जना यत्र सन्ति स ग्रामः, ततश्च नगरमपि ग्रामः, ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरेपि न क्रियन्ते, तद्यथा अभक्ष्यो ग्रामकुक्कुट इति सुतरां नागरोपि न भक्ष्यते, ग्रामे नाध्येयमिति साधीयो नगरेपि नाधीयते। शास्त्रेपि, उदीच्यग्रामाच्च बह्वचोन्तोदात्तात्, वाहीकग्रामेभ्यश्च, दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु, नगरमपि गृह्यते, तस्मादिहापि नार्थो नगरग्रहणेनेत्यत आह। 'ग्रामत्वादेवेति'। 'सम्बन्धभेदप्रतिपत्त्यर्थमिति'। अङ्गस्येति प्रकृतम्, उत्तरपदस्येति च, तत्र ग्रामाणामित्येतदङ्गस्येत्यनेन सम्बध्यते ग्रामवाचिनामङ्गानामिति, नगराणामित्येतदुत्तरपदस्येत्यनेन नगरवाचिनामुत्तरपदानामिति। न चायं सम्बन्धभेदः, सकृदुपात्ते ग्रामशब्दे सम्भवति तस्मान्नगरग्रहणं क्रियते, तत्र दिक्पूर्वपदो हीत्यादिना सम्बन्धभेद आश्रयणीय इत्यत्र हेतुर्दर्शितः। तत्रेत्यादिना तु स एव सम्बन्धभेदः। इह पूर्वेषुकामशम इति समसनक्रियानन्तरं पूर्वोत्तरपदयोर्गुणः प्राप्नुवन्नन्तरङ्गः, उत्तरपदवृद्धिस्तु पश्चादुपनततद्धितापेक्षत्वाद्बहिरङ्गा, तत्र गुणे कृते पूर्वोत्तरयोर्व्यपवर्गाभावाद्वृद्धिर्न प्राप्नोति, अन्तादिवद्भावोप्युभयत

आश्रयणे प्रतिषिद्धः, अत्र हि दिग्वाचि पूर्वपदमुत्तरपदं च युगपदाश्रीयते तत्राह । 'पूर्वेषुकामशम इत्येवमादिष्विति' । यथा नेन्द्रस्य परस्येति ज्ञापकं तथा तत्रैव वक्ष्यामः ॥

"संख्यायाः संवत्सरसंख्यस्य च" ॥ संवत्सरश्च संख्या च संवत्सरसंख्यं, समाहारद्वन्द्वः । 'द्विसांवत्सरिक इति' । प्राग्वतेष्ठञ्, तस्याध्यर्धपूर्वेति लुङ् भवति, अनार्हीयत्वात् । 'द्विषाष्ठिक इति' । ननु तमधीष्टो भृत इत्यत्र कालादिति वर्त्तते, तत्कथं द्विषष्ठ्यादिशब्देभ्यः प्रत्यय इत्यत आह । 'द्विषष्ठ्यादिशब्द इति' । [1]कालवृत्तिः शब्दस्तत्र गृह्यते न मासादय एवेति भावः । ननु च परिमाणान्तस्यासञ्ज्ञाशाणयोरित्यत्र परिच्छेदहेतुत्वमात्रं गृह्यते न त्वारोहतः परिणाहतश्च येन मीयते तदेव प्रस्थादि, अन्यथा शाणप्रतिषेधोऽनर्थकः स्यात्, कालश्चापि परिच्छेदहेतुर्भवत्येव, ततश्च संवत्सरग्रहणमनर्थकं परिमाणान्तस्येत्येव सिद्धत्वादित्यत आह । 'संवत्सरग्रहणमिति' । 'द्वैसमिक इति' । अधीष्टादिषु समायाः खः, द्विगोर्वेति पक्षे ठञ्, न केवलं वृद्धिविषयमेव ज्ञापकं किं तर्हि सार्वत्रिकमित्याह । 'द्विवर्षा माणविकेति' । द्वे वर्षे भूता इति पूर्ववट्ठञ्, तस्य वर्षाल्लुक्, चित्तवति नित्यमिति लुक् । 'पर्युदासो न भवतीति' । प्रतिषेधस्य, तेन प्रतिषेध एव भवति, अथ संख्याग्रहणं किमर्थं, यावता संख्ययापि परिच्छिद्यते, तत्र परिमाणान्तस्येत्येव सिद्धं, केचिदाहुः । संख्याग्रहणमपि ज्ञापकार्थमेव परिमाणग्रहणेन संख्यापि न गृह्यतइति, तथा चापरिमाणबिस्ताचितेत्यत्र वृत्तावुक्तं, कालः संख्या च परिमाणं न भवति । द्विवर्षा त्रिवर्षा द्विशता त्रिशतेति । अपर आह, साक्षाच्छिष्टेन निमित्तभावेनानुमितं कार्यित्वं मा बाधीति परिमाणात्पृथगिह संख्याग्रहणं कृतमिति ॥

"वर्षस्याभविष्यति" ॥ 'यस्येत्यादि' । यस्य यियक्षोर्यागवर्षादारभ्य त्रीणि वर्षाणि धान्यं भावि तावन्तं कालं जीवनाय पर्याप्तं स सोमयागेधिकारी न न्यून इत्यर्थः । 'गम्यते हीति' । वाक्यार्थस्तत्र भविष्यत्ता न पदार्थे

[1] कालवृत्तिशब्दः कालशब्द इति इं पु० पा० ।

इत्यर्थः । 'द्विवार्षिको मनुष्य इति' । वर्षाल्लुक्, चित्तवति नित्यमिति नित्यं लुङ् भवति, भूतार्थएव हि स दृश्यते, अन्यत्र चित्तवत्यपि विकल्प एव ॥

"परिमाणान्तस्यासञ्ज्ञाशाणयोः" ॥ 'द्विकौडविक इति' । कुडेरवप्रत्यये कुडवः प्रस्थचतुर्थभाग इत्युणादिषु व्युत्पत्तिः, कुडवमित्येतदव्युत्पन्नं शब्दान्तरं द्रष्टव्यं, ततः प्राग्वतेष्ठञ्, अनार्हीयत्वाल्लुगभावः । 'द्वाभ्यां सुवर्णाभ्यामिति' । शाणप्रतिषेधात्परिच्छित्तिसाधनमिह परिमाणं तेनोन्मानस्यापि भवति, लोहिनी गुञ्जा, ताभिः पञ्चभिः परिमितमाकारविशेषयुक्तं हिरण्य पाञ्चलोहितिकं कलापः, कोशी धान्यविशेषः । 'योगविभागेनेति' । पूर्वासु वृत्तिषु तदस्य परिमाणं संख्यायाः सञ्ज्ञेत्येकयोगेन पठितत्वाद्भाष्ये तत्र योगविभागस्योक्तत्वादेवमुक्तम्, । 'तद्धितान्तश्चायमिति' । यथा त्वध्यर्धपूर्वद्विगोरित्यत्र वार्तिकं तथा तद्धितलुकि सति सञ्ज्ञेति तत्रैवावोचाम । 'द्वैशाण इति' । यद्यत्रोत्तरपदवृद्धिः स्यात् पूर्वपदस्य न स्यात्, कुलिजं धान्यमानम्, अन्तग्रहणं चिन्त्यप्रयोजनम् ॥

"जे प्रोष्ठपदानाम्" ॥ 'जइति जातार्थो निर्दिश्यतइति' । उपसरज इत्यादौ दृष्टस्य पदैकदेशस्य प्रयोगः, भीमसेनो भीम इतिवत् । 'बहुवचननिर्देशादिति' । यद्यपि ज्योतिषां बहुत्वाद्बहुवचनान्तप्रोष्ठपदाशब्दस्तथापि तस्यैव शब्दरूपापेक्षायामेकवचनं न्याय्यं मन्यते ॥

"हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" ॥ 'सुहृद इति' । सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातितः सुहृच्छब्दः, यदा तु सुहृदयस्येदमिति पाठः, तदा हृदयस्य हृल्लेखेत्यादिना हृद्भावः । 'सौहार्द्यमिति' । वा शोकष्यञ्रोगेष्विति हृद्भावः, सिन्धवो जनपदः, नदीवचनस्यापि ग्रहणं, तथा समुद्रवचनस्यापि ॥

"अनुशतिकादीनां च" ॥ 'आनुशातिकमिति' । शतेन क्रीतं शतिकं, शताच्च ठन्यतावशतइति ठन्, अनुगतः शतिकेन अनुशतिकः, ततस्तस्येदमित्यण् । 'आनुहोडिक इति' । चरतीति ठक् । 'आनुसांवरणमिति' । तत्र च दीयते कार्यं भववदित्यण् । 'आनुसांवत्सरिकमिति' । बह्वचोन्तोदात्ताट्ठञ्, कुरुकतशब्दो गर्गादिः । 'सार्वलौकिक-

मिति'। लोकसर्वलोकाभ्यां ठञ्। 'सार्वभौमइति'। सर्वभूमिपृथिवीभ्या-मणञौ, प्रयोगाधिदेवाधिभूतेत्यध्यात्मादयः। 'कुलटाया वेतीनङिति'। अपपाठोयं, तत्र हि स्वरूपग्रहणं, कल्याण्यादिषु परस्त्रीशब्दः पठ्यते, तस्मात्कल्याण्यादीनामिनङिति पाठः। 'चातुर्वैद्यमिति'। चातुर्वर्ण्या-दित्वात्स्वार्थे ष्यञ्, ताः पुनश्चतस्रो विद्याश्चत्वारो वेदाः ॥

"देवताद्वन्द्वे च" ॥ अग्निवरुणौ देवता अस्य आग्निवारुणम्, अग्निमरुतौ देवता यस्य आग्निमारुतम्, इद्वृद्धावित्यग्निशब्दस्य इत्वम्। 'यो देवताद्वन्द्व इत्यादि'। यः सूक्तं भजते स्तुत्यतया स सूक्तसम्बन्धी, हविर्यस्मै निरूप्यते स हविःसम्बन्धी, अर्थद्वारकं चेदं द्वन्द्वस्य विशेषणम्। 'स्कान्दविशाख इति'। सास्य देवतेत्यण्। 'ब्राह्मप्रजापत्यमिति'। पत्यु-त्तरपदाद् ण्यः, ननु सास्य देवतेत्यत्र न जातिवचनो देवताशब्दः किं तर्हि यस्मै हविर्निरूप्यते या वा मन्त्रस्तुत्या सास्य देवता गृह्यते न चैवम्भूताच्च द्वन्द्वार्थः, एवंभूतत्वे वा यथा तद्धिता भवन्ति तथायमपि विधिः प्राप्नोति। अत्राहुः। तद्धितः क्वचिदन्यत्रापि भवति ज्ञा देवतास्य ज्ञः[1] स्थालीपाक-इति हि भाष्ये दृष्टमिति ॥

"नेन्द्रस्य परस्य" ॥ 'आग्नेन्द्रं सौमेन्द्रमिति'। अजाद्यदन्त-मितीन्द्रशब्दस्य पूर्वनिपातो न भवति प्रायिकत्वात्तस्य। 'इन्द्रशब्द-इत्यादि'। इन्द्रश्च मरुच्चेत्यादौ व्यञ्जनान्तेन सह [2]द्वन्द्वे इन्द्रशब्दस्य पूर्वनिपातेन भाव्यं, यथा ऐन्द्रामारुतीं मेदकामालभेतेति, वाय्विन्द्रा-वित्यादिकस्तु द्वन्द्वः सूक्तहविः सम्बन्धी न भवतीति भावः ॥

"दीर्घाच्च वरुणस्य" ॥ 'अत्र हीत्यादि'। उदाहरणेषु देव-ताद्वन्द्वे चेत्यानङि कृते दीर्घात्परो वरुणशब्दः ॥

"प्राचां नगरान्ते" ॥ 'प्राचां देशइति'। आचार्यग्रहणं तु न भवति, उत्तरसूत्रे विभाषितमिति वचनात् ॥

---

१ यथा इन्द्रो देवता ऽस्येन्द्रइत्यधिकम् इं॰ पु॰।
२ इन्द्रशब्दस्येत्यधिकम् इं॰ पु॰।

"जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्" ॥ जङ्गलं वनप्रायो देशः, कुरुषु जङ्गलं, कुरुजङ्गलं, धेनुर्नवप्रसूता, विश्वेषां धेनुर्विश्वधेनुः, सुवर्णविकारो वलजं सौवर्णवलजम्, उत्तरमित्युत्तरपदं लक्ष्यते, तस्य नित्यसन्निहितत्वात्स्वरूपेण विभाषितत्वानुपपत्तेर्विभाषितवृद्धिकत्वाद्विभाषितमिति गौणो वादः ॥

"अर्द्धात्परिमाणस्य पूर्वस्य तु वा" ॥ 'अर्द्धद्रौणिकमिति' । प्राग्वतेष्ठञ् । वावचनमनर्थकं, विभाषितमित्यनुवृत्तेः, तत्रैवं वक्तव्यं पूर्वं त्विति । तथा तु न कृतमित्येव ॥

"नातः परस्य" ॥ 'आर्द्धप्रस्थिकमार्द्धकंसिकमिति' । पूर्ववट्ठञ् । कंसाट्टिठंस्तु न भवति, तदन्तविधेरभावात्, प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिः, न वार्द्धशब्दः संख्यावाची । 'किं च स्यादिति' । आकारो वृद्धिरेव तत्र सत्यसति वा वृद्धिप्रतिषेधे नास्ति विशेष इति मन्यते । किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यादित्यत आह । 'यत्र हीति' । तदुक्तं कुर्वद्रूपे निमित्तशब्दो मुख्य इति। परस्येति किं, पूर्वस्य माभूत्, अत इति विशेषणोपादानसामर्थ्यात्पूर्वस्य न भविष्यति, नहि पूर्वस्यार्द्धशब्दस्याकारादन्यो वृद्धिभागस्ति । किं च यदि पूर्वस्य प्रतिषेधः स्यात्पूर्वस्य तु वेत्येतदनर्थकं स्यात्, इदं तर्हि प्रयोजनं तदन्तविधिर्माभूदिति, अन्यथा ऽकारान्तस्योत्तरपदस्यैवं विज्ञायेत, तत्र को दोषः, इह प्रतिषेधः स्यात्, अर्द्धद्रौणिकमर्द्धकौडविकमिति, पूर्वस्तु त्रिधिरर्द्धमुष्टिना क्रीतोऽर्द्धमौष्टिक इत्यादौ चरितार्थः, तस्मात्तदन्तविधिनिरासार्थं परस्येत्युक्तम् ॥

"प्रवाहणस्य ढे" ॥ प्रवाहणशब्दस्य ढे परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ, प्रवहणशब्दस्य अवयवभूतं यदुत्तरपदं तस्येत्यर्थः, ननु वृद्धिमदेवात्र स्वत एवोत्तरपदं, कस्मै प्रयोजनायास्य पुनर्वृद्धिर्विधीयते। उच्यते । यदा पूर्वपदे वृद्धिर्न भवति तदा यद्युत्तरपदेपि वृद्धिर्न स्यात् वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न स्यात्, प्रवाहणेयीभार्य इति, माभूदेवं जातेश्चेत्येवं भविष्यति, गोत्रं च चरणैः सहेति जातित्वम्, एवं तर्ह्येतज्ज्ञापयति अनित्योयं प्रतिषेध इति, तेन हस्तिनीनां समूहो हास्तिक-

मित्यत्र भस्याढइति वा ठक्छसोश्चेति वा प्राप्तस्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवति, प्रवाहयतीति प्रवाहणः, ण्यन्ताद्वहेर्नेन्याादेर्ल्युः, णेर्विभाषेति णत्वम् ॥

"तत्प्रत्ययस्य च" ॥ 'प्रवाहणेयिरिति'। यून्यपत्येत इञ्। 'प्रवाहणेयकमिति'। गोत्रचरणाद्वुञ्, किमर्थमिदमुच्यते, ठे परतः पूर्वेण विकल्प उक्तः, ठान्तस्ये ञादौ नित्यवृद्धिर्मा भूदिति। नैतदस्ति प्रयोजनम्, इञादिनिमित्ताया अपि वृद्धेर्ठाश्रय एव विकल्पो बाधको भविष्यति, ढइति हि परसप्तमी न निमित्तसप्तमी, तेनान्यनिमित्ताया अपि वृद्धेर्ढे परतः प्रतिषेधो लभ्यतएवात आह। 'बाह्यतद्धितनिमित्तेति'। अयमभिप्रायः। ढउत्पत्ते तदाश्रयां वृद्धिं बाधित्वा विकल्पस्तावत्प्रवृत्तः, पश्चादिञादिरुत्पन्नः, तन्निमित्ता च वृद्धिः प्राप्ता न त्विदानीं ढनिमित्तो विकल्पः, पूर्वमेव प्रवृत्तत्वादावृत्त्ययोगादिति ॥

"नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्" ॥ 'अप्राप्तेव वि[1]धीयतइति'। अप्राप्तिमेवोपपादयति। 'न नञ्पूर्वादिति'। 'उत्तरो भावप्रत्यय इति'। त्वतल्भ्यामुत्तरः ष्यञादिः, ततश्चोत्तरो भावप्रत्ययः प्रागेव नञ्समासात् शुच्यादिभ्य एव विधेयः, पश्चान्नञ्समासस्तत्र नञोऽङ्गेनन्तर्भावादप्राप्ता वृद्धिर्विधीयतइति। 'तदपरइत्यादि'। असति विषयेऽङ्गाधिकार उपमृद्यः, अस्ति च विषयः, कः पुनरसौ, भाववचनादन्योपत्यादिषु विहितः प्रत्ययः, अथापि भाववचने श्रद्धा सोपि शक्यतएव दर्शयितुमित्याह। 'बहुव्रीहेश्चेति'। उत्तरो भावप्रत्ययः प्रतिषिध्यतइत्येतदप्यत्र न सार्वत्रिकमित्याह। 'अक्षेत्रज्ञेति'। तदेवमङ्गाधिकारो न बाधनीय इति स्थितम्, एवं च तदुपस्पर्शादशौचमित्यादिप्रयोगोपपत्तिः, दशाहं शावमाशौचमित्यादौ त्विदमर्षेण द्रष्टव्यः ॥

"यथातथयथापुरयोः पर्यायेण" ॥ 'ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्याविति'। तेन न नञ्पूर्वादिति ष्यञः प्रतिषेधो न भवतीति भावः। 'यथा सादृश्यइत्यव्ययीभावसमासइति'। पदार्थानतिवृत्तौ, तथाभाव-

[1] विभाषेत्यधिकं मुद्रितमूलपुस्तके।

मनतिक्रान्तं यथातथं सत्यमुच्यते, यद्वस्तु पुरा यथाभूतं तदद्यापि तथा भावमनतिक्रान्तं यथापुरमुच्यते, किं पुनरव्ययीभावत्वे प्रमाणमित्यत आह । 'तथाहीति' । 'भाष्ये त्विति' । नहि ह्रस्वत्वमकृत्वा विग्रहप्रदर्शनमव्ययीभावस्योपपद्यते, अयं योगः शक्यो ऽवक्तुं, कथं, यदा पूर्वपदस्य वृद्धिः नञ्समासाद्भावप्रत्ययः, यदा तूत्तरपदस्य वृद्धिस्तदा भावप्रत्ययान्तेन नञ्समासः, स्वरेपि नास्ति विशेषः, अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात्, प्रत्ययान्तरं चाभ्यां न भवत्यनभिधानात् ॥

"हनस्तो ऽचिण्णलोः" ॥ 'तद्धितेष्विति निवृत्तमिति' । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । 'तत्सम्बद्धं कितीत्यपीति' । निवृत्तमित्यपेक्षते, ञिणिद्ग्रहणं तु प्रत्ययमात्रेण संबद्धमतस्तद्धितेष्वित्यस्मिन्निवृत्तेपि तदनुवर्त्ततएव, उदाहरणेषु हो हन्तेर्ञ्णिन्नेष्विति कुत्वम् ॥

"आतो युक् चिण्कृतोः" ॥ चिण्ग्रहणमकृदर्थम् । 'ददौ दधाविति' । ननु चात औ णल इत्यौत्वमत्र बाधकम्भविष्यति, अनवकाशा हि विधयो बाधका भवन्ति, सावकाशं चौत्वं, कोवकाशो यदा उत्तमे णलि णित्त्वाभावः, एवं तर्ह्यचिण्णलोरित्यनुवर्तिष्यते, चिणि तु वचनाद्भविष्यति, तत्राह । 'चौडिर्बालाकिरिति' । बाह्वादित्वादिञ्, अत्र दाह्यादौ चरितार्थं यस्येति लोपं बाधित्वा परत्वाद्युक् स्यात्, अचामादेरित्यनुवृत्तेर्न भविष्यति, अत आह । 'ज्ञादेव्रता अस्येति' । आदिवद्भावादत्र प्रसङ्गः । किं च अचामादेरित्यनुवृत्तौ दरिद्रायक इत्यत्र न स्यात् ॥

"नोदात्तोपदेशस्य मान्तस्यानाचमेः" ॥ उपदेशउदात्त उदात्तोपदेशः, अस्मादेव निपातनात्साधुः । 'किं चोक्तमिति' । सन्निहितस्य कस्यचिदप्रसङ्गात्प्रश्नः । 'अत उपधाया इति वृद्धिरिति' । चिण्कृदुपजीवनार्थं तु न तदनन्तरमिदमारब्धम् । 'निपातनादनुगन्तव्यमिति' । येषां त्वपाणिनीयो धातुपाठैर्यनिर्द्देश इति पक्षस्तेषामत्र सञ्ज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः । 'शमी तमीति' । शमित्यष्टाभ्यो घिनुण्, अत्र प्रत्ययस्वरे कृते सम्प्रति धातुरनुदात्तः । 'यामको रामक इति' । लित्स्वरे कृते भवत्ययं सम्प्रत्युदात्तः, अनाचमेरित्यल्पमिदमुच्यतइत्याह । 'अनाचमि-

र्कमिवमीनामिति वक्तव्यमिति'। टुवम् उद्गिरणे, कमु कान्तौ, चमु अदने, तत्र सूत्रे आङ्पूर्वस्य पर्युदासः, वाक्ये तु केवलस्य, वृत्तौ तु वाक्योदाहरणमप्याङ्पूर्वस्यैव दर्शितं, नात्राप्तैर्निरणायि। 'काम इति'। कमेरायादय आर्द्धधातुके वेति णिङभावपक्षे घञ् वृद्धिः। 'णिचि वृद्धौ सत्यामिति'। नहि तत्रायं प्रतिषेधः णिचो ऽकृत्त्वात्। ननु च सत्यामपि वृद्धौ जनीजृष्क्नसुरञ्जोऽमन्ताश्चेति मित्त्वे सति मितां ह्रस्व इति ह्रस्वेन भाव्यमत आह। 'तत्र हीति'। 'नान्ये मितो ऽहेताविति'। अहेतौ चुरादिणिच्यनुक्रान्तेभ्यो ऽन्ये ऽमन्तादयो मितो न भवन्तीत्यर्थः। 'अन्याय्यमेव मन्यन्तइति'। विश्रान्तिभूमिरिति पठितव्यमित्यर्थः। तेन विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुरिति व्याख्यातम्॥

"जनिवध्योश्च" 'वधिः प्रकृत्यन्तरमिति'। वध हिंसायामिति भूवादौ पाठात्। 'भक्षकश्चेदिति'। योपि मांसं क्रीत्वा भक्षयति तस्यापि हिंसानुषङ्गोस्तीत्येतदनेन प्रतिपाद्यते, यथाह मनुः।

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः॥

इति। 'हनादेशस्येति'। अवधि भवता दस्युरित्यत्र। 'जजामगर्भमिति'। व्यत्ययेन परस्मैपदम्, अन्तर्भावितण्यर्थत्वात्सकर्मकत्वम्॥

"अर्तिह्रीव्लीरीक्नूयिक्ष्माय्यातां पुङ् णौ"॥ व्लीङ् वरणे, क्नूयी शब्दे, क्ष्मायी विधूनने, उदाहरणेषु पुगन्तलक्षणो गुणः। 'द्वयोरपि ग्रहणमिति'। विशेषानुपादात्। 'रीइत्यपीति'। यद्यपि प्रस्रवणार्थः सानुबन्धकस्तथापि तस्यापि ग्रहणमाचार्यैः स्मर्यतइति भावः। पूर्वान्तकरणं न याबृच्छिकं किं तर्हि विवक्षितमित्याह। 'पुकः पूर्वान्तकरणमिति'। 'अदीदपदिति'। यदि पुनर्णेः पुट् स्यात् तस्य णिग्रहणेन ग्रहणात्ततो परतो यदङ्गं न तस्याकार उपधेति ह्रस्वो न स्यात्, दोषोपलक्षणं चैतद्वाप्यतइत्यादौ णेरनिटीति णेर्लोपेनापहृतत्वात्पकारस्य श्रवणं न स्यात्, नैष दोषः। नहि लोपः सर्वापहारी, अलोन्त्यस्येत्यन्त्यस्य लोपः, इह तर्हि क्नोपयतीतीडागमः प्राप्नोति॥

लाभोपि कश्चिच्चैवात्र परादौ सति दृश्यते ।
पुगन्तस्य गुणो वाच्यो वृद्धिः स्यादन्यथा यतः ॥

यत्किलेदमुच्यते पुटि सति गुणविधौ पुगन्तग्रहणं न कर्त्तव्यं सार्वधातुकार्द्धधातुकयोरित्येव सिद्धत्वादिति, तदप्याशावादमात्रं, यतः परादावप्यवश्यं पुटि गुणो विधेयः, अन्यथा अचो ञ्णितीतिवृद्धिप्रसङ्गात् ॥

"शाच्छासाह्वाव्यावेपां युक्" ॥ 'पाग्रहणइत्यादि' । इष्टिरेवेयं लाक्षणिकत्वात्पारूपस्य । 'लुगागमस्त्विति' । यद्यपि पालयतीति रूपं पाल रक्षणइत्यस्यैव चुरादिणिजन्तस्य, पुनर्हेतुमण्णिचि सिद्धं तथापि पातेः पुकि पापयति, युकि तु पाययति इति माभूदिति लुग्वचनम् । 'धूञ्प्रीञो-रिति' । धूञ् कम्पने, प्रीञ् तर्पणे, ञान्तस्यानुकरणं, तेन न दैवादिकस्य नुग्भवति । 'एतेपीति' । एते युगादयो वक्ष्यमाणाश्च जुगादयः । 'कृता-त्वानां ग्रहणमिति' । आकारान्तानां युकं विधाय तदनन्तरमोकारान्तेषु गृह्यमाणेषु युकः प्राप्तिराख्याता भवतीति भावः । 'एवमादीति' । आदिशब्देन क्षापयति, निज्ञापयति, विलापयते, मुण्डो विस्मापयते, प्रियमाचष्टे प्रापयतीत्यादेर्ग्रहणम् ॥

"वो विधूनने जुक्" ॥ विधूननइत्ययमेव निर्देशो लिङ्गं धूञो णौ नुग्भवतीति । 'वा इत्येतस्येति' । वा गतिगन्धनयोरित्यस्य । वज व्रज गतावित्यस्य णिचि रूपे वाजयतीति सिद्धे वातेः पुङ्निवृत्त्यर्थे जुको विधानम् ॥

"लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने" ॥ स्नेहो घृतादिः, तस्य विपातनं विगच्छतः काठिन्यं त्यजतः प्रयोजकव्यापारः, स्नेहविपातनं काठिन्यमुपगतस्याग्नौ निष्टपनादिना द्रवत्वापादानमित्यर्थः । 'न तु कृतात्वस्येति' । एकदेशविकृतस्यानन्यत्वात्प्रसङ्गः । 'जटाभिरालापयत-इति' । लियः संमाननशालीनीकरणयोश्चेत्यात्मनेपदम् । 'ली इति लीलीङोर्ग्रहणमिति' । क्रैयादिकदैवादिकयोः, निरनुबन्धकपरिभाषा तु नेष्यते । 'कृतात्वस्य च लीयतेरिति' । ग्रहणमित्यपेक्षते ॥

"भियो हेतुभये षुक्" ॥ हेतुः पारिभाषिकः, भीर्भयं, हेतोर्भयं हेतुभयं तत्र वर्तमानस्य। 'भीषयतइति'। भीस्म्योर्हेतुभयइत्यात्मनेपदम्। 'भापयतइति'। बिभेतेर्हेतुभयइत्यात्वम् ॥

"रुहः पोन्यतरस्याम्" ॥ अयं योगः शक्यो ऽवक्तुं, कथं, रुप मोहनइति दिवादौ पठ्यते, स ण्यन्तोच जन्मनि वर्तिष्यते, अनेकार्थत्वाद्धातूनां, तस्य रोपयतीति, रुहेस्त्वारोहयतीति ॥

"प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः" ॥ अत्र यदि कादित्यत्राकारो विवक्षितः स्यात् एतिकाश्चरन्तीत्यत्रेत्वं न स्यात्, एतदोकचि जसि त्यदाद्यत्वे टापि च रूपमकचो ह्यन्त्योकार उच्चारणार्थो न श्रवणार्थः, भिन्धकि छिन्धकि रुन्धकि इत्यादेरसिद्धिप्रसङ्गात्, ततश्च कशब्दस्याभावादेतिका इत्यत्र न स्यादेव, न यासयोरिति च प्रतिषेधः सङ्घातग्रहणेनर्थकः स्यात्, तस्मादुच्चारणार्थोकारो वर्णमात्रमेव विवक्षितमित्याह। 'प्रत्ययस्थात्ककारादिति'। 'स चेदिति'। स चेदाप् सुपः परस्ताच्च भवति तदेत्वमित्यर्थः। प्रत्ययग्रहणपरिभाषया सुबन्तादिति द्रष्टव्यम्। 'जटिलिका मुण्डिकेति'। टाबन्ताभ्यामज्ञातादिषु प्रागिवात्कः, केण इति ह्रस्वत्वं, ततष्टाप्, तत इत्वं, यद्यप्ययमकारो लाक्षणिकः तथाप्युदीचामातः स्थानइति लिङ्गात्तस्यापि भवति। 'ककारमात्रं हीति'। उक्तमिदं कादितिवर्णमात्रं विवक्षितमिति, न ककारमात्रं कश्चित्प्रत्ययोस्ति तस्मात्कात्प्रत्ययादित्युच्यमानेपि प्रत्ययावयवे प्रत्ययशब्दो वर्तिष्यतइति किं स्थग्रहणेनेत्यर्थः। 'पटुका मृदुकेति'। पटुमृदुशब्दाभ्यां स्त्र्यर्थवृत्तिभ्यां के कृते टाप्। असति पूर्वग्रहणे तस्मादित्युत्तरस्येति कात्परस्यैवाकारस्य वार्णादाङ्गं बलीय इत्येकादेशं बाधित्वा इत्वं स्यात्, यद्यपि जटिलिका मुण्डिकेत्यादावयं प्रसङ्गः शक्यो दर्शयितुं तथापि विस्पष्टार्थमुदाहरणान्तरमुपन्यस्तम्। 'राका धाकेति'। कृदाधारार्चिकलिभ्यः कः। 'अथापीत्यनेन किं विशेष्यतइति'। ककारः प्रत्ययो वेति संदेहात्प्रश्नः। 'ककार इति'। प्रत्यये तु विशेष्यमाणे रथकट्यादिष्वतिप्रसङ्ग इति भावः। यद्यपि प्रत्ययोपि श्रुतस्तथापि तस्योपसर्जनत्वात्ककार एव विशेष्यते।

'कारिकेत्यत्रापि न स्या¹दिति'। अतिप्रसङ्गस्तिष्ठतु तावत्, इष्टमपि न सिध्यतीत्यपिशब्दस्यार्थः। अपि परतो यः ककार इत्येवं विज्ञायमाने कारिकेत्यपि न स्यात्, एकादेशस्य यो द्वितीयोकारस्तेन व्यवधानात्। 'वचनाद्व्यवधानमीदृशमिति'। आश्रीयतइति वक्ष्यमाणेन संबन्धः, इदृशमित्येतद्व्याचष्टे। 'स्थानिवद्भावकृतमिति'। एकेन वर्णेनेत्युपलक्षणं, स्थानिवद्भावकृतमित्येतावति तात्पर्यम्, अन्यथा एतिकेत्यत्र द्वाभ्यामकाराभ्यां व्यवधानादित्वं न स्यात्। एक एतदः सम्बन्धी, द्वितीयस्त्यदादीनाम इत्यकारः, तत्राकारयोर्यः पररूपमेकादेशः यश्च टापा सह दीर्घः, द्वयोरपि तयोः स्थानिवद्भावः। अन्ये त्वाहुः। अत्रापि टापा सह य एकादेशस्तस्यैव स्थानिवद्भावः, न त्वकारयोः कृतस्य पररूपस्य, सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्, तेनात्राप्येकेनैव व्यवधानमिति, वचनाद्व्यवधानेपि भविष्यतीति वक्तव्य ईदृशं व्यवधानमिति यदुक्तं तस्य व्यावर्त्यं दर्शयति। 'रथकट्यादिष्विति'। रथानां समूहो रथकट्या, इनित्रकट्यचश्च, आदिशब्देन गर्गकाम्यादेर्ग्रहणं, गर्गमिच्छत्यात्मन इति काम्यजन्तादप्रत्ययः, ततष्टाप्, एतदुक्तं भवति। आपीति सप्तम्या यदानन्तर्यमुपात्तं तदात्यन्ताय त्यज्यते किं तु यावत्सम्भवमाश्रीयतइति। 'सुबन्तादयं परिव्राजकशब्दादिति'। प्रत्ययलक्षणेन सुबन्तत्वम्। 'पर्युदासे हीति'। सुपोन्योऽसुप्, ततश्चेदाप्यर इत्याश्रीयमाणइत्यर्थः। 'समुदायादसुबन्तादिति'। अवयवात्परिव्राजकशब्दात्सुबुत्पत्तौ न समुदायादिति तस्यासुबन्तत्वम्। 'एवमपि नाश्रीयतइति'। बहुव्रीहिरपि नाश्रीयतइत्यर्थः। किं कारणमित्यत आह। 'तथा हीति'। 'बहुचर्मिकेति'। बहूनि चर्माण्यस्यामिति बहुव्रीहिः, शेषाद्विभाषेति कप्, तत्पुरुषे तस्मिंश्चात्र सुबन्तात्परष्टाब् भवति कपा व्यवहितत्वात्। 'मामिकेति'। ममेयमित्यण्, तवकममकावेकवचनइति ममकादेशः। 'दाक्षिणात्यिकेति'। दक्षिणादाच्, दक्षिणा, ततो भवादौ दक्षिणापश्चात्पुरसस्त्यक्। 'इहत्यिकेति'। अव्ययात् त्यप्॥

१ प्राप्नोतीति मुद्रितमूलपुस्तके पा०।

"न यासयोः"॥ पूर्वेण नित्यमित्त्वे प्राप्ते निषेधोयमुच्यते, प्राप्तिपूर्वकत्वात्प्रतिषेधस्य, यदा यत्तदोरकज्भवति तदा प्रतिषेधः। 'यका सकेति'। यत्तदोरकच्, सौ त्यदाद्यत्वे टाप्। या सेति प्रथमैकवचनान्तयोरुपादानाद्विभक्त्यन्तरे प्रतिषेधो न स्यादित्यत आह। 'या सेति निर्देशो न तन्त्रमिति'। 'यत्तदोरुपलक्षणमिति'। यद्येवं यत्तदोरित्येव वक्तव्यं, सत्यं, तथा तु न कृतं किं कुर्मः। 'यकांयकामधीमहइति'। ऋचं गाथां च। 'तकांतकाम्पचामहइति'। ओषधीं शाकिनीं वा, द्वावेतौ प्रयोगौ। 'उपत्यकेति'। उपाधिभ्यां त्यकन्नासन्नारूढयोः, अत्र कश्चिदाह। स्त्रीविषयोयं त्यकन्प्रत्ययान्तस्ततश्च प्रक्रियालाघवाय त्यिकन्निति वक्तव्ये त्यकन्नित्यकारोच्चारणसामर्थ्यादित्वाभाव इति। तदयुक्तं, पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादावार्हीयस्य ठको ऽध्यर्द्धपूर्वेति लुकि कृते लुक्तद्धितलुकीति टापो लुकि निमित्ताभावादित्वं न स्यादिति तद्धितलुगर्थमेतत्स्यात्, बहिरङ्गो लुक्, अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते, ननु च सुपो धातुप्रातिपदिकयोरित्येतद्विषयमेतत्, नेत्याह, यश्च यावांश्च लुग्नामः सर्वाण्यन्तरङ्गान्विधीन्बाधते यथा सनीस्रंस इत्यादौ नलोपो न भवति, पञ्चखट्व इत्यादौ टापा सहैकादेशो न भवति, यदि स्यादादिवद्भावादाब्ग्रहणेन ग्रहणाल्लुकि सति अकारोत्र न श्रूयेत। 'पावका इति'। पुनन्ति पावयन्तीति वा पावकाः। 'अलोमका इति'। बहुव्रीहेः कप्। 'जीवकेति'। आशिषि चेति वुन्। 'देवकेति'। देवदत्तशब्दादनुकम्पायां कन्, अनजादौ च विभाषा लोपो वक्तव्य इति दत्तशब्दस्य लोपः। 'क्षिपकेति'। क्षिपेरिगुपधात्कः, ध्रु गतिस्थैर्ययोः, पचाद्यचि कुटादित्वाद्गुणाभावे उवङ्, उभाभ्यामज्ञातादिषु प्रागिवात्कः, तरतेर्ण्वुल्, तारका। वर्णयति महत्वादिकङ्गुणमिति वर्णका, प्रावारविशेषः, तन्तूनां विकारस्तान्तवमोरञ्। 'वर्णकेति'। भागुरी, व्याख्या टीकाविशेषः, वृतेर्ण्यन्तात् ण्वुल्, वर्त्तिका। 'अष्टकेति'। अश्नन्ति ब्राह्मणा ओदनमस्यामित्यष्टका, इष्यशिभ्यां तकन्निति तकन्, पितरश्च ता देवताश्च पितृदेवता, तदर्थं कर्म पितृदेवत्यं, देवतान्तात्तादर्थ्ये यदिति यत्। 'अष्टिकेति'।

अष्टौ परिमाणमस्याः, संख्याया अतिशदन्तायाः कन्। 'सूतकेति'। न सामिवचनइतिप्रतिषेधेन ज्ञापितः स्वार्थे कन्। 'पुत्रिकेति'। शार्ङ्गरवादित्वान्ङीनि कृते स्वार्थिकः कन्, केण इति ह्रस्व इकारः, तस्य पक्षे ऽत्वं विधीयते। 'वृन्दारिकेति'। शृङ्गवृन्दाभ्यामारकन् वक्तव्य इत्यारकन्॥

"उदीचामातः स्थाने यकपूर्वायाः"॥ यकौ पूर्वौ यस्याः सा यकपूर्वा, कोन्यपदार्थ आकारः, अर्थगतं स्त्रीत्वं शब्दे समारोप्य स्त्रीलिङ्गनिर्देशः, पूर्वशब्दो व्यवस्थावचनः। 'इभ्यिकेति'। इभमर्हतीति, दण्डादिभ्यो यः, इभ्या, ततः पूर्ववत्कः, ह्रस्वत्वं च, चटकमूषकशब्दाभ्यामजादित्वाट्टाप्। 'सांकाश्यिकेति'। संकाशे निर्वृत्तं सांकाश्यं, संकाशादिभ्यो ण्यः, ततो भवार्थे धन्वयोपधाद्वुञिति वुञ्, स्थानग्रहणमनर्थकं षष्ठीस्थाने योगेति सिद्धत्वादित्यत आह। 'स्थानग्रहणमित्यादि'। परिभाषाया विधिशेषत्वादनुवादे उपस्थानं न स्यादिति भावः। अनुवादत्वमेव स्पष्टयति। 'आत इत्यनेन हीति'। अतो योकारस्तस्येत्वं भवतीति वचनव्यक्तौ नाकारस्य विधिस्पर्शः कश्चिदस्तीत्यर्थः। 'स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थ इति'। यः स्त्रियामित्यधिकृत्य विहितष्टाबादिः स स्त्रीप्रत्ययः, तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थमित्यर्थः। असति हि स्त्रीलिङ्गे यः कश्चनाकारो गृह्येत। 'शुभं याति भ[1]द्रं यातीति'। क्विप्, शुभंभद्रमितिमकारान्तौ निपातितौ, पूर्ववत्को ह्रस्वत्वं च। 'प्रतिषेध इति'। तेन विधिरेव भवति। 'सुनयिका सुशयिकेति'। नीशीभ्यामेरच्, सुशब्देन बहुव्रीहिः, टाबादि पूर्ववत्। 'सुपाकिका सुशोकिकेति'। पचिशुचिभ्यां घञ्, चजोः कु घिण्ण्यतोरिति कुत्वं, शेषं पूर्ववत्॥

"भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि"॥ स्वा इति षष्ठ्याः स्थाने प्रथमा, एषेति कृतषत्वनिर्देशस्तन्त्वं, तथा च एतिकाश्चरन्तीति जसि नित्यमित्वमुदाहृतम्॥

अत्रातः स्थानइत्येतत् स्वशब्दस्य विशेषणम्।
संभवव्यभिचारौ हि तत्र स्तः काकचोः सतोः॥

---

१ भद्रं यातीति मुद्रितमूलपुस्तके नास्ति।

द्व्येतदोः संभवो नास्ति, नान्यत्र व्यभिचारिता ।
सर्वनाम्नः स्वशब्दस्य तेन नायं विधिर्भवेत् ॥

'द्वके इति'। द्विकशब्दाद् द्विवचने त्यदाद्यत्वे टापि औङः शीभावः। 'तस्यां सत्या[1]मिति'। समासार्थात्तु या विभक्तिस्तस्यां त्यदाद्यत्वं न भवत्यन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधतइति वचनात्। 'सोन्तर्वर्तिन्या विभक्त्या सुबन्तात्पर इति'। प्रत्ययलक्षणेन सुबन्तत्वं, स्वशब्दोपि तर्ह्यनयैव युक्त्या नञ्पूर्वो न प्रयोजयेदित्यत आह। 'स्वशब्दस्त्विति'। स्वशब्दो हि 'स्वमज्ञातिधनाख्याया'मिति वचनाज्ज्ञातिधनयोरसर्वनामसंज्ञकस्तेन तस्मात्कप्रत्ययेनैव भवितव्यं नाकचा, तत्र यदा नञ्समासे कप्रत्ययः क्रियते तदन्ताच्च टाप् तदासौ सुपः परो न भवति, केन व्यवहितत्वात्, तेनासर्वनामसंज्ञकः स्वशब्दो नञ्पूर्वोपि भवत्येव प्रयोजकः। 'अभस्त्रका अभस्त्रिकेति'। अल्पइति प्रागिवात्कः। असति तु भस्त्राग्रहणे यथा न सिध्यति तथा दर्शयति। 'अत्रेति'। बहुव्रीहिः पुंस्यपि वर्त्तते, अभस्त्रः पुरुष इति, विहितग्रहणेनैतद्दर्शयति यद्यप्यभाषितपुंस्काद्भस्त्राशब्दात्परो भवति तथापि तस्माद्विहितो न भवति, विहितविशेषणं चोत्तरत्रापि भाषितपुंस्कग्रहणम्, अन्यथा न विद्यते खट्वा यस्याः सा ऽखट्वा ततो ऽखट्विकेत्यादावपि प्रसङ्गादिति, अपिग्रहणेन केवलानामेव भस्त्रादीनां समुच्चयो नान्यपूर्वाणामिति शङ्कमानं प्रत्याह। 'नञ्पूर्वाणामपीत्यपिशब्दादिति'। इष्यतइत्यनेन नेयं स्वतः प्राप्तिरिति दर्शयति, यदि तर्हि सर्वत्रेष्यते नञ्पूर्वाणापीति न वक्तव्यमङ्गाधिकारे तस्य च तदुत्तरपदस्य चेत्येव सर्वत्र भविष्यत्यत आह। 'तत्रेति'॥

"अभाषितपुंस्काच्च"॥ अभाषितपुंस्कादिति विहितविशेषणमित्याह। 'अभाषितपुंस्काद्विहितस्येति'। खट्वाशब्दः स्त्रियामेव नियत इत्यभाषितपुंस्कः, बहुव्रीहेरभिधेयलिङ्गत्वाद्भाषितपुंस्कत्वाभावादनेन विकल्पेन न भवितव्यमिति मन्यमानं प्रत्याह। 'बहुव्रीहाविति'।

१ सत्यामिति मुद्रितमूलपुस्तके नास्ति।

कथं भवतीत्यत आह । 'तत्रापीति' । इतिकरणो हेतौ । 'यदा त्विति' । कबभावपक्षस्तत्, अखट्वा इति स्थितउपसर्जनह्रस्वत्वं, टाप्, पुनः केण इति ह्रस्वः, स च समासाद्भाषितपुंस्कादुत्पन्नस्य टाप इति न भवत्ययं विकल्पः, अभाषितपुंस्कात्परस्यात इति विज्ञायमाने स्यादेवात्र विकल्पः । 'अतिखट्विकेति' । अत्रापि समासाद्भाषितपुंस्काट्टाबुत्पन्नः ॥

"आदाचार्याणाम्" ॥ इत्वापवादोऽयं योगः, केण इति ह्रस्वापवादश्च । 'आचार्याणामिति' । उदीचामित्युक्तं ततोऽन्येषामाचार्याणामित्यर्थः । अपर आह । आचार्यस्य पाणिनेर्य आचार्यः स इहाचार्यः, गुरुत्वात्तु बहुवचनमिति, सर्वथा ऽभाषितपुंस्केषु त्रैरूप्यम् । अखट्वका अखट्विका अखट्वाकेति ॥

"ठस्येकः" ॥ अत्र द्वौ पक्षौ, । ठेति व्यञ्जनमात्रं स्थानित्वेन निर्दिश्यते, अकारस्तूच्चारणार्थ, एवं ढगादिष्वपीत्येकः पक्षः । संघातः प्रत्ययः स्थान्यप्यत्र स एवेति द्वितीयः, तत्राद्ये पक्षे पठिता पठितुमित्यादौ धात्वन्तस्यापि प्रसङ्गः, द्वितीये तु अठचि कर्मठ इत्यत्रापि प्राप्नोति, तत्र द्वयोरपि पक्षयोर्यथा दोषो न भवति तथा दर्शयन्नाह । 'अङ्गस्य निमित्तं यष्ठ इति' । संबन्धस्तत्र नावयवावयविभावलक्षणः, पठितेत्यादावपि प्रसङ्गात्, किं तर्हि, निमित्तनिमित्तिभावलक्षणः, अङ्गस्य संबन्धीत्युक्ते तद्रूपसंबन्ध्येव प्रतीयते, प्रत्ययश्च तद्रूपसंबन्धी, तदायत्तत्वादङ्गव्यपदेशस्य, तदेवमङ्गव्यपदेशनिमित्तस्य प्रत्ययस्य ग्रहणादुभयोरपि पक्षयोर्दोषाभावः, किं च सङ्घातपक्षे अर्थवतष्ठशब्दस्य ग्रहणान्न भवति कर्मठ इत्यत्र प्रसङ्गः, वर्णग्रहणे त्वर्थवत्परिभाषा न प्रवर्तते, तत्र सङ्घातपक्षे दोषान्तरमाशङ्क्य परिहरति । 'तत्रेति' । पुनरपि तस्मिन्नेव पक्षे चोदयति । 'मथितं पण्यमस्येति' । वर्णग्रहणे त्वनल्विधाविति स्थानिवत्त्वनिषेधादिकस्य कादेशाप्रसङ्गः । 'कादेशः प्राप्नोतीति' । ननु तान्तादङ्गादित्युच्यते, न चात्र तान्तमङ्गं, ततः प्रत्ययस्याविधानात्, नैतदस्ति । एकदेशविकृतस्यानन्यत्वादङ्गं भवति, तान्तं च, ततश्च यथानुकम्पितो भानुदत्त इति ठचि द्वितीयादच ऊर्ध्वस्य लोपे कादेशो भवति भानुक

इति, तथात्रापि प्रसङ्गः। परिहरति। 'संनिपातेति'। अजादिसंनिपातेन सान्तत्वमुपजायते, ततश्च तद्विघातस्य निमित्तं नोपपद्यते। परिहारान्तरमाह। 'यस्येति लोपस्येति'। स्थानिवद्भावस्त्वचः परस्मिन्पूर्वविधावित्यनेन, ननु पूर्वस्य विधावित्युच्यते परस्यायं तत्राह। 'पूर्वस्मादपि हीति'। पञ्चमीसमासोपि तत्राश्रीयतइत्यर्थः। अन्ये त्वाहुः। वर्णग्रहणादेव सदन्तविधौ सिद्धे ऽन्तग्रहणं प्रत्ययोपदेशकाले तान्तप्रतिपत्त्यर्थमिति॥

"इसुसुक्तान्तात्कः"॥ 'सार्पिष्क इति'। तदस्य पण्यमिति ठक्, इणः ष इति विसर्जनीयस्य षत्वम्। 'धानुष्क इति'। प्रहरणमिति ठक्। 'याजुष्क इति'। दीव्यत्यर्थे ठक्। 'नैषादकर्षुकः शाबरजम्बुक इति'। भवादावर्थे ओर्देशे ठञ्, कादेशे कृते केण इति ह्रस्वत्वम्। 'मातृकं पैतृकमिति'। तत आगतः, ऋतष्ठञ्। 'औदश्वित्क इति'। संस्कृतं भक्षाः, दध्नष्ठक् उदश्वितोन्यतरस्यामिति सप्तम्यन्ताट्ठक्। 'शाकृत्को याकृत्क इति'। संसृष्टइति ठञ्। 'आशिषेति'। आङः शासु इच्छायामित्यस्मादाशासनमाशीरिति संपदादित्वाद्भावे क्विप्, आशासः क्वावुपसंख्यानमितीत्वम्। 'उषेति'। वसेः क्विप्, यजादित्वात्सम्प्रसारणे लाक्षणिकं रूपमिति। सर्पिरादौ तु अर्चिशुचिहुसृपिच्छादिभ्य इसिः, जनेरुसिः, अर्तिपृवपियजितनिधनिभ्यो नित्तिति प्रतिपदोक्तमिसुसो रूपम्। 'दोष उपसंख्यानमिति'। वर्णैकदेशानां वर्णग्रहणेनाग्रहणादोकारे य उकारस्तस्य उकारग्रहणेनाग्रहणादुपसंख्यानम्॥

"चजोः कु घिण्ण्यतोः"॥ पाक इत्यादौ भावे घञ्, पाक्यमित्यादौ कर्मणि ऋहलोर्ण्यत्, यथासंख्यमत्र न भवति घिति चकारस्य ण्यति जकारस्येति, भुजन्युब्जौ पाण्युपतापयोः, प्रयाजानुयाजौ यज्ञाङ्गे, वचोशब्दसंज्ञायामित्यादेर्लिङ्गात्, क्वचित्तु पठ्यते यथासंख्यमत्र नेष्यते, तेन रक्तं रागादिति लिङ्गादिति॥

"न्यङ्क्वादीनां च"॥ 'न्यङ्कु इत्येवमादीनां चेति'। सिद्ध्यइति शेषः, कृतकुत्वानामेव गणे पाठात्, किमर्थं तर्हि सूत्रं, यावता यथैव कुत्वादन्यदपि घत्वगुणदीर्घत्वादिकं निपातनाद्भवति तथा कुत्वमपि

भविष्यति, सत्यम्, असति तस्मिन् अनुवादे गणस्य क्वचिदप्यनुपयोगात्प्रमादपाठः शङ्क्येत । 'पचाद्यचीति' । घञि कुत्वस्यासिद्धत्वात् सञ्ज्ञायां मेघ इत्यादि, मेघः पयोधरः, निदाघो घर्मः, अवदाघोपि स एव, अर्घो विक्रीयमाणस्य धान्यादेरियत्ता, मूल्यमित्यन्ये । 'वीरुदिति' । निपातनादुपसर्गस्य दीर्घत्वम् ॥

"हो हन्तेर्ञ्णिन्नेषु" ॥ ञश्च णश्च ञ्णौ, ताविती ययोस्तौ ञ्णितौ, तौ च नश्च ञ्णिन्नाः, तेषु ञ्णिन्नेषु, नकारे ऽकार उच्चारणार्थः, तेन वृत्रघ्नि वृत्रघ्नोरित्यादावपि भवति, घ्नन्तीत्यादौ गमहनेत्युपधालोपः, किमिदं ञ्णिन्नग्रहणं हन्तिविशेषणं ञ्णिन्नपरस्य हन्तेर्यो हकार इति, आहो स्विद्धकारविशेषणं ञ्णिन्नपरस्य हकारस्य स चेद्धन्तेरिति, तत्राद्ये पक्षे ह्यत्रासिद्धिः, घ्नन्ति घ्नन्तु, नहि स्वावयव एव स्वस्मात्परो भवति, द्वितीये तु न क्वचित्स्यात्, नहि ञ्णिन्नकारपरता हकारस्य क्वापि संभवति, घातयतीत्यादौ तावदकारेण तकारेण व्यवधानं, घ्नन्तीत्यादावुपधालोपस्य स्थानिवद्भावाद्व्यवधानमेव, अथ वचनाद्व्यवधानेपि भविष्यति, इहापि तर्हि प्राप्नोति हतमिच्छति हतीयति, हतीयतेर्ण्वुल्, हतायक इति, नकारेपि हन्ता हननमित्यादावपि प्रसङ्गः, नकारग्रहणमिदानीं किमर्थं स्यात्, यत्र नकारः श्रूयते तत्र यथा स्यात्, इह माभूत् हतो हथ इति, तदेवं द्वयोरपि पक्षयोर्दोषं दृष्ट्वा पक्षान्तरं दर्शयति । 'ञ्णि[1]त्प्रत्ययइत्यादि' । यद्यपि द्वन्द्वनिर्दिष्टानामेकयोगक्षेमता न्याय्या तथापि सम्भवव्यभिचारौ हि विशेषणविशेष्यभावस्याङ्गमित्ययमेव प्रकार आश्रीयते । ननु च स्थानिवद्भावादानन्तर्यं नकारस्य न सम्भवतीत्युक्तमत आह । 'तच्चेति' । 'संनिपातकृतमिति' । श्रुतिकृतमित्यर्थः । अथ वा पुनरस्तु द्वितीयः पक्षः, तत्रापि दोषः सुप्रतिविधान इत्याह । 'यदापाति' । धात्ववयवेन नकारेण व्यवधानमव्यभिचारीति तदेवाश्रीयते न शब्दान्तरेणेति ञ्णित्ययं परिहारः, नकारे तूक्त एव ॥

१ ञिति णितीति मुद्रितमूलपुस्तके पाठः ।

"अभ्यासाच्च" ॥ 'अहं जघनेति' । लिड्भावे उदाहरणं, लिट्पक्षे पूर्वेणैव सिद्धम्, एवं जघनिथ जघन्थ जघन्वानित्युदाहरणम् । 'अभ्यासनिमित्ते प्रत्यय इत्यादि' । अङ्गाधिकारेऽभ्यासेन च प्रत्ययस्याक्षिप्तत्वादयमर्थो लभ्यते । 'जिहननीयिषतीति' । अत्र यस्मिन्हन्तिरङ्गं ल्युटि न तस्याभ्यासनिमित्तत्वं यश्चाभ्यासस्य निमित्तं सन् न तस्मिन् हन्तिरङ्गम् ॥

"हेरचङि" ॥ 'प्राजीहयदिति' । हयन्तात्लुङ्, चङ्, णिलोपः, उपधाह्रस्वत्वं, चङीति द्विर्वचनं, कुहोश्चुरिति चुत्वं, दीर्घो लघोरिति दीर्घः । अचङीत्येतदस्याचष्टे । 'अचङीति शक्यमकर्तुमिति' । कथमित्यत आह । 'अनभ्यासेति' । यथा पूर्वसूत्रे जिहननीयिषतीत्यत्र न भवति एवं प्राजीहयदित्यत्रापि न भविष्यति किमचङीत्यनेनेत्यर्थः, [1]'तत्क्रियत इत्यादिपरिहारः, किमेतस्य ज्ञापने प्रयोजनमित्यत आह । 'तेनेति' ॥

"सन्लिटोर्जेः" ॥ ज्या वयोहानावित्यस्य क्ङिति ग्रहिज्यादिसूत्रेण सम्प्रसारणे कृते पूर्वत्वे च जिरूपस्य भावाद्धल इति दीर्घत्वं बाधित्वा कुत्वं प्राप्नोति, कृतेऽपि वा दीर्घत्वे एकदेशविकृतस्यानन्यत्वात्कुत्वप्रसङ्गः, यथा जिगीषतीत्यत्रेत्यत आह । 'जिनातेरित्यादि' । एरनेकाच इति यणादेशः ॥

"न क्वादेः" ॥ 'कूज इत्यादि' । कूज अव्यक्ते शब्दे, खर्ज व्यथने, गर्ज शब्दे, अत्र वार्तिकं 'क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनादिति' । अस्यार्थः । चजोः कुघिण्ण्यतोर्निष्ठायामनिट् इति सूत्रं कर्तव्यं, तेनैव क्वाद्यजादीनां कुत्वनिवृत्तेः सिद्धत्वाद्व्यर्थः प्रतिषेधवचनेनेति, नन्वेवं युजिभुजिरुजिमुजीनां निष्ठायामनिट्त्वात्कुत्वं प्राप्नोति, तथा अर्जिमर्जितर्जीनां निष्ठायां सेट्त्वात्कुत्वाप्रसंगः, यथा तु सूत्रं तथा विपर्ययः । उच्यते । यथोत्तरं मुनीनां प्रामाण्यमिति वार्ति-

१ तत्क्रियत इत्ययं ग्रन्थो मुद्रितमूलपुस्तके नास्ति ।

कानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्यौ । नन्वसत्यत्रेः प्रतिषेधे निशीत इति निष्ठायामनिट्त्वात्समत्र इति कुत्वप्रसङ्गः, नैतदस्ति, आदेशो निष्ठायामनिट् न त्वत्रिः, स तु वलाद्यार्धधातुके विकल्पेनेष्यत इति वीभावाभावपक्षे अजित इति सेट्कः, कथं शाक समुद्र इति, यावता कुचुब्जौ निष्ठायां सेटौ, एवं तर्हि शुच्युब्ज्योर्घञीति वक्ष्यामि, तच्च यथान्यासेऽपि वक्तव्यं, घञ्येव यथा स्यात् ण्यति माभूदिति, अस्तु वाऽनन्यशोच्यस्त्वमिति, तदेव वार्तिककारपक्षे विध्यर्थं भविष्यति ॥

"अजिव्रज्योश्च" ॥ 'समाज उदाज इति'। पशुभ्योऽन्यत्र हलश्चेति घञ्, पशुषु तु समुदो रजः पशुष्वित्यप् भवति ॥

"भुजन्युब्जौ पाण्युपतापयोः" ॥ पाणिशब्देन तद्वान्बाहुर्लक्ष्यते, न तु मणिबन्धस्याग्रः पञ्चशाखाप्रदेश उच्यते, लोकेऽपि बाहुपर्यायो भुजशब्दः । 'भुज्यतेऽनेनेति'। भुज पालनाभ्यवहारयोः । 'न्युब्जिता इति'। अधोमुखाः निश्चेष्टाः, वस्तुकथनं चैतत्, विग्रहस्तु न्युब्जन्त्यस्मिन्निति दर्शयितव्यः, न्युब्जोपतापग्रहणं शक्यमकर्तुं, कथं, यस्मिन्व्याधौ न्युब्जिताः शेरते स तान् न्युब्जयति तत्र ण्यन्तात्पचाद्यचि न्युब्ज इति सिद्धं, न चात्र घञचोः स्वरे विशेषः, चायादिसूत्रेण घञप्यन्तोदात्तत्वविधानात्, भुजशब्दस्तु घञ्याद्युदात्तो भवति, इगुपधलक्षणे तु केऽन्तोदात्तः ॥

"प्रयाजानुयाजौ यज्ञाङ्गे" ॥ 'पञ्चानुयाजा इति'। दर्शपूर्णमासयोस्त्रयोऽनुयाजाः, चातुर्मास्येषु नव, पशुष्वेकादश, पञ्चत्वं न क्वापि दृष्टं तस्मात्त्रयोऽनुयाजा इति पाठः । 'प्रदर्शनार्थमिति'। एतच्च यज्ञग्रहणाल्लभ्यते, उपांशुयोर्हि यज्ञाङ्गविषयत्वं निपातनादेव सिद्धमुपांशुयागस्य चानुयाजानां च यज्ञसमुदायं प्रत्यवयवत्वाद्यज्ञाङ्गत्वं, प्रधानयागा ह्येते इतरेषां तु फलवत्संनिधावफलं तदङ्गमित्यङ्गत्वम् ॥

"वञ्चेर्गतौ" ॥ 'वञ्च्यं वञ्चन्तीति'। गन्तव्यं गच्छन्तीत्यर्थः । 'व[1]ङ्कमिति'। गुणशब्दोऽयमभावे घञ्, अभेदोपचाराद्गुणिनि वृत्तिः ॥

---

१ वङ्कमिति मुद्रितमूलपुस्तके पाठः ।

"ओक उचः के" ॥ उच समवाये । 'न्योकः शकुन्त इति' । न्युचति समवैति नीडादाविति कृत्वा । 'न्योको गृहमिति' । न्युचन्ति समवयन्ति वसन्ति तस्मिन्निति कृत्वा । 'असुनि प्रत्ययइति' । अयमेव लोके साधीयः प्रयुज्यते ॥

"ण्यआवश्यके" ॥ उदाहरणेषु आवश्यकाधमर्ण्ययोर्णिनिः, कृत्याश्चेति ण्यत्, मयूरव्यंसकादित्वात्समासः, लुम्पेदवश्यमः कृत्यइति मलोपः ॥

यजयाचरुचप्रवचर्चश्च" ॥ 'अर्च्यमिति'। ऋच स्तुतौ । प्रवाच्यो नामेति'। प्रकर्षेणोच्यतइति प्रवाच्यः, पाठविशेषोपलक्षितो ग्रन्थविशेषः । 'अपरे पुनरिति'। ते मन्यन्ते प्रपूर्वो वचिरशब्दसंज्ञायामेव वर्त्तते, तत्र विधेयासम्भवान्नियम इति । 'एतच्चेति'[1] । अविवाक्यमित्येतावच्छब्दरूपं, कः पुनरसौ विशेष इत्यत आह । 'दशरात्रस्येति' । द्वादशाहेभितो द्विरात्रो मध्ये दशरात्रः, तस्य दशममहरविवाक्यम् । 'अन्यत्रेति' । तथा च नास्मिन्नहनि केन चित्कस्य चिद्विवाच्यमविवाक्यमित्येतदाचक्षते, संशये बहिर्वेदिस्वाध्यायप्रयोगोन्तर्वेदीत्येकइत्यहर्विशेषे कुत्वम् । अन्यत्र तदभावः प्रयुक्त आश्वलायनेन । एवमन्योपसर्गपूर्वस्यापि प्रतिषेध एवेष्यते न नियमः, एवञ्च कृत्वा प्रवचिग्रहणं शक्यमकर्तुमहर्विशेषे पृषोदरादित्वात्कुत्वम्, अन्यत्र प्रतिषेध इति सिद्धमिष्टम् । अन्यथा नियमे हि बहु प्रतिविधेयं स्यात् ॥

"प्रयोज्यनियोज्यौ शक्यार्थे" ॥ इह प्रयुजनियुजः शक्यार्थइति वक्तव्यं, ण्यइत्येव, एवं सिद्धे निपातनाश्रयणं रूढ्यर्थं गुणभूतएवैतयोः प्रयोगो यथा स्यात् प्रयोज्यो भृत्यो नियोज्यो दास इति, स्वामिनि प्रयोज्यनियोज्यशब्दौ न भवतः ॥

"भोज्यं भक्ष्ये" ॥ 'भोज्या यवागूरिति' । ननु भक्षिरयं खरविशदेभ्यवहार्ये वर्त्ततइति संस्कृतं भक्षा इत्यत्रोक्तं तत्कथं द्रवद्रव्ये भवती-

१ वृचइति मुद्रितमूलपुस्तके पाठः ।
२ मुद्रितमूलपुस्तके एतत्त्विति पाठः ।

त्यत आह । 'इहेति' । एवं मन्यते, नात्र भक्षिः खरविशदएव वर्त्तते अब्भक्षो वायुभक्ष इत्यत्रापि दर्शनादिति शब्दान्तरसंनिधिबलादेतदेवं भवति स्वभावतस्तु भक्षिः खरविशदएव वर्त्तते इति वार्त्तिककारस्य पक्षः, यदाह भोज्यमभ्यवहार्यइति वक्तव्यमिति ॥

"घोर्लोपो लेटि वा" ॥ 'दधदिति' । दधातेर्लेट्, तिप्, इतश्च लोपः परस्मैपदेष्वितीकारलोपः, दाशुषे यजमानाय रत्नानि, दद्यादित्यर्थः। अन्ये त्वाहुः । दधदिति शत्रन्तमेतत्, ददिति दाञो रूपं, वावचनं प्रत्याचिख्यासुराह । 'आडागमे सतीति' । अस्त्वत्र लोपः, आटः श्रवणं भविष्यतीत्यर्थः, किमर्थं तर्हि वावचनमित्यत आह । 'तत्रेति' । किमत्र विस्पष्टनीयमत आह । 'एषा हीति' । अन्ये त्वाहुः, ज्ञापकार्थं वाग्रहणम्, एतज्ज्ञापयति अनित्यमागमशासनमिति, अनित्यत्वे त्वाट्यसति दद्यादिति न स्यादिति तत्सिद्धये वाग्रहणं कर्त्तव्यमिति ॥

"ओतः श्यनि" ॥ 'श्यतीत्यादि' । शो तनूकरणे, छो छेदने, दो अवखण्डने, षोऽन्तकर्मणि, इह ओतः शितीति वक्तव्यं, न च ओकारान्तानां श्यनोऽन्यः शित्संभवति, अर्द्धमात्रया च लाघवं भवति, तत्रायमप्यर्थः, ष्ठिवुक्लमुचमां शितीति शिद्ग्रहणं न कर्त्तव्यं भवति, इदमेवानुवर्तिष्यते । ननु श्यन्ग्रहणमुत्तरार्थं कर्त्तव्यं शमामष्टानामिति, तत्राप्यस्तु शितीत्येव, यदि शितीत्युच्यते भ्रमेर्वा भ्राशेति पक्षे शब् भ्रमति अत्रापि प्राप्नोति, शमादिभिः शितं विशेषयिष्यामः, शमादिभ्यो यो विहितः शिदिति, श्यन्नेव च सर्वेभ्यः शमादिभ्यो विहितः, एवमपि शिद्विशेषणत्वेन शमादीनामुपयोगात्कार्यिनिर्द्देशाभावान्नश्यतीत्यादावपि प्रसङ्गः, नैष दोषः, अष्टानामित्यनेन संख्येयाः कार्यिणो निर्द्दिश्यन्ते, ते च संनिधानात् शमादय एव विज्ञास्यन्ते ॥

"क्सस्याचि" ॥ 'अधुक्षातामिति' । दुहेः स्वरितेत्त्वेनात्मनेपदमाताम् । अत्रासति लोपे आतो ङित इति इयादेशः प्राप्नोति । 'अधुक्षीति' । इटि लोपः, ककारवतः सशब्दस्य ग्रहणादिह न भवति वत्सौ, तृणादिभ्यः सः, तृणसौ तृणसः ॥

"लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" ॥ 'एतेषामङ्गानां क्सस्येति'। एतेषां संबन्धी यो निमित्तत्वेन क्सः तस्येत्यर्थः। 'सर्वादेशार्थमिति'। लुक्संज्ञापहारीति संज्ञाविधावुक्तम्। 'वह्यर्थमिति'। उत्तमपुरुषद्विवचनार्थमित्यर्थः। अथान्यार्थं कस्मान्न भवति, तत्राह। 'अन्यत्रेति'। 'अलोन्त्यस्येति'। आदेःपरस्येत्येतत्तु न भवति पञ्चमीनिर्देशाभावात्। 'झलो झलीति लोपेनेति'। धि सकारे सिचो लोप इति नाश्रीयते, श्ल्यादेशोपलक्षणं वा तत्र सिज्ग्रहणमिति भावः। 'अकारस्येति'। अकारलोपस्येत्यर्थः। तथैव वा पाठः। ननु च क्रियमाणेपि लुग्ग्रहणे वहि लुका न भवितव्यमेव अदन्तत्वात्, दन्त्यैाष्ठ्यो ह्यसौ, अत आह। दन्त्योष्ठ्योपीत्यादि'। दन्तान्वयोत्र विवक्षितो नेतरव्यावृत्तिरिति भावः। एवं न्यायसिद्धयर्थं वचनसामर्थ्यमपि दर्शयति। 'यदि चेति'। 'ताविति'। तवर्गादावित्यर्थः, वहेरन्यानि हि दन्त्यादीनि सर्वाण्यात्मनेपदानि तवर्गादीनि ॥

"शमामष्टानां दीर्घः श्यनि" ॥

शमुस्तमुः श्रमुश्चैव भ्रमुक्षमुमदक्लमः।
शमादयोमी पठिता दिवादिष्वष्ट ऋषिभिः ॥

"ष्ठिवुक्लम्याचमां शिति" ॥ 'क्लामतीति'। वा भ्राशेत्यादिना शप्। 'क्लमिग्रहणं शबर्थमिति'। श्यनि पूर्वेणैव सिद्धत्वात्। शमादिषु पाठश्चिन्त्यप्रयोजनः, श्यन्यप्यनेनैव सिद्धत्वात्, तत्र सप्तग्रहणमेवास्तु, चमेराङ्पूर्वस्य ग्रहणं तन्त्रं, न तूपेयिवाननित्यादिवदविवक्षितमित्याह। 'चमेराङिति'। दीर्घत्वमाङि चम इति वार्तिकस्याप्ययमेवार्थः ॥

"क्रमः परस्मैपदेषु" ॥ 'इहेत्यादि'। चोद्यम्। 'हेर्लुकि कृत-इति'। अतो हेरित्यनेन, नैष दोष इत्यादि परिहारः, न लुमताङ्गस्येत्यत्र हि प्रत्यासत्तेरयमर्थो व्यवस्थापितः, लुमता लुप्ते प्रत्यये यदङ्गं तन्निबन्धनं कार्यं न भवतीति, ततः किमित्यत्राह। 'न चेति' ॥

"इषुगमियमां छः" ॥ इच्छतीति'। तुदादित्वाच्छः। 'इष्य-

तीति'। इष गतौ। 'इष्णातीति'। इष आभीक्ष्ण्ये। 'ये[1] पुनरुदितमिषिं नाधीयतइति'। धातुपाठे। 'इह च सूत्रे अचीत्यनुवर्त्तयन्तीति'[2]। क्वस्याचीत्यतः। नन्वचीत्यनुवृत्तावपि हलः श्नः शानज्झाविति शानजादेशे इषाणेत्यत्र छत्वं स्यादेव अजादित्वादित्यत आह। 'तत्रेति'। स्यादेतदेवं यद्यचीत्यनेन शिद्विशेष्येत, शितिच्छो भवति, किं विशिष्टे, अचि अजादाविति, इह तु शिता अज्विशेष्यते, अचि छो भवति, किं विशिष्टे शितीति, तेन तदादिविधिर्न भवति, किं कारणमित्यत आह। 'यस्मिन्विधिरिति'। न केवलं तदन्तविधौ विशेषणत्वापेक्षा ऽपि तर्हि तदादिविधावपीत्यपिशब्दस्यार्थः। 'इषाणेत्यत्रापीति'। न केवलमिष्यतीष्णातीत्यत्रैवेत्यपिशब्दार्थः। 'नह्ययमजेवेति'। अज्मात्रस्यात्र शित्त्वं नास्तीत्यर्थः। इतिकरणो हेतौ॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः"॥ पा पाने, पा रक्षणइत्यस्य तु ग्रहणं न भवति लुग्विकरणत्वात् शितश्चासम्भवात्, घ्रा गन्धोपादाने, ध्मा शब्दाग्निसंयोगयोः, ष्ठा गतिनिवृत्तौ, म्ना अभ्यासे, दाण् दाने, दृशिर् प्रेक्षणे, ऋ गतिप्रापणयोः, सृ गतौ, भौवादिकौ, ऋ सृ गताविति जौहोत्यादिकयोस्तु ग्रहणं न भवति शितोसम्भवात्। नन्वेशः सम्भव इति चेत्। उक्तमत्र 'वर्णो यत्स्यात्तच्च विद्यात्तदादाविति,' शितीति हि कर्मधारयः, शश्चासाविच्चेति, शद्लृ शातने भूवादिः, शद्लृ विशरणे तुदादिः, षद्लृ विशरणगत्यवसादनेषु। 'आद्युदात्तो निपात्यतइति'। यदि न निपात्यते ततो धातोरित्यन्तोदात्तत्वे सति शपा सहैकादेशे कृते एकादेश उदात्तेनोदात्त इति पिबतीति पदं मध्योदात्तमापद्येत, आद्युदात्तं चेष्यते। 'वेगितायामिति'। सञ्जातवेगायामित्यर्थः, यद्वा वेगिनो भावो वेगिता, तस्यां च सत्यां गतौ वर्त्तमानस्येत्यर्थः॥

---

१ ये इषिमुदितमिति पाठः मु· मू· पु·।
२ ते ऽचीत्यनुवर्तयन्तीति मु· मू· पु· पाठः।

"ज्ञाजनोर्जा" ॥ 'दैवादिकस्य ग्रहणमिति'। न जोहोत्यादिकस्य, शितोऽसम्भवात्, दीर्घोच्चारणस्य प्रयोजनमुत्तरसूत्रे वक्ष्यते ॥

"प्वादीनां ह्रस्वः" ॥ 'प्वादयः क्र्यादौ पठ्यन्तइति'। ये तु भ्वादौ पठ्यन्ते पूञ् पवनइत्यादयस्तेषां ग्रहणं न भवति, कतिपये हि तत्र ह्रस्वभाविनः, तेषामपि शपि गुणेन भवितव्यं, किञ्च क्रैयादिकस्य जानातेर्ह्रस्वनिवृत्त्यर्थं पूर्वसूत्रे दीर्घोच्चारणं तदपि क्रैयादिकानां ग्रहणे प्रमाणम्। 'वृत्करणमित्यादि'। नह्युभयार्थत्वे वृत्करणस्य कश्चिद्भार इति भावः। 'अपरे त्विति'। ल्वादीनामनन्तरत्वादिति भावः। तथा दॄ पूरणे, दॄ भयइत्येतयोरपि वृत्करणात्परस्तात्पठितयोरपि ह्रस्वो भवति, यः पृणाति स ह देवेषु गच्छति, पृणीयादित्राधमानाय, पृणन्तं च पपुरिं श्रवस्यवः। आदृणातीति। पूर्वस्मिन्पक्षे ह्रस्वान्तावेतौ पठन्ति। चोदयति। 'येषामिति'। आगता गणान्तमागणान्ताः, परिहरति। 'ज्ञाजनोर्जा इति'। यदि जानातीत्यत्र ह्रस्वत्वं स्यात् ह्रस्वान्तमेवादेशं विदध्यात्। ननु चान्यार्थं दीर्घान्तादेशविधानं स्यात्, नह्यन्यथा जायतइति सिध्यति अत आह। 'ज इत्यपीति'। ह्रस्वान्तादेशविधानेपि अतो दीर्घो यञीति दीर्घत्वे जायतइति सिद्धं, तत्र हि तुरुस्तुशम्यमः सार्वधातुकइत्यतः सार्वधातुकग्रहणमनुवर्त्तते, न पुनस्तिङीति, अत एवाने मुक् पूर्वान्तः कृतो न परादिर्दीर्घप्रसङ्गात्, ये तर्हि वृत्करणमुभयव्यावृत्त्यर्थं वर्णयन्ति तेषां दीर्घोच्चारणं किमर्थं, जानातीत्यत्र दीर्घो यथा स्यात्। अतो दीर्घो यञीत्येव दीर्घो भविष्यति, न सिध्यति, अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य, न जादेशमात्रेण निष्ठितमङ्गं भवति, तत्रेदं दीर्घोच्चारणमेव लिङ्गमागणान्ताः प्वादय इति ॥

"मिदेर्गुणः" ॥ 'मेद्यतीति'। श्यन्। 'मिद्यतइति'। भावे यक् ॥

"जुसि च" ॥ उदाहरणेषु लङि शपः श्लुः, द्विर्वचनमभ्यासकार्ये, सिजभ्यस्तविदिभ्यश्चेति झेर्जुस्। 'अयेत्यादि'। जुस्भक्तस्य यासुट-

स्तद्ग्रहणेन ग्रहणात्प्रसङ्गः । 'सार्वधातुकाश्रयङित्त्वनिमित्तइति' । सार्वधातुकमाश्रयो यस्य तत्सार्वधातुकाश्रयं तत् ङित्त्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः, एतेन यासुडाश्रयङित्त्वनिमित्तमिति व्याख्यातम् । 'तत्र हि प्राप्ते चाप्राप्ते चेति' । चिनुयुरित्यादौ प्राप्ते, अजुहवुरित्यादावप्राप्ते । 'क्सस्याचीत्यनुवर्त्ततइति' । परिहारान्तरं, जकारोच्चारणं तु चक्रुरित्यादौ लिटि माभूत् ॥

"सार्वधातुकार्धधातुकयोः" ॥ 'सार्वधातुकार्धधातुकयोरिति किमिति' । एवं मन्यते प्रत्ययइति वक्तव्यम् । एवमपि ह्यौष्ट्र विषये सिद्ध्यतीति, सङिति प्रत्याहारः सनः सशब्दादारभ्या महिङो ङकारात् । 'अग्नित्वमिति' । प्रत्ययइत्युच्यमाने अत्रापि प्राप्नोति । 'अग्निकाम्यतीति' । सङीत्युच्यमानेऽत्रापि प्राप्नोति ॥

"जाग्रोऽविचिण्णल्ङित्सु" ॥ 'अविचिण्णल्ङित्सु परत इति' । विचिण्णल्ङिद्भ्योऽन्ये ये प्रत्ययास्तेषु परत इत्यर्थः । जागरयतीत्यादीनि वृद्धिविषये उदाहरणानि, जागरितः जागरितवानिति प्रतिषेधविषये । किं पुनः कारणं वृद्धिप्रतिषेधविषययोरेवोदाहरणानि उपन्यस्तानि, तत्राह । 'वृद्धिविषये प्रतिषेधविषये चेति' । अन्यत्र पूर्वेणैव गुणस्य सिद्धत्वादेतद्विषय एवायं गुणः, तत्राप्युभयविषयः, कथं, चिण्णलोः प्रतिषेधात् वृद्धिविषये तावद्भवति, ङित्प्रतिषेधात्प्रतिषेधविषयेपीति । 'तस्मिन्कृतइति' । अङ्गवृत्ते पुनर्वृत्ताविध्येतदनाश्रित्योच्यते । 'सा न भवतीति' । किं कारणमित्याह । 'यदि हीति' । यद्यपि जागरितः जागरितवानित्यत्र गुणविधिश्चरितार्थः, तथापि वृद्धिविषयेप्येतद्विधानमित्युक्तं, तत्रास्यानर्थक्यमुच्यते । किं चेत्याह । 'चिण्णलोश्चेति' । यदि गुणे कृते अत उपधाया इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोनर्थकः स्यात्, अस्तु तत्रापि गुणः, वृद्धौ सत्यामजागारि जजागारेति सिद्धम् । 'जाग्रत इति' । लट्, तस्, अदादित्वाच्छपो लुक्, सार्वधातुकमपिदिति ङित्त्वम् । '[1]अत्र

[1] अत्रेति मु० मू० पु० नास्ति ।

वीति केचिदिति'। अविचिण्णल्ङित्स्वित्यत्र यो वकारात्पर इकारस्त-मुच्चारणार्थं वर्णयन्ति, तत्र यस्मिन्विधिरिति वकारादौ प्रतिषेधः। किमर्थं पुनस्तएवं वर्णयन्तीत्यत आह। 'क्सावपीति'। 'नजागृवा-निति'। नेड्वशि कृतीति इट् प्रतिषेधः, तत्र क्रादिनियमादिट् प्राप्तो वस्वेकाजाद्घसामिति नियमाच्च भवति, ये तु क्विपो लोपाद्गुणाश्रये प्रत्यय-लक्षणप्रतिषेधाच्च पर्युदासं नेच्छन्ति, तेषां जागरिति गुणो भवत्येव, अन्ये त्वाहुः। यथा ऽतृणेडिति प्रत्ययलक्षणेनेमागमो भवति वर्णस्य प्रत्ययविशेषणत्वात्, एवं क्विपोपि पर्युदासः, ततस्तु जागृदिति भवति। चोदयति। 'क[2]थमजागरुरिति'। एवं मन्यते। प्रसज्यप्रतिषेधोयं विचि-ण्णल्ङित्सु न भवतीति, ततश्च जुसि चेत्यस्यापि गुणस्य प्रतिषेधः स्यात्, तथोत्तमे णलि णित्त्वाभावपक्षे गुण इष्यते सार्वधातुकार्द्धधातुक-योरिति तस्यापि प्रतिषेधः प्राप्नोतीति। परिहरति। 'नाप्रतिषेधा-दिति'। नायं दोषः, कुतः, अप्रतिषेधात्, नायं प्रसज्यप्रतिषेधः, कस्त-र्ह्ययमित्याह। 'विचिण्णल्ङित्स्विति पर्युदासोयमिति'। पर्युदासे हि विचिण्णल्ङित्सु न विधिर्न प्रतिषेधः, ततोन्यत्र विधानं तेन जुसि णलि च लक्षणान्तरेण प्राप्तो गुणो भवत्येव, प्रसज्यप्रतिषेधेप्याह। 'अथ-वेति'। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति भावः। केचिद्गुर्वि-रित्यत्र गुणादर्शनादौणादिकं विच्प्रत्ययं वर्णयन्ति, तेषां जागृविरित्यत्र गुणः प्राप्नोति, न च वेः प्रतिषेधवैयर्थ्यं, क्विपि क्सौ च चरितार्थत्वात्, तस्माज्जागर्तेः किद्वक्तव्यः॥

"पुगन्तलघूपधस्य च"॥ 'भेत्ता छेत्तेति'। कथं पुनरत्र गुणः, यावता धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये संयोगे गुर्विति गुरुसंज्ञया लघुसं-ज्ञाया बाधनाच्च प्राप्नोति, भेदनमित्यादौ सावकाशो गुणोऽत आह। 'प्रत्ययादेरिति'। 'क्नुसनोः कित्करणेनेति'। त्रसिगृधिधृषिक्षिपेः क्नुरिति क्नोः कित्करणस्यैतत्प्रयोजनं गृध्नुरित्यादौ गुणो माभूदिति, यदि चैवं विधे विषये गुरूपधत्वाद्गुणो न स्यात् क्नोः कित्करणमनर्थकं स्यात्,

२ कथमिति सु॰ मू॰ पु॰ नास्ति।

तथा हलन्ताच्चेति सनः कित्त्वविधानस्यैतत्प्रयोजनं पित्सतीत्यादौ गुणो माभूदिति, तदपि ज्ञापकमुक्तार्थस्य, इदं तु ज्ञापकं नोपपद्यते । सिसृक्षति दिदृक्षतइत्यत्र सृजिदृशोरित्यमागमो माभूदित्येवमर्थमेतत्स्यात्, तथा धिप्सतीत्यत्र नलोपार्थं तत्स्यात्, तस्मात्क्ङोरेव कित्करणं ज्ञापकं भिनत्ति छिनत्तीत्यत्र श्नमोकारेण लघूपधमङ्गं तत्र धातोरिकारस्य गुणः प्राप्नोति, अत आह । 'उपधात्रेति' । नह्यत्र या का चिदुपधा गृह्यते किं तर्हीको गुणवृद्धी इत्यस्योपस्थानात्स्थानित्वेन संनिहित इगेव । 'अपरे त्विति' । वर्णयन्तीति संबन्धः । 'पुकि अन्त इति' । अन्तशब्दः समीपवचनः, यद्यपि पुगन्तेत्यत्र बहुव्रीहावपि न दोषस्तथाप्यैकरूप्येण विशेषणार्थमयमपि तत्पुरुष एव व्याख्यातः । 'लघ्वी उपधेति' । कर्मधारयः, अत्र पक्षे शाब्द एवोपधाया इका संबन्धः । 'लघ्व्या उपधाया इक इति' । पुगन्तलघूपधमिति समाहारद्वन्द्वः, क्व चिदुपधात्रेत्यादेर्ग्रन्थस्य पुरस्तात्संयोगे गुरुसंज्ञायामिति श्लोकत्रयं पठ्यते । धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये सति गुरुसंज्ञायां सत्यां गुणो भेत्तुर्भेत्तृशब्दस्य न सिध्यति । परिहरति । 'विध्यपेक्षमिति' । इदं विधानमिति शेषः, लघूपधाद्ये विहिते सार्वधातुकार्धधातुके तयोरङ्गस्य गुण इत्यर्थः, ननु पञ्चम्यभावात् कथं विधानमुपपद्यते, उच्यते, षष्ठीपक्षेऽपि विशेष्यतइति चेत्को दोषः, लघूपधस्य ये सार्वधातुकार्धधातुके, के च ते, ये तस्माद्विहिते इत्युपपद्यते, लघोश्चासाविति पाठे लघूपधात्त्वासौ वृज्विहित इत्यर्थः । उपधाशब्दस्तु वृत्तभङ्गभयान्न प्रयुक्तः । 'कथं कुण्डिरिति' । अङ्गाधिकारे नुमो विधानादङ्गतएव नुमि प्रत्ययो लघूपधाद्विहितस्तत्र परतो निमित्ते स्थिते कुण्डितेत्यादौ गुणः प्राप्नोति यदि विधानं विशेष्यतइत्यर्थः । परिहरति । 'धातो'[१]र्नुम इति' । हेतौ पञ्चमी, यस्मात्तत्र धातोर्नुमङ्गस्य तस्मादित्यर्थः । उक्तं हि तत्र धातुग्रहणस्य प्रयोजनं धातूपदेशावस्थायामेव नुम् यथा स्यादिति, ततश्च प्रागेव नुम् पश्चात्प्रत्ययः, न चासौ लघूपधाद्विहितो भवति । 'कथं रञ्जेरिति' । यदि षष्ठीनि-

१ धातोर्हि नुमिति मु० मू० पु० पाठः ।

र्देशेपि विधानं विशेष्यते तदान्यत्रापि प्रसङ्गः, ततस्तात उपधाया इत्यकारोपधाद्विहिते प्रत्यये विधीयमाना वृद्धौ रञ्जेर्न स्यात्, प्राक् प्रत्ययोत्पत्तेर्नेकारोपधत्वात्, राग इति । घञि च भावकरणयोरिति नकारलोपः, यद्यप्युपधाया अकारस्य वृद्धिरुच्यते, न च ततः प्रत्ययस्य विधानं संभवति, तथाप्यकारोपधाद्विधानं तदेवोपधाया विधानं मन्यते । 'स्यन्दिश्रन्थ्योरिति' । यदयं स्यदो जवे, अवोदैधोद्मप्रश्रथहिमश्रथा, इति स्यन्दिश्रन्थ्योर्वृद्ध्यभावं निपातयति तज्ज्ञापयति भवत्येवंजातीयकानां वृद्धिरिति, तत्र हि नलोपार्थं वृद्ध्यभावार्थं च निपातनमाश्रयणीयं, यदि च वृद्धिविषये विधानं विशेष्येत ततो वृद्धिप्रसङ्गाभावान्निपातनाश्रयणमनर्थकं स्यात्, नलोपस्य सिद्धये विधिरेवाश्रयणीयः, अनेकप्रयोजनसिद्धये हि निपातनाश्रयणम् । 'अनल्लोपेति' । अनन्तस्य योऽल्लोपः सोऽनल्लोपः, शौ दीर्घत्वं शिदीर्घत्वं, तयोर्द्वन्द्वः, अनल्लोपशिदीर्घत्वे विध्यपेत्ते न सिद्ध्यतः, यदि च षष्ठीनिर्देशेपि विधानं विशेष्येत अल्लोपो राज्ञ इत्यादावेव स्यात्, अस्थ्ना अस्थ्ने दध्ना दध्ने इत्यादौ न स्यात्, शौ दीर्घत्वं च सामानि इत्यादावेव स्यात्कुण्डानीत्यादौ तु न स्यात्, तस्मात्षष्ठीनिर्देशेषु विहितविशेषणग्रहणे दोषप्रसङ्गाद्गुणो भेत्तुनं सिद्ध्यतीति, एवं तर्हि ज्ञापकात्सिद्धं, यदयं नाभ्यस्तस्याचीत्यज्ग्रहणं करोति तज्ज्ञापयति भवत्येवं जातीयके विषये गुण इति, तस्य हि प्रयोजनं नेनेकीत्यादौ हलादौ गुणप्रतिषेधो माभूदिति, यदि च हलादावलघूपधत्वाद्गुणो न स्यात् तदा गुणस्य प्राप्त्यभावात्किं तन्निवारणार्थेनाज्ग्रहणेन, नैतदस्ति ज्ञापकम् । 'अभ्यस्तस्य यदाहाचि लङ्र्थं तत्कृतं भवेत् '। अभ्यस्तस्याजादौ प्रतिषेधमाहेति यत् तल्लङर्थं कृतं भवेत्, यत्र हलादिर्लुप्यते, अनेनेगिति, तस्माच्च ज्ञापकम्, एवं तर्हि । 'कुसनोर्यत्कृतं किस्त्वं ज्ञापकं स्याल्लघोर्गुणे ' । व्याख्यातमेतत् ॥

"नाभ्यस्तस्याचि पिति सार्वधातुके" ॥ 'नेनिजानीत्यादि' । लोट्, मेर्निः, आडुत्तमस्य पिच्च, शपः श्लुर्द्विर्वचनं, निजां त्रयाणां गुणः श्लौ, 'अनेनिजमित्यादि' । लङ्, मिपोऽम्भावः । 'वेदानीति' । विद ज्ञाने,

लोडादि यथायोगं पूर्ववत्, शपो लुक् । 'नेनेक्तीति' । लट्, तिप्, कुत्वम् । 'पिद्ग्रहणमुत्तरार्थमिति' । नूणाह इम् पिति यथा स्यात् इह तु पितोऽन्यत्रापि सार्वधातुकमपिदिति ङित्वाद्भवितव्यमेव प्रतिषेधेन । 'निनेजेति' । णल्, स च लिट् चेत्यार्धधातुकसंज्ञः । 'जुजोषदिति' । जुषी प्रीतिसेवनयोः, लेट्, व्यत्ययेन परस्मैपदं, तिप्, इतश्च लोपः परस्मैपदेषु, लेटोऽडाटावित्यट्, व्यत्ययेन शपः श्लुः, द्विर्वचनं, यद्यत्र गुणप्रतिषेध इष्यते पस्पशाते इत्यादौ उपधाह्रस्वत्वमिष्यते तन्न प्राप्नोति, तस्मादभ्यस्तानामुपधाया ह्रस्वत्वमेव विधेयं न गुणप्रतिषेधः । कथं नेनिजानीत्यादि, गुणे कृते उपधाह्रस्वत्वम्, एच इग्घ्रस्वादेशे, सिद्धमिष्टमत आह । 'पस्पशाते इत्यादि' । स्पशिर्वार्त्तिककारवचनादपठितोऽपि धातुः, तस्माल्लेट्, व्यत्ययेनात्मनेपदं, टेरेत्वे लेटोऽडाटावित्याट्, शपो बहुलं छन्दसीति श्लुः, द्विर्वचनम् । अथ वा यङ्लुकि छान्दसमभ्यासस्य ह्रस्वत्वम् । 'चाकशीतीति' । काशृ दीप्तौ, यङ्लुक्, लट्, तिप्, यङो वेतीडागमः । 'वावशीतीरि[1]ति' । वाशृ दीप्तौ, यङ्लुक्, लट्, शत्रादेशः, ङीप्, शस् । 'छान्दसं [2]ह्रस्वत्वमिति' । यदि तु गुणनिषेधं प्रत्याख्यायोपधाह्रस्वत्वमुच्येत तदा नर्नृतीतीत्यादौ ऋदुपधे रपरे गुणे कृते ह्रस्वभाविन्युपधा नास्तीति रूपं न सिध्येत्, तस्माच्छान्दसमेव ह्रस्वत्वमेष्टव्यमिति भावः । 'प्रकृत्यन्तराणामेवेति' । स्पश बाधनस्पर्शनयोः, कश गतिशासनयोः, वश कान्तौ ॥

"भूसुवोस्तिङि" ॥ 'अभूदिति' । लुङ्, गातिस्थेत्यादिना सिचो लुक् । 'सुवै सुवावहै सुवामहै इति' । षूङ् प्राणिगर्भविमोचने, लोट्, टेरेत्वम्, एत ऐ, आडुत्तमस्य पिच्च, शपो लुक्, उवङादेशः । 'सुवतिसूयत्योस्त्विति' । षू प्रेरणे तुदादिः, षूङ् प्राणिप्रसवे दिवादिः । 'भवतीति' । शपि गुणः । 'व्यतिभविषीष्टेति' । आशिषि लिङ्, लिङाशिषीत्यार्धधातुकसंज्ञा, कर्तरि कर्मव्यतिहार इत्यात्मनेपदम् । 'अयेति' । प्रकृति-

---

१ वावशीतीति मु० मू० पुस्तकस्थपाठस्तु पदमञ्जर्यसंमतः ।

२ छान्दसमदीर्घत्वमिति–२–३–पुस्तकयोः पाठः स मु० मू० पुस्तकानमुगुणः ।

ग्रहणे यङ्लुगन्तस्यापि ग्रहणात्प्रसङ्गः । 'ज्ञापकादिति'। सूतेस्तु निपातनाभावाद्गुणनिषेधो भवत्येव सोषुवीतीति ॥

"उतो वृद्धिर्लुकि हलि" ॥ 'यवानीति'। लोडुत्तमैकवचनम् । 'अपि स्तुयादिति'। अपिः संभावने कर्मप्रवचनीय इत्युपसर्गात्सुनोतीत्यादिना षत्वं न भवति । 'ङिच्च पिच्च भवतीति'। यासुडादेः सार्वधातुकस्य साक्षाच्छिष्टं ङित्त्वमनवकाशं. तिबादीनां तु पित्त्वं लकारान्तरेषु सावकाशं, तेन ङिच्च पिच्च भवतीति पिच्च ङिच्च भवतीति वचनद्वयसद्भावेऽपि ङिच्च पिच्च भवतीत्येतदेवात्र प्रवर्त्ततइति भावः, क्ङिति चेति प्रतिषेधस्त्वत्र न लभ्यते, किं कारणम्, इक इत्येवमिक्संशब्दनेन या वृद्धिस्तस्याः स प्रतिषेधः, इह तु उत इति निर्दिष्टस्थानिकत्वादिक्परिभाषा नोपतिष्ठते ॥

"गुणोऽपृक्ते" ॥ ननु च हलीति वर्त्तते पितीति च, अङ्गेन च प्रत्यय उपस्थाप्यते । तत्र हलात्मके प्रत्यये पिति विधीयमानो गुणोऽपृक्तएव भविष्यति नार्थोऽपृक्तग्रहणेनेत्यत आह । 'हलीति वर्त्तमानइति'। अपृक्तग्रहणं ह्येवमर्थं क्रियते हलादौ माभूदिति, यदि चेयं परिभाषा न स्यादपृक्तग्रहणं न कुर्यात्कृतं तु ज्ञापयति भवत्येषा परिभाषेति, इदं त्वत्र वक्तव्यं, तदन्तविधिनिवृत्त्यर्थमपृक्तग्रहणं कस्मान्न भवतीति, तदन्तविधौ हि लङि मिपोऽम्भावेऽपि प्रसङ्गः स्यात् । ननु भवत्येव तत्र गुणः, कथं भवति, यदा पूर्वत्र वृद्धिविधावपि तदन्तविधिरेव भवति, तदेतदपृक्तग्रहणं कथं तदादिविधेर्ज्ञापकमिति चिन्त्यं, नापृक्तइत्युच्यमानेऽनन्तराया विभाषिताया वृद्धेः प्रतिषेधः स्यान्नित्या तु वृद्धिः स्यादेव तस्माद्गुणग्रहणम् ॥

"तृणह इम्" ॥ 'तृणेढीति इति'। इमि कृते श्नमोऽकारेण सहाद्गुणः, हो ढः, झष स्तथोर्धोधः, ष्टुत्वं, ढलोपः । 'तृणेक्षीति'। षढोः कः सि । 'अतृणेडिति'। लङ्, तिप्सिपोरन्यतरः, हल्ङ्यादिलोपः, ढत्वजश्त्वचर्त्वानि । ननु च हलादावित्युच्यते न चात्र हलादिं पश्यामः, प्रत्ययलक्षणेन, वर्णाश्रये नास्ति प्रत्ययलक्षणमत आह । 'वर्णाश्रयेऽप्यत्रेति'।

यत्र केवलो वर्ण एव निमित्तं यस्य स वर्णाश्रयः, यथा गवि हितं गोहितमित्यवादेशः, इह तु पिति सार्वधातुकइति प्रत्ययएव निमित्तं, हल् तस्य विशेषणं, तेनासौ प्रत्ययनिमित्तत्वाद्भवत्येवेत्यर्थः । 'तृणहानीति'। लोट्, मेर्निः । 'तृंण्ढ इति'। तस्, ढत्वादि पूर्ववत्, श्नसोरल्लोपः, अनुस्वारपरसवर्णौ । अथ किमर्थं तृहिरागतश्नम्को गृह्यते, रौधादिकस्य तृह हिंसायामित्यस्य ग्रहणं यथा स्यात् तृहि हिंसायामित्यस्य तौदादिकस्य ग्रहणं माभूत्, नास्य पिद्धलादिसार्वधातुकमनन्तरं संभवति, विकरणेन व्यवधानात् । ननु चास्यापि यङ्लुगन्तस्य संभवति, एवं तर्हि सानुबन्धकत्वात्तस्य ग्रहणं न भविष्यत्यत आह । 'तृणह इतीत्यादि'। यद्यागतश्नम्को न गृह्येत ततो नाप्राप्ते श्नम्यारभ्यमाण इम् तस्य बाधकः स्यात्, अथापि न बाधक एवमपि श्नमि कृते इमितीष्टव्यवस्था न स्यात्, विपर्ययोपि स्यात् पूर्वमिमागमः पश्चाच्छ्नमिति, सश्नम्कनिर्देशे तु न श्नमो निवृत्तिर्भवति, इष्टा च व्यवस्था सिध्यति, पूर्वं श्नम् पश्चादिमिति, अतस्तदर्थमागतश्नम्को गृह्यते, किं च रौधादिकस्यापि यङ्लुगन्तस्य ग्रहणं भवति सश्नम्कनिर्देशादेव ॥

"ब्रुव ईट्" ॥ ब्रुव इति पञ्चमी, न षष्ठी, व्याख्यानात्, तया ऽचरितार्थया पूर्वत्र कृतार्थायाः सार्वधातुकइति सप्तम्याः षष्ठी प्रकल्प्यते तदाह । 'ब्रुव इत्येतस्मादुत्तरस्येति'। इह ब्रूताद्भवानिति तातङ औपदेशिकेन ङित्वेन स्थानिवद्भावकृतं पित्त्वं बाध्यते, ङिच्च पिन्न भवतीति, तेनेड् न भवति ॥

"यङो वा" ॥ 'लालपीतीत्यादि'। लपिवदिरौतिभ्यो यङ्लुक्, द्विर्वचनं, रौतेरभ्यासस्य गुणः, इतरयोर्दीर्घत्वम् । 'वर्वर्तीति'। वृतेरूपं, रुग्रिकौ च लुकीत्यभ्यासस्य रुक्, किं पुनः कारणं यङ्लुगन्तमेवोदाहृतं न पुनर्यङन्तं, तत्राह । 'हलादेरिति'। यङन्ते हि शपा भवितव्यं स च हलादिर्न भवति ॥

---

१ तृणु इति मुद्रितमूलपुस्तकस्थपाठस्तु पदमञ्जर्यसंमतः ।

"तुरुस्तुशम्यमः सार्वधातुके" ॥ 'तु इति सौत्रोऽयं धातुरिति'। स च वृद्धौ वर्त्तते, गत्यर्थे इत्यन्ये, हिंसार्थं इत्यपरे। 'उत्तवीतीति'। बहुलं छन्दसीति शपो लुक्। 'शमीध्वमिति'। शमेरन्तर्भावितण्यर्थात्मेषे लोट्, व्यत्ययेनात्मनेपदं, शप्, तस्य बहुलं छन्दसीति लुक्। 'आपिशला इति'। आपिशलेः शिष्याः। 'सार्वधातुकास्विति'। टाबन्तं, तत्र संज्ञात्वेन विनियुक्तं सार्वधातुकग्रहणमनर्थकं, नाभ्यस्तस्येत्यादेः सूत्रादनुवर्त्तेत आह। 'सार्वधातुकइति वर्तमानइति'। तद्धि सार्वधातुकग्रहणं पितीत्यनेन संबद्धमतस्तदनुवृत्तौ तदप्यनुवर्तेत तन्मानुवृत्तदित्येवमर्थं पुनः सार्वधातुकग्रहणमिति, हलीत्येतत्त्वनुवर्त्ततएव, नहि तत्सार्वधातुकग्रहणेन संबद्धम् ॥

"अस्तिसिचोऽपृक्ते" ॥ अपृक्तइति षष्ठ्यर्थे सप्तमी, तेनापृक्तस्यैवायमागमः। 'आसीदिति'। अस् भुवि, शपो लुक्, तिप ईट्। 'अलावीदिति'[1]। लुङ्, इट ईटीति सिचो लोपः। 'आहिभुवोरीट्प्रतिषेध इत्यादि'। स्थानिवत्सूत्रएतद्वार्तिकम्। आहिभुवोः स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः, ईट्प्रतिषेधः प्रयोजनमित्यर्थः। 'आत्थेति'। ब्रुवः पञ्चानामित्यादिना सिप स्थल्, ब्रुव आहादेशः। आहस्थ इति हकारस्य थत्वं, तस्य खरि चेति चर्त्वं तकारः। 'अभूदिति'। लुङ्, अस्तेर्भूः, गातिस्थेत्यादिना सिचो लुक्, अत्र स्थानिवद्भावप्रतिषेधादस्त्याश्रयस्तावदीण्न भवति, सिजाश्रयोऽपि न भवति, स्थानिवद्भावप्रतिषेधसामर्थ्यात्, अस्त्येवमस्त्यादेशे भुवि, शुद्धे तु भवतौ सिजाश्रय ईट् प्राप्नोति, तस्मादीडेवात्र प्रतिषेध्यः, आहिविषये परिहारान्तरं ज्ञापकात्सिद्धं, यदयं झलादिप्रकरणे आहस्थ इति थत्वं शास्ति, ननु च भूतपूर्वगत्यर्थमेतत्स्यात् झलादिर्यो भूतपूर्वस्तत्रेति, नैतदस्ति, एवं तर्हि पञ्चानामपि तिबादीनां भूतपूर्वझलादित्वमिति सर्वत्र थत्वप्रसङ्गः, ततश्चाथमेव विदध्यात् ॥

"बहुलं छन्दसि" ॥ 'आ इति'। अस्तेर्लङ्, तिप्, शपो लुक्, रुत्वविसर्जनीयौ। 'अत्सारित्सारिति'। त्सर संवलने, त्सर छद्मगतौ, लुङ्,

१ अलावीदिति मु॰ मू॰ टिप्पण्यां द्रष्टव्यम्।

तिपो हल्ङ्यादिलोपः, रात्सस्येति सिचो लोपः, धातुरेफस्य विसर्जनीयः । 'छान्दसत्वादिति' । बहुलं छन्दस्यमाङ्योगेपीत्यनेन न केवलममाङ्योगेडाटोरभावः क्रियते किं तर्हि माङ्योगे तत्सद्भावोपीति भावः । 'ई[1]डभावश्च सिच इति' । छान्दसत्वादित्यपेक्षते ॥

"रुदश्च पञ्चभ्यः" ॥ रुदिः स्वपिः श्वसिरनिर्जक्षिः पञ्च रुदादयः । रुद इति बहुवचनस्थानएकवचनम् । पञ्चभ्य इति निर्देशादाद्यर्थावगतिः ॥

"अड्गार्ग्यगालवयोः" ॥ 'गार्ग्यगालवयोर्ग्रहणं पूजार्थमिति' । न विकल्पार्थं विधानसामर्थ्यादेवाडीटोर्विकल्पस्य सिद्धत्वात्, अनेकाचार्यग्रहणमप्यत एव ॥

"अदः सर्वेषाम्" ॥ सर्वेषांग्रहणं नित्यार्थमन्यथा गार्ग्यगालवग्रहणमिह विकल्पार्थं संभाव्येत ॥

"अतो दीर्घो यञि" ॥ 'केचिदत्र तिङीत्यनुवर्त्तयन्तीति' । भूसुवोस्तिङीत्यतः । 'भवत्रानिति' । भवतेः क्वसुः, तस्य छन्दस्युभयथेति सार्वधातुकत्वाच्छप्, लिटि धातोरित्यत्र धातुग्रहणाच्छबन्तस्य द्विर्वचनाभावः, ये तु सार्वधातुकइत्येवानुवर्त्तयन्ति तेषां छान्दसत्वाद्दीर्घाभावः । अथ प्रकृतोडागम एव कस्मान्न विधीयते, अतो यञीति, अकारान्तादङ्गादुत्तरस्य यञादेस्तिङोडागमो भवति, पच अवस्, सवर्णदीर्घत्वे पचाव इति सिद्धं, विधानसामर्थ्याच्चातो गुणइति पररूपत्वं न भविष्यति, नैवं शक्यम् । इह ह्यधुनावह्यधुनामहीति क्सस्याचीति लोपः प्रसज्येत, इह चातिजराभ्यामिति जरसभावः, एवमपि दीर्घग्रहणमनर्थकं, आदित्याकार एव विधेयः, इह तर्हि प्रयोजनम् अपाक्षीरोदनं देवदत्त । ननु पचामि भोरित्यत्रापि अनन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः प्राप्नोति, स माभूद्दीर्घ एव यथा स्यादिति दीर्घग्रहणम्, अत इति तपरकरणमुत्तरार्थं, बहुवचने झल्येदित्येत्वं खट्वाभिरित्यत्र माभूत्

1 चि च इडभाव इति मु० मू० पु० पा० ।

"सुपि च" ॥ 'वृक्षायेति' । संनिपातपरिभाषाया अनित्यत्वादत्र दीर्घत्वम्, अनित्यत्वं च कष्टायेति निर्देशादवसितम् ॥

"बहुवचने झल्येत्" ॥ 'वृक्षाणामिति' । झलीत्यनुच्यमानेऽग्नीनामित्यादौ सावकाशं नामीति दीर्घत्वं बाधित्वेदमेत्वमकारान्तेषु स्यादिति भावः ॥

"आङि चापः" ॥ खट्वया खट्वयोरित्यादीनि टाब्डाप्चापां क्रमेणोदाहरणानि । 'कीलालपेति' । कीलालं पिबति आतो मनिन्क्वनिब्वनिपश्चेति विच्, तृतीयैकवचने आतो धातोरित्यालोपः, असति तु पिद्विशिष्टस्य ग्रहणे कीलालपः पश्येत्यादौ चरितार्थं लोपं बाधित्वा परत्वादाङोसोरिदमेवैत्वं स्यात् । 'ङ्याब्ग्रहणेऽदीर्घग्रहणादिति' । यत्र ङ्यापौ गृह्येते तत्र दीर्घयोर्ग्रहणं न ह्रस्वयोः, स्थानिवद्भावे तु प्रसङ्गः, तत्र स्थानिवत्प्रतिषेधसूत्रप्रस्तावे वार्तिकं ङ्याब्ग्रहणेऽदीर्घ इति, ङ्यापोर्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति, तत्रार्थादिदमुक्तं भवति ङ्यापोर्ग्रहणे दीर्घयोर्ग्रहणमिति, तदिदं वृत्तिकारेण दर्शितम् ॥

"अम्बार्थनद्योर्ह्रस्वः" ॥ अम्बार्था मात्रर्थाः । 'डलकवतीनामिति' । अर्थगतेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः, श्रुत्यपेक्षो वा स्त्रीलिङ्गनिर्देशः । 'डलकवतीनां श्रीनामित्यर्थ इति' । असंयुक्ताश्च डलका गृह्यन्ते तेनाक्काल्लेति ह्रस्वो भवत्येव । 'देवते भक्तिरिति' । ह्रस्वत्वे कृते ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधाद्याडागमो ङेरामपि न भवतः । 'मातॄणामिति' । पूर्वपदभेदेन बहवो मातृशब्दा इति बहुवचनम् । 'पुत्रार्थमिति' । पुत्रमभिधातुं यो मातृशब्द उपादीयतइत्यर्थः । बहुव्रीहौ च वर्तिपदैरन्यपदार्थोभिधीयतइति तत्रैवायमादेशः, कीदृशाय पुत्रायेति समासे गुणीभूतस्यापि पुत्रस्य बुद्ध्या प्रविभज्य निर्देशः, यथाथ शब्दानुशासनं केषां शब्दानामिति । 'मात्रा व्यपदेशमर्हतीति' । यः पुत्रः श्लाघ्यगुणत्वात्कुलसंभूतया मात्रा व्यपदेशमर्हतीत्यर्थः, यत्र तु पितुरसंविज्ञानेन मात्रा व्यपदेशस्तत्र न भवति, एतच्चार्हतइति प्रशंसायां लटः शत्रादेशविधानाल्लभ्यते । 'समासान्तापवाद इति' । नाप्राप्ते तस्मिन्नस्यारम्भात् ।

"ह्रस्वस्य गुणः" ॥ 'ह्रस्वविधानसामर्थ्यादिति' । ननु ह्रस्वविधानं तस्य गुणविधानार्थमेव स्यादन्यथा ह्रस्वत्वाभावाद्गुणो न स्यादत आह । 'यदीति' । ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं भवतीति, लाघवार्थं साक्षादेव गुणं विदध्यादित्यर्थः । ननु नदीह्रस्वयोर्गुण इत्युच्यमाने जसि चेत्यत्र नद्या अप्यनुवृत्तिः स्यात्, एकसमासनिर्दिष्टत्वात् । नैष दोषः । एकसमासनिर्दिष्टयोरप्येकदेशोऽनुवर्त्तते, तद्यथा संख्याव्ययादेर्ङीप्, दामहायनान्ताच्चेत्यत्र संख्याग्रहणमनुवर्त्तते नाव्ययग्रहणम् ॥

"जसि च" ॥ 'जसादिष्विति' । आदिशब्दः प्रकारे, तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम् । 'दर्वीति' । कृदिकारादक्तिन इति ङीष्विकल्पमनपेक्ष्यैतदुक्तं, तत एव तु सिद्धं रूपद्वयम् । 'शतक्रत्व इति' । जसि चेति गुणाभावपक्षे प्रथमयोरिति पूर्वसवर्णदीर्घोऽपि वा छन्दसीति वचनान्न भवतीति यणादेशः प्रवर्त्तते । 'किकिदीव्येति' । आङो नास्त्रियामिति नाभावो न भवति । किकिदीविशब्दः कृविधूषित्यणादिषु निपातितः ॥

"ऋतो ङिसर्वनामस्थानयोः" ॥ 'तपरकरणं मुखसुखार्थमिति'[1] । ङिसर्वनामस्थानयोर्दीर्घान्तस्यासंभवात्, धात्वनुकरणमपि न संभवति, ऋत इद्धातोरितीत्वविधानात् कर्तॄणीत्यादावपि नुमः पूर्वान्तत्वादसंभवः ॥

"घेर्ङिति" ॥ 'घ्यन्तस्याङ्गस्येति' । वर्णमात्रस्य घिसंज्ञेत्याश्रित्येदमुक्तं, तदन्तस्य संज्ञेत्यत्र तु पक्षे घ्येकदेशे वर्णे घिशब्दो द्रष्टव्यः । एतेन नद्यन्तादिति व्याख्यातम् । 'सुपीत्येवेति' । सुपि चेत्यतः । 'पट्वीति' । वोतो गुणवचनादिति ङीष् । 'कुरुतइति' । यस्य नदीसंज्ञा नास्ति स सर्वोऽपि घिसंज्ञो न लिङ्गवदेवेति । कुरुशब्दस्य घिसंज्ञा, तस्य तसि ङिति गुणो न भवति, एतच्च ङिच्छब्दे बहुव्रीहिमाश्रित्योच्यते, यदि तु ङश्चासाविच्चेति कर्मधारयस्तदा नैवात्र प्रसङ्गः, सार्वधातुकमपिदि-

१ इदं मु० मू० पुस्तकस्थटिप्पण्यां द्रष्टव्यम् ।

एतेन, तच्चावश्यं वक्तव्यं लिङ्गान्तरेऽपि स्याड्याटौ विकल्पेन यथा स्युरिति, नैतद्युक्तमुच्यते, यद्धि सूत्रेणासिद्धं तदुपसंख्यानेन साधनीयं न पुनरुपसंख्यानापेक्षेण सूत्रस्य प्रत्याख्यानं युज्यते, यदि पुनरत्र ह्रस्वयोर्ग्रहणं कृत्वा स्याड्ग्रहणं च निवर्त्य सर्वनाम्नस्त्येवानुवर्त्यातिदेश आश्रीयते, सर्वनाम्नो यदुक्तं तद्विभाषा भवति द्वितीयातृतीययोरिति तदोपसंख्यानं शक्यमकर्तुम् ॥

"ङेराम्नद्याम्नीभ्यः" ॥ ङेरिति सप्तम्येकवचनग्रहणम्, इच्छायां स्त्रियामित्यादि निर्देशात् । 'ग्रामण्यामिति' । सत्सूद्विषेत्यादिना क्विप्, अग्रग्रामाभ्यामिति णत्वम्, एरनेकाच इति यण् ॥

"इदुद्भ्याम्" ॥ नदीग्रहणमिहानुवर्तते, यद्येवमपार्थकमिदं पूर्वेणैव सिद्धत्वात्, ततश्चेदुद्भ्यामौदित्येकयोग एव कर्तव्यः, नैवं शक्यमोकारो हि स्यात्, नदीलक्षणस्यामोऽवकाशः कुमार्यामिति, घेरौत्वस्यावकाशः पत्यौ सख्याविति, कृत्यामित्यत्र यदा नदीसंज्ञा तदा परत्वादौत्वं प्राप्नोति ॥

"औत्" ॥ 'यच्च नदीसंज्ञमित्यादि' । नदीसंज्ञके पूर्वेणाम् विहितः, घिसंज्ञे परेणाच्चसंयुक्तमौत्वं वक्ष्यति, तस्मादाभ्यामन्यदेवोदाहरणं, तच्च पूर्वेण घ्यन्तादन्यन्तादित्युक्तम्, इह त्विकारोकारान्तमित्युक्तं, संज्ञाविधौ च पक्षद्वयं दर्शितं, वर्णमात्रस्य संज्ञा तदन्तस्य वेति, तेन नास्ति विरोधः, ॥

"अच्च घेः" ॥ 'कृतौ धेनाविति' । घ्यन्तात्वे कृते ऽऽबन्ततष्टाविति टाप् कस्मान्न भवति, अस्तु को दोषः, ङेराम्नद्याम्नीभ्यो, याडाप इत्येतौ विधी प्राप्नुतः, घेरौत्वविधानं तु पुंसि चरितार्थमत आह । 'तपरकरणं स्त्रियामापो निवृत्त्यर्थमिति' । इह हि स्थानिनो मात्रिकत्वाद्गुणमानत्वाच्चापो दीर्घस्य प्रसङ्गो नास्ति यस्य निवृत्त्यर्थं तपरकरणं स्यात्, तस्माच्छास्त्रान्तरेणापि दीर्घो माभूदित्येवमर्थं तपरकरणं क्रियते, एतच्च संनिपातपरिभाषामनाश्रित्योक्तं, हि संनिपातकृतं ह्यत्वन्तद्विघातकस्य टापो निमित्तं न भवति । 'चोदच्चेरिति घेरत्वमित्यादि' । इह द्वे विधेयत्वे घेरित्येकयोगमेवाधीयते, तत्र यदि समुच्चये चशब्दः स्यादत्वं

तत्रैवौत्वं स्यात् धेनाविति, घेश्चात्वमित्यघेौ सख्यौ पत्याविन्यत्रौत्वमपि न स्यात्, अस्य दोषस्य निवृत्तये प्रधानशिष्टमौत्वमन्वाचयशिष्टमत्वमिति वर्णयन्ति, तत्र यथा कर्त्तुः क्यङ् स लोपश्चेत्यत्र सलोपस्यान्वाचयशिष्टस्याभावेपि श्येनायतइत्यादौ क्यङ् भवति, तथात्रापि सख्यौ पत्यावित्यत्वाभावेपि औत्वं भवतीत्यर्थः ॥

"आङो नाऽस्त्रियाम्" ॥ आङ इति स्यान्यन्तरस्योपादानाद्धेरिति षष्ठी पञ्चम्या विपरिणम्यतइत्याह । 'घेरुत्तरस्येति' । अथ किमर्थमस्त्रियामित्युच्यते, नाङो ना पुंसीत्येवोच्येत, एवं हि मात्रया लाघवं भवतीष्टं च सिध्यति, एवमुच्यमाने त्रपुणा जतुनेत्यत्र नपुंसके न प्राप्नोति, माभूत्राभात्र इकोचि विभक्ताविति नुमि कृते सिद्धमिष्टमत आह । 'पुंसीति नोक्तमित्यादि' । 'अमुना ब्राह्मणकुलेनेति' । पुंसीत्युच्यमाने नाभावो न स्यात्, नुमपीग्लक्षणो नास्ति मुत्वस्यासिद्धत्वात्, अस्त्रियामित्युच्यमाने नपुंसकेपि नाभावो भवति, नाभावे कर्त्तव्ये मुत्वस्यासिद्धत्वं नास्ति न मु नइति प्रतिषेधादिति नपुंसकइत्युच्यमानेपि न सिध्यति, तस्मादस्त्रियामित्येव वक्तव्यमिति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमस्याध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥

"णौ चङ्युपधाया ह्रस्वः" ॥ णावित्यङ्गापेक्षया परसप्तमी, चङीति णयपेक्षया, उदाहरणेषु कृहॄलूपूभ्यो णिच्, लुङ्, चङ्, णिलोपः, ह्रस्वत्वं, द्विर्वचनं, तत्र णौ कृतं स्थानिवद्भवतीति कृइत्यादि धातुरूपं द्विरुच्यते, कृहृइत्येतयोरुरदत्वं, सन्वल्लघुनीति सन्वद्भावादित्वम्, इतरयोरप्योः पुयण्ज्यपरइतीत्वं, सर्वत्र दीर्घो लघोरिति दीर्घः । 'अत्रेति' । अनन्तरोदाहृतेषु । 'परत्वादिति' । चङीति द्विर्वचनस्याशिश्रयदित्यादिरवकाशः, ह्रस्वस्य तु कृतद्विर्वचनमवकाशः, अकृते तु द्विर्वचने विप्रतिषेधः । 'तत्र कृते द्विर्वचनमिति' । ततश्च सन्वद्भावे कर्त्तव्ये ह्रस्वत्वं न स्थानिवद्भवति, अभ्यासस्यादिष्टादचः पूर्वत्वादिति भावः । चोदयति । 'इह त्विति' । माङ्प्रयोग आण् माभूदिति । 'नित्यत्वादिति' । द्विर्वचनं हि कृतेपि

ह्रस्वत्वे प्राप्नोत्यकृतेऽपि, ततश्च तदेव स्यात्तत्र को दोष इत्यत आह । 'तथा सतीति' । परिहरति । 'नैष दोष इति' । 'ओणेरिति' । ओणृ अपनयन इत्यस्य ऋदित्करणएतत्प्रयोजनम् ऋदितो नेति प्रतिषेधो यथा स्यात्, यदि चात्र द्विर्वचनं स्यादृदित्करणमनर्थकं स्याद्, द्विर्वचने कृते पररूपेण व्यवहितत्वादेव ह्रस्वत्वं न भविष्यति, पश्यति त्वाचार्यो द्विर्वचनाद् ह्रस्वत्वं बलीय इति तत ओणिमृदितं करोति । 'णाविति किमिति' । ह्रस्वश्रुत्याच्परिभाषोपस्थानादच उपधाया ह्रस्वेन भाव्यं, न चाद्यन्तानां चङि उपधा ह्रस्वभाविनी संभवति, नहि श्रिद्रुस्रुधेट्श्वीना-मजुपधा, कमिगुप्योस्तु ह्रस्व एवोपधा, ततश्च चङि यः प्रत्ययस्तस्मि-न्नुपधाया ह्रस्वो [1]भवति स च णिरेव, तत्र णावन्तरङ्गत्वाद्वृद्ध्यादिषु कृतेषु उपधाया ह्रस्व इति सिद्धमिष्टमिति प्रश्नः । इतरो यथाश्रुतसंब-न्धसंभवे चङि यः प्रत्यय इत्यध्याहारो न युक्त इति वचनादन्तरङ्गमपि वृद्ध्यादिकं बाधेनेति मत्वाह । 'चङ्युपधाया इति' । 'ह्रस्वः स्यादिति' । ननु च ऋकारस्य ह्रस्वः, तस्मिंश्च कृते बाधितत्वान्माभूद्वृद्धिः, गुणस्तु केन चिदबाधितत्वाद्भविष्यति, ततो ऽवादेशे सिद्धमलीलवदिति, नैत-दस्ति, गुणस्य वृद्ध्या बाधितत्वाद्वृद्धेश्च ह्रस्वेनेति भ्रष्टावसरस्य गुणस्य कुतः पुनः प्रवृत्तिरित्युवङ् प्रसज्येत । अस्तु वा तत्र गुणः, दोषान्तर-माह । 'अदीदपदित्यत्रेति' । यदा तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेध-स्तदा वृद्ध्यावादेशयोः कृतयोः पुकि च णिलोपस्य स्थानिवद्भावाभावा-च्चङि यदङ्गं तस्यैवोपधा ह्रस्वभाविनी संभवतीति णाविति न वक्तव्यं, सूत्रकारेण स्थानिवत्त्वनिषेधो न कृत इति णावित्युक्तम् । 'चङीति किमिति' । मितां ह्रस्वविधानादनेन णौ सर्वत्र ह्रस्वो न भविष्यति, प्रयो-गदर्शनाच्चेष्टतो व्यवस्थाश्रयिष्यते इति प्रश्नः । इतरो नान्तरेणवचनमिष्टा-निष्टविभागः सुज्ञान इति मत्वाह । 'कारयति हारयतीति' । किं च मितां ह्रस्ववचनमसिद्धवदत्राभादित्येतदर्थं स्यात् । 'उपधाया इति किमिति' । ह्रस्वश्रुत्या ऽच इत्युपतिष्ठते तत्र विशेषणविशेष्यभावे

[1] विज्ञास्यत इति पा० २-३ पुस्तकयोः ।

कामचाराद्दङ्गेनाच्विशेष्यते, अङ्गस्य यत्र तत्र[1] स्थितस्याचो ह्रस्वो भवति, तेनोपधायास्तावत्सिद्धं ह्रस्वत्वमिति प्रश्नः। इतरोऽप्यतिप्रसङ्गमुदाहरति। 'अचकाङ्क्षदिति'। ननु णावित्यनेनाचं विशेषयिष्यामः, णौ परतोऽङ्गस्य योऽजिति, तत्र सामर्थ्यादेकवर्णव्यवधानमवश्यं भावित्वादाश्रयिष्यते इत्याह। 'तद्देतदिति'। 'उत्तरार्थमिति'। लोपः पिबतेरीच्चाभ्यासस्य, उपधाया यथा स्यादन्त्यस्य मा भूदित्येवमर्थमवश्यमुपधाग्रहणं कर्तव्यं, यद्युत्तरार्थमुपधाग्रहणं तत्रैवं[2] कर्तव्यम्, यद्येवं तत्रैव क्रियतामत आह। 'तदिहापीति'। आल्लोपः पिबतेरिति, एवमुच्यमाने ऽन्तरङ्गमपि युक-मनवकाशत्वादाल्लोपो बाधते, उपधाग्रहणे त्वन्तरङ्गत्वाद्युकि कृते आकारस्य उपधाया लोप इति न कश्चिद् दोषः, तस्मादुत्तरार्थमुपधाग्रहणम्, अपर आह। इहार्थमप्युपधाग्रहणम्, अन्यथा ऋवर्णान्तस्य ह्रस्वो विधीयमानोऽन्तरङ्गमपि वृद्ध्यादिकं बाधित्वा लृ इ अत् इति स्थिते उकार-स्यादेशः प्राप्नोति, नैष दोषः। यदयं नाग्लोपिशास्वृदितामितिप्रतिषेधं शास्ति तज्ज्ञापयति नान्त्यस्यैव ह्रस्वत्वमिति। 'णौ णिच्युपसंख्यानमिति'। णौ परतो यो णिस्तस्मिन्नित्यर्थः। णौणिचीति पाठे णयन्तात्परे णिचि विहितइत्यर्थः। 'वादितवन्तं प्रयोजितवानिति'। लुङो भूतकालत्वा-त्प्रयोजितवानिति भूतकालेन विग्रहः। वादितवन्तमित्यत्र तु कथं, यदसौ वादितवान् कथं प्रयुक्तिः, कुर्वतो हि प्रयुक्तिः करिष्यतो वा न तु कृतवतः, न ब्रूमः प्रयुक्तिकालापेक्षयात्र भूतकालत्वमिति, किं तर्हि, यथा शब्द-प्रयोगकालापेक्षया, प्रयोजितवानित्यत्र भूतकालत्वं तदपेक्षयैव प्रयोज्य-व्यापारस्यापीति। 'अत्रीवददिति'। वदेर्ण्यन्ताण्णिचि लुङादि, किं पुनः कारणं न सिध्यत्यत आह। 'योसाविति'। स्थानिवद्भावे हि सति यश्च-ङ्परो णिर्न तत्रोपधा ह्रस्वभाविनी यत्रोपधा ह्रस्वभाविनी न स चङ्परो

१ तत्रस्थस्येति २-३ पु॰ पाठः।

२ तत्रैवेवं वक्तव्यमिति २-३ पु॰ पाठः।

३ अनवकाशत्वादिति २-३ पुस्तकयोर्नास्ति।

द्वितीयेन णिचा व्यवहितत्वात् । 'तेन[1] चेति' । णिलोपेन । 'अग्लोपित्वादिति' । ननु च णयन्ताण्णिचि विहिते णिलोपश्च प्राप्नोति अचोऽञ्णितीति वृद्धिश्च, तत्र लोपः शब्दान्तरे प्राप्तेरनित्यः, वृद्धेस्तु लोपे कृते ऽत्यन्ताप्राप्तिरित्युभयोरनित्ययोः परत्वाद्वृद्धौ कृतायामैकारस्य लोपः, तत्राग्लोपित्वं भवति । एवं तर्हि यदग्लोपिनां नेति प्रतिषेधं शास्ति तज्ज्ञापयति वृद्धेर्लोपो बलीयानित्यन्यथा सर्वत्राको वृद्धौ कृतायामैकारौकारयोर्लोपो न त्वकः, नैतदस्ति ज्ञापकं, यत्र वृद्धावपि कृतायामगेव लुप्यते तदर्थमेतत्स्याद्राजानमतिक्रान्तवाचत्यरराजत्, यत्तर्हि प्रत्याहारग्रहणं करोति, अन्यथाल्लोपिनां नेत्येव ब्रूयादेतदपि नास्ति ज्ञापकं, स्वामिनमाख्यदसस्वामत्, गोमुचमाख्यदजुगोमत्, प्रावृषमाख्यदपप्रावत्, यादृशमाख्यदययादत्, इत्येवमाद्यर्थमेतत्स्यात् । अत्राहुः । णिजत्र नास्ति अनभिधानात्, एतच्च भाष्यकारेण ज्ञापकत्वसमर्थनादवसितमिति, यत्र तदभिधानमङ्गीकृतं तदर्थमेतस्याद्विन्मतोर्लुक् भास्वन्तमाख्यत् अबभासत्, नैतत्प्रत्याहारग्रहणस्य प्रयोजनमकार एव ह्यत्र मतुपो लुप्यते, यत्र तर्हि विनो लुक् स्रग्विणमाख्यदसस्रजत्, अत्रापि नोपधा ह्रस्वभाविनी, तस्मात्प्रत्याहारग्रहणं ज्ञापकमिति स्थितमेतत् । एवमपि हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति यदुक्तं तेनैत द्विरुध्यते । तथाहि । असत्यप्यत्वनिपातने वृद्धिं बाधित्वा इकारस्य लोपे सति नैव सन्वद्भावस्य प्रसङ्गस्तस्मादग्लोपित्वादिति नायं स्वपक्षः, परमतेन त्वेतदुक्तं द्रष्टव्यम् ॥

भाष्यस्याप्येवमेवात्र निर्वाहो दृश्यतां बुधैः ।
विपर्यये तूच्यमाने युक्तिः काचिन्न दृश्यते ॥

एवं च पटुमाख्यद्दुलिमाख्यत् अपीपटत् अबीबलदिति भवति, यथा त्वत्र भाष्यं तथा अपपटत् अबबलदिति भवतीत्यलमियता । उपसंख्यानं प्रत्याचष्टे । 'णयाकृतिनिर्देशात्सिद्धमिति' । आकृतिरत्र जातिर्निर्दिश्यते चङ्परा या णयाकृतिर्जातिस्तत्रेति । ततश्च सत्यपि स्थानि-

१ येशौ णौ णिलोपस्तस्य स्थानिवद्भावेनाग्लोपित्वादिति मु॰ मू॰ पाठस्तत्र योशौ णौ णिलोपस्तेन चाग्लोपित्वादिति पाठः पदमञ्जरीसंमतः ।

वत्त्वे ण्याकृतेरेकत्वाद्यश्चङ्परो णिः स एव पूर्वः, यश्च पूर्वः स एव चङ्-पर इति सिद्धं ह्रस्वत्वं, यदप्युक्तमग्लोपित्वादिति तदपि न, आकृतिनिर्देशे हि ह्रस्वस्य न ण्याकृतिर्निमित्तत्वेनाश्रीयते, तत्र गोबलीवर्दन्यायेन तस्या ण्याकृतेरन्यस्याको लोपः प्रतिषेधविषयत्वेनाश्रीयतइति सर्वमवदातम् ॥

"नाग्लोपिशास्वृदिताम्" ॥

यत्र णौ परतोऽग्लोपस्तदिहाग्लोपि गृह्यते ।
दीव्यतिप्रभृतेर्नायं निषेधः शास्त्रदिग्ग्रहात् ॥
शक्यः शासिग्रहोकर्त्तुमृदिदेष पठिष्यते ।
ऋशासु अनुशिष्टावित्येवमेके प्रचक्षते ॥
वदन्त्यन्ये तु सूत्रेस्मिन् शासिं निरनुबन्धकम् ।
पठन्तः प्रतिषेधोस्य यङ्लुक्यपि भवेदिति ॥

'तत्र स्थानिवद्भावादपि सिद्धमिति'। स्थानिवद्भावे हि सति ह्रस्वभाविन्युपधा न संभवति। 'हलचोरादेशे तु न सिद्ध्यतीति'। यथा सुधातुरकङ् चेति समुदायस्यादेशत्वे ऽवयवस्यानादेशत्वादणो रप-रत्वं न भवति सौधातकिरिति तथा समुदाये स्थानिन्यवयवस्यास्थानि-त्वादजादेशत्वाभावान्नास्ति स्थानिवद्भावः, इह त्वग्लोपिग्रहणसामर्थ्या-त्समुदायलोपो ऽप्यग्लोप आश्रीयते ॥

"भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्" ॥ भ्राज दीप्तौ, भासृ दीप्तौ, भाष व्यक्तायां वाचि भौवादिकाः, दीपि दीप्तौ, दैवा-दिकः, सर्वेनुदात्तेतः, जीव प्राणधारणे, भौवादिः, मील निमेषणे, पीड अवबाधने, चुरादौ। 'भ्राजभासोरित्यादि'। अवश्यमनयोरनुदात्तानुबन्ध आसङ्क्यः, ऋकारानुरोधस्त्वपाणिनीय इत्युच्यते, ऋकारानुबन्धे प्राप्ते विभाषा, वर्णान्तरे त्वप्राप्ते विभाषेति, ऋकारानुरोधे फलविशेषाभावा-दपाणिनीयत्वम्। 'काण्यादीनामिति'। काणिवाणिराणिहेठिलोपि-प्रभृतयः काण्यादयः, आदिशब्दः प्रकारे ॥

"लोपः पिबतेरीच्चाभ्यासस्य" ॥ 'अपीप्यदिति'। ननु च पर-त्वान्नित्यत्वादुपधालोपे कृते ऽनच्कत्वाद् द्विर्वचनं न प्राप्नोति अत

आह । 'उपधालोपे कृतइति' । उपधाया एव पर्यायेणेत्त्वं माभूदिति अभ्यासस्य ग्रहणम्, आकारलोपेनाङ्गस्याग्लोपित्वाल्लघुनश्च परस्यासंभवात्सन्वल्लघुनीतीत्वदीर्घत्वयोरभावादीत्त्वविधिः, तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ॥

"तिष्ठतेरित्" ॥ 'अतिष्ठिपदिति'। णौ कृतस्येत्त्वस्य स्थानिवद्भावात्स्थाशब्दस्य द्विर्वचनं, सन्वद्भावादभ्यासस्येत्त्वं, तिपा निर्देशः पूर्ववत् ॥

"उर्ऋत्" ॥ 'उपधाया ऋवर्णस्येति' । अथात्रैर्द्धातोर्ग्रहणं कस्मान्न भवति, माभवानर्तिपद् इति यथा स्यादिति, तपरकरणात्, नहि दीर्घेपि स्थानिनि ह्रस्व एव यथा स्यादिति । 'इररारामपवाद इति' । कॄत संशब्दने इत्यस्य ॠत इद्धातोरितीत्वं प्राप्नोति, वृतु वर्त्तनइत्यादीनां गुणः, मृजेर्वृद्धिस्ते च रपराः सन्त इररारो भवन्ति । 'अचिकीर्त्तदिति'। णौ कृतमपीत्वं न स्थानिवद्भवति, यत्र द्विरुक्ते परभागस्याश्रोजवर्णस्तत्र स्थानिवत्त्वं, तथा च ओः पुयण्ज्यपरइति ज्ञापकमप्येतादृशमेव, ननु चान्तरङ्गा इररारः, णिज्मात्रापेक्षत्वात्, ऋकारस्तु बहिरङ्गः, स हि पश्चाद्भाविनं चङमपेक्षते, तत्कथं तेनैते बाध्यन्ते ऽत आह । 'वचनसामर्थ्यादिति' । यद्यन्तरङ्गत्वादिररारः स्युर्व्यर्थमेवेदं वचनं स्यात् । 'तपरकरणमित्यादि'। असति तस्मिन्यत्र स्थानी दीर्घस्तत्रान्तरतम्याद्दीर्घ एव स्यात् । ननु भाव्यमानोण् सवर्णान्न गृह्णाति, तत्कथं दीर्घस्य प्रसङ्गो ऽत आह । 'न चायमिति' । असति तपरकरणइति भावः । कथमभाव्यमानोत आह । 'आदेशान्तरेति' । अयमभिप्रायः । प्राप्तप्रतिषेधस्य प्रतिप्रसवे संभवति नापूर्वविधानं युक्तमिति तावन्न्यायः, ततश्चासति तपरकरणे आदेशान्तराणामिररारां निवृत्त्यर्थं यथावस्थितमृवर्णस्वरूपमेवाभ्यनुज्ञायेत, संभावने लिङ्, संभवति च सवर्णग्रहणे सति स्वरूपाभ्यनुज्ञानं, तत्र स्वरूपमेवाभ्यनुज्ञायतामिति सवर्णग्रहणं स्यात्तपरकरणे तु सति स्वरूपाभ्यनुज्ञानं न संभवति, अतो भाव्यमानत्वसंपत्तये तपरकरणमिति । प्रायेण त्वभ्यनुज्ञायतइति लङन्तं पठ्यते, न तत्र समीचीनोर्थः, क्रियमाणानुवादे हि

लङ् भवति, अन्ये तु व्याचक्षते आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवाभ्यनुज्ञायतइति एवमापद्यतेति ॥

"दयतेर्दिगि लिटि" ॥ 'अवदिग्यइति'। देङ् रक्षणे, ङित्त्वादात्मनेपदम्, एरनेकाच इति यण्। न तु दये[1]त्यस्येति । दय दानगतिरक्षणेष्वित्यस्य । 'तस्य लिट्याम्विहित इति'। दयायासश्चेत्यनेन । 'दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यतइति'। नाप्राप्ते तस्मिन्नस्यारम्भात्। ननु दयतेः प्राप्तं द्विर्वचनं बाध्यतां दिग्यादेशस्य तु स्थानिवद्भावेन द्विर्वचनं प्राप्नोति तत्कथं बाध्यते, नहि तस्मिन्नप्राप्ते तस्यारम्भः। उच्यते। बाध्यबाधकभावे हि द्वैतं, लक्ष्यं वा लक्षणेन बाध्यते[2] लक्षणं वा तेनेति, तत्राद्ये पक्षे स्यादेतच्चोद्यं, द्विर्वचनशास्त्रस्याबाधितत्वात्, द्वितीये तु द्विर्वचनशास्त्रमेवास्मिन् विषये दिग्यादेशशास्त्रेण बाधितमिति कृतेपि दिग्यादेशे नास्ति द्विर्वचनस्य प्रसङ्गः, यद्येवमस्तेर्भूः, बभूव, अत्र द्विर्वचनं न स्यात्, अनवकाशा हि विधयो बाधका भवन्ति, सावकाशश्चायं, कोवकाशः, भविता भवितुं, यस्तर्हि लिट्येव विधीयते चक्षिङः ख्याञ्, वा लिटीति, तत्र द्विर्वचनं न प्राप्नोति आचख्यौ। नैष दोषः। आर्द्धधातुके लिटीति विषयसप्तमी, ततश्च द्विर्वचननिमित्तस्य लिट उत्पत्तेः प्रागेव ख्याञादेशः, पश्चाल्लिटि परतो द्विर्वचनम्, इह तु परसप्तम्याश्रयणाच्चाप्राप्ते द्विर्वचने दिगिरारभ्यमाणस्तद्बाधते, एवमन्यत्रापि, यत्र बाधो नेष्यते तत्र लक्ष्यबाधो वक्तव्यः, विषयसप्तमी वाश्रयणीया ॥

"ऋतश्च संयोगादेर्गुणः" ॥ 'सस्वरतुरित्यादि'। स्वृ शब्दोपतापयोः, ध्वृ हूर्च्छने, स्मृ चिन्तायाम्, अत्र परत्वाद्गुणे कृते पश्चाद् द्विर्वचनमिति गुणविधानसमये संयोगादित्वमङ्गस्य, यद्वा द्विर्वचने हलादिशेषे कृते सांप्रतिकासंभवाद्भूतपूर्वसंयोगादित्वमाश्रित्य गुणः। 'प्रतिषेधविषयइति'। णलि उत्तमे णलि णित्त्वाभावपक्षे च सामान्यलक्षणेन नैव गुणः सिद्धः, सस्वर्थ, अहं किल सस्वर। वृद्धिविषये तर्हि परत्वादयमेव गुणः

१ दय दानइत्यस्येति मु मू॰ पु॰ पा॰।
२ परत्वादित्यवेति पा॰ २-३ पु॰।

प्राप्नोति तत्राह। 'वृद्धिविषये त्वित्यादि'। गुणस्यावकाशः सस्वरतुः। णिति वृद्धेरवकाशः कारको हारकः, सस्वारेत्यादौ वृद्धिविषये पूर्वविप्रतिषेधः, ननु च परत्वाद्गुणेऽपि कृते तस्मिन्नत उपधाया इति सिद्धं, सत्यं, परिहारान्तरं त्विदं द्रष्टव्यं, तपरकरणं निर्देशार्थं दीर्घस्य स्वातस्तहरित्यादावुत्तरसूत्रेण गुणो भवत्येव, न च तस्या अपि प्राप्तेः संयोगादिषु तपरकरणसामर्थ्याद्वावृत्तिर्निर्देशार्थतया तस्योपपत्तेः। 'संयोगादेरित्यादि'। अङ्गस्यासंयोगादित्वाद्वचनम्। उपधाग्रहणं देशविशेषोपलक्षणम्, अल्मात्रस्योपधासंज्ञाविधानात्संयोगस्योपधात्वासंभवात्, संयोगावयवे वा संयोगशब्दो वर्त्तते, उपधात्वं तु मुख्यम्। 'सञ्चस्करतुरिति'। संपर्युपेभ्यः करोतौ भूषणे, अड्भ्यासव्यवायेपीति सुट्, यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन, इहापि सस्वरतुः सस्वरुरिति, संयोगोपधस्येत्येव सिद्धं, भवेत्सिद्धं सस्वरतुः सस्वरुरिति, इदं तु न सिद्ध्यति सञ्चस्करतुः सञ्चस्करुरिति, किं कारणं, बहिरङ्गलक्षणत्वात्, बहिरङ्गः सुट्, अन्तरङ्गो गुणः, कथं सुटो बहिरङ्गत्वमत आह। 'अत्र हीति'। अत्र दर्शने साधनाभिधायी लिट् तावद्भवति, ततश्च तावत्येव निमित्तमस्तीति गुणः प्राप्नोति, सुट् तु पश्चादुपनतमुपसर्गमपेक्षत इति बहिरङ्गः, तेनासौ गुणे कर्त्तव्ये ऽसिद्ध इति असंयोगोपधत्वाद्गुणो न स्यात्, सस्वरतुरित्यादौ च सावकाशं वचनं संयोगादिग्रहणे तु क्रियमाणे संयोगोपधग्रहणस्यानन्यार्थत्वादसिद्धत्वं बाध्यत इति गुणसिद्धिः, अवश्यं च सुटो बहिरङ्गत्वमेषितव्यमित्याह। 'एवं च कृत्वेति'। सुट्कात्पूर्व इत्यत्रोक्तं कात्पूर्वग्रहणं सुटो ऽभक्तत्वज्ञापनार्थमिति, इह तु भाष्यकारपक्षावलम्बनेन भक्तत्वेपि परिहार उक्त इति न विरोधः॥

"ऋच्छत्यृताम्"॥ ऋच्छ गत्यादिषु, ऋत्तेरप्यत्र प्रश्लेषः, यदाह। 'ऋ इत्येतस्येति'। एतच्च बहुवचननिर्देशादवसीयते, ऋवर्णस्य ग्रहणं तु न भवति, ऋकारान्तानां पृथग्ग्रहणात्, किमर्थं पुनरर्त्तेः प्रश्लिष्यते, आरतुरारुरिति यथा स्यात्, अन्यथा ऋ अतुस् ऋ उस् इति स्थिते द्विर्वचनम्, उरदत्वं च बाधित्वा वार्णात्सवर्णदीर्घत्वं, तत्र यणभ्यासयह

गेन ग्रहणमुरदत्वं हलादिशेषः, अत आदेरिति दीर्घत्वम् । आतो लोप इटि च, अतुरर्तिः[1] वचनमिव श्रूयेत, अथ धातुग्रहणेन ग्रहणं, तत ऋकारान्तत्वाद्गुणे कृते अरतुरर्रिति रूपं स्यात्, तथा क्वसौ गुणे कृते अरित्यस्य द्विर्वचनं हलादिशेषः, अत आदेः, सवर्णदीर्घत्वं, वस्वेकाजाद्घसामितीट्, आरिवानिति भवति । 'ऋच्छतेरलघूपधत्वाद् गुणः इति'। अन्तरङ्गत्वाच्छे चेति तुकि कृते संयोगे गुर्विति ऋकारो गुरुर्भवति, न च लघुः नाप्युपधा । 'ऋतां त्विति'। सूत्रवदत्राप्यर्त्तिप्रश्लेषः । 'वृद्धिविषये त्विति'। अस्तु वा परत्वाद्गुणः, अत उपधाया इति सिद्धमिति परिहारान्तरम् ॥

"शृदॄप्रां ह्रस्वो वा" ॥ शॄ हिंसायां, दॄ विदारणे, पॄ पालनपूरणयोः । 'विशशरतुरित्यादि'। न शसददवादिगुणानामित्येत्वाभ्यासलोपयोः प्रतिषेधः । अथ किमर्थं ह्रस्वो विकल्प्यते, न प्रकृत एव गुणो विकल्प्यते, गुणाभावपक्षे यणादेशेन विशश्रतुरित्यादिरूपसिद्धिरित्यत आह । 'ह्रस्ववचनमित्वनिवृत्त्यर्थमिति'। अन्यथा वार्णादाङ्गं बलीय इति वर्णाश्रयमन्तरङ्गमपि यणं बाधित्वा इत्वं स्यात् । 'केचिदित्यादि'। कथं पुनरस्य प्रत्याख्याने विशश्रतुरित्यादिरूपसिद्धिरित्यत आह । 'श्रा पाक इत्यादि'। ननु चार्थभेदो नेत्याह । 'अनेकार्था इति'। तथा सतीत्यादिना प्रत्याख्यानं प्रत्याचष्टे, तत्र शृणातेः क्वसौ विशशर्वानिति श्रातेस्तु विशश्रिवानिति, तस्माद् ह्रस्व एव विकल्पनीय इत्यर्थः ॥

"केणः" ॥ 'ज्ञकेति'। भस्त्रैषाजाज्ञेतीत्वप्रतिषेधः । 'गोकेति'। अणिति पूर्वेण णकारेण प्रत्याहार इति लणित्यत्र प्रतिपादितम् । 'राका धाकेति'। कृदाधारार्चिकलिभ्यः कः । 'कनापीति'। सानुबन्धकस्योपलक्षणमेतत्, ओर्देशे ठञ्, नैषादकर्षुकः ॥

"न कपि" ॥ बहुकुमारीक इत्यादौ नद्यृतश्चेति कप्, अथात्रास्मिन्प्रतिषिद्धे उपसर्जनह्रस्वत्वं कस्माच्च भवति, अत एव प्रतिषेधात्,

१ अतुरिति द्विवचनमेव श्रूयेत इति· २· ३· पु· पाठः ।

नायमस्य ह्रस्वस्य प्रतिषेधः, किन्तर्ह्यनन्तरस्य केण इत्यस्य, कुत एतत्, अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति, एवं मन्यमानाह । 'अयं कपि ह्रस्वो न भवतीति'। यदि चोपसर्जनह्रस्वत्वं स्यात् वचनमिदमनर्थकं स्यादतो वचनसामर्थ्याद्यच्च यावच्च ह्रस्वत्वं तस्य सर्वस्य प्रतिषेधो भविष्यति, अस्ति वचनस्यावकाशो यत्रोपसर्जनह्रस्वत्वं न प्राप्नोति, अस्त्रीप्रत्यये बहुयवागूको बहुलक्ष्मीक इति, स्त्रीप्रत्यये उपसर्जनह्रस्वत्वं स्यादेव तत्राह । 'गोस्त्रियोरुपसर्जनस्येत्ययमपीति' । कुत इत्यत आह । 'समासार्थे होति' । समासान्ता इत्यत्रान्तशब्दोऽवयववचनः, कथं च कप्समासावयवो भवति, यदि तेन सह समासो भवति, कथं च तेन समासो भवति, यद्यकृतएव समासे, तदर्थादुत्तरपदात्कब् भवति पश्चात्तदन्तेन समासः । ननु च कपः पूर्वं सुबन्तं तत्कथं कबन्तेन समासः, वचनात्समासान्तेष्वसुबन्तेन समासः । अपर आह । उत्तरपदे या विभक्तिस्तस्याश्च या प्रकृतिस्तयोर्मध्ये विकरणवत्समासान्तः, तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्सुबन्तेन समास इति, एवं वदतो दोषः, बहुचर्मिकेत्यादौ प्रत्ययस्थादितीत्वं न स्यात्, किं कारणं, कात्परः सुप्ततः परष्टाप्, यथा बहुपरिव्राजका मथुरेति, यदि कपि कृते पश्चात्तदन्तेन समासः किमायातमित्यत आह । 'स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवतीति' । गोस्त्रियोरित्यत्र प्रातिपदिकस्येति वर्त्तते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासे सति, न चोक्ते प्रकारे कपः पूर्वभागस्य समासत्वं प्रातिपदिकत्वं वा समस्ति, तस्मान्नोपसर्जनह्रस्वत्वमिति ॥

"ऋदृशोऽङि गुणः" ॥ ऋ इति वर्णग्रहणं, व्याख्यानात्, अकरदित्यादौ कृमृदृरुहिभ्यश्छन्दसीति च्लेरङ् । 'असरदिति' । सर्तिशास्त्यर्त्तिभ्यश्चेत्यङ् । 'अदर्शदिति' । इरितो वेत्यङ्, गुणग्रहणं किं, नाकार एवोच्येत ऋदृशोऽङ्य इति, नैवं शक्यं, दृशेरन्त्यस्यात्त्वं स्यात्, गुणग्रहणात्त्विको भवति, यदि त्वणा इत्यनुवर्त्तते शक्यं गुणग्रहणमकर्त्तुं, तथा तु न कृतमित्येव ॥

"अस्यते स्थुक्" ॥ 'आस्थदिति' । अस्यतिवक्तिख्यातिभ्योङ् ॥

"श्वयतेरः" ॥ 'अश्वदिति' । जृस्तम्भ्वित्यादिनाङ् ॥

"एतः पुम्" ॥ 'अपप्तदिति' लृदित्वादङ् ॥

"शीङः सार्वधातुके गुणः" ॥ अनुबन्धनिर्देशो यङ्लुकि माभूदिति, शेशीतः, शेश्यतीति, शीङ एरित्युच्यमाने सानुबन्धकात् षष्ठ्युच्चारिता, अनुबन्धश्च निवृत्तिधर्मा, तस्य लोपेन निवृत्तौ प्राप्तायामयमन्यः प्रकारो विज्ञायेत, नास्य लोपो निवर्तकः किं तर्ह्येकार इति, गुणग्रहणं त्विकं निवर्तयति, ङकारस्तु स्वेनैव हेतुना निवर्तते, तस्माद्गुणग्रहणम् ॥

"अयङ् यि क्ङिति" ॥ 'शय्यतइति'। यक्। 'शाशय्यतइति'। यङ्, परत्वान्नित्यत्वाच्चायङादेशे कृते द्विर्वचनम्। 'प्रशय्येति'। ल्यप् ॥

"उपसर्गाद् ध्रस्व ऊहतेः" ॥ ङितोऽसंभवादुदाहरणं न प्रदर्शितं, यङस्तावदजादित्वादसम्भवः, यासुटोपि शपा व्यवधानात्, आशिषि तु किदेव यासुट्, एवं चोहतेर्दीर्घप्रयोगनिवृत्त्यर्थं वचनम्, समुह्यत इत्यादि कं तु रूपं वहेरेव संप्रसारणे कृते सिद्ध,मनेकार्थत्वाद्धातूनामर्थभेदोप्यकिं चित्करः। 'आ ऊह्यतइति'। नेदं लौकिकं वाक्यं प्रयोगार्हं, नहि तत्र धातूपसर्गयोरसंहितास्ति। संहितैकपदेनित्या नित्याधातूपसर्गयोरिति स्मरणात्। तस्मादलौकिकेन प्रक्रियावाक्येनाङःप्रश्लेषः प्रदर्श्यतइति ह्रस्वत्वं न कृतं, लौकिकप्रयोगसंपादनपरत्वाच्छास्त्रस्य, अन्ये त्वत्रापि ह्रस्वत्वं पठन्ति। 'ओह्यतइति'। अत्रैकादेशे कृते व्यपवर्गाभावाद् ध्रस्वाभावः, उपसर्गादूहतेरित्युभयत आश्रयणादन्तादिवद्भावोपि नास्ति। 'समोह्यतइति'। अत्रैकादेशस्यादिवद्भावात्समः परस्य ह्रस्वत्वप्रसङ्गः, अण इत्यनुवृत्तेस्तु न भवति, पूर्वणैव णकारेण प्रत्याहारः, एवं च रूपाश्रयोयं विधिरिति ताद्रूप्यानतिदेशाद् ध्रस्वाभावः ॥

"एतेर्लिङि" ॥ आशिषि लिङीत्यादिना सूत्रस्य विषयं दर्शयति, सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवति। ननु च सवर्णदीर्घत्वे सति संभवति अभीयात् प्रतीयात् परीयादिति, नात्र ह्रस्वत्वेन भवितव्यं, किं कारणम्, उपसर्गादेतेरित्युभयत आश्रयणादन्तादिवद्भावाभावात्। आर्द्वयादित्यादाऊह्यतइत्यादिना व्याख्यातम् ॥

"अकृत्सार्वधातुकयोर्दीर्घः" ॥ 'अकृद्यकार इति' । यकारमात्रस्य प्रत्ययस्यासंभवादकृति असार्वधातुके च यकारादावित्यर्थः । 'भृशायतइति' । भृशादिभ्यो भुव्यच्वेरिति क्यङ् । 'सुखायतइति' । सुखादिभ्यः कर्तृवेदनायाम् । 'चीयतइति' । यक् । 'चेचीयतइति' । यङ् । 'तोष्टूयतइति' । शर्पूर्वाः खयः । 'चीयादिति' । आशिषि लिङ् । 'निश्चित्य प्रस्तुत्येति' । ल्यबयं कृत्संज्ञकः । ननु चाजन्तस्य दीर्घो विधीयते, इह च तुकि कृतेनजन्तत्वाद्दीर्घो न भविष्यत्यत आह । 'परत्वादिति' । तुकोऽवकाशः, अग्निचित्सोमसुत्, दीर्घस्यावकाशः, चीयते स्तूयते, निश्चित्य प्रस्तुत्येत्यत्र परत्वात्तुग् दीर्घत्वेन बाध्यते, प्रायेण तु प्रकृत्य प्रहृत्येति पाठस्तत्रोत्तरसूत्रेण रीङः प्रसङ्गाद् दीर्घत्वेन तुको बाधः स्यादित्ययुक्तं स्यात्, आद्यप्राप्त्यभिप्रायेण वा व्याख्येयम् । 'चिनुयादिति' । विध्यादिलिङि । 'उरुया धृष्णुयेति' । सुपां सुलुगित्यादिना यादेशः ॥

"रीङ् ऋतः" ॥ 'पित्र्यमिति' । पितुर्यच्चेति यत्प्रत्ययः, रीङादेशे कृते यस्येति लोपः । कथं पुनः क्ङितीत्यनुवर्त्तमानेऽत्र रीङादेशो भवत्यत आह । 'क्ङितीत्येतदिह निवृत्तमिति' । 'चेकीर्यतइति' । कॄ विक्षेपे, यङ्, ॠत इद्धातोः, हलि चेति दीर्घः । [1] 'जेगिल्यतइति' । अत्र ग्रो यङीति लत्वे कृते रेफाभावाद् दीर्घाभावः, अथ रीङिति किमर्थं, न रिङेवोच्येत, अकृत्सार्वधातुकयोः च्वौ चेति दीर्घो भविष्यति, तत्रायमप्यर्थः, उत्तरत्र रिङ्ग्रहणं न कर्त्तव्यं भवति, तथा यग्लिङोरपि ग्रहणं न कर्त्तव्यं भवति, शे चेत्येव वक्तव्यं, चकारादकृत्सार्वधातुकयकारे च, यद्येवं यथा मात्रीयतीत्यादौ दीर्घो भवति तथा यग्लिङोरपि स्यात्, क्रियते, क्रियादिति, अथ तत्र नाप्राप्ते दीर्घे रिङ् विधीयमानो दीर्घत्वं बाधतइति उच्येत तर्हि क्यजादिष्वपि बाधेत, अथ मतम्, ऋवर्णदीर्घत्वं तावद्बाध्यतां रिङस्तु कथं बाध्यते, नहि तत्र नाप्राप्ते दीर्घे स आरभ्यतइति, यग्लिङोरपि तर्हि न बाधेत, तस्मात्क्यजादिषु दीर्घस्य यग्लिङोस्तु ह्रस्वस्य श्रवणं यथा स्यादिति पृथगादेशद्वयं वक्तव्यम् ॥

---

[1] जेगिल्यतइत्यारभ्य दीर्घाभाव इत्यन्तं पाठः २-३-पुस्तकयोर्नास्ति ।

"रिङ् शयग्लिङ्क्षु" ॥ यिग्रहणमकृत्सार्वधातुकग्रहणं चानुवर्त्तमानं संभवव्यभिचाराभ्यां लिङ एव विशेषणं न शयकोः । 'आद्रियते आध्रियतइति'। दृङ् आदरे, धृङ् अवस्थाने, तुदादित्वाच्छः, रिङि कृते इयङादेशः । [1]'रिङ्वचनं दीर्घनिवृत्त्यर्थमिति'। रिङि कृते अकृत्सार्वधातुकयोरिति दीर्घत्वं प्राप्नोति तस्यापि निवृत्त्यर्थमिति भावः ॥

"गुणोर्तिसंयोगाद्योः" ॥ ऋ गतिप्रापणयोः भ्वादिः, ऋ सृ गतौ जौहोत्यादिकः, द्वयोरप्ययं छान्दसत्वाल्लुका निर्देशः, ऋच्छतीति निर्देशे इयर्त्तेर्न स्यात्, इयर्त्तीति निर्देशे ऋच्छतेर्न स्यात्, ऋग्रहणमेव तु न कृतं वैचित्र्यार्थं, न चैवमुच्यमाने वर्णग्रहणशङ्का, ऋत इत्यनुवृत्तेः । 'श इत्येतद्वि[2]हासंभवान्निवृत्तमिति' । नह्यर्त्तिः संयोगादिर्वा धातुस्तुदादिषु पठ्यते, संस्क्रियते संस्क्रियादित्यत्र सुटि कृते संयोगाद्यङ्गमिति गुणप्रसङ्ग इत्यत आह । 'इहेति'। बहिरङ्गत्वं सुटो द्विपदाश्रयत्वात्, इदं तु पूर्वं धातुः साधनेनयुज्यतइत्याश्रित्योक्तं, पक्षान्तरेण्याह । 'अभक्तत्वाद्वेति' । 'इयृयादिति'। विध्यादिलिङ्, शपः श्लुः, द्विर्वचनम्, अर्त्तिपिपर्त्योश्चेत्यभ्यासस्येत्वम्, अभ्यासस्यासवर्णे इतीयङ्, अकारएव वक्तव्ये गुणग्रहणं चिन्त्यप्रयोजनम् ॥

"यङि च" ॥ 'घ्रीभाव इति'। प्रक्रियालाघवाय घकारोच्चारणं, ह्रीभावविधावभ्यासाच्चेति कुत्वे गौरवप्रसङ्गात् । 'जेघ्रीयतइति' । द्विर्यादेशेनैव घ्रीभावेन द्विर्वचनं न बाध्यते, विषयभेदात्, यङन्तस्य द्विर्वचनं प्रकृतिमात्रस्य घ्रीभावः । 'जङ्गन्यतइति' । गत्यर्थोयम् ।

"ई घ्राध्मोः" ॥ इकार विधावप्यकृत्सार्वधातुकयोर्दीर्घः ।

"अस्य च्वौ" ॥ च्वौ चेति दीर्घे सिद्धे ईकारविधानं प्रक्रियालाघवार्थम् ।

"क्यचि च" ॥ 'पृथग्योगकरणमुत्तरार्थमिति'। न छन्दस्यपुत्रस्येत्यादि क्यच्येव यथास्यात् च्वौ माभूदिति ।

१ असंभवाचानुवर्तते इति मुद्रितमूलपुस्तके पाठः ।
२ अयं ग्रन्थो मुद्रि· मू· पु· नोपलभ्यते ।

"अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु" ॥ 'एतेष्वर्थेष्विति'। गम्यमानेषु यस्तदानीमेव बुभुक्षमाणोऽशनमिच्छति तदत्रोदाहरणं, यस्तु तदानीं सुहित एवोत्तरार्थमशनमिच्छति तदत्र प्रत्युदाहरणम् । 'उदकीयतीति'। स्नानाद्यर्थमुदकमिच्छतीत्यर्थः । 'धनायतीति'। अभिलाषातिरिक्तो गर्धः, सत्येव धने भूयोपि धनमिच्छतीत्यर्थः । 'धनीयतीति'। दरिद्रः सन्धनमिच्छति ।

"न च्छन्दस्यपुत्रस्य" ॥ इहानन्तर्यादीत्वस्यैव प्रतिषेधः प्राप्नोति, ततश्चापवादेपनीते उत्सर्गोऽकृत्सार्वधातुकयोरिति दीर्घः प्राप्नोतीत्याशङ्क्याह । 'क्यचि यदुक्तं तन्न भवतीति'। किं पुनस्तदित्यत आह । 'दीर्घत्वमीत्वं चेति'। एवं मन्यते, यदयमश्वाघस्यादित्यात्वं शास्ति तज्ज्ञापयति दीर्घस्याप्ययं प्रतिषेध इति, अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यादिति, मित्रयुरित्यादौ क्याच्छन्दसीत्युप्रत्ययः, पुत्रमिच्छन्तः पुत्रीयन्तः, जनमिच्छन्तो जनीयन्तः, लटः शत्रादेशः, उगिदचामिति नुम्, अपरे त्वाहुः । जनीमिच्छन्तो जनीयन्तः, जनीति वधूरुच्यत इति, तत्रादिग्रहणस्य प्रयोजनान्तरं मृग्यम् ॥

"दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति" ॥ 'दुष्टीयितेति प्राप्ते इति'। भाषायां प्राप्तिरुच्यते, तत्र उप्रत्ययाभावात् तत्समानार्थस्तृच् प्रयुक्तः, प्रायेण तु लडन्तं पठ्यते, तत्र प्रकृतिमात्रे तात्पर्यम् ॥

"अश्वाघस्यात्" ॥ 'एतदेवेत्यादि'। पूर्वमेवैतद्व्याख्यातम् ॥

"देवसुम्नयोर्यजुषि काठके" ॥ वेदवचनोत्र यजुःशब्दः, न मन्त्रवचनः, कठानामिदं काठकं, गोत्रचरणाद्वुञ्, काठके यजुषि कठशाखायामित्यर्थः, एवं च कृत्वा ऋगात्मके यजुषि मन्त्रे कठशाखायामात्वं भवति, तथा ऋग्वेदेपि भवति स चेन्मन्त्रः काठके दृष्टः । 'देवान् जिगाति सुम्नयुरिति'। बह्वृचानामप्यस्ति कठशाखा, ततो भवति प्रत्युदाहरणम् । अनन्ता वै वेदाः[1] ॥

---

१ तदात्वमिति पाठः २-३ पुस्तकयोः ।

"द्यतिस्यतिमास्थामित्ति किति" ॥ दोऽवखण्डने, षोऽन्तकर्मणि, मा माने, माङ् माने, मेङ् प्रणिदाने, चयाणामपि ग्रहणं, गामादाग्रहणेष्वविशेषात् । 'अवदा[२]येति' । ल्यप् । 'अवदातेति' । तृच्, द्यतिस्यतीति श्तिपा निर्द्देशो धातुविशेषणार्थः ॥

"शाच्छोरन्यतरस्याम्" ॥ शो तनूकरणे, छो छेदने । 'श्यतेरिति' । व्रतइति विषयो निर्दिश्यते, नोत्तरं पदं, तेन संशितो ब्राह्मण इत्यत्रापि नित्यमित्वं भवति । 'संशित इति' । व्रतविषये यत्नवानुच्यते । 'संशितव्रत इति' । बहुव्रीहिः । सम्यक्संपादितव्रत इत्यर्थः । व्रतादन्यत्रापीत्वं भवति, व्रते तु नित्यमिति, संशितशब्दस्य सामान्यशब्दत्वादविरुद्धो व्रतशब्दस्य प्रयोगः । 'व्यवस्थितविभाषाविज्ञानात्सिद्धमिति' । क्वचिन्नित्यं प्रवृत्तिः, क्वचिद्विकल्पेन, क्वचिन्नैव प्रवृत्तिरित्येवं विविधमवस्थिता विभाषा व्यवस्थितविभाषा, व्यवस्थितविभाषाणां दिङ्मात्रं श्लोकेन दर्शयति । 'देवत्रात इति' । क्तिच्क्तौ च संज्ञायामिति क्तः, नुदविदोन्दत्रेति नत्वं संज्ञायां न भवति, देवग्रहणस्योपलक्षणत्वाद्ब्रह्मत्रात इत्यादावपि संज्ञायां नत्वाभावः, क्रियाशब्दे तु त्रातं त्राणमित्युभयं भवति । 'गल इति' । अचि विभाषेति लत्वम्, प्राण्यङ्गे नित्यं भवति, गिरत्यन्नमिति गलः, विषे तु नैव भवति, गीर्यते शरीरार्थैरिति गरः, क्रियाशब्दे तूभयं भवति गरो गल इति । 'ग्राह इति' । विभाषा ग्रह इति आदित्यादिषु पचाद्यजेव भवति । ग्रहणइति क्रियाशब्दे तु पूर्ववत् । 'इतियोगइति' । हन्तीति पलायते, वर्षतीति धावतीत्यादाविति-प्रयोगे लक्षणहेत्वोः क्रियाया इति शतृशानचौ न भवतः । 'मिथ इति' । एकस्मिन्विषये न विकल्प्यन्ते किं तु विषयभेदेन, एतच्चाकृतिपक्षउपपद्यते, तत्र हि सर्वं लक्ष्यजातं युगपदभिसमीक्ष्य द्वयमुपदिश्यते भावोऽभावश्च, तत्र तयोर्विषयभेदेन प्रवृत्तावपि समुदाये द्वयं प्रवृत्तं भवति, असङ्कीर्णत्वं तु प्रयोगवशात्प्रत्येतव्यम् । 'गवाक्ष इति' । वातायने अवङ्

२ २-३ पुस्तकयोस्त्ववसायेति पाठः ।

स्फोटायनस्येति नित्यमवङ् भवति, प्राप्यङ्के गोत्वमित्यत्र न भवति, अन्यत्र विकल्पो गवाग्रं गोग्रमिति ॥

"दधातेर्हिः" ॥ यद्यपि हिनोतेर्हित इत्यादि सिद्धं दधातेस्तु धीत इत्यादिनिवृत्तये सूत्रारम्भः, श्तिपा निर्देशो घेटो माभूदिति। ध इत्युच्यमाने घेटोऽप्यनुकरणं संभाव्येत, यथा दाधाघ्वदाबित्यत्र, यङ्लुकि त्विटि सति दाधित इति भवति ॥

"जहातेश्च क्त्वि" ॥ इदमपि वचनं जहातेर्हात्वेति माभूदिति, श्तिपा निर्देशस्य तु प्रयोजनं वृत्तावेव दर्शितं, यङ्लुकि जाहित्वेति भवति ॥

"विभाषा छन्दसि" ॥ पूर्वसूत्रारम्भादयमारम्भः, अन्यथा हिनोतिजहात्यो रूपद्वयं सिद्धम्। 'हात्वेति'। छान्दसत्वादीत्वाभावः ॥

"सुधितवसुधितनेमधितधिष्वधिषीय च" ॥ 'इडागमो वेति'। यदा इडागमस्तदा आतो लोप इटि चेत्याकारलोपः। 'वसुधितमिति'। कर्मधारयः, क्तिन्यपि दृश्यते, उत त्वेतं वसुधितिं निरेके। 'नेमधितमिति'। अयमपि कर्मधारयः। 'धत्स्वेति'। श्नाभ्यस्तयोरात इत्याकारलोपः, दधस्तथोश्चेति भष्भावः ॥

"दो दद्घोः" ॥ 'धीत इति'। घुमास्थादिसूत्रेणेत्वम्, । 'घेट एतद्रूपमिति'। दधातेस्तु दधातेर्हिरिति हिरादेशो भवति। 'दातमिति'। दाप् लवने, लूनमित्यर्थः। 'अवदातमिति'। दैप् शोधने। 'अयमादेशस्थान्तश्रूयत इति'। कुत इत्याह। 'एवं ह्युक्तमिति'। यद्यपि दकारः श्रूयते तथापि संहितायां तकारादीनामपि जश्त्वे कृते एतस्य रूपस्य संभवाच्चतुर्णां पक्षाणां संभवः, यद्ययमादेशस्तकारान्तः स्यात्सुदत्तमित्यत्र दस्तीति दीर्घत्वं स्यात्, दा इत्येतस्य यस्तस्तस्मिन्निति हि तत्रार्थः, अथ दकारान्तः, रदाभ्यामिति नत्वं प्रसज्येत, अथ धकारान्तः, झषस्तथोर्धोऽध इति धत्वमापद्येत। 'थान्तेदोष इति'। नञोऽत्र प्रश्लेषः, तस्मात्थान्त इति निगमनात्। 'यदि त्विति'। दस्तीत्यत्र द्वौ पक्षौ, दा इत्येतस्य यस्तकारान्त आदेशस्तकारादिर्वेति, तत्र द्वितीयपक्षे नायं दोषः। 'दान्तधान्तयोरपीति'। तकारादिप्रत्ययसंनिपातेन भवन्द्वावो

न तद्विघातस्य निमित्तं भवति । 'अवदत्तमित्यादि' । आदिकर्मणीत्येतत्प्रदत्तमित्येतस्य विशेषणं, नेतरेषामसंभवात् । 'इति चेदतदिति' । चकाराद्यथाप्राप्तं च, तेन अवत्तं वित्तं प्रत्तमित्याद्यपि भवति । 'अनुपसर्गा वा एतदिति' । कथमनुपसर्गत्वमित्यत आह । 'क्रियान्तरविषया इति' । अवगतं दत्तमिति गमिना ऽवादीनां योगः, ततश्च यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञा भवन्तीति वदाति प्रत्यनुपसर्गत्वम् ॥

"अच उपसर्गात्तः" ॥ 'त इत्ययमिति' । तकारेऽकार उच्चारणार्थः । 'प्रत्तमिति' । तत्राकारस्य तकारे दकारस्य चर्त्वम् । 'नीत्तमिति' । दस्तीति दीर्घत्वम् । 'आदेरलः प्राप्नोतीति' । आदेः परस्येति वचनात् । 'अच इत्येतदावर्त्ततइति' । यद्वास्येति वर्त्तते, क्व प्रकृतम्, अस्य घ्वाविति, दो दद्घोरित्ययमपि दद्भावो ऽवर्णस्य प्राप्नोति, ततश्च दत्तमिति संयोगादि श्रूयेत, एवं तर्ह्येवं वक्ष्यामि दो ऽद्घोरिति, दो य आकारस्तस्याद्भवतीति । 'द्वितकारको वेति' । अलोन्त्यस्येत्येतस्य द्वावपवादौ, आदेः परस्य अनेकाल्शित्सर्वस्येति, तयोर्विप्रतिषेधे परः प्रवर्त्तते, अपो भीत्यत्रापि तर्हि सर्वादेशप्रसंगोत आह । 'अपो भीत्यत्रेति' । अत्र द्वयोस्तकारयोरन्त्यस्य संयोगान्तलोपः, पूर्वस्य जश्त्वम्, अत्र के चिदाहुः । अवश्यमत्राच इत्यनुवर्त्यमन्यथा लून्न् च्छेदाप्, लवाभ्यामित्यत्रापि स्यादिति, तन्न । लुप्ते पकारे नाप्शब्द इति नात्र भविष्यति ॥

भूतपूर्वगतिर्युक्ता न सांप्रतिकसंभवः ।
न प्रत्ययाप्रत्यययोरित्यस्याप्यत्र[1] संभवः ॥
द्वयोरतुल्यकक्षत्वात्प्रत्ययेपो नहि श्रुतः ।

"अपो भि" ॥ 'स्ववद्भिरिति' । अवतेरसुन्, शोभनमवो येषां ते स्ववसः, तु इति सौत्रो धातुः, स्वन्तवो येषां ते स्वतवसः । 'माद्भिरिति' । पद्दन्नोमासिति मासशब्दस्य मासादेशः । 'उषद्भिरिति' । मिथुने ऽसिर्वसेः किच्चेत्यसिप्रत्ययः ॥

१ तस्याप्यस्ति संभव-इति-पाठः ३-३ पुस्तकयोः ।

"सः स्यार्द्धधातुके" ॥ 'वत्स्यतीत्यादि'। वस निवासे, लृट्। 'जिघत्सतीति'। लुङ्सनोर्घस्लृ। 'आस्से वस्सइति'। आस् उपवेशने, वस आच्छादने अदादौ अनुदात्तेतौ, अतङीत्युच्यमाने व्यति[1]वत्सीष्टेत्यत्रापि न स्यात् ॥

"तासस्त्योर्लोपः" ॥ 'व्यतिसइति'। कर्त्तरि कर्मव्यतिहार इत्यात्मनेपदं, शपो लुक्, श्नसोरल्लोप इत्यकारलोपः। 'प्रत्ययमात्रमेतत्पदमिति'। तेन सात्पदाद्योरिति षत्वप्रतिषेध इति भावः ॥

"रि च" ॥ अस्तेरुदाहरणं न प्रदर्शितं, रेफादेरसंभवात् ॥

"ह एति" ॥ एशि हकारो न भवति एधामासे इति, किं कारणं, तासेर्ये एकारः संभवति तत्रैवास्तेरपि, कश्च तासेः संभवति, उत्तमैकवचनम्। अपर आह। उत्तमैकवचनं सार्वधातुकं चेति, तेन सुप्तोऽहं त्वां प्रेक्षामासे, उत्तमेप्यार्द्धधातुके न भवतीति ॥

"यीवर्णयोर्दीधीवेव्योः" ॥ यकारे इकार उच्चारणार्थः, । 'लोपो भवतीति'। हकारस्त्वनन्तरोप्यस्वरितत्वान्नानुवर्त्तते। 'आदीध्येति'। ल्यप्। 'आदीध्यक इति'। यक्। 'आदीधितेति'। तृच्, इट्। 'आदीध्यनमिति'। ल्युट्, दीधीवेवीटामिति गुणप्रतिषेधः, इहादीधयतेर्ण्वुल् आदीध्यक इति। श्रूयमाणएव णौ ण्वुलुत्पत्तेः प्रागेव प्राप्तोपि लोपो न भवति, वर्णग्रहणात्, किं वर्णग्रहणमतिरिच्यतइत्यतो न भवति, नेत्याह। अक्षरार्थ एवायं, कथं, वर्ण वर्णने चुरादिः, वर्ण्यते उपलभ्यत इति वर्णः, वर्णश्चासाविश्चेति विशेषणसमासे विशेषणस्य निपातनात्परनिपातः ॥

"सनि मीमाघुरभलभशकपतपदामच इस्" ॥ सीत्येतदिहानुवृत्तं सनो विशेषणम्। 'मीनातिमिनोत्योरिति'। मीञ् हिंसायां, डुमिञ् प्रक्षेपणे। 'उभयोरपि ग्रहणमिति'। मिनोतेरप्यज्झनगमां सनीति दीर्घे कृते मी इति रूपसंभवात्। नन्वसौ लाक्षणिकः, सत्यम्, इष्टिरेवैषं यदाह।

१ व्यतीति नास्ति २-पुस्तके।

'ईप्सतइति'। मा माने, माङ् माने, मेङ् प्रणिदाने, त्रयाणामपि ग्रहणं, मीनाति मिनोत्योः सनः कित्त्वे सति अनेजन्तत्वान्माङ्पायंभवात्पृथग्ग्रहणम्, घु इति घुसंज्ञका दाधा गृह्यन्ते, रभ राभस्ये, डुलभष् प्राप्तौ, शक्ल शक्तौ, पत्लृ गतौ, पद गतौ। 'मित्सतीति'। सः स्यार्द्धधातुक इति सकारस्य तकारः, अत्र लोपोऽभ्यासस्य, आत्मनेपदेषु पूर्ववत्सनः, आदिप्सतइत्यादौ स्कोःसंयोगाद्योरिति सलोपः॥

"आप्ज्ञप्यृधामीत्"॥ आप्लृ व्याप्तौ, ज्ञा अवबोधने, णिचि पुक्, मारणतोषणनिशामनेषु ज्ञा मित्त्वेति मित्संज्ञायां मितां ह्रस्वः, ऋधु वृद्धौ। 'ईर्त्सतीति'। रपर ईकारः, धकारस्य चर्त्वम्। 'ज्ञपेरित्यादि'। इहाच इत्यनुवर्त्तते, तेन च ज्ञपौ विशिष्यमाणे अजन्तस्य ज्ञपेरित्वं विधीयमानमलोन्त्यस्येत्यन्त्यस्य स्यात्। अजन्तस्येति च विशेषणं व्यर्थं, व्यभिचाराभावात्, तेन ज्ञपिनाज्विशेष्यते, ज्ञपेरचो यत्र तत्रस्थस्येति, यथाऽऽवृधिभ्याम्, एवं चैकप्रकारो विशेषणविशेष्यभावो भवति, तत्रानन्त्येचि सावकाशमीत्वमन्त्येचि पूर्वविप्रतिषेधेन णिलोपो बाधते, तदिदमुक्तम्। 'णेर्लोप इति'। 'इतरस्य त्विति'। अपर आह। अस्तु णेरपीत्वं, तस्य स्थानिवद्भावाण्णिलोपो भविष्यति, ईत्ववचनं त्वनन्त्ये श्रवणार्थमिति। 'अर्दिधिषतीति'। सनि इटि लघूपधगुणे रपरे कृते न न्द्रा इति प्रतिषेधाद्रेफवर्जितद्वितीयस्यैकाचो द्विर्वचनम्॥

"दम्भ इच्च"॥ 'धिप्सति धीप्सतीति'। हलन्ताच्चेति सनः कित्त्वादुपधालोपः, भकारस्य चर्त्वम्, इत्वं शक्यमविधातुम्, एवं वक्ष्यामि, सनिमीमादीनामच इस्, दम्भ ईच्च, चकारादिस्भावश्च, तत आप्ज्ञप्यृधामिदित्येव॥

"मुचोऽकर्मकस्य गुणो वा"॥ 'मुमुक्षतइति'। भूषाकर्म्मकिरादिसनां चान्यत्रात्मनेपदादिति कर्मकर्त्तरि यगभावः, अतिदेशेन स्वाश्रयस्यानिवृत्तेः कर्तरि शब् भवति, यथा नमते दण्डः स्वयमेवेति। 'कर्मविशेषस्याविवक्षितत्वाद्वेति'। उक्तं हि ऽप्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति॥

"अत्र लोपो ऽभ्यासस्य" ॥ अत्रशब्दस्यार्थं दर्शयति । 'यदेतदिति' । अथात्रग्रहणं किमर्थमत्र सनिमीमेत्यादौ प्रकरणे यथा स्याद् ददौ ददातीत्यत्र माभूदिति, नैतदस्ति प्रयोजनमेवं वक्ष्यामि, सनि मीमाघुरभलभशकपतपदामच इस्, अभ्यासलोपश्चेति, उत्तरत्राप्यभ्यासलोपश्चेत्येव तत्राह । 'सनि मीमाघ्वित्यादि' । विषयावधारणं, विषयनियमः, कः पुनरसावित्यत आह । 'अत्रैवेत्यादि'। अवधारणस्य व्यवच्छेद्यं दर्शयति । 'सन्वद्भावविषये न भवतीति' । 'अमीमपदिति' । मिञो णिचि मीनातिमिनोतीत्यात्त्वं, पुक्, लुङ्, चङि द्विर्वचनं, सन्वद्भावादित्वं, दीर्घो लघोः, कथं पुनः सनीत्युच्यमानस्याभ्यासलोपस्यात्र प्रसङ्ग इत्यत आह । 'सन्वल्लघुनीति' । यथैव हि सन्वद्भावेनेत्वं भवति तथाभ्यासलोपोपि स्यात्, अलोन्त्यस्य लोपेन भवितव्यमित्याशङ्कायामाह । 'सर्वस्येति' । कथं पुनः सर्वस्य लभ्यते ऽत आह । 'तदर्थमेवेति' । इतराभ्योपि दृश्यन्तइति षष्ठ्यन्तात्तल्, योयमभ्यासः प्रसिद्धो ऽस्य लोपो न तदन्तस्येत्यर्थः, विषयावधारणं त्वन्यथापि सिद्धं, सन्वल्लघुनीति न कार्यमतिदिश्यते, किं तर्हि रूपं, लोपश्चाभावभावरूपो न रूपमिति नातिदिश्यते, नानर्थकेलोन्त्यविधिरित्यपरे । 'सर्वस्य कुर्वन्तीति' । अनभ्यासविकारेष्विति तु प्रतिषेधो न भवति लोपस्याविकारत्वात्, तथा च पस्पशायां लोपागमवर्णविकारज्ञ इति पृथग्ग्रहणं, द्वौ चापरौ वर्णविकारनाशाविति च पृषोदरादिसूत्रे, अन्वयव्यतिरेकाभ्यामर्थवत्तावधार्यते, न चाभ्यासस्योपजनने कश्चिदर्थः प्रतीयतइत्यभ्यासस्यानर्थक्यम् ॥

"ह्रस्वः" ॥ 'हलादिशेषो न भवतीति' । न चागमविधानसामर्थ्याद्धलादिशेषाभावः, अन्यथा ऽऽदेशमेवाकारं विदध्यादिति वाच्यं, सत्यपि वा हलादिशेषे विगृहीतश्रवणार्थत्वादाकारस्य, चत्राचलमिति ॥

"हलादिः शेषः" ॥ शिष्यते ऽवस्थाप्यतइति शेषः, कर्मणि घञ्, हलादिरित्यसमासः, समासे तु

कर्मधारयपक्षे स्यादादिशब्दस्य पूर्वता ।
षष्ठीसमासे त्वानचेत्यादौ शेषः प्रसज्यते ॥

कर्मधारये हि विशेषणत्वादादिशब्दस्य पूर्वनिपातः प्राप्नोति, षष्ठीसमासे हलन्तरापेक्षं हल आदित्वं नाभ्यासापेक्षमिति अजादित्वविप्रसङ्गः, अशु व्याप्तौ लिट्, आनक्ष, अत्र ककारस्य शेषःप्राप्नोति, आटतुरित्यादावप्यादिवद्भावात्प्रसङ्गः, कर्मधारयासमासयोस्तु अभ्यासापेक्षमादित्वमिति नायं दोषः। 'अनादिर्लुप्यतइति'। हलित्यपेक्षते, एतेनासमासपक्षो दर्शितः, समासे ह्युपसमस्तस्यापेक्षाऽयोगादनादिर्हलिति पुनर्हलग्रहणं कर्तव्यम्। ननु शेषोवस्थानं तत्त्वादेः प्राप्तमेव तत्किमेतेनात आह। 'आदिशेषनिमित्तोयमिति'। सत्यं, सिद्धे सत्यारम्भो नियमार्थः, आदिरेव शिष्यते न त्वनादिरिति, ततश्चादिशेषनिमित्तोयमनादेर्लोपो विधीयतइति नास्यानर्थक्यमित्यर्थः, यद्यादिशेषो निमित्तमनादिलोपस्य पपाचेत्यादौ यत्रादेर्हलोवस्थानं तत्रैवान्यस्य निवृत्तिः स्यात्, आटतुरित्यादौ तु न स्यादित्यत आह। 'तत्रेति'। जातिपक्षे अभ्यासजातावेवादेरवस्थानमपेक्षितं न प्रतिव्यक्तीति दोषाभावः। 'अपरे त्विति'। पूर्वत्र पक्षे ऽवस्थानमेव शब्दार्थो नियमाश्रयणात्त्विरव्यावृत्तिः, अत्र तु पक्षे निवृत्तिरपि गुणभूतशेषशब्देनैवोच्यते। ततः किमित्यत आह। 'तदवस्थानमित्यादि'। उक्तितः, शब्दव्यापारतः। 'अविधेयत्वात्त्विति'। आर्थमप्राधान्यं दर्शयति, निवृत्तिस्तु विपरीतेत्याह। 'निवृत्तेरेव त्विति'। लोकेपि चङ्क्रम्यमाणोधीष्वात्र जपंश्चङ्क्रमणं कुरु इत्येवमर्थाभेदेपि शब्दोद्भेदः प्रतीयते, ततः किमित्यत आह। 'तत्रेति'। साविधेयत्वात्प्रधानभूता सती निवृत्तिः, किमित्यादेरनिवृत्तिमपेक्षते, किं भूताम्, अविधेयां सतीम्, अविधेयत्वादप्रधानभूतां सतीमित्यर्थः। न प्रधानं गुणानुवर्तिस्तस्मादपेक्षाकारणं नास्तीत्यर्थः। भाष्ये परिहारान्तरं, हलित्येको योगः, अत्र लोप इति वर्त्तते, स च कर्मसाधनः, यथा हल्ङ्याब्भ्यो दीर्घादित्यत्र, अभ्यासस्य हल् लुप्यते, तत आदिः शेषः, यद्वा ह्रस्वोहलादिः शेष इति संहितापाठ एव, तत्राहलिति पदच्छेदः, अभ्यासोऽहल् भवति, अविद्यमानहल्को भवति, तत आदिः शेष इति॥

"शर्पूर्वाः खयः"॥ पूर्वेण शरां शेषे प्राप्ते खयां शेषो विधीयते,

तत्रैकाभ्यासविषयेणानादिशेषेणादिशेषो बाध्यते, सत्यपि संभवे बाधनं भवतीति न्यायात्, किं चासंभवोऽप्यत्र शक्यते वक्तुं, कथं, शेषशब्दोऽयं निवृत्तिमद्वस्थानमाह, न चोभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानं संभवति । 'चुश्च्योतिषतीति' । श्च्युतिर् क्षरणे । 'पिस्पन्दिषतइति' । स्पदि किञ्चिच्चलने, अनुदात्तेत् । 'सखाविति' । ष्णा शौचे । 'खर्पूर्वा इति' । सूत्रे शर्ग्रहणमपनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । 'उचिच्छिषतीति' । उच्छी विवासे । 'अन्तरङ्गत्वादिति' । उपदेशानन्तरमेव प्राप्तत्वादन्तरङ्गत्वात्तुकि कृते द्विर्वचनमिति । तच्च पूर्वत्रासिद्धमिति चुत्वस्यासिद्धत्वात्सतुक्क एव भवति, तत्र कृते यद्यत्र हलादिशेषः स्यादभ्यासे तकारः श्रूयेत, एतच्च पूर्वत्रासिद्धीयमद्विर्वचनइत्येतदनाश्रित्योक्तं, तदाश्रयणे तु चुत्वे कृते तस्य सिद्धत्वात् च्छिस्शब्दस्य द्विर्वचने चकारशेषेणैव रूपं सिध्यति, न चेदमस्ति, निमित्ताभावे नैमित्तिकस्याप्यभाव इति येन चुत्वं निवर्त्तते ॥

"कुहोश्चुः" ॥ 'चखानेति' । खकारस्य छकारः, तस्याभ्यासे चर्त्वेति चकारः । 'जघासेति' । घकारस्य झकारः, तस्य जश्त्वञ्जकारः । 'जिहीर्षतीति' । इको झलिति सनः कित्वं, हकारस्यापि झकारः, तस्य जश्त्वम् ॥

"न कवतेर्यङि" ॥ 'कवतेरित्यादि' । कूङ् शब्दइति तुदादिः, कु शब्दइत्यदादिः, कुङ् खुङ् इति भ्वादिः शब्दार्थ एव, तत्रासति विकरणनिर्द्देशे कोरित्युच्यमाने त्रयाणामपि ग्रहणं स्यादथ तौदादिको दीर्घान्तः, एवमपि द्वयोर्ग्रहणं स्यात्, न च निरनुबन्धकत्वादादादिकस्यैव ग्रहणं, लुग्विकरणत्वात्, तस्माद्भौवादिकस्यैव यथा स्यादिति विकरणनिर्द्देशः ॥

"दाधर्त्तिदर्द्धर्तिदर्द्धर्षिबोभूतुतेतिक्तेलर्ष्यापनीफणत्संसनिष्यदत्करिक्रदत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च" ॥ 'धारयतेरिति' । धृङ् अवस्थाने ण्यन्तः । 'धृङो वेति' । स एव प्रकृत्यन्तरम् । 'श्लौ यङ्लुकि चेति' । श्लावित्येत-

द्धारयतेर्धृङो वेत्युभाभ्यां संबध्यते, यङ्लुकि चेत्येतत्तु धृङो वेत्यनेनैव, तदयमर्थः । दाधर्तीति धारयतेः श्लौ णिलुगभ्यासदीर्घत्वं च निपात्यते, धृङो वा श्लावभ्यासस्य दीर्घत्वमत्र परस्मैपदमपि निपात्यं, तस्यैव वा यङ्लुकि अभ्यासदीर्घत्वं निपात्यतइति, दर्धर्तीत्यत्र तु यङ्लुक्, पक्षे दाधर्तीति, निपातनेन प्राप्तस्य दीर्घत्वस्याभावो निपात्यते, रुग्रिकौ च लुकीत्येव रुक् सिद्धः, श्लुपक्षे तु रुगपि निपात्यः, दर्धर्षीत्यत्र यङ्लुक्, पक्षे न किंचिन्निपात्यम् । 'बोभूत्विति' । यङ्लुगन्ताल्लोट् । 'बोभवतीति' । लट्, यङो वेति पक्षे ईट् । 'प्रत्ययलक्षणेनेति' । यद्यप्यनुदात्तङित इति ङित्त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तं, तथापि लोलूयतइत्यादौ यङन्तादात्मनेपदं तत्प्रत्ययस्य ङित्त्वादिति प्रत्ययलक्षणं भवत्येव, एवं चाद्यादिषु चर्क्करीतं परस्मैपदमिति परस्मैपदग्रहणमनुवादः । 'कर्त्तर्येव चेदमात्मनेपदं नियम्यतइति' । भावकर्मणोर्यङ्लुन्तादात्मनेपदं भवत्येव । 'करिक्रदिति' । अत्र चुत्वाभाव एव निपात्यः, रिगागमस्तु रुग्रिकौ चेत्येव सिद्धः । 'तथा चास्येति' । अस्य मन्त्रपदस्य ब्राह्मणे विवरणम् । 'भरिभ्रदिति' । अत्रापि जश्त्वाभाव एव निपात्यः । 'असिरूपमिति' । नाभ्यस्ताच्छतुरिति नुमः प्रतिषेधः ॥

"उरत्" ॥ ववृतइत्यादौ हलादिशेषे कृते ऋकारान्ततायामुपजातायामद्भावः, रपरत्वे पुनर्हलादिः शेषः, नर्नर्तीत्यादौ रुगादिषु कृतेषु ऋकारान्तत्वाभावादत्वं न स्यादित्याशङ्क्याह । 'नर्नर्त्तीत्यादाविति' । यथा चाभ्यासविकारेषु बाधका न बाधन्ते तथा दीर्घाकित इत्यत्रैव वक्ष्यते ॥

"द्युतिस्वाप्योः संप्रसारणम्" ॥ 'विदिद्युतइति' । द्युत दीप्तौ अनुदात्तेत् । 'व्यदिद्युतदिति' । णयन्ताल्लुङ्, चङि द्विर्वचनम् । 'विदिद्योतिषते विदिद्युतिषतइति' । रलो व्युपधादिति सनःकित्त्वविकल्पः । 'स्वापिर्णयन्तो गृह्यतइति' । स्वपेर्यो णिज्विहितस्तदन्तस्य ग्रहणं, तेन स्वापं करोतीति णिचि कृते यः स्वापिस्तस्य ग्रहणं न भवति, एतच्च स्वापिरित्युक्ते सहसा प्रथमं तस्यैव प्रतीतेर्लभ्यते, अण्यन्तस्यैव येऽभ्यास-

स्तस्यानेनैव संप्रसारणं सिद्धं, तथाहि। लिटि सार्वत्रिकेति वचिस्वपियजादीनां किर्तीति कृतसंप्रसारणमेव द्विरुच्यते, अकित्यपि लिट्यभ्यासस्योभयेषामित्यस्ति संप्रसारणं, सन्यपि रुदविदमुषग्रहिस्वपीति किदेव, यङ्यपि स्वपिस्यमिव्येञां यङीति कृतसंप्रसारणमेव द्विरुच्यते, यथापि यङ्लुक्यभ्यासस्य संप्रसारणं न केन चित्प्राप्तं तथापि स्वापेरिति निर्देशादेव ण्यन्तस्य ग्रहणम्। 'तस्येत्यादि'। अभ्यासेनात्र स्वनिमित्तं प्रत्ययः संनिधापितस्तेन स्वापिरङ्गं विशेष्यते, अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिस्तस्येति, सिस्वापकीयिषतीत्यत्र चाभ्यासनिमित्तं यः प्रत्ययः सन् न तस्मिन्स्वापिरङ्गं, यस्मिंश्च स्वापिरङ्गं ण्वुलि न तदभ्यासस्य निमित्तं, ष्युतेस्तु ष्यदिष्युतदिति, अत्राभ्यासस्य निमित्तं यश्चङ् स यद्यपि णिचा व्यवहितस्तथापि संप्रसारणमिष्यते।

> द्वन्द्वनिर्दिष्टयोरेतद्वैषम्यं लभ्यते कथम्।
> तस्माद्वक्तव्यमेवैतदिति मन्यामहे वयम्॥

ष्योतकीयतेः सनि अभ्यासस्य प्रसारणं भवति न वेति चिन्त्यम्।

"व्यथो लिटि"॥ 'विव्यथइति'। व्यथ भय[1]चलनयोः, अनुदात्तेत्, अत्र यकारे हलादिशेषेण निवृत्ते वकारस्य प्रसारणप्रसङ्ग इत्याशङ्क्याह। 'यकारस्येति'। इह लिट्यभ्यासस्योभयेषामित्यस्यानन्तरं व्यथ इति वक्तव्यं, ततो ष्युतिस्वाप्योरिति, तथा तु न कृतमित्येव॥

"दीर्घ इणः किति"॥ 'यणादेशे कृतइति'। परत्वात्। 'स्थानिवद्भावादिति'। द्विर्वचनेचीति रूपस्थानिवद्भावः। 'इयाय इययिथेति'। णलि थलि च गुणवृद्ध्योः[2] कृतयोः स्थानिवद्भावाद् द्विर्वचनम्, अभ्यासस्यासवर्णइतीयङ्॥

"अत आदेः"॥ आदेरिति वचनादत्र तदन्तविधिर्न भवति, लिटीत्यनुवर्त्तते किद्ग्रहणं तु निवृत्तं, अतो गुणे पररूपत्वे प्राप्ते दीर्घत्व-

---

१ संचलनयोरिति पा· २ पुस्तके।
२ वृद्धिगुणयोरिति पा· २-३पुस्तकयोः।

मिदमारभ्यते, तपरकरणं किं, दीर्घस्य माभूत्, आच्छि आयामे, आञ्छ, आञ्छतुः, आञ्छुः, किं च स्यात्, यद्यत्र दीर्घः स्यात् तस्मान्नुड् द्विहल इति नुट् प्रसज्येत, यद्यप्यत्रापि ह्रस्वत्वे कृते अद्भवति तथापि तपरकरणसामर्थ्याददेव योऽदिति विज्ञानात्स्वाभाविकस्य मात्रिकस्य परिग्रहः ।

"तस्मान्नुड् द्विहलः" ॥ 'आनङ्गेति'। अगि रगि लघि गत्यर्थाः। 'आनञ्जेति'। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, द्विहल्ग्रहणमनेकहलुपलक्षणं, तेनानर्छेत्यत्र गुणे रपरे कृते त्रिहलोपि भवति, एचोऽजित्यत्र वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवतीत्युक्त्वा नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यमित्युक्तं, तत्रावसरे प्राप्ते नुड्विधौ प्रतिविधत्ते। 'ऋकारैकदेश इत्यादि'। अत्र द्विहल्ग्रहणं न कर्तव्यं, तस्मान्नुडित्येवास्तु, एवमुच्यमाने आटतुराटुरित्यत्रापि प्राप्नोति, अश्नोतेश्चेत्येतन्नियमार्थं भविष्यति, अद्विहलो यदि भवति अश्नोतेरेवेति, अश्नातिनिवृत्त्यर्थं नाश्न इत्येवं वाच्यं स्यात्, तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतदेव प्रयोजनं द्विहल्छायानुकारिणोपि यथा स्यादिति ॥

"भवतेरः" ॥ उरदित्यस्यानन्तरमिदं नोक्तं, लिटीत्युपजीवनाय, यदि पुनस्तदत्रैवोच्येत, नैवं शक्यं लिट्येव हि स्यात्, श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः ॥

"ससूवेति निगमे" ॥ दाधार्त्यादिष्वेवैतत्पठितव्यम् ॥

"निजां त्रयाणां गुणः श्लौ" ॥ णिजिर् विजिर्विष्लृ व्याप्तौ, जुहोत्यादिष्वमी त्रयः। 'त्रयाणां ग्रहणमुत्तरार्थमिति'। भृञामिदितीत्वं त्रयाणामेव यथा स्यात्, अथेहार्थमपि कस्मान्न भवति तत्राह । 'एषां हीति'। यदि तर्ह्युत्तरार्थं त्रिग्रहणं कर्तव्यं तदेवास्तु, इत्करणं तु निजामन्ते शक्यमकर्तुं, सत्यं, तदपि कृतमित्येव, गुणग्रहणमिक्परिभाषोपस्थानार्थं, तेन हलादिशेषे कृते गुणो भवति, अन्यथा तदपवादो हल एव एकारः स्यात् । अथाभ्यासविकारेष्वपवादो नोत्सर्गान्बाधत इत्याश्रीयेत तदा विस्पष्टार्थं गुणग्रहणम् ॥

"भृञामित्" ॥ 'अमी अपि जुहोत्यादौ, भृञ् माङ्ओहाङ् भृञादयः ।'मिमीतइति' । ई हल्यघोः ॥

"अर्तिपिपर्त्योश्च" ॥ 'इयर्तीति' । ऋ सृ गतौ, पृ पालनपूरणयोः, अभ्यासस्यासवर्णइतीयङ्, अच्छन्दोर्थमिदं, छन्दस्युत्तरसूत्रेणैव सिद्धत्वात् ॥

"सन्यतः" ॥ 'यियक्षतीति' । यजेर्व्रश्चादिना षत्वं, षढोः कः सि, तपरकरणं किं, पापच्यतेः सन्, पापचिषतइत्यत्र माभूत्, किं पुनः कारणमत्र ह्रस्वो न भवति, दीर्घविधानसामर्थ्यात् । यदि तु सनि योऽभ्यास इत्येवं विज्ञायेत ततो लाघवे विशेषाभावात्तपरकरणम् ॥

"ओः पुयण्ज्यपरे" ॥ पुयण्जकाराणां समाहारद्वन्द्वे सप्तम्येकवचनम् । पुयण्जि द्वन्द्वाच्चुदषहान्तात्समाहारइति समासान्तस्त्वनित्यत्वान्न भवति, अः परो यस्मात्पुयण्जस्तदपरमवर्णपरमित्यर्थः । 'पिपविषतइति' । पूङ् पवने, स्मिपूङ्रञ्ज्वशां सनीतीडुणावादेशौ, तयोर्द्विर्वचनेऽचीति स्थानिवद्भावात्पू इति द्विरुच्यते । 'पिपावयिषतीति' । तत एव णयन्तात्सन् । 'बिभावयिषतीति' । भवतेर्ण्यन्तात्सन् । 'यियविषतीति' । यु मिश्रणे, सनीवन्तर्द्धेतीट् । 'यियावयिषतीति' । तस्मादेव णयन्तात्सन् । 'रिरावयिषति लिलावयिषतीति' । रौतिलुनातिभ्यां णयन्ताभ्यामेव सन् । 'जिजावयिषतीति' । जु इति सौत्रो धातुः जुचङ्क्रम्येत्यादौ निर्दिष्टः, कथं पुनः णयन्तेषु सन्युवर्णान्ताभ्यासस्य, यावता णौ वृद्ध्यावादेशयोः कृतयोराकारान्तस्य द्विर्वचनेन भवितव्यं, नहि णौ कृतस्य केन चित्स्थानिवद्भावो विहितः, णेरद्विर्वचननिमित्तत्वादित्यत आह । 'एतदेवेति' । नहि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जोवर्णपराः संभवन्ति । पिपचिषति यियविषते इति संभवतीति चेत् किमेतावता वर्णग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवति, तस्मादेतदेव वचनमुक्तस्यार्थस्य सूचकमिति । यच्चात्र वक्तव्यन्तद् द्विर्वचनेचीत्यत्रोक्तं तत एवावधार्यम् । 'पापविषत[1]इति' । सनि योऽभ्यास इत्येतदनाश्रित्येदं प्रत्युदाहरणं, तदा-

१ पापचिषतीति मु· मू· पा· ।

अये तु प्रत्युदाहरणान्तरं मृग्यं यदि संभवति । 'अवतुतावयिषतीति' । तु इति सौत्रो धातुः तुहस्तुशम्यम इत्यत्र निर्दिष्टः । 'जु[1]हावयिषतीति'। जुहोतेर्ण्यन्तात्सन् ॥

"स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" ॥ श्रु श्रवणे, अन्ये गत्यर्थाः, उदाहरणेषु ण्यन्तेभ्यः सन् । कथं पुनर्यणि परत उच्यमानमित्त्वं सकारादिना वर्णेन व्यवधाने भवति तत्राह । 'वचनसामर्थ्यादिति' । पूर्वसूत्रइत्यादिना अप्राप्तविभाषेयमिति दर्शयति ॥

"गुणो यङ्लुकोः" ॥ लुक्शब्देनात्र यङ्लुगेव गृह्यते संनिधानात्, किञ्चाभ्यासस्यायं गुणो विधीयते न च लुगन्तरे ऽभ्यासः संभवति । 'चोक्रुशीतीति' । क्रुशेर्यङ्लुगन्तात्तिप्, यङो वेतीट्, नाभ्यस्तस्याचि पितीति लघूपधगुणप्रतिषेधः ॥

"दीर्घोऽकितः" ॥ 'अपवादत्वादिति' । नाप्राप्ते दीर्घे नुक आरम्भादपवादत्वम् । 'अनजन्तत्वादेवेति' । दीर्घश्रुत्याचश्चेत्युपस्थानादभ्यासविशेषणादजन्तस्याभ्यासस्य दीर्घो विधीयतइति भावः । 'अभ्यासविकारेष्वित्यादि' । अपवादग्रहणं बाधकमात्रोपलक्षणमुत्सर्गग्रहणमपि बाध्यमात्रोपलक्षणं, तत्र ह्रस्वत्वस्यावकाशः ययावित्यत्र, दीर्घत्वस्यावकाशः पापच्यतइत्यादि, डोढौक्यतइत्यादावुभयप्रसङ्गे परत्वाद्दीर्घत्वस्य प्रसङ्गो नापवादत्वात्तथा सन्वद्भावस्यावकाशो ऽचिक्षणदिति, दीर्घत्वस्यावकाशोऽदीदिपदिति, अचीकरदित्यादावुभयप्रसङ्गे परत्वाद्दीर्घत्वप्रसङ्गः, मीमांसतइत्यत्राप्यनैमित्तिकत्वेनान्तरङ्गत्वाद्दीर्घत्वप्रसङ्गः, इत्वं तु सनि परतोऽङ्गाधिकारे ऽभ्यासस्याकारान्तस्य विधानाद्बहिरङ्गम्, अजीगणदित्यत्र त्वेकस्मिन्[2]नेनाप्राप्तिन्यायेन हलादिशेषस्येत्वमपवादत्वाद्बाधकं प्राप्नोति इह तु अपचक्नतुरपचक्नुः, चक्नदतुः चक्नदुः, चिक्नादयिषति, चिक्नदयिषति, चेक्निक्यते इति, परत्वात् ह्रस्वत्वात्त्वेत्वगुणेषु कृतेषु

१ अवनुनावयिषतीति मु· मू· पाठस्तु पदमञ्जर्यसंमतः ।
२ एकस्मिन्विषयइति ई· पु· पाठः ।

पश्चात्तुक् क्रियते,तेनैतच्च नोदनीयं तुकि कृते एते विधयो न प्राप्नुवन्तीति, ओहाक् त्यागे इत्यस्य धातोर्निषेधो न भवति धातुग्रहणं किञ्च त्वभ्यासः, ककारस्तु इश्च ग्रीहिकालयोरित्यत्र हाङ्हाकोः सामान्येन ग्रहणार्थः ॥

"नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्" ॥ वञ्चुकसिपतिपदयो गत्यर्थाः । स्कन्दिः शोषणार्थः, इतरे अवस्रंसनार्थाः, वनीवच्यत इत्यादावनिदितामित्युपधालोपः, वनीवञ्चीतीत्यादौ न भवति यङो लुमता लुप्तत्वादीकारोच्चारणसामर्थ्यान्नीकि कृते गुणह्रस्वौ न भवतः ॥

"नुगतोऽनुनासिकान्तस्य" ॥ 'नुगित्येतदित्यादि'। केन संबन्धेनोपलक्षणमत आह । 'स्थानिना हीति'। उपलक्षणत्वे किं सिद्धमत आह । 'तेनेति'। 'अझल्परत्वेपीति'। तन्तन्यतइत्यादौ झल्परत्वे तु नश्चापदान्तस्य झलीत्यनुस्वारः सिद्ध एव, अनुस्वारस्य ययि परसवर्ण इति नित्यं परसवर्णः प्राप्नोति, इष्यते च पक्षे अनुस्वारस्य श्रवणमत आह । 'दान्तवच्चेति'। तत्कथं लभ्यते, इहान्तग्रहणं न कर्तव्यं तदन्तविधिना सिद्धं, तत्क्रियते पदान्तस्यानुस्वारस्य यो धर्मः सोस्य यथा स्यादिति, एवं चानुनासिकान्तस्येति पृथक् पदे, अनुनासिकेति लुप्तषष्ठीकम् । 'तेतिम्यतइति'। तिम आर्द्रीभावे । 'तपरकरणं किमिति'। सर्वत्र ह्रस्वस्यैव भावावास्य किं चिह्नावर्त्यमिति प्रश्नः । 'भूतपूर्वस्यापीति'। अन्यथा तपरकरणमनर्थकं स्यादिति भावः । 'बाभम्यतइति'। भाम क्रोधे ॥

"जपजभदहदशभञ्जपशां च" ॥ जप जल्प व्यक्तायां वाचि, जभ जृभी गात्रविनामे, दह भस्मीकरणे, दंश दशने, भञ्जो आमर्दने, पश इति सौत्रो धातुः । जञ्जप्यतइत्यादिचतुर्षु लुपसदेत्यादिना यङ्, इतरत्र सामान्यलक्षणेन ॥

"चरफलोश्च" ॥ चरतिर्भक्षणार्थः, ञिफला विशरणे, फल निष्पत्तौ, द्वयोरपि ग्रहणमिष्यते । 'चञ्चूर्यतइति'। लुपसदेत्यादिना यङ्, उत्तरसूत्रेणाकारस्योत्वे हलि चेति दीर्घत्वं, योगविभाग उत्तरार्थः ॥

"उत्परस्यातः" ॥ 'अभ्यासस्य माभूदिति'। अन्यथा प्रकरणात्तस्यैव प्रसङ्गः । 'अन्त्यस्य माभूदिति'। आदेः परस्येत्यस्य त्वप्रसङ्गः, पञ्च-

मीनिर्द्देशाभावात् । 'तपरकरणं किमिति'। यद्यपि भाव्यमानोण्कारः सवर्णान्गृह्णाति, तथाप्यान्तर्यतो मात्रिकस्य मात्रिक एव सिद्ध इति प्रश्नः । 'लघूपधगुणनिवृत्त्यर्थमिति'। अनेन लक्षणेन दीर्घस्य प्राप्त्यभावाल्लक्षणान्तरप्राप्तोपि विकारस्तपरकरणसामर्थ्याद्बाध्यतइति भावः । यथैव तर्हि गुणो निवर्त्तते तथा हलि चेति दीर्घत्वमपि निवर्त्तताम् अत आह । '[1]दीर्घत्वे हीति' ॥

"ति च" ॥ 'वचनसामर्थ्यादिति'। यङ्लुकि पूर्वेणैव सिद्धत्वात् ॥

"रीगृदुपधस्य च" ॥ 'ऋत्वत इति'। यङि परतो य ऋकारवान् तस्यैव ग्रहणं न तूपदेशे ऋत्वतस्तेन परीपृच्छ्यतइत्यादौ संप्रसारणे कृतेपि भवति ॥

"इयिकौ च लुकि" ॥ 'मर्मृज्यतइति'। लुकि विधीयमानो ह्ययङि न प्राप्नोतीति वचनम् ।

"ऋतश्च" ॥ 'किरतिमिति'। ऋकारान्तोपलक्षणमेतत्। चर्करीतमिति यङ्लुकः पूर्वाचार्यसंज्ञा । 'पचतीति'। लट उपलक्षणन्तेन चाकर्तीत्यादीनि रूपाणि, किरतेर्यो नयेदित्यर्थः । यद्वा अत्र यङ्लुकि किरतिं पचतीति यो नयेत् पचतिना तुल्यरूपाणि यो नयेत्, पचतिवद्गुणादिकमकृत्वा नयेदित्यर्थः । 'प्राप्तिज्ञमिति'। गुणादीनां विषयविभागेन या प्राप्तिस्तां जानातीति प्राप्तिज्ञः । 'प्रारब्ध इति'। संग्रहणं संग्रहः, साधुशब्दसंग्रहस्तेन प्रारब्धइति योग्यतातिशयोद्भावनेनायं स्तूयते, तत्र प्राप्तिज्ञमित्यत्र प्राप्तिं व्याचष्टे। 'तत्रेयं प्राप्तिरिति'। 'तपरकरणसामर्थ्यादिति'। अभ्यासविशेषणे तु भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणमिति व्याख्येयं, नहि मुख्यनिवर्त्यसंभवे गौणकल्पना न्याय्येति अङ्गविशेषणमृत इत्याश्रितमित्यर्थः ॥

"सन्वल्लघुनि चङ्परे ऽनग्लोपे" ॥ लघुनि चङ्परइति व्यधिकरणे सप्तम्यौ न समानाधिकरणे, चङ्परस्य लघुनोऽसंभवात् । 'चङ्परे णौ परत इति'। कथं पुनर्णाविति लभ्यते, चङ्परस्यान्यस्यासंभवात्, ननु चाचकमतेत्यत्र मकारः संभवति, अदुद्रुवदसुस्रुवदित्यत्र वकारः, एवं

[1] दीर्घस्यासिद्धत्वादिति मु· मू· पा· ।

तर्हि चङ्परइत्यङ्गस्य विशेषणं, चङ्परे यदङ्गं तस्य योभ्यासस्तस्य सन्वत्कार्यं भवति । 'लघुनि धात्वन्तरइति'। चङ्परे णौ यदङ्गं तस्य संबन्धि यल्लघ्वित्यर्थः । 'सामर्थ्याण्ण्यन्तस्य ग्रहणमिति'। णेः समीपभूतस्याङ्गस्य ग्रहणमित्यर्थः । ण्यन्तस्यावयवभूतं यदङ्गं तस्य ग्रहणमिति वा । 'अनग्लोपइति'। नास्मिन्नग्लोपो विद्यतइति अनग्लोपः, एतच्च चङ्परइत्यनेन समानाधिकरणं, तेनायमर्थः, चङ्परे णावको लोपेऽसतीति, अततक्षदित्यत्र संयोगपरत्वाद्गुरुसंज्ञया लघुसंज्ञाया बाधः, अजजागरदित्यत्र आकारः परः । 'अत्र केचिदित्यादि'। ननु च गकारो जाशब्देन व्यवहितोत आह । 'सर्वत्रैवेति'। अचीकरदित्यादावपि ककारादिना व्यवधानाल्लघोरानन्तर्यं नास्ति, ततश्च वचनप्रामाण्याद्व्यवधानएव सन्वद्भावेन भवितव्यमिति तेषामभिप्राय इत्यर्थः । दूषयति । 'तदसदिति'। यदि तर्हि वर्णसंघातेन व्यवधानं नाश्रीयते व्यञ्जनसंघातेनापि व्यवधाने न सिध्यतीति मन्यमानः पृच्छति । 'कथमिति'। 'एवंजातीयकानामिति'। संयोगव्यवहितानामित्यर्थः । 'अचकमतेति'। कमेरुपसंख्यानमिति ञिश्चङादेशः । 'अचकथदिति'। कथ वाक्यप्रबन्धे चुरादावदन्तः, अतो लोपः, अत्राल्लोपस्य स्थानिवद्भावे सति व्यवधानान्न भविष्यति, अतः प्रत्युदाहरणान्तरोपन्यासः । 'अददृषदिति'। तदाचष्टइति णिच इष्ठवद्भावेन टिलोपः, अत्राग्लोपो नाच एव केवलस्येति नास्ति स्थानिवद्भावः, एतदर्थं चानग्लोपइत्येतत्क्रियमाणमचकथदित्यत्र सन्वद्भावं निवर्त्तयतीति तस्योपन्यासः, यदि चङ्परे णौ यदङ्गं तस्य यल्लघु तत्र परतोभ्यासस्य सन्वद्भावो विधीयते, वादितवन्तं प्रयोजितवानवीवददित्यत्रापि तर्हि न प्राप्नोति, किं कारणं, यश्चङ्परो णिर्न तत्र लघुः, पूर्वेण णिचा व्यवहितत्वात्, लोपे कृते नास्ति व्यवधानम्, अजादेशः पूर्वविधौ स्थानिवद् भवतीति स्थानिवद्भावाद्व्यवधानमेव, यद्यपि दीर्घविधिं प्रति स्थानिवद्भावो निषिद्धः, सन्वद्भावे तु प्राप्नोति, यस्मिंश्च णौ लघुर्नासौ चङ्परः, द्वितीयेन णिचा व्यवहितत्वात्, यद्यपि दीर्घविधिं प्रति स्थानिवद्भावः प्रतिषिध्यते, सन्वद्भावे तु प्राप्नोति, भवतु वा स्थानि-

वत्त्वनिषेधः, अग्लोपित्वान्न प्राप्नोति। वृद्धौ कृतायां णेर्लोपः, तत्राग्लोप्यङ्गं भवति। अग्लोपि वास्तु प्रागेव वृद्धेर्णिलोपे कृते, तत्रापि परिहारमाह। 'योऽसौ णौ णेर्लोप इत्यादि'। ततोऽन्योऽग्लोपइति अन्याकारो ऽन्य उक्तः, जात्याश्रयणे हि गोबलीवर्दन्यायेन णिजातेर्निमित्तत्वेन परिगृहीताया अन्यस्याको लोपः प्रतिषेधविषयः परिगृह्यते न तु तस्या णिजातेः, ततश्चास्य लोपस्याग्लोपत्वेनानाश्रयणात्तेनाग्लोप्यङ्गं न भवतीति भवत्येवात्र सन्वद्भावः। 'मीमादीनामत्र ग्रहणादिति'। तत्र ह्यत्र इत्यभ्यासलोपश्चेत्येव सिद्धेऽत्रग्रहणं विषयावधारणार्थम्, अत्र मुख्ये सन्येव भवति न सन्वद्भावविषयइति। 'किं चेत्यादि'। अनेनेदमाह न केवलं मुख्यसन्परिग्रहमात्रमत्र कारणं किं तर्हि इसभावाद्यपि विषयत्वेन निर्दिश्यते, इह च धातोः सन्वद्भावाद्विसभावादि न भवति, ततश्चाभ्यासलोपोऽपि न भवतीति। यद्वा सकारादौ सन्यभ्यासलोपो विहितो न सन्मात्रे, ततश्च सामान्यातिदेशे विशेषानतिदेशाल्लोपाभावः॥

"दीर्घो लघोः"॥ 'अबिभ्रजदिति'। भ्राजभासेत्यादिना पक्षे उपधाह्रस्वनिषेधः॥

"अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्"॥ 'तपरकरणसामर्थ्यादिति'। स्थानिनो ह्रस्वत्वाद्भाव्यमानत्वेन सवर्णग्रहणाच्च नानेन दीर्घस्य प्रसङ्गः, अतो लक्षणान्तरेण प्राप्तं दीर्घत्वं तपरकरणेन व्यावर्त्यते॥

"ई च गणः"॥ गण संख्याने चुरादावदन्तः, तस्यातो लोपेनानग्लोप इति प्रतिषेधाद्वचनं, कृतयोर्हलादिशेषदीर्घत्वयोरीत्वमत्वं च विधीयते। लोपः पिबतेरित्येतदत्रैव पठितव्यं, पिबतेरालोपश्चेति, चकारादी चाभ्यासस्य। सत्यं, विभाषेत्यस्यानुवृत्तिः शङ्क्येत॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमस्याध्यायस्य तुरीयश्चरणः॥ समाप्तश्चायमध्यायः॥

शुभं भवतु।

श्रीगणपतये नमः ॥

# अथ अष्टमोध्यायः ।

# काशिकाव्याख्या पदमञ्जरी ।

"सर्वस्य द्वे" ॥ नित्यवीप्सयोरित्येवमादीनां विधेयकार्यिणोर-निर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयं तदाह । [1]'सर्वस्येति द्वे इति चेति'। [2]सर्वस्येत्युक्ते यत्प्रतीयते द्वे इति चेत्युक्ते यत्प्रतीयते, एतदर्थस्वरूपमित्यर्थः । यद्यपि स्वं रूपमितिवचनादुभयोरपि स्वरूपग्रहणं युक्तं तथापि नाम्रेडितस्यान्त्यस्य तु वा, नित्यमाम्रेडिते डाचीति द्विरुक्ते ऽच्छब्दस्य सत्तामङ्गीकृत्य कार्यविधानात्तदभावः, नहि द्वयोरन्यतरस्य वा स्वरूपग्रहणे द्विरुक्ते ऽच्छब्दस्य संभवः, तथा तस्य परमाम्रेडितमिति पूर्वपराभावादनुपपन्नं स्यात्तस्मादर्थग्रहणं, सर्वशब्दश्चायं द्रव्यप्रकाराव-यवकार्त्स्न्यवृत्तिः, द्रव्यकार्त्स्न्ये यथा सर्वस्वं ददातीति, यच्च यावच्च स्वं तत्सर्वं ददातीति गम्यते, प्रकारकार्त्स्न्ये यथा सर्वाचीनो भिक्षुरिति, सर्वप्रकारमन्नं भक्षयतीति गम्यते । अवयवकार्त्स्न्ये यथा, सर्वः पटो दग्ध इति, सर्वावयवः पटो दग्ध इति गम्यते, इह तु पर्यादीनां विशिष्टार्थानां [3]शब्दानामुपादानाद् द्रव्यप्रकारकार्त्स्न्ययोरसंभवः, यत्रापि किं चिन्नोपादीयते नित्यवीप्सयोरिति तत्रापि विशेषानुपादानादेव सर्वस्य शब्दस्य सिद्धं, तस्मादवयवकार्त्स्न्यवृत्तिर्गृह्यते, परः सर्वस्य द्वे भवतः, न कश्चिदवयवो द्विर्वचनेन वर्ज्यतइत्यर्थः । अत्र आ दशभ्यः संख्याः संख्येये वर्ततइति द्वे इत्यस्य संख्येयापेक्षायां शब्दानुशासनप्रस्ता-वाच्छब्दरूपे संख्येये षष्ठी स्थानेयोगेति वचनात्सर्वस्येति स्थानषष्ठी,

१ सर्वस्येत्यधिक्रियते, इति चेति इं॰ पु॰ पा॰ ।

२ सर्वस्येत्यारभ्य यत्प्रतीयतइत्यन्तो ग्रन्थः २-पु॰ नास्ति ।

३ शब्दानामिति नास्ति इं॰ पु॰ ।

सर्वस्य पर्यादेः स्थाने द्वे शब्दरूपे भवत इत्यर्थः, यथास्तेर्भूरिति, तदा स्थाने द्विर्वचनमित्ययं पक्षो भवति, शब्दसंबन्धिनि तूच्चारणे संख्येये स्थान्यादेशभावो न संभवति, निवृत्तिधर्मा हि स्थानी शब्दश्चेविकृतः कस्योच्चारणं स्यादतोऽध्याहृतोच्चारणशब्दापेक्षया कर्तृकर्मणोः कृतीति सर्वस्येति कर्मणि षष्ठी, सर्वस्य पर्यादेर्द्वे उच्चारणे भवतः, सर्वः पर्यादिर्द्विरुच्चारणीय इत्यर्थः, तदा द्विः प्रयोगो द्विर्वचनमित्येष पक्षो भवति, तत्र प्रथमं पक्षं दर्शयति। 'सर्वस्य स्थाने द्वे भवत इति'। 'के द्वे इति'। विशेषानुपादानात्के के चन द्वे प्राप्नुत इति प्रश्नः, इतरोऽप्यन्तरतमपरिभाषामाश्रित्याह। 'शब्दतश्चेति'। विभीतकादिवाचिनामक्षादिशब्दानां शब्दत एवान्तर्यं तरुपादपादीनामर्थत एव द्वयोस्तु पर्वतशब्दयोरुभयथान्तर्यं तत्र ते एव यथा स्यातामित्युभयग्रहणं, ते एवोभयथान्तरतमे दर्शयति। 'एकस्येति'। ननु चास्मिन्पक्षे राजाराजा वाक्वाक् लिट्लिट् गोधुक्गोधुक् शब्दप्राट्शब्दप्राट् उपानदुपानत् गौर्गौरित्यत्र नलोपकुत्वढत्वघत्वषत्वधत्वदीर्घत्वानामसिद्धत्वादकृतेष्वेतेषु द्विर्वचने कृते पदस्य स्थाने समुदायस्यादिष्टत्वात्तस्यैव स्थानिवद्भावेन पदत्वं नावयवयोरिति पूर्वत्र भागे नलोपादीनि न स्युः, उत्तरत्र तु समुदायपदत्वेनापि सिध्यति, ननु च नलोपादीन्यन्तरङ्गाणि पदत्वमात्रापेक्षत्वाद्, द्विर्वचनं तु बहिरङ्गं वीप्साद्यर्थापेक्षत्वात्ततश्च तेषु कृतेषु द्विर्वचनं भविष्यति, एवमपि कृतानामपि तेषां द्विर्वचने कर्त्तव्ये ऽसिद्धत्वाच्चकारादियुक्तस्य द्विर्वचनमिति पुनः पूर्वपदे निमित्ताभावाच्च स्युरेव, यथा श्रोजढदित्यत्र कृतानामपि ढत्वादीनामसिद्धत्वात् हत इत्येतस्य द्विर्वचनेऽभ्यासे हकारस्यैव श्रवणं भवति। नैष दोषः। वक्ष्यत्येतत्पूर्वत्रासिद्धीयमद्विर्वचनइति, ततश्च परत्वादन्तरङ्गत्वाद्वा नलोपादिषु कृतेषु तद्युक्तस्यैव द्विर्वचनं भविष्यति, यानि तर्हि पदकार्याणि नाकृते द्विर्वचने प्राप्नुवन्ति तानि न स्युः, तद्यथा किंकिमिति, वा पदान्तस्येति परसवर्णविकल्पः, अपचचपचावित्ति डमुट्, अम्नाअम्नाविति वलोपः, कायाच्छायेति तुग्विकल्पः, वृक्षान्वृक्षानिति पदान्तस्येति णत्वप्रतिषेधः,

अजेजे इति, एङः पदान्तादतीति पूर्वरूपत्वं, किं चात्र स्वरितो वानुदात्ते पदादावित्येष विधिर्न स्यात्, उत्तरभागस्यापदत्वात्, तथाऽपदत्वात्तदाश्रयाणि कार्याणि प्राप्नुवन्ति, तद्यथा अङ्गनाङ्गनेत्यतो गुणे पररूपत्वं स्यात्, पयःपय इति सोपदादाविति सत्वप्रसङ्ग इत्येषा दिक्, अतो द्वयोरपि पृथक्पदत्वमेषितव्यन्तदुच्यते, यदि प्रत्यस्तमितावयवभेद एक एवादेशः स्याद् द्वे इति द्विर्वचनमनुपपन्नं स्यात्ततो द्वे इति वचनादेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते तत्र स्थानिवद्भावेन समुदायस्यापि पदत्वं स्वत एव वावयवयोरपीति समुदायस्यावयवयोश्च पदकार्याणि भविष्यन्ति, एवमपि विसंविसं मुसलंमुसलमित्यादेशप्रत्यययोरिति षत्वप्रसङ्गः । नैष दोषः । नैवं विज्ञायते आदेशस्य सकार इति कथं तर्ह्यादेशो यः सकार इति अत्र च समुदायस्य समुदाय आदेशो न सकारमात्रस्य सकारमात्रमिति न भविष्यति, इह तर्हि नृभिर्नृभिरिति समुदायस्य पदत्वाद्रेफनकारयोः समानपदस्थत्वाद्रषाभ्यामिति णत्वप्रसङ्गः । एषोऽप्यदोषः । तत्र समानग्रहणं न कर्तव्यं पदइत्येवास्तु, तत्रापदस्थयोर्निमित्तनिमित्तिनोरसंभवादेकत्वविवक्षार्थमेव पदग्रहणमिति समानपदस्थत्वं सिध्यति, ततश्च समानग्रहणाद्यत्र समानपदस्थत्वमेव तत्र णत्वम् । इह तु स्थानिवद्भावादेकपदत्वं वस्तुतस्तु पदद्वयात्मक आदेश इति पृथक्पदस्थत्वमिति णत्वाभावः । तदेवं निर्दोषः स्थाने द्विर्वचनपक्षः । इदानीं द्वितीयं पक्षं दर्शयति । 'यदा त्विति' । 'द्विरावर्ततइति' । उच्चार्यमाणस्य शब्दस्य यो व्यापार उच्चारणं नाम सेहावृत्तिर्विवक्षिता, द्विरुच्चरतीत्यर्थः । 'द्वे आवृत्ती भवत इति' । द्वे उच्चारणक्रिये भवत इत्यर्थः । न पुनर्मुख्ये एवावृत्ती द्वे भवतः, तथा सति त्रिर्वचनप्रसङ्गात्, नन्वस्मिन्पक्षे आं पचसिपचसि देवदत्त३ इत्यत्रावृत्तिभेदनिबन्धनया द्वित्वसंख्यया स्वाश्रयस्यैकत्वस्य निवर्तनादेकान्तरताया अभावादाम एकान्तरमिति निघातप्रतिषेधो न स्याद्यथा किरिणेत्यादावावृत्तिभेदनिबन्धनेनापि द्व्यच्त्वेन स्वा-

१ अम्नीताम्नीतेति २ पु॰ पा॰ ।

अयस्यैकारत्वस्य निवर्तनात्सावेकाच इति विभक्त्याद्युदात्तत्वं न भवति तद्वत्, स्थाने द्विर्वचने तु समुदायस्यापि स्थानिवद्भावेन पदत्वा-त्सिध्यति, तथा पौनःपुन्यमिति पुनःपुनर्भवितरि वर्तमानात्पुनःपुनः-शब्दाद्भावे ष्यञिष्यते, पुनःपुनर्भवः पौनःपुनिक इति च कालाट्ठञ्, तत्र द्विः प्रयोगे पदस्य विज्ञायमाने समुदायस्य वीप्सालक्षणेनार्थेन सत्यप्यर्थवत्त्वे ऽर्थवत्समुदायानां समासग्रहणं नियमार्थमित्यप्रातिपदिकत्वात्तद्धितो न स्यात्, सुबन्तादुत्पत्तिपक्षेपि समुदायस्यासुबन्तत्वाच्च स्यादेव, पक्षान्तरे तु स्थानिवद्भावादुभयमप्यस्तीति सिध्यति, यद्यप्यस्य स्थानी सुबन्त-स्तथापि सुब्लुकि कृते न ङिसंबुद्ध्योरिति निषेधाज्ज्ञापकात्प्रत्ययलक्षणेना-प्रत्यय इति निषेधाभावात्प्रातिपदिकत्वमव्यावृत्तमिति, अत्रैवं भाष्ये परिहार उक्तः, पचासिपचसीत्यर्थरूपयोः समानत्वात्स एव पचशब्दः स एव च तिङ्, ततश्च यः पूर्वस्माद्विहितः स परस्मादपि यश्च पर-स्मात्स पूर्वस्मादपि तदादिग्रहणं च पदसंज्ञायामनुवर्तते तत्र समुदाय-स्यावयवयोश्च तुल्येपि तिङन्तत्वे समुदायस्यैव पदसंज्ञा भविष्यति द्विर्वचनवत्, तद्यथा पपाचेत्यत्र समुदायस्यावयवानां च तुल्येप्येकाच्त्वे समुदायस्यैव द्विर्वचनं भवति नावयवानां, तत्कस्य हेतोः, शास्त्रहानेः, अवयवद्विर्वचने ह्यवयवान्तरे विषये समुदायविषये च शास्त्रं हीनं स्यात्, तद्वत्पदसंज्ञापि समुदायस्यैव भविष्यतीत्येकान्तरता युज्यते, पौनःपुन्य-मित्यादौ तद्धितोप्युक्तेन न्यायेन समुदायस्य सुबन्तत्वात्प्रातिपदिकत्वाच्च सिद्ध्यतीति। अत्रैवं चोदयन्ति। प्रागेव द्विर्वचनात् पचसीत्यस्यामवस्थायां प्रवृत्ता पदसंज्ञा किमिति पुनः कृतेपि द्विर्वचने प्रवर्तते, प्रवर्तमाना वा किमिति समुदायस्यैव प्रवर्तते न तु प्रत्येकमवयवयोः, नह्येवंविधो द्विर्वचनन्यायस्य विषय इति, संयोगसंज्ञायामुक्तं निर्ग्लैयादित्यादौ त्रिष्वपि द्वयोः संयोगसंज्ञाभ्युपगमात्, किञ्च यत्र समुदायस्यैव पदत्व-मपचन्नपचन्नित्यादौ तत्रावयवेषु पदकार्याभावप्रसङ्ग इति। अपर आह। उच्चारणक्रियैवात्र परं भिद्यते तद्भेदात्त्वौपचारिकः पदभेदः, तत्त्वतस्त्वेक-मेव पदमित्येकान्तरता युज्यते, पौनःपुन्यमित्यादौ च वीप्सालक्षणेनार्थेन

समुदायस्याप्यर्थवत्त्वात्प्रातिपदिकत्वं, न च समासग्रहणान्निवृत्तिः, अतुल्यजातीयत्वात्, येषां हि भिन्नार्थानां सतां परस्परसंबन्धमात्रमधिकं तत्समुदायस्यैव तुल्यजातीयस्य तेन निवृत्तिः, न चात्रैतदुभयमस्ति, नहि द्वयोः पुनःशब्दयोरर्थो भिद्यते, नापि तत्समुदाये तत्सबन्धोऽधिकः किं तर्हि वीप्सारूपेणान्य एवेति, यद्येवं किरिणेत्यादौ सावेकाचस्तृतीयादिरिति विभक्तिस्वरः स्यात्, तत्रापि ह्युच्चारणक्रियैव भिद्यते तत्त्वतस्त्वेक एवेकारः, किं च नित्यानां विभूनां वर्णानां तदात्मकानां च पदानां स्वरूपेण व्यवधानमव्यवधानं च न संभवतीत्युपलब्धिगतमेव तदाश्रयितव्यं, तत्र च यथा पदभेदेप्युपलब्धिभेदस्तथा तदभेदेपीति कथमेकान्तरता, यदि च पौनःपुन्यमित्यादावुक्तेन न्यायेन समुदायस्यापि प्रातिपदिकत्वं हन्त्वेवं ग्रामोग्रामो रमणीय इत्यादावप्येवमेव प्रातिपदिकत्वे सति सुब्लुक् स्यात्तस्मात्स्थाने द्विर्वचनमेवात्र रोचयामहे। अत एव स्थाने द्विर्वचनं पूर्वं वृत्तिकारेण दर्शितं पश्चात्संभवमात्रेण द्विः प्रयोगोपि दर्शितः। इह सर्वस्येति वचनमलोन्त्यनिवृत्त्यर्थं वा स्यात् षष्ठ्यर्थप्रसिद्ध्यर्थं च, तत्र स्थाने द्विर्वचनपक्षे तावच्छब्दतोर्थतश्चान्तरतमाभ्यां द्वाभ्यामादेशाभ्यां भाव्यं, ये चैवं प्रकारास्ते नियोगतोनेकाल्स्वभावा इत्यन्तरेणापि सर्वग्रहणमनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति, षष्ठ्यर्थोपि परिवर्जने इत्यादौ यत्र षष्ठ्युच्चार्यते तत्र तावत् सिद्धः, यत्रापि षष्ठी नास्ति नित्यवीप्सयोरिति तत्रापि सामर्थ्याल्लभ्यते नित्यवीप्सयोर्यः शब्दस्तस्य द्वे भवत इति, द्विः प्रयोगपक्षे त्वलोन्त्यविधिप्रसङ्ग एव नास्ति स्थानषष्ठ्यभावात्, षष्ठ्यर्थोपि लभ्यतएवोच्चारणस्य शब्दधर्मत्वादतो नार्थः सर्वग्रहणेनेत्यभिप्रायेणाह। 'सर्वस्येति किम्[1]िति'। 'विस्पष्टार्थमिति'। य एवं प्रतिपत्तुमसमर्थस्तं प्रति सुखप्रतिपत्तये सर्वस्येत्युच्यतइत्यर्थः। 'अथेत्यादि'। एवं मन्यते, समासतद्धितवाक्यनिवृत्त्यर्थमवश्यं पदस्येति वक्तव्यं, समासनिवृत्त्यर्थं तावत् सप्तपर्णोऽष्टापदम्। अत्र सप्तसंख्यानि पर्णानि वीप्स्यन्ते न तु तद्वान्वृक्ष इति वीप्सायामेकत्वस्यानन्तर्भावा-

१ किमिति नास्ति सु॰ मू॰ पु॰।

त्प्रागेव विभक्तेर्द्विवचनप्रसङ्गः पदाधिकारात्तु न भवति, तद्धितः द्विप-दिकां ददाति, अत्र द्वित्वसंख्यायुक्तः पादार्थो वीप्स्यतइति स्त्रीत्वैक-त्वलक्षणयोर्लिङ्गसंख्ययोरनन्तर्भावात्प्राक् तद्धितोत्पत्तेः समासे कृते प्राप्तं द्विर्वचनं पदत्वाभावाच्च भवति, वाक्यं ग्रामेग्रामे पानीयम्, अत्र वाक्य-स्यापदत्वाद् द्विर्वचनं न भवति ग्रामे पानीयमिति। किं चोत्तरत्र पदस्येति न वक्तव्यं भवति पदस्य पदादित्यस्यैवानुवृत्तेरिति । 'नैवं शक्य-मिति' । अस्याप्ययमभिप्रायः । पदस्येत्युच्यमानेपि सप्तपर्णाभ्यामित्यादौ स्वादिषु पूर्वस्य पदत्वाद् द्विर्वचनप्रसङ्गः, तस्मादेवमत्र परिहारो वाच्यः, [1]यद्वीप्सायुक्तं नादः प्रयुज्यते, किं पुनस्तत्पर्वणिपर्वणि [2]सप्तपर्णान्यस्ये-ति, यच्च प्रयुज्यते न तद्वीप्सायुक्तं सप्तपर्णान्यस्येति पर्णशब्द इति, तद्धिते तु तद्धितेनैवोक्तत्वाद् द्विर्वचनाभावः, स हि वीप्सायामित्यु-च्यते, वाक्यस्यापि द्विर्वचनं न भवति, पदद्विर्वचनेनोक्तत्वाद्वीप्सायाः, तस्मात्समासादिनिवृत्त्यर्थं तावत्पदाधिकारो न कर्तव्य इति, प्रत्युत क्रियमाणे पदाधिकारे ऽव्याप्तिलक्षणो दोष इत्याह । 'इह हि न स्यादिति'। 'प्रपचतीति'। धातूपसर्गसमुदायः क्रियाविशेषवाची, अडा-दिव्यवस्थार्थं तु धातूपसर्गयोः पृथक् कल्पनं, ततश्च क्रियाधर्मो नित्यता समुदायस्येति तस्यैव द्विर्वचनम् । 'इहेत्यादि' । द्रुहेस्तृचि विहिते वा द्रुहेति घत्वढत्वे प्राप्नुतः, द्विर्वचनं च तत्र घत्वढत्वयोरसिद्धत्वात्पूर्वं द्विर्वचनं प्राप्नोति, अस्तु को दोषस्तत्राह । 'तत्रेति' । पश्चाद्विकल्पे प्रवर्त्तमाने यदा परत्र ढत्वं तदा पूर्वत्रापि ढत्वमेवेति नियमाभावात् घत्वमपि कदापि स्यात्, एवं घत्वेपि द्रष्टव्यं, परत्र घत्वं पूर्वत्र ढत्व-मिति, एतच्चैकस्या आकृतेश्चरितः प्रयोगो न[3] द्वितीयस्यास्तृतीयस्याश्च भवतीति न्यायमनाश्रित्योक्तं द्रष्टव्यम् । अयं च न्यायः कृञ्चानु-प्रयुज्यते लिटीत्यत्रैव व्याख्यातः। 'पूर्वत्रासिद्धीयमिति' । पूर्वत्रासि-द्धमित्यस्मिन्नधिकारे भवं नलोपादिकार्यं पूर्वत्रासिद्धीयं तद् द्विर्वचना-दन्यत्रासिद्धं भवति। अथ वा पूर्वस्यां सपादसप्ताध्याय्यामसिद्धं नलो-

१ यदत्रेति इं॰ पु॰ पा॰। २ सप्तपर्णान्यस्येति इं॰ पु॰ नास्ति।
३ द्वितीयायास्तृतीयायाश्चेति २ पु॰ पाठः।

पादि पूर्वत्रासिद्धं, तत्र भवमसिद्धत्वं पूर्वत्रासिद्धीयं तद् द्विर्वचने कर्त्तव्ये न भवति, ततश्च षत्वे ढत्वे वा प्रवृत्ते तद्युक्तस्यैव द्विर्वचनमिति नास्ति दोषः । 'सर्वस्येत्येतदेवेत्यादि' । पूर्वं पूर्वत्रासिद्धीयमद्विर्वचनइति वचनाश्रयेण द्रोढाद्रोढेति साधितमिदानीं सर्वस्येत्यनेन साधितमित्येकस्मिन्साध्ये द्वयोर्हेत्वोर्विकल्पः, कथं पुनः सर्वस्येत्यनेन कृतसर्वकार्यप्रतिपत्तिः, अर्शआद्यच्प्रत्ययान्तोयं सर्वशब्दः, सर्वं कार्यं यस्मिन्नस्ति तदिदं सर्वं, तस्य द्वे भवतः, सर्वेषु कार्येषु कृतेषु द्विर्वचनमित्यर्थः ॥

"तस्य परमाम्रेडितम्" ॥ तस्येत्यवयवयोगे षष्ठी परशब्दोऽवयववचनः, दिक्शब्दाच्चूत्तरपदेत्यत्र यद्यपि दिशि दृष्टः शब्दो दिक्शब्द इत्याश्रयणात्संप्रत्यदिक्शब्दत्वेपि पञ्चमी विहिता तथाप्यस्मादेव निर्द्देशादवयववाचिभिर्योगे षष्ठी भवति, एवं च पूर्वं कायस्येत्यादि सिद्धं भवति, उदाहरणे आम्रेडितं भर्त्सने इति प्लुतः, तस्य ग्रहणं विषया[1]वधारणार्थम्, तस्यैतस्यानन्तरस्य द्विरुक्तस्येति, तेन षाष्ठिके द्विर्वचने इयं संज्ञा न भवति, ननु आम्रेडितशब्दो निघण्टुषु प्रसिद्धः, आम्रेडितं द्विस्त्रिरुक्तमिति, सत्यमर्थे प्रसिद्धः, इह तु शब्दे परिभाष्यते, महासंज्ञाकरणं पूर्वाचार्यानुरोधेन ॥

"अनुदात्तं च" ॥ परमित्यनेन सामानाधिकरण्यात्तस्य चाजक्लसमुदायरूपत्वादन्वार्थोत्रानुदात्तशब्दः अविद्यमानोदात्तमनुदात्तमिति । स्वरितेप्युदात्तस्य भावात्तस्यापि निवृत्तिः, एवमपि न ज्ञायते केन स्वरेणाम्रेडितं प्रयोक्तव्यमिति, उच्यते । उदात्तस्वरितौ तावन्निषिद्धौ, न चास्वरकस्याच उच्चारणं संभवति, तत्र पारिशेष्यादनुदात्तत्वमेव भविष्यति, यद्वा ऽनुदात्ताच्कमनुदात्तम्, आम्रेडितस्या अचोनुदात्ता भवन्तीत्यर्थः । 'भुङ्क्ते भुङ्क्ते इति' । भुजो ऽनवनइत्यात्मनेपदं, तस्य तास्यनुदात्तेदित्यनुदात्तत्वं, श्नमः प्रत्ययस्वरः, तस्य श्नसोरल्लोप इत्यल्लोपे उदात्तनिवृत्तिस्वरेण भुङ्क्तेशब्दोन्तोदात्तः, द्विर्वचनेन परस्यानुदात्तत्वं, पशुशब्दः कुप्रत्ययान्तोन्तोदात्तः ॥

1 विषयविभागार्थमिति पा॰ २ पु॰ ।

"नित्यवीप्सयोः"॥ नित्ये चार्थे वीप्सायां च यद्वर्तते इत्यनेन सप्तमीयमर्थनिर्देशार्थेति दर्शयति, प्रयोक्तृधर्मभूता वीप्सा न च सा ग्रामादिशब्दैरभिधीयते, पचतिपचतीत्यत्रापि वस्तुतो यन्नित्यं न तत्तिङन्तेनाभिधीयते, नित्यत्वं तु द्विर्वचनद्योत्यं, तस्मादयमत्रार्थः, नित्यत्वे द्योत्यत्वेन विषयभूते वीप्सायां च द्योत्यत्वेन विषयभूतायामिति, एषैव च तत्र वृत्तिः, शब्दस्य यद्वृत्ता तद्विषयता, यदि पुनरेषा षष्ठी स्यात्स्वरूपविधिः प्रसज्येत, ततश्च नित्यं क्रीडाजीविक्रयोः, पादशतस्य संख्यादेर्वीप्सायामित्यादिनिर्देशो नोपपद्यते। यदि तु नित्यार्थविषयः शब्दो नित्य इत्युच्येत वीप्सार्थविषयश्च वीप्सेति तदा षष्ठ्यामप्यदोषः, गौणत्वप्रसङ्गात्तदनाश्रितं, नित्यशब्दोयं सर्वकालावस्थायिनो य आत्माकाशादयो येषामुत्पत्तिविनाशौ प्रयोक्तृभिर्नोपलभ्येते तेष्वपि प्रयुज्यमानो दृश्यते, नित्य आत्मा, नित्य आकाशो, नित्या द्यौरिति, आभीक्ष्ण्येपि नित्यं प्रहसितो नित्यं प्रजल्पित इति, तत्राविशेषादुभयोरपि ग्रहणादाकाशादिशब्दानामपि द्विर्वचनप्रसङ्ग इति मन्यमानः पृच्छति। 'केषु नित्यतेति'। अथ वा नित्यशब्दस्य कूटस्थलक्षण एव मुख्योर्थः, शब्दान्तरसन्निध्यनपेक्षणादाभीक्ष्ण्यं तु क्रियापदप्रयोगसमधिगम्यं गौणोर्थः, अविच्छेदोपलब्धिसामान्यमाश्रित्य तत्र प्रयोगात्, ततश्च गौणमुख्ययोर्मुख्ये संप्रत्यय इति कूटस्थवाचिनामेव द्विर्वचनप्रसंग इति मन्यमान आह। 'केषु नित्यतेति'। इतरोपि विदिताभिप्राय आह। 'तिङ्क्ष्विति'। अविशेषमेव मन्यमानः पृच्छति। 'कुत इति'। 'आभीक्ष्ण्यमिहेति'। अयमभिप्रायः। कूटस्थवचनग्रहणे तिङन्तानि न संगृहीतानि स्युः, आभीक्ष्ण्यलक्षणे तु नित्यत्वे गृह्यमाणे तल्लक्षणं द्विर्वचनं तिङन्तानां वीप्सालक्षणं तु सुबन्तानामित्युभयानुग्रहो भवति, गौणोपि चार्थो लक्ष्यदर्शनवशादिहाश्रीयते, यथा शीतोष्णाभ्यां कारिणि, पार्श्वेनान्विच्छतीत्यादौ, उभयविधेपि नित्यत्वे गृह्यमाणे तद्वाचिनां सुबन्तानां स्वार्थएव द्विर्वचनं स्यात्, न चैवं लोके प्रयोगोस्ति आत्मात्मेति, एवं ह्युक्ते वीप्साप्रतीयते न तु स्वार्थः, तस्मादाभीक्ष्ण्यस्यैव ग्रहणमिति भवत्याभीक्ष्ण्यमिह नित्यता,

सा च तिङ्त्वव्ययकृत्सु चेति, एतत् कुतस्त्यमित्याह। 'आभीक्ष्ण्यं च क्रियाधर्म इति'। पौनःपुन्यमाभीक्ष्ण्यं, तच्च साध्यरूपायाः क्रियाया एव संभवति न द्रव्यस्य, यद्यपि क्रियाया अपि तस्या एव व्यक्तेः पुनः क्रिया न संभवति, तज्जातीयस्य तु पुनः करणं घटादिष्वपि सम्भवति, तथापि क्रियाविषयैव पुनः क्रियतइति प्रतीतिः, तद्वचनाश्च पुनःपुनराभीक्ष्ण्यं नित्यमित्यादयः शब्दाः यथा युगपत्पृथगित्यादयः शब्दाः क्रियाविषयास्तद्वत्, क्रिया च तिङ्त्वव्ययकृत्सु चाभिधीयते, पाचकादिषु तु साधनं प्रधानं पाकादिष्वपि तु सिद्धता प्रधानं न क्रिया, कीदृशी पुनः सा क्रिया यस्या आभीक्ष्ण्यं धर्म इत्याह। 'यां क्रियामिति'। 'तन्नित्यमिति'। नित्यशब्दस्य नपुंसकलिङ्गत्वात्तद्वृत्ति तच्छब्दस्यापि नपुंसकत्वं यथा अणौ यत्कर्म णौ चेत्स कर्तेत्यत्र पुंस्त्वम्। 'लुनीहिलुनीहीति'। क्रियासमभिहारे लोट्, यद्यपि तिङन्तस्य दर्शितमुदाहरणं तथाप्यस्त्यत्र वक्तव्यमिति पुनरुपन्यासस्तद्दर्शयति। 'त्वाणमुलोर्लोटश्चेति'। समानकर्तृकयोरित्यादिनार्थान्तरेपि त्वाणमुलौ विहितौ, लोडपि विध्यादावर्थान्तरे विहित इति सामान्यशब्दत्वाद् द्विर्वचनापेक्षा एव पौनःपुन्यं प्रकाशयन्ति। 'यङ् तु तन्निरपेक्ष इति'। स हि क्रियासमभिहारं न व्यभिचरति, तत्किं तस्य तद्द्योतने द्विर्वचनापेक्षया। ननु यङन्तस्यापि कदा चिद् द्विर्वचनमिष्यते, तत्कथमित्याह। 'यदा त्विति'। द्विविधो हि क्रियायाः समभिहारः, पौनःपुन्यं भृशार्थश्च, तत्र यदा द्विर्वचनं भवति तदा भृशार्थे यङ्, तस्यैव पौनःपुन्यं द्योतयितुं द्विर्वचनं तस्य यङाऽद्योतितत्वादित्यर्थः, वृत्तौ च सामान्यशब्दस्यापि क्रियासमभिहारशब्दस्य भृशार्थलक्षणे क्रियासमभिहारे वृत्तिर्विज्ञेया। 'पापच्यत इति'। सकला अवयवक्रियाः स्वयमेव संपादयन् पुनःपुनः पचतीत्यर्थः। लोडपि भवति पापच्यस्व पापच्यस्वेत्येवायं पापच्यतइति, अथ नित्यतायां द्विर्वचनमुच्यमानं धातुमात्रस्य कस्मान्न भवति, स हि क्रियावचनः। उच्यते। परिगृहीतसाधना क्रिया व्यवहारोपयोगिनी भवति, तदनभिधानाच्च धातुमात्रस्य द्विर्वचनाभावः, पदाधिकारो वाश्रयणीयः,

अनेनैवाभिप्रायेण पूर्वमुक्तमथ पदस्येत्येव कस्मान्नोच्यतइति, अस्मिन्पक्षे सगतिकस्य द्विर्वचनं वक्तव्यमेव, एतेनैतदपि निरस्तं, भृशार्थे सावकाशो यङ् पौनःपुन्ये परेण द्विर्वचनेन बाध्यतइति, कथमिदं निरस्तं, पदस्य द्विर्वचनं धातोर्यङ्, तत्रान्तरङ्गस्य न युक्तो बाध इति व्याख्यातं, नित्यं वीप्सां व्याख्यास्यन् विषयं तावत्पृच्छति। 'अथेति'। 'सुप्सु वीप्सेति'। सुपामेव तदभिव्यक्तौ समर्थत्वात्, एवं विषयमुक्त्वा स्वरूपं पृच्छति। 'का पुनरिति'। यदि सामान्येन व्याप्तुमिच्छा वीप्सा तदा चिकीर्षतीत्यादौ द्विर्वचनप्रसङ्गः करोत्यादिक्रियाभिः कटादीनां या व्याप्तुमिच्छा तद्वाचित्वात्, इतरो योगरूढिर्वीप्साशब्द इति अभिप्रायेणाह। 'व्याप्तिविशेषविषयेति'। प्रयोक्तुरिच्छेत्यनेन नाभिधेया वीप्सा गृह्यते वीप्सावाचिनो द्वे भवत इति। किं तर्हि प्रयोक्तृधर्मः, आबाधवत्। गतगत इत्युक्ते प्रियस्य चिरगमनादिना पीडितो वाक्यं प्रयुङ्क्तइति प्रतीयते, तेन चिकीर्षतीत्यादौ द्विर्वचनं भवतीति दर्शयति, व्याप्तिविशेषविषयेत्युक्तं स तु विशेषो नाद्याप्यभिहित इति पुनः पृच्छति। 'का पुनरसाविति'। 'नानावाचिनामित्यादि'। पूर्ववृत्तिषु पठितं वीप्सालक्षणं तद् व्याचष्टे। 'नानाभूतार्थवाचिनामिति'। तत्र नानावाचिनामिति वचनाज्जातिवाचिनां द्विर्वचनं न भवति, ब्राह्मणो न हन्तव्यः संपन्नो व्रीहिरिति, नहि जातिशब्दा नानाभूतार्थवाचिनो जातेरेकत्वात्, युगपद्ग्रहणात्क्रमविवक्षायां द्विर्वचनाभावः, यथास्मिन्वनेयं वृक्षः शोभनोयं वृक्षः शोभन इति क्रमेण शोभनत्वप्रतिपादने बहूनामपि शब्दानां प्रयोगो भवन्ति, तथैकशेषोपि न भवति, अस्मिन्वने वृक्षाः शोभना इति, नानार्थवाचित्वाभावात् पृथगर्थपर्यवसायित्वं हि नानावाचित्वं, न चैकशेषे तदस्ति, अत एव तत्र न प्रत्येकं विधेयसंबन्धो नियमेन प्रतीयते, नहि ब्राह्मणेभ्यः शतं देयमित्युक्ते नियमेन प्रत्येकं शतं देयं भवति, ब्राह्मणाय ब्राह्मणाय शतं देयमित्युक्ते प्रत्येकं शतं दीयते, तत्कस्य हेतोः, पृथगर्थपर्यवसायितया पृथग्दे[1]यस्य संबन्धात्, यदा

१ विधेयस्येति इं॰ पु॰ पाठः।

च पृथगर्थपर्यवसायिता तद्वा यावन्तोऽर्था अभिधित्सितास्तावन्तः शब्दाः पृथगेकैकपर्यवसायिनः प्रसक्तास्तेषामनेन निवृत्तिः क्रियते वीप्सायां द्वे एव प्रयोक्तव्ये न तु बहु प्रयोक्तव्यमिति, कथं तर्हि निवृत्तानामर्थः प्रतीयते, यावता प्रत्येकपर्यवसायित्वे द्वयोरेव प्रतीतिः स्यात्, उच्यते।

एकशेषे यथान्येषामर्थः शिष्टेन गम्यते।
तद्वदत्र द्विशेषेपि शिष्टाभ्यामितरार्थधीः॥

यथैव हि वृक्षौ वृक्षा इत्येकशेषविषये शिष्यमाणमेव निवृत्तानामप्यर्थमाह तथेहापि शिष्यमाणे द्वे एव विवक्षितानर्थानभिधास्यतः, न च बहुवचनप्रसङ्गः, परिगृहीतैकत्वानां बहूनामभिधानात्, अन्यथा प्रत्येकसंबन्धस्याप्रतीतेः द्विर्वचनादुत्तरकालं सत्यामपि बहुत्वावगताव-प्रातिपदिकत्वाद्बहुवचनाभावः, यथा पश्य मृगो धावतीति, सत्यपि दर्शनक्रियापेक्षे कर्मत्वे द्वितीयाभावः, एकैकमित्यत्र तु सत्यपि बहुव्रीहिवद्भावेन प्रातिपदिकत्वे परिगृहीतैकत्वस्यैकार्थस्य वीप्सायोगादन्तरङ्गत्वादेकवचनं भवति न बहुवचनं, बहुत्वप्रतीतेर्बहिरङ्गत्वात्, अस्यैवार्थस्यैकैकस्य प्राचामिति निर्देशो लिङ्गमित्यलमियता। तदयमत्रार्थः[1]। नानाभूतार्थवाचिनां यान्यधिकरणानि वाच्यानि[2] तेषां सहविवक्षितानां पृथक्संख्यायुक्तानां प्रत्येकं क्रियया गुणेन वा व्याप्तुमिच्छा वीप्सेति, क्रियागुणग्रहणं द्रव्यस्याप्युपलक्षणम्। 'ग्रामेग्रामे पानीयमिति'। द्रव्यव्याप्तेरुदाहरणम्,। 'पुरुषःपुरुषो निधनमुपैतीति'। निधनं मरणं, जातस्य हि ध्रुवो मृत्युरित्यर्थः, अपर आह साम्नां भक्तिविशेषो निधनं, सर्व एव ऋत्विजो निधनमुपयन्तीत्यर्थ इति। 'यत्तिङन्तमित्यादि'। अत्र विप्रतिषेधो हेतुः, द्विर्वचनस्यावकाशो यत्र नित्यता विवक्षिता न प्रकर्षः, पचतिपचतीति, प्रकर्षप्रत्ययस्यावकाशो यत्र प्रकर्ष एव विवक्ष्यते न नित्यता, पचतितरामिति, उभयविवक्षायामुभयप्रसंगे परत्वाद् द्विर्वचनं, ततः पुनः प्रसङ्गविज्ञानात्प्रकर्षप्रत्ययः, यद्वा प्रतियोग्यपेक्षः प्रकर्षा-

१ अर्थात्यतिरिति पा॰ ७ पु॰।
२ वाच्यानीति ४॰ पु॰ नास्ति।

बहिरङ्गः, पौनःपुन्यमन्तरङ्गमिति पूर्वं द्विर्वचनम् । 'इह त्वित्यादि' । इष्टिरेवेयं, यद्वा प्रकर्षयुक्ता एवाढ्यादय आनयनक्रियायामुपयुज्यन्तइति, लघुप्रकर्षा एव वीप्स्यन्ते । किञ्च कृतद्विर्वचनात्तरपि सत्याढ्यातरमिति भवितव्यं, तथा च प्रकर्षार्थो गम्येत न वीप्सेति पूर्वं प्रकर्षयोगः ॥

"परेर्वर्जने" ॥ 'परिपरित्रिगर्तेभ्य इति' । अपपरी वर्जनइति कर्मप्रवचनीयसंज्ञा, पञ्चम्यपाङ्परिभिरिति पञ्चमी । 'परिषिञ्चतीति' । परिः सर्वतो भावे, उपसर्गात्सुनोतीत्यादिना षत्वम् । 'परेर्वर्जनइत्यादि' । परेर्वर्जनइत्यत्रासमास इति वक्तव्यं वेति च वक्तव्यं, तेनासमासएव भवति, तत्रापि विकल्पेन, अन्यत्र तु नैव भवति तदाह । 'समासे त्विति' । 'तेनैवोक्तत्वादिति' । ननु वाक्ये तावद्वर्जनं परेरेव द्योत्यं समासेपि परिः संनिहितस्तत्किं समासस्य वर्जने शक्तिः कल्प्यते, तत्राहुः । जहत्स्वार्था वृत्तिरिति पक्षे समास एव वर्ज्यमानोपसर्जने वर्जने वर्त्तते, अवयवो त्वनर्थकाविति, यदा त्वजहत्स्वार्था वृत्तिरिति पक्षस्तदा वाक्ये केवले वर्जने परिर्वर्तत्तइति तत्रैव द्विर्वचनं भवति, समासे तु वर्ज्यमानार्थास्कन्दनाच्च द्व्यर्थः परिः केवले वर्जने वर्त्तत इति द्विर्वचनाभावः ॥

"प्रसमुपोदः पादपूरणे" ॥ प्रादीनां समाहारद्वन्द्वः, द्वन्द्वाच्चुदषहान्तात्समाहारइति समासान्तस्तु न भवति समासान्तविधेरनित्यत्वात् । उदित्यं जातवेदसमिति क्वचिदुदाहृतं, तदयुक्तं, नह्यत्र द्वितीय उच्छब्दः किं तर्हि उशब्दः । 'सामर्थ्याच्छन्दस्येवैतद्विधानमिति' । किं सामर्थ्यमित्याह । 'भाषायामिति' । नात्र द्विर्वचनस्य किञ्चित् द्योत्यं केवलं पादपूरणमेव कार्यं, न चैवंविधस्य भाषायां प्रयोगोस्ति, क्वचित्तुसामर्थ्यादित्यादि न पठ्यते ॥

"उपर्यध्यधसः सामीप्ये" ॥ उपर्यादीनां योर्थस्तस्य सामीप्यद्योतनाय द्विर्वचनं, सामीप्यं प्रत्यासत्तिः, तच्च देशकृतं कालकृतं वा । 'उपर्युपरि दुःखमिति' । कालकृतस्योदाहरणं, दुःखस्य सामीप्येनोपरिष्टादित्यर्थः, उभसर्वतसोरित्युपसंख्यानेन द्वितीया । 'उपर्युपरि ग्राममिति' । ग्रामस्य सामीप्येनोपरिष्टाद्देशइत्यर्थः । 'अध्यधि ग्राममिति' । अधिरुपरिभावे, यथा समिधं स्रुचं चाध्यधि गार्हपत्यं हृत्वा इति । 'अधोधो ग्राम-

मिति' । ग्रामस्य सामीप्येनाधस्ताद्देशइत्यर्थः । यथा नवानधोधो बृहतः पयोधरानिति ।

उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ।
अधोधो दर्शने कस्य महिमा नोपजायते ॥

इति तु वीप्सायां द्विर्वचनम् । 'उपरि चन्द्रमा इति' । अत्र भूगतमपेक्ष्योपरिभावस्य सामीप्यं नास्ति । 'उपरि शिरस इत्यादि' । नहि वस्तुसत्तैव शब्दव्युत्पत्तेः प्रधानं कारणं किं तर्हि विवक्षा, सा चेह नास्ति शिरस उपरिष्टादुदं धारयति नाधस्तादिति ह्यत्र विवक्षितं, सामीप्यं तु वस्तुतः संभवति॥

"वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु" ॥ 'एकार्थपदसमूहो वाक्यमिति' । यथाह भगवाञ्जैमिनिरर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति । क्वचित्त्वेकतिङ्पदसमूहो वाक्यमिति पठ्यते एका तिङ्विभक्तिर्यत्र स एकतिङ्, क्वचित्तु न किञ्चिदपि वाक्यलक्षणं पठ्यते । 'असूयासंमतिकोपकुत्सनभर्त्सनेषु यदि तद्वाक्यं भवतीति' । यद्यपि वाक्यादेरिति समासे गुणीभूतं वाक्यं तथाप्यसूयादीनां तेनैव संबन्धः, असूयादिषु यद्वाक्यं तदादेरिति, न तु प्रधानेन वाक्यादिना ऽऽमन्त्रितेन, प्रयोक्तृधर्मा ह्यसूयादयो नाभिधेयधर्मास्ते च वाक्येनैव द्योत्यन्ते नामन्त्रितेन । उदाहरणेषु संज्ञतावनुकम्पायां कन्, इतरत्र कुत्सिते कः, रिक्त शून्यं तुच्छमित्यर्थः, शक्तियष्टिशब्दाभ्यां तद्वत्योः स्त्रियोर्वर्तमानाभ्यां कुत्सिते कः, एवं हि कुत्सनं संबोधनं च समीचीनं भवति । 'भर्त्सने त्वित्यादि' । यद्यपि भर्त्सने पर्यायेणेति वचनात्पूर्वस्यापि तत्र पर्यायेण प्लुतो भवति तथापि भर्त्सने यदुक्तमिहोदाहरणं तदधिकृत्येदमुक्तमाम्रेडितस्यैवेति । 'शोभनः खल्वसि माणवकेति' । अत्र माणवकशब्दस्य द्विर्वचनं न भवति, ननु च नानसूयन् कुत्सयते न चाकुपितो भर्त्सयते, ततः कोपासूययोर्द्विर्वचनं विधीयमानं भर्त्सनकुत्सनयोरपि सिद्ध्यति, कारणत्वेन तत्रापि कोपासूययोर्भावात्, ततश्च नार्थः कुत्सनभर्त्सनग्रहणेन, नैतदस्ति ॥

गुरवो हि हितैषित्वादकुप्यन्तोपि भर्त्सनम् ।
कुर्वते भर्त्स्यमानास्तु कुपितान्प्रतियन्ति तान् ॥

विनाप्यसूयया कुत्सां कुर्वन्तीति पृथक्कयोः ।
निर्देशः सूत्रकारेण विहितः सूक्ष्मदर्शिना[1] ॥
सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः ।
लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥

अभिप्राये दुष्टे लालनेपि दोषा भवन्ति, विपर्यये तु ताडनेपि गुणा इत्यर्थः ॥

"एकं बहुव्रीहिवत्" ॥ अत्र यदि केवलो बहुव्रीहिवद्भावोऽनिर्दिष्टविषयोनेन विधीयेत ततश्चेहापि प्राप्नोत्येक इति, ततश्च सुब्लुक् स्यात्, अस्तु बहुव्रीहिवद्भावादपरः सुः प्रभविष्यति, नैव चात्र सुब्लुक् प्राप्नोति, एक इत्यस्य प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्, कृत्तद्धितसमासाश्चेत्यत्र च समासग्रहणं नियमार्थं न विध्यर्थमिति तेनापि नास्ति प्रातिपदिकत्वम् । इह तर्ह्येकेति पुंवद्भावः प्राप्नोति, स्यादेतत्, द्वे इत्यधिकाराद् द्विर्वचनसंनियोगेन विधीयमानो बहुव्रीहिवद्भावस्तदभावादिह न भवतीति, अथ तदपि द्विर्वचनं ते[2]न विधीयमानमत्र कस्मान्न भवति, तस्माद्वक्तव्योस्य विषय अत आह । 'एकमित्येतच्छब्दरूपं द्विरुक्तमिति' । सत्यं, द्वे इत्यनुवर्त्तते, न च तेन द्विर्वचनं विधीयते किं तर्ह्यन्येन, विहितमनूद्य तत्र बहुव्रीहिवद्भावो विधीयते, क्व चान्येन द्विर्वचनं विहितं, वीप्सायां, यदि पुनर्वीप्साग्रहणमनुवर्त्य तत्र बहुव्रीहिवद्भावो विधीयते, नैवं शक्यम् । बहुव्रीहिवद्भावेन द्विर्वचनं बाध्यते, अथ यदि वीप्सायां द्वे इत्येवमुभयमनुवर्त्य द्विर्वचनं बहुव्रीहिवद्भाव इत्युभयमनेन विधीयते न दोषो भवति, वृत्तिकारस्तु किमनया वीप्साग्रहणानुवृत्त्येति द्वे इत्येवान्ववीवृतत् । 'सुब्लोपपुंवद्भावाविति' । यद्यप्येतौ बहुव्रीहावित नोच्येते तथापि तत्र दृष्टावित्येतयोरतिदेशः, क्वचित्तु वृत्तावेवायमर्थः पठ्यते । 'एकैकमिति' । एकमित्यस्य द्विर्वचने द्वयोरपि सुपोर्लुकि सति पुनर्बहु-

१ सूक्ष्मबुद्धिनेति पा॰ २ पु॰ ।
२ अनेन विधीयमानमिति ३। पु॰ पा॰ ।

व्रीहिवद्भावादेव सुप् । 'एकैकयेति' टाबन्तात्तृतीया, तदन्तस्य द्विर्वचनं, सुब्लुकि पुंवद्भावेन पूर्वभागे टापो निवृत्तिः, कः पुनरत्र टापो निवृत्तौ सत्यामसत्यां वा विशेषः, अवग्रहेऽस्ति विशेषः । एकैकयेत्येक-एकयेति भवति, उत्तरत्र च गतगतेत्यादौ पुंवद्भावस्य प्रयोजनं, ननु यदि यच्च यावच्च बहुव्रीहौ दृष्टं कार्यं तस्य सर्वस्यातिदेश. सर्वनामसंज्ञाप्रतिषेधः स्वरः समासान्त इत्येते विधयः प्राप्नुवन्त्यत आह । 'सर्वनामसंज्ञाप्रतिषेधस्वरसमासान्ता इति' । 'न बहुव्रीहाविति प्रतिषेधो न भवतीति' । तत्र हि विभाषा दिक्समासे बहुव्रीहावित्यतो बहुव्रीहावित्यनुवर्त्तमाने पुनर्बहुव्रीहिग्रहणं बहुव्रीहिरेव यो बहुव्रीहिस्तत्र यथा स्याद्बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र माभूदिति, तेन संज्ञाप्रतिषेधस्तावत्समासाधिकारे बहुव्रीहौ विज्ञायते । 'नन, सुसुइति' । आबाधे चेति द्विर्वचनं, नन करोति सुसु जागर्तीत्यादिवाक्यैकदेश उदाहृतः । 'नञ्सुभ्यामित्यन्तोदात्तत्वं न भवतीति' । तत्र हि वन समासइत्यतः सिंहावलोकितन्यायेन समासइति सबध्यते, बहुव्रीहाविदमेतत्तद्भ्य इत्यतो बहुव्रीहाविति च, तत्र बहुव्रीहेः समासत्वाव्यभिचारे पुनः समासइति विशेषणं समासाधिकारविहितबहुव्रीहिपरिग्रहार्थम् । अथात्र नञ्सुभ्यामित्यन्तोदात्तत्वे सति कः स्वरो भवति, अत्र हि चत्वारः स्वराः प्राप्नुवन्ति, समासान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरो नञ्सुभ्यामित्यन्तोदात्तत्वमाम्रेडितानुदात्तत्वं च, तत्र नञ्सुभ्यामित्ययं स्वरो न भवतीत्युक्तम् । आम्रेडितानुदात्तत्वमपि न भवति, किं कारणं, कार्यातिदेशे तावदिदमेव कार्याणां विधायकमिति परत्वादाम्रेडितानुदात्तत्वं बहुव्रीहिस्वरेण बाध्यते, शास्त्रातिदेशेपि विरुद्धस्य स्वाश्रयस्यातिदेशेन निवर्त्तनान्नैवाम्रेडितानुदात्तत्वं भवति बहुव्रीहौ प्रकृत्येत्यत्र च न समासग्रहणमनुवर्त्तते, तेन बहुव्रीहिवद्भावात्पूर्वपदप्रकृतिस्वरो भवन् समासान्तोदात्तत्वं बाधते । 'पटुगिति' । आबाधे चेति द्विर्वचनम् । 'चक्पूरिति समासान्तो न भवतीति' । तत्र हि समासाच्च तद्विषयादित्यतः समासादित्यनुवर्त्तमाने पुनः समासग्रहणं समासाधिकारे विहितो यः समासस्तत्परिग्रहार्थं, तेनातिदेशिके समासे न

भवतीति, एवमेते संज्ञाप्रतिषेधादयः समासाधिकारविहिते बहुव्रीहौ विज्ञायन्ते, वार्तिककारस्तु सर्वमेवैतद्भावनिकं मन्यते, यदाह, सर्वनामस्वरसमासान्तेषु दोष इति, अथ ननेत्यत्र बहुव्रीहिवद्भावाबलोपः कस्मान्न भवति, उच्यते, उत्तरपदइति वर्तते। नञ इति च कार्यिणो निर्द्देशः, तत्र साक्षाच्छिष्टेन कार्यित्वेन नञो निमित्तभावो बाध्यते, यथा मद्रह्रदो भद्रह्रद इत्यत्र रेफस्याचो रहाभ्यां द्वे इति द्विर्वचनप्रसङ्गे उक्तं, नेमौ रहौ कार्यिणौ किं तर्हि निमित्तमिमौ द्विर्वचनस्येति, अयं तु परिहारः पूर्वत्रापि यथासंभवं द्रष्टव्यः ॥

"आबाधे च" ॥ 'आबाधनमाबाध इति'। भावे घञ्[1]। 'प्रयोक्तृधर्मो नाभिधेयधर्म इति'। अभिधेयधर्मत्वे हि बाधितपीडितादिशब्दानामेव द्विर्वचनं स्यान्न गतादिशब्दानां प्रयोक्तृधर्मत्वे हि तेषामपि भवतीति व्याप्तिर्भवति। 'तत्र वर्त्तमानस्येति'। द्विर्वचने सत्याबाधस्य गम्यमानत्वाद्गतादिशब्दानां तत्र वृत्तिः, न तु तदभिधानात्। 'प्रियस्य विरगमनादिनेति'। प्रयोक्तृधर्मत्वमाबाधस्य दर्शयति, आदिशब्देन नाशादेर्ग्रहणम् ॥

"कर्मधारयवदुत्तरेषु" ॥ 'कोपधाया अपि कर्मधारयवद्भावात्पुंवद्भावो भवतीति'। तेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावो विधीयते इति भावः। 'समासान्तोदात्तत्वमनेन विधीयतइति'। कार्यातिदेशपक्ष इदमुक्तम्। शास्त्रातिदेशे तु यद्यप्याम्रेडितानुदात्तत्वमेव परं तथापि न तद्भवति, विरुद्धस्य स्वाश्रयस्यातिदेशेन निवर्त्तनात् ॥

"प्रकारे गुणवचनस्य" ॥ 'प्रकारो भेदः सादृश्यं चेति'। उभयत्रापि प्रकारशब्दस्य दृष्टत्वात्, भेदे तावद्बहुभिः प्रकारैर्भुङ्क्ते, बहुभिर्भेदैर्विशेषैरिति गम्यते, सादृश्ये ब्राह्मणप्रकारोऽयं माणवकः, ब्राह्मणसदृश इति गम्यते। 'तद्विद्येति'। तदिति वाक्योपन्यासे, अव्ययं वा सप्तम्यर्थवृत्ति, तत्रेत्यर्थः। 'सादृश्यं प्रकारो गृह्यतइति'। द्विरुक्तात्त-

१ भावे घञित्यारभ्य प्रयोक्तृधर्मत्वे इत्येतत्पर्यन्तो ग्रन्थो नास्ति २ पु॰।

२ कोपधाया अपि हि पुंवद्भावात्पुंवत्कर्मधारयेति पुंवद्भावो भवतीति मु॰ मू॰ पा॰।

स्यैव प्रतीतेः। अत्र चाभिधानस्वाभाव्यं हेतुः। 'प्रकारे वर्त्तमानस्येति'। द्विर्वचनप्रवृत्तिद्वारेण तद्द्योतनात्तत्र वृत्तिः। 'अपरिपूर्णगुण इत्यर्थ इति'। कथमेतदित्याह। 'परिपूर्णगुणेनेति'। यस्य पूर्णं पाटवं यः पटुकार्याणि करोति तेन यदा न्यूनपाटवमुपमीयते तदा पटुपटुरिति प्रयोगो भवति, तेनार्थादपरिपूर्णगुण इत्यर्थो भवति। 'जातीयरोनेन द्विर्वचनेन बाधनं नेष्यतइति'। तद्विधौ द्विविधस्यापि प्रकारस्य ग्रहणं मन्यते, स्यादित्यस्तु तत्राह, सामान्यस्य भेदको विशेषः प्रकार इति, इष्टिश्चेयम्। अन्यथा ब्राह्मणजातीय इत्यादावगुणवचने पटुजातीय इत्यादौ गुणवचनेपि सादृश्यादन्यत्र भेदे चरितार्थस्य जातीयरो गुणवचनेषु सादृश्ये बाधः स्यात्। 'पटुर्देवदत्त इति'। परिपूर्णगुणएवात्र पटुशब्दो वर्त्तते न तत्सादृश्याच्यूनगुणे। 'अग्निर्माणवक इति'। अग्निशब्दो वह्नौ वृत्तः सोयमतिसादृश्यनिमित्तादभेदोपचारान्माणवके वर्त्ततइति द्रव्ये पूर्ववृत्तः संप्रत्यपि द्रव्यवचन इति गुणवचनो न भवति, एवं गौर्वाहीक इत्यत्र गोशब्दः सास्नादिमति वर्तित्वा वाहीके वर्तमानः। नन्वग्निशब्दोग्निगततैक्ष्ण्यं माणवके प्रतिपादयितुं प्रयुज्यतइति गुणवचन एव, तथा गोशब्दोपि सास्नादिमद्गतजाड्यप्रतिपादनाय वाहीके प्रयुज्यतइति गुणवचन एवेत्यत आह। 'यद्यप्यत्राग्निशब्द इति'। अग्निशब्दो माणवके प्रयुज्यमानो यादृशमग्नेस्तैक्ष्ण्यं परश्वादिभ्यो व्यावृत्तं तदेव प्रतिपादयति न तैक्ष्ण्यमात्रमिति। गोशब्दोपि यादृशं गवां जाड्यं मनुष्येभ्यो व्यावृत्तं तदेव प्रतिपादयति, आश्रयविशेषसंबन्धाद्धि तैक्ष्ण्यजाड्यादिकं भिद्यते, तदेतदाह। 'मुख्यार्थसंबन्धादवधृतभेदं तैक्ष्ण्यजाड्यादिकमिति'। शब्दान्तरसंनिधिमन्तरेण शब्दश्रवणमात्राद्योर्थः प्रतीयते स मुख्यः। विपरीतो गौणः, अवधृतभेदं, निश्चितभेदम्। आदिशब्देन पैङ्गल्यभारवहनादेर्ग्रहणम्। अर्थान्तरे, गौणे माणवके वाहीके च। 'सर्वदा गुणवचनो न भवतीति न द्विरुच्यतइति'। प्रकारे वर्तमानस्येत्येव गुणवचनत्वे सिद्धे पुनर्गुणवचनग्रहणात्सर्वदा गुणवचनस्येत्याश्रीयते, न चायं सर्वदा गुणवचनः प्राक् प्रकाराद् द्रव्यवचनत्वात्। अत्र केचित्। गुणमुक्तवान् गुणवचन इति

गुणोपसर्जनद्रव्यवचनस्य द्विर्वचनमिच्छन्ति। अन्ये तु गुणवचनस्य गुणिवचनस्य चाविशेषेणेच्छन्ति, शुक्लशुक्लं रूपं शुक्लशुक्लः पट इति नवंनवं प्रीतिरहो करोतीत्यत्र वीप्सायां द्विर्वचनम्, अनेन तु द्विर्वचने सुब्लोपप्रसङ्गः, यथा नवनवावनवायुभिरादध[1] इति। 'मूलेमूलइति'। एकस्य वस्तुनो वेणुदलादेरेकमेव मुख्यमयं मूलं च इतरेषां तु भागानामापेक्षिको मूलव्यपदेशः, स्थौल्यसौक्ष्म्ये अपि नैकरूपे किं तर्हि यथामूलमुपचीयते स्थौल्यं यथाग्रं च सौक्ष्म्यमिति वीप्साया अत्रासंभवः। इह[2] मूलेमूले पथि विटपिनामिति वीप्सायामेव द्विर्वचनम्। 'स्वार्थे इति'। अर्थान्तराभावप्रदर्शनार्थमिदमुक्तम्। 'अस्मात्कार्षापणादिति'। अनेकमाषसमुदायः कार्षापणं तत्र न सर्वे माषा दानक्रियया व्याप्यन्ते किं तर्हि द्वावेवेति वीप्साया अभावः। ननु यथा द्वावेव माषौ निर्ज्ञातौ दानक्रियया व्याप्येते तदा माषंमाषं देहि इति वीप्सायां द्विर्वचनं भवति, एवमनेकमाषसमुदायादपि कार्षापणाद् द्वयोरेवास्ति दानक्रियाव्याप्तिः। नैवम्। तत्र हि संनिहितस्यार्थस्य न कस्य चिद्वर्जनमस्ति इह तु वर्जनमस्ति यतो माषंमाषमसौ दत्वा शेषं पृच्छति किमनेन क्रियतामिति, तदिदमुक्तम्। 'अत्र हीति'। 'माषं देहि द्वौ माषौ देहि त्रीन्माषानिति'। अनेन यथेच्छं देहीति विवक्षया अवधारणाभावं दर्शयति। 'चापल इति'। प्रयोक्तृधर्मोऽयं तस्मिन् द्योत्ये सुबन्तस्य तिङन्तस्य च सर्वस्य वाक्यगतस्य पदस्य द्विर्वचनं नावश्यमिति नेदं शास्त्रीयं द्विर्वचनं किं तर्हि परप्रत्यायनायानेकस्य स्वतन्त्रपदस्य प्रयोग इत्यर्थः, एवं च कृत्वा आम्रेडितानुदात्तत्वाभावाद्यथाप्राप्तः स्वरो भवति। 'क्रियासमभिहारइति'। लोडन्तस्यैवेदं द्विर्वचनं न यङन्तस्य, लोटः समुच्चयेऽपि विधानात् क्रियासमभिहाराभिव्यक्तौ केवलस्य सामर्थ्याभावात्, यङ् तु क्रियासमभिहारविषयएवेति तद्द्योतने स्वयं सामर्थ्यान्नापेक्षते द्विर्वचनम्। 'आभीक्ष्ण्यइति'। पूर्वेण वाक्येन क्रियासमभिहारसंशब्दनेन यो विहि-

१ रादध इति ई॰ पु॰ पाठः।
२ तु इत्यधिकं ई॰ पु॰।

तस्तदन्तस्यैव द्विर्वचनमिति शङ्कमानं प्रत्यस्य वाक्यस्योपन्यासः। 'नित्यइत्येव सिद्धमिति तत्रोक्तमिति'। नित्यवीप्सयोरित्यत्र हि क्त्वाणमुलोर्लोटश्च द्विर्वचनसापेक्षाणामेव पौनःपुन्यप्रकाशने शक्तिरित्युक्तम्। अन्ये त्वाहुः। पुनःपुनःक्रियाया उत्पादनमाभीक्ष्ण्यं, तथाहि। भुक्त्वाभुक्त्वा व्रजतीत्युक्ते सत्यपि क्रियाया विच्छेदे पुनर्भुङ्क्ते पुनः पुनःपुनर्व्रजतीति क्रियावृत्तिः प्रतीयते, नित्यता तु क्रियाया अविच्छेदः, यथा जीवतिजीवतीत्युक्ते जीवत्येवायमिति प्र[1]तीयते न त्वसौ जीवित्वा म्रियते मृत्वा च जीवतीति जीवनमेव त्वविच्छिन्नं प्रतीयते तस्मादाभीक्ष्ण्यं नित्यमिति भि[2]न्नावेतावर्थाविति। अपर आह। भुक्त्वा व्रजतीत्यादौ क्त्वाणमुलन्तस्य तिङन्तस्य च द्विर्वचने प्राप्ते आभीक्ष्ण्यसंशब्दनेन यो विहितस्तदन्तस्य यथा स्यात्तिङन्तस्य मा भूदिति नियमार्थमिदमिति। 'डाचीति'। विषयसप्तमीयं, तेनानुत्पन्नएव डाच्यकृतटिलोपस्य पटद्दित्यादेर्द्विर्वचनं, ततो 'ऽव्यक्तानुकरणादि' ति डाचि टिलोपः, नित्यमाम्रेडिते डाचीति पररूपत्वम्। अपर आह। इदमेवाच्छब्दस्य पररूपविधानं लिङ्गं डाचीति परसप्तम्यामपि टिलोपात्पूर्वं द्विर्वचनं भवतीत्यस्यार्थस्येति। तदसत्। पतद्दित्यादौ टिलोपादुत्तरकालमप्यच्छब्दस्य संभवात्। 'द्वितीया करोतीति'। कृञो द्वितीयेत्यादिना डाच्, तर्हि डाचि द्विर्वचनं वक्तव्यं, न वक्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति डाच्यव्यक्तानुकरणस्य द्विर्वचनं भवतीति, यदयं नित्यमाम्रेडिते डाचीति पररूपत्वं शास्ति। 'पूर्वप्रथमयोरिति'। पूर्वप्रथमइत्येतयो द्विर्वचनं भवति, क्व, अर्थातिशयविवक्षायाम्। अनयोर्योर्थस्तस्यातिशये विवक्षिते। 'आतिशायिकोपि दृश्यतइति'। द्विर्वचनेन बाधे प्राप्ते वचनम्, अतिशयशब्दोऽनुशतिकादिषु द्रष्टव्यः, केचित्त्वर्थभेदादातिशायिकस्याबा[3]ध्यत्वमाहुः। तथाहि। पूर्वतरं भुङ्क्ते इत्युक्ते किमात्मसाध्यक्रियान्तरापेक्षं भोजनस्य पूर्वत्वमथ भोक्रान्तरसाध्यभोजनक्रि-

---

१ 'प्रतीयतइत्यारभ्य तस्मादाभीक्ष्ण्यं नित्य' मित्येतत्पर्यन्त पाठ इं० पु० नास्ति।
२ द्वावेतावर्थाविति इं० पु० पाठः।
३ बाधमाहुरिति इं० पु० पाठः।

यापेक्षमिति संदेहो भवति, एवं पूर्वतरं पुष्पयतीत्युक्ते ऽयमर्थोगम्यते, न तावदेष किसलयितो यावदेष पुष्पयतीति, पूर्वं पूर्वं पुष्पयतीत्यस्मात्त्वन्येभ्यः पुष्पितृभ्योतिशयेन पूर्वं पुष्पयतीत्यर्थः प्रतीयते । 'इतरइतमयोरिति' । इतरइतमान्तस्य द्वे भवतः, समेनाढ्यत्वादिना धर्मेण संप्रधारणायां विषये । 'स्त्रीनिगदे भाव इति' । भावो भूतिः, संपत्, आढ्यता, निगद्यत इति निगदः, नौ गदेत्यादिना कर्मण्यप्, स्त्रीशब्देन स्त्रीलिङ्गः शब्दोभिधीयते, स्त्रिया निगदः, कर्तरि षष्ठ्याः समासः, स्त्रीलिङ्गशब्दाभिधेयायां भूतौ वर्तमानस्येत्यर्थः । 'कतराकतरा अनयोराढ्यतेति' । किं साधनसंपत्कृता उत भाग्यकृतेति प्रश्नार्थः । 'कर्मव्यतिहारइति' । क्रियाव्यतिहारे इत्यर्थः, तत्र द्विर्वचनं नित्यं समासवद्भावस्तु बहुलं, तत्रान्योन्यशब्दे समासवद्भावाभावात्सुब्लुक् समासान्तोदात्तत्वं च न भवति । आम्रेडितानुदात्तत्वं भवति, इतरेतरशब्दे तु नित्यः समासवद्भाव इति सुब्लुक्समासस्वरौ भवतः । 'अन्योन्यमिति' । द्वितीयैकवचनान्तस्य द्विर्वचनम् । 'अन्योन्यस्येति' । षष्ठ्येकवचनान्तस्य, अन्योन्यसंबन्धिनः पुत्रादीनित्यर्थः । 'स्त्रीनपुंसकयोरिति' । उत्तरपदस्याया विभक्तेराम्भावोन्यथा नेकालत्वात्स सर्वस्योत्तरपदस्य स्यात्, तत्र सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पूर्वोत्तरपदयोर्द्वयोरपि पुंवद्भावे कृते पक्षे आम्विधिः, अन्याशब्दस्य तु द्विर्वचने समासवद्भावाभावाद्बहुलवचनात्स्त्रियां टापो निवृत्तिः, नपुंसके चाद्डुतरादिभ्य इत्यस्य निवृत्तिः, वार्त्तिकेषु कर्मधारयवदिति न संबध्यतइति सुब्लुगादि न भवति ॥

"अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्" ॥ 'प्रियप्रियेणेति' । तृतीयैकवचनान्तस्य द्विर्वचने कर्मधारयवद्भावात्सुब्लुकि पुनस्तदेव वचनम् । अत्यन्तदयितमपि वस्त्वनायासेन ददातीत्यर्थः ॥

"यथास्वे यथायथम्" ॥ यथास्वइति यथासादृश्यइति वीप्सायामव्ययीभावः, स्वशब्द आत्मवचन आत्मीयवचनो वेति दर्शयति । 'यो य आत्मेति' । ज्ञातिधनवचनस्य तु ग्रहणं न भवति, द्विर्वचनस्य तत्रासमर्थत्वात् ॥

"द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु" ॥ 'पूर्वपदस्येति'। द्वि औ द्वि औ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवभूतस्येकारस्याम्भावः, उत्तरपदाव[1]यवस्य चात्वं निपात्यते, चकारावपुंसकत्वं क्वचिदेकवद्भावश्च निपात्यते, समासान्तोदात्तत्वं तु कर्मधारयवद्भावाद्भवति। 'तत्र रहस्यं द्वन्द्वशब्दवाच्यमिति'। द्वाभ्यां निर्वृत्ते रहस्ये योगरूढिरेषेत्यर्थः, । 'द्वन्द्वं मन्त्रयन्तइति'। द्वौ द्वौ भूत्वा मन्त्रयन्तइत्यर्थः। एवं हि तद्रहस्यं भवति। 'आचतुरमिति'। आङभिविधौ, चतुर्णां पूरणे चतुःशब्दो द्रष्टव्यः, आचतुर्थादित्यर्थः। 'द्वन्द्वं मिथुनीयन्तीति'। मिथुनशब्देन मैथुन तत्कर्म लक्ष्यते, तदिच्छन्तीति क्यच्, प्रायेण मिथुनायन्तइति क्यङन्तं पठ्यते, तत्रोपमानार्थो मृग्यः, माता पुत्रेणेत्यादिना मर्यादावचने व्यनक्ति। 'तत्पुत्रेणापीति'। एतावदेव पशूनामायुः। 'द्वन्द्वं व्युत्क्रान्ता इति'। द्वौ पक्षौ भूत्वा पृथगवस्थिता इत्यर्थः। स्वार्थे द्विर्वचनमेकवद्भावश्चेति। द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति, सादयति न्यञ्चि न्यग्भूतानि अधोबिलानि द्वन्द्वं स्फ्यश्च कपालानि चेति द्वेद्वे इत्यर्थः। अत्र वीप्सायां द्विर्वचनम्, अम्भावादि, एकवद्भावश्च। 'द्वावभिव्यक्तौ साहचर्येणेत्यर्थ इति'। अत्र स्वार्थे द्विर्वचनमेकवद्भावादिकं सर्वं निपात्यते। 'द्वन्द्वं युद्धमिति' अत्रापि वीप्सायां द्विर्वचनम्। 'द्वन्द्वानि सहन्तइति'। शीतमुष्णं चेत्येकं द्वन्द्वं, सुखदुःखे चापरं,क्षुत्तृष्णे चापरम्, अत्रापि स्वार्थे द्विर्वचनमेकवद्भावादि, तत्रैकशेषवशाद्बहुत्वम्। 'चार्थे द्वन्द्वइति'। द्वे चार्थनिर्दिष्टे पदे समस्ते द्वन्द्वः, अत्रापि स्वार्थे द्विर्वचनादि, पुंस्त्वं च ॥

"पदस्य" ॥ 'प्रागपदान्ताधिकारादिति'। अपदान्तस्य मूर्द्धन्यइत्यत्र तु प्रकरणे विरोध्युपादानान्नाधिक्रियते। 'पचन्तौ यजन्ताविति'। संयोगान्तस्यापि लोपो न भवति, एवं राजानावित्यत्र नलोपो न भवति, प्रशामावित्यादौ मो नो धातोरिति नत्वं न भवति। अनन्तरेषु योगेष्वामन्त्रितादेः सुबन्तस्य तिङन्तस्य च पदस्यैव कार्यविधानात्तेषामुल्ल-

१ अवयवस्येति इं॰ पु॰ नास्ति।

हृनं,[1] न च समर्थपरिभाषोपस्थानं तेषु प्रयोजनम्, अन्तरेणाप्येतं वस्तुतः पदकार्यत्वादेव सिद्धेः, किं च समानवाक्ये निघातयुष्मदस्मदादेशा इति वक्ष्यते, कृत्वादीनि त्ववयवस्य भत्वेपि समुदायस्य पदत्वाश्रयेणेष्यन्तएव, वक्तरि दोग्धीति । तस्माच्च भसंज्ञकव्यावृत्तिरपि प्रयोजनं, षष्ठी स्थाने-योगेति वचनात्पदस्येति स्थानषष्ठी, ततश्च 'उदात्तस्वरितयोर्यणः स्वरि-तोनुदात्तस्य' त्यस्यायमर्थो भवति, उदात्तस्वरितयोर्यो यण् ततः परो योनु-दात्तस्तदन्तस्य पदस्य स्वरितत्वमलोन्त्यस्य भवतीति, ततश्चात्रैव स्यात् कुमार्याविति, कुमार्य इत्यत्र न स्यात्, सकारो ह्यत्र पदस्यान्तः, हल्स्वर-प्राप्तौ च व्यञ्जनमविद्यमानवद्भवति । एवमेकादेश उदात्तेनोदात्त इत्यत्रापि अयमर्थो भवति, उदात्तानुदात्तयोर्य एकादेशस्तदन्तस्य पदस्यालोन्त्यस्या-देशो भवतीति, ततश्चेहैव स्याद्वृत्ताविति, वृत्तानित्यत्र न स्यात्, नकारो ह्यत्र पदस्यान्त्य इत्याशङ्क्याह । 'वक्ष्यमाणवाक्यापेक्षयेति' । अयम-भिप्रायः । अधिकारोयं परार्थः, परिभाषापि परार्था, ततश्च गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायेन नात्र स्थानेयोगपरिभाषो-पतिष्ठते, यत्र त्वस्या अधिकारो वक्ष्यमाणेषु वाक्येषु तेष्वेवोपस्थानं, तत्र विशेषणविशेष्यभावे कामचारात्प्रणेकादेशस्वरयोः पदस्येत्यनुवृत्तं कार्यवि-शेषणार्थं न तु कार्यप्रतिपत्त्यर्थं, तेन पदावयवयोरनुदात्तैकादेशयोः स्व-रविधानादनन्त्ययोरपि भवति, संयोगान्तलोपादौ तु संयोगादिना पदस्य विशेषणात् स्थानषष्ठी, तस्मादुच्यमानानि वाक्यान्यपेक्ष्य पर्यालोच्य पद-स्येति षष्ठ्या अर्थो व्यवस्थाप्यः, न त्वेतत्सूत्र[2]पर्यालोचनयेति । व्यवस्था-मेव दर्शयति । 'क्वचिदिति' । [3]यद्येषा स्थानषष्ठ्येव स्यात् लोपः प्राति-पदिकान्तस्येत्यत्रान्तग्रहणमनर्थकं स्यात्, तद्धि पदान्तस्य यथा स्यात् पदावयवस्य माभूदित्येवमर्थं स्थानषष्ठ्यां त्वलोन्त्यस्येत्यस्य सिद्धत्वादन्त-ग्रहणमनर्थकं स्यात्, तस्मादन्तग्रहणात्क्वचिद्विशेषणषष्ठ्यपि विज्ञायते ॥

१ कृतमित्यधिकम् इं· पु· ।
२ मात्रेत्यधिकं इं· पु· ।
३ किञ्चेत्यधिकं इं· पु· ।

"पदात्" ॥ 'प्राक् कुत्सने च सुप्यगोत्रादावित्येतस्मादिति'। यदि त्वत्र पदादित्येतदनुवर्तेत यत्पचति पूतीत्यत्रैव तिङन्तस्य निघातः स्यान्न तु पचति पूतीत्यत्र ॥

"अनुदात्तं सर्वमपादादौ" ॥ 'यत्ते नियतमित्यादि'। अत्र मृत्यो इत्यस्य पादादौ निघाताभावः, [1]यदङ्ग दाशुषे त्वमित्येकः पादः, अग्ने इत्यपरः, अग्ने भद्रं करिष्यतीत्यादीनि चोदाहरणानि। 'इन्द्रो विश्वेश्वर इत्यादि'। अत्र युष्माकमस्माकमित्यनयोरादेशाभावः। 'ऋक्पादः श्लोकपादश्च गृह्यते इति'। विशेषानुपादानात्। अथ सर्वग्रहणं किमर्थं, यावतानुदात्तं पदमेकवर्ज्जमिति वचनादेकस्मिन्पदे एक एवोदात्तः स्वरितो वा संभवति, ये तु द्व्युदात्ता उभे वनस्पत्यादिषु युगपदिति न तेषामत्र प्रकरणे क्वचिदनुदात्तत्वं विधीयते। यदा तु तेषामामन्त्रितत्वं तदा द्व्युदात्तत्वमेव, इदं तर्हि प्रयोजनमनादेरप्युदात्तस्यानुदात्तत्वं यथा स्यात्, अन्यथा पदादित्यधिकारादादेः परस्येत्यादेरेव स्यात्ततश्च तिङ्ङतिङ इति इहैव स्यात्, देवदत्तः पचतीति, अत्र हि शप्तिपावनुदात्तौ, धातोः स्वरः, इह तु न स्यात्, देवदत्तः करोतीति, विकरणस्वरेण मध्योदात्तमेतत्पदं, सर्वग्रहणे तु सति पदस्य सर्वावयवोनुदात्तो भवतीत्यर्थः संपद्यते, लुटि प्रतिषेधात्सिद्धं, यदयं न लुडिति प्रतिषेधं शास्ति तज्ज्ञापयति नादेः परस्येत्येतदत्राश्रियतइति, न हि लुडन्तं किंचिदाद्युदात्तमस्ति, एवमपि ज्ञापकेनापवादे आदिविधावपनीते अलोऽन्त्यस्यैव स्यादुभौ कुरुत इत्यादौ, [2]अत्र लसार्वधातुकस्य प्रत्ययस्वरेणान्तोदात्तत्वं विकरणस्य तु निघातः, न तु विकरणस्वरः सति शिष्टोपि सार्वधातुकस्वरं बाधते, तासेः लसार्वधातुकानुदात्तत्वविधानेन ज्ञापनात्, एवं तर्हि लृटि प्रतिषेधात्सिद्धं, यदयं मत्यर्थलोटा लृण् न चेदिति लृडन्तस्य प्रतिषेधं शास्ति तज् ज्ञापयति नात्रालोऽन्त्यस्येत्येतदत्राश्रियतइति, न हि लृडन्तं किंचिदन्तोदात्तमस्ति, अदुपदेशात्परं लसार्वधातुकं निहन्यते, नैतदस्ति

[1] यदङ्ग दाशुषे त्वमिति इं॰ पु॰ नास्ति।
[2] 'अत्र लसार्वधातुकस्येत्यारभ्य भवन्तीति' पर्यन्त इं॰ पु॰ पाठो नास्ति।

ज्ञापकमिडर्थमेतत् स्यात् भोस्यइति। एतद्धैकादेशस्वरेणान्तोदात्तम्। एवं तर्ह्युक्तमेतत्पदस्येति क्व चिद्विशेषणषष्ठ्यपि भवति न स्थानषष्ठ्येवेति, ततः किमनुदात्तविधौ विशेषणषष्ठ्याश्रयिष्यते, तत्सामानाधिकरण्यात्तिङिति षष्ठ्यर्थे प्रथमा, तिङन्तस्य पदस्यावयवो ऽजनुदात्तो भवतीत्यर्थः, तत्र स्थानषष्ठ्यभावादलोऽन्त्यस्येति न प्रवर्तते, तस्मात्वार्थः सर्वग्रहणेनेत्यत आह। 'सर्वग्रहणमित्यादि'। असति सर्वग्रहणे यत्र विधेयान्तरं नास्त्यामन्त्रितस्येत्यादौ तत्रैवानुदात्तत्वं विधीयेत तत्र ह्येतद्विधानार्थमामन्त्रिताद्यनूद्यते, विधेयान्तरसद्भावे तु न तस्यानुदात्तत्वं विधायेत, वाक्यभेदप्रसङ्गात्। तथाहि। सिद्धस्य वस्तुनो धर्मान्तरं शक्यते विधातुं नासिद्धस्य, नह्यसति कुड्ये चित्रकर्म, ततश्च वांनावादय एकेन वाक्येन विधेयाः, अपरेण च तेषामनुदात्तत्वमिति वाक्यभेदः, विशिष्टविधानेऽप्यनेकार्थविधानाद्विधिगौरवलक्षणो वाक्यभेदः स्यादेव, संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते, सति तु सर्वग्रहणे तत्सामर्थ्याद्वाक्यभेदः सह्यतइत्याह। 'तेनेति'। प्रयोजनान्तरमाह। 'युष्मदस्मदादेशाश्च सर्वस्य सुबन्तस्य यथा स्युरिति'। अन्यथा केवलयोर्यु[1]ष्मदस्मदोरेव स्युः, षष्ठ्येकवचने ङसोऽशि ङसिङसोश्चेति पूर्वैकादेशे यद्यपि दोषाभावस्तथापि वचनान्तरे दोषप्रसङ्गः, सर्वग्रहणे तु सति युष्मदस्मद्भ्यां तदवयवकं पदं लक्ष्यतइति सर्वस्य पदस्य वांनावादयो भवन्तीति। ननु च पदस्येति वर्तते, विभक्त्यन्तं च पदं, तत्रान्तरेणापि सर्वग्रहणं विभक्त्यन्तस्य भविष्यतीत्यत आह। 'यत्रापीति।' भवेदेवं यत्र विभक्त्यन्तं पदं यत्र तु विभक्तौ पदं तत्र युष्मदस्मदोरेव प्रसङ्ग इत्यर्थः। 'ग्रामो वां दीयतइति'। चतुर्थीद्विवचने, स्वादिष्विति पूर्वं पदं भवति॥

"आमन्त्रितस्य च"॥ 'सर्वमनुदात्तं भवतीति'। आमन्त्रितसंबन्धिनः सर्वे ऽचो ऽनुदात्ता भवन्तीत्यर्थः। एतच्चानुवृत्तस्य सर्वशब्दस्यान्वयमात्रं प्रदर्शितं न त्वत्रास्योपयोगः कश्चित्। 'समानवाक्यइ-

[1] युष्मदस्मदोरेव स्युरित्यारभ्य सर्वग्रहणे सति त्वित्येतत्पर्यन्तः इं॰ पु॰ पाठो नास्ति।

त्यादि'। अर्थैकत्वादिकं लौकिकं वाक्यलक्षणम्, इह तु पारिभाषिकं वाक्यम्। आख्यातं साव्ययकारकविशेषणं वाक्यमिति, आख्यातमित्येकत्वं विवक्षितं, निमित्तनिमित्तिनोः समानएकस्मिन्वाक्यआधारभूते सति निघातादयो भवन्तीति वक्तव्यं, किमर्थमित्याह। 'इहेति'। भवतीह विष्णुमित्रो देवदत्तागच्छेति वाक्यद्वयमेतत्तिङन्तद्वययोगात्, तत्र देवदत्तेत्यस्यामन्त्रितस्य निघातो न भवति। ननु च पदविधिरयं ततश्चासामर्थ्यादेवात्र न भविष्यति, अस्त्यत्र सामर्थ्यं विष्णुमित्रमन्त्विष्यान्यत्र गच्छन्तं देवदत्तं प्रतीदमुच्यते, ततश्च विष्णुमित्रस्येह भवनं देवदत्तागमनस्य निमित्तत्वेनोच्यतइत्यस्ति व्यपेक्षा, क्वचिदेतदुदाहरणं न पठ्यते। 'अयं दण्ड इति'। अस्तीति गम्यमानत्वादेतावदेकं वाक्यम्। अत्राप्यनेनेति सर्वनाम्ना परामृष्टस्य दण्डस्य करणत्वादस्ति सामर्थ्यमिति तिङन्तस्य निघातप्रसङ्गः। 'ओदनं पचेति'। त्वत्कर्तृकत्वेन त्वत्स्वामिको मत्स्वामिकश्चौदनो भविष्यतीत्येवं पाकस्य युष्मदस्मदर्थस्य च व्यपेक्षाऽस्तीत्यादेशप्रसङ्गः, एवमतिप्रसङ्गपरिहारः प्रयोजनमित्युक्तम्। इदानीमव्याप्तिपरिहारोपि प्रयोजनमित्याह। 'इह चेति'। किं पुनः कारणमेषूदाहरणेषु निघातादयो न स्युरित्यत आह। 'आमन्त्रितान्तमित्यादि'। इह स्थिता मातेत्यन्वयो न त्विह देवदत्तेति, नद्याः कूलमित्यन्वयो न नद्यास्तिष्ठतीति, शालीनामोदनमित्यन्वयो न शालीनां ते इति, ततश्चासामर्थ्यान्न स्युरित्यर्थः॥

"युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ"॥ 'द्विवचनान्तयोरेवेति'। तेन वचनान्तरेणोदाहृतमिति भावः। स्थग्रहणमनर्थकं षष्ठ्यादिष्वादेशविधानादेव तात्स्थ्यसिद्धेरित्यत आह। 'स्थग्रहणमिति'। श्रूयमाणविभक्तिकयोरेवादेशा यथा स्युर्लुप्तविभक्तिकयोर्मा भूवन्नित्यर्थः। श्रूयमाणायां हि विभक्तौ तत्स्थत्वं भवति न पुनर्लुप्तायां, प्रत्ययलक्षणेनापि कार्यं शास्त्रं वाऽतिदिश्यते न तात्स्थ्यं, यदि वा तिष्ठतिरयमविस्थानावपि दृष्टः, यथा समये तिष्ठ सुग्रीवेति, समयं मा विहासीरित्यर्थः, तेनायमर्थः, षष्ठीचतुर्थीद्वितीया अजहतोर्युष्मदस्मदोरादेशा भवन्तीति।

'इति युष्मत्पुच इति'। इतिशब्दात्पदात्परयोः षष्ठ्यन्तयोर्युष्मदस्मदोः प्रत्ययलक्षणेन वा[1]चावौ न भवतः ॥

"न चवाहाहैवयुक्ते" ॥ चः समुच्चये, वा विकल्पे, ह अहेत्यद्भुते, ह खेदे च, एवोऽवधारणे। 'एभियुक्तइति'। एभिर्योगे सतीत्यर्थः। यद्वा एभिर्युक्ते युष्मदस्मदोरर्थे इत्यर्थः। युक्तग्रहणमनर्थकं तृतीयानिर्देशत एव सिद्धं, यथा तुल्यार्थैरतुलोपमाभ्यामित्यत्रेत्यत आह। 'युक्तग्रहणमिति'। यदा युष्मदस्मदर्थं[2]तान्समुच्चयादींश्चादयो द्योतयन्ति तदा तैस्तयोः साक्षाद्योगः; तत्रैवायं प्रतिषेधो यथा स्यात् युक्तयुक्ते माभूदित्येवमर्थं युक्तग्रहणमित्यर्थः। एतदेव युक्तग्रहणं लिङ्गम्। अत्र प्रकरणे युक्तयुक्तस्यापि ग्रहणमिति, तेनोत्तरः प्रतिषेधो युक्तयुक्ते[3]षु भवति ॥

"पश्यार्थैश्चानालोचने" ॥ दर्शनं पश्यः, अस्मादेव निपातनाद् भावे शप्रत्ययः, पाघ्रादिसूत्रेण पश्यादेशः, पश्योऽर्थो येषां ते पश्यार्थाः, तदाह। 'पश्यार्था दर्शनार्था इति'। यदि तु 'पाघ्राध्माधेट्दृशः श'इति कर्तरि शप्रत्ययः स्यात्, ततो द्रष्टृर्थैरित्यर्थः स्यात्, तथा चालोचनपर्युदासो ऽनर्थकः स्यात्, नह्यालोचनार्था द्रष्ट्रर्था भवन्ति। 'दर्शनं ज्ञानमिति'। यद्यपि दृशिश्चक्षुर्विज्ञाने प्रसिद्धस्तथापि तस्य पर्युदासात् ज्ञानमात्रे दृशिरिह वर्त्ततइत्यर्थः। ग्रामो जनसमुदायः, समीक्ष्य, मनसा निरूप्येत्यर्थः ॥

"सपूर्वायाः प्रथमाया विभाषा" ॥ 'विद्यमानपूर्वादिति'। तेन सहेति तुल्ययोगइत्यत्र तुल्ययोगइत्युपाधेः प्रायिकत्वाद्विद्यमानवचनस्यापि सहशब्दस्य समासः, वोपसर्जनस्येति सभावः। 'युष्मदस्मदोर्विभाषाऽनन्वादेशइति'। येयं युष्मदस्मदोर्विभाषा सा ऽनन्वादेशे भवति, अन्वादेशे तु नित्यमादेशविधिरित्यर्थः। 'अपर आहेति'।

---

१ वस्नसौ न भवत इति कं॰ पु॰ पाठः।

२ गतान् समुच्चयादीनित्यारभ्य युक्तग्रहणमित्यर्थ इत्येतत्पर्यन्तं पाठो नास्ति कं॰ पु॰।

३ युक्तयुक्तेपीति कं॰ पु॰ पाठः।

पूर्वस्यैव वाक्यस्य व्याख्यानान्तरं, पूर्वं विभाषाऽनुवादेन विषयो निय-म्यतइत्युक्तमिदानीं तु विशिष्टे विषये विकल्प एव विधीयते इत्युच्यते, न केवलं सूत्रोक्तविषये ये प्राप्तास्तएव विकल्प्यन्ते, अपि तु सर्वे सर्व-विषया इत्यर्थः । 'न तर्हीति' । वक्तव्येनैव सिद्धत्वादिति भावः । 'अन्वादेशार्थमिति' । ननु पूर्वमन्वादेशे सूत्रं न व्याप्रियतइत्युक्तमि-दानीं तु तत्रैव व्याप्रियतइत्युच्यते तत्को ऽत्र निर्णय इत्याह । 'त[1]द्व-यमिति' । तदिति तत्रेत्यर्थं । वाक्योपन्यासे वा, पूर्वा व्याख्या परया व्याख्यया बाध्यतइत्यर्थः ॥

"तिङो गोत्रादीनि कुत्सनाऽऽभीक्ष्ण्ययोः" ॥ 'पचति गोत्रमिति'। पचिर्व्यक्तीभावे, यथा लोकपक्तिरिति, भोजनाद्यर्थं गोत्रं ख्यापयतीत्यर्थः, एवं हि कुत्सा भवति । 'पचतिपचति गोत्रमिति' । विवाहादिवि-षये पुनःपुनर्गोत्रं ख्यापयतीत्यर्थः, तत्र कुत्साया अभावादाभीक्ष्ण्य-ग्रहणं, नित्यवीप्सयोरिति द्विर्वचनं, ब्रुवशब्दः कुत्सितवचनः, अत एवा-स्याभीक्ष्ण्ये पृथगुदाहरणं न प्रदर्शितं, पचति प्रवचनमित्यादावात्मप्र-शंसया कुत्सः, प्रवचनमध्यापनम् । वा नामेति गणसूत्रं व्याचष्टे । 'नामेत्येतदिति' । 'पचति पापमिति' । पापमिति क्रियाविशेषणम् । 'खनति गोत्रं समेत्य कूपमिति' । गोत्रं कुलं समुदितं भूत्वा कूपं खन-तीत्यर्थः । किमिदं कुत्सनाऽऽभीक्ष्ण्यग्रहणं गोत्रादीनां पाठविशेषणम् । एतयोरर्थयोर्गोत्रादीनि भवन्ति तानि च तिङः पराण्यनुदात्तानि भव-न्तीति, आहोस्विदनुदात्तविशेषणं तिङः पराणि गोत्रादीनि अनुदात्तानि भवन्त्येतयोरर्थयोरिति, अस्मिन्वि[2]वादे निर्णयमाह । 'कुत्सनाभीक्ष्ण्य-ग्रहणं चेति' । पठ्यतइति पाठः, संनिवेशविशेषः, तस्य विशेषणं वेदि-तव्यम् । अयं चार्थो योगविभागाल्लभ्यते, तिङो गोत्रादीनीत्येको योगो ऽनुदात्तविधानार्थः, कुत्सनाभीक्ष्ण्ययोरिति द्वितीयो योगः, गोत्रादीनी-त्येव, परिभाषेयम् । इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव

---

१ तद्वयमिति मु० मू० पु० नोपलभ्यते ।
२ विचारे इति इं० पु० पाठः ।

याद्याणीति, तेन किं सिद्धं भवतीत्यत आह । 'तेनेति' । 'अन्यत्रा-पीति' । 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः,' 'कुत्सने च सुप्य-गोत्रादा'वित्यत्र ॥

"तिङ्ङतिङः" ॥ 'भवति पचतीति' । पचतीत्येतद्भवति, पाक-क्रिया भवतीत्यर्थः । तत्र साध्यसाधनभावेन द्वयोः क्रिययोरन्वयाद-स्ति सामर्थ्यं, यथोक्तं पच्यादिक्रिया भवतिक्रियायाः कर्त्री भवन्तीति, तत्र पाकस्य स्वसाधनानि प्रति साध्यस्यापि भवनं प्रति सिद्धत्वं यथाह भर्तृहरिः ॥

तत्र यं प्रति साध्यत्वमसिद्धं तं प्रति क्रिया ।
सिद्धा तु यस्मिन्साध्यत्वं न तमेव पुनः प्रति ॥

इति । अस्त्येतत्कि तर्हि तिङ्ग्रहणमनर्थकं समानवाक्याधिकारात्, समानवाक्यइति वर्त्तते, न चैकस्मिन्वाक्ये तिङन्तद्वयमस्ति, तदुक्तं पुर-स्तात्, सूत्रकारेण तु समानवाक्याधिकारो न कृत इत्यतिङ्ग्रहणमकारि ॥

"न लुट्" ॥ 'श्वः कर्त्तेत्यादि' । अथात्र निघाते प्रतिषिद्धे कः स्वरः श्रूयतइत्याह । 'तासेःपरस्येति' ॥

"निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्" ॥

यद्यदार्थे च हेतौ च विचारे यदिचेच्चणः ।
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥
कच्चित्प्रश्ने नेचिषेधे प्रशंसायां कुवित्स्मृतम्[२] ।
यत्राधारे निपातत्वं यदादीनां विशेषणम् ॥
समासे गुणभूतानामपि गत्यन्तरं न हि ।
नैव वाऽयं समासः सुबव्ययत्वेन लुप्यते ॥

तत्र बहुधा नेच्चेदिति निपातसमाहारमधीयते, नेदेवमायुनज-यत्र देवाः । अन्यश्चेचाभिगच्छतीति । 'चेदर्थे वर्त्ततइति' । य एव

१ कुत्सने सुप्यगोत्रादावित्यत्र चेति इं॰ पु॰ पाठो नास्ति ।
२ कुवित्स्मृत इति इं॰ पु॰ पाठः ।

समुच्चयादिषु दृष्टश्चशब्दः स एव चेदर्थे[1] वर्त्तते, तदर्थवर्त्तिनस्तु चिह्नं णकारः, तथा च चादयो ऽनुदात्ता इत्ययं चेदर्थो ऽप्यनुदात्तः, इन्द्रश्च मृळयाति नः, ततः पश्चादघं नशत्, इन्द्रश्चेदस्मान्मृडयेत्, सुखयेदित्यर्थः, त्वं च शोम नो वशो जीवातुं न मरामहे, हे सोम त्वं चेदस्मान् जीवातुं जीवितुं वशः उश्याः कामयेथा इत्यर्थः। 'समुच्चयादिषु यश्चशब्द इति'। एष्वर्थेषु न भवतीत्यर्थः। उदाहरणेषु करोतिशब्दो विकरणस्वरेण मध्योदात्तः। 'भुङ्क्त इति'। उदात्तनिवृत्तिस्वरेणान्तोदात्तः। 'अधीतइति'। अनुह्निङोरिति लसार्वधातुकानुदात्तत्वप्रतिषेधादन्तोदात्तः। 'इणः शतरि रूपमिति'। इणो यणिति यणादेशः। ननु प्रतिपदोक्तत्वाद्यथादिभिः साहचर्याच्च निपातस्यैव य[2]हणं भविष्यति, एवं तर्ह्येतज्ज्ञापयति अत्र प्रकरणे नेदमुभयं व्यवस्थापकमिति, तेन यावद्यथाभ्यामित्यत्र यत्तदेतेतेभ्यः परिमाणे वतुबिति व्युत्पादितस्य लाक्षणिकस्यानिपातस्यापि यावच्छब्दस्य ग्रहणं भवति, ता[3]वदुषो राधो अस्मभ्यं, रास्व यावत्स्तोतृभ्यो अरदो गृणाना इति, यावतोऽश्वान्प्रतिगृह्णीयादिति च। 'यत्र क्व चेति'। अत्र यत्रेत्यस्य उत्तरमित्यनेन साक्षात्संबन्धः। 'दधस इति'। दध धारणेऽनुदात्तेत्, इह हन्ताऽहं पृथिवीमिमां निदधानीह वेह वा, हन्तो नु किमास से प्र[4]थमं नो रथं कृधि इति, छान्दसत्वाच्चिघातः॥

"नह प्रत्यारम्भे"॥ नहेति निपातसमाहारः प्रतिषेधे वर्त्तते, प्रत्यारम्भः पुनरारम्भः, तस्य विषयमाह। 'चोदितस्येति'। भुङ्क्ष्वाधीष्वेत्येवं चोदितस्य कर्त्तव्यतयोपन्यस्तस्य भोजनादेरवधीरणेऽवज्ञाते सति तस्यावधीरयितुरुपालिप्सया उपालब्धुमिच्छया तस्यैव भोजनादेः प्रतिषेधेन संबन्धः प्रत्यारम्भः, पुनरुपन्यासः क्रियते[5] इति यावत्॥

---

१ अपीत्यधिकम् इं॰ पु॰।
२ यच्छब्दस्येत्यधिकम् इं॰ पु॰।
३ तावदुषो राधोत्यस्मभ्यं रास्वेति पाठ इं॰ पु॰ नास्ति।
४ प्रथमं नोरथं कधीति पाठ इं॰ पु॰ नास्ति।
५ इतियावदिति इं॰ पु॰ नास्ति।

"अङ्गाप्रातिलोम्ये" ॥ प्रातिलोम्यं प्रतिकूलकारित्वं ततोऽन्यद-भिमतकारित्वमप्रातिलोम्यम् । एवं चानुलोम्यइति वक्तव्यम् । अङ्गशब्द उदाहरणेनुज्ञायां, प्रत्युदाहरणे त्वमर्षे ॥

"हि च" ॥ हिशब्दोऽवधारणे हेतौ वा, स च प्रत्युदाहरणे त्वमर्षे ॥

"छन्दस्यनेकमपि साकाङ्क्षम्" ॥ अत्र हेतुहेतुमद्भावस्य द्योतको हिरित्यनेकमपि तिङन्तं हियुक्तं भवति, तत्र पूर्वेण सर्वस्य निघातप्रति-षेधे प्राप्ते क्वचिदनेकस्य क्वचिदेकस्य यथा स्यादिति वचनं तदाह । 'कदाचिदिति' । तत्र छन्दसि दृष्टानुविधानाद्यथाप्रयोगं व्यवस्था । 'अनृतं हीति' । पाप्मा मद उच्यते, यस्मादसौ मत्तोऽनृतं वदति तस्मा-दनृतवदनदोषेण युज्यतइत्यर्थः । 'उदजयदित्याद्युदात्तमिति' । अत्रा-जयदित्याद्युदात्तमित्यर्थः । 'अजनिष्ट गर्भमिति' । अन्तर्भावितण्यर्थ-त्वाज्जनेरत्र सकर्मकत्वम् ॥

"यावद्यथाभ्याम्" ॥ यावत्साकल्ये ऽव्यवसाये वा, यथा यो-ग्यतादिषु यावद्यथाभ्यामिति तृतीयेति दर्शयितुं परभूतयोरपि प्रयोग उदाहृतः । तेनैतदपि न चोदनीयं यद्वृत्ताच्चित्यमित्येव यथाशब्दे याव-च्छब्दे च वतुबन्ते सिद्धः प्रतिषेध इति ॥

"पूजायां नानन्तरम्" ॥ द्वौ प्रतिषेधौ प्रकृतमर्थं गमयत इत्याह । 'किं तर्ह्यनुदात्तमिति' । 'यावद्देवदत्त इति' । ननु चोत्तरत्र नियमो विज्ञास्यते व्यवाये यदि भवति उपसर्गेणैवेति, एवं तर्ह्युत्तरत्रास्य प्रयोज-नम् । उपसर्गव्यपेतस्य यावद्यथाशब्दयोश्च मध्ये शब्दान्तरं माभूत्, अथ तु व्यवाये यदि भवति उपसर्गेणैवेत्यस्मादेव नियमात्तत्राप्रसङ्गः, ततोऽनन्तरग्रहणं शक्यमकर्त्तुम् ॥

"उपसर्गव्यपेतञ्च" ॥ व्यवायो व्यवधानम् । 'अनन्तरमित्येवे-ति' । तच्चानन्तर्यं सोपसर्गस्य न तिङन्तमात्रस्य ॥

"तुपश्यपश्यताहैः पूजायाम्" ॥ तुप्रभृतीनि पूजाविषयाणि । 'माणवस्तु भुङ्क्तइति' । आश्चर्यं तुशब्द इति भोजनस्य पूजा गम्यते, एवमन्यत्रापि । 'पश्य मृगो धावतीति' । तत्त्वकथनमेतत् । ननु

पूजायां नानन्तरमित्यतः पूजायामित्यनुवर्त्ततएव, तत्किं पूजायामित्यनेन, तत्राह । 'पूजायामिति वर्तमानइति'। 'तद्धीति'। ततश्च तदनुवृत्ताविहापि न लुडित्यादिके विषये प्रतिषेधस्य प्रतिषेधः स्यान्मा भूदेवं निघातस्यैव प्रतिषेधो यथा स्यादित्येवमर्थं पूजाग्रहणमित्यर्थः। किं च अनन्तरमित्येवं तदभूदिह त्वविशेषेणोच्यते ॥

"अहो च" ॥ 'पृथग्योगकरणमुत्तरार्थमिति'। उत्तरो योगोऽहोयोगएव यथा स्यात्तुप्रभृतिभिर्योगे मा भूत् ॥

"शेषे विभाषा" ॥ 'असूयावचनमेतदिति'। अनाश्चर्यभूतमेव वस्त्वसूयवाश्चर्यवत्प्रतिपादयतीत्यर्थः। शेषवचनं किम्। यावता योगविभागसामर्थ्यादेव पूर्वप्रकृतेषु किंचिन्नानुवर्त्ततइति ज्ञातं तत्र चानुकृष्टत्वात्पूजायामित्येतन्निवर्तिष्यते, अत आह। 'पूजायामित्यस्येति' ॥

"पुरा च परीप्सायाम्" ॥ 'पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयतीति'। भविष्यतो विद्योतनादेरध्ययनान्तरायभूतस्याचिरकालभावित्वं द्योतयति, तेनात्र त्वरा गम्यतइति भावः। विद्योतनादावध्ययनं धर्मशास्त्रे प्रतिषिद्धमतस्तदुपन्यासेन त्वरितमधीष्वेति गम्यतइत्यर्थः। उदाहरणे यावत्पुरानिपातयोरिति भविष्यदर्थे लट्, प्रत्युदाहरणे लट् स्मइति। 'अत्र भूतकालविप्रकर्षमिति'। भूतस्याध्ययनस्य चिरकालप्रवृत्तत्वं द्योतयति। तेन नात्र त्वरा गम्यतइति भावः ॥

"नन्वित्यनुज्ञैषणायाम्" ॥ किंचित्कर्त्तुं स्वयमेवोद्युक्तस्यैवं क्रियतामित्येवं रूपोऽभ्युपगमोऽनुज्ञा, सूत्रार्थमुदाहरणेन दर्शयति। 'करोषि ननीति'। उपलक्षणमेतत्, करणगमने प्रतीत्यर्थः। उदाहरणे वर्त्तमाने लट्, प्रत्युदाहरणे तु भूते ननौ पृष्टप्रतिवचनइत्येनेन, अङ्गाप्रातिलोम्यइत्यादिवत् सिद्धे इतिकरणं एकनिपातोऽयमिति दर्शनार्थः, अन्यथा द्वयोरपि निपातयोर्ग्रहणं संभाव्येत ॥

"किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्" ॥ 'अप्रतिषिद्धमिति'। अप्रतिषिद्धार्थमित्यर्थः। 'पूर्वं किंयुक्तमिति'। तत्समीपे किमः श्रूयमाण-

१ गमनं प्रतीति मु· मू· पाठः स पदमञ्जर्यसंमतः।

त्वात् । 'उत्तरं तु न किंयुक्तमिति'। विपर्ययात् । 'अपरेत्यादि'। न समीपे श्रूयमाणत्वं किंशब्देन संबन्धे हेतुः किं तु संशयविषयत्वं, तच्च द्वितीयस्याप्यस्ति अतस्तस्यापि तेन योग इत्युभयत्र प्रतिषेध इत्यर्थः । ये त्वाहुः पूर्वं किंयुक्तमिति ते मन्यन्ते, ऽस्तु द्वयोः संशयविषत्वं किंशब्देन तु समीपे श्रुतक्रियाविषय एव प्रश्नो द्योत्यते, क्रियान्तरविषयस्तु प्रश्न आहोस्विदित्यनेन, क्रियाप्रश्नइति चोच्यते, तस्मात्तस्यैव निघातप्रतिषेध इति ॥

"लोपे विभाषा" ॥ प्रकृतत्वात्किम एव लोपो विज्ञायतइत्याह । 'किमो लोप इति'। 'क्व चास्येति'। शास्त्रे क्वचिदपि किमो लोपस्याविहितत्वात्प्रश्नः। न शास्त्रीयस्यैवादर्शनस्य लोपसंज्ञा किं तर्ह्यदर्शनमात्रस्येत्युत्तरम् । 'यत्रेति'। 'न च प्रयुज्यतइति'। अर्थप्रकरणादिना गम्यमानत्वात्, उदाहरणे आहोस्विच्छब्दः पक्षान्तरप्रश्ने, स च नान्तरेण पूर्वप्रश्नमित्यर्थात्पूर्वत्र किमर्थो गम्यते तदाह । 'विनैव किमेति'। 'प्राप्तविभाषेयमिति'। कथं पुनः प्राप्तिर्यावता किंशब्देन योगे पूर्वो योगस्तत्राह । 'किमर्थेनेति'। 'पूर्ववत्प्रत्युदाहरणानीति'। तान्येव किंशब्दरहितानीत्यर्थः ॥

"एहिमन्ये प्रहासे लृट्" ॥ 'एहिमन्यइत्यनेनेति'। समुदायाभिप्रायमेकवचनम्, अन्यथा आख्याते द्वे आङ् चापर इति बहुवचनप्रसङ्गः,उदाहरणे प्रहासे च मन्योपपदइत्यादिना पुरुषव्यत्ययः। 'सुष्ठु च मन्यसइति'। भूतमर्थं दर्शयन् प्रहासाभावमाह, अत एव पुरुषव्यत्ययोऽपि न कृतः । 'गत्यर्थलोटा लृडित्येव सिद्धइति'। आङ्पूर्वादियो लोट्, सिपो हिः। 'अन्यत्र माभूदिति'। क्वान्यत्र माभूत्, वृत्तिकारेण यत्प्रत्युदाहृतम् एहि मन्यसइत्यादि, तत्र कथं पुनरेहिमन्यइत्यनेन योगनियमः क्रियमाण एहि मन्यसइत्यनेन योगे निवृत्तिं करोतीत्याह । 'उत्तमोपादानमतन्त्रमिति'। अतन्त्रत्वे कारणमाह । 'प्रहासएव हीति'। तन्त्रत्वे नियमस्य व्यावर्त्यं न संभवेदित्यर्थः । भाष्ये तु प्रत्युदाहरणे ऽप्युत्तम एव प्रयुक्तस्तत्रायमर्थः । एहि रथेन त्वं यास्यसीत्येवमहं मन्यइति ॥

"जात्वपूर्वम्" ॥ 'जात्वित्येतदपूर्वमिति' । अथ तिङन्तविशेषणमपूर्वत्वं कस्मान्न भवति, युक्तं चैतत्, विशेषणेन संबन्धं योग्ये सति निमित्तिनि निमित्तस्याप्रधानस्य नहि युक्तं विशेषणम्, उच्यते। यदयमाहो उताहो चानन्तरमित्यत्रानन्तरग्रहणं करोति ततो ज्ञायते निमित्तस्येदं विशेषणमिति, अन्यथा तत्राप्यपूर्वमित्यनुवृत्तेरेव केवलतिङन्तस्यानन्तर्यं लभ्यतइति किं तेन । ननु च शेषप्रक्लृप्त्यर्थं तत्स्यात् शेषे विभाषा, कश्च शेषः, सान्तरः शेष इति, अन्तरेणाप्यनन्तरग्रहणं प्रक्लृप्तः शेषः, कथम्, अपूर्वमिति प्रकृतं सपूर्वः शेष इति ॥

"किंवृत्तं च चिदुत्तरम्" ॥ वृत्तमित्यधिकरणे क्तः, किमो वृत्तं किंवृत्तमिति, अधिकरणवाचिनश्चेति कर्त्तरि षष्ठी, अधिकरणवाचिना चेति समासप्रतिषेधे प्राप्ते ऽस्मादेव निपातनात्समासः, यद्वि यत्र किंशब्दो वर्त्तते तत्सर्वं गृह्येत किमीयः कैमायनिः किंतरामित्यादेर्ग्रहणप्रसङ्ग इति मत्वा परिसञ्चष्टे । 'वृत्तग्रहणेनेति' । चिदुत्तरमित्येतत्किंवृत्तस्य विशेषणं न तिङन्तस्य, पूर्वोक्तात्सामान्यापेक्षया ज्ञापकात् ॥

"आहो उताहो चानन्तरम्" ॥ 'अपूर्वमित्येवेति' । अत एवोताहोग्रहणम्, उतशब्दपूर्वत्वादाहोशब्दस्य ॥

"शेषे विभाषा" ॥ 'कश्च शेष इति' । बहूनां प्रकृतत्वात्प्रश्नः । 'यदन्यदनन्तरादिति' । [1]प्रतिषेधस्य निमित्तभूतमाहोउताहोग्रहणं तावदवश्यमनुवर्त्यम्, उताहोग्रहणाच्चापूर्वमित्यप्यनुवर्त्तते तत्र पारिशेष्यादनन्तरापेक्ष एव शेष इति भावः ॥

"गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्" ॥ 'गमिना समानार्था गत्यर्था इति' । अर्थप्रदर्शन[2]मेतत्, गतिरर्थो येषामिति तु विग्रहः, गत्यर्थलोटा युक्तमिति योगः, पुनरर्थद्वारको निमित्तनिमित्तिभावः, लोडन्तवाच्यं हि निमित्तं लडन्तवाच्यस्य । 'न चेत्कारकं सर्वमन्यद्भवतीति' । सर्वं चेत्कारकमन्यत्तदा निघातप्रतिषेधो न भवतीति भावः, अत्र

---

[1] निपातेत्यधिकम् इं॰ पु॰ ।
[2] परमित्यधिकम् इं॰ पु॰ ।

लोडन्ते च लडन्ते च यावत्किञ्चन कारकम् ।
गृह्येत यदि तत्सर्वं वाच्यावाच्यविवेकतः ॥

तदेहापि तर्हि प्राप्नोति वह ब्राह्मणशालींस्त्वं पितैतांस्तत्र भोक्ष्यतइति, यत्र हि सर्वं भिद्यते तत्रैव न भवितव्यं यथा पूर्वावुपन्यस्तयोः प्रत्युदाहरणयोः ।

न चात्र भिद्यते सर्वमभेदाच्छालिकर्मणः ।

अथायमर्थः स्यात्सर्वस्मिन्कारके ऽनन्यस्मिन्निघातप्रतिषेधो न तु क्वचिदपि भिन्नइति तदेहापि न स्यात् आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसइति, भिद्यते ह्यत्र कर्म तस्माद्व्याख्येयमेतत्, तत्राह। 'यत्रैवेति'। एवकारेण वाच्यव्यतिरिक्तस्य निरासो न तु सर्वस्यानन्यत्वं विवक्षितं तत्स्पष्टीकृतम्। 'कर्तृकर्मणी एवेति'। एतच्च प्रत्यासत्तेर्लभ्यते, प्रत्यासन्नं हि तत्तस्य यत्तेनैवाभिधीयते, उदाहरणेषु प्रथमतृतीययोः सर्वमनन्यत्, द्रक्ष्यसीत्यस्य तु निघातप्रसङ्गश्चिन्त्यो नानावाक्यत्वात्, द्वितीयचतुर्थयोर्वाच्यमात्रं वहेर्गुणभूतगमनाभिप्रायं गत्यर्थत्वं प्रापणार्थस्त्वयं, तथा च ।

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।

इति भेदेन गणनं कृतं, ननु च शक्तिः कारकं, सा च प्रतिक्रियं भिद्यते, तत्कथमिहाभिन्नं कारकं, शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वाददोषः। 'आगच्छेरिति'। लिङयं न लोट्। 'पश्यतीति'। लडयं न लट्, प्रत्युदाहरणयोः सर्वमन्यत्, कारकशब्देनापि सूत्रे कारकव्यक्तिरेवाभीयते, तेन कर्तृकर्मत्वाभेदे ऽपि व्यक्तिभेदात्कारकभेदः, त्वं चाहं च व्रजाव इति, अक्रियमाणे सर्वग्रहणे यत्र वाच्यं न भिद्यते तत्रैव भवितव्यम्, इह च भिद्यते वाच्यम्, एकत्रैकमपरत्र द्वयमिति निघातप्रतिषेधो न स्यात्, क्रियमाणे तु सर्वग्रहणे यथा सिद्ध्यति तथा दर्शयति। 'लडन्तवाच्ये हीति' ॥

"लोट् च" ॥ 'शाधीति'। शासेर्लोट्, सिप्, सिपो हिः, शा हाविति शादेशः, तस्यासिद्धत्वात् झल्लक्षणं धित्वम्। प्रशाधीति

१ ग्रहणमिति इ· पाठः ।

प्रायेण पाठः स न युक्तः, सोपसर्गत्वेनोत्तरसूत्रविषयत्वात्। 'पृथग्योगकरणमुत्तरार्थमिति'। उत्तरो विकल्पो लोट एव यथा स्यात् ल्टो मा भूदिति॥

"हन्त च"॥ 'हन्त प्रभुनजावहाइति'। भुजेर्लोट्, भुजोऽनवइत्यात्मनेपदं बहिः, टेरेत्वम्। आडुत्तमस्य पिच्च, एत ऐ, अनुदात्तेत्वाल्लसार्वधातुकमनुदात्तत्वं, विकरणस्वरः।

"आम एकान्तरमामन्त्रितमनन्तिके"॥ अन्तरयतीत्यन्तरं व्यवधायकम्। एकमन्तरं यस्य तदेकान्तरम्, उदाहरणे निघाते प्रतिषिद्धे षाष्ठिकमाद्युदात्तत्वं, दूराद्धूते चेति प्लुतः, भवच्छब्दस्य विभाषा भवद्भगवदघवतामिति रुत्वम्, अवशब्दस्य च ओकारः, भोभगोइत्यादिना यत्वं, तस्य हलि सर्वेषामिति लोपः। ननु चामन्त्रितं पूर्वमविद्यमानवदिति भोःशब्दस्याविद्यमानत्वादेकान्तरता नोपपद्यते, अत आह। 'भोइत्येतदिति'। 'तदुभयमप्यनेन क्रियतइति'। कथं पुनरप्रकृताया असंशब्दितायाश्चैकश्रुतेः प्रतिषेधः शक्यो विज्ञातुम्, उच्यते, नञत्र विपक्षवचनः, अधर्मानृतादिवत्, अन्तिकविरुद्धमनन्तिकं, दूरमित्यर्थः, तत्र चैकश्रुतिरुच्यते, ततश्च पचसि देवदत्तेत्यादावन्तिके सावकाशमामन्त्रितनिघातं बाधित्वा एकश्रुतिः प्राप्नोति, सा तावत्प्रतिषिध्यते, ततोऽपवादे प्रतिषिद्धउत्सर्गभूतो निघातः प्राप्नोति सोऽपि प्रतिषिध्यते, एकश्रुतिमात्रप्रतिषेधे हि तत्रैवायं ब्रूयात् नाम एकान्तरमिति, एवं ह्यामन्त्रितमनन्तिकइति च न वक्तव्यं भवति, सोऽयमेवं सिद्धे यन्निघातप्रकरणे इदं ब्रवीति तेन विजानीमो निघातोऽपि प्रतिषिध्यतइति, केवलस्य निघातस्यैकश्रुत्या बाधितस्य प्रतिषेधोऽनर्थक इति सामर्थ्यादुभयोः प्रतिषेधः। ननु चैकश्रुतिरपि देवदत्ता३[1] आगच्छेत्यादौ सावकाशा, कथमां भो देवदत्त इत्यादौ निघातस्य बाधिका, प्रत्युत परत्वादेकश्रुतेर्निघात एव बाधक इति तस्यैवात्र प्रसङ्ग इति प्रतिषेधोऽपि तस्यैव न्याय्यः, तस्य च

१ परमित्यधिकम् इं॰ पु॰।

प्रतिषेधे एकश्रुतिः स्यादेव, अत्राहुः । पदद्वयमात्रनिबन्धनत्वादन्तरङ्गो निघातः पूर्वं प्रवर्त्तते, ततो दूरात्संबोधनमधिकं निमित्तमपेक्षमाणैकश्रुतिरिति सैवानन्तरं प्राप्नोति तां तावद्बाधते पूर्वोक्तेन न्यायेन निघातमपीति सूक्तं तदुभयमनेन क्रियतइति, यथैव तर्हि एकश्रुतिर्बाध्यते तथैव प्लुतोदात्तोऽपि बाध्येतात आह । 'प्लुतोदात्तः पुनरिति' । 'अपरेषामिति' । ते मन्यन्ते सादृश्येऽत्र नञ् न विपद्ये, अन्यथा दूरइत्येव ब्रूयादिति प्राप्तिरेव नास्ति अदूरत्वात्कथं तर्हि प्लुत उदाह्रियते अत आह । 'प्लुतोऽपीति' ॥

"यद्धितुपरं छन्दसि" ॥ 'जाये स्वो रोहावैहीति' । रुहेर्लोट्, वस्, शप्, आडुत्तमस्य पिच्च, लोटो लङ्वदिति लङ्वद्भावान्नित्यं ङित इति सलोपः, आङ्पूर्वादिणो लोट्, सिपो हिः, एहीत्यनेन परभूतेन युक्तस्य रोहावेत्यस्य लोट् चेति प्राप्तो निघातप्रतिषेधो नियमेन निवर्त्यते, तेन स्वशब्दाश्रयो निघातो भवति । ननु परमपि छन्दसीतिवचनात् स्वःशब्दस्य पूर्वाङ्गवद्भावाज्जायेस्वरित्यामन्त्रितं ततश्चामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानत्वान्निघातो न प्राप्नोति, प्रतिषिध्यते ऽत्राङ्गवद्भावः । अव्ययानां प्रतिषेध इति । नैवमत्राङ्गवद्भावः प्राप्नोति, उक्तं हि तत्र, 'षष्ठ्यामन्त्रितकारकवचनं' 'तन्निमित्तग्रहणं चे' ति । नहि स्वःशब्दः षष्ठ्यन्त आमन्त्रितकारकं तन्निमित्तं वा स्वरं वाङ्गवद्भावो नाविद्यमानवत्त्वम्, स्वःशब्दस्य रो रीति लोपो न भवति उत्वं च भवति छान्दसत्वात् । अथेदानीं रोहावेत्यनेन युक्तस्य एहीत्यस्य लोट् चेति निघातप्रतिषेधः कस्मान्न भवति, न रुहिर्गत्यर्थः, गत्यर्थाकर्मकेत्यत्र पृथग्ग्रहणात्, यदि न गत्यर्थः, आरोहन्ति हस्तिनं मनुष्याः आरोहयति हस्ती मनुष्यान्, गतिबुद्धिप्रत्यवसानार्थेति कर्मसंज्ञा न प्राप्नोति, तस्मा[1]दुपरिगमनरूपव्यापारो रुहेरर्थः, गत्यर्थाकर्मकेत्यत्र च रुहिग्रहणं प्रपञ्चार्थम्, एहीत्यस्य तु निघातप्रतिषेधो न भवति, विभाषितं सोपसर्गमनुत्तममिति वचनात् ॥

---

१ अस्तु तर्हि गतिरेव रुहेरर्थ इति हं· पु· पाठः ।

"चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः" ॥ 'इहा[1]पीति'। न केवलं तिङो गोत्रादीनीत्यत्रैवेत्यपिशब्दार्थः। तत्र हेतुस्तत्रैव प्रतिपादितः। 'शुक्लीकरोति चनेति'। अगतेरिति प्रतिषेधाभावादत्र निघातप्रतिषेधो भवत्येव। 'यत्काष्ठमिति'। शुक्लीशब्दस्य निघातो न भवति ॥

"चादिषु च" ॥ 'तदिह गृह्यन्त इति'। प्रत्यासत्तेः। 'चादयोसत्त्व'इत्यत्र येषां ग्रहणं ते विप्रकृष्टाः, समुच्चयो विकल्पश्चानेकस्य धर्म इत्युत्तरसूत्रे वक्ष्यति। अतः खादति चेत्यस्योपन्यासः, न त्वस्य निघातप्रसङ्गः, नानावाक्यत्वात्, खादति हेत्यादेस्तु प्रक्रमाभेदायोपन्यासः। 'परन्तु निहन्यतएवेति'। प्रशब्दात्समानवाक्यगतात् पदात्परत्वात् ॥

"चवायोगे प्रथमा" ॥ 'अगतेरिति'। 'पूर्वसूत्रइत्यादि'। अत एव पूर्वसूत्रे प्रत्युदाहरणावसरउक्तं प्रथमस्यात्र तिङन्तस्य चवायोगे प्रथमेति निघातः प्रतिषिध्यतएवेति, प्रथमेति स्त्रीलिङ्गस्य निर्वाहमाह। 'प्रथमा तिङ्विभक्तिरिति'। प्रथमाग्रहणव्यावर्त्यस्य द्वितीयादेः संभवमाह। 'चवायोगो हीति' ॥

"हेति क्षियायाम्" ॥ आचारभेद आचारोल्लङ्घनम्। उदाहरणे उपाध्याये पदातौ गच्छति शिष्यस्य रथेन गमनं प्रतिषिद्धम् इत्याचारभेदः ॥

"अहेति विनियोगे च" ॥ 'नानाप्रयोजनइति'। अनेकप्रयोजनः नियोगः प्रेषणम्। 'प्लुतश्चेति'। स पुनः क्षियायां क्षियाहेतुकः, विनियोगे प्रैषहेतुकः ॥

"चाहलोपएवेत्यवधारणम्" ॥ उदाहरणे चलोपं दर्शयति। 'ग्रामं चेति'। एवमहलोपेपि द्रष्टव्यम्। तत्र प्रथमे ग्रामकर्मकस्यारण्यकर्मकस्य च देवदत्त एव कर्त्तेति समानकर्तृकत्वं, द्वितीये तु विपर्ययाद्नानाकर्तृकता द्रष्टव्या, अनवक्लृप्तिरसंभावनं, यो हि देवदत्तस्य भोजनं क्वचिदपि न संभावयति स एवं प्रयुङ्क्ते क्वेव भोक्ष्यसइति, एवे चानियोगइति पररूपत्वं, क्वचित्तु वृत्तावेवैतत्पठ्यते ॥

"चादिलोपे विभाषा" ॥ पूर्वो योग एवशब्दप्रयोगे नित्यार्थः ॥

---

१ अत्रागतिग्रहणं इति मु॰ मू॰ पा॰।

"वैवावेति च छन्दसि" ॥ वै स्फुटार्थे समायां च, वा व प्रसिद्धौ स्फुटार्थे च ॥

"एकान्याभ्यां समर्थाभ्याम्" ॥ समौ तुल्यावर्थौ ययोस्तौ समर्थौ, शकन्ध्वादिषु दर्शनात्पररूपत्वं, निपातनाद्वा ऽन्तलोपः, परस्परं समानार्थता न तिङन्तेन असंभवात्, तिङन्तेन सङ्गताभ्यामित्ययं त्वर्थो न भवति, यथायोगे प्रथमेत्यतो योगग्रहणानुवृत्तेरेवास्यार्थस्य सिद्धत्वात् । 'जिन्वतीति'। जिवि: प्रीणनार्थः, इदित्त्वान्नुम्, लट्तिप्शपः । 'चाकशीतीति'। काशिना समानार्थः कशिः प्रकृत्यन्तरमस्तीत्युक्तं, तस्यैतद्यङ्लुकि रूपम् । 'एकशब्दस्य व्यवस्थार्थं चेति' अतस्तस्यैव प्रत्युदाहरणं दर्शितं नान्यशब्दस्येति भावः । 'व्यभिचारित्वात्तस्येति'। एकशब्दो ह्यन्यार्थं व्यभिचरतीति । नानार्थो ह्ययमिति श्लोको गोत्रइत्यत्र दर्शितं, तत्रासति समर्थग्रहणे ऽन्यशब्देन भिन्नार्थस्यापि ग्रहणप्रसङ्गः । न च साहचर्यमत्र प्रकरणे व्यवस्थापकमिति निपातैर्यद्यदिहन्तेत्यत्रावोचाम ॥

"यद्वृत्तान्नित्यम्" ॥ किंवृत्तं च चिदुत्तरमित्यत्र किंवृत्तशब्दस्य दर्शिता व्युत्पत्तिरिहानुगन्तव्या । 'एतच्चाश्रीयतइति'। तदाश्रयणे हि यद्ब्रह्न् यदीयं यादायनिरित्यादिभ्यः परस्य न स्यात् । 'जुहुम इति'। प्रत्ययस्वरेणान्तोदात्तमेतत्, अभ्यस्तानामादिः, भीह्रीभृहुमदेति चोभयत्रापि श्नावीति वर्तते। 'यद्र्यङिति'। यदञ्चति, क्विन्, विष्वग्देवयोश्चेति टेरद्र्यादेशः, कथं पुनः पञ्चमीनिर्देशे सति यत्कामास्ते, यद्ब्रह्न् वायुरित्यादौ व्यवधाने भवति अत आह । 'पञ्चमीनिर्देशेप्यत्रेति'। एतच्चोत्तरसूत्रे ज्ञापयिष्यते । 'याथाकाम्ये वेति'[1] । याथाकाम्यं यथेच्छं[2] प्रवृत्तिर्देशकालानपेक्षा, तत्र गम्यमाने वा निघातप्रतिषेधः, यत्र क्वचन यजते ॥

"पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः" ॥ काष्ठादिभ्य इति वार्तिके दृष्टं सूत्रावयवत्वेन पठितत्वात्तदनुरोधेन पूजनादित्येकवचनं

१ वा यथाकाम्यइतीति इं० पु० पा० ।
२ यथेष्टमिति २ पु० पा० ।

बहुवचनस्थानइति व्याचष्टे । 'पूजनेभ्यः काष्ठादिभ्य इति' । 'उत्तरपदमिति' । उत्तरसूत्रे तिङ्ग्रहणादस्य च सूत्रस्य समासविषयत्वात्सुबन्तमिति द्रष्टव्यं, काष्ठादयश्चैते ऽद्भुतपर्यायाः पूजनवचना भवन्ति, तत्र येषां वृत्तिविषयएवाद्भुतपर्यायत्वममातापुत्रादीनां तेष्वन्यपदेन विग्रहः । 'काष्ठाध्यापक इति' । क्रियाविशेषणं, काष्ठशब्दो द्वितीयान्तः समस्यते, कृद्योगलक्षणा तु षष्ठी क्रियाविशेषणेषु न भवति, धात्वर्थं प्रति यत्कर्म तत्रैव षष्ठी, कर्तृपदेन साहचर्यात्, यो हि धात्वर्थं प्रति कर्त्ता तत्र षष्ठी तत्साहचर्यात् कर्म्मापि तादृशमेव गृह्यते, विशेषणं तु धात्वर्थेन समानाधिकरणत्वान्न तं प्रति कर्म सर्वथा क्रियाविशेषणान्न षष्ठी भवति, अत एव मलोप इति वक्ष्यते, षष्ठ्यां सत्यां मकाराभावादनुपपन्नमेतत्स्यात्, कथं पुनः कर्तृप्रधाने कृदन्ते गुणभूतायाः क्रियाया विशेषणेन संबन्धः, साधनसंबन्धवदुपपद्यते, तद्यथा ग्रामं गत इत्यादौ गुणभूताया अपि क्रियायाः साधनेन योगः तथा विशेषणेनापि नानुपपन्नः । 'काष्ठाभिरूपक इति' । आभिरूप्यं काष्ठेन विशेष्यतइति नपुंसकप्रथमान्तस्य समासः, एवं सर्वत्र प्रवृत्तिनिमित्तमात्रेण काष्ठादीनामन्वयाद् द्रव्यवाचिभिः सामानाधिकरण्याभावान्मयूरव्यंसकादित्वमाश्रितम् । 'समासे चेत्यादि'। चकारोऽवधारणे, यदि समासएवैतदिष्यते कथं वार्त्तिककारेणोक्तं पूजितस्यानुदात्तत्वे काष्ठादिग्रहणं मलोपश्चेति, नहि समासे तेषामन्त्यो मकारः संभवति विभक्तेर्लुप्तत्वादित्यत आह । 'मलोपश्चेत्यनेनापीति'। कथं पुनरयं विषयोनेनाख्यायते ऽत आह । 'यत्रेति'। समासे हि विभक्तेरभावान्मकारो न श्रूयते अयमेव लोप इति । किं पुनः कारणमेवं काशकुशावलम्बनेन वार्त्तिकं व्याख्यायते ऽत आह । 'असमासे हीति'। अन्ये त्वाहुः । यदि समासएवैतदभिमतमभविष्यत्समासइत्येवावक्ष्यत्, मलोपवचनात्तु वाक्यविषयमेवैतद्दारुणमध्यापक इत्यादिकं तु रूपं यदीष्यते विकल्पेन मलोपो वक्तव्य इति । 'पूजनादित्येव पूजितपरिग्रहे सिद्धइति'। पूजनस्य पूजितापेक्षत्वादिति भावः । 'अनन्तरपूजितप्रतिपत्त्यर्थमिति'। पूजनात्पूजितमिति सूत्रे सामान्यगतमानन्तर्यं विशेषाणां विज्ञायतइति

भावः। कथं पुनः पञ्चमीनिर्द्देशे व्यवहितस्य प्रसङ्ग इत्याह। 'एतदेवेति'। ज्ञापनस्य प्रयोजनमाह। 'तथा चेति'। 'अनुदात्तइति वर्त्तमानइत्यादि'। प्रकृतं ह्यनुदात्तग्रहणं न लुडित्यादिना प्रतिषेधेन संबद्धमतस्तदनुवृत्तौ प्रतिषेधोऽप्यनुवर्त्तेत, तत्र यद्यप्यस्य योगस्य समासविषयत्वात्तादृशो विषयो न संभवति यत्रामन्त्रितादौ निघातः प्रतिषिध्येत तथापि कुत्सने च सुपीत्यादौ उत्तरत्र प्रतिषेध एव स्यात्तस्मात्तन्निवृत्त्यर्थं पुनरनुदात्तग्रहणम् ॥

"सगतिरपि तिङ्" ॥ 'यत्काष्ठं पचतीति'। येऽपि मलोपश्चेत्यनेन वाक्येन मलोपमाहुस्तेपि तिङन्ते परतो नैव लोपमिच्छन्ति। 'सगतिग्रहणाद्गतिरपि निहन्यतइति'। कथं, तुल्ययोगेऽत्र सहशब्दः, यत्र तुल्ययोगे सहशब्दस्तत्र द्वयोरपि कार्ययोगो भवति, तद्यथा सपुत्रो भोज्यतामित्युक्ते पुत्रोपि भोज्यते, अपिग्रहणं यत्र गतिर्न प्रयुज्यते तत्र केवलस्यापि तिङन्तस्य यथा स्यात्, गतिप्रयोगे तु द्वयोः सहैव भवति, तिङ्ग्रहणात्पूर्वो योगः सुबन्तविषय एव विज्ञायते ॥

"कुत्सने च सुप्यगोत्रादौ" ॥ 'पचति क्लिश्नातीति'। कथमत्र समानवाक्यत्वं सामर्थ्यं चेति चिन्त्यम्। 'कर्त्तुः कुत्सने मा भूत्, पचति पूतीति'। कर्तृत्वमत्र कुत्स्यते। 'अस्येदमयुक्तमिति'। क्रिया तु शोभनैव तत्र कर्तृत्वस्य विशेषणं पूतित्वं न कर्त्रा समानाधिकरणमिति दारुणमभिरूपकमित्यादिवन्नपुंसकत्वम्। एवं द्विबहोरप्येकवचनमेव भवति, पचतः पूति पचन्ति पूतीति। प्रायेण पूतिरिति पुल्लिङ्गं पठ्यते। ननु क्रियाप्रधानेऽस्मिन्नाख्याते साधनं कथं विशेषणेन संबन्धमप्रधानं प्रपद्यते, उच्यते। एकार्थीभावमापन्नं वृत्तौ यदुपसर्जनं विशेषणेन सबन्धस्तस्य नैवोपपद्यते न हि भवति ऋद्धस्य राजपुरुष इति, यस्य तु नैकार्थीभावस्तदप्रधानमपि विशेषणेन संयुज्यते, यथा ऋद्धस्य राज्ञः पुरुष इति, एवं साधनं क्रियां प्रति गुणभूतमप्येकार्थीभावाभावाद्विशेषणेन युज्यते तथा साधनप्रधानेषु कृदन्तेषु क्रिया गुणभूताऽपि विशेषणेन युज्यते दारुणमध्यापक इति, यद्येवं तर्हि साधनस्य विशेषणेन योग एवं क्रियान्तरेणापि प्राप्नोति पचति पठति पचति दृश्यति पाचकः पठति पाचकः पश्यतीतिवत्, किं कुर्मः न ताव-

देवं दृश्यते तदेतदेवं प्रतिपत्तव्यम् ॥

भार्या स्त्र्यन्तरसंबन्धं पत्युर्न सहते यथा।
स्नानादिकं तु संस्कारं स्वार्थमेवानुमन्यते ॥

तथा क्रियापि।

विशेषणेन संबन्धं कर्त्तुः स्वस्यानुमन्यते।
स्वानुरक्तं तु कर्त्तारं न क्रियान्तरगामिनम् ॥

इति। 'पूतिश्चेति'। तिबन्तः पूतिशब्द आद्युदात्तः। 'वसेस्तिबिति'। तिब् बाहुलकात्पुंसो ऽपि भवति, बाहुलकादेव गुणाभावः। तस्य निघातनिमित्तस्यान्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसह्यायते। 'विभाषितमिति'। बह्वर्थं तिङन्तं विभाषा निहन्यते, यदा निहन्यते तदा पूतिरन्तोदात्तः। क्रियाकुत्सन इत्यादि यदुक्तं तत्र प्रमाणत्वेन भाष्यपठितामार्यां पठति। 'सुपि कुत्सनइति'। 'मलोप इष्टोऽतिङीति चोक्तार्थमि[१]ति'। भाष्ये तावदयमर्थः, मलोपश्चेति वार्तिककारेणोक्ते मलोपस्तिङि नेष्टः, दारुणं पचतीति। इत्येवं मलोपश्चेति वाक्यमुक्तार्थमाचार्यैरिति। वृत्तौ तु श्लोकान्तर्गतत्वादयं पादः पठितो न त्वत्रास्योपयोगः कश्चित्, समासे चैतदनुदात्तत्वमिष्यत इत्युक्तत्वात् ॥

"गतिर्गतौ" ॥ 'अभ्युद्धरतीति'। सर्वोपसर्गसाधारणी हरणक्रिया प्रतीयते, तामुद्विशिनष्टि उद्धरतीति उदैवोर्ध्वता विशिष्टा ऽवगम्यते तामभिर्विशिनष्टि अभ्युद्धरतीति, तत्र।

अन्योन्यापेक्षया नास्ति गतित्वं यद्यपि द्वयोः।
क्रियां प्रति गतित्वात्तु निहतोऽभिर्गतिर्गतौ ॥

'समुदानयतीति'। अत्र समुदोर्द्वयोरपि निघातः। 'अभिसंपर्याहरतीति'। अत्र त्रयाणाम्। 'गताविति किमिति'। क्रियां प्रति गतिर्भवति, क्रिया च धातुवाच्या, धातुश्च द्विविधः, सगतिरगतिश्च, प्रत्यया अपि धातोर्द्वये भवन्ति कृतस्तिङश्च, तत्र कृदन्ते समासाभावे च कृत्स्वरेणाद्यादिस्वरेषु कृतेषु शेषनिघातेन गतिर्निहन्यतएव, तिङन्तेऽपि

१ तस्मादेवेति इं पु॰ पा॰। २ चोक्तार्थं इति मु॰ पु॰ पा॰।

केवले उदात्तवति तावदुत्तरसूत्रेण भवत्येव निघातः, अनुदात्ते तु नियमाश्रयणाच्च भविष्यति, तिङन्ते यदि भवति उदात्तवत्येव भवति, ततश्च सगतिरेव तिङवशिष्यते इति प्रश्नः । 'आ मन्द्रैरिति' । ननु च क्रियायोगे गतिर्भवति न चात्राङः क्रियायोगोऽस्ति, मन्द्रशब्दस्याक्रियावाचित्वादत आह । 'याहीत्येतत्प्रतीति' । ते प्राग्धातोरिति प्रयोगनियमो न संज्ञानियमः, ततश्च व्यवहितप्रयोगेऽपि गतित्वमस्त्येवेति भावः । ननु यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति, ततश्च याहीत्येतत्प्रति गतित्वेन मन्द्रं प्रत्यगतित्वादप्रसङ्गः, इहापि तर्हि न प्राप्नोति अभ्युद्धरतीति, उद्धं प्रत्यगतित्वान्मा भूदुद्धं प्रति गतिः समुदायं तु प्रति गतिर्भवति उदा विशिष्टा हि क्रिया अभिना विशेष्यते, आ मन्द्रैरित्यत्रापि मन्द्रादिकरणकमिन्द्रकर्तृकं यानमाङा विशेष्यत इति समुदायं क्रियाविशेषवाचिनं प्रत्याङो गतित्वान्निघातः प्राप्नोति, न प्राप्नोति, पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन, आयाने हि मन्द्रादेः साधनत्वं मन्द्रैर्हरिभिरायाहीति न तु याने, ततश्च न समुदायं प्रत्याङो गतित्वमिति नास्त्येवात्र प्रसङ्गस्तत्राह । 'तस्येति' । नहि परनिमित्तानुपादाने यत्क्रियायुक्ताः प्रादयस्तं प्रतीति गम्यते, ततश्च वस्तुतो गतित्वाश्रयो निघातः स्यादिति मन्यते, यदि पुनः पदस्येत्यधिकारात्समर्थपरिभाषोपस्थानाद्येन गतेः सामर्थ्यं तं प्रति गतेरिति विज्ञायेत तदा शक्यं गतावित्यवक्तुं, यदाह गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं, तिङवधारणाच्छन्दोऽर्थमिति चेन्नागतित्वादिति ॥

"तिङि चोदात्तवति" ॥ उदाहरणे निपातैर्यद्यदीति निघातप्रतिषेधात्तिङन्तमुदात्तवत्, तिङ्ग्रहणं किमर्थं, तिङन्ते यथा स्यात् मन्द्रशब्दे मा भूत्, आ मन्द्रैरिन्द्र हरिभिर्याहि, मन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः, ननु च यत्क्रियायुक्ता इति वचनाद्गतिशब्दः पित्रादिशब्दवत् सम्बन्धिशब्दत्वात् स्वसंबन्धिनमाक्षिपतीति क्रियावाचिन्येवोदात्तवति भविष्यति इवन्तें चातिप्रसङ्गाभावः पूर्वसूत्रे एवोक्तस्तस्मादार्थोऽस्तिङ्ग्रहणेनेत्याशङ्क्याह । 'तिङ्ग्रहणमिति' । परिमाणमियत्ता, परिमाणं ग्र-

त्वमेव स्पष्टयति । 'अन्यथा हीति' । अक्रियमाणे तिङ्ग्रहणे धातुरेव क्रियावाचित्वाद्गतिसंज्ञानिमित्तमिति तत्रैवोदात्तवति निघातः स्यान्न तु प्रत्यये, तिङ्ग्रहणात्तु प्रकृतिभागं प्रति गतेः प्रत्ययोदात्तत्वेनाप्युदात्तवति तिङन्तमात्रे भवति । 'धातुमेव प्रति गतिसंज्ञेति' । यस्य क्रिया यत्क्रियेति षष्ठी, समासः, अन्वयव्यतिरेकाभ्यां यस्य वाच्या क्रिया तं प्रतीत्यर्थः, धातोरेव चासौ वाच्येति तमेव प्रति गतित्वम् । 'आमन्ते तर्हि न प्राप्नोतीति' । ननु चाक्रियमाणेपि तिङ्ग्रहणे नैवामन्ते प्राप्नोति, यदा हि तिङन्तेपि प्रत्ययोदात्तत्वेनोदात्तवति न स्यादिति स्थितं तदा का वार्ता आमन्ते, तत्किमुच्यते आमन्ते तर्हीति, एवं तर्ह्ययमत्रार्थः, यदि तिङ्ग्रहणात्प्रवात्प्रकरोतीत्यादौ भवति तर्हि तस्यामन्तेऽभावान्न प्राप्नोति, तस्माद्या क्रिया यत्क्रियेति कर्मधारय आश्रयणीयः, एवं हि क्रियालक्षणमर्थं प्रति गतित्वं तत्रार्थे कार्यस्यासंभवात्तद्वाचिनि कार्यं विज्ञायमानं क्रियाप्रधाने सर्वत्र सिध्यतीति, अनन्तरोक्तं चोद्यं पक्षविशेषे व्यवस्थापयितुमाह । 'अत्र केचिदिति' । अत्र पक्षे गतिकारकोपपदानामित्यस्यायमर्थः, गत्यादीनामविशेषेण समासो भवति कृद्भिस्तु प्राक् सुबुत्पत्तेरिति । 'अव्ययपूर्वपदप्रकृतिस्वरस्त्वितिं' । गतिकारकोपपदादित्यत्र प्रपर्चातिदेश्याद्यर्थं कृद्ग्रहणं स्थितं न प्रत्याख्यातमिति पूर्वपदप्रकृतिस्वरस्यैवात्र प्रसङ्ग इति मन्यते । 'अक्रियमाणेऽपि तिङ्ग्रहणइति' । यथा वा क्रियमाणे तिङ्ग्रहणे उदात्तवत्त्वे सति निघातः सिध्यति तथाऽनन्तरमेवोक्तम् । 'अथ तरबन्तस्येति' । यथायं पक्षः संभवति यश्चात्र पक्षे दोषस्तत्सर्वं गतिकारकोपपदात्कृदित्यत्रैवोक्तम् । 'येषां त्वित्यादि' । कुगत्यादीनां कृदन्तेनैव तत्रापि प्राक् सुबुत्पत्तेरित्यर्थः । 'तदर्थं यत्नः कर्तव्य इति' । तत्रायं यत्नः, तिङ्ग्रहणं न करिष्यते, या क्रिया यत्क्रियेति वाश्रयिष्यतइति ॥

"आमन्त्रितं पूर्वमविद्यमानवत्" ॥ किमिदमविद्यमानवदित्याह । 'तस्मिन्सतीत्यादि' । तत्र तस्मिन्सति यत्कार्यं तन्न भवतीत्यस्योदाहरणमाह । 'आमन्त्रिततिङ्निघातेति' । असति च यत्कार्यं तद्भवती-

त्यस्योदाहरणमाह । 'पूजायामित्यादि' । 'आमन्त्रिताद्युदात्तत्वे कर्त्तव्य इति'। असति पूर्वग्रहणे आमन्त्रितमविद्यमानवदित्युच्यमाने स्वस्याद्युदात्तत्वेपि षाष्ठिके कर्त्तव्ये ऽविद्यमानवत् स्यात्, क इदानीं तस्यावकाशः, यत्राविद्यमानवद्भावः प्रतिषिध्यते, विकल्प्यते वा, तथा ऽपादादावित्यधिकारात्पादादिरप्यवकाशः उषो नो अधसु इवा व्युच्छनन्, नस्भावो ह्यत्राविद्यमानवद्भावाभावादेव भवति, इद्र त्वा वृषभं वयं, त्वादेशो भवति, एवं तु इन्द्र पिब तुल्यं सुतो मदाय, इन्द्र पिब वृषभूतस्य वृष्णः, अग्ने याहि शखिभिः, वायो याहि शिवादिव इत्यादौ तिङ्निघातः प्राप्नोति । कर्त्तव्योऽत्र यत्नः, उक्तं हि पुरस्तात् । आपादपरिसमाप्तेरपादादावित्यधिकार इति, यद्यामन्त्रितं पूर्वमविद्यमानवत् देवदत्त पचसीत्यत्र पचसीत्येतदपेक्षया देवदत्तशब्दस्य पूर्वत्वमस्तीत्यविद्यमानवत्त्वे सति आमन्त्रिताद्युदात्तत्वं न स्यादित्यत आह । 'पूर्वत्वं चेति'। पूर्वशब्दस्य संबन्धिशब्दत्वाद्यं प्रति पूर्वत्वं तत्कार्यं प्रत्येवाविद्यमानवत्त्वं न स्वकार्यं प्रति तेन नायं दोष इत्यर्थः । कार्यशब्देनैतद्दर्शयति । अविद्यमानवत् कार्यमत्रातिदिश्यते, तत्र पूर्वशब्दस्य सम्बन्धिशत्वेन परस्य कार्ये कर्त्तव्यइत्येतावदाश्रीयते, न तु परं प्रत्यविद्यमानवत् पूर्वं तु प्रति विद्यमानवदित्यर्थ इति स्यात्, इमं मे गङ्गे यमुने सरस्वतीत्यत्र गङ्गेशब्दस्य यमुनेशब्दं प्रत्येवाविद्यमानवत्त्वं न मेशब्दं प्रतीति व्यवधानाद्यमुनेशब्दस्य निघातं प्रति मेशब्दो निमित्तं न स्यात्, यथोपदर्शिते त्वर्थे परस्य कार्ये कर्त्तव्ये इत्येतावत्तत्कार्ये स्वनिमित्तमन्यनिमित्तं वेति विशेषाभावात् मेशब्दापेक्षेपि निघाते गङ्गेशब्दस्याविद्यमानवत्त्वं सिध्यति, तदेतत् स्वनिमित्तेऽन्यनिमित्ते चेत्यत्र सूचितं, तदेवमुक्तं दर्शयति । 'इहेत्यादि'। गङ्गेशब्दोऽविद्यमानवत्त्वात्स्वयं निमित्तं न भवतीत्येतावत्, न तु मेशब्दस्य निमित्तभावं प्रतिबध्नातीत्यर्थः, परं प्रत्यविद्यमानवद्भवतीत्याश्रीयमाणे हि तथा स्यात्, ननु वत्करणमन्तरेणापि गोतोणिदित्यादावतिदेशो दृश्यते तत्किमत्र वत्करणेन । नन्वसति[1] वत्करणे

१ स्यादेतदिति इं· पु· पा· ।

पूर्वमामन्त्रितमविद्यमानमित्युच्यमाने [1]पूर्वस्यामन्त्रितस्य निवृत्तिः स्यात्। नैष दोषः। अर्थप्रत्यायनाय शब्दप्रयोगादनिवृत्तेऽर्थे शब्दनिवृत्त्यभावात्, अथापि परप्रयोगो भवतु पूर्वप्रयोगो मा भूदित्यर्थः कल्प्येत तथापि राजदन्तादिषु परमामन्त्रितं वेति वक्तव्यं स्यात् परमेवामन्त्रितं भवति न पूर्वमित्यर्थः, तदेवमन्तरेणापि वतिमतिदेशः सिद्धः, इदं तर्हि प्रयोजनं स्वाश्रयमपि यथा स्यात् आं भो देवदत्त आम एकान्तरमामन्त्रितमनन्तिक इत्येकान्तरता यथा स्यात्, एकवचनान्तं ह्युत्तरसूत्रस्य विषयः बहुवचनान्ते तु विभाषितं विशेषवचने बहुवचनमिति पक्षे निघातप्रसङ्गः, यद्यप्यातिदेशिककार्यविरुद्धं स्वाश्रयमतिदेशेष्वसत्यपि वत्करणे भवति इह तु वत्करणाद्य[2]र्थाद्विरुद्धमपि क्वचित्प्राप्यते अविद्यमानवत्त्वविरोधिनी ह्येकान्तरता व्याख्यानाच्चातिप्रसङ्गो नोद्भावनीयः॥

"नामन्त्रिते समानाधिकरणे सामान्यवचनम्"॥ द्वौ नञौ प्रकृतमर्थं सूचयत इत्याह। 'किं तर्हि विद्यमानवदेवेति'। 'माणवकजटिलकाध्यापकेति'। अत्र जटिलशब्दो माणवकशब्दापेक्षया विशेषवचनोऽध्यापकशब्दापेक्षया तु सामान्यवचन इति द्वयोरप्यविद्यमानवत्त्वं न भवति, पूर्वस्येत्यादिना प्रतिषेधस्य फलं दर्शयति। 'देवदत्तयज्ञदत्तेति'। सामान्यवचनं विशेषवचनापेक्षमिति वक्ष्यत्युत्तरसूत्रे, ततश्च यथा यज्ञदत्तशब्दः समानाधिकरणो न भवति एवं पूर्वामन्त्रितार्थगतविशेषाकारवचनोऽपि न भवतीति देवदत्तशब्दोऽपि सामान्यवचनो न भवति, तस्मादुदाहरणवैकल्यात्त्वाच्चिन्त्यमेतत्। 'एवं ह्युक्तमिति'। तैत्तिरीयके ब्राह्मणे सहस्रतमीं प्रकृत्य इडे रन्ते ऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुते एतानि ते अघ्न्ये नामानीति, वृत्तौ त्वन्यथा पाठः शाखान्तरे द्रष्टव्यः॥

"विभाषितं विशेषवचने"॥ बहुवचनमिति वार्त्तिके दर्शनात् प्रतिपत्तं, शरणत्वेन प्राप्तिः शरणं, तत्र साधवः, शरण्याः, शरणशब्दो हि

---

[1] कुतश्चित्पूर्वमामन्त्रितं न प्रयोक्तव्यमित्यर्थः स्यादिति, तच्च। यद्ययमर्थोऽभिप्रेतस्स्याद्राजदन्तादिषु परमामन्त्रितं वेत्येव ब्रूयात्, न चापादादावित्यनुवर्तते, यद्येवं तथाप्याम एकान्तरमन्त्रितमनन्तिक इति इं॰ पु॰ पा॰।

[2] सामर्थ्यादिति इं॰ पु॰ पा॰।

शरण्येऽपि दृश्यते, शरणं भवन्तमतिकारुणिकमिति। शर्मण्या इति पाठे शर्मणि साधवः शर्मण्याः। 'सामान्यवचनाधिकारादेवेति'। सामान्यस्य विशेषापेक्षत्वाद्यं प्रति सामान्यमित्येतद्भवति, तस्मिन्विशेषवचनएव भविष्यति॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्याध्यायस्य प्रथमः पादः॥

"पूर्वत्रासिद्धम्"॥ 'पूर्वत्रासिद्धमित्ययमधिकार इति'। यदि तु स्वतन्त्रो विधिः स्यात् ततो वक्ष्यमाणस्य त्रिपादीलक्षणसमुदायस्य पूर्वत्र सपादसप्ताध्यायीलक्षणे समुदाये ऽसिद्धत्वमुक्तं स्यान्न तु त्रिपाद्यां पूर्वत्र परस्यासिद्धत्वमापादितं स्यात्ततश्च गुर्डलिण्मान् गोधुङ्मानित्यादौ ढत्वघत्वादेरसिद्धत्वाभावाज्झय इति मतुपो वत्वप्रसङ्गः, तस्मान्न विधिः, अथ परिभाषा स्यात्, सर्वत्रैवाष्टाध्याय्यां पूर्वं प्रति परस्यासिद्धत्वात् तेन तैः तस्येत्यादावनादिषु कर्त्तव्येषु त्यदाद्यत्वस्यासिद्धत्वादकारान्तनिमित्ता इनादयो न स्युस्तस्मादधिकारः, एवं सति यदनेन संपादितं भवति तद्दर्शयति। 'तत्रेति'। तत्राधिकारे सतीत्यर्थः। अधिकारे हि त्रिपादीगतानामप्यविशेषेण सपादसप्ताध्यायीगतान्प्रत्यसिद्धत्वं त्रिपाद्यां च पूर्वत्र परस्यासिद्धत्वं सिद्ध्यति, विधौ तु नैतावत्संपादयितुं शक्यं त्रिपाद्यां पूर्वत्र परस्यासिद्धत्वानापादनात्, परिभाषायां च नैतावदिति पर्यवस्यति सर्वत्रैव प्रसङ्गात्तस्मादधिकारत्वादेतावत्संपद्यते, एतावदेव च संपद्यतइत्यर्थः, न चैवमत्र भ्रमितव्यं येयं सपादसप्ताध्यायी अनुक्रान्तेत्यनेन विधिरूपेण प्रवृत्तिर्दर्शिता, इत उत्तरमित्यादिना त्वधिकाररूपेण, ततश्च शेष इतिवल्लक्षणं चाधिकारश्चेति। निष्प्रयोजनत्वादधिकारोऽयमित्युक्तत्वाच्च, किं हि नामाधिकारएवास्मिन्न सिध्यति यदर्थो विधिराश्रीयेत, सप्तानामध्यायानां समाहारः सप्ताध्यायी, सपादा चासौ सप्ताध्यायी चेति कर्मधारयः, सपादेति टाबन्तपाठे त्वसमासः, उत्तरउत्तरो योग इति पाठः, वीप्सायां द्विर्वचने सुब्लुकोऽसंभवात्। अत्राध्यायग्रहणेन योगग्रहणेन च शास्त्रासिद्धत्वमाश्रीयतइति दर्शयति, एतच्च पूर्वत्रेति वचनाल्लभ्यते, शास्त्रस्य हि

मुख्यं पूर्वत्वं संनिवेशविशेषयोगित्वात्, कार्यस्य तु शास्त्रद्वारकमौपचारिकं, नहि मुख्ये संभवति गौणस्य ग्रहणं युक्तं, कथं पुनरुच्चरितं शास्त्रमसिद्धमित्युच्यते न हि वचनशतेनापि सिद्धमपि असिद्धं भवति अत आह। 'सिद्धकार्यं न करोतीत्यर्थ इति'। वचनादतिदेश आश्रीयतइत्यर्थः, शास्त्रस्यासिद्धत्वमाश्रीयते न कार्यस्येति दर्शितं, तत्र प्रयोजनमाह। 'तदेतदिति'। यदिदं शास्त्रविषयमसिद्धवचनं तदेतदित्यर्थः, आदेशो लक्षणं निमित्तं यस्य कार्यस्य तस्य प्रतिषेधार्थ,मुत्सृज्यते आदेशेन निवर्ततइति उत्सर्गः, स्थानी, स लक्षणं निमित्तं यस्य तस्य भावः प्रवृत्तिर्यथा स्यादित्येवमर्थं चासिद्धवचनं, कार्यासिद्धत्वे तूत्सर्गलक्षणस्य भावो न सिध्यति, तत्रादेशलक्षणप्रतिषेधस्योदाहरणमाह। 'अस्मा उद्धरेत्यादि'। आयावोः कृतयोर्लोपः शाकल्यस्येति लोपः। 'यलोपस्यासिद्धत्वादिति'। शास्त्रद्वारकं यलोपस्यासिद्धत्वं, यदा हि पूर्वशास्त्रसंनिधौ परशास्त्रमसिद्धं तदा तत्प्रतिपादितं कार्यं सुतरामसिद्धं भवति, उत्सर्गलक्षणभावस्योदाहरणमाह। 'अमुष्मादिति'। अत्रासत्यसिद्धत्वे परत्वाददसोऽसेर्दादु दो म इत्युत्वे सत्यत इति स्मायादयो न स्युः, असिद्धत्वे तु पूर्वं स्मायादयः पश्चादुत्वमिति सिद्धमिष्टम्। 'उत्वस्येति'। उत्वशास्त्रस्येत्यर्थः। शुष्किकेत्यादिश्लोकः, अत्र निदर्शनमिति प्रत्येकमभिसंबध्यते, निदर्शनमुदाहरणादिगित्यर्थः, मतोर्वत्वे कर्तव्ये झलां जशोऽन्तइति जश्त्वेऽसिद्धे सति गुडलिण्मानिति दर्शनम्। 'न कोपधाया इति पुंवद्भावप्रतिषेधो न भवतीति'। कोपधप्रतिषेधे तद्धितवुग्रहणमित्येतदनाश्रित्येदं प्रयोजनमुक्तम्। 'क्षामिमानिति'। क्षायो म इति निष्ठातकारस्य मत्वं, ततोऽत इञिति इञन्तादत इनिठनाविति तदन्ताद्वा मतुप्। 'वहेरित्यादि'। वह प्रापणे, निष्ठा, संप्रसारणं, हो ढः, झषस्तथोर्धोऽधः, ष्टुत्वं, ढो ढे लोपः, ढ्रलोपे पूर्वस्य दीर्घोऽणः, ऊढ इति स्थिते णिचि टिलोपः, लुङ्, चङ्ग्वह्। 'इतइत्येतद् द्विरुच्यते इति'। अजादेर्द्वितीयस्येतिवचनात्, ततो हलादिः शेषः, कुहोश्चुरिति चुत्वं हकारस्य झकारः, तस्याभ्यासे चर्चेति जश्त्वं जकारः, पश्चात् सन्वल्लघुनीतीत्वं कस्माच्च भवति तत्राह। 'अनग्लोपइति वच-

नादिति'। कथं पुनरौजिढदिति भवतीत्यत आह। 'औजिढदित्येतत्त्विति'। पूर्वत्रासिद्धीयमद्विर्वचनइत्येतत्त्विह न प्रवर्त्तते अनित्यत्वात्, अनित्यत्वं चोभौ साभ्यासस्येति वचनाद्विज्ञायते, अन्यथाऽनितेरिति णत्वे कृते तस्य सिद्धत्वात्सह णकारेण द्विर्वचने सति सिद्धं स्यात्प्राणिणिषतीति। 'गुडलिण्मानिति'। गुडं लेढीति क्विप्, तदन्तान्मतुप्, ढत्वजश्त्वयोः कृतयोर्यरोऽनुनासिकत्वे तद्धिते भाषायां नित्यवचनमिति णकारः। 'षष्ठीनिर्द्देशा इति'। संयोगान्तस्य लोप इत्यादयः, पञ्चमीनिर्द्देशाः ह्रस्वादङ्गादित्यादयः। सप्तमीनिर्द्देशाः झलो झलीत्यादयस्तेषाम्। 'असिद्धत्वं न भवतीति'। यदि स्यात् संयोगान्तस्य लोप इत्यत्र षष्ठी स्थानेयोगेत्येतस्याभावात्तच्छेषस्यालोन्त्यस्येत्यस्याप्रवृत्तेः सर्वस्य पदस्य लोपप्रसङ्गः, ह्रस्वादङ्गादित्यत्राप्यनियमेन दिक्शब्दाध्याहारात्पूर्वस्य परस्य च लोपप्रसङ्गः झलो झलीत्यत्राप्यौपश्लेषिकेऽधिकरणे सप्तमी विज्ञायेतेति पूर्वपरयोरविशेषेण प्रसङ्गः, सत्सप्तमीविज्ञाने तु व्यवहितस्यापि प्रसङ्गः, कथं पुनः पूर्वासु परिभाषासु कर्त्तव्यासु तेषामसिद्धत्वं न भवत्यत आह। 'कार्यकालं हीति'। 'संज्ञापरिभाषमिति'। समाहारद्वन्द्वः। अयमभिप्रायः॥

संज्ञाः परार्था अत्यन्तं परिभाषाश्च तद्विधाः।
न स्वातन्त्र्येण तास्तस्मात्कार्यावगतिहेतवः॥
अनेकस्य प्रधानस्य शेषभूता भवन्त्विति।
एताः केवलमाचार्यः पृथग्देशा उपादिशत्॥
विधिवाक्यैस्तु संहृत्य यत्र तत्र स्थितैरपि।
बोधयन्त्यःस्वकार्याणि नैकपूर्वाः परा इमाः॥

इति। यदि कार्यकालं संज्ञापरिभाषं विप्रतिषेधे परमित्येषापि परिभाषात्रोपतिष्ठेत, ततश्च विस्फोर्यमवगोर्यमित्यत्र गुणं बाधित्वा परत्वात् हलि चेति दीर्घत्वं स्यादित्यत आह। 'विप्रतिषेधे परमित्येषा त्विति'। एषा तु न प्रवर्त्ततइति संबन्धः, मध्ये हेतुर्येनेति, विप्रतिषेधो हि तस्या निमित्तं, कश्च विप्रतिषेधः, द्वयोस्तुल्यबलयोरेकस्मिन्विषये त्वं चाहं चेति

प्रवृत्तिप्रसङ्गः, न चायमत्र संभवति, तस्मान्निमित्ताभावाच्च प्रवर्त्ततइत्यर्थः, यद्येवमपवादोपि परः पूर्वमुत्सर्गं न बाधेतात आह । 'अपवादस्येति' । यद्यपवादस्यासिद्धत्वादुत्सर्ग एव स्यादपवादविधानं व्यर्थं स्यात् ॥

"नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" ॥ अत्र सूत्रे उत्तरसूत्रे च कार्योपादानात्कार्ये कार्यस्यासिद्धत्वमुच्यते,कृतीत्येतत्तु संभवव्यभिचाराभ्यां तुग्विधिनैव संबध्यते, विधिशब्दो भावसाधनः कर्मसाधनश्च, तत्र भावसाधनानां त्रयाणां कर्मसाधनस्य चैकस्यैकशेषः, भिन्नार्थानामपि सरूपाणामेकशेषवचनात्, विधिश्च विधिश्च विधयः, ततो बहुवचनान्तेन विधिशब्देन सुबादीनां द्वन्द्वस्य षष्ठीसमासः, सर्वत्र च शेषलक्षणा षष्ठी, तत्र सुब्विधौ शेष एव शेषः, इतरेषु तु कर्म शेषत्वेन विवक्षितं तदिदमुक्तम् । 'विधिशब्दोयमित्यादि' । 'संबन्धसामान्यषष्ठ्यन्तेनेति' । संबन्धसामान्यमुच्यते षष्ठ्या तदन्तेनेत्यर्थः, सामान्यशब्देन स्थानेयोगव्यवच्छेदः, कथं पुनः षष्ठी स्थानेयोगेतिपरिभाषायां सत्यां सामान्यवचनता लभ्यते । उच्यते । नात्र सुपः स्थाने किंचिद्विधीयते किं तर्ह्यनुवादोऽयं, सुपो यो विधिस्तत्रेति, अनुवादे च परिभाषा न प्रवर्त्तते, उदीचामातः स्थाने इति स्थानेग्रहणाल्लिङ्गात्, संबन्धसामान्यवचनषष्ठ्यन्तेनेति यदुक्तं तत्र प्रयोजनमाह । 'सुपां स्थान इत्यादि' । 'सर्वोऽसौ सुब्विधिरिति' । सर्वस्य सुप्संबन्धित्वात्सुबर्थमेव चेदं विधिग्रहणं कृतं स्वरादिषु तु नार्थः तेन यथा न मुने इत्यत्र नाभावे कर्त्तव्ये इत्यर्थो भवति तथा स्वरादिषु कर्त्तव्येष्वित्यर्थो भविष्यति, द्वन्द्वात्परस्य तु प्रत्येकं संबन्धो दुर्निवार इति भावसाधनत्वमङ्गीकृतं, सुब्विधिस्वरसंज्ञातुक्ष्विन्युच्यमाने तु न किंचिदवसाध्यम् । 'राजवतीति' । मतुबन्तादुगितश्चेति ङीप्, राजशब्दः कनिन्प्रत्ययान्तत्वादाद्युदात्तः । 'पञ्चार्ममिति' । दिक्संख्ये संज्ञायामिति समासः, तत्र नलोपे कृते पूर्वपदमवर्णान्तं जातमिति स्वरः प्राप्तोऽसिद्धत्वाच्च भवति, समासोदात्तत्वमेव भवति । 'पञ्चदण्डीति' । समाहारद्विगुः । 'नलोपस्यासिद्धत्वात् ष्णान्ता षडिति षट्संज्ञा भवतीति' । एतच्च यत्तत्रोक्तमन्तग्रहणमौपदेशिकप-

तिपत्त्यर्थमिति तदनाश्रित्योक्तं द्रष्टव्यम् । 'न षट्स्वस्रादिभ्य इति टाप्प्रतिषेधो भवतीति' । अत्र हि नान्तत्वात् पूर्वं ङीप् प्राप्नोति निषिध्यते, ततो जस्शसोर्लुकि नलोपे चाकारान्तत्वाट्टाप्प्राप्तः सोऽपि निषिध्यते, स्त्रियां यदुक्तं तच भवतीति सामान्येन निषेधविधानात् । 'तदेतत्प्रयोजनं कथं भवतीति' । पाक्षिकत्वं प्रयोजनस्य दर्शयितुं प्रश्नः । केषां चिद्दर्शनमनारभ्य कार्यविशेषमादौ तावत्संज्ञा क्रियते ततो यस्यां दशायां यत्कार्यं प्राप्तं तत्क्रियते लोकवत्, तद्यथा लोके दशम्यामुत्थितायां पुत्रस्य नाम दधातीति सकृत्कृतया संज्ञया सर्वाणि कार्याणि क्रियन्ते न तु प्रतिकार्यं नाम कुर्वन्ति तद्वदिति, अयं च यथोद्देशं संज्ञापरिभाषमिति पक्षः; कार्यकालपक्षे तु तेनतेन विधिवाक्येनैकवाक्यतापन्नेन संज्ञासूत्रेण संज्ञा प्रणीयतइति प्रतिकार्यं संज्ञाप्रवृत्तिः, तत्राद्ये दर्शने जस्शसोर्लुगर्था या संज्ञा तयैव टाप्प्रतिषेधस्यापि सिद्धत्वान्नेदं प्रयोजनं द्वितीये तु पक्षे भवति प्रयोजनमित्याह । 'यदि प्रतिकार्यमिति' । कथं तदा प्रयोजनमित्याह । 'या हीति' । 'जस्शसोर्लुगर्थेति' । उपलक्षणमेतत् ङीप्प्रतिषेधार्थेत्यपि द्रष्टव्यम् । 'स्त्रीप्रत्ययस्येति' । टाप इत्यर्थः, अथ प्रथमे पक्षे न कर्त्तव्यं संज्ञाग्रहणम्, इह हि दण्डिगुप्तौ गुप्तदण्डिनाविति नलोपे कृते दण्डिशब्दस्य घिसंज्ञा प्राप्नोति ततश्च तस्यैव पूर्वनिपातः स्यात्, नलोपस्यासिद्धत्वाद्धि संज्ञाया अभावादनियमः पूर्वनिपातस्य भवति । 'अत्र केचिदित्यादि' । सुपः संनिपातेन नलोपः स यदि तुकं प्रवर्त्तयेत तत्संनिपातं विहन्यात्, कथं पुनः संनिपातस्य विघातः यावता पूर्वान्तस्तुक् स तुग्ग्रहणेन गृह्यते, सत्यं, ह्रस्वमात्रभक्तस्तुगित्याश्रित्येदमुक्तम् । 'बहिरङ्गलक्षणत्वेन वेति' । बहिर्भूतविभक्त्यपेक्षो नलोपोऽन्तर्भूतक्विबपेक्षे तुक्यसिद्धो भवतीत्यर्थः । 'परिभाषाद्वयस्याप्यनित्यत्वं ज्ञापयितुमिति' । तत्र संनिपातपरिभाषाया अनित्यत्वाद्वृत्रायेत्यादौ सुपि चेति दीर्घत्वं भवति, बहिरङ्गपरिभाषायास्त्वनित्यत्वादेषा द्व इत्यत्र विभक्त्याश्रयं त्यदाद्यत्वं बहिरङ्गमपि प्रातिपदिकाश्रये टापि न सिद्धं भवति । 'वृत्रहच्छत्रमिति' । नात्र संनिपातलक्षणो नलोपः

नापि नलोपस्य बहिरङ्गत्वं तुकोऽपि छकारापेक्षत्वात् । 'राज्ञीयतीति' । क्यचि चेतीत्वम् । 'राजायतइति' । अकृत्सार्वधातुकयोरिति दीर्घः । 'राजाश्व इति' । अकः सवर्णे दीर्घः ॥

"न मु ने" ॥ मु इत्यविभक्तिको निर्देशः, । 'घिलक्षणो नाभावो न स्यादिति' । यद्येतन्नारभ्येतेति शेषः । अनेन सूत्रारम्भस्य प्रयोजनमुक्तम् । 'कृते तु नाभावइत्यादि' । यद्यत्र दीर्घत्वं स्यात् भाव्यमानोऽप्युकारः सवर्णान् गृह्णातीति यथा ऽमूभ्यामित्यादौ दीर्घस्य स्थानिनो दीर्घोकारो भवति तथात्राप्याकारस्य दीर्घोकारः स्यात्, ततश्च ह्रस्वसंनिपातकृतो नाभावस्तं विहन्यादिति भावः । अत्र चोदयन्ति, मुभावस्य सिद्धत्वात्किल दीर्घप्रसङ्गश्चोद्यते तत् किं मुभावमपश्यद् दीर्घशास्त्रं घिलक्षणं नाभावमपि न पश्यति, वृक्षादिशब्दस्थानीयं ह्येतद्दीर्घशास्त्रं प्रति ततश्च यञादेशभावात्कथमत्र दीर्घप्रसङ्ग इति । अत्राहुः । प्रयोगे तावन्नाभावः श्रूयते शास्त्रमपि तस्य सिद्धकाण्डे पठितं केवलं तद्विदानभूतं मुभावमेव दीर्घशास्त्रं न पश्यति तस्मा द्राक्षीनाभावं तावत्पश्यति ततश्च दीर्घत्वं प्रवर्त्तयेदिति । 'अथ वेति' । यथा कश्चित्कुशलमतिः किं जातीयो धावति किं वर्णो धावतीत्येकेनानेकेन वा पृष्टस्तन्त्रेण प्रतिवक्ति श्वेतो धावतीति, तथात्रापि योगद्वयमेतत् तत्रैकं ने कर्त्तव्ये मुत्वस्यासिद्धत्वं निषेधति, अपरं ने परतो यत्प्राप्तं तत्र, तदिदमुक्तम् । 'उभयार्थमिति' । 'तन्त्रेणेति' । साधारणं भवेत्तन्त्रं यथा तुल्यकक्षयोर्भुञ्जानयोः प्रदीपः, इह तु साधारणप्रयत्नस्तन्त्रम् । इदानीमेकस्मिन्नेव योगे यथोभयं साध्यते तथा दर्शयति । 'अथ वेति' । 'अर्थात्संगृहीतमिति' । वृद्धकुमारीवाक्यवत्, तद्यथा वृद्धकुमारीन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणोत् पुत्रा मे बहुक्षीरघृतमन्नं कांस्यपात्र्यां भुञ्जीरन्निति, पतिरेव तावदस्या न भवति कुतः पुत्राः कुतो,गावः कुतो धान्यम् । अनेनैव स्वल्वेकवाक्येन पतिः पुत्राः गावो धान्यमिति सर्वं वृतं भवति तद्वदत्रापि ने परतो यत्कार्यं तत्र कर्त्तव्ये मुभावस्यासिद्धत्वस्य प्रतिषेधं ब्रुवता नाभावेपि कर्त्तव्ये ऽर्थान्मुत्वस्यासिद्धत्वं प्रतिषिद्धं भवति । 'एकादेशस्वरो ऽन्तरङ्ग इति' । एकादेश-

स्वरे चत्वारि दर्शनानि, उदात्तानुदात्तयोरेकादेश आन्तर्यतः स्वरितो ऽभिनिर्वृत्तस्य स्थाने एकादेश उदात्तेनोदात्त इत्यनेनोदात्त गुणादेशः क्रियतइत्येकं दर्शनं, तथैवाभिनिर्वृत्तएकादेशस्वरे स्वरितगुणमात्रस्यो-दात्तमात्रं विधीयतइति द्वितीयं दर्शनं, तृतीयं तु दर्शनमेकादेश उदा-त्तेनोदात्त इति परिभाषा एकादेशविधिमुपतिष्ठते, तत्रायमर्थो भवति, आद्गुणो भवति उदात्तानुदात्तयोस्त्वाद्गुण उदात्त इति, एवं सत्येकादेशो विधीयमान एवोदात्तो भवति, चतुर्थदर्शनमुदात्तानुदात्तयोरेकादेशः स्वरितगुणः प्राप्त उदात्तो भवतीति । तत्र येन नाप्राप्तिन्यायेन स्वरि-तस्यापवाद उदात्तविधिः संपद्यते, तत्र परिभाषापक्षे सिद्धमुदात्तत्व-मयाविषु । इतरेषु तु पक्षेषु असिद्धत्वे प्राप्ते सिद्धत्वमुच्यते, आन्त-र्यतो ऽयादेश उदात्तो यथा स्यादिति, अन्यथा स्वरितः स्यात् । 'कुमार्या इदमिति' । कुमारशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, तस्मा-द्वयसि प्रथमइति ङीप्, यस्येति चेति लोपः, अनुदात्तस्य च यत्रोदात्तलोप इति ङीप उदात्तत्वं चतुर्थ्येकवचनं, कुमारी ए इति स्थिते आण्नद्या इत्याट् यणादेशः, उदात्तयणो हल्पूर्वादित्याट उदात्तत्वम् । आटश्चेति वृद्धि-रेकादेशः, स आन्तर्यतः स्वरितः प्रसक्त एकादेश उदात्त इत्यनेनोदात्तः क्रियते, तत्सिद्धत्वं वक्तव्यम्, । अयादेश उदात्तो यथा स्यात् । 'यदी-त्यादि' । पूर्वमुदात्तत्वं क्रियते पश्चादेकादेशः यथानन्तरं दर्शितं तदा भवतीदं प्रयोजनमित्यर्थः । 'अथ त्वित्यादि' । कुमार्या ए इति स्थिते आटश्चेति वृद्धिश्च प्राप्नोति उदात्तयणो हल्पूर्वादिति आटः स्वरश्च, द्वावप्यनित्यौ, स्वरः शब्दान्तरप्राप्तेरनित्यः, स हि प्रागाकारस्य प्राप्नोति कृतायां वृद्धावैकारस्य, वृद्धिरपि प्रागनुदात्तयोः परत्वात्स्वरे आटस्तु स्वरे कृते उदात्तानुदात्तयोः स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति उभयो-रनित्ययोः परत्वात्स्वरे प्राप्ते वर्णाश्रयत्वेनान्तरङ्गत्वाद्वृद्धिः, स्वरस्तु विभ-क्तिमपेक्ष्यमानः पदाश्रयो बहिरङ्गः । 'गाङ्गेऽनूप इति' । गङ्गाया इदमित्यण्, प्रत्ययस्वरेणान्तोदात्तः, ततो ङिः सुप्त्वादनुदात्तः, तयोरेकादेश उदा-त्तः । आपोनुगतमनूपमिति प्रादिसमासः, अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते

अनेरप्रधानकनीयमीत्युत्तरपदान्तोदात्तत्वं शेषनिघातः । 'तस्य सिद्धत्वादित्यादि'। एकादेशस्वरस्य सिद्धत्वे एङःपदान्तादतीत्ययमेकादेश उदात्तेन सह भवति, ततश्च स्वरितो वानुदात्तेपदादाविति पक्षे स्वरितः, पक्षे उदात्तो भवति, यदि त्वसिद्धत्वं स्यात् तदासावेकार उदात्तानुदात्तस्थानिकत्वादान्तर्यतः स्वरितः स्यात्, तथा च सति तस्य एङःपदान्तादतीत्ययमेकादेश उदात्तेन न भवति किं तर्हि स्वरितेनेति पक्षे स्वरितो न स्यात्, अपि तु स्वरितानुदात्तयोः स्थाने भवन्नान्तर्यतो नित्यमेव स्वरितः स्यात्, स उदात्तेनेत्यत इति पाठः, स एकादेश उदात्तेन सहेत्यतो हेतोरित्यर्थः । 'शतृस्वर इति'। तुदिवदि नदिभ्यो लट्, तस्य शत्राश्रयो नद्यजाद्योः स्वरः शतृस्वरः, शतुरनुमो नद्यजादि इत्यत्रान्तोदात्तादुत्तरपदादित्यन्तोदात्तादुत्तरपदादित्यनुवर्तते। 'तुदती वदती नदतीति'। 'तुदिनुदिभ्यां लट्, शत्रादेशः, तुदादिभ्यः शः, प्रत्ययस्वरेणोदात्तः । 'अनुम इति प्रतिषेधो ज्ञापक इति'। तेन नैतदर्थं सिद्धत्वं वक्तव्यमिति भावः। कथमेतत् ज्ञापकमित्याह। 'नदीति'। अनुम इति प्रतिषेधस्यैतत्प्रयोजनं नुदन्तीत्यत्राच्छीनद्योर्नुमिति यदा नुम् भवति तदा माभूदिति, असिद्धे चैकादेशस्वरेऽन्तोदात्तत्वाभावादेव शतृ न भविष्यति किमनुम इति प्रतिषेधेन, प्रतिषेधात्तु सिद्धत्वमनुमीयते, ननु यत्र लसार्वधातुकानुदात्तत्वस्य निमित्तं नास्ति तदर्थः प्रतिषेधः स्यात्, यान्ती वान्तीत्यत्र हि धातुप्रत्यययोरुदात्तयोरान्तर्यत एकादेश उदात्तः, स च शतृस्वरे सिद्धः, अत्रापि प्रत्ययस्वरे सति तदनन्तरमेव धातोः शेषनिघातो भवति, ततश्चात्रापि नान्तरेणैकादेशस्वरमन्तोदात्तत्वं भवति । 'एकानुदात्तत्वमिति'। एकं वर्जयित्वा परिशिष्टस्य यदनुदात्तत्वं तदेकानुदात्तत्वम्, भाष्ये त्वेकाननुदात्तमिति पाठः, तत्राप्यनुदात्तं पदमेकवर्जमित्ययमेव स्वरो विवक्षितः, तत्र ह्येकमेवानुदात्तमन्यत्सर्वमनुदात्तमित्युच्यते, तथा च तत्रोक्तं सिद्धं त्वेकाननुदात्तत्वादिति । 'तुदन्तीति'। शविकरण उदात्तः, लसार्वधातुकमनुदात्तं तयोरेकादेशः । 'अनेनेति'। एकादेशस्वरेण सिद्धेन । 'वर्त्तमानतेति'। अनुदात्तं

पदमेकवर्जमित्यस्यार्थो लक्ष्यते, यदि त्वसिद्धत्वं स्यात्ततोऽसत्यां वर्ज्यमानतायां द्वयोरुदात्तयोः श्रवणं स्यात्, ननु चोदात्तस्यासिद्धत्वेऽपि योऽसावुदात्तानुदात्तयोरेकादेश आन्तर्यतः स्वरितोऽभिनिर्वृत्तस्तदाश्रया वर्ज्यमानता भविष्यति सत्यं, सिद्ध्यति यदा स्वरितस्योदात्तो भवतीति पक्षः, यदा तु स्वरितापवादउदात्तो विधीयते तदा तस्यासिद्धत्वात् स्थानिनश्च स्वरान्तराभावात्केन वर्ज्यमानता स्यात् तस्मात्सिद्धत्वमुच्यते, न च कार्यकालपक्षाश्रयेण परिभाषान्तरवद्वर्ज्यमानपरिभाषाया अपि त्रिपाद्यां प्रवृत्तिः शक्याभ्युपगन्तुमतिप्रसङ्गात्, उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य उदात्तादनुदात्तस्य स्वरित इत्यत्रापि शेषनिघातप्रसङ्गात्, यथा तु यान्तीत्यत्र प्रागेवैकादेशाच्छेषनिघातो भवति तथात्रापीत्यप्रयोजनमित्याहुः । 'ब्राह्मणास्तुदन्तीति' । अत्रापि स्वरितत्वापवाद उदात्तत्वमिति दर्शने सिद्धत्वमुच्यते, अन्यथोदात्तस्यानुदात्तत्वाभावादुदात्तः प्रयोगे श्रूयेत 'बहिरङ्गस्यासिद्धत्वमेव भवतीति' । असिद्धं बहिरङ्गमन्तरङ्ग इत्यनेन । 'पचतीति' । इतिशब्दो निपातत्वादाद्युदात्तः । अत्र बाह्यपदापेक्षत्वादादेकादेशस्य बहिरङ्गत्वात्तत्स्वरोऽपि बहिरङ्गस्तस्यासिद्धत्वात्तेन वर्ज्यमानता न भवति । 'प्रपचतीति' । यत्रापि तिङि चोदात्तवतीति गतिनिघातो न भवति, उभयत्रापि पूर्वं प्रत्यन्तवद्भावात्प्रसङ्गः । 'हरित्र इति' । यदा छन्दसीवनिपाविति वनिप्प्रत्ययः क्रियते वन उपसंख्यानमिति तस्य च हत्वं तदा नार्थः सिद्धवचनेन । 'अलावीदिति' । लुङ्, च्लेः सिच्, इट्, अस्तिसिचोऽपृक्त इतीट्, सिचि वृद्धिः, ननु च इट ईटीत्यत्र इट इति षष्ठी विज्ञास्यते न पञ्चमी, सस्येत्यनुवर्तते, तत्रेहादेः सस्य लोपो विधीयमान इटो भविष्यतीति सिद्धमलावीदिति, सत्यं रूपं सिद्धं स्वरेतु दोषः स्यात्, यदि लोपेनेकारो निवर्त्येत अनुदात्तस्य ईटः श्रवणं प्रसज्येत उदात्तनिवृत्तिस्वरे लोपस्यासिद्धत्वाद्, यदा तु सकारमात्रस्य लोपे सवर्णदीर्घत्वं तदा सिचश्चित्करणादिडुदात्त इत्येकादेशस्वरो भवति । 'वृक्ण इति' । ओदित । इति निष्ठानत्वं, षत्वस्वरप्रत्ययेड्विधिष्वित्यस्य व्यावर्त्यं दर्शयति,

'कृत्वं तु प्रतीति'। 'लौकिकशब्द [1]एवोदाह्रियतइति'। कथं पुनरेकमेव त्रिषु विधिषूदाहरणमित्यत आह। 'तत्र ह्रीरिति' तत्र क्व चित्पक्षे किञ्चित्प्रयोजनं प्रत्युदाहरणमित्याह। 'यद्देति'। संज्ञायामिति वचनं तत्र संज्ञायामुपमानमित्यतः संज्ञायामित्यनुवृत्तेः। 'एष स्वर इति'। आद्युदात्तत्वं, लौकिक इति नोञ्चः ष्ठन्। प्लुतसहितो विकारः, प्लुत त्रिकारः। 'अग्ना३ इ, पटा३ उ इति'। अग्निपटुशब्दयोः संबुद्धिगुणे कृते एचो-ऽप्रगृह्यस्येत्यादिना पूर्वस्यार्द्धस्याकारः प्लुतः, उत्तरस्य त्विदुतौ। 'नित्यस्तु न प्राप्नोतीति'। पदान्ताद्वेति दीर्घलक्षणो विकल्पः स्यात्, क्व इति किम्। अन्यत्र प्लुतत्रिकारस्यासिद्धत्वमेव यथा स्यात्, खलपु ब्राह्मणकुलं, तत्र-संबुद्धाविह किञ्चिच्चपो इति न्यायेन गुणे खलपा उ इति स्थिते ह्रस्वस्य पिति कृतीति तुक् न भवति, द्विविधं चात्रासिद्धत्वं बहिरङ्गलक्षणं पूर्वत्रा-सिद्धमिति च। 'किमर्थं पुनरिति'। सकारस्य क्वचिदपि श्रवणाभावा-त्प्रश्नः। 'उचिच्छिषतीति'। उच्छी विवासे, तुक्, सन्, इट्, अजादे-र्द्वितीयस्येति छिस्शब्दस्य द्विर्वचनं, [3]शर्पूर्वाः खय इति खयः शेषः, छस्य अभ्यासे चर्चेति चकारः, संयन्तेत्यादौ मोनुस्वारः, अनुस्वारस्य ययि परसवर्णः। 'पदाधिकारश्चेदिति'। यदि सत्वादिविधिषु पदस्येत्य पेक्ष्यते तदा सत्वादीनां द्विर्वचनस्य च समकक्षत्वम्, अनपेक्षायां तु बहि-रङ्गं द्विर्वचनमन्तरङ्गेषु सत्वादिष्वसिद्धमिति पूर्वत्रासिद्धमित्येतच्च प्रवर्त्त-तइति सत्वादिषु कृतेषु द्विर्वचनमिति सिद्धमिष्टम्। 'गलोगल इति'। अचि विभाषेति लत्वम्। 'द्रोग्धेति'। वा द्रुहेति वा घत्वं, तदभावे हो ढः। 'नुच इति'। नुदविदेति वा निष्ठानत्वम्। 'अभिन इति'। भिदेर्लङ्, सिपि श्नमि हल्ङ्यादिलोपः सिपि धातोरुर्वा,दश्चेति वा रुत्वम्। अद्वा-ग्रमः। 'मातुःष्वसेति' मातुःपितृभ्यामन्यतरस्यामिति वा षत्वम्। 'माषवापाणीति'। प्रातिपदिकान्तेति वा णत्वम्। 'वाङ्नयनमिति'।

---

१ एवेति नास्ति मु॰ मूलपुस्तके।

२ चेति मु॰ मू॰ पाठः।

३ एतत्सूत्रस्थेन शर्पूर्वाः खय इति वार्तिकेनेति भावः।

यरोनुनासिकेऽनुनासिको वेति वा गकारस्य ङकारः 'वाक्शयनमिति'। शश्छोटीति वा छत्वं, लत्वादीनामित्यादिना ऽसिद्धत्वे लत्वादीनां यो दोषस्तं दर्शयति। '[1]अनिष्टोपि विकल्पः स्यादिति'। पूर्वोक्तयोः पदयोरेकत्र प्रवृत्तिरपरत्राप्रवृत्तिरित्येषोनिष्टो विकल्पः। 'एतत्सर्वमित्यादि'। योगविभागार्थमेव च प्रतिषेधाश्रयणमन्यथा लाघवार्थममुनेति निपातनमाश्रयणीयं स्यात्, ततो मु न इति द्वितीयो योगः, किमर्थमिदं, पूर्वयोगस्यासर्वविषयत्वख्यापनार्थं तेनातिप्रसङ्गो नोद्भावनीयः॥

"उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य"॥ उदात्तस्वरितयोरित्यनुवादेपि स्थानषष्ठ्येषा व्याख्यानात्, तेन उदात्तस्वरितयोः समीपवर्त्ती यो यण् ततः परस्यानुदात्तस्य स्वरितत्वं न भवति। 'सक्ल्व्याशा खलप्व्याशा इति'। 'ततः परस्य सप्तम्येकवचनस्य स्वरितत्वमिति'। केनेत्यत आह। 'उदात्त यण इत्यनेनेति'। योयमस्मिन्सूत्रे पूर्वोभागस्तेनेत्यर्थः। उदात्तयणो हल् पूर्वादित्युदात्तत्वं तु न भवति नोङ्धात्वोरिति प्रतिषेधात्, आशाशब्द आशाया अदिगाख्या चेदिति अन्तोदात्तत्वादनुदात्तादिः। 'तत्कथमयं स्वरितयण् भवतीति'। न कथं चित्, नह्ययं स्वरिमपनीय तत्स्थाने भवति, नहि पूर्वं शास्त्रं स्थानि बुध्या आदेशे प्रवर्त्तते, किं तर्हि स्थानिन्येव, यथोक्तं हत इत्येतद्द्विरुच्यत इति, न पुनस्तद्बुध्या ढशब्दो द्विरुच्यतइति। 'आश्रयादिति'। आहायं स्वरितयण इति न चास्ति सिद्धः स्वरितस्तत्राश्रयात् सिद्धत्वं भविष्यति। एवमुच्यमाने ऽतिप्रसङ्गमुद्भावयति। 'यद्येवमिति'। 'दध्याशेति'। दधिशब्दो नब्विषयस्यानिमन्तस्येत्याद्युदात्तः, शेषनिघातः, उदात्तादनुदात्तस्य स्वरित इति तस्य स्वरितत्वं तस्याश्रयात्सिद्धत्वे सति तत्स्थानिकादपि यणः परस्यानुदात्तस्य स्वरितत्वप्रसङ्ग इत्यर्थः। 'तस्मादित्यादि'। यत एवमाश्रयात्सिद्धत्वे दोषस्तस्मादयमेव यण् स्वरो यथा सिद्धो भवति तथा वक्तव्यं, तत्कथं, योगविभागः करिष्यते उदात्तयणः, उदात्तयणः परस्यानुदात्तस्य स्वरितो भवति, ततः स्वरितयणः, स्वरितयणश्चपरस्यानुदात्तस्य स्वरितो भवति, उदात्तयण इत्येव, तेन

१ अयं पाठो मुद्रितमूल पु॰ नास्ति।

उदात्तयण इत्येवं योऽभिनिर्वृत्तः स्वरितस्तत्रयणः परस्यानुदात्तस्य स्वरितत्वं भवतीत्यर्थः, तेनास्यैव स्वरितस्याश्रयात्सिद्धत्वं भविष्यति । यद्येवमित्यादिना योऽतिप्रसङ्ग उद्भावितस्तं केषां चिन्मतेन परिहरति । 'के चित्विति'। 'उदात्तात्स्वरितयणो येति'। उदात्तात्परो यः स्वरितः उदात्तादनुदात्तस्येति विहितः तस्य यो यण् तस्मादपि परस्येत्यर्थः । 'तैत्तिरीयकइति' । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयास्तेषामाम्नायस्तैत्तिरीयकं, चरणलक्षणो वुञ् । 'शाखान्तर इति' । वृत्तिकारदेशे या शाखा तदपेक्षं शाखान्तरत्वम् । एकशतं ह्यध्वर्युशाखा, विशेषवचनो वान्तरशब्दः । 'यास्ते विश्वा इति' । यद्वृत्तान्नित्यमिति सन्तीत्यस्य निघातप्रतिषेधः, अग्नेशब्दस्यामन्त्रितनिघातः । 'ब्राह्मण इति' । तत्रैव तैत्तिरीयके दधिशब्द उक्तस्वरः, आशयतीत्यस्य तिङ्ङिघातः । ननु चोभयत्राप्यत्र यणादेशे कृते उदात्तादनुदात्तस्य स्वरित इत्येव स्वरितः, तथा च यत्र स प्रतिषिध्यते नोदात्तस्वरितोदयमिति तत्र स्वरितो न दृश्यते च, स्वसम्भ्यमाभर प्रत्यग्निरुषसामग्रमख्यादिति, अयं तु स्वरित उदात्तस्वरितपरस्याऽपि भवति, दहाशसो रक्षसः पाह्यस्मानिति, तथा च भाष्येऽप्युदात्तपर एवानुदात्तेति प्रसङ्ग उद्भावितो दध्याशेति, तस्मात् पूर्वोक्तस्यातिप्रसङ्गस्य नायं व्यभिचार इति चिन्त्यमेतत्, निराकरिष्यमाणत्वादुास्य नात्र सुष्ठु निर्बन्धनी*यं दर्शयति । 'यथा त्विति' । अत्र वार्त्तिकं यण्स्वरो यणादेशे सिद्धो वक्तव्यः, स्वरितयणः स्वरितार्थः आश्रयात्सिद्धत्वमिति चेदुदात्तात् स्वरिते दोष इति, यदि चोदात्तादनुदात्तस्य स्वरित इति यः स्वरितः तस्य यो यण् ततः परस्यानुदात्तस्य स्वरितत्वमिष्टं स्याद् दोषत्वेन वचनमनुपपन्नं स्यात् । भाष्ये तु यथायमर्थः स्थितस्तथा दर्शयति । 'तथा चेति' । अत्र भाष्यम् । अथ वा स्वरितग्रहणं न करिष्यते, यदि न क्रियते केनेदानीं स्वरितयणः परस्यानुदात्तस्य स्वरितत्वं भवति, उदात्तयण इत्येव, स्वरितयणा व्यवहितत्वान्न प्राप्नोति, स्वरविधौ व्यञ्जनमविद्यमानवदिति नास्ति व्यवधानमिति, यदि चो

* निबन्धः कर्तव्यइति इं॰ पु॰ पा॰ ।

दात्तात् स्वरितयणः परस्यानुदात्तस्य स्वरितत्वमिष्टं स्यात् प्रत्याख्यानं न युज्येत, यदि प्रत्याख्यानं किमर्थं तर्हि स्वरितयणग्रहणं क्रियतइत्याह। 'तत्क्रियतइति'। 'स्थानिवद्भावाद्व्यवधानमस्तीति'। यणस्थानिकेनेकारेण, व्यञ्जनस्य ह्यविद्यमानवद्भावो नाचः। ननु च नपादान्तद्विर्वचनेति स्वरविधौ प्रतिषिद्धः स्थानिवद्भावस्तत्राह। 'स्वरदीर्घेति'। 'बैद्याशेति'। विदस्या पत्यं स्त्री अनृष्यातन्तर्ये बिदादिभ्यो ञ्, शार्ङ्गरवाद्यञो ङीन्, नित्स्वरेणाद्युदात्तो बैदीशब्दः॥

"एकादेश उदात्तेनोदात्तः"॥ अनुदात्तस्येति वर्तते, आन्यादिशब्दाः प्रातिपदिकस्वरेणान्तोदात्ताः, विभक्तिरनुदात्ता। 'पचन्तीति'। अत्र शबकारस्य यत्स्वरितत्वमुदात्तादनुदात्तस्य स्वरित इति तस्यासिद्धत्वाद् द्वयोरनुदात्तयोरेकादेशः॥

"स्वरितो वानुदात्ते पदादौ"॥ 'प्रादित्वात्समासे सतीति'। प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेध इत्यस्य तु तत्रैव स्वती पूजायामिति प्रतिषेधः कृतः, गतिसमासस्त्वनाश्रितः, गतिर्गताविति निघातप्रसङ्गात्, वसुकशब्दः पूर्ववदन्तोदात्तः। 'स्वरितग्रहणं विस्पष्टार्थमिति'। कथमित्याह। 'उदात्ते ही ति'। 'आन्तर्यत एव स्वरितो भविष्यतीति'। यद्येवं तस्य सिद्धत्वाच्छेषनिघातः स्यात्, गाङ्गूप इति, एकादेशस्य पूर्वं प्रत्यादिवद्भावादनूपशब्दो ऽनुदात्तः प्राप्नोति स्वरितग्रहणे तु सति अस्यासिद्धत्वाद्यथोक्तदोषाभावः, अथ क्रियमाणेपि स्वरितग्रहणे यः सिद्धः स्वरितः तेन वर्ज्यमानता कस्माच भवति कन्यानूप इति, कन्याशब्दः कन्याराजन्यमनुष्याणामन्त इत्यन्तस्वरितः, ततः स्वरितानुदात्तयोरेकादेश आन्तर्यतः स्वरितस्तस्य सिद्धत्वात्तेन वर्ज्यमानता प्राप्नोति, ततश्चात्र यः परिहारः स एव गाङ्गूप इत्यत्र भविष्यति, कः पुनरसौ पदद्वयाश्रयत्वेन एकादेशस्य बहिरङ्गत्वात्स्वरोपि तदीयो बहिरङ्गः शेषनिघातस्तु एकपदाश्रयत्वात्स्वरोपि तदीयोऽन्तरङ्गः, ततः किमसिद्धं बहिरङ्गमन्तरङ्गे॥

१ स्वरितस्येत्यधिकम् इं· पु·।

"नलोपः प्रातिपदिकान्तस्य" ॥

विशेष्यमन्तस्येत्यस्य नेत्येतदविभक्तिकम् ।

तथैव प्रातिपदिकेत्येतत्पदविशेषणम् ॥

प्रातिपदिकस्य पदस्येति समानाधिकरणे षष्ठ्यौ । 'अहन्निति' । हन्तेर्लङ्तिपो हल्ङ्याब्भ्यादिलोपः । 'अन्तग्रहणं किमिति' । नलोपः प्रातिपदिकस्येत्येवास्तु पदस्येति वर्तते, तत्र नकारेण पदे विशेष्यमाणे तदन्तविधिना नकारान्तस्य पदस्य लोपो विधीयमानोऽलोन्त्यस्येत्यन्त्यस्यैव भविष्यतीति प्रश्नः । 'राजानावि[1]ति' । असत्यन्तग्रहणे प्रातिपदिकस्य पदस्य योऽवयवो नकारः तस्य यत्र तत्र स्थितस्य लोपो भवतीत्यर्थः स्यात्, ततश्चेहापि स्यादिति भावः, एवं च नराभ्यामित्यादावपि प्रसङ्गो दर्शयितव्यः । ननु च क्रियमाणमप्यन्तग्रहणं प्रातिपदिकग्रहणेन समस्तं ततश्च प्रातिपदिकान्तस्य पदावयवस्य नकारस्येत्येषोऽर्थो भवति, न पुनः पदान्तस्येति, ततश्चाहवराभ्यामित्यादौ माभूत् राजानावि[2]त्यादौ तु स्यादेवात आह । 'प्रातिपदिकग्रहणमिति' । 'अहरिति' । स्वमोर्नपुंसकादिति स्वमोर्लुक्, नलुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधात्सुप्परत्वाभावात् रोऽसुपीति रत्वम् । 'अहोभ्यामिति' । अहन्निति रुत्वं, ननु चात्र रत्वरुत्वयोः कृतयोर्नकाराभावादेव नलोपो न भविष्यत्यत आह । 'रुत्वरेफयोरसिद्धत्वादिति' । नन्वनवकाशत्वाद्रत्वरुत्वे एव भविष्यतः, उक्तं ह्य[3]पवादस्य परस्यापि वचनप्रामाण्यादसिद्धत्वं न भवतीत्यत आह । 'सावकाशं वै तदुभयमिति' । संबुद्धौ हि न ङिसंबुद्ध्योरिति नलोपः प्रतिषिध्यते । 'हे अहरिति' । वा नपुंसकानामिति पक्षे नलोपप्रतिषेधः, अत्र रत्वं सावकाशम् । 'हे दीर्घाहो निदाघेति' । पुल्लिङ्गेऽन्यपदार्थे बहुव्रीहिः, संबुद्धेर्हल्ङ्याब्भ्यादिलोपः, निदाघशब्दस्य परस्य प्रयोगो विशेषणार्थः, हशि चेत्युत्वम्, अथ अहः अहोभ्या

---

१ राजान इत्यधिकम् इं॰ पु॰ ।

२ राजान इत्यधिकम् इं॰ पु॰ ।

३ तत्रेत्यधिकम् इं॰ पु॰ ।

मित्यादौ नलोपे कृते ऽप्येकदेशविकृतस्यानन्यत्वात्स एवाहःशब्द इत्य वशिष्टस्य योन्त्याकारः सो ऽवकाश इति कस्मान्नोक्तम् एवं मन्यते अहन्निति नकारापरित्यागेन निर्द्देशान्नकारान्तस्यैव स्थानित्वम् अन्यथा ह्रस्येत्येव ब्रूयादिति । 'अहन्निति प्रथमैकवचनान्तमिति' । आदेशमात्रे विधित्सिते अह्न इति नकारान्तस्येव षष्ठ्या निर्द्देशं कुर्यात् प्रथमान्तस्य निर्द्देशे प्रयोजनमेतस्य रूपस्यान्वाख्यानमेवेति भावः ॥

"न ङिसंबुद्ध्योः" । 'आर्द्रे चर्मन्निति' । सुपां सुलुगित्यादिना ङेर्लुक्, ननु च ङिसंबुद्ध्योर्द्वयोरपि लुप्तयोः पूर्वस्य प्रातिपदिकसंज्ञा नास्ति प्रत्ययलक्षणेनाप्रत्यय इति निषेधात्, ङौ तु पदसंज्ञापि नास्ति प्रत्ययलक्षणेनैव प्रवृत्तया भसंज्ञया बाधित्वात्तत्कृतो ऽत्र नलोपप्रसङ्गो ऽत आह । 'एतस्मादेवेति' । ननु च हे सुराजन्नित्याद्यर्थमेतत्स्यादत्र हि कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञा, न च तस्या अपि अप्रत्यय इति निषेधः, सूत्रान्तरगतत्वात्, एवं तर्ह्य[1]त्राप्यप्रत्यय इत्यनुवर्त्तते अन्यथा सुराजेत्यादौ विध्यर्थत्वसंभवात्समासग्रहणं नियमार्थं न स्यात्, तस्मादुपपन्नमेवास्य ज्ञापकत्वम्, एतच्च प्रतिकार्यं संज्ञाप्रवृत्तिरिति पक्षाश्रयेणोच्यते, तत्र हि विभक्त्यर्थमुत्पन्नया प्रातिपदिकसंज्ञया नलोपो न प्राप्नोति । 'भसंज्ञा च न भवतीति' । अत्राप्येतस्मादेव प्रतिषेधवचनात्प्रत्ययलक्षणेन ज्ञाप्यतइति च संबध्यते, ज्ञापनस्य प्रयोजनमाह । 'तथा चेति' । 'नलोपश्च भवतीति' । प्रातिपदिकत्वात् । 'अल्लोपश्च न भवती ति' । भसंज्ञाया अभावात् । अपर आह नायमर्थो ज्ञापकसाध्यः भसंज्ञा न भवतीति । कथं, यचीत्युच्यते, न चात्र यजादिं पश्यामः, प्रत्ययलक्षणेन, न लुमताङ्गस्येति प्रतिषेधः, तत्र हि लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यमाङ्गमनाङ्गं वा तत्सर्वं प्रतिषिध्यतइति । 'चर्मतिल इति' । वैयधिकरण्येपि गमकत्वाद्बहुव्रीहिः. ननु चात्यल्पमिदमुच्यते ङाविति संबुद्धावप्युत्तरपदे प्रतिषेधो वक्तव्यः, अन्यथा हे राजन् वृन्दारकेति विग्रह्य वृन्दारकनागकुञ्जरैः पूज्यमानमिति संबुध्यन्तयोः समासे सति लोपो

[1] तर्हि तत्रेति पा॰ २ पु॰ ।

न स्यात्, तथा च वार्तिकं, ङिसंबुध्योरनुत्तरपदइति अत आह। 'हे राजवृन्दारकेत्यत्र त्विति'। 'तत्र[1] न पूर्वपदार्थसंबोधनमिति'। नहि पृथगवयवार्थयोरभिमुखीकरणे परस्परमेकार्थीभावः संभवति, किञ्च संबुद्धावित्युच्यते न चात्र संबुद्धिं पश्यामः, प्रत्ययलक्षणेन, न लुमताङ्गस्येति प्रतिषेधः, वचनं तु हे राजन्नित्यादौ यत्र लोपशब्देन संबुद्धिर्लुप्यते तत्र चरितार्थं, ङौ तु नायं परिहारः संभवति, सर्वत्र लुमता लुप्तत्वात्। 'वा नपुंसकानामिति'। अप्राप्तविभाषेयं, संबुद्धेर्लुमता लुप्तत्वात्॥

"मादुपधायाश्च मतोर्वो ऽयवादिभ्यः"॥ अत्र चकाराद्वाक्यभेदः, मश्च अश्चेति समाहारद्वन्द्वः तस्मान्मात्परस्य मतोर्वो भवति, उपधायाश्च, मादित्येव, उपधायाश्च मात्परस्य मतोर्वो भवति, पूर्वेणानन्तर्ये विहितं व्यवधानेपि यथा स्यादित्ययमारम्भः, एवं व्याख्यातव्ये मतोरिह कार्यित्वेनेत्यादि यदुक्तं तत्राभिप्रायो मृग्यः, कश्चिदाह, मकारान्तान्मकारोपधादवर्णान्तादवर्णोपधाच्चेति, वैयाकरणगोष्ठीषु पठ्यते तस्येदमुपपादनमिति तत्रापि मकारोपधादकारोपधादिति बहुव्रीह्यर्थस्य नोपपादनं दृश्यते। 'व इत्ययमादेशो भवतीति'। अत्रेति शब्दः पठितव्यः, तदयमर्थो भवतीत्युपक्रमात्। यवादिविप्रतिषेधे प्रकारे आदिशब्दः। 'पयस्वानिति'। तसौ मत्वर्थइति भत्वादुत्वाभावः, इह नरो ऽस्यास्तीति नृमान्, तस्येदं नामेतमिति वृद्धौ कृतायामवर्णोपधादिति वत्वं प्राप्नोति तस्य प्रतिषेधो वक्तव्य इत्यत आह। 'इहेति'। बहिर्भूततद्धितापेक्षत्वाद्बहिरङ्गा वृद्धिरन्तर्भूतमतुबपेक्षे वत्वे असिद्धा भवतीत्यर्थः॥

"झयः"॥ 'अग्निचित्वानिति'। पूर्ववद्भत्वाज्जश्त्वाभावः॥

"संज्ञायाम्"॥ अहीवतीत्यादौ चातुरर्थिको नद्यां मतुप्॥

"आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती"॥ 'आसन्दीवदहिस्थलमिति,' देशविशेषः, यत्रेदमुच्यते॥

---

[1] तत्रेति नास्ति मु॰ मूलपुस्तके।

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् ।
अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजयः ॥

इति । 'तथाचोक्तमिति' ॥ प्रयोगशास्त्रेषु, राजासन्दी सोमराजस्यासनं, यदि तस्यैव संज्ञायामिति वत्वेन सिद्धम् आसंदीवदित्येतत्किमर्थं तर्हि निपातनमित्यत आह । 'प्रपञ्चार्थं त्विह पठ्यतइति' । अत्रेतिशब्दः पठितव्यः, अपरे त्वाहुरित्युपक्रमात् । 'शरीरैकदेशस्येति' । स पुनर्जान्वोः सन्धिः । 'चक्रीवन्ति सदो हविर्धानानीति' । सारस्वते सत्रे अङ्गानि सदो हविर्धानानि, न त्वेकत्रावस्थितानि तानि तत्र तत्र कर्षणाय चक्रयुक्तानि भवन्ति । 'कक्षीवानिति' । हल इति दीर्घत्वम् । 'रुमर्षिति प्रकृत्यन्तरमस्तीति' । रुमा च लवणाकरः । 'णत्वार्थं चेति' । पदान्तस्येति प्रतिषेधप्रसङ्गात् । 'मतोर्वा नुडर्थमिति' । अत्र पक्षे पूर्वस्य नकारस्य लोपः, णत्वमपि रषाभ्यामित्येव सिद्धम् ॥

"उदन्वानुदधौ च" ॥ 'उदन्वान्नाम ऋषिरिति' । यस्य च कामवर्षी पर्जन्यः, यस्मिन्नुदकं धीयतइति स पुनस्तटाकादिः, कर्मण्यधिकरणे चेति कि प्रत्ययः, पेषंवासवाहनधिषु चेति उदकस्योद्भावः । 'उदकसत्तासंबन्धसामान्यमिति' । तच्च देवदत्तादिष्वपि संभवति, असंज्ञार्थं वोदधिग्रहणम् ॥

"राजन्वान् सौराज्ये" ॥ शोभनो राजा तस्य भावः सौराज्यं, ब्राह्मणादित्वात्ष्यञ्, टिलोपः, तत्पुनः शोभनेन राज्ञा देशस्य संबन्धः, समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेनेति वचनात्, एतच्च राजन्वानित्यस्य प्रवृत्तिनिमित्तं देश एव त्वभिधेयः, यदाह । 'सौराज्ये गम्यमानइति' । 'राजन्वानिति' । प्रशंसायां मतुप्, नलोपाभावो निपात्यते, सूत्रे पुल्लिङ्गस्याविवक्षितत्वं दर्शयति । 'राजन्वती पृथिवीति' ॥

"अनो नुट्" ॥ 'अक्षण्वन्त इति' । अक्षिशब्दस्य मतुपि छन्दस्यपि दृश्यतइति अनङादेशः, नुटो ऽसिद्धत्वात् पूर्वं नलोपे भूतपूर्वगत्या नुट्, तस्य णत्वम् । 'शीर्षण्वतीति' । शीर्षं श्छन्दसि शिरसः

शिर्षन् आदेशः । प्रकृत्यन्तरं वा शिरस्शब्देन समानार्थः । शिर्षण्वति छन्दसि निपात्यते। नुडयं परादिः क्रियते तस्य मतुब्ग्रहणेन ग्रहणान्मादुपधाया इति वत्वं प्राप्नोति, मकारस्य तु न प्राप्नोति, नुटा व्यवधानात्, यदि पुनरयं नुक् पूर्वान्तः क्रियते, नैवं शक्यम्, अक्षण्वता शीर्षण्वता णत्वं न स्यात्, इह च सुपथिन्तरः, उत्तरसूत्रेण नुकि कृते पदान्तत्वाच्च शकुव्यप्रशानिति रुत्व प्राप्नोति तस्मात्परादिरेव कर्त्तव्यः, तत्र चोक्तो दोषो ऽत आह । 'नुटो सिद्धत्वादिति' । नन्वेवमप्यवग्रहे दोषः प्राप्नोति अक्षण्वन्त इत्यक्षण्वन्त इति णान्तमवगृह्णाति तच्च प्राप्नोति, न लक्षणेनपदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम् ॥

"नाद्धस्य" ॥ 'भूरिदावत्तर इति' । आतो मनिनित्यादिना वनिप् । 'रथीतर इति' रथशब्दान्मत्वर्थीय इनिः, तदन्तात्तरप्, नकारलोपे कृते दकारस्य ईकारः, यदि तु नकारलोपापवादो नकारस्य स्थाने विधीयेत तदा तस्यासिद्धत्वादेकादेशो न स्यात् ॥

"कृपो रो लः" ॥ कृपो धातोरिति पाठः । भाष्ये कृपो रो ल इति पठितत्वात्, नुड्विधिलादेशविनामेष्वृकारे प्रतिविधातव्यमित्युक्तं, तत्रावसरे प्राप्ते लादेशे प्रतिविधत्ते । '[1]इति सामान्यमिति '। वर्णत्वावर्णत्वकृतभेदतिरस्कारेण वर्णात्मिकायामवर्णात्मिकायां च रेफव्यक्तौ यत्सामान्यं वर्त्तते यतो द्वयोरपि तयोर इत्यभिन्नाभिधानप्रत्ययौ भवतस्तदुपादीयते न तु वर्णात्मिकैव रेफव्यक्तिरित्यर्थः । 'ततः किमित्यत आह'। 'तेनेति'। 'इत्यपि सामान्यं चेति'। उपादीयतइत्यपेक्षते. अत्रापि तेन यश्च केवलो लकारः यश्च लकारस्थः तयोर्द्वयोरपि ग्रहणमिति पठितव्यं पूर्वानुसारेण तु गम्यमानत्वान्न पठितं, यदि द्वयोरपि ग्रहणं ततोपि किमित्याह । 'ततोर्यमिति'। केवलस्य, शुद्धस्य । 'लकार आदेश इति'। अत्रापि केवल इति द्रष्टव्यम् । 'ऌकारस्यापि ऌकार इति'। आन्तरतम्यात्, ननु सत्यपि द्वयोरपि ग्रहणे ऋकारस्थस्य रेफस्य लकारस्थो लकार आदेशो भवतु कथन्तु कृत्स्नस्य कृत्स्नो वर्ण आदेशो लभ्यत इत्याशङ्क्योक्तम् । 'एकदेशद्वारेणेति'।

---

१ इत्यपीति मु० मूलपुस्तके पाठः ।

एकदेशविकारस्यो रेफः तस्य विकार एकदेशविकारः, यद्वात्र एकदेश लृकारस्योलकारः स एव विकार एकदेशविकारः तद्द्वारेण, तत एतदुक्तं भवति, अर्धमात्रासंपुटितयो रेफलकारयोर्निष्कृष्य कर्तुमशक्यत्वात्समुदायस्य समुदाय आदेश इति, यदि निष्कर्षो शक्यक्रियः माभूत्तयोरुपादानं न पुनरेतावता सूत्रे ऽनुपात्तयोः समुदाययोः स्थान्यादेशभावो विद्यतइत्यत आह। 'तथा चेति'। 'एवमादय इति'। आदिशब्देन तासि च कॢपः, ऋदुपधाच्चा कॢपिचृतेः, अनवकॢप्त्यमर्षयोरित्यादेर्ग्रहणम्। 'कल्प्तेति'। ऊदित्त्वात्पक्षे इडभावः, अत्र लत्वस्यासिद्धत्वात्पूर्वं परस्मैपदे तासि च कॢप इतीड्भावोन्यत्र तु गुणे कृते रेफस्य लकारः। 'चिकॢप्सतीति'। हलन्ताच्चेति सनःकित्त्वम्॥ 'कृपेरिति। कृप कृपायां, भवतु संप्रसारणे कृते रूपं, तथापि रूपसामान्याद्ग्रहणप्रसंगो ऽत आह। 'तस्य हीति'। 'कृपेरेव द्रष्टव्या इति'। रञ्जेः क्युन् बहुलवचनात्कृपेरपि भवति, कृकपिभ्यां कीटचित्यत्रापि कृपिरेव पठितव्यः, खर्जि पिञ्जादिभ्य ऊरोलचौ कृपेरपि भवतु सर्वत्र बहुलवचनात्संप्रसारणम्। 'कृपूरादय इति'। आदिशब्देन कृपाणस्य ग्रहणं, युधिबुधिदृशेः किच्चेति बाहुलकात् कृपेरपि आनच्, यद्वावश्यं बाहुलकमाश्रयणीयं कृपे रपि न दोष इत्याह। 'उणादयइति'। 'बालेति'। बल वल्ल संवरणे, बल्यतइति बालः। 'मूलमिति'। मूल प्रतिष्ठायामित्यस्मादिगुपधलक्षणःकः, लङ्घिवंह्योर्नलोपश्चेति कुप्रत्ययान्तो लघुशब्दः, अलमित्यव्ययम्, अङ्गेः कुलिः अङ्गुलिः अमेर्गुरी रश्च लो वेति नाश्रितं, कपिलकादिषु वा रस्य लः। 'रोमाणीति'। रौतेर्मनिन्, रोमन् नामन् सीमन् स्तोमन् होमन् सामन् लोमन् व्योमन् विधर्मन् पाप्मन् धामन् इत्यत्र लोमन्सामचिति निपातनं नाश्रितम्। 'पांसुरमिति'। पांसुरस्मिन्नस्तीति नमपांसुपाण्डुभ्यश्चेति रः, कृञो मनिन् कर्म, शुक्रः शुक्ल इति ऋज्रेन्द्रेति निपातनं नाश्रितम्। अथ कृप सामर्थ्य इत्येव कस्मान्न पठितम्। एवं हि लत्वं न विधेयं भवति, नैतदस्ति, अचोकॢपदिति हि न सिध्येत्। ऋकारलृकारयोः सवर्णविधिरिति लृकारस्योरदिति अकारे कृते अचीकृपदिति स्यात्, लत्वविधौ

तस्यासिद्धत्वात्पूर्वमृकारस्ततो लत्वमिति सिद्धमिष्टम् । तथा चलीक्लृप्यतइति रीको पि लत्वसिद्धिर्भवति ॥

"उपसर्गस्यायतौ" ॥ 'अयतौ परइति'। अत्र द्वौ पक्षौ, अयतिःग्रहणं रेफविशेषणम्, अयतिपरस्य रेफस्य, स चेदुपसर्गस्येति, उपसर्गविशेषणं वा, अयतिपरस्योपसर्गस्य यो रेफ इति, तत्राद्ये पक्षे एवमन्वयः, अयतौ परतो यो रेफ उपसर्गसंबन्धी तस्येति, द्वितीये त्वयतौ परतो य उपसर्गस्तस्य यो रेफस्तस्येति । 'प्लायतइति'। अयतिरनुदात्तेत्, कथं तर्हि उदयति विततोर्ध्वरश्मिरज्जाविति परस्मैपदं, किमनेन वन्यगजशौचेन, यदि वा पचाद्यजन्तादुदयशब्दादाचारे क्विपि लट्, के त्रिस्तु इट कटी गतावित्यत्र इकारमपि धातुं पठन्ति, यथा त्वत्र दर्शिते पक्षद्वयेपि दोषो न भवति तथा क्रमेण दर्शयति । 'अत्रेति'। 'स्थानिवद्भावादिति'। पूर्वत्रासिद्धे न स्थानिवदित्येतत्त्विह न भवति, तस्य दोषः संयोगादिलोपलत्वणत्वेष्वित्यपवादस्मरणात् । 'यद्ययतिग्रहणं रेफस्य विशेषणमिति'। कार्यित्वेन प्रधानत्वात् । 'एकेन वर्णेनेति'। एकग्रहणं पल्यय इत्यत्र संघातेन व्यवाये न भवतीति प्रदर्शनार्थम् । 'तथा चेति'। एवं च कृत्वेत्यर्थः । 'पल्ययत इत्यत्रापीति'। यत्र श्रूयमाणेनैकेनैव वर्णेन लौकिकं व्यवधानं तत्रापि प्रवर्तते न केवलं प्लायत इत्यादौ यत्र स्थानिभावद्वारेण शास्त्रीयं तत्रैवेत्यपि शब्दस्यार्थः, अमुमेव विशेषं दर्शयितुमस्य पृथगुपन्यासः । ननु च निर कुषः, सुदुरोरधिकरणइति निर्देशाद्रेफान्तावप्युपसर्गौ स्तस्तौ वचनस्यावकाशा इति कथं व्यवधाने भवति। उच्यते। यद्येतावत्प्रयोजनं स्यान्निदुरोरयतावित्येव ब्रूयात्, उपसर्गग्रहणात्तु व्यवायेपि भविष्यति, एतच्चैकवर्णव्यवधानेनाप्युपपन्नमिति न पल्ययतइत्यत्र प्रसङ्गः। 'उपसर्गविशेषणे त्विति'। श्रुतत्वादिति भावः । 'सिद्धमेवैतत्सर्वमिति'। येन नाव्यवधानमित्यादि न कश्चित् यत्नो ऽस्मिन्पक्षे इत्येवशब्दस्यार्थः।'प्रतेरपितु प्राप्नोतीति'। पूर्वस्मिन्पक्षे संघातेन व्यवायाच्च प्राप्नोति अत्र तु प्राप्नोतीत्यमुं विशेषं तुशब्दो द्योतयति। 'प्रथमपक्षदर्शनाभिनिविष्टास्त्विति'। प्रथमपक्षस्य या दर्शना परेभ्यः प्रतिपादना तत्राभिनिविष्टास्तत्परायणा

इत्यर्थः । 'अपरे त्वित्यादि' । आप्तपर्यायः प्रत्ययितशब्द इतच् प्रत्ययान्तः संजातप्रत्ययाः प्रत्ययिता इति । 'निस्दुस् इत्येतयोस्त्विति' । सकारान्तविषयोयन्यः, रेफान्तयोस्तु भवितव्यमेव लत्वेन ॥

"यो यङि" ॥ उदाहरणे ऋत इद्धातोरितीत्वं, रपरत्वं, हलि चेति दीर्घस्यासिद्धत्वात्पूर्वमनेन लत्वं, ततोपहृतनिमित्तत्वाद्दीर्घाभावः । 'गिरतेर्गृणातेश्चेति' । निगरणार्थस्य शब्दार्थस्य च । 'सामान्येनेति' । विशेषानुपादानात् । अपरे तु गिरतेरेव ग्रहणमिच्छन्तीत्यनुषङ्गः । कः पुनरत्र हेतुरित्यत आह । 'गृणातेस्त्विति' । तुह्यर्थे । 'निगीर्यतइति' । यक् ॥

"अचि विभाषा" ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्प्रत्ययः संनिधापितः, तस्याचाविशेषणात्तदादिविधिर्विज्ञायते, यदाह । 'अजादौ प्रत्यये इति' । 'निगिरतीति' । तुदादित्वाच्छः, तस्य ङित्त्वादभावे गुणे इत्वम् । 'णिलोपस्य स्थानिवद्भावादिति' । पदस्य लत्वविधानादन्तरङ्गत्वाभावात्पूर्वत्रासिद्धमिति च लत्वस्यासिद्धत्वात्पूर्वं णिलोप एव भवतीति भावः, प्रत्ययलक्षणमप्यत्र शक्यं वक्तुं, न च वर्णाश्रयत्वमजादौ प्रत्यय इत्युक्तत्वात्, कथं पुनः स्थानिवद्भावः, यावता पूर्वत्रासिद्धे न स्थानिवदिति पठ्यते ऽत आह । 'पूर्वत्रासिद्ध इति' । कः पुनरस्यापवाद इत्यत आह । 'तस्य दोष इति' । 'अन्तरङ्गत्वाद्वेति' । पदस्येत्यधिकारात्कालतोन्तरङ्गत्वाभावेप्यन्तर्भूताज्ञाश्रयत्वाल्लत्वमन्तरङ्गं बहिर्भूतयगपेक्षत्वात्तु णिलोपो बहिरङ्ग इति भावः । 'गिरौ गिर इति' । विस्पष्टार्थम् ॥

"परेश्च घाङ्कयोः" ॥ 'परि घ इति' । परौ घ इत्यप्, हन्तेष्टिलोपो घत्वं च । 'पर्यङ्क इति' । अकि लक्षणे पचाद्यच् हलश्चेति घञ्, वाहुलच । 'घ इति स्वरूपग्रहणमत्रेष्यतइति' । इष्टिरेषेयं, परियोगः, पर्यनुयोगः ॥

"संयोगान्तस्य लोपः" ॥ 'इह श्रेयान्भूयानिति' । संयोगान्तलोपो न प्राप्नोति परत्वान्नुत्वेन बाध्यमानत्वादित्याशङ्क्याह । 'इहेति' ।

यथैव तर्हि रुत्वमसिद्धत्वात्संयोगान्तलोपं न बाधते तथा जश्त्वमपि न बाधेत, ततश्च पयो यश इति जश्त्वमेव स्यादत आह। 'जश्त्वे त्विति'। संयोगान्तलोपे हि प्राप्ते ऽप्राप्ते च रुत्वमारभ्यते, श्रेयानित्यादौ प्राप्ते, पय इत्यादौ त्वप्राप्ते, जश्त्वे तु सर्वत्र प्राप्त एव, तस्माद्येन नाप्राप्तिन्यायेन जश्त्वमेव बाध्यते न संयोगान्तलोपः। 'दध्यत्रेत्यादि'। यणादेशो हि द्विपदाश्रयत्वाद्बहिरङ्गः संयोगान्तस्य लोपस्त्वेकपदाश्रयत्वादन्तरङ्गः। अन्तग्रहणं शक्यमकर्तुं, पदस्येति वर्तते, संयोगे न हि पदे विशेष्यमाणे तदन्तविधिना संयोगान्तस्येति लभ्यतएव॥

"रात्सस्य"॥ 'संयोगान्तस्य पदस्येत्यादि'। संयोगान्तस्य पदस्य योऽवयवो रेफस्तस्मादुत्तरस्य सकारस्य लोपो भवति तदेव पदं प्रत्यलोत्स्यस्येत्यर्थः। 'अवाः अत्सारिति'। त्सर संवलने त्सर छद्मगतौ। 'रात्सस्यैवेति'। रादेव सस्य नान्यतः श्रेयानित्यादौ, एवं तु नियमो न भवति, उरःप्रभृतिषु पुमानिति कृतसंयोगान्तलोपस्य पाठात्। 'ऊर्गिति'। ऊर्ज बलप्राणनयोः, भ्राजभासेत्यादिना क्विप्, अत्र नियमाज्जकारस्य लोपाभावे चोः कुरिति कुत्वं गकारः, वावसानइति चर्त्वम्। 'न्यमार्डिति'। मृजू शुद्धौ अदादिः, तिपो हल्ङ्याब्भ्यो लोपः, मृजेर्वृद्धिः, व्रश्चादिना षत्व, जश्त्वचर्त्वे॥

"धि च"॥ इतः प्रभृति सिचः सकारस्य लोप इति वक्ष्यति, ततश्च सिवा प्रत्यय आक्षिप्यते, तस्य धकारेण विशेषणात्तदादिविधिर्विज्ञायतइत्याह। 'धकारादौ प्रत्ययइति'। भाष्यकारमते तु धकारे परइति द्रष्टव्यम्। 'अलविढ्वमिति'। लुङ् ध्वः सिच् इट्, सिचो लोपः, विभाषेट इति पक्षे मूर्धन्यः। 'धकारो न श्रूयेतेति'। ष्टुत्वे कृते अलविड्ढमित्येव स्यात्, विभाषा ग्रहणं तु तत्र चीध्वमर्थं लिड्र्थं च स्यात्। 'इतः प्रभृतीत्यादि'। उदःस्थास्तम्भोः पूर्वस्येति पूर्वसवर्णविधानमत्र ज्ञापकमाहुः। अन्यथाऽत्स्था इति स्थिते तकारात्परस्य सकारस्य झलो झलीति लोपे सति उत्थानेत्यादेः सिद्धत्वादनर्थकं तत्स्यात्सामान्यापेक्षं च ज्ञापकमस्मिन्प्रकरणे यो लोपः स सिच इति।

'चकाद्धीति'। हे शिरः पलितं सच्चकाद्धि, शोभस्वेत्यर्थः, चकासृ दीप्तौ अदादिः, लोट्, सिपो हिः, हेर्द्धिः, झलाञ्जश् झशीति सकारस्य दकारः। 'पयो धावतीति'। हशि चेति रोरुत्वं, यदि सिचो लोप इष्यते सग्धिर्वब्धामिति झलो झलीति लोपो न स्यादत आह। 'सग्धिर्वब्धामिति'। अदेः क्तिनि बहुलं छन्दसीति घस्लादेशः, घसिभसोर्हलि चेत्युपधालोपः, बहुलं छन्दसीति सलोपः, झषस्तथोर्धोऽधः, जश्त्वेन घकारस्य गकारः, समानाग्धिः सग्धिरिति पूर्वापरप्रथमेत्यादिना कर्मधारयः, समानस्य छन्दसीति सभावः। 'बब्धामिति'। भस भर्त्सनदीप्त्योः जुहोत्यादिः, लोट्, तसस्तां, श्लौ द्विर्वचनं, पूर्ववदुपधालोपः, सकारस्य च लोपः, तकारस्य धकारः, पकारस्य जश्त्वं बकारः। 'पयो धावतीत्येवमादावपीति'। अन्यथा रुत्वस्य सिद्धत्वात्पूर्वं सलोपः स्यात्। 'भाष्यकारस्त्वाहेति'। पूर्वं तु श्लोकवार्त्तिककारस्य मतं दर्शितम्। 'यद्यान्तरमास्थेयमिति'। एकपदाश्रयत्वादन्तरङ्गं रुत्वं पदद्वयाश्रयत्वाद्बहिरङ्गः सलोपः, तत्र सलोपस्यासिद्धत्वात् पूर्वत्रेति निर्द्दिष्टस्य विषयस्याभावादसिद्धत्वाभावाद्रुत्वमेव तावत्प्रवर्त्तते, अल्विधित्वाच्च स्थानिवत्वाभावादोर्लोपाभाव इति। 'धिसकार इति'। स्थानिनोपि विषयत्वविवक्षया सकार इति सप्तमीनिर्द्देशः। 'आशाध्वमिति'। आङः शासु इच्छायाम् अदादिरनुदात्तेत्। 'जश्त्वमिति'। झलां जश् झशीत्यनेन। 'सर्वमेवमिति'। यदि सकारस्य जश्त्वेनाशाध्वमिति सिद्धं, ततः सर्वमेव लक्षजातं जश्त्वेनैव सिद्धं स्यात्, ततश्च सूत्रमेवेदं न कर्त्तव्यमिति, 'श्रुतिश्चापि नभिद्यत इति'। व्यञ्जनपरस्यैकस्यानेकस्य वा हलः श्रवणे विशेषो न धार्यतइत्यर्थः। 'लुङश्चापीति'। अयं चापरो जश्त्वे सति गुणः, इणः षीध्वमित्यत्र लुङो ग्रहणं न कर्त्तव्यं भवति अच्योढ्वमलोढ्वमित्यादौ षत्वजश्त्वष्टुत्वैरेव रूपस्य सिद्धत्वात्।

ह्रस्वादङ्गादिति सिचो लोपेऽकृते, कथं भवेत्।
दोषान्तराभिधानात्तु नैतत्सुष्ठु निरूपितम्॥

तद्दर्शयति । 'सेटि दुष्यतीति' । एतच्च यद्यत्र सकारस्य लोपो न स्यादित्युपक्रम एवोक्तं तस्माद्धि चेति कर्तव्यं, मूर्धन्ये च लुङो ग्रहः, धित्वकारे सिचो लोप इति त्वेतदवस्थितं तत्र दोषान्तरं दर्शयति । 'घसिभसोरिति' । सग्धिश्चबप्साम्इत्येतयोरसिद्धिप्रसङ्गात्, न सिचो लोपः शक्यो विज्ञातुमित्यर्थः, परिहरति । 'छान्दसो वर्णलोपो वेति' । वाशब्दः पक्षं व्यावर्त्तयति, सिच एवायं लोपः, । घसिभस्योस्तु छान्दसो वर्णलोप इति । क्व यथेत्याह । 'यथेति' । इष्कर्तारमध्वरस्येत्यस्यैकदेशानुकरणादिष्कर्तारमध्वरशब्दात्सप्तमी, तत्र बह्वृचा इष्कर्तारमिति पठन्ति, तैत्तिरीयास्तु निष्कर्तारमिति ॥

"झलो झलि" ॥ भिदिच्छिदी स्वरितेतौ, मन्यतिरनुदात्तेत् । 'अयमपि सिच एव लोप इति' । यदि वा पदस्येति वर्त्तते, तत्रा[1]सत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामप्येकसंबन्धत्वे विधिरयमिति सोमसुत्स्तोतेत्यादौ न भविष्यति, समासेपि न भवति, सोमसुत् स्थितिरिति किं कारणं सकारयकाराभ्यां यत्पदमारब्धं तत्प्रति तकारस्यावयवत्वाभावात् ॥

"ह्रस्वादङ्गात्" ॥ 'अच्योष्टेति' । सलोपस्यासिद्धत्वात्पूर्वं गुणस्ततो विहतनिमित्तत्वाल्लोपाभावः । 'अयमपीति' । अत्रोदः स्थास्तम्भोरिति पूर्वोक्तं ज्ञापकमेव शरणम् । 'द्विष्टमामिति' । ह्रस्वात्तादौ तद्धितइति षत्वम् ॥

"इट ईटि" ॥ अत्र सिच एव संभवः ॥

"स्कोः संयोगाद्योरन्ते च" ॥

गुणभूतोपि संयोगो झलन्ताभ्यां विशेष्यते ।
संयोगाद्योः पदस्यान्ते स्कोर्यस्माचास्ति संभवः ॥

इति मत्वाह । 'पदस्यान्तइति' । 'झलि च परत इति' । पदस्य यः संयोग इत्यपेक्षते । 'लग्न इति' । ओलस्जी व्रीडे, निष्ठा, ईदित्त्वा-

---

१ तत्रप्रत्यासत्तेरिति पा॰ २ पु॰ ।

दिट्प्रतिषेधः, अत्र तकारे झलि परतः सजयोर्यः संयोगः तदादिः सकारः, ओदितश्चेति निष्ठानत्वं, तस्यासिद्धत्वात्कुत्वम्। 'साधुलगिति'। साधु लज्जत इति क्विप्। 'मग्न इति'। मस्जिनशोर्झलीति नुम्, स च जकारात्पूर्वः, मस्जेरन्त्यात्पूर्वं नुममिच्छन्तीति वचनात्, तेनानिदितामिति नलोपः, सलोपादि पूर्ववत्। तष्ट इति। तक्षू तनूकरणे, ऊदित्वा द्विकल्पितेट्, यस्य विभाषेतीट्प्रतिषेधः,। 'झलि सङीति वक्तव्यमिति'। सङीत्ययं प्रकरणशेषः, किं प्रयोजनम्।

गिरोऽभोर्धिर्द्विष्टरां च वृषत्स्यः काष्टशक्स्थिरः।
कुञ्चाधुर्येति मा स्मैषु लत्वादीनि भवन्त्विति॥

गिर इत्यत्राचि विभाषेति लत्वं माभूत्, अभोर्धिरिति, धि चेति सलोपो न भवति। 'द्विष्टरामिति। ह्रस्वादङ्गादिति न भवति, वृषत्स्यः, झलो झलीति न भवति, काष्टशक्स्थिरः, स्कोः संयोगाद्योरिति न भवति, कुञ्चा चोःकुरिति कुत्वं न भवति, धुरं वहतीति धुर्येति हलि चेति दीर्घत्वं न भवति, तथा च वार्त्तिकं सङि लत्वलोपसंयोगादिलोपकुत्वदीर्घत्वानीति, सङीति प्रकृत्य लत्वादीनि वक्तव्यानीत्यर्थः, तदेवं वार्त्तिककारमते ऽपि चक्षाधीत्येव भवितव्यं, सङीति वचनात्। 'सनःप्रभृतीति'। धातुप्रत्ययानां ग्रहणमित्यर्थः। अत्र संयोगादिलोपं प्रयोजनं प्रत्याचष्टे। 'तदिति'। तदिति वाक्योपन्यासे। 'शक्के रिति' ककारान्तोपलक्षणमेतत्, तेन कक लौल्ये कुक वृक आदानइत्यादेरपि क्विबन्तस्य प्रयोगो नास्त्येव। 'आहुरिति'। भाष्यकारादयः। तत्र भाष्यं तावत्पठति। 'काष्टशगेवेति'। वाक्यर्थमित्यत्र स्थानिवद्भावोपि शक्यो वक्तुं, तस्य दोषः संयोगादिलोप इत्युक्तत्वात्॥

"चोः कुः"॥ 'नकारोपधो वेति' पूर्वमौत्पत्तिकं ञकारोपधत्वमाश्रित्योक्तम्, इदानीन्तु नकारस्यानुस्वारपरसवर्णाभ्यामागतो ञकार इत्युच्यते। 'नकारलोपे हीति'। तथा संनिपातपरिभाषायाः प्रयोजनेषु पठितमुदुपधत्वमकित्त्वस्य निकुचितइति। कुचितशब्देकित्त्व संनिपातकृतमुदुपधत्वमुदुपधाद्भावादिकर्मणोरन्यतरस्यां कित्त्वस्य निमित्त न भवती-

त्यर्थः। नन्वस्तु नोपधः, तथाप्यनुस्वारपरसवर्णयोः कृतयोः नकारस्य कुत्वप्रसंगो ऽत आह। 'तत्रेति'। चुत्वस्य त्वत्र प्रसंगो नास्ति अनुस्वारं प्रति तस्यासिद्धत्वात्॥

"हो ढः"॥ 'सोढेति'। तीषसहेतीड्विकल्पः। 'तुराषाडिति' छन्दसि सह इति ण्विः, अन्येषामपि दृश्यतइति पूर्वपदस्य दीर्घत्वं, सहेः साडः स इति षत्वम्,। 'प्रष्ठवाडिति'। वहश्चेति ण्विः॥

"दादेर्धातोर्घः"॥ 'किं तर्हि तद्विशेषणमिति'। यद्यपि समानाधिकरणं न भवतीत्यस्यैतत्प्रतिपत्तभूतं न भवति समानाधिकरणस्यापि विशेषणत्वोपपत्तेः, तथापि सामानाधिकरण्यपक्षे धातोरित्येतद्विशेष्यम् अत्र तु पक्षे विशेषणमित्यस्यैव प्रतिपन्नता। 'अवयवषष्ठ्यन्तमिति'। अवयवसंबन्धे या षष्ठी तदन्तमित्यर्थः। अत्र स्पष्टमेव प्रतिपन्नत्वं, धातोरवयवो यो दादिः शब्द इति, एवं चोपक्रमेपि दकारादेर्धातोरिति व्यधिकरणे षष्ठ्यौ। 'किं[1] कृतं भवतीति'। किमिष्टं सिद्धं भवतीत्यर्थः। 'अधोगित्यत्रापीति'। सामानाधिकरण्ये त्वडागमेन दादित्वस्य विहतत्वान्न स्यात्। 'कथमिति'। धातुरेवायं न धातोरवयव इति प्रश्नः। 'अथ वेति'। अस्मिन्पक्षे उपक्रमेपि दादेर्धातोरिति यथा श्रुतमेव। 'धातूपदेशइति'। एतच्च धातुग्रहणाल्लभ्यते,

नह्यधातोर्दकारादेर्हकारान्तस्य संभवः।
देत्रानडुद्भ्यामित्यादौ यस्माड्ढत्वं प्रवर्त्तते॥
तदेतदसमीचीनमवधानच्युतं वचः।
यस्माद्दामलिडित्यादेरधातोरपि संभवः॥

तस्माद्धातुग्रहणमावर्तनीयं, तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयति। 'तथा चेति'। पूर्वत्र तु पक्षे व्यपदेशिवद्भावेन दामलिडित्यत्रापि प्रसंगः॥

"वा द्रुहमुहष्णुहष्णिहाम्"॥ द्रुहादय एते दिवादिष्वनेनैव क्रमेण प्रपठ्यन्ते, रधादित्वाद्विकल्पितेटः, तत्र वा द्रुहादीनामिति वक्तव्ये प्रतिपदपाठो यङ्लुक्यपि यथा स्यात् दोध्रुक् दोध्रुट्, अन्यथा निर्दिष्टं यद्गणेन चेति न स्यात्॥

१ इष्टमित्यधिकं मु॰ मू॰ पु॰।

"नहो धः" ॥ 'परीणद्धिति'। संपदादित्वात्क्विप्, नहिवृतीति दीर्घत्वम्, उपसर्गादसमासेपीति णत्वं, प्रक्रियालाघवार्थं दकार एव विधातव्ये धकारविधानं झषस्तथोर्धोध इति धत्वं यथा स्यात्, नद्धमित्यत्र रदाभ्यां निष्ठानत्वं च माभूदिति।

"आहस्थः" ॥ अथ प्रकृतौ धकार एव कस्मान्न विधीयते तस्यापि हि चर्त्वेन आत्थेति सिद्धम्, थकारस्यापि चर्त्वेन भवितव्यम्, एवं च कृत्वा ऽऽहनहोर्ध इत्येक एव योगः कर्त्तव्योत आह। 'आदेशान्तरकरणमिति'। एवमपि तकार एव कर्त्तव्यः। 'हृग्रहोरिति'। 'हकारस्येति'। वचनं हरत्यर्थम्। 'निग्राभमिति'। उदि ग्रह इत्यत्र छन्दसि निपूर्वादपीष्यते स्रुगुद्यमननिपातनयोरिति वचनाद्वा घञ्॥

"व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः" ॥ अत्र शकारान्तस्य जश्त्वे प्राप्ते इतरेषान्तु कुत्वे तदपवादः षत्वं विधीयते। 'मूलवृट्, धानाभृडिति'। ग्रहिज्यादिना संप्रसारणं, स्कोः संयोगाद्योरिति सलोपः, षकारस्य जश्त्वं डकारः, वावसानइति पक्षे टकारः। 'भ्रलादिराभ्यामित्यादि'। पर्यवपद्यते, व्यवधीयते। 'राष्टिः भ्राष्टि[१]रिति'। गुरोश्च हल इत्यकारे प्राप्ते क्तिचावादिभ्य इति क्तिन्प्रत्ययः, तितुत्रेत्यादिनेट्प्रतिषेधः। 'शब्दप्राडिति'। क्विब्वचीत्यादिना क्विप् दीर्घत्वं, संप्रसारणाभावश्च, छग्रहणमनर्थकं च्छ्वोः शूडित्यादिना छस्य शत्वे कृते शान्तानामित्येव षत्वं सिद्धमत आह। 'च्छ्वोः शूडित्यादि ॥

"एकाचो बशो भष् झषन्तस्य स्ध्वोः" ॥ धातोरिति यदिहानुवर्त्तते तद्व्यधिकरणमवयवषष्ठ्यन्तमेकाच इत्यस्य विशेषणं, झषन्तस्येत्येतदपि तस्यैव समानाधिकरणं विशेषणम्, एवं विशिष्टं त्वेकाच इत्येतदवयवषष्ठ्यन्तविशेषणं तदाह। 'धातोरवयव इत्यादि'। 'झलि सकारइति'। एतेनानुवर्त्तमानस्य झलो विशेषणं सकार इति दर्शयति, किमर्थं पुनरिह झलीत्यनुवर्त्तते, अन्त इत्यस्यानुवृत्तिर्यथा स्यादन्यथा झलीत्यस्य निवृत्तौ तत्संबद्धमन्तइत्यपि निवर्त्तेत। ननु

१ भ्राष्टिरिति नास्ति मु॰ मू॰ पु॰।

चत्वारो भष आदेशाः स्थानिनस्तु बशस्त्रयः ।
डकारस्य तु न क्वापि संभवोस्ति कथं च न ॥

ततश्च वैषम्यात्संख्यातानुदेशो न प्राप्नोति तत्राह । 'चत्वारो बशः स्थानिन इत्यादि' । शास्त्रप्रतीतिवेलायां संख्यासाम्यस्य संभवात् प्रवर्तते यथासंख्यमनुष्ठाने त्वसंभव इत्यर्थः, क्वचित्तु नायं ग्रन्थः पठ्यते, 'भोत्स्यन्तइति'। बुधिरनुदात्तेत्, लृटि स्यः, तत्र व्यपदेशिवद्भावेन धातुं प्रत्येकाचोवयवत्वम् । 'अभुध्वमिति'। धि चेति सिचो लोपः, गुहिदुही स्वरितेतौ । 'अजघा इति' । घधेर्यङ्लुकि द्विर्वचने धातुं प्रत्येकाचो ऽवयवत्वम्, रुग्रिकौ च लुकीति रुक्, जर्घध् इति स्थिते लङादि । 'गर्द्भयतेरिति' । गर्दभमाचष्टइति णिच्, अन्नावो प्रत्ययो ऽप्रत्ययः क्विबादिः । 'असंत्येकाज्ग्रहणाइत्यादि' । यद्येकाज्ग्रहणं न क्रियेत ततोन्यस्येहाश्रुतत्वाद्बशैव धातोरित्यनेन विशेष्येत बशो झषन्तत्वस्यासंभवाज्झषन्तस्येत्यनेनापि धातुरेव विशेष्येत, ततश्चायमर्थः स्यात्, झषन्तस्य धातोर्योवयवो बश् तस्य भषिति, ततो दामलिहित्यत्रापि प्रसङ्गः, एकाच इत्यस्मिंस्तु सति वृत्तिकारोपदर्शित एवार्थो भवतीति च तत्र प्रसङ्गः, अत्र हि यो झषन्त एकाच् लिहिति न तस्यावयवो बश् दकारः, यस्य चावयवो दामित्यस्य न स झषन्तः । 'क्रोत्स्यतीति' । अत्र ककारस्य घकारो न भवति ॥

"दधस्तथोश्च" ॥ 'दधातिर्[१]निर्दिश्यतइति' । दध धारण इत्यस्य ग्रहणं न भवति, शपा तयोर्व्यवायात्, ननु यङ्लुकि व्यवायो नास्ति, ततश्च तस्यैव ग्रहणप्रसङ्गः, एवं च वचनसामर्थ्यादिति वक्ष्यमाणं नाश्रयितव्यं भवति, तस्माद्व्याख्यानमेवात्र शरणम् । 'वचनसामर्थ्या दिति'। नहि दधातिराकारलोपेन विना झषन्तो भवति, एतच्च पूर्वत्रासिद्धे न स्थानिवदित्यनाश्रित्योक्तम् । 'अभ्यासजश्त्वस्य चासिद्धत्वमिति' । वचनसामर्थ्याच भवतीत्यपेक्षते, नह्यभ्यासस्य जश्त्वेन विना दधातेर्बश्

१ मु॰ मूल पुस्तके त्वयं ग्रन्थः सूत्रान्ते पठितः ।
२ कृतद्विर्वचन इत्यधिकं मु॰ मू॰ पु॰ ।

क्वचित्संभवति । 'तयोरिति क्रिमिति' । झलीति वर्तते, झषन्तस्येति च, न च तकारथकाराभ्यामन्यो दधो झलस्ति, स्ध्वोस्तावदिष्टमेव तस्मात्तयोरिति न वक्तव्यम्, एवं च कृत्वा चकारोपि न कर्त्तव्यः, सर्वत्र झलीत्येव सिद्धमिति प्रश्नः । 'आनन्तर्यादिति' । ननु च स्ध्वोः पूर्वेणैव सिद्धं, न सिध्यति, आल्लोपस्य स्थानिवद्भावे सति अझषन्तत्वात् । ननु च पूर्वत्रासिद्धे नास्ति स्थानिवद्भावः, एवमप्यभ्यासजश्त्वस्यासिद्धत्वाच्च सिध्यति, यदि त्वभ्यासजश्त्ववर्त्यमेत्वतुकोः सिद्धं वक्तव्यमित्यत्र एत्वतुको रित्यपनीयाविशेषेण सिद्धत्वमुच्येत फलिभजिग्रहणं वा सामान्येन ज्ञापकमाश्रीयेत न त्वेत्वविषयमेव, ततस्तयोश्चेति शक्यमकर्तुं, कथं स्ध्वोः पूर्वेणैव सिद्धम्, इदं तु व्यतिरिक्ते झलि यथा स्यादित्येवमर्थं भविष्यति ॥

"झलां जशोऽन्ते" ॥ 'पदस्यान्ते वर्त्तमानानामिति' । यदा ऽवसाने वर्त्तमानानामन्तशब्दो ऽवसानवचनो न त्ववयववचनः । 'श्वलिडिति' । अत्र हकारस्य जश्त्वे प्राप्ते तस्यासिद्धत्वात् पूर्वं ढत्वं, ढकारस्य जश्त्वं डकारः ॥

"झषस्तथोर्धोऽधः" ॥ 'दधातिं वर्जयित्वेति' । अनेनाध इति धातुप्रतिषेधं दर्शयति, यदि धकारप्रतिषेधः स्यात् धकारात्परयोर्नेति ततो गतिबुद्धीत्यादयो निर्द्देशा नोपपद्येरन्, । 'अलब्ध, अलब्धा इति' । लुङि तथासौ, एवमलीढ, अलीढा इति । 'धत्तः धत्थ इति' । धत्वे प्रतिषिद्धे धकारस्य चर्त्वम्, अध इति शक्यमवक्तुम्, इह कस्माच्च, धत्तो धत्थ इति । जश्त्वे योगविभागः करिष्यते, दधस्तथोश्च, झलां जशः, झलाञ्जशो भवन्ति, दधस्तथोः, ततोन्ते, अन्ते च झलां जशो भवन्ति, तत्र पूर्वत्रासिद्धमिति भष्भावे जश्त्वस्यासिद्धत्वाज्झषन्तत्वं, धत्वे परस्मिन् सिद्धं जश्त्वमित्यझषन्तत्वाद्धत्वाभाव इति सिद्धमिष्टम् ॥

"रदाभ्यां निष्ठातो नः पूर्वस्य च दः" ॥ निष्ठात इति समासनिर्द्देशः, तत्र प्रधानभूततकारो रदाभ्यामित्यनेन विशेष्यते न गुणभूता निष्ठेत्याह । 'रेफदकाराभ्यामुत्तरस्येति' । तेन चर्दितं मुदितमित्यत्र निष्ठाया अव्यवधानेपि तस्येटा व्यवहितत्वान्नत्वं न भवति । 'अवगू-

र्णमिति'। गुरी उद्यमने, श्वीदितो निष्ठायामितीट्प्रतिषेधः, पूर्वेषु श्यकः कितीति। 'भिन्नः भिन्नवानिति'। आदेशे नद्दत्यकार उच्चारणार्थः, तेन दकारस्य स्थाने शुद्धो नकारो भवति। 'कृतः कृतवानिति'। ननु यथा कृपो रो ल इत्यृकारस्यापि रेफस्य लकारो भवति तथेहापि ऋकारस्य रेफमाश्रित्य नत्वं प्राप्नोत्यत आह। 'इत्यत्रेति'। युक्तं तत्र सामान्योपादानादिह तु न सामान्यमुपादीयते किं तर्हि व्यञ्जनं किमात्मकमर्द्धमात्रात्मकम्, ऋकारस्तु मात्राचतुर्भागात्मकः, अस्तु वा सामान्यनिर्द्देशस्तथापि न दोष इत्याह। 'सामान्यनिर्द्देशे चेति'। ऋकारे ह्यभितो ऽज्भक्तिर्मध्ये रेफभक्तिस्ततश्च परयाज्भक्त्या व्यवधानान्नास्ति नत्वप्रसङ्गः। 'चरितं मुदितमिति'। तद्दत्यनुच्यमाने इटो निष्ठाभक्तत्वात्तस्य नत्वप्रसङ्गः। 'परस्य माभूदिति'। परस्यैव माभूदित्यर्थः, असति पूर्वग्रहणे पाठक्रमे निष्ठा प्रत्यासन्नेति तद्दकारस्यैव नत्वेन भाव्यं, तेनैतदपि न चोदनीयं बहिरङ्गत्वाल्लाक्षणिकत्वाच्च न भविष्यतीति, किं च पदस्येत्यधिकारात्पदावस्थायां नत्वविधानाद्बहिरङ्गत्वमपि नास्ति, केवलस्य वर्णस्यानुपदेशात्प्रतिपदोक्तत्वमपि नास्ति, अथापि प्रत्यासत्तिर्नापेक्ष्यते तथापि पञ्चमीनिर्द्देशात्परस्यैव प्रसङ्गः, कार्तिरित्यत्र बहिर्भूततद्धितापेक्षत्वाद्बहिरङ्गा वृद्धिः वृद्धेश्च यन्निमित्तं तदेव रेफस्याप्युरण्रपर इत्यस्य वृद्धिविधिनैकवाक्यत्वात्॥

"संयोगादेरातो धातोर्यण्वतः"॥ 'प्रद्राण इति'। कृत्यच इति णत्वम्। 'निर्यात इति'। योऽत्र धातुर्नासौ संयोगादिर्यश्च संयोगादिर्नासौ धातुः, न चात्र संयोगादित्वस्य बहिरङ्गत्वं, कथं पूर्वं धातुरुपसर्गेण युज्यते ततश्च निष्ठोत्पत्तेः प्रागेव संयोगः संनिहितः, प्रद्राण इत्यादावप्येतावदेव॥

"ल्वादिभ्यः"॥ 'जीन इति'। ज्या वयोहानौ, ग्रहिज्यादिना संप्रसारणम्। 'निष्ठावदिति'। नत्वसंनिधौ वचनात्तदेवातिदिश्यते, तेन पूनिरित्यत्र क्लिशः क्त्वानिष्ठयोः पूङश्चेतीड्विकल्पो न भवति। 'दूनो-रिति'। दु गतावित्यस्यैव दीर्घग्रहणं न तु टुदु उपतापइत्यस्य, सानुबन्ध-

कत्वात्, तथा माघे प्रयुक्तं, मृदुतया दुतयेति, गु पुरीषोत्सर्गे। 'पूना इति'। अनेकार्थत्वाद्धातूनां पूञ् विनाशार्थः। 'सिनो ग्रास इति'। षिञ् बन्धने, बध्यमानः पिण्डीक्रियमाणो ग्रासो यदा दध्यादिव्यञ्जनवशेन तत्रानुकूल्यं प्रतिपद्यते तदा कर्मणः कर्तृत्वविवक्षायामयं प्रयोगः, सिता पाशेन, शुद्धे कर्मणि क्तः, समुदायप्रत्युदाहरणमेतत्, इदानीमवयवप्रत्युदाहरणं दर्शयति। 'ग्रासोपीति'॥

"ओदितश्च"॥ 'आपीन इति'। प्याय: पीति पीभावः। स्वादयः षूङ् प्राणिप्रसवइत्यादयो ओीङ् वृणोत्यर्थइत्येवमन्ता दिवादौ पठ्यन्ते॥

"क्षियो दीर्घात्" क्षि क्षये, क्षि निवासगत्योः, द्वयोरपि ग्रहणम्। 'क्षीणा इति'। अकर्मकत्वात् कर्तरि क्तः, निष्ठायामण्यदर्थे इति दीर्घः। 'क्षीणस्तपस्वीति'। अत्रापि वाक्रोत्यादैन्ययोरिति, दीर्घादिति शक्यमवक्तुं, क्षिय इति निर्देशादेव दीर्घस्य ग्रहणं विज्ञायते, ह्रस्वस्य हि ग्रहणे इयङादेशात्परत्वात् घेर्ङितीति गुणे कृते क्षेरिति निर्देष्टव्यं स्यादित्यत आह। 'ह्रस्वान्तस्यापीति'। यथाभूतस्य दीर्घत्वं विधेयं तथाभूतमेवानुकर्तुं युक्तं, ह्रस्वान्तस्य च दीर्घत्वं विधेयमिति तस्यैव दीर्घविधावनुकरणं तत्रापि चेयङादेशो दृष्टः तस्मादियङादेशो न दीर्घग्रहणे प्रमाणमित्यर्थः। यदि तर्हि ह्रस्वान्तस्यापि धात्वनुकरणस्येयङादेशो भवति विपराभ्यां जेरित्यादावपि प्रसङ्ग इत्यत आह। 'विपराभ्यां जेरित्येवमादौ त्विति'। अविवक्षितत्वेति पाठः, तत्र हि धातावनुकार्ये ऽवस्थितं धातुत्वं क्रियावाचित्वलक्षणमविवक्षितत्वात्तस्य विवक्षामकृत्वा रूपसामान्यस्य विजितं कूजितमित्यादिसाधारणस्य रूपस्यानुकरणं, ततश्च विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृतावदृष्टत्वादनुकरणेप्यभाव इत्यर्थः। यदा तु विशेषोनुक्रियते तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्त्तते, यथात्रेयङादेशः, यद्येवं विभक्त्युत्पत्तिर्न प्राप्नोति, अधातुरिति प्रतिषेधेन प्रातिपदिकसंज्ञाया अभावात्। नैष दोषः। अधातुरिति पर्युदासो ऽयं न प्रसज्यप्रतिषेधः, ततः किम्। धातिदेशिकस्य

कस्य चित् कार्यस्याभावात् धातोरन्यत्वात्स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्त्तते, इयङादेशस्त्वादेशिको धातोर्विधीयमानत्वाद्भवति ॥

"श्यो ऽस्पर्शे"॥ 'शीनमिति'। श्यैङ् गतौ, द्रवमूर्त्तिस्पर्शयोः श्य इति संप्रसारणम्। 'गुणभूतोपि स्पर्श इति'। एतच्च व्याख्यानाल्लभ्यते, स्पर्शशब्दोयमस्ति गुणवचनः, स्पृश संस्पर्शने, भावे कर्मणि वा घञ्, स्पर्शस्त्वगिन्द्रियग्राह्यो गुणः, अस्ति रोगवचनः, स्पृश उपतापे, घञ्, स्पर्शः, तदिह विशेषानुपादानाद् द्वयोरपि ग्रहणं, ततश्च रोगेपि प्रतिषेधात्प्रतिशीन इति न सिध्येत्, अत आह। 'गुणे चेति'। गुणएवेत्यर्थः। एवं मन्यते यदयं द्रवमूर्तिस्पर्शयोः स्यइति स्पर्शे संप्रसारणं विधाय पुनः प्रतेश्चेत्याह तज्ज्ञापयति। श्यायतेर्ग्रहणे स्पर्शशब्दो रोगं न प्रत्याययतीति, यदि प्रत्याययेत् पुनर्न विदध्यात्, प्रतिपूर्वो रोगएव श्यायतिर्वर्तते ॥

"अञ्चोनपादने" ॥ 'न चेदपादानं तत्र भवतीति'। तत्राञ्चत्यर्थे विषये ऽपादानं चेन्न भवतीत्यर्थः। 'समक्नाविति'। सङ्गताविव्यर्थः। यस्य विभाषेतीट्प्रतिषेधः, अनिदितामित्युपधालोपः। 'उदक्तमिति'। उद्धृतमित्यर्थः। 'व्यक्तमित्येतदिति'। अञ्जू व्यक्तिम्रक्षणकान्तिगतिष्वित्यस्येदं रूपं नाञ्चतेः, तेन नत्वमिदं न भवतीति भावः॥

"दिवो विजिगीषायाम्" ॥ 'आद्यूनइति'। द्यूः शूठ्, आद्यून औदरिकः, परिद्यूनः क्षीणः। 'द्यूतं वर्तते इति'। नन्वत्राक्षादिपतनलक्षणा क्रीडा प्रतीयते न विजिगीषा अत आह। 'विजिगीषया हीति'॥

"निर्वाणोऽवाते" ॥ 'वाताधिकरणा इति'। वातकर्तृक इत्यर्थः। यदि वातश्चेदभिधेयो न भवतीत्यर्थः स्यात्तदा निर्वातो वात इत्यत्रैव प्रतिषेधः स्याद्यत्र कर्त्तरि क्तः, यत्र तु भावे तत्र न स्यात् निर्वातं वातेनेति। 'निर्वाणोग्निरिति'। उपशान्त इत्यर्थः। 'निर्वाणो भिक्षुरिति'। उपरत इत्यर्थः। 'वातस्तु करणमिति'। यथासंभवं करणत्वे हेतौ वा तृतीया द्रष्टव्या, यथा तु वार्त्तिकं तथा भावे प्रतिषेधो न भवति, निर्वाणं वातेनेत्येव भवति ॥

"प्रस्त्योऽन्यतरस्याम्" ॥ 'प्रस्तीम इति' । स्त्यः प्रपूर्वस्येति संप्रसारणम् ॥

"अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः" ॥ 'फुल्ल इति' । आदितश्चेतीट्प्रतिषेधः, उत्परस्यातस्ति चेत्युत्वम् । 'क्तवत्वन्तस्याप्येतल्लत्वमिष्यतइति' । निष्ठायास्तशब्दान्तं यद्रूपं तस्य फुल्ल इत्येतन्निपात्यतइति भावः, क्षीबादिषु तु नैतदिष्यते । 'इडभाव इति' । अन्यथा तलोपस्यासिद्धत्वाद्धलादित्वादिट् प्रसज्येत । 'क्षिते वा इटि इच्छब्दलोप इति' । निपात्यतइत्यपेक्षते । 'लाघेरुदोऽस्य इति' । उदस्तु प्रतिषेधो न भवति निर्देशसामर्थ्यात् । 'कृशं प्रत्यनुपसर्ग एवेति' । यत्क्रियायुक्ताः प्रादयस्तम्प्रतीतिवचनात्, क्रियान्तरयोगमेव दर्शयति । 'परिगतः कृश इति' । कार्श्येन परिगत इत्यर्थः । यद्यपि फुल्लादयः पचाद्यचि इगुपधलक्षणे के च सिध्यन्ति तथापि निष्ठा च द्व्यजनादित्यादिकार्यसिद्धये क्षीबिताद्यनिष्टशब्दनिवृत्तये च निपातनं, फुल्लशब्दे तु फुल्लवानित्येतदर्थं च ॥

"नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्" ॥ अत्रानन्तरस्य निपातनस्य विधातुमशक्यत्वाद्व्यवहितं विधेयमिति स्थिते शुषः क इत्यादिभिरादेशान्तरैर्व्यवहितमपि नत्वमेव विधीयते, कथम्, उत्तरसूत्रे तावत्तदेव प्रतिषिध्यते प्राप्तिपूर्वकत्वात्प्रतिषेधस्य, तस्मात्तदेव बुद्धौ विपरिवर्त्तमानमत्रापि विकल्प्यते । 'समुन्न इति' । उन्दी क्लेदने, ईदित्त्वादिट्प्रतिषेधः, अनिदितामित्युपधालोपः, उभयत्र विभाषेयमित्याह । 'ह्री इत्येतस्येति' । 'विद विचारणइत्यस्येति' । रौधादिकस्य, उन्दिना रौधादिकेन साहचर्यात्, यद्यपि तौदादिकेन नुदिनापि साहचर्यं तथापि परसाहचर्यमेव व्यवस्थापकं विप्रतिषेधे परमित्यस्यैवमादावप्युपयोगात्, विचारणार्थस्य ग्रहणमित्येतदाप्रागमेन द्रढयति । 'एवं ह्युक्तमिति' । वित्तेर्भोगो निष्ठान्तशब्दरूपं विदित इतीष्यते तस्य सेट्त्वात्, इह च रदाभ्यां निष्ठात इत्यनुवृत्तेः विद्यतेः सत्तार्थस्य विदेर्विन्न इतीष्यते तस्यानिट्त्वादिह च तस्याग्रहणात् । 'विन्तेरिति' । तिङन्तानुकरणाच्छ्नी । 'भोगवित्त इति' । एकार्थीभावाभावेपि भाष्यकारनिपातनात्सप्तमीसमासः,

भोगग्रहणमुपलक्षणं भोगप्रत्यययोरर्थयोः, विन्दतेस्तौदादिकस्य विदेर्वित्त इतीष्यते, अन्यत्र विन्न इति नत्वमेव भवति, न त्वयं विकल्प इत्यर्थ उक्तो ऽत्र हेतुः ॥

"न ध्याख्यापृमूर्च्छिमदाम्" ॥ 'मूर्त्त इति'। आदितश्चेतीट्प्रतिषेधः, राल्लोप इति छस्य लोपः । 'मत्त इति'। ईदित्त्वादिट्प्रतिषेधः ॥

"वित्तो भोगप्रत्यययोः" ॥ 'लाभार्थादिति'। ज्ञानार्थादिटा भाव्यं सत्ताविचारणार्थयोरपि न भोगप्रत्यययोर्वृत्तिः संभवतीति भावः, कथं पुनर्भोगे निपात्यमानो वित्तशब्दो धने भवतीत्यत आह । 'धनं हीति'। कर्मसाधनः सूत्रे भोगशब्द इत्यर्थः । एतेन प्रत्यय इति व्याख्यातम् । 'विन्न इति'। विभाषा गमहनविदविशामिति तौदादिकस्य क्वसौ विकल्पितेट्त्वाद्यस्य विभाषेति निष्टाया मिट्प्रतिषेधः ॥

"भित्तं शकलम्" ॥ 'शकलपर्यायोयमिति'। यथाशकलशब्दो जातिशब्दो न क्रियाशब्दस्तथा भित्तशब्दोपीत्यर्थः । नन्वयं भिदेर्धातोः व्युत्पाद्यमानः क्रियाशब्दः स कथं जातिशब्दस्य पर्यायो भवत्यत आह । 'अत्रेति'। सन्ति हि ते शब्दा येषु व्युत्पत्तिमात्रोपयोगिनी क्रिया, जातिरेव तु समुदायशक्त्या शब्दार्थः, यथा तैलं पिबतीति, तैलपायिकेति, किमर्थं पुनरेवमाश्रीयतइत्याह । 'भिदिक्रियाविवक्षायां हीति'। साम्यप्रतिपादनार्थं शकलग्रहणं यथा विदारणविवक्षायां भिन्नं शकलमिति भवति तथा भिन्नं भित्तमित्येव प्रयोग इत्यर्थः। क्रियाशब्दत्वे तु भिन्नशब्देनैव क्रियाया उपात्तत्वाद्भिन्नमित्यस्यैव प्रयोगो न स्यात्, अन्ये त्वाहुः । यथा विदारणक्रियया शकलं निवर्तते तदा तामङ्गीकरोत्येव भिन्नशब्दः, यत् शकलस्य सतो विदारणं तदा तत्प्रतिपादनाय भिन्नं भित्तमिति प्रयोग इति ॥

"ऋणमाधमर्ण्ये" ॥ 'ऋ इत्येतस्मादिति'। ऋ सृ गतौ, ऋ गतिप्रापणयोरिति वा । 'एतस्मादेवेति'। शौण्डादिव्यतिरेकेण सप्तमीसमास एव मृग्यः, प्रागेव सप्तम्यन्तोत्तरपद इति भावः । 'कालान्तर-

त्यादि'। ऋणग्रहणकालापेक्षया कालान्तरत्वं, तत्र देयं कालान्तरदेयं तत्र यो विनिमयो विपरिवर्त्तनं तदुपलक्षणार्थमाधमर्ण्यग्रहणं न तु स्वार्थप्रतिपादनार्थं, किं पुनः कारणमेवं व्याख्यायतइत्याह । 'उत्तमर्णो इत्यपि हीति'। एतच्च धारेरुत्तमर्णइति निर्देशादवसितम् ॥

"नसत्तनिषत्तानुत्तप्रतूर्त्तसूर्त्तगूर्त्तानि छन्दसि" ॥ नसत्तेत्यादीना-मनुकारणपदानां द्वन्द्वः । 'निषत्तमिति'। सदिरप्रतेरिति षत्वम् । 'अनुत्त मिति'।'भाषायामिति'। नुदविदोन्दत्रेति विकल्पो न भवति एतन्निपा-तानारम्भसामर्थ्यादित्याहुः।'प्रतूर्त्तमिति'। यदा त्वरतेः तदा ज्वरत्वरेत्या-दिना ऊठ्, यदा तु तुर्वी हिंसायामित्यस्य तदा राल्लोपः। 'उत्वमिति'। रपरत्वम् उरण् पर इत्येव सिद्धं परिभाषाणामसिद्धप्रकरणे ऽपि प्रवृत्तेः ॥

"क्विन्प्रत्ययस्य कुः" ॥ 'क्विनः कुरिति वक्तव्ये इति'। नहि क्विन्प्रत्ययत्वं व्यभिचरतीति भावः । न चैवमुच्यमाने वेरपृक्तस्येति लोपं बाधित्वा क्विन एव वकारस्य कुत्वं घकारः प्राप्नोतीति शङ्कनीयं, तथा क्विन इति प्रत्ययग्रहणपरिभाषया तदन्तस्य ग्रहणे सति क्विनो वकारस्य लोपे कर्त्तव्ये सति कुत्वस्यासिद्धत्वात् राल्लोप एव भवति, तस्मिंश्च सति पश्चाद्भवत्कुत्वं परिशिष्टस्य धातोरेव भविष्यति । स्यादेतत् । क्विबादिषु सावकाशं लोपं विशेषविहितं कुत्वमपवादो वचनप्रामाण्या-दिति न्यायेन बाधेतेति, तच्च, एवं हि वर्गग्रहणमनर्थकं स्यात्, अनेकस्य स्थानिनो ऽनेकादेशप्रतिपत्तये हि वर्गग्रहणं, वकारस्यैव तु स्थानित्वे घकार एव निर्दिश्येत । 'वर्गाणां तृतीयचतुर्थो इति'। शिक्षायां वका-रघकारयोर्गुणसाम्यप्रतिपादनात्, तस्मात् क्विनः कुरित्येव वक्तव्यम्। 'बहु-व्रीहिविज्ञानार्थमिति'। बहुव्रीहिश्चोपलक्षणे ऽपि भवति, यथा चित्रगु-रानीयतामिति गवामभावेऽपि चित्रगवीभिरुपलक्षितस्यानयनं भवति तथे-हाप्यसत्यपि क्विपि क्विनोपलक्षितस्य धातोः कार्यं भवतीति । 'अस्राग्, अद्राागिति'। सृजिदृशिभ्यां माङि लुङ्, तिप्, च्लेः सिच्, हल्ङ्यादि-लोपः, वदव्रजेति वृद्धिः, अत्र व्रश्चादिषत्वे प्राप्ते कुत्वं जस्य गः, शस्य खः, तस्यापि जश्त्व, वावसानइति चर्त्वं ककारः, पूर्वत्रासिद्धमित्यसिद्धत्वं

सत्वे कुत्वस्य नास्ति प्रत्ययग्रहणसामर्थ्यात् सत्वापवादत्वात् कुत्वस्य । 'क्विबन्तस्यापीति'। दृष्टेत्यादौ तु न भवति अपदान्तत्वात् । 'एवं च सतीत्यादि'। तथावदेव, दग्भ्यामिति कुत्वमुदाहृतम् । 'प्रतिविधानं कर्तव्यमिति'। प्रतिविधानं वचनमेव ॥

"नशेर्वा"॥ जीवनाशहेतुत्वादाहुतिर्जीवनगित्युच्यते, संपदादित्वाद्भावे क्विप् ॥

"मो नो धातोः" ॥ 'नलोपो न भवतीति' ॥ नत्वं तु लोपार्थमेव स्यादिति मन्यते ॥

"ससजुषो रुः" ॥ 'सजूरिति'। पूर्ववद्भावे क्विप्, रुत्वे कृते र्वोरुपधाया इति दीर्घत्वं, बहुव्रीहौ सहस्य सभावः, सप्रीतिरित्यर्थः ॥

"अवयाः श्वेतवाः पुरोडाश्च" ॥ 'णिविनि कृतइति'। प्राप्त इत्यर्थः, श्वेतवहादीनां यत्र पदत्वं भावि तत्र णिविनोऽपवादो डस् वक्तव्य इति हि तत्रार्थः, न पुनर्णिविनन्तानां पदत्वे सति डस् वक्तव्य इति । ननु श्वेतवोभ्यामित्यादिसिध्यर्थमवश्यं डस् वक्तव्यः स चेदुच्यते नार्थोऽनेन, सान्तत्वात्पूर्वेणैव रुः सिद्धो दीर्घत्वमत्वसन्तस्येत्येव सिद्धं तत्राह । 'संबुद्धौ दीर्घार्थमिति' ॥

"अहन्" ॥ 'अहोभ्यामिति'। हशि चेत्युत्वम् । 'नलोपमकृत्वेत्यादि'। नलोपविधावेतद्व्याख्यातम् । 'लाक्षणिकत्वादिति'। अडागमेनाहश्चिति रूपलाभात् । 'ह्रस्वविधाविति'। समासे च लुमता लोपाद् रादेशे प्राप्ते रुत्वमुत्वार्थमुच्यते। 'अहोरूपमिति'। षष्ठीसमासः। गतमहोरूपं पश्येत्यसमासः । 'अहोरात्र इति'। अहःसर्वैकदेशेत्यादिनाच् समासान्तः, रुकारलोपे कृतेप्येकदेशविकृतस्यानन्यत्वादुत्वं, रात्रग्रहणं तु न कृतं, गतमहो रात्रिरागतेत्यसमासेपि रुत्वार्थम् ॥

"रोसुपि" ॥ पूर्वस्यायमपवादः । र इत्यकार उच्चारणार्थः । 'अहर्ददातीति'। अत्यन्तसंयोगे द्वितीया । 'अह्नो रुविधाविति'। यथा चैतत्सूत्रेणैव सिद्धं तथा न लुमताङ्गस्येत्यत्रोक्तम् । 'दीर्घाहो निदाघ इति'। असुपीति प्रसज्यप्रतिषेधः, पर्युदासे तु सुप्सदृशो हल्परोऽस्तीति

स्यादेवात्र रेफः, प्रसज्यप्रतिषेधे तु प्रत्ययलक्षणेन प्रतिषेधे सति रुरेव भवति, ततश्च तन्निबन्धने यत्वोत्वे भवतः ॥

"अम्नरूधरवरित्युभयथा छन्दसि" ॥ नित्यं रुत्वे प्राप्ते पक्षे रोपि यथा स्यादित्ययमारम्भः । अम्नस्शब्द ईषदर्थे । अम्नरस्तमित इति यथा । अवो रत्नानाम् । 'प्रचेता राजन्निति' । सकारस्य रेफः, तस्य रो रीति लोपः, ढ्रलोपे पूर्वस्य दीर्घोण इति दीर्घः । 'अहरादीनामित्यादि' । उभयत्राप्यादिशब्दः प्रकारे, इदमपि छन्दसि भाषायां च ॥

"भुवश्च महाव्याहृतेः" ॥ तिस्रो महाव्याहृतयः, पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः इह तु मध्यमाया ग्रहणम् । 'भुवो विश्वेषु [1]सवनेष्विति' । तिङन्तमेतत् भवतेश्छन्दसि लुङ्लङ्लिट इतिवर्तमाने लङ् सिप् शपि गुणाभावश्छान्दसः, बहुलं छन्दस्यमाङ्योगेपीत्यडभावः, लाक्षणिकत्वादेवास्याग्रहणे सिद्धे महाव्याहृतिग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थं, तेन क्ष्मापयतीत्यादौ पुक् सिद्धो भवति ॥

"वसुस्रंसुध्वंस्वनडुहां दः ॥ 'स इति वर्त्तत इति' । अननुवृत्तौ तु तस्य विद्वानित्यादौ नकारस्य दत्वं प्राप्नोति । 'न तु स्रंसुध्वंसू इति' । विशेष्येते इति विपरिणामेनान्वयः । 'असंभवाच्चानडुच्छब्द इति' । न विशेष्यत इत्यन्वयः, इहेदं वसोर्दत्वं नाप्राप्ते विध्यन्तरे आरभ्यमाणं यथा विद्वद्भ्यामित्यादौ रुत्वं बाधते तथा विद्वानित्यादौ संयोगान्तलोपमपि बाधेतेत्यत आह । 'रुत्वे नाप्राप्त इति' । अथानड्वानित्यत्र नुमो दकारः कस्मान्न भवत्यत आह । 'नुमस्त्विति' । दत्वं यदि नकारस्य स्यात् नुमोनर्थको विधिर्हकारस्यापि दत्वेन ह्यनड्वादिति सिध्यति, यथैव तर्हि नुमो विधानसामर्थ्याद्दत्वं न भवति तथानड्वान् अत्रेत्यादौ दीर्घादटि समानपाद इति रुत्वमपि न प्राप्नोति, यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते, दत्वं च प्रति नुमो विधिरनर्थकः, रुविधेः पुनर्निमित्तमेव ॥

---

[1] भुवनेष्विति मु· मू· पु· ।

"सिपि धातो रुर्वा" ॥ 'धातुग्रहणमुत्तरार्थमिति'। इह तु सिपि परतो धातोरन्यस्यासंभवः। 'रुग्रहणं चेति'। उत्तरार्थमित्यनुषङ्गः, इह तु दत्वे विकल्पिते सान्तत्वादेव पक्षे रुः सिध्यति ॥

"दश्च" ॥ 'अभिनदिति'। तन्मध्यपतितस्य श्नमस्तद्ग्रहणेन ग्रहणादत्र पदस्य धातुत्वम् ॥

"र्वोरुपधाया दीर्घ इकः" ॥ धातोः पदस्येत्युभयं समानाधिकरणं रेफवकाराभ्यांविशेष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह। 'रेफवकारान्तस्येति'। 'वग्रहणमुत्तरार्थमिति'। इह तु वकारान्तस्य पदस्य धातोरसंभवः। 'अभ्यासेकारस्य माभूदिति'। यदि स्यात्तस्यासिद्धत्वाद्ध्रस्व इति ह्रस्वो न स्यात् ॥

"उपधायां च" ॥ र्वोरुपधाया इत्यादि सर्वमनुवर्त्तते, इदमुपधाग्रहणं र्वोर्विशेषणं, षष्ठीद्विवचनस्य तु स्थाने सप्तम्येकवचनं, प्रकृतमुपधाग्रहणमिको विशेषणं, तच्च र्वपेक्षया पूर्वत्वं प्रतिपादयति, तेन वृत्तिकारोपदर्शितः सूत्रार्थो भवति। 'हूर्च्छितेति'। हुर्छा कौटिल्ये, मुर्छा मोहसमुच्छ्राययोः, आचोरहाभ्यामिति द्विर्वचनस्यासिद्धत्वाद्रेफस्योपधात्वे सति पूर्ववद्दीर्घत्वं, चिरिजिरी हिंसार्थौ। 'इह रियतुः विव्यतुरिति'। रि गतौ, वी गत्यादिषु, लिट्, अतुस्, द्विर्वचने एरनेकाच इति यणादेशः, अत्राभ्यासेकारस्य दीर्घप्रसङ्गः, ततश्च तस्यासिद्धत्वाद्ध्रस्वो न स्यात्, तत्राह। 'रियतुरित्यादि'। 'यणादेशस्य स्थानिवद्भावादिति'। न च दीर्घविधौ स्थानिवद्भावप्रतिषेधः, [2]अलोपाजादेशत्वात्, एवमपि पूर्वत्रासिद्धे न स्थानिवदित्याशङ्क्य परिहारान्तरमाह। 'असिद्धत्वाच्चेति'। अङ्गाधिकारे विधानात्प्रत्ययाश्रयत्वाद्यणो बहिरङ्गत्वं, दीर्घस्य तु तदनपेक्षत्वादन्तरङ्गत्वम्, इह चतुर्यितेः क्यजन्तात्तृच् इट् अतो लोपे कृते क्यस्य विभाषेति यदा ऽयं लोपो न भवति तदा धातोरुपधाभूतो रेफो हल्परश्चेति दीर्घप्रसङ्ग इत्याशङ्कायामाह। 'चतुर्यितेत्यत्रापीति'। अत्राप्यन्तरङ्गत्वबहिरङ्गत्वे पूर्ववत्, इह प्रतिपूर्वाद्दिवेः कनिन्युवृषितक्षीति कनि-

२ अङ्गाधिकारे विधानादिति इं॰ पु॰ पा॰।

न्त्ययान्तात्तृतीयैकवचने अल्लोपेन इत्यकारस्य लोपे प्रतिदीव्नेति दीर्घत्वमिष्यते, तच्च प्राप्नोति, वकारस्य धातुप्रत्यनुपधात्वादित्यत आह । 'प्रतिदीव्नेत्यत्रेति' । कथं पुनर्हलि चेति दीर्घत्वं यावताल्लोपस्य स्थानिवद्भावे सति हल्परो वकारो न भवतीत्यत आह । 'दीर्घविधाविति' । ननु माभूत्स्थानिवद्भावः, विभक्त्याश्रयत्वेनाल्लोपो बहिरङ्गस्तस्यासिद्धत्वाद्धल्परो न भवतीत्यत आह । 'असिद्धं बहिरङ्गमन्तरङ्ग इत्येतत्त्विति' । अनाश्रयणं त्वस्याः परिभाषाया अनित्यत्वात्, अनित्यत्वं च नलोपःसुप्स्वरेत्यत्र तुग्विधिग्रहणेन ज्ञापितम्, इह जीर्यतेः क्विन् रश्च वः, जिव्रिः, कगृभ्यां किः प्रत्ययः, किरिः, गिरिः, ताभ्यामोस् यणादेशः, किर्योर्गिर्योरत्र हलि चेति दीर्घत्वं प्राप्नोति तत्राह । 'उणादयो ऽव्युत्पन्नानीति' । उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीत्यर्थः । एतच्चातःकृकमिकंसेत्यत्र कमिग्रहणेनैव सिद्धे कंसग्रहणेन ज्ञापितं, क्वचित् व्युत्पत्तिकार्यं भवत्येव, यथा प्रतिदीव्नेति, किर्योरित्यत्र यणो बहिरङ्गत्वमनाश्रित्यायं परिहार उक्तः ॥

"न भकुर्छुराम् ॥ 'कुर्यादिति' । छुर छेदने, आशिषि लिङ् । 'प्रतिदीव्नेति' । योऽत्र वकारान्तो नासौ भसंज्ञको यश्च भसंज्ञो नासौ वकारान्तः, किं तर्हि नकारान्तः ॥

"अदसोऽसेर्दादु दो मः" ॥ असेरिति सकारे इकार उच्चारणार्थः, अमूभ्यामित्यत्र त्यदाद्यत्वे कृते सुपि चेति दीर्घत्वं, तत आन्तरतम्यादाकारस्य ऊकारः । ननु च सूत्रे ह्रस्वो निर्दिष्टः, भाव्यमानत्वाच्च सवर्णग्रहणमपि नास्ति, तत्कथमूकारो लभ्यते ऽत आह । 'भाव्यमानेनापीति' । एतच्च दिव उदिति तपरकरणेन ज्ञापितं, केचिदत्राप्युकारं दपरं पठन्ति उद्दो म इति, तेषामयमौत्पत्तिको दकारो मुखसुखार्थो न पुनरस्तकारस्य जश्त्वं, तथा हि सति सवर्णग्रहणं न स्यात्, अदपरपाठस्तु भद्रः । 'अदस्यतीति' । ननु च पदस्येति वर्तते न चेदं पदं नः क्यइति नियमात्, एवं तर्ह्येतदेव ज्ञापयति अपदस्याप्यदस एतन्मुत्वं भवतीति अमुममुयेति, अन्यथा यत्र स्वादौ पदं तत्रैव स्यादमुष्मै

अमूभ्यामिति । 'अनोत्स इति' । ओकारसकाररेफा न विद्यन्ते यस्य तस्येत्यर्थः । 'अदः कुलमिति' । विसर्जनीयस्यासिद्धत्वाद्रेफान्तमेतत् । 'तदर्थमिति' । ओकाररेफयोरपि प्रतिषेधार्थम् । 'अः सेयस्येति' । कोऽर्थ इत्यत्राह । 'यत्रेति' । तेन किं सिद्धं भवतीत्याह । 'तेनेति' । 'कथमद्र्यादेश इति' । अस्मिन्विषये वक्तव्यमस्तीति प्रश्नस्तदाह । 'अदसोद्रेरिति' । श्लोकस्य पूर्वार्द्धं व्याचष्टे । 'येरिति' । तृतीयं पादं व्याचष्टे । 'ये त्विति' । चतुर्थं पादं व्याचष्टे । 'येषां त्विति' । 'अमुमुयङ्ङिति' । अदोऽञ्चतीति ऋत्विगित्यादिना क्विन्, विष्वग्देवयोश्चेत्यदसष्टेरद्र्यादेशः, अदद्र्यञ्जितिस्थिते अदःशब्दस्याद्र्यादेशसम्बन्धिनो दकाररेफयोश्च मुत्वं, सौ उगिदचामिति नुम्, हल्ङ्यादिसंयोगान्तलोपौ, क्विन्प्रत्ययस्य कुरिति कुत्वं नकारस्य ङकारः । 'अमुया अमुयोरिति' । अत्र यकारस्योत्वप्रसङ्गः ॥

"एत ईद्बहुवचने" ॥ 'अर्थनिर्द्देशोऽयमिति' । व्याप्तेर्न्यायात् । किं पुनः कारणमेवं व्याख्यायतइत्यत आह । 'पारिभाषिके[1] हीति' । तदा हि तस्मिन्निति निर्द्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्बहुवचने परत एकारस्येत्वेन भवितव्यं, न चात्र बहुवचनं परम् ॥

"वाक्यस्य टेः प्लुत उदात्तः" ॥ अधिकारोऽधिकारान्तरनिवर्त्तक इति वाक्याधिकारेण पदाधिकारस्य निवृत्तिः प्राप्नोति, ततश्च भवन्तावित्यादावपदान्तस्यापि नकारस्य नश्छव्यप्रशानिति रुत्वं प्रसज्येतेत्याशङ्क्याह । 'पदाधिकारोऽनुवर्त्ततएवेति' । नहि वाक्यग्रहणेन पदाधिकारः शक्यो निवर्त्तयितुं, यो हि वाक्यस्य टिः सन्नियोगतः पदस्यापि भवत्येव, अथ वाक्यग्रहणं किमर्थं, यावता वाक्यस्यस्यैव पदस्य प्रयोगो न केवलस्य तत्राह । 'वाक्यग्रहणमिति' । पदस्य टेरित्युच्यमाने वाक्ये यावन्ति पदानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते च वाक्यपदयोर्यष्टिस्तस्यैव यथा स्यादिति । 'टिग्रहणमित्यादि' । असति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषोपस्थानादचा तदन्तविधौ सति अजन्तस्यैव वाक्यस्या-

[1] पारिभाषिकस्य हीति मु॰ मू॰ पु॰ ।

लोऽन्त्यस्य प्लुतः स्यात् यथा नपुंसकह्रस्वत्वं शार्मणि कुलमित्यादौ भवति न पुनः सुवागित्यादौ तद्वत्, टिग्रहणे तु सति तदुपादानसामर्थ्यात्टिना-ऽविशेष्यते, न त्वचा टिरिति हलन्तस्यापि प्लुतः सिध्यति ॥

"प्रत्यभिवादेऽशूद्रे" ॥ 'प्रत्यभिवादो नामेत्यादि'। गुरुरित्युपलक्षणं, त्रिवर्षपूर्वः श्रोत्रियो ऽभिवादमर्हति, अभिवाद्यमान आशिषं वाच्यमानो गुरुराशिषं प्रयुङ्क्ते इति यत्स प्रत्यभिवादो न प्रत्युक्तिमात्रं तत्रैव लोके प्रसिद्धत्वात्, तद्यथा 'अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदु' रिति। 'तत्रेति'। आशीर्वादविषये कीदृशे अशूद्रविषये ऽशूद्रो विषयो यस्य स तथोक्तः, अभिवादने सति प्रत्यभिवाद इति तं तावदुदाहरति। 'अभिवादयइति'। नमस्कारपूर्वमाशिषं वाचयामीत्यर्थः, एवमभिवादितो गुरुः प्रत्यभिवदति। 'आयुष्मानिति'। आयुष्मत्वस्य विधेयत्वात्सम्बोधनविभक्त्यभावः। 'एधीति'। अस्तेर्लोटि सिपो हिः भवेत्यर्थः। 'आयुष्मान्भव सौम्येति विप्रोवाच्योभिवादन' इति मानवे, भवेत्यर्थग्रहणं तेन पर्यायैरपि प्रत्यभिवादो भवति। ननु च तत्रा 'कारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुत' इत्युक्तं, स कस्मादिह न विधीयते। उच्यते। यदर्थाभिधानउपयुज्यते तदेव व्याकरणे वक्तव्यम्, अकारस्तु केवलमदृष्टार्थः प्रयुज्यते। नत्वस्य कश्चिदर्थोऽस्ति, अन्येतु मानवमन्यथा व्याचक्षते अस्याभिवादयितुर्नाम्नो ऽन्तेऽवसाने यो ऽकारः स प्लुतो वाच्यः, अकार इत्युपलक्षणं, पूर्वाक्षरश्च प्लुतो वाच्यः, हलन्तविषय मेतत्, अक्षर इत्यचमाह, हलन्तेष्वन्त्यात्पूर्वाच्च प्लुतो वाच्य इत्युभाभ्यामिति ताभ्यां टेः प्लुत इत्युक्तं भवति। वयं तु ब्रूमः। पृथगेवाकारः प्रयोक्तव्य इति, कुतः, अक्षरार्थस्त्व[1]यं, किञ्च भरतशास्त्रे प्रसङ्गेन प्रत्यभिवादप्रकारे वर्ण्यमाने पृथगकारप्रयोगो दर्शितः, तस्मादयमत्र प्रत्यभिवादनप्रयोगः आयुष्मान् भव सौम्य देवदत्त ३ अ, अग्निचि३त् अ इति एजन्तेषु त्वेचोप्रगृह्यस्येत्यस्मिन्विधौ सत्यकारे परतस्तयोर्यावचि संहितायामिति यद्यपि भवति पिनाकपाणा३य हर३य शम्भ३व विष्ण३व इति, प्रत्यभिवादे शर्मवर्मशब्दयोः प्रयोगं नेच्छन्ति, शर्मान्तं ब्राह्मणस्य

1 तावदर्थमिति २ पु०।

स्याद्गुर्मान्तं तच्चियस्य त्वित्यनेन नामन्यनन्तर्भूतयोरेव तयोः प्रयोग उक्तः, न तु नामन्यन्तर्भावः। "तुषजक इति"। कुत्सिते कः, शूद्रस्य तु जुगुप्सितमिति वचनात् एवं विधं शूद्रनाम। 'स्त्रियामपीति'। अस्त्रीशूद्रयोरिति वक्तव्यमित्यर्थः। केचिदाहुः। न स्त्यभिवादयते पादोपसंग्रहणाद्येव तु करोतीति, अन्ये त्वाहुः। अभिवादयते न तु स्वं नाम गोत्रं वा गृह्णातीति, द्वयोरपि पक्षयोः स्त्रीप्रतिषेधो न विधेयः, ये तु स्त्रीणामपि नामगोत्राभ्यामभिवादप्रत्यभिवादाविच्छन्ति तन्मतेनायं प्रतिषेधः। असूयतीत्यसूयकः, अविनीतः, तस्मिंस्त्वित्यादिनाऽसूयके प्रतिषेधं प्रत्याचष्टे। यावदसावसूयकत्वेन ज्ञातो न भवति तावत्प्लुतं करोत्येव, यदा त्वसूयकोऽयं मामुपहसितुकाम इति जानाति तदा नैवाऽऽशीर्वादरूपं प्रत्यभिवादं प्रयुङ्क्ते प्रत्युत शापमेव ददातीति भाष्ये दर्शितमित्याह। 'तथा ह्युक्तमिति'। गुरुणा स्थालिशब्दं सञ्ज्ञां मत्वा प्लुते प्रयुक्तेऽसूयक आह नैषा मम संज्ञेति किं तु दण्डिन्यायो मया विवक्षितः, स्थालमस्यास्तीति स्थालीति, तदपि तत्त्वं मन्वानो गुरुः पुनरपि प्लुतरहितं प्रत्यभिवादनं कृतवान्। 'आयुष्मानेधि स्थालिन्निति'। पुनरसूयक आह न दण्डिन्यायो मया विवक्षितः, संज्ञैवैषा ममेति, ततोऽसूयकत्वं निर्ज्ञाय कुपितः सन् गुरुराह। 'असूयकस्त्वमित्यादि'। 'भिद्यस्वेति'। कर्मकर्त्तरि यक्। स्थालिन्निति पाठो न तु स्थालीवदिति। 'अभिवादवाक्ये यत् संकीर्तितमिति'। येन वाक्येनाभिवाद्यते तदभिवादनवाक्यं, नाम, संज्ञा, गोत्रमपत्यप्रत्ययान्तः शब्दः। वाक्यस्य टेः प्लुतविधानादेवमुक्तम्। 'तत्र प्लुति[1]रिष्यतइति'। इष्टिरेवेयमिति केचित्। अन्ये त्वाहुः। अभिवादनं तावन्नामगोत्राभ्यामिति समाचारप्राप्तं, प्लुतोऽप्ययं प्रधाने कार्यसंप्रत्ययात्तस्यैव वाक्यान्ते वर्त्तमानस्य भवति, पदस्य च प्राधान्यमर्थद्वारकं, प्रधानमर्थोऽभिवादयिता तदनुग्रहार्थत्वात्प्रत्यभिवादस्य, कुशलित्वादिकं तु तस्यैव संस्कारकम्, एवमेधीत्याख्यातव्याख्या साध्यरूपतया प्रधानभूतापि क्रिया संस्कारकत्वेन विवक्षितत्वादप्रधानमेव, तस्मात्प्रधानभूतस्याभिवादयितुर्यदुपस्थापकं पदं तस्य प्लुतः। तच्च

१ प्लुत इति मु॰ मू॰ पु॰।

नामगोत्रं चेति । 'भोराजन्यविशां वेति' । भो इति स्वरूपग्रहणम् । इतरयोस्तु तद्वाच्यां ग्रहणं, तत्र भोःशब्दस्यासंज्ञागोत्रशब्दत्वादप्राप्ते विभाषा, इतरत्र प्राप्ते, संज्ञाशब्दत्वात् ॥

"दूराद्धूते च"॥ दूरादिति दूरान्तिकार्थेभ्यो द्वितीया चेति पञ्चमी, हूतं ह्वानं भावे निष्ठा, दूराद्धित्युच्यते दूरं चानवस्थितं, तदेव हि कं चित्प्रत्यतिदूरं कं चित्प्रत्यन्तिकं भवति, एवं हि कश्चित्कं चिदाह य एष पार्श्वतः करकस्तमानयेति, स आह उत्थाय ग्रहाण, दूरे न शक्नोमि गन्तुमिति, अपर आह दूरं मथुरायाः पाटलिपुत्रमिति, स आह न दूरमन्तिकमिति, तदेवं दूरस्यानवस्थितत्वाच्च ज्ञायते कस्यामवस्थायां प्लुत्या भवितव्यमित्यत आह । 'दूरमित्यादि' । ह्वानं हूतं तदपेक्षया यद्दूरं तदिहाश्रीयते दूराद्धूतमित्यन्वयात्, इतिकरणो हेतौ, न तु देशमपेक्ष्य देशान्तरं दूरं भवति, किमिदं हूतापेक्षं दूरमित्यत आह । 'यत्रेति' । यत्र हूते, प्राकृतात्स्वभावसिद्धात्, एवंविधे हूते देशद्वारकहूतापेक्षमपि दूरत्वमस्तीति भावः । 'हूतग्रहणं चेति' । येन पर आगमने नियुज्यते तद्धूतं, तच्च नान्तरेण संबोधनं संभवति, संबोधितो हि पुरुष आगमने पानादौ वा नियुज्यते,[1] अतो नान्तरीयकत्वाद्धूतेन संबोधनमात्रं लक्ष्यते, उपलक्षणे प्रयोजनमाह । 'तेनेति' । इहायं प्लुतो दूरात्संबोधने विधीयते, एकश्रुतिरपि तत्रैव, एकश्रुतिदूरात्संबुद्धाविति एकस्मिंश्च विषये प्राप्तानां बाधविकल्पसमुच्चयानामन्यतमेन भवितव्यं, तदिह को भवतीत्याह । 'अस्याश्चेति' । बाधस्तावद्विषयभेदे सति भवति, यथा काणोः, तत्र हि कस्य विशेषो विषयः, अणस्तु धातुसामान्यम्, इह तु नैवं विषयभेदोऽस्ति, विकल्पोऽपि सहप्राप्तयोर्भवति, यथा तव्यदादीनाम्, इह चैकश्रुतौ कर्तव्यायां प्लुतस्यासिद्धत्वात्सहप्राप्तिर्नास्ति, तस्मात्पारिशेष्यात्समावेश एव भवति, एकस्मिन्वाक्ये द्वयोरपि युगपत्प्रवृत्तिरित्येतावता चात्र समावेशवाचोयुक्तिस्तत्त्वतस्तु वाक्यस्य टेः प्लुत उदाहृतः, परिशिष्टस्यैकश्रुत्यमिति बाध एव ॥

"हैहेप्रयोगे हैहयोः" ॥ पूर्वेण दूयमानार्थस्य वाक्यान्तस्य पदस्य टेः प्लुतविधानात्तदर्थयोर्हैहयोर्न प्राप्नोतीति वचनम् । 'हैहयोरेवेति' । एवकारः पौनर्वचनिकः, हैहयोः प्रयोगे तयोरेव हैहयोरिति । अन्ये तु हैहयोरेव भवति न दूयमानार्थस्य वाक्यस्य टेरिति वर्णयन्ति, तदेतत्कथं लभ्यते, अपकृष्य विधानात् दूयमानार्थस्य प्लुते प्राप्ते अतदर्थयोरेव तयोर्विधीयमानः प्लुतस्तं बाधते, सत्यपि संभवे बाधनं भवतीति न्यायात्, न चास्यासिद्धत्वम्, अपवादो वचनप्रामाण्यादित्युक्तत्वात् । 'है३ इति' । प्लुतावैच इदुताविति वचनादिकारभागः प्लुतः । 'हे३इति' । एचोऽप्रगृह्यस्येत्यनेन प्लुतविकारो न भवति दूराद्धूतत्वात् । हैहयोरिति किमर्थं, हैहयोः प्लुतो यथा स्यात् अन्यथा ऽऽरम्भसामर्थ्यादनन्त्यस्य दूयमानवाचिन एव स्यात् देवदत्त है इत्यादौ, एवं तर्हि हैहयोरित्येवास्तु किं हैहेप्रयोगइत्यनेन, नह्यप्रयुज्यमानयोः प्लुतविधिः संभवति । उच्यते । प्रयोगइति तावदुक्तव्यं, प्रयोगमात्रे यथा स्यात्, किं सिद्धं भवति, अनर्थकयोरपि ग्रहणं सिद्धं भवति, क्व च तावनर्थकौ, यत्र संबोधनवचनं प्राक् प्रयुज्यते तत्र तेनैवाभिमुख्यस्य द्योतितत्वात्त हैहयोर्द्योत्यमस्तीत्यानर्थक्यं, यत्र तु हैहयोः प्राक् प्रयोगस्तत्रानयोराभिमुख्यं द्योत्यमित्यर्थवत्त्वम्, एवमपि प्रयोगे हैहयोरित्येवास्तु, हैहयोः प्लुतो भवति प्रयोगे, कस्य हैहयोरेवेति श्रुतत्वात्, तस्मात्पुनर्हैहेग्रहणस्य प्रयोजनं वक्तव्यं तदाह । 'पुनरिति' । यदि तु प्रयोगग्रहणादेवानर्थकयोरिवानन्त्ययोरपि भविष्यतीत्युच्येत शक्यं पुनर्हैहेग्रहणमकर्त्तुम् ॥

"गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" ॥ 'अनन्त्यस्यापि टेरिति' । अनेनापिशब्देन प्रकृतोऽन्त्यः संमुच्चीयतइति दर्शयति, यदि तु गुरोः संनिधानात्स एवान्त्यः समुच्चीयेत गुरोरनन्त्यस्यान्त्यस्यापीति, ततो तेन यत्रान्त्यो गुरुस्तत्रैव पर्यायः स्यात्, लघौ त्वन्त्ये पूर्वेण तस्य स्वचनेन चानन्त्यस्य गुरोरिति द्वयोः प्लुतयोर्युगपत्प्रसङ्गः प्राप्नोति, अनुदात्तं पदमेकवर्जमितिवचनान्नास्ति यौगपद्यसंभवः, असिद्धः प्लुतस्तस्या-

सिद्धत्वाच्चियमो न प्राप्नोति, नैतदस्ति, कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपतिष्ठते वाक्यस्य टेः प्लुत उदात्तः गुरोरनृतः प्लुत उदात्तः, उपस्थितमिदं भवति अनुदात्तं पदमेकवर्जमिति, तस्मान्नास्ति यौगपद्यसंभवः, यस्तर्ह्यनुदात्तःप्लुतस्तस्यास्य च समावेशः प्राप्नोत्यभिपूजिते दूराद्धूते प्लुतो भवन्ननुदात्तं प्रश्नान्ताभिपूजितयोरिति टेरनुदात्तो भवति, शोभनः खल्वसि देवदत्त इति, तत्र तेन गुरोरुदात्तः प्लुतः स्यात्, तस्माट्टेरेव समुच्चेतव्यः, तत्रेह्येकैकस्येतिवचनात् यथा ऽनन्त्यस्य पर्यायो ऽयं भवति तथा ऽन्त्यस्य टेरपीति, नास्ति यौगपद्यप्रसङ्गः। 'एकैकग्रहणं पर्यायार्थमिति'। अन्यथा ऽनन्तरोक्तेन प्रकारेणोदात्तानुदात्तयोः प्लुतयोः समावेशः स्यात्, क्वचित्पठ्यते प्रत्यभिवाद इत्येवमादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यतइति, तस्यार्थः, नेदं स्वतन्त्रं प्लुतविधानं, किं तर्हि, प्रत्यभिवादे दूराद्धूते च यः प्लुतो विहितः स गुरोरनन्त्यस्यापि भवति अन्त्यस्यापि टेः पर्यायेणेति। तेन प्रत्यभिवाद्यमानार्थस्य हूयमानार्थस्य च शब्दस्येदं प्लुतविधानं न यत्र तत्र स्थितस्य गुरोरिति द्रष्टव्यम्। 'प्राचांग्रहणं विकल्पार्थमिति'। तेन पक्षे न कस्यचिदपि प्लुतो भवति। 'तदनेनेत्यादि'। तदिति वाक्योपन्यासे, अयोत्मेषणे परस्य चेत्यत्र भाष्यकारेण यदेतदुच्यते सर्व एव प्लुत इत्यादि तदुपपन्नं भवतीत्यर्थः। ननु यत्र प्राचांग्रहणमस्ति स प्लुतो विकल्पतां सर्वस्य तु कथं विकल्पः, एवं तर्हि प्राचांग्रहणं सर्वत्रैव प्लुतविधौ संबन्धनीयं, शास्त्रत्यागः, साहसं, तेन शास्त्रमत्यजताप्यभियुक्तस्मरणात्सर्व एव प्लुतो विभाषा विधेय इत्यर्थः॥

"ओमभ्यादाने"॥ प्लुतश्रुत्या ऽच्परिभाषोपस्थानादच एव प्लुतः, मकारस्त्वर्द्धमात्र इति समुदायो ऽर्द्धचतुर्थमात्रः संपद्यते॥

"ये यज्ञकर्मणि"॥ 'ये यजामहइत्यत्रैवायं प्लुत इष्यतइति'। पित्र्यायां ये स्वधेत्यत्रापि भवति, एतत्स्थानापन्नत्वात्तस्य॥

"प्रणवष्टेः"॥ 'क एष प्रणवो नामेति'। इह शास्त्रे ऽपरिभाषितत्वात्प्रश्नः। 'पादस्येति'। शास्त्रान्तरप्रसिद्ध आश्रीयते देव-

तावत्, अक्षरमच् अन्त्यमचं गृहीत्वेत्यर्थः । 'तदाद्यक्षरशेषस्येति' । अक्षरं च शेषश्च हल् अक्षरशेषं, तदन्त्यमक्षरमादिर्यस्य तत्तदादि, तदादि च तदक्षरशेषं च तदाद्यक्षरशेषं तस्य टेरिति । 'त्रिमात्रमिति' । केचिन्म-कारेण सह त्रिमात्रमिच्छन्ति, अन्ये भागमेव, तत्र ओंकारविधिः सामिधेन्यादिषु प्रसिद्धः, स्वरादिमृगन्तमोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्द्धं अवस्येदिति ओंकारविधिस्तु निनर्द्दं स्वरादिरन्त ओंकारश्चतुर्थनिनर्द इति, आथर्वणिकास्तु सर्वत्र चानयोर्विकल्पमिच्छन्ति, तेषामेव चेदं सूत्रं पठितम् । 'जिन्वतीमिति' । जिविः प्रीणनार्थः, लट्, तिप् । 'टेरिति वर्त्तमानइत्यादि' । असति टिग्रहणे अलोन्त्य-स्येति वचनाट्टेर्यो ऽन्त्यात् तस्योकारः स्यात्, व्यभिचाराभावाद्धि प्रणवः प्लुतत्वेन न विशेष्यते, संज्ञया विधानेचाच्परिभाषाप्रवर्त्तते न तु वस्तु-तस्त्रिमात्रविधाने, तस्माद्धल एव प्राप्नोति, अथाच्परिभाषोपस्थानार्थ-मेव प्लुतत्वेन प्रणवो विशेष्येत तथा ऽपि टेर्योऽच् तस्यैव स्यान्न तु सर्वस्य टेः, ओंकारस्त्वच्हल्समुदायत्वात्प्लुतो न भवतीति सर्वस्य टेः सिध्यति, वाक्यस्य टेरित्यधिकारात्, सत्यम्, टिस्थानिकस्यैव ह्योंका-रस्य प्रणवसंज्ञत्वात् कथमन्त्यस्याचो वा प्रसङ्ग इति चिन्त्यम् ॥

"याज्यान्तः" ॥ 'याज्याकाण्ड इति' । यज्यानुवाक्याकाण्ड-मिति समाख्याने प्रकरणे । 'तेषामिति' । मन्त्राणाम्, तासामिति पाठे तासां याज्यानामन्तः । 'प्लवतइति' । त्रिमात्रतया वर्द्धतइत्यर्थः । 'अग्नये३इति' । चतुर्थ्येकवचनान्तस्याग्नयेशब्दस्यैचोप्रगृह्यस्येति प्लुतवि-कारः, इहेदमन्तग्रहणं टेरित्यस्य निवर्त्तकं वा स्याद्विशेषणं वा, पूर्व-स्मिन् कल्पे प्लुतश्चान्त्याच्परिभाषोपस्थानादच्यान्ते विशेषिते ऽन्तस्याया एव याज्यायाः प्लुतः स्यात्, पक्षान्तरे त्वन्तग्रहणमनर्थकं टेरन्तत्वाव्य-भिचारादित्यभिप्रायेणाह । 'अन्तग्रहणं किमिति' । इतरो ऽपि विदि-ताभिप्राय आह । 'याज्या नामेति' ॥

१ इदं मु० मूलपुस्तके नास्ति ।

"ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः" ॥ पित्र्यायामनुस्वधेति संप्रैष्येत्यत्राऽपि अनुस्व३धेति प्लुतो भवति, ब्रूहिस्थानापन्नत्वात्स्वधाशब्दस्य तथा ऽस्तु स्वधेति प्रत्याश्रवणमित्यत्रापि भवति, अस्तु स्वधेति श्रौषट्स्थानापन्नत्वात्, तथा च वषडित्येके समामनन्ति, वौषडित्येके, वाषडित्येके, वौडाडित्येके, वाडाडित्येके, वडाडित्येके इति षड्विधस्यापि वषट्कारस्य प्लुतो भवति वषट्कारोपलक्षणत्वाद्वौषट्शब्दस्य । 'आवह देवान् यजमानायेत्येवमादिर्विति' । आदिशब्देनावह जातवेदः, सुयजा यजेत्यादेर्ग्रहणम् ॥

"अग्नीत्प्रेषणे परस्य च" ॥ 'अत्रैवायं प्लुत इष्यतइति' । ओस्वधेत्याश्रवणमित्यत्र तु तत्स्थानापन्नत्वाद्भवति । 'आ ३ स्वधेति' । तथा चाश्वलायनः नित्याः प्लुतय इति उद्धर, 'उद्धरेति' । चापले द्विर्वचनम् ॥

"विभाषा पृष्टप्रतिवचने हेः" ॥ प्रतिवचनशब्दोयं विरुद्धेपि शब्दे वर्त्तते प्रतिशब्दस्य विरोधे प्रसिद्धेः प्रतिमल्लः प्रतिकुञ्जर इति, वचनं वचनं प्रतीति प्रतिवचनमिति वीप्सायामव्ययीभावेप्यस्ति, समाधानेप्यस्ति अनेनाभिहितस्य मया प्रतिवचनं विहितमिति, पृष्टप्रतिवचनेपि वर्त्तते, तत्रासति पृष्टग्रहणे विवक्षितं प्रतिवचनं न गम्येत, उदाहरणे हिशब्दो ऽवधारणे ॥

"निगृह्यानुयोगे च" ॥ 'निगृह्येति' । ल्यबन्तमेतत् । 'स्वमतादिति' । स्वपक्षात् प्रच्यावनमपनयः । 'तस्यैवेति' । यस्मादसौ प्रच्यावितस्तस्यैव स्वपक्षस्याविष्करणं शब्देन प्रकाशनम्, एवं किल त्वं निरूपपत्तिकमात्थेति, सूत्रार्थमुदाहरणे दर्शयन्नेवोदाहरति । 'अनित्यः शब्द इति केन विप्रतिज्ञातमिति' । तमेवं वादिनमुपालिप्सुरुपालब्धुकामो निगृह्य स्वमतात्प्रच्याव्य साभ्यसूयं सामर्षमनुयुङ्क्ते, आविष्कृतस्वमतं करोति, क्वचित्त्वयं ग्रन्थो न पठ्यते, अन्ते तु पठ्यते, अद्यामावास्या इत्येवं वादी प्रच्याव्य स्वमतादेवमनुयुज्यतइति ॥

"आम्रेडितं भर्त्सने" ॥ उदाहरणेषु वाक्यादेरामन्त्रितस्येत्यादिना द्विर्वचनं, वाक्यस्य टेरित्यधिकारेप्यत्रानन्त्यस्य भवति, वाक्यादेरेव

पदस्य भर्त्सने द्विर्वचनविधानात्। 'तदर्थमिति'। पर्यायेण पूर्वोत्तरयोर्भागयोः प्लुतो यथा स्यादित्येवमर्थम्। 'द्विरुक्तोपलक्षणार्थमिति'। द्विरुक्तसमुदाये भागद्वयोपलक्षणार्थमित्यर्थः। एतच्चाम्रेडितमात्रस्य भर्त्सने वृत्त्यसम्भवाल्लभ्यते, पर्यायस्य त्वेकैकस्येत्यनुवृत्तिलाभः॥

"अङ्गयुक्तं तिङाकाङ्क्षम्"॥ आकाङ्क्षतीत्याकाङ्क्षं, पचाद्यच्, इदानीं ज्ञास्यसि जाल्मेत्येष द्वयोरप्युदाहरणयोः शेषः, कूजनफलं व्याहारफलं वास्मिन्नेव क्षणे ज्ञास्यसीत्यर्थः। अङ्गशब्दो ऽमर्षे प्रत्युदाहरणे त्वनुनये, अङ्गदेवदत्तेत्येतावदेकं वाक्यम्, एतच्च वाक्यं मिथ्या वदसीत्येतदपेक्षते॥

"विचार्यमाणानाम्"॥

'कोटिद्वयस्य विज्ञानं विचार इति कथ्यते।
विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते'॥

इह तु विचार्यमाणार्थविषयत्वाद्वाक्यानि विचार्यमाणानि। 'गृहा३इइति'। गृहेशब्दस्य पूर्ववत्प्लुतविकारः। 'अनुप्रहरेदिति'। अनुप्रहारः शायनं व्यत्ययेन कर्मणि कर्तृप्रत्ययः, शाय्येतेत्यर्थः, अथ वानुप्रहरेदित्यत्र यूपं यजमान इत्यस्याध्याहारः, किं यूपस्तिष्ठेत्किं वा यूपं यजमानः शाययेदिति विचारार्थः॥

"पूर्वं तु भाषायाम्"। पूर्वेणैव सिद्धे नियमार्थमेतत्, तुशब्दस्त्विष्टतोवधारणार्थः, यथैवं विज्ञायेत पूर्वमेव भाषायामिति, मैवं विज्ञायि पूर्वं भाषायामेवेति। पूर्वत्वं च प्रयोगापेक्षम्। उदाहरणे नुशब्दो वितर्के, लोष्टो मृत्पिण्डः॥

"प्रतिश्रवणे च"॥ 'प्रतिश्रवणमभ्युपगम इति'। अङ्गीकारः। 'प्रतिज्ञानमिति'। प्रार्थितस्य देयत्वेन संवादः, अत्रोभयत्रापि गतिसमासः, अर्थद्वयेपि प्रतिपूर्वः शृणोतिः प्रसिद्धः। 'श्रवणाभिमुख्यं चेति'। अत्र लक्षणेनाभिप्रती आभिमुख्यइत्यव्ययीभावः, उदाहरणानि तु व्युत्क्रमेण दत्तानि। 'किमात्थ३ इति'। किं ब्रूषइत्येतत्पृच्छति, अत्र च श्रवणाभिमुख्यं गम्यते। 'हन्त[1] ते ददामि३ इति'। अत्र प्रार्थितस्य संवादो गम्यते, देव-

१ अहं तद्दति मु॰ मू॰ पा॰।

दत्त भोरित्यामन्त्रितम् । स यदर्थमामन्त्रितस्तच्छ्रवणार्थं किमात्थ इति, गां मे देहि भोः, नित्यः शब्दो भवितुमर्हति, तस्मिन् तृतीये तूदाहरणे स्वाभ्युपगमो गम्यते ॥

"अनुदात्तं प्रश्नान्ताभिपूजितयोः" ॥ प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः, क्वचित्पठ्यते नानेन प्लुतो विधीयते किं तु दूराद्धूतादिषु विहितस्य प्लुतस्यानुदात्तत्वं गुणमात्रं विधीयतइति, तत्रैषा वचनव्यक्तिः, प्रश्नान्ते अभिपूजिते च यः प्लुतः सो ऽनुदात्तो भवतीति, तत्राभिपूजिते दूराद्धूते चेति प्लुत इति । इतरत्र त्वनन्त्यस्यापि प्रश्नाख्यानयोरिति, अगमः पूर्वं ग्रामामित्येषां स्वरितः प्लुतः, अग्निभूते पटो इत्यन्यतरेण वाक्यपरिसमाप्तिर्भवति, तत्र यदा येन वाक्यपरिसमाप्तिस्तदा तस्यानेनानुदात्तः प्लुतः, स च पूर्वभागस्य, उत्तरभागस्य तूदात्ताविदुतौ भवतः ॥

"चिदिति चोपमार्थे प्रयुज्यमाने" ॥ इतिकरणः किमर्थः, अक्रियमाणे तस्मिन्नुपमानार्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इति विज्ञायेत, इतिकरणे तु सति प्रयुज्यमान इत्येतच्चिच्छब्दस्य विशेषणं, प्लुतस्तु वाक्यस्य टेरित्यधिकारात्तस्यैव भवति । 'कथंचिदिति' । अत्र कष्टे चिच्छब्दः । 'अग्निर्माणवको भायादिति' । अग्निरिव माणवको दीप्येतेत्यर्थः, अत्रोपमार्थस्य गम्यमानत्वादस्ति चिच्छब्दस्य प्रतीतिः, प्रयोगस्तु नास्ति, यद्यप्यन्येषामप्युपमानार्थानामिवादीनामस्ति प्रतीतिस्तथापि चिच्छब्दस्यापि तावदस्तीति स्यादेव प्लुतः, चकारो ऽस्य प्लुतस्य समुच्चयार्थः, समुच्चयश्च भेदाधिष्ठान इति प्लुतान्तरमेवेदमाख्यातं भवति, अन्यथा पूर्वसूत्रवत्पूर्वेष्वेव प्लुतनिमित्तेष्वनुदात्तत्वगुणमात्रं विधीयतइति विज्ञायेत, एतदेव च ज्ञापकं पूर्वसूत्रे गुणमात्रं विधीयतइति ॥

"उपरि स्विदासीदिति च" ॥ अत्रापि विचार्यमाणानामिति विहितस्य प्लुतस्य गुणमात्रं विधीयते ॥

---

१ कष्टे इति २ पु॰ पा॰ ।

"स्वरितमाम्रेडिते ऽसूयासंमतिकोपकुत्सनेषु" ॥ 'प्रावचनं कर्त्तव्यमिति'। सर्व एव प्लुत इतिवचनमन्यदीयमिति वार्त्तिककारेण तावदिदं पठितं वृत्तिकारो ऽपि तदेवापठत् ॥

"क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्" ॥ क्षिया आचारभेदः, आचारोल्लङ्घनम्, इष्टाशंसनमाशीः शब्देन व्यापारणं प्रैषः, क्वचिद्वृत्तावप्ययं ग्रन्थः पठ्यते। 'दीर्घं ते आयुरस्तु, अग्नीन्विहरेति'। क्षियायां तु न प्रत्युदाहृतं नित्यसाकाङ्क्षत्वात्, नहि स्वयं ह रथेन यातीत्येतावत्युक्ते आचारभेदो गम्यते, किं तर्ह्युपाध्यायं पदातिं गमयतीत्युक्ते। इह उपरि स्विदासीदिति चेत्यस्यानन्तरमङ्गयुक्तं तिङाकाङ्क्षमिति वक्तव्यं, ततः क्षियाशीःप्रैषेषु स्वरित इति, तत आम्रेडिते सूयासंमतिकोपकुत्सनेष्विति, एवं हि तिङाकाङ्क्षग्रहणं द्विर्न कर्त्तव्यं भवति, तथा तु न कृतमित्येव ॥

"अनन्त्यस्यापि प्रश्नाख्यानयोः" ॥ 'सर्वेषामेव पदानामिति'। नन्वन्त्यस्यानुदात्तं प्रश्नान्ताभिपूजितयोरित्यनुदात्तप्लुतेन भवितव्यं तत्कथमेष स्वरितः प्लुतो भवत्यत आह। 'अनन्त्यस्येति'। यद्यप्यत्र विकल्पो न श्रुतस्तथाप्यनेनापिशब्देनान्त्यस्याप्ययं स्वरितः प्लुतो भवति, ततश्चानुदात्तप्लुतः पाक्षिकःसंपद्यत इति भावः। ननु चापिशब्द आख्याने ऽन्त्यसमुच्चयेन चरितार्थः, ततः किं, प्रश्ने ऽन्त्यस्यानुदात्तस्य नित्यं प्लुतः प्राप्नोति, तत्र विकल्पाभावाच्चैव दोषः, प्रश्नेऽप्यपिशब्दस्य तात्पर्यं गम्यते सहनिर्दिष्टत्वात्, ततश्च प्रश्नान्ते स्वरितानुदात्तयोः प्लुतयोर्विकल्पो भविष्यति ॥

"प्लुतावैच इदुतौ" ॥ लक्षणान्तरेणैवैचोः प्लुतप्रसङ्गे तदवयवयोरिदुतोः प्लुतार्थं वचनं, वचनसामर्थ्याद्गौणैकदेशयोरपीदुद्ग्रहणेन ग्रहणम्। 'ऐचः प्लुतप्रसङ्ग इति'। केचिदाहुः। सूत्रे प्लुताविति प्लुतिशब्दात्सप्तमी, ऐचः प्लुतौ प्राप्तायामिति तदनेन दर्शितमिति, तदयुक्तं, प्लुताविति हि क्रियानिमित्तो ऽयं व्यपदेश इति प्रथमाद्विवचनान्तत्वेन व्याख्यास्यमानत्वात्, तस्मात्प्रकरणप्राप्तये तदुक्तम्, उदाहरणे दूराद्धूते गुरोरनृत इत्येव प्लुतः, यदि ऐकारौकारयोरवयवयोरिदुतोः प्लुतः

क्रियते, समुदायस्य चतुर्मात्रता ऽर्द्धचतुर्थमात्रता वा प्राप्नोति, कथमिमावैचौ समाहारवर्णौ मात्रावर्णस्य मात्रेवर्णोवर्णयोः । अपरे त्वाहुः । अर्द्धमात्रावर्णस्य अध्यर्द्धमात्रेवर्णोवर्णयोरिति, तत्र पूर्वस्मिन्कल्पे इदुतोरनेन प्लुते कृते तयोस्तिस्रो मात्रा अवर्णस्य चैका मात्रेति समुदायश्चतुर्मात्रः प्राप्नोति, पक्षान्तरे त्वर्द्धचतुर्थमात्रः प्राप्नोत्यत आह । 'अत्रेति' । ननु च त्रिमात्रस्याचः प्लुतसंज्ञा कृता तत्कथं द्विमात्राविदुतावनेन शक्येते कर्त्तुमत आह । 'प्लुताविति हीति' । अनेन प्लुताविति कर्त्तरि निष्ठा न संज्ञाशब्द इति दर्शयति । 'वृद्धिं गच्छत इत्यर्थ इति' । अनेकार्थत्वाद्धातूनां प्लवतिर्वृद्धेवपि वर्त्तते, नन्वेवमपि न ज्ञायते कियती सा वृद्धिरित्यत आह । 'तावती चेति' । एवं मन्यते । प्रकृतमपि प्लुतग्रहणमत्र संबध्यते ततश्चायमर्थो भवति ऐचोऽवयवाविदुतौ तथा वर्द्धेते यथा ऐचौ प्लुतौ संपद्येते इति, तस्मादनभिमताया वृद्धेरप्रसङ्ग इति । 'अर्द्धतृतीयमात्राविति' । अर्द्धरूपा तृतीयमात्रा ययोस्तौ तथोक्तौ । 'इष्यते चतुर्मात्रः प्लुत इति' । चतुर्मात्रतया वृद्धिरिष्यतइत्यर्थः । अस्मिन्पक्षे चतुर्मात्रस्यात्त्वमपि भवति । तेन प्रत्यङ्ङितिकायन इति ङमुड् भवति, म्लौ त्रातेत्यनचिचेति तकारद्विर्वचनं भवति ॥

"एचो ऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ" ॥ 'विषयपरिगणनं कर्त्तव्यमिति' । एतद्विवृणोति । 'प्रश्नान्तेति' । 'यथाविषयमिति' । प्रश्नान्ते ऽनुदात्तः स्वरितो वा शेषे तूदात्तः । 'इदुतौ पुनरुदात्तावेवेति' । अनुवृत्तस्योदात्तग्रहणस्याभिसंबन्धात् । 'विष्णुभूते इति' । कथं पुनरिदं परिगणनस्योदाहरणं यावता सूत्रे वादूराद्धूतइत्युच्यते ऽत आह । 'परिगणनं चेति' । अन्यार्थे ऽवश्यकर्त्तव्ये परिगणने तेनैव सिद्धत्वाददूराद्धूतइति न वक्तव्यं, ततश्चेदमपि परिगणनस्य प्रत्युदाहरणमुपपद्यतइति । 'गौरिति' । असर्वनामस्थानइतिप्रतिषेधात्सौ परतः पूर्वं पदं न भवति, अथ यदा सावपि पदं भवतीति पक्षस्तदा कस्मान्न भवति, उक्तमेतद्वाक्यपदयोरन्त्यस्येति, विसर्जनीयशब्दश्चात्र वाक्यान्तः, नन्वेवं पदान्तग्रहणमित्यत्र पदशब्देन वाक्यमु-

च्यते ऽन्वर्थग्रहणात्। पद्यते प्रतीयतेऽनेन हेतुनार्थ इति। एतच्च याज्यान्त इत्यतोन्तग्रहणानुवृत्त्या लभ्यते। अग्निभूता३इति अग्निभूतिशब्दस्य संबुद्धौ रूपम्। 'आमन्त्रितइति'। अप्राप्तएव प्लुते वचनम्॥

"तयोर्य्वावचि संहितायाम्"॥ किमर्थमिदमुच्यते। न इको यणचीत्येव सिद्धमत आह। 'इदुतोरसिद्धत्वादिति'। ननु सिद्धःप्लुतस्स्वरसंधिषु, कथं ज्ञायते प्लुतप्रगृह्या अचीति प्लुतस्य प्रकृतिभावविधानात्, यस्य हि विकारः प्राप्तस्तस्य प्रकृतिभावो विधेयः, प्लुतस्य चासिद्धत्वे न तस्य स्वरसंध्याख्यो विकारः प्राप्नोति, अस्तु प्लुतः सिद्धः, किमायातमिदुतोः, उच्यते। प्लुतप्रकरणे यत्कार्यं तत्स्वरसंधिषु सिद्धमिति सामान्येन ज्ञापकमाश्रयिष्यते, ततश्चेदुतोरपि सिद्धत्वात्सिद्ध एव यणादेशोत आह। 'अथापि कथं चिदिति'। सामान्यपेतं ज्ञापकमित्यस्यार्थस्य दुर्ज्ञातत्वात्कथं चिदित्याह, यदीदं नोच्येत अया३इ इन्द्रं, पटा३उ उदकमित्यत्र षाष्ठिकं यणादेशं बाधित्वा सवर्णदीर्घत्वं स्यात्, अया३याशेत्यादौ च इकोऽसवर्णे शाकल्यस्येति प्रकृतिभावः स्यादतस्तद्बाधनार्थमिदं वक्तव्यमेव। ननु च तन्निवृत्तये यत्नान्तरमस्ति, किं पुनस्तत्, इको यणचीत्यत्रोक्तम् इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थं शाकलनिवृत्त्यर्थं चे ति, तच्चावश्यं वक्तव्यं, य इक् प्लुतपूर्वो न च प्लुतविकारः। भो३इन्द्रं भो३यिद्रं गायतीति भोःशब्दस्य छान्दसः प्लुतः, ततः परस्येकारस्य निपातत्वात्प्रकृतिभावे प्राप्ते तं बाधित्वा यणादेशः, तदेवं तस्यावश्यकर्त्तव्यत्वात्तेनैव यण् सिद्धोत आह। 'अथापीति'। 'यण्स्वरनिवृत्त्यर्थमिति'। यणाश्रयः स्वरो यण्स्वरः, एतदेव विवृणोति। 'यणादेशस्येति'। उक्तमेवार्थं श्लोकाभ्यां संगृह्णाति। 'किन्त्विति'। इको यणादेशेन किं न सिद्धं रूपं यतो ऽयमाचार्यः इदुतोर्य्वौ विदधाति, तौ चेदुतौ स्वरसंधिषु सिद्धौ ममेति सूत्रकारीभूतस्य वचनम्, एवं चोदिते परिहरति। 'शाकलदीर्घविधी तु निवर्त्याविति'। शाकल्यस्येदं शाकलं कण्वादिभ्यो गोत्रइत्यण्। पुनश्चोदयति। 'इक् च परेति'। र्तिककारोपि इकः प्लुतपूर्वस्य यणं विदधाति, स च प्रकृतिभावस्येव

शाकलदीर्घविध्योरप्यपवादः, ततश्च तेनैव यथा एतयोरपीदुतोः शाकलदीर्घौ न भविष्यत इति नार्थ एतेन, परिहरति । 'यण्स्वरेति' । यण्स्वरबाधनमेव हेतुः सूत्रारम्भस्येति ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्य द्वितीयश्चरणः ॥

"मतुवसो रु संबुद्धौ छन्दसि" ॥ युवोरनाकाविति वन्मतुवसोरिति निर्देशो ऽनुनन्धपरित्यागेन वा सकारान्तस्य वसोर्ग्रहणं निपातनाच्चाल्पाच्तरस्य परनिपातः, इत्यविभक्तिको निर्देशः । 'मरुत्वइति' । झय इति वत्वं, तसौ मत्वर्थइति भसंज्ञा । 'हरिवो मेदिनमिति' । छन्दसीर इति वत्वं, संयोगान्तलोपो रो रुत्वे सिद्धो वक्तव्य इति वचनाद्धशि चेत्युत्वम् । 'वन इति' । क्वनिब्वनिपोः सामान्येन ग्रहणम् । अनुबन्धानिर्देशादत्र तदनुबन्धकपरिभाषाया अनुपस्थानात् क्वनिपोपि ग्रहणम् । 'प्रातरित्व इति' । प्रातरेतीत्यन्येभ्योपि दृश्यन्तइति क्वनिपि ह्रस्वस्य तुक् । 'अवशब्दस्य चेति'। सर्वस्येति द्रष्टव्यम्, अनर्थके ऽलोन्त्यपरिभाषाया अभावात्, उपसंख्यानं प्रत्याचष्टे । 'निपातविज्ञानाद्वेति' । एतदेव विवृणोति । 'अथ वेति'। अवश्यं चैतन्निपातत्वमेव विज्ञेयमित्याह । 'असंबुद्धावपि हीति'। 'स्त्रियामिति' । 'भो ब्राह्मणीति' । विभक्तिनिमित्तेषु कार्येषु लिङ्गविशिष्टपरिभाषा नोपतिष्ठतइत्युक्तं न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति, तेन भवतीशब्दस्य रुत्वोत्वे न स्याताम्, अथापि स्यातामेवमीकारस्य रुत्वे अवशब्दस्य चौकारे रूपं न सिध्यति, तस्मादसंबुद्धौ स्त्रियां च दर्शनान्निपाता एवेति विज्ञेयं, निपातत्वं च विभक्तिस्वरप्रतिरूपकत्वेनेति, न त्वसत्यस्मिन्नुपसंख्याने भोइत्यादिकः शब्दो विभक्त्यन्तो नास्ति यत्प्रतिरूपका एते स्युः, तस्मात्सौत्रा एते निपाता भोभगोअघोइत्यत्र सूत्रे निर्दिष्टा चादिषु वा पठितव्याः, तदेवं प्रत्याख्यातमुपसंख्यानम् । अन्ये त्वाहुः । इतराभ्यो ऽपि दृश्यन्तइति भवदादियोगे विधीयमानास्तसिलादयस्ततो भोइत्यादावपि यथा स्युरिति

वार्तिकारम्भ इति । अन्ये तु भवदादेरपरिगणितत्वाद् निपाता भो[१]इत्यादयो भविष्यन्तीति मन्यन्ते ॥

"अत्रानुनासिकः पूर्वस्य तु वा" ॥ पूर्वत्वमिदमापेक्षिकं, रुत्वं च संनिहितं, न च तदपेक्षं पूर्वत्वं संभवति रोरनुनासिकस्य च सहविधानात्, तस्माद्यस्य रुर्विधीयते तदपेक्षमेव पूर्वत्वं विज्ञायतइत्याह । 'यस्य स्थानेरुरिति' । अथात्रग्रहणं किमर्थमत्र रुप्रकरणे यथा स्यात्, अधिकारादप्येतत्सिद्धम्, अधिकारे हि सति रुत्वानुनासिकयोः सहविधानान्नान्यत्र प्रसङ्गो ऽत आह । 'अत्रग्रहणमिति' । अवधारणमत्र द्रष्टव्यं रुणैव सहेति । नन्वधिकारादप्येतत्सिद्धमित्युक्तमत आह । 'अधिकारेति' । असत्यत्रग्रहणे अनुनासिकाधिकारस्य परिमाणं न ज्ञायेत, एतावत्सु योगेष्वस्य व्यापार इति, ततश्च रुप्रकरणात्पर[२]त्राप्यस्याधिकारः संभाव्येतेत्यर्थः । तुशब्दः परस्मात्कार्यिणः पूर्वस्य विशेषद्योतनार्थः, परस्य नित्यं रुत्वं पूर्वस्य तु वानुनासिक इति, वावचनमनर्थकं ज्ञापकात्सिद्धं, यदयमुत्तरत्र सूत्रे यस्यानुनासिको न विहितस्तस्माद्रोः पूर्वस्मात्परमनुस्वारं शास्ति ततो ज्ञायते विकल्पेनायं भवतीति, नहि नित्ये ऽस्मिन्विधौ स रोः पूर्वः संभवति, यस्यानुनासिको विहितः ॥

"आतोऽटि नित्यम्" ॥ 'केचिदिति' । तैत्तिरीयाः । 'अनुस्वारमधीयतइति' । शुद्धादाकारत्परं, नित्यग्रहणमनर्थकमारम्भसामर्थ्यादेव नित्यो विधिः सिद्धः । अस्त्यारम्भे प्रयोजनं नियमो यथा स्यादात एवाटि अन्येषां तु नेति, कैमर्थ्यान्नियमो भवति विधेयं नास्तीति कृत्वा, इह चास्ति विधेयं, किं, नित्योनुनासिकः ॥

"अनुनासिकात् परोनुस्वारः" ॥ 'अन्यशब्दोत्राध्याहर्तव्य इति' । असत्यध्याहारे परशब्दस्य श्रुतत्वात्तदपेक्षयैवानुनासिकादित्येषा पञ्चमी स्यात्, परशब्दश्च दिग्शब्दस्तरन्यार्थवृत्तिर्वा पूर्ववृत्तिर्वा, पूर्वस्मि-

---

१ भवदादय इति इं॰ पु॰ पा॰ ।
२ उत्तरसूत्रे इं॰ पु॰ पा॰ ।

न्कल्पे रोः पूर्वस्मादनुनासिकादेव परो ऽनुस्वारो विज्ञायेत, न च तस्मात्पर इष्यते, इतरस्मिंस्त्वनुनासिकादन्यो ऽनुस्वारो भवतीत्यर्थो भवति, तत्र चानर्थकं परग्रहणं, नह्यनुस्वारो ऽनुनासिकापेक्षया ऽन्यत्वं व्यभिचरति, तस्मादन्यशब्दोध्याहार्यः, स च परशब्दापेक्षया पञ्चम्यन्तो ऽध्याहार्यः, पूर्वस्येत्येतदप्यत्रानुवृत्तं पर इत्यनेन योगात्पञ्चम्यन्तं विपरिणम्यते, एवं स्थिते यो ऽर्थः संपद्यते तं दर्शयति । 'अनुनासिकादन्य इति' । कः पुनरसावित्याह । 'यस्यानुनासिको न कृत इति' । 'अनुस्वार आगमो भवतीति' । टित्वाद्यागमलिङ्गाभावेपि परशब्देनानुस्वारस्य देशविशेषसंपादनादागमत्वं यथा न य्वाभ्यां पूर्वाविैजिति ॥

"समः सुटि" ॥ मोनुस्वार इत्यनुस्वारे प्राप्ते वचनम् । 'संस्कर्त्तेति' । संपर्युपेभ्यः करोतौ भूषणइति सुट्, समो मकारस्य रुत्वं, तस्य विसर्जनीयः, तस्य वा शरीति विकल्पे प्राप्ते यथा नित्यं सकारो भवति तथा दर्शितं, कथं पुनरस्मिन्सूत्रे सकारो निर्द्दिश्यतइत्याह । 'समः स्सुटीति द्विसकारको निर्द्देश इति' । स च सुटः सकारे संदेहाभावात्तद्व्यतिरेकेण द्विसकारकत्वं, वस्तुतस्तु त्रयः सकारा एको विभक्तिसंबन्धी, द्वितीय आदेश,स्तृतीयस्तु सुसंबन्धी, यदि तर्हि सकार आदेशो विधीयते अनुनासिको न प्राप्नोति, यस्मादत्रग्रहणं रुणा सह संनियोगप्रतिपत्त्यर्थमित्युक्तं, नैष दोषः । अत्र रुप्रकरणे यद्विधीयते तदुपलक्षणार्थं तत्र रुग्रहणम्, एतेन पूर्वसूत्रे रोः पूर्व इति व्याख्यातं, तदत्र सत्वे कृते यदा पूर्वस्यानुनासिकस्तदा सत्वस्यासिद्धत्वाद्रुत्वाभावादनचि चेति द्विर्वचने झरो झरीति पाक्षिके लोपे द्विसकारकस्त्रिसकारको वा प्रयोगः, यदा त्वनुस्वारस्तदा ऽयोगवाहानां अट्प्रत्याहारउपदेशचोदनात्तस्य च हल्त्वाच्झरो झरीति वा लोपे द्विसकारक एकसकारको वा प्रयोगः, यदा त्वनुस्वारस्य हल्त्ववदच्त्वमपीष्यते तदा ततः परस्य द्विर्वचनपक्षे सकारत्रयमपि भवति, तदेवं पञ्च रूपाणि भवति, अनुनासिकपक्षे द्वौ सकारौ, त्रयो वा, अनुस्वारपक्षे द्वावेकस्त्रयो वा, पञ्चस्वपि पक्षेषु शरः खय इति वा ककारस्य द्विर्व-

चने कृते दश रूपाणि भवन्ति। 'समो वा लोपमेके'। एके आचार्याः समो विकल्पेन लोपमिच्छन्ति, अत्राप्यनुनासिकानुस्वारौ भवतस्तस्यापि रुप्रकरणे विधानात्तत्रानुनासिकपक्षे सकारस्यानचि चेति द्विर्वचने पाक्षिके च लोपे एकसकारत्वमपि कदाचिद्भवति, तत्रापि ककारस्य पक्षे द्विर्वचनमिति द्वादश रूपाणि भवन्ति॥

"पुमः खय्यम्परे"॥ पुंसः सकारादवशिष्टो यो भागस्तस्यायं निर्देशः, सकारस्य संयोगान्तलोपे कृते तस्यैव कार्यित्वात्, अमिति प्रत्याहारस्य ग्रहणं न द्वितीयैकवचनस्य, खया प्रत्याहारेण साहचर्यात्। 'पुंश्चलीति'। पचादौ चलडिति पाठान्ङीप्, पुंश्चलीति षष्ठीसमासः। 'पुंस्कामेति'। पुमांसं कामयतइति शीलिकामिभिक्ष्याचरिभ्यो ण इति णः। 'तस्मादत्र सकार एवादेशो वक्तव्य इति'। कुप्वोᳲकᳲपौ चेत्यत्रैतदुक्तव्यम्। 'द्विसकारकनिर्देशपक्षे त्विति'। यदा पूर्वसूत्रे द्विसकारको निर्द्देश इति पक्षस्तदेत्यर्थः। 'स इत्यनुवर्त्तते इति'। ननु च रुरपि प्रकृतः सो ऽपि प्राप्नोतीत्यत आह। 'रुत्वं त्विति'। असंबन्धे कारणमाह। 'संबन्धानुवृत्तिस्तस्येति'। इतिकरणो हेतौ, यस्मादसौ स्वसंबन्धिना यः संबन्धस्तमनुवर्त्तते तं न जहाति तस्मादित्यर्थः, यद्वा संबन्ध्यतइति संबन्धः, यस्मादिह स्वसंबद्धमेव तदनुवर्त्तते तस्मादित्यर्थः, रुत्वं खल्विहानुवर्त्तमानमपि मतुवसो रु संबुद्धाविति स्वेन संबन्धिना संबद्धमेवानुवर्तते, तस्य प्रयोजनं संबन्ध्यन्तरेण रोः संबन्धो मा भूदिति, पुंदासादयः षष्ठीसमासाः। 'पुंगव इति'। गोरतद्धितलुकीति टच्समासान्तः, परग्रहणे क्रियमाणे खयि परतो यो ऽम् तत्रेत्यपि विज्ञायेत, ततश्च पुमवः पुमाचार इत्यत्रैव स्यात् तस्मात्परग्रहणम्॥

"नश्छव्यप्रशान्"॥ 'प्रशान्वर्जितस्येति'। सूत्रे त्वप्रशानिति षष्ठ्यर्थे प्रथमा, टीकृतिगत्यर्थोनुदात्तेत्, त्सरुः सद्ग्रहणप्रदेशस्तत्र कुशरुः त्सरुकः, आकर्षादिभ्यः कन्॥

---

१ टीकिरिति पा॰ इं॰ पु॰।

"दीर्घादटि समानपादे" ॥ एकपर्यायः समानशब्दः, समानपादइत्युच्यते, तत्रेदं न सिध्यति, यजामहे यज्ञियान्हन्त देवान् ईळामहयिति, छान्दसत्वाद्भविष्यति ॥

"नॄन्पे" ॥ नॄनिति षष्ठ्यर्थे प्रथमा, एवमुत्तरत्रापि पइत्यकार उच्चारणार्थः, पकारमात्रं निमित्तम् ॥

"स्वतवान्पायौ" ॥ तु वृद्धौ सौत्रो धातुः, ततोऽसुन् स्वन्तवो यस्याऽसौ स्वतवान्, दृकुस्ववःस्वतवसां छन्दसीति नुम् ॥

"कानाम्रेडिते" ॥ कान्कानीतिवक्तव्ये आम्रेडितग्रहणं यत्र द्विर्वचनं तत्रैव यथा स्यादिह मा भूत्कान्कान् पश्यतीति, एकोऽत्र किंशब्दः प्रश्ने, द्वितीयः क्षेपे । 'समः सुटीत्यतो वा सकारोनुवर्त्ततइति' । यद्येवं पूर्वेष्वपि योगेषु स एव प्राप्नोत्यत आह । 'पूर्वेषु योगेष्विति' ।

"ढो ढे लोपः" ॥ अकार उच्चारणार्थः, ढकारमात्रं निमित्तं तेन लेढा लेढीत्यादावपि भवति, लीढमित्यादौ हो ढः, झषस्तथोर्द्धोधः, ष्टुत्वं, ततोनेन ढलोपः, ननु चासिद्धं ष्टुत्वं तत्कथमत्र लोपस्तत्राह । 'ष्टुत्वस्येति' । उच्यते चेदं ढे परतो ढस्य लोपो भवतीति तत्र ष्टुत्वस्यासिद्धत्वे निर्विषयमेतत्स्यात् । ननु च यत्रोत्पत्तिको ढकारः श्वलिड्ढौकतइत्यादौ सावकाशः स्यादत आह । 'श्वलिड्ढौकतइत्यत्रेति' । 'जश्त्वे कृतइति' । एकपदाश्रयत्वादन्तरङ्गत्वात्पूर्वत्रासिद्धमितिलोपस्यासिद्धत्वाद्वा पूर्वं जश्त्वं, ननु च निर्विषयत्वाड्ढलोपो जश्त्वं बाधेत, नेत्याह । 'न चेति' । कुत इत्याह । 'तस्य हीति' । कथं पुनर्लीढादिरवकाशः, यावता यथा श्वलिड्ढौकतइत्यत्र जश्त्वे कृते कार्यिणोऽभावस्तथा लीढादावपि ष्टुत्वस्यासिद्धत्वान्निमित्तस्याभावः, अथ तत्र वचनसामर्थ्यात् ष्टुत्वस्यासिद्धत्वं बाध्यते तदेतरत्रापि जश्त्वं बाधनीयं, वक्तव्यो वा विशेषोऽत आह । 'तत्र हीति' । अयमभिप्रायः । लोपेन तावदसिद्धत्वम्[1]वश्यं बाध्यं तत्र लीढमित्यादावेकमेव पूर्वत्रासिद्धमित्यसिद्धत्वमतस्तदेव

१ अवश्यमिति ना॰ २ पु॰

बाध्यते, स्वलिड्ढौकतरस्त्यत्र तु ढलोपस्य जश्त्वापेक्षया बहिरङ्गत्वात्पर-त्वाच्च द्विविधमसिद्धत्वमिति न तद्बाध्यते, ततो जश्त्वे कृते न श्रुतिकृतमानन्तर्यं नापि शास्त्रकृतं, जस्त्वस्यासिद्धत्वाभावादिति ढलोपस्याय-मविषय इति ॥

"रो रि" ॥ किमिदं सानुबन्धकस्य रोर्ग्रहणमाहोस्विद्रेफस्य, कुतः संशयः, तुल्याच संहिता, रोः रि, रः रीति, किं चातो यदि सानु-बन्धकस्य ग्रहणं सिद्धमिन्द्रूरथः, अग्नीरथः, इदं तु न सिध्यति नीरक्तं, दूरक्तमिति, अथ रेफस्य ग्रहणं सिद्धं नीरक्तं दूरक्तमिति, इदं तु न सिध्यति अग्नीरथः इन्द्रूरथ इति, निरनुबन्धकग्रहणे न सानुबन्धकस्येति। नैष दोषः। वर्णग्रहणेषु नैषा परिभाषा प्रवर्त्तते। 'पदस्येत्यत्र विशेषणे षष्ठीति'। एतच्च पदस्य पदादित्यत्रैव व्याख्यातं, तेन किं सिद्धं भवती-त्याह। 'तेनेति'। स्थानषष्ठ्यां तु रेफेण पदस्य विशेषणाद्रेफान्तस्य पदस्य लोपेन भवितव्यम्। 'जर्घा इति'। एकाचो बशो भषित्यत्रै-तद् व्युत्पादितम्। 'अपास्पा इति'। स्पर्द्ध संघर्षे, यङ्लुकि दीर्घो-कित इति दीर्घः, लङि सिपि शपो लुक्, सिपो हल्ङ्यादिलोपः, जश्त्वं दश्चेति रुत्वम् ॥

"खरवसानयोर्विसर्जनीयः" ॥ यद्यत्रापि पदस्येतिविशेषणषष्ठी स्यात्तदा चकर्ष कर्कश इत्यादावपदान्तस्यापि रेफस्य विसर्जनीयः स्यात्, स्थानषष्ठ्यां तु रेफेण पदे विशेषिते रेफान्तस्य पदस्यालोन्त्यस्य विसर्जनीयविधानान्न कश्चिद्दोष इति मन्यमान आह। 'रेफान्तस्य पदस्येति'। 'खरि परतोऽवसाने चेति'। परत इत्येतत्खरैव संबध्यते नावसानेनासंभवात्, येन वर्णेन विरम्यते स एवावसानं स्याद्विरतिर्वर्णस्यानुच्चारणं, तत्र पदा-न्तस्य रेफस्य येन वर्णेन विरम्यते स तावत्परो न संभवति, इतरत्पुनर-वसानमभावरूपं, न चाभावेन पौर्वापर्यं सम्भवति, तस्मात् खरवसानयो-रित्येकापि सप्तमी विषयभेदाद्भिद्यते, खरि परसप्तमी अवसाने विषय-सप्तमीति, अपर आह। वर्णेष्वप्युच्चारितप्रध्वंसिषु बुद्धिविरचितं पौर्वाप-र्यमस्ति तत्स्वभावेनापि संभवति, तस्मादुभयत्रापि परसप्तमीति, उदाह-

रणेषु खरि विसर्जनीयस्य सत्वं चवर्गे श्चुत्वं टवर्गे ष्टुत्वम्। 'नापेत्य इति'। पत्युत्तरपदाण्ण्यः। 'वृद्धेर्बहिरङ्गलक्षणत्वादिति'। बहिर्भूततद्धितापेक्षत्वाद्वृद्धेर्बहिरङ्गत्वम्। 'तदाश्रयस्य रेफस्येति'। तदाश्रयत्वं तु तया सह विधानात्, उरण् रपर इत्येतद्धि गुणवृद्धिविधिभिरेकतामापद्य रपरत्वं विधत्ते, तेन वृद्धेर्यन्निमित्तं तदेव रेफस्यापि, ततस्तस्यापि बहिरङ्गत्वं. विसर्जनीयस्तु खर्मात्रमाश्रित्य भवन्नन्तरङ्गः। ननु बहिरङ्गपरिभाषा वाह ऊडित्यत्र ज्ञापितत्वात्तद्देशा, ततः किं, तस्यां कर्तव्यायां विसर्जनीयः पूर्वत्रासिद्धमित्यसिद्धः, सा कथमन्तरङ्गमपश्यन्ती बहिरङ्गस्यासिद्धत्वमापादयति। नैष दोषः। कार्यकालं संज्ञापरिभाषं, ततश्च परिभाषान्तरवद्बहिरङ्गपरिभाषाया अप्यत्र प्रकरणे प्रवृत्तिरविरुद्धा॥

"रोः सुपि"॥ 'पयःस्विति'। यत्र सकारद्वयं पठ्यते तत्र वा शरीति विसर्जनीयस्य वा सकारः। 'सर्पिःष्विति'। यत्र विसर्जनीयः पठ्यते तत्र नुम्विसर्जनीयशर्व्यवायेपीति प्रत्ययसकारस्य षत्वं, षकारद्वयपाठे तु पूर्ववद्विसर्जनीयस्य सत्वं, परस्य पूर्ववदेव षत्वं, पूर्वस्य ष्टुत्वम्। 'सप्तमीबहुवचनं गृह्यतइति'। न प्रत्याहारः, खरीत्यनुवृत्तेः, नहि सप्तमीबहुवचनादन्यः सुप् खरादिरस्ति, तेन पयोभ्यामित्यादौ विध्यर्थं न भवति किं तर्हि नियमार्थं, यदाह। 'सिद्धे सत्यारम्भो नियमार्थ इति'। 'रोरेव सुपीति'। विपरीतस्तु नियमो न भवति रोः सुप्येवेति, हलोऽनन्तराः संयोग इत्यादिनिर्देशात्॥

"भोभगोअघोअपूर्वस्य योऽशि॥ उदाहरणेषु ओतो गार्ग्यस्य, हलि सर्वेषामिति च यलोपः, अशग्रहणमनर्थकमन्यत्राभावात्, अशोन्यः खर्भवति, तत्र च पूर्वत्रासिद्धमिति यत्वस्यासिद्धत्वाद्विसर्जनीयेन भाव्यं, कृते विसर्जनीये स्थानिवद्भावाद्रुग्रहणेन ग्रहणात्स्यात्प्रसङ्ग इति चेच्च, अल्स्थानिकत्वात्। अत्र हि रोर्यो रेफस्स विसर्जनीयस्य स्थानी न पुना रुरेव, किं च यत्वस्याप्यस्य रोर्यो रेफः स एव स्थानी न पुना रुरेव, तस्मादल्विधित्वादपि नास्ति स्थानिवद्भावः, संहिताधिकाराच्चावसाने यत्वं न भविष्यति, तस्मादशग्रहणमनर्थकमित्यत आह। 'अशग-

हणमुत्तरार्थमिति'। एतदेव व्यनक्ति। 'हलि सर्वेषामिति'। 'वृत्त-वयतेरप्रत्ययइति'। स पुनर्विच् न क्विप्, क्विपि हि एकदेशविकृतस्यानन्यत्वाद्वयतिग्रहणेन ग्रहणाद्वकारस्य संप्रसारणं स्यात्। लोपो व्योर्वलीति वलोपः, स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते, विचि तु णिलोपस्य स्थानिवद्भावाद्वलोपो नास्ति, संप्रसारणस्य त्वप्रसङ्ग एव, हलि सर्वेषामित्यनेन तु लोपे कर्तव्ये पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधात् वलोपः स्यादितिविशेष्यते। अथ ककारे परतो लोपो व्योरिति वलोपः कस्मान्न भवति, णिलोपस्य स्थानिवद्भावो नास्ति, पदान्तविधौ प्रतिषेधात्, वकारस्य पदान्तत्वात्। नैष दोषः। भावसाधनस्त्वत्र विधिशब्दस्ततश्च पदान्ते विधीयमाने स्थानिवत्त्वनिषेधः, न च लोपः पदान्तस्तस्याभावरूपत्वात्। 'अशीति'। यदि हलि सर्वेषामित्यत्राशग्रहणस्य प्रयोजनं तत्रैव वक्तव्यं हशीति, तत्किं हल्ग्रहणं कृत्वाऽशग्रहणेन तद्विशेष्यतइति प्रश्नानार्थः। एवकारो भिन्नक्रमस्तत्र हश्ग्रहणमेव कस्मान्न कृतमिति। 'उत्तरार्थमिति'। यदि तत्र हश्ग्रहणं क्रियेत, मोनुस्वार इत्यत्र पुनर्हल्ग्रहणं कर्तव्यम्। 'हल्मात्रे यथा स्यादिति'। सर्वथोभाभ्यां ग्रहणाभ्यां न मुच्यामहइति भावः। तथाप्यत्राशग्रहणानुरोधे प्रयोजनं वक्तव्यं तदाह। 'व्योर्लघुप्रयत्नतर इति'॥

"व्योर्लघुप्रयत्नतरः शाकटायनस्य"॥ अतिशयेन लघुप्रयत्नो लघुप्रयत्नतरः। वर्णोच्चारणहेतुरात्मधर्मः प्रयत्नः, उदाहरणेष्वान्तर्यतो वकारस्य वकारो यकारस्य यकारः, किं पुनरिदं लघुप्रयत्नतरत्वमित्याह। 'लघुप्रयत्नतरत्वमिति'। स्थानं ताल्वादि, जिह्वाया अग्रोपाग्रमध्यमूलानि करणानि, प्रयत्नस्य लघुत्वे तानि शिथिलानि लघूनि भवन्ति॥

"लोपः शाकल्यस्य"॥ 'अवर्णपूर्वयोरिति'। ओकारपूर्वस्य तूत्तरसूत्रेण नित्यं लोपो विधास्यते। 'शाकल्यग्रहणं विकल्पार्थमिति'[1]। ननु लोपोऽप्युच्यते लघुप्रयत्नतरोऽपि, तावुभौ वचनाद्विकल्पतस्तत्किं विकल्पार्थेन शाकल्यग्रहणेनात आह। 'तेनेति'॥

१ विभाषार्थमिति मु॰ मू॰ पा॰।

"ओतो गार्ग्यस्य" ॥ 'ओकारादुत्तरस्य यकारस्येति'। वकारस्त्वस्मिन्विषये न संभवति। 'नित्यार्थोयमारम्भ इति'। विकल्पस्य पूर्वेणैव सिद्धत्वात्, किमर्थं तर्हि गार्ग्यग्रहणमित्याह। 'गार्ग्यग्रहणं पूजार्थमिति'। व्योरिह प्रकरणे लघुप्रयत्नतरोपि विहितो लोपोपि तत्कस्यायं नित्यो लोपो बाधकः, आनन्तर्याल्लोपविकल्पस्येत्याह। 'योगमिति'। 'केचित्त्विति'। यदस्मिन्प्रकरणे व्योः कार्यं तत्समुदायोऽपेक्ष्यते, न त्वनन्तरो लोपविकल्प इति तेषामभिप्रायः॥

"उञि च पदे"। 'भूतपूर्वेण ञकारेणेति। मूलोदाहरणेपि भूतपूर्वेणैव ञकारेणोञिति प्रतिपत्तिः, अनुबन्धस्य प्रयोगे ऽसमवायात्। 'उत्तरार्थमिति'। ङमो ह्रस्वादचि ङमुण्नित्यमित्येष विधिरजादौ पदे यथा स्यात् इह मा भूद्दण्डिनेति। नैतदस्ति प्रयोजनं, पदस्येति वर्त्तते, इह तर्हि परमदण्डिना, अत्र हि सुबन्तस्य समास इति पदत्वमस्ति, नास्ति, उक्तं हि उत्तरपदत्वे चापदादिविधाविति, तदेतत्पदग्रहणं तिष्ठतु तावत्, अयमपि नित्यार्थो योगः॥

"हलि सर्वेषाम्"॥ 'यकारस्य पदान्तस्येति'। वकारस्तु भोभगोअघोपूर्वो न संभवति, अवर्णपूर्वस्तु सम्भवति वृक्षव् करोतीति, तस्य तु लोपो न भवति, अशि हलीति विशेषणादित्युक्तं, तस्माद्यकारस्येत्युक्तं, ननु वृक्षव् हसतीत्यादौ संभवति, न संभवति। अनभिधानात्, नह्येवंविधमभिधानमस्ति, तथा च लणित्यत्र भाष्यकार आह न पदन्ता हलोणः सन्तीति, एवं च वृक्षव् करोतीत्ययमपि प्रयोगश्चिन्त्यः॥

"मोनुस्वारः॥ अत्र पदस्येति स्थानषष्ठी, मकारेण पदस्य विशेषणान्मकारान्तस्य पदस्यालोन्त्यस्यानुस्वारो विज्ञायते तदाह। 'मकारस्य पदान्तस्येति'॥

"नश्चापदान्तस्य झलि"॥ 'आक्रंस्यतइति'। क्रमेर्लृट्, आङ उद्गमनइत्यात्मनेपदम्॥

"मो राजि समः क्वौ"॥ 'सम्राडिति'। सत्सूद्विषेत्यादिना क्विप्, व्रश्चादिना षत्वम्। 'साम्राज्यमिति'। क्विबन्ताद्ब्राह्मणादित्वात्ष्यञ्,

अधिकसद्भावेऽपि क्विबन्तो राजतिस्तावदस्ती यत्रापि भवति, क्विबन्ताव-स्थायामेव वा प्रागेव व्यञ उत्पत्तेर्मत्वम् । 'संयदिति' । गमः क्वावित्यत्र गमादीनामितिवचनाल्लोपः, ह्रस्वस्य तुक् । 'किंराडिति' । किं क्षेप इति समासः ॥

"हे मपरे वा" ॥ 'ह्मलयतीति' । ह्मल चलने, णिच्, ज्वल-ह्वलह्मलनमामनुपसर्गाद्वेति पक्षे मित्संज्ञा, मितां ह्रस्व इति ह्रस्वत्वम् । 'यवलपरइति' । यवलाः परे यस्माद्धकारात्स तथोक्तः, यवलाश्चैते भवन्त आन्तरतम्यादनुनासिका भवन्ति, वावचनात्पक्षेऽनुस्वारोऽपि भवति । परग्रहणं शक्यमकर्तुं, सप्तम्यैव तदर्थलाभात्, मकारे परतो यो हकार-स्तत्रेति, विपर्ययस्तु न भवत्यसंभवात्, नहि मकारात्परो हकारः क्वचि-त्संभवति ॥

"ङ्णोः कुक्टुक् शरि" ॥ उदाहरणेषु खयो द्वितीयाः शरि पौष्करसादेरिति पक्षे ककारस्य खकारष्टकारस्य ठकारः । 'पूर्वान्त-करणमित्यादि' । किं पुनः कारणं पदादौ कुत्वं न सिध्यतीत्यत आह । 'शश्कोटीति' । 'विरप्शिचिति' । महन्नामैतत्, विपूर्वाद्रपेरौणादिकः कर्मणि शिनिप्रत्ययः, यदि वा विरपणं विरप्, सोस्यास्तीति विरप्शः, शब्दितः, संकीर्तित इत्यर्थः । 'षत्वप्रतिषेधार्थमिति' । परादौ तु सकारः पदादिर्न स्यात् । 'ष्टुत्वप्रतिषेधार्थमिति' । परादौ तु टकारः पदान्तो न स्यात् ॥

"ड्ः सि धुट्" ॥ उभयनिर्देशे पञ्चमी निर्देशो बलीयानिति ड इति पञ्चम्या सीति सप्तम्याः षष्ठी प्रकल्प्यतइति मत्वाह । 'डकारा-न्तादिति' । सप्तमीनिर्देशस्तु लाघवार्थः, उदाहरणेषु धुटि कृते चर्त्वे तकारस्तस्य पूर्ववत्पक्षे थकारः, अथ किमर्थं धुट् परादिः क्रियते न धुगेव पूर्वान्तः क्रियेत, एवं हि शि तुगित्यत्र तुग्ग्रहणं न कर्तव्यं भवति, एष धुक् तत्रानुवर्तिष्यतेऽत आह । 'परादिकरणमिति' । प्रक्रिया-लाघवार्थं तुडिति वक्तव्ये धुड्ग्रहणमुत्तरार्थं नश्चेति धुङ्यथा स्यात्तुग्माभूत्, किं च स्याद्भवान्त्साय इत्यत्र नश्छव्यप्रशानिति रुत्वं प्रसज्येत । नैत-

दस्ति। अम्पर इति तत्रानुवर्त्तते, किं च तुटोऽसिद्धत्वादपि रोरप्रसङ्गः, तस्मात्तुडेव वक्तव्यः॥

"नश्च"॥ अत्रापि परादित्वात्कुर्वन् सीदतीत्यादौ पदान्तस्येति णत्वप्रतिषेधो भवति। 'धुटश्चर्त्वस्या[1]सिद्धत्वादिति'। धुटो यच्चर्त्वं तस्यासिद्धत्वादित्यर्थः, यद्यपि धुडप्यसिद्धस्तथापि न तदुच्यते, सिद्धेऽपि तस्मिन्विना चर्त्वेन रुत्वस्याप्राप्तेः। नन्वस्तु चर्त्वमसिद्धं तथापि नैव रुः प्राप्नोति, अनम्परत्वात्, सत्यं, यस्त्वसौ धुट उकार स्तेन भूतपूर्वेणाम्परत्वमभ्युपेत्यैतदुक्तम्, अन्ये तु ग्रन्थमिमं न पठन्ति॥

"शि तुक्"॥ शीत्येषा सप्तम्यकृतार्था पूर्वसूत्रे कृतार्थायाः पञ्चम्याः षष्ठीं प्रकल्पयति तदाह। 'नकारस्येति'। अथ किमर्थमपूर्वः पूर्वान्तस्तुक् क्रियते न प्रकृतः परादिर्धुडेव विधीयेत, तत्रापि चर्त्वेन सिध्यत्येवात आह। 'पूर्वान्तकरणमिति'। पूर्वान्तस्यापूर्वस्य तुकः करणमित्यर्थः। 'नकारस्य पदान्तत्वादिति'। तुका पदान्ततायाः विहतत्वात्, परादौ तु पदान्तस्येति प्रतिषेधाददोषः। 'तत्र यादि'। तत्र तुको यच्चुत्वं तदाश्रयात्सिद्धं भवति॥

"ङमो ह्रस्वादचि ङमुण् नित्यम्"॥ ङमो ङमुडित्युभयत्रापि प्रत्याहारग्रहणं, उडिति प्रत्येकं ङकारादिभिः संबध्यते, संज्ञायां हि कृत मागमलिङ्गं संज्ञिनां भवति, ह्रस्वादित्येतन्ङमो विशेषणं, सोऽपि ङम् पदस्य विशेषणं, विशेषणेन च तदन्तविधिर्भवति, पदस्येति प्रकृतं यद्यपि षष्ठ्यन्तं तथापि ङम इत्यनेन संबन्धात्पञ्चम्यन्तं विपरिणम्यते, उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति ङम इति पञ्चम्या अचीति सप्तम्याः षष्ठी प्रकल्प्यते, सप्तमीनिर्देशस्तु लाघवार्थः, उत्तरार्थश्च, तदेतत्सर्वम्मनसि कृत्वाह। 'ह्रस्वात्पर इति'। संख्यातानुदेशश्च वेदितव्यः, आगमानामागमिनां च समत्वात्, परमदण्डिनेत्यादौ सुबन्तयोः समासः, तत्र समासार्थायां विभक्तौ लुप्तायामपि प्रत्ययलक्षणेन दण्डिन्नित्यस्य

१ धुटश्चर्त्वस्य चेति मु· मू· पाठः पदमञ्जर्यसंमतः।

पदत्वमस्तीति ङमुट् प्राप्नोतीत्याशङ्क्याह। 'इहेति'। समासे य उत्तरो भागस्तस्य पदत्वे कर्त्तव्ये प्रत्ययलक्षणं न भवति, अपदादिविधौ पदादिविधिं वर्जयित्वा, सात्पदाद्योरित्यत्र पदादिविधौ प्रत्ययलक्षणं भवत्येवेत्यर्थः, एतद्वार्तिककारमतेनोक्तं, सूत्रकारमतेनाप्याह। 'अथ वेति'॥

"मय उञो वो वा"॥ इको यणचीत्यनेनैव सिद्धत्वाच्चार्थानेनेत्याशङ्क्याह। 'प्रगृह्यत्वादिति'। प्रगृह्यत्वं च निपात एकाजनाङिति, एवमपि इको यणचीत्यस्यानन्तरं मय उञो वेति वक्तव्यम्, एवं हि वग्रहणं न कर्त्तव्यं भवति तत्राह। 'तस्यासिद्धत्वादिति'। यदा त्विति-पर उञ् भवति मयश्च परस्तदा उञ इति प्रगृह्यसंज्ञाया विकल्पः, ऊँआदेशश्च, तत्र यदा प्रगृह्यसंज्ञा न भवति तदानेन वत्वञ्च प्राप्नोति यणादेशश्च, तत्रास्य वत्वस्यासिद्धत्वाद्यणादेशे सत्यनुस्वारोऽपि भवति। किंविति'। प्रगृह्यसंज्ञापक्षे त्वनेन वा वत्वं किम्विति, किमुइति, ऊँआदेशस्यापि स्थानिवद्भावादनेन पक्षे वकारो भवति, स चान्तरतमत्वादनुनासिकस्तच्चतुर्थं रूपम्, ऊँआदेशस्यैव वत्वाभावपक्षे श्रवणं तत्पञ्चमं रूपम्॥

"विसर्जनीयस्य सः"॥ इह खरवसानयोर्द्वयोरपि रेफस्य विसर्जनीय उक्तस्तत्रेह निमित्तविशेषानुपादानात्खरीवावसानेऽपि सत्वं प्राप्नोति वृक्षः प्लक्ष इति, संहितायामिति वर्त्तते, न चावसाने संहितास्ति, परस्याभावात्, मा भूत्परः पूर्वेण या संहिता तदाश्रयं सत्वं प्राप्नोति, इको यणचीत्यादौ तु कार्यिनिमित्तयोर्द्वयोरप्युपात्तत्वात्तयोरेव परस्परं संहिताश्रीयतइति दधि अत्रेति पूर्वपराभ्यामिगचोः संहितायां सत्यामपि कार्यं न भवति, परस्परमसंहितत्वात्। स्यादेतत्। सामान्यविहिता-संहितासंज्ञा विशेषविहितावसानसंज्ञा, कार्ययोरेकवर्णविषयत्वात्कार्यार्थत्वाच्च संज्ञानां संज्ञयोरप्येकविषयत्वाद्बाध्यबाधकभावः, यद्वा सन्निकर्षः संहितेत्यीयता सिद्धे परग्रहणमतिशयप्रतिपत्त्यर्थं, प्रकृष्टो यः सन्निकर्षः, कश्च प्रकृष्टो यः पूर्वपराभ्यामुभाभ्यामपि, तदभावादवसानस्य संहितासंज्ञाया अभावः, यद्येवमणोप्रगृह्यस्यानुनासिके दोषः,

तत्र हि वावसानइति वर्त्तते, संहिताधिकारश्चोत्तरार्थोवश्यमनुवर्त्यः तोर्लीति परसवर्णो ऽसंहितायां मा भूत् अग्निचित् लुनाातीति, ततश्च संहितावसानोभयाश्रयो ऽनुनासिको दधिँइत्यादौ न स्यादिति संहिता-वसानसंज्ञयोः समावेश एषितव्यः, ततश्चावसानेपि सत्वप्रसंगो ऽत आह। 'खरीत्यनुवर्त्ततइति'। तदनुवृत्तिश्च मण्डूकप्लुतिन्यायेन संबन्धानुवृत्त्या वा वेदितव्या, अन्यथा हि पूर्वत्रापि खरि कार्यं विज्ञायेत, किं पुनरत्र प्रमाणं खरीत्यनुवर्त्तते इति, उत्तरत्रशर्परइति वचनं, स हि बहुव्रीहिः, तस्यान्यपदार्थापेक्षाया यो विसर्जनीयात्परः संभवति स एवा न्यपदार्थः, स च खरेव, अवसानस्य शर्परत्वासंभवात्, यद्वा यदि खर-वसानयोर्द्वयोरपि सत्वं स्यात् विसर्जनीयविधानमनर्थकं स्यात्, खरवसानयोस्स इत्येव वाच्यं स्यात्, एवं हि विसर्जनीयस्येति न वक्तव्यं भवति, अवश्यं शर्परे विसर्जनीय इत्यस्य स्थानिनिर्द्देशार्थं विसर्जनीयस्येति वक्तव्यं, न वक्तव्यं, पुरस्तादपकर्षणाप्येतत्सिद्धम्, एवं वक्ष्यामि, रो रि, खरवसानयोः सः, रोः सुपि, शर्परे विसर्जनीय इति,शर्परइत्यत्र र इति वर्त्तते न तु रोरिति, तेन सुगीःत्सरुकः पुरुषःत्सरुकः इत्यादौ सर्वत्र भवति, अथ भोभगोअघोइत्यादिसूत्रं कुत्र करिष्यसि, शर्परे विसर्जनीय इत्यस्यानन्तरं, यद्येवं स्वरत्र स्वर्नयतीत्यादावपि यत्वप्रसङ्ग इति पुनारुग्रहणं कर्तव्यमेव, तर्हि रोः सुपीत्यस्यानन्तरं भोभगोइत्यादि रुस्थानिकादेशविधानार्थं पठित्वा शर्परे विसर्जनीय इत्यादिकं पठिष्यते, एवमपि पुनारुग्रहणं कर्त्तव्यं रुणा विच्छिन्नत्वात्। एवमपि यथान्यासे सति त्रीणि ग्रहणानि, द्वे विसर्जनीयग्रहणे तृतीयं सग्रहणम्, अन्यथान्यासे तु द्वे सग्रहणे रुग्रहणं च, तदेवं लघीयसा न्यासेन सिद्धे विसर्जनीयविधानसामर्थ्याच्च सर्वत्र सत्वं भविष्यति, एवमपि कुत एतत् खरि भवति न पुनरवसानइति, ज्ञापकात्, यदयं शर्परेखरि विसर्जनीयं विधत्ते तज्ज्ञापयति खरि तावदस्ति सत्वमिति, विपर्यये हि पुरुषःत्सरुक इत्यादौ सत्वाभावादस्त्येव विसर्जनीय इति तद्विधानमनर्थकं स्यात्, नैतदस्ति ज्ञापकम्। अस्त्येतस्य वचने प्रयोजनं, किं वासः क्षौममद्भिः प्सातमित्यादौ जिह्वामूलीयोपध्मा-

नीयौ माभूतामिति, नैतदस्ति, यद्येतावत्प्रयोजनं स्यात् कुप्वोः ≍क≍पौ चाशरीत्येव ब्रूयात्, तदेवं विधानसामर्थ्यात्खर्येवायं विधिः अनेन, चेवाभिप्रायेण खरीत्यनुवर्त्तत इत्युक्तम् ॥

"शर्परे विसर्जनीयः" ॥ शर्परो यस्मादिति बहुव्रीहिः, परग्रहणे ऽक्रियमाणे शर एव केवलस्य निमित्तता विज्ञायेत, न खरीत्यनुवृत्तेर्वा शरीत्यभिधानाच्च, विपर्ययस्तर्हि विज्ञायेत, खर्परे शरीति, नि¹त्यः स्फोटः पुरुषः स्यातेति तस्मात्परग्रहणम् । अथ किमर्थं विसर्जनीय इत्युच्यते न नेत्येवोच्येत, सत्वे हि प्रतिषिद्धे विसर्जनीयः स्वेनैव रूपेणावस्थास्यते ऽत आह । 'विसर्जनीयस्येति' । सत्यं, पुरुषःत्सरुक इत्यादौ सत्वनिषेधेनापि सिद्धं, यत्र तु कुपू शर्परौ वासःक्षौममद्भिःप्सातमिति तस्य विसर्जनीयस्य यो विकारो जिह्वामूलीयादिः स एव स्यात् विसर्जनीयग्रहणे तु सति विसर्जनीय एव भवति, । 'जिह्वामूलीयोपध्मानीयावपि² न भवत इति' । न केवलं सकार एवेत्यपि शब्दार्थः ॥

"वा शरि" ॥ 'वृक्षा स्थातार इति' । लोपाभावपक्षे विसर्जनीयः सत्वं वा ॥

"कुप्वोः ≍क≍पौ च" ॥ 'विसर्जनीयश्चेति' । अनेन चकारो विसर्जनीयानुकर्षणार्थ इति दर्शयति, अथ वाग्रहणमेवानुवर्त्य जिह्वामूलीयोपध्मानीयौ कस्मान्न विकल्प्येते, एवं हि चकारो न कर्त्तव्यो भवति, नैवं शक्यम्, एवं ह्याभ्यां मुक्ते विसर्जनीस्य स इति सत्वमेव स्यात्, तस्माच्चकारेणैवानुकृष्य विसर्जनीयो विधातव्यः, वाग्रहणं च नानुवर्त्यं, तदनुवृत्तौ हि त्रिभिरपि मुक्ते पक्षे सत्वं प्रसज्येत, सूत्रे ककारपकारसहितयोर्जिह्वामूलीयोपध्मानीययोरुच्चारणात्तथाभूतावेव विसर्जनीयस्यादेशाविति शङ्कमानं प्रत्याह । 'कपावुच्चारणार्थाविति' । ताभ्यां विना तयोरुच्चारयितुमशक्यत्वादिति भावः । कीदृशौ

---

१ पुरुषः स्फोट इति पाठः इ॰ पु॰ ।

२ मु॰ मू॰ अपीति नास्ति ।

तत्रादेशावित्याह । 'जिह्वामूलीयेति' । इह विसर्जनीयस्य स्थाने आदेशत्रयं विधीयते, ततश्च शर्परयोरेव कुप्वोः प्राप्नोति, वासःक्षौमम्‌द्भिःप्सातमिति, अत्र हि शर्परे विसर्जनीय इति विसर्जनीयोऽस्ति, न च तस्य वैयर्थ्यं, यत्र कुपुभ्यामन्यः शर्परः खरस्ति पुरुषःत्सरुक इत्यादौ तत्र सावकाशत्वात् अशर्परयोस्तु कुप्वोर्न स्यात्, नहि तस्य विसर्जनीयोऽस्ति, विसर्जनीयस्य स इति सत्वेन निर्वर्तितत्वात्, किं पुनः कारणं सत्वमेव तावद्भवति, तत्र कर्त्तव्ये तस्य विधेरसिद्धत्वात्, तस्मादत्र सकारः स्थानी निर्द्देष्टव्यः, यो विसर्जनीयस्य स इति सन्तस्य स्थाने कुप्वोरादेशत्रयं भवतीति, एवं हि शर्परयोः कुप्वोः सकारापवादो विसर्जनीयो विधीयतइति सकाराभावादादेशाप्रसङ्गः, केवलयोस्त्वादेशप्रसङ्गस्तस्मात्सस्येति वक्तव्यम् । यदा ह वार्त्तिककारः । सकारस्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीयाः, विसर्जनीयादेशे हि शर्परयोरेवादेशप्रसङ्ग इति । अत्र परिहारमाह । 'विसर्जनीयस्य स इत्येतस्मिन्निति' । अयमभिप्रायः । विसर्जनीयस्य स इति सकारस्य स्थानी विसर्जनीय उपात्तः, स च द्विविधः संभवति शर्परलक्षणः खरवसानलक्षणश्च, तत्र शर्परलक्षणस्यासिद्धत्वादितरः सकारस्य स्थानी स एव चेहानुवर्तते, ततश्च नाप्राप्ते सत्वे इदमारभ्यते, सर्वस्य विषयस्य तेन व्याप्तत्वात्, शर्परे विसर्जनीय इत्येतत्तु शर्परयोः कुप्वोः प्राप्तं केवलयोस्त्वप्राप्तमिति न तं प्रत्यस्य बाधकलक्षणयोग इति । स्यादेतत्, माभूदपवादस्त्वं परत्वात्तु शर्परयोरपि कुप्वोरयमेव विधिः प्राप्नोति तत्राह । 'पूर्वत्रासिद्धइति' । परिहारान्तरमाह । 'के चित्त्विति' । कुप्वोरित्येको योगः, अत्र शर्परे विसर्जनीय इति वर्तते, शर्परयोः कुप्वोः विसर्जनीय एव भवति न ꣹क꣹पाविति, किञ्च पूर्वसूत्रे नेति वक्तव्ये विसर्जनीयविधानं तद्विकारनिवृत्त्यर्थमित्युक्तं, तेन शर्परयोः कुप्वोरस्यविधेरप्रसङ्ग एव ॥

"सोऽपदादौ" ॥ अपदाद्याविति कुप्वोरेतद्विशेषणं, व्यत्ययेन त्वेकवचनं, पूर्वस्यायमपवादः । 'पाशकल्पककाम्येष्विति' । संभवप्रदर्शनमेतत्

१ सकारेइति इं॰ पु॰ पाठः ।

न परिगणनम्, अन्यस्यासंभवात् । 'प्रातःकल्पमिति' । अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्य वृत्तिविषये शक्तिमद्वाचित्वादीषदसमाप्त्या योगः, यथा दोषाभूतमहर्दिवाभूतारात्रिरित्यत्राभूततद्भावयोगः । 'रोः काम्ये नियमार्थमिति' । एतदेव विवृणोति । 'रोरेवेति' । 'गीः काम्यतीति' । उत्तरसूत्रेण षत्वं न भवति, यदि पुनस्तत्रैवेदमुच्येत, नैवं शक्यं, षत्वमात्रप्रतिषेधेप्यनेन सत्वं प्राप्नोति । 'उपध्मानीयस्य चेति' । अस्यैव विवरणं 'कवर्गे परत इति' । 'उब्जिर[2]यमित्यादि' । यथा पुनरयं दकारोपध एषितव्यस्तथा हयवरडित्यत्रोक्तम् ॥

"इणः षः" ॥ पूर्वेण सत्वे प्राप्ते तदपवादः षत्वं विधीयते । अत्र केचिदाहुः । योयं सोपदादाविति सकार स एवोत्तरत्र सर्वत्र कुप्वोः प्रकरणे विधीयते, अनेन तु तस्यैव सकारस्येण उत्तरस्य षत्वं विधीयते न विसर्जनीयस्य, अपदादाविति चात्र न संबध्यतइति, स तर्हि सकारः स्थानी निर्दिष्टव्यः, नेत्याह । प्रकृतोनुवर्त्तते सोपदादाविति । तस्येण इति पञ्चम्या षष्ठी प्रकल्प्यते, एवमपि षत्वमार्णैर्योगैर्विहितस्य सकारस्य षत्वं न प्राप्नोति, अस्मिन् कर्तव्ये तेषामसिद्धत्वात् । नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति न योगे योगोऽसिद्धः किं तर्हि प्रकरणे प्रकरणमसिद्धमिति, यदयमुपसर्गादसमासेपीत्यत्र समासेपिग्रहणं करोति, कथं कृत्वा ज्ञापकम्, अन्तरेणाप्यसमासेपिग्रहणं विशेषानुपादानात्समासासमासयोर्णत्वं भविष्यति, न च समासे पूर्वपदात्संज्ञायामग इति नियमाण्णत्वस्य निवृत्तिः, नियमे कर्त्तव्ये उपसर्गादित्यस्य णत्वस्यासिद्धत्वात्, पश्यति त्वाचार्यः प्रकरणे प्रकरणमसिद्धमिति ततो ऽसमासेपिग्रहणं करोति, तदा हि सह नियमेन सर्वमेव णत्वप्रकरणमेकमिति नियमे कर्तव्ये उपसर्गादिति णत्वस्य सिद्धत्वान्नियमेन व्यावृत्तिः स्यादिति कर्त्तव्यं समासेपिग्रहणं, तदेवं सकारस्य षत्वं विधीयते न विसर्जनीयस्य, उत्तरत्र च सत्वमेवानुवर्त्तते न षत्वमिति, अयमपि पक्षो निर्दोष एव, किं तु षष्ठीप्रकल्पनं ज्ञापकाश्रयणं चेति प्रतिपत्तिगौरवप्रसङ्गाद्वृत्तिकारेण नाश्रितः, कस्तर्हि तस्य

२ अयमिति मु० मू० नास्ति ।

षत्वः, उत्तरत्र द्वयमप्यनुवर्त्तते, सकारः षकारश्चेति, यद्येवं सर्वत्र द्वयमपि प्राप्नोति, अथ सकारो वानुवर्तते इदुपधस्य चेत्यादौ यत्रेणः परो विसर्जनीयस्तत्रापि सकार एव प्राप्नोति, अथ षकार एवानुवर्त्तते नमस्पुरसोर्गत्योरित्यादौ यत्रानिणः परो विसर्जनीयस्तत्रापि षकार एव प्राप्नोति, नैष दोषः, इणः ष इति समुदायस्य स्वरितत्वं प्रतिज्ञायते। यदाह। 'इणः ष इति वर्त्ततइति'। ततः षत्वं तावदनिण्विषये न भविष्यति, एवमपि षत्वविषये सत्वमपि प्राप्नोति, न, षकारेण तस्य बाधनात्सकाराश्रयणाच्च, यदि परमनुवृत्तिसामर्थ्यात्प्रसंगः, तदपि न, उत्तरार्थमप्यनुवृत्तिसंभवात्, तदिदमुक्तम्। 'य इणः परो विसर्जनीयस्तस्य षकार आदेशो भवत्यन्यस्य तु सकार इति'। किमर्थं पुनरिदमारभ्यते यावता सत्वमेवात्र प्रकरणे विधीयतां, तस्य त्वादेशसकारत्वादिण्कोरिति षत्वं भविष्यति, न सिध्यति, अपदान्तस्येति तत्र वर्त्तते, पदान्तार्थोयमारम्भः ॥

"नमस्पुरसोर्गत्योः" ॥ अतः प्रभृत्यपदादाविति निवृत्तं, नमःशब्दस्य साक्षात्प्रभृतीनि चेति विभाषा गतिसंज्ञा, पुरःशब्दस्य तु पुरोव्ययमिति। 'पुरः पश्येति'। पॄ पालनपूरणयोः, भ्राजभासेत्यादिना क्विप्, तदन्ता च्छस्, अस्य तदन्ततां दर्शयितुं पूः पुरावित्यनयोरुपन्यासः ॥

"इदुदुपधस्य चाप्रत्ययस्य" ॥ इदुतावुपधे यस्य स इदुदुपधः समुदायस्तस्य यो विसर्जनीय इति वैयधिकरण्येन संबन्धः, अप्रत्ययस्येत्येतदपि व्यधिकरणमेव। 'निर्दुर्बहिराविश्चतुष्प्रादुरिति'। अन्येषां संभवतां प्रतिषेधस्य वक्ष्यमाणत्वाचेदं परिगणनं किं तर्हि संभवप्रदर्शनम्। 'चतुष्कपालमिति'। तद्धितार्थे द्विगुः, संस्कृतं भक्षा इत्यणो द्विगोर्लुगनपत्यइति लुक्। 'चतुष्क[1]ष्टकर्मिति' बहुव्रीहिः। 'मातुःकरोतीत्यादि'। चोद्यम्। अत्र हि मातृस् इति स्थिते ऋत उदित्युकारो भवन् यो द्वयोः स्थानइति न्यायेन रपरो भवति, ततश्च रात्सस्येति प्रत्ययसकारस्य लोपे कृते रेफस्य विसर्जनीयः, सोयमप्रत्ययविसर्जनीयो भवति, परिहरति। 'कस्कादिष्विति'। 'एकादेशनिमित्तादिति'। कर्मधारयः,

१ चतुष्कन्वलर्मिति मु॰ मू॰ पाठः।

एकादेशरूपनिमित्तादित्यर्थः, एकादेशशास्त्रं वा निमित्तं यस्योकारस्य तस्मादित्यर्थः। 'पुम्मुहुसोरिति'। अव्युत्पन्नावेताविति प्रतिषेध उच्यते, तत्र पुंसः प्रतिषेधेन नार्थः, षत्वं कस्मान्न भवति, विसर्जनीयाभावात्, उक्तं हि संपुंकानां सत्वमिति, तत्र सत्वस्यासिद्धत्वाभावाद्विसर्जनीयाभावः, तच्चावश्यं सत्वं वक्तव्यं इविधौ विसर्जनीयस्य षत्वप्रतिषेधेऽपि कुप्वोः ≍क≍पौ चेत्येव विधिः प्राप्नोति, मुहुः कामो यस्याः सा मुहुःकामा, तत्र कुप्वोः ≍क≍पौ चेत्येव एव विधिर्भवति, क्व चित्तु मुहुस्कामेति सत्वं पठ्यते सोऽपपाठः, नह्यत्र सत्वसंभवः, सूत्रवार्त्तिकयोरनिबद्धत्वात्। 'नैष्कुल्यमिति'। ब्राह्मणादित्वात्ष्यञ्। 'निःष्कुलं दुःष्कुलमिति'। गुरोरनृत इत्यादिना प्लुतः। 'बहिरङ्गलक्षणयोरिति'। बहिर्भूतलक्षितापेक्षत्वाद्वृद्धिर्बहिरङ्गा प्लुतोपि दूराद्धूतादिकमर्थं वाक्यं चापेक्षत इति बहिरङ्गः॥

"तिरसोऽन्यतरस्याम्"॥ तिरोऽन्तर्द्धाविति तिरःशब्दस्य गतिसंज्ञा। 'तिरःकृत्वेति'। अत्रान्तर्द्धेरविवक्षितत्वादगतित्वम्॥

"द्विस्त्रिश्चतुरिति कृत्वोऽर्थे"॥ उभयत्र विभाषेयं, चतुरित्यस्याप्रत्ययविसर्जनीयत्वादिदुदुपधस्य चेति प्राप्ते इतयोरप्राप्ते, इसुसोः सामर्थ्य इत्यनेन त्वत्र सिद्धिर्न शङ्कनीया, इसः प्रत्ययस्य तत्र ग्रहणात्। 'कृत्वोऽर्थ इति किमिति'। सुजन्ताः कृत्वोऽर्थं न व्यभिचरन्तीति प्रश्नः। चतुःशब्दस्य सुजन्तत्वे प्रमाणं नास्तीत्युत्तरं, यदि तु साहचर्यं व्यवस्थापकं तदा तदर्थमपि कृत्वोऽर्थग्रहणं न कर्त्तव्यं, क्रियते च तज्ज्ञापकार्थम्, एतज्ज्ञापयति न सर्वत्र साहचर्यं व्यवस्थापकमिति, किं सिद्धं भवति, दीधीवेवीटामित्यत्र धातुसाहचर्येणाप्यागमस्येटो ग्रहणं भवति, द्विस्त्रिश्चतुरिति किं, पञ्चकृत्वः करोतीत्यत्र सत्वं माभूत्, नैतदस्ति प्रयोजनमित्याह। 'इदुदुपधस्येत्यस्यानुवृत्तौ सत्यामित्यादि'। कृत्वोऽर्थो विषयो यस्य तत्तथोक्तं, कृत्वोऽर्थे यत्पदं वर्त्तते तस्य यो विसर्जनीय इत्येवं विशेष्यमाण इत्यर्थः, यदि तु कृत्वोऽर्थग्रहणेन विसर्जनीयो विशेष्येत तदा चतुरो न स्यात्, एतच्च श्लोकेषु व्यक्तीकरिष्यति, एवं श्लोक-

वार्तिककारमतेन द्विस्त्रिश्चतुर्ग्रहणं प्रत्याख्यातं तानेव श्लोकानुदाहरति। 'कृत्वसुजर्थइति'। कस्माद्धेतोः कृत्वसुजर्थे षत्वं ब्रवीति, कृत्वोर्थग्रहणस्य किं प्रयोजनमित्यर्थः। अत्र च वक्ष्यमाणोऽभिप्रायः। प्रयोजनमाह। 'चतुष्कपालइति'। चोदयिता स्वाभिप्रायं प्रकाशयति। 'ननु सिद्धमिति'। नन्वित्यभ्युपगमे, भवत्वनेन चतुष्कपालेपि विभाषा तथापि नित्यं षत्वं सिद्धं, कथम्, अनेन मुक्ते इदुदुपधस्य चेति षत्वं भविष्यति। परिहरति। 'सिद्धे ह्ययमिति' सिद्धे प्राप्तइत्यर्थः, कथं प्राप्तिरित्याह। 'लुप्ते इति'। चतुरस् इति स्थिते रात्सस्येति सुचो लोपः, रेफस्य विसर्जनीयस्सोयमप्रत्ययविसर्जनियो भवति, यदि सुचो रुत्वं पूर्वस्य रो रीति लोपः, रोर्विसर्जनीयस्तदा प्रत्ययविसर्जनीयो भवति, किं तु ढ्रलोपइति दीर्घः प्राप्नोति, रुत्वस्यासिद्धत्वात् पूर्वमेव च लोपेन भवितव्यम्, एवं च कृत्वोर्थग्रहणं कर्त्तव्यमित्युक्तम्, इदानीं तदाश्रयणेन द्विस्त्रिश्चतुर्ग्रहणं प्रत्याचष्टे। 'एवं सतीति'। किं कार्यमिति'। न किंचिदित्यर्थः। कथमित्याह। 'अन्यो हीति'। इतरोऽसति द्विरादिग्रहणे दोषं दर्शयति। 'अक्रियमाणइति। 'विसर्जनीयो विशेष्येतेति'। तस्य कार्यित्वेन प्राधान्यादिति भावः। संभावने लिङ्, विशेष्यतां विसर्जनीयः, को दोष इत्यत आह। 'चतुरेति'। 'तथेति'। अनन्तरोक्ते विशेषणप्रकारे चतुरो न सिध्यतीति। कस्मादित्याह। 'रेफस्येति'। क्रियमाणे तु द्विरादिग्रहणे नायं दोष इत्याह। 'तस्मिंस्त्विति'। इतरयोर्विशेषाभावाच्चतुरो विशेषणं युक्तमित्युक्तं, प्रत्याख्यानवाद्याह। 'प्रकृतं पदमिति'। यदुक्तं कार्यित्वेन प्रधानभूतो विसर्जनीय इति तत्र सोऽपि प्रकृतस्य पदस्य विशेषणं तेन च तदन्तविधिः, विसर्जनीयान्तस्य पदस्य षत्वमिति, स त्वर्थादलोन्त्यस्येति विसर्जनीयस्य भवतीत्येतावत् पदमेव तु कार्यि, तदिदमुक्तम्। 'तदन्तमिति'। 'तस्यापीति'। अपिशब्दोऽवधारणे, तस्यैवेत्यर्थः, एवं श्लोकवार्तिककारेण प्रत्याख्याते द्विरादिग्रहणे वृत्तिकारः स्थापयितुमाह। 'एवमिति'। 'पूर्वेणेति'। इदुपधस्य चेत्यनेन। 'नित्यं षत्वं स्यादिति'। अस्य तु द्विस्त्रिःशब्दावनकाशौ, न च परत्वादयमेव विधिः सिद्ध्यतीत्याह। 'पूर्व-

असिद्धइति'। श्लोकवार्त्तिककारस्य त्वयमभिप्रायः। प्रकरणे प्रकरणमसिद्धं न योगे योगः, तेनास्यासिद्धत्वं न भवतीति, अथ वा इदुदुपधस्य कृत्वोर्थ- वृत्तेनाप्राप्ते नित्ये[1] षत्वस्यारम्भादपवादत्वमित्यपवादत्वादेव वचनप्रा- माण्यादिति वा सिद्धत्वमिति, अथ सुच इत्येव कस्माचोक्तं, किमनेन महता प्रबन्धेन एवमुच्यमाने सुचि विसर्जनीयो विशेष्येत, सुचो यो विस- र्जनीय इति, ततश्च चतुरो न स्यात्, एवं तर्हि सुजन्तस्येति वक्तव्यं, सुजन्तस्य यो विसर्जनीय इति, एवमपि पदस्येत्यनुवृत्तेर्यत्र सुजन्तं पदं तत्रैव स्यात् द्विष्करोतीति, इह तु न स्यात्परमद्विष्करोतीति, यत्पदं तत्र सुजतं तस्मात्सुचोऽविहितत्वात्, यच्च सुजन्तं द्विरिति न तत्पदम्। उत्तरपदत्वे चापदादिविधाविति पदसंज्ञायाः प्रतिषेधात्॥

"इसुसोः सामर्थ्ये"॥'तिष्ठत्वित्यादि'। अत्र सर्पिरित्यस्य तिष्ठत्वित्यनेन संबन्धः, पिबत्वित्यस्य तूदकमित्यनेनेति परस्परसंबन्धा- भावादसामर्थ्यम्।'सामर्थ्यमिह व्यपेक्षेति'। अवधारणमत्र द्रष्टव्यं व्यपेक्षैवेति। प्रयोजनमुत्तरत्र वक्ष्यते।'न पुनरेकार्थीभाव इति'। अत्राप्यवधारणं द्रष्ट[2]व्यमेकार्थीभाव एव गृह्यतइति यत्तच्च व्यपेक्षैवेत्यर्थः। ननु च सामर्थ्यशब्दः सामान्यशब्दः, न च सामान्यशब्दः प्रकरणादिक- मन्तरेण विशेषेऽवतिष्ठते, तत्कथं व्यपेक्षैव सामर्थ्यं गृह्यते न पुनरेका- र्थीभाव इत्युच्यते, उभयं तु कस्माच्च गृह्यते ऽत आह।'उभयं वेति'। नेत्येव, उभयमपि गृह्यतइति यत्तदपि नैवेत्यर्थः। अयं भावः। पदवि- धित्वादेव समर्थपरिभाषोपस्थानात्सामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणादि- ष्टस्य व्यपेक्षालक्षणस्यैव सामर्थ्यस्य परिग्रहः, नेतरस्य, नाप्युभयोरिति॥

"नित्यं समासे ऽनुत्तरपदस्थस्य"॥'परमसर्पिष्कुण्डिकेति'। ननु च अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः, जनेरुसिः, अर्तिपृवपिजनि- तनिधनिवपिभ्यो नित्येवं सर्पियजुरित्यादय इसुसन्ता व्युत्पाद्यन्ते, तत-

---

१ नित्येइति नास्ति ई० पु०।

२ द्रष्टव्यमित्यस्यानन्तरमुभयं वेति हि वक्ष्यति इति पाठ ई० पु०।

श्च प्रत्ययग्रहणपरिभाषया सर्पिरादीनामेवेसुसन्तत्वं न परमसर्पिरादीनां, तत्कथमत्र प्रसङ्गः, अवश्यं चोणादीनामपि व्युत्पत्तिपक्ष एवाश्रयणीयः, अव्युत्पत्तिपक्षे ह्याश्रीयमाणे सर्पिषा यजुषेत्यादौ षत्वं न सिद्ध्यति, अप्रत्ययसकारत्वात्, तस्मादनर्थकमनुत्तरपदग्रहणमत आह । 'एतदेवेत्यादि'। ज्ञापनस्य प्रयोजनमाह। 'तेनेति'। अथ पूर्वसूत्रेण समासे ऽपि विकल्पः कस्मान्न भवतीत्यत आह । 'व्यपेक्षा चेति'। के चितु नित्यं समासइत्येको योगः । अनुत्तरपदस्थस्येति द्वितीय इति योगविभागेन समासे सर्वा षत्वप्राप्तिरुत्तरपदस्थस्य प्रतिषिध्यतइति वदन्तः पूर्वत्र द्विविधेऽपि सामर्थ्ये समाश्रिते न दोष इत्याहुः ॥

"अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" ॥ कृकमीति धातुग्रहणम्, इतरेषां स्वरूपग्रहणम् । 'अयस्कार इति' । कर्मण्यण् । 'अयस्काम इति'। शीलिकामीत्यादिना णप्रत्ययः, अयस्कंसादयः षष्ठीसमासाः,कंसग्रहणमनर्थकम्, कमिग्रहणेनैव सिद्धत्वात्, कंसशब्दो हि वृतुवदिहनिकमिभ्यः स इति कमेरेव व्युत्पाद्यते, ज्ञापनार्थं तु, एतत् ज्ञापयति उणादिषु नावश्यं व्युत्पत्तिकार्यं भवतीति। 'अयस्कुम्भीति'। कुम्भशब्दाज्जातिलक्षणो ङीष्। 'अयस्पात्रीति'। पात्र शब्दः ष्ट्रन्प्रत्ययान्तः, षित्वान्ङीष्। 'अयस्कुशेति'। नात्रायोविकारो विवक्षितस्तेन जानपदेति सूत्रेण ङीष् न भवति। 'अयस्कर्णीति'। अय इव कर्णौ यस्याः सा अयस्कर्णी, नासिकोदरेत्यादिना ङीष्। 'शुनस्कर्ण इत्ययं त्विति'। सूत्रे त्वीकारान्तस्य कर्णीशब्दस्य निर्देशादत्राप्रसङ्गः । 'भाःकरणमिति' । षष्ठीसमासः । 'भास्कर इत्ययं त्विति' । दिवाविभेत्यादिना टप्रत्यय, जयादित्यस्तु तस्मिन्सूत्रे ऽत्रैवाभास्करान्तेति प्रत्ययसंनियोगेन सत्वं निपात्यतइति । 'श्वःकारः, पुनःकामइति'। घञन्तेन मयूरव्यंसकादित्वात्समासः ॥

"अधःशिरसीपदे ॥ 'इत्येतयोरिति' सूत्रे तु षष्ठीस्थाने प्रथमा, पदइति स्वरूपस्य ग्रहणं न सुप्तिङन्तस्य, तस्य समासाधिकारादेव सिद्धत्वात् तदाह । 'पदशब्दे परतइति'। 'मयूरव्यंसकादित्वात्समास इति'। अधस्पदमित्यत्र तु षष्ठीसमासः ॥

"कस्कादिषु च" ॥ कुप्वो ≍क≍पौ चेत्यस्यापवादः। 'यथायोगमिति'। इणः परस्य षत्वमन्यस्य सत्वमित्येष यथायोगार्थः। 'कस्क इति'। स्वन्तस्य किमो वीप्सायां द्विर्वचनम्। 'कौतस्कुत इति'। कुतःशब्दस्य पूर्ववद् द्विर्वचनं, तस्मात्तत आगत इत्यण्। अव्ययानां भमात्रे टिलोपः। 'भ्रातुष्पुत्र इति'। ऋतो विद्यायोनिसंबन्धेभ्य इत्यलुक्। 'शुनस्कर्ण इति'। षष्ठ्या आक्रोशइत्यलुक्, पारायणेन दीव्यन्ति व्यवहरन्तीति पारायणिकाः। पारायणं द्विविधं धातुपारायणं नामपारायणमिति, भाष्ये वृत्तावित्यादिनाऽनन्तरोक्तमर्थं निराकरोति। अविहितलक्षणइत्यादिनाऽऽकृति गणोऽयमिति दर्शयति, विसर्जनीयस्थानिकयोः सकारषकारयोरुपचार इति संज्ञा ॥

"छन्दसि वाऽप्राम्रेडितयोः" ॥ 'अयस्पात्रमिति'। असमासोयं, समासे ह्यतः कृकमीत्यादिना नित्यं सत्वं प्राप्नोति, अस्य विकल्पस्यासिद्धत्वात्, असमासे चास्य विकल्पस्य चरितार्थत्वात्, यदि वा प्रकरणे प्रकरणमसिद्धमिति पक्षे समासेप्युदाहरणं किन्त्वनेन मुक्ते तेन नित्यं प्राप्नोति, तस्मादसमास एवायं, समासे तु यदि विकल्पो दृश्यते स छान्दसत्वेनोपपाद्यः। 'वि ?तस्पात्रमिति'। अत्राव्ययत्वादतः कृकमीत्यस्याप्रसङ्गः। 'उरुणस्कार इति'। अस्मदो नसादेशः. नश्च धातुस्थोरुषुभ्य इति णत्वं, कारशब्दो घञन्तः, अत्रासमासत्वादप्रसङ्गः। 'अग्निः प्रविद्वानिति'। अत्र षत्वप्रसङ्गः, उभयक्रमे तु सकार आदेश इत्युपलक्षणम्। 'परुषःपरुष इति'। वीप्सायां द्विर्वचनम्। अङ्गमङ्गं परुष्परुः, चतुष्पुष्पा विशस्ते इत्यादयस्तु कस्कादिषु द्रष्टव्याः, हरिकेशः पुरस्तादित्यादेरत्रोपयोगं न पश्यामः, कथमत्रैव सूत्रे वाग्रहणात्सत्वषत्वयोर्भावाभावौ प्रतिपादितौ, किमत्र, सर्वे विधयश्छन्दसि विकल्प्यन्तइत्यनेन ॥

"कःकरत्करतिकृधिकृतेष्वनदितेः" ॥ 'करति'। कृञो लुङ्, मन्त्रे घसेत्यादिना च्लेर्लुक्, तिपि गुणः, तिपो हलङ्यादिलोपः, बहुलं छन्दस्यमाङ्योगेपीत्यडभावः। 'करदिति'। कृञ एव लुङ्, कृमृदृरुहिभ्य-

श्छन्दसीति ह्रेरुङ् । 'करतीति' । लट्, व्यत्ययेन शप् । 'कृधीति' । कृञो लोट्, सेर्हिः, बहुलं छन्दसीति शपो लुक्, श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिरादेशः । 'कृतमिति' । कृञ एव क्तः । 'सकार आदेश इति' । षत्वस्याप्युपलक्षणमेतत्[१] । 'विश्वतस्करिति' । अव्ययत्वादसमासत्वाच्चातः कृकमीत्यस्याप्रसङ्गः, इतरेषु त्वसमासत्वादप्रसङ्गः, शव करत् यथा नः श्रेयसः करदित्यादौ छान्दसत्वात्सत्वाभावः, तथा कृधीत्यत्र सकारषकारकशब्देषु परतस्तैत्तिरीयके सत्वं न भवति, तत्र आमनसः कृधि स्वाहा, उरुक्षयाय नः कृधि घृतमन्यासै,शं च नः कृधि क्रत्वे ॥

"पञ्चम्याः परावध्यर्थे" ॥ 'अध्यर्थइति' । परेरिदं विशेषणं, हिमवतस्परि, हिमवत उपरीत्यर्थः । व्यत्ययेन षष्ठ्याः स्थाने पञ्चम्याः प्रयोगः । 'पर्याज उद्भृतमिति' । अत्र परिः सर्वतोभावे वर्त्तते ॥

"पातौ च बहुलम्" ॥ क्वचित्पठ्यते पाताविति धातुनिर्द्देश इति । अन्ये तूदाहरणपर्यालोचनया लोडन्तानुकरणं मन्यन्ते ॥

"षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु" । 'वाचस्पतिरिति' । तत्पुरुषे कृति बहुलमित्यलुक् ॥

"अपदान्तस्य मूर्धन्यः" ॥ मूर्ध्नि भवो मूर्द्धन्यः, शरीरावयवाद्यत्, ये चाभावकर्मणोरिति प्रकृतिभावाचस्तद्धितइति टिलोपाभावः । 'सुष्वापेति' । लिट्यभ्यासस्योभयेषामिति संप्रसारणं, मूर्धन्यग्रहणमनर्थकम्, ष इत्येव सिद्धमत आह । 'षइत्येवसिद्धे इति' । षइत्युच्यमाने इणः षोध्वमित्यत्रापि षत्वं प्रसज्येत, ढत्वं चेष्यते, अथात्रैव मूर्धन्यग्रहणं क्रियते, उत्तरेषु योगेषु पुनः षग्रहणं कर्त्तव्यं, मूर्धन्यग्रहणे तु क्रियमाणे न दोषो भवति ॥

"सहेः साढः सः" ॥ 'साड्रूपस्येति' । साडिति रूपं प्राप्तस्येत्यर्थः । 'जलाषाडिति' । भजो ण्विः, छन्दसि सहः, उपधावृद्धिः, ढत्वं,

१ षत्वस्याप्युपलक्षणमेतदित्यस्यापे सद्यावादिति प्रतिषेध इति पाठो बहुषु पुस्तकेषूपलभ्यते ।

जश्त्वचर्त्वे, अन्येषामपि दृश्यतइत्युपपदस्य दीर्घः, सकारस्यान्तरतमो मूर्द्धन्यः षकारः । 'सहेरिति किमिति' । अन्यत्र साड्शब्दस्यासंभवं मन्यमानस्य प्रश्नः । 'सह इनेति' । अडो वृश्चिकलाङ्गूलं, तस्यापत्यं साडिरिति, साडइत्यत्र तु साडशब्दस्यानर्थकत्वादप्रसङ्गं मत्वा तद्धितान्तः प्रत्युदाहृतः, तत्र हि यस्येति लोपे कृते साड्शब्दोऽर्थवान्भवति, न च यस्येति लोपस्य स्थानिवत्त्वं, पूर्वत्रासिद्धे न स्थानिवदितिवचनात्, एवमपि षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वात्साड्शब्दस्याभावः, तस्मात्सह डेन वर्त्ततइति सड इति पाठः, यस्य नाम्नि डशब्दो वर्त्तते स सडः, यथा मृड इति, तस्यापत्यं साडिः । नन्वत्रापि बहिर्भूततद्धितापेक्षत्वाद्बहिरङ्गा वृद्धिः, क्व तर्हि स्याज्जलाषाडिति, नन्वत्रापि बहिर्भूतण्व्यपेक्षया बहिरङ्गैव वृद्धिः, अथ तत्र वचनाद्भवति,इहापि प्राप्नोति तुरासाहमिति, तुरासाहं पुरोधायेत्यादौ तु णिचरेव दुर्लभः, प्रागेव षत्वम् । 'आकारस्य मा भूदिति'[1] । अन्त्यस्य मा भूदिति तु नोक्तं, डकारस्य ढकारवचने प्रयोजनाभावात्, अथाप्यनन्तरतमपूर्धन्यार्थं वचनं स्यादेवमप्यपदान्तस्येत्यन्त्यस्य न भविष्यति । नन्वेवमप्यलोन्त्यस्येत्यस्मिन्बाधिते सर्वादेशो मूर्द्धन्यः प्राप्नोति तत्किमुच्यते आकारस्य माभूदिति । उच्यते । अनन्त्यविकारेन्त्यसदेशस्येत्याकारस्य मूर्धन्यः प्राप्नोति ॥

"इणकोः" ॥ इणिति परेण णकारेण प्रत्याहारः । कुइति कवर्गस्य ग्रहणं, तयोः समाहारद्वन्द्वे एकवचनं, नुमागमस्तु सत्यपि नपुंसकत्वे न कृतः, अनित्यमागमशास्त्रमिति कृत्वा । 'वाक्ष्विति' । चोः कुरिति कुत्वे कृते कवर्गात्परः सकारः, वर्गग्रहणं शासिवसिघसीनां चेत्यत्र घकारस्यापि ग्रहणार्थं, जक्षतुरिति, अन्यथा चर्त्वस्यासिद्धत्वान्न स्यात्, अथ वचनसामर्थ्याच्चर्त्वस्य सिद्धत्वमाश्रीयेत चिन्त्यं वर्गग्रहणस्य प्रयोजनम् । 'दास्यतीति' । ननु च नाज्झलावित्यत्रागृहीतसवर्णानामचां ग्रहणमित्यसकृदुक्तं, ततश्च यथा कुमारी शेतइत्यत्रेकारशकारयोः सावर्ण्यमप्र-

[1] इकारस्य माभूदिति इ॰ पु॰ पाठः ।

तिषिद्धं तथा आकारहकारयोरपि, ततः किं, हकारेणाकारस्य ग्रहणात्षत्वप्रसङ्गः। नैष दोषः। हकारो विवृतः, आकारो विवृततरः, एवं हि पठन्ति विवृतकरणाः स्वरास्तेभ्य एओ विवृततरौ ताभ्यामैऔ ताभ्यामप्याकारः संवृतोऽकार इति, एवं च कृत्वा इष्टकासु वयस्यास्वित्यादयो निर्देशा उपपद्यन्ते। 'असाविति'। अदस औ सुलोपश्च, तदोः सः सावित्यादेशसकारोयं न त्विण्कोः परः।

"नुम्विसर्जनीयशर्व्यवायेऽपि" ॥ इण्कोरिति पञ्चमीनिर्द्दशात् व्यवाये षत्वं न प्राप्नोतीत्ययमारम्भः। नुम्ग्रहणमनुस्वारोपलक्षणं नुमा व्यवायासम्भवात्, नश्चापदान्तस्य झलीत्यनुस्वारस्य विधानात्, अनुस्वारग्रहणमेव तु न कृतं, नुम्स्थानिकेनैवानुस्वारेण व्यवधाने यथा स्यादिह मा भूत् पुंस्विति, पुंस्शब्दात्सुपि संयोगान्तस्य लोपः, मकारस्यानुस्वारः। 'सर्पींषीति'। नपुंसकस्य झलच इति नुम्, सान्तमहतः संयोगस्येति दीर्घः। 'सर्पिःष्विति'। वा शरीति पक्षे विसर्जनीयः। 'सर्पिष्ष्विति'। पक्षे सत्वं, तेनैव व्यवाये षत्वं, सकारस्य ष्टुत्वं, सकारग्रहणे कर्त्तव्ये शरिति प्रत्याहारग्रहणं चिन्त्यप्रयोजनम्, इह यथा वृषलैर्न प्रवेष्टव्यमिति वृषलनिवृत्तिपरायां चोदनायां प्रत्येकं संहतानाञ्च प्रवेशो न भवति, तथा नुमादीनां षत्वाप्रतिबन्ध[1]हेतुत्वपरायाञ्चोदनायां प्रत्येकं समुदायेन च व्यवाये षत्वं प्राप्नोतीति तत्र सर्वव्यवायस्य क्वचिदसंभवात्क्वचित्प्रत्येकं क्वचिद् द्वाभ्यां व्यवाये षत्वप्रसङ्ग इत्यत आह। 'नुमादिभिः प्रत्येकं व्यवायइति'। एवं मन्यते, व्यवायशब्दः प्रत्येकमभिसंबध्यते, नुम्व्यवाये विसर्जनीयव्यवाये शर्व्यवायइति, यथादर्शितमुपक्रमे, तत्रेण्कोरिति पञ्चमीनिर्द्दशेनानन्तर्ये षत्वप्रतिपादनादनेन च वाक्यत्रयेणैकैकव्यवाये षत्वाभ्यनुज्ञानादनेन नाव्यवधानमितिन्यायेन अधिकव्यवाये षत्वाभाव इति। 'निंस्सइति'। णिसि चुम्बने, अदादिरनुदात्तेत्। 'निंस्स्वेति'। लोट्, सवाभ्यां वामौ॥

---

१ बोधनपरायामिति पाठः इं. पु.।

"आदेशप्रत्यययोः" ॥ किमवयवयोगैषा षष्ठी आदेशस्य यः सकारः प्रत्ययस्य च यः सकार इति आहोस्वित्समानाधिकरणआदेशो यः सकारः प्रत्ययो यः सकार इति, तत्राद्ये पक्षे स इत्यस्यानुवृत्तस्येह वचनविपरिणामो न कर्त्तव्यो भवति, कार्येण त्वादेशप्रत्यययोः साक्षात् श्रुतयोरसंबन्धः सकारविशेषणत्वात्, द्वितीये त्वादेशप्रत्यययोः सकारयोरिति द्विवचनं विपरिणम्यं कार्येण तु साक्षाच्छ्रुतयोः संबन्ध इति वचनदोषसाम्याच्च युक्तितः पक्षविशेषनिर्णयः, तत्रावयवषष्ठी चेद् द्विर्वचने दोषः, विसंविसं मुसलंमुसलम्, आष्टमिके हि द्विर्वचने स्थाने द्विर्वचनपक्षोपि स्थापितः, ततश्च नित्यवीप्सयोरित्येकस्य विसमित्येतस्य स्थाने विसंविसमित्येतस्मिन्नादेशे कृते तस्यावयवः सकार इति षत्वप्रसङ्गः । अथ द्वितीयः पक्षः करिष्यति हरिष्यत्यत्र न प्राप्नोति, समुदायो ह्यत्र प्रत्ययो न सकारमात्रं, क्व तर्हि स्यात् यत्र सकारमात्रं प्रत्ययः, इन्द्रो मावक्षत् स देवान्यक्षत्, वचियजिभ्यां लेट्, तिप्, इतश्च लोप इत्यादिनेकारलोपः, लेटोऽडाटावित्यट्, सिब्बहुलं लेटीति सिप्, वचेः कुत्वं, यजेः षत्वकत्वे, अथापरौ द्वौ पक्षौ आदेशस्य यः सकारः प्रत्ययो यः सकार इति, विपर्ययो वा आदेशो यः सकारः प्रत्ययस्य यः सकार इति, तत्राद्ये पक्षे तावेव दोषौ यौ पूर्वयोः पक्षयोः विसंविसमित्यादौ प्रसङ्गः, करिष्यतीत्यादौ चाप्रसङ्ग इति, तस्मादन्यः पक्ष आश्रीयते, यदाह । 'आदेशप्रत्यययोरिति षष्ठी भेदेन संबध्यतइत्यादि' । अत्र च ज्ञापकं यदयमुत्तरसूत्रे घसिग्रहणं करोति तज्ज्ञापयत्यादेशे समानाधिकरणा षष्ठी न व्यधिकरणेति, अन्यथा घसेरादेशत्वादेव तस्य सकारस्यानेनैव षत्वसिद्धेरनर्थकं तत्स्यात्, यच्च सात्पदाद्योरिति सातिप्रतिषेधं शास्ति तज्ज्ञापयति प्रत्ययेऽवयवषष्ठी न सामानाधिकरणेति, अन्यथा सातिसकारस्याप्रत्ययत्वात् षत्वस्य प्राप्त्यभावादनर्थकं तत्स्यात्, ननु चादेशस्येति षत्वापेक्षया स्थानषष्ठी, प्रत्ययस्येति सकारापेक्षयावयवषष्ठीति सहविवक्षाभावाद् द्वन्द्वानुपपत्तिः । नैष दोषः । पूर्वोक्तात् ज्ञापकद्वयात्सहविवक्षाया अभावेऽपि द्वन्द्वो भविष्यति, यदि प्रत्ययावयवस्य षत्वमुच्यते इन्द्रो मावक्षत् स देवान्यक्षदित्यत्र षत्वं न

प्राप्नोति, प्रत्यय एवात्र सकारो न तु प्रत्ययस्यावयवोऽत आह । 'इन्द्राभावत्वादित्यादि' । इहाशेः सरन्, अत्सरमित्यत्र षत्वं भवति, तस्यैव तु कृधूमादिभ्यः क्विदिति विहितस्य षत्वं न भवति, कुसरं धूसरं तथा वृतृवदीत्यादिना विहितस्य[1]कत्समित्यत्र भवति वर्समित्यत्र न भवति, बहुलवचनात्प्रत्ययसंज्ञाया अभावात् ॥

"शासिवसिघसीनां च" ॥ 'अन्वशिषदिति' । सर्तिशास्तीत्यादिना च्लेरङ्, शास इदङ्हलोरितीत्वम् । 'उषित इति' । यजादित्वात्सम्प्रसारणं, वसतिक्षुधोरिट् । 'जक्षतुः जक्षुरिति' । लिट्यन्यतरस्यामित्यदेर्घस्लादेशः, गमहनेत्युपधालोपः । 'अक्षन्निति' । अदेर्लुङ् लुङ्सनोर्घस्लृ,मन्त्रे घसेत्यादिना च्लेर्लुक्, तत्र युक्तं शासिवस्योरनादेशार्थं वचनमिति, घसेस्त्वयुक्तमादेशत्वादित्यत आह । 'घसिर्यद्यप्यादेश इति' । 'आदेशइति' । आदेशे यः सकारस्तत्र स्थितमिति भावः । यस्त्वनादेशो घसिस्तस्येह ग्रहणं न भवति विरलप्रयोगत्वात् ॥

"स्तौतिण्योरेव षण्यभ्यासात्" ॥ 'षत्वभूतइति' । षत्वं प्राप्ते कृतषत्वइत्यर्थः । 'आदेशसकारस्येति' । प्रत्ययसकारस्त्वसंभवान्न संबध्यते । 'सुष्वापयिषतीति' । स्वपिस्यम्योरित्यभ्यासस्य संप्रसारणम् । 'सिसिक्षतीति' । सिचि क्षरणे । 'सुसूषत इति' । षूङ् प्राणिप्रसवे । परस्मैपदपाठे तु षू प्रेरणइत्यस्य रूपं, यदि सिद्धे सत्यारम्भो नियमार्थः, एवकारस्तर्हि किमर्थस्तत्राह । 'एवकारकरणमिति' । अथ विपरीतेऽवधारणे को दोष इत्यत आह । 'स्तौतिण्योःषण्येवेति' । 'इह च स्यादेवेति' । षण्येवेत्यनेन ह्यवधारणेन प्रत्ययान्तरे स्तौतिण्योः षत्वं व्यवच्छिन्नं न तु धात्वन्तरस्य षणि, ततश्चाभिहितदोषद्वयप्रसङ्गः । 'सिषेचेति' । षणीत्यनुच्यमाने प्रत्ययमात्रे नियमः स्यादभ्यासात्परस्य यदि षत्वं भवति स्तौतिण्योरेवेति, ततश्च सिषेचेत्यादौ न स्यात् । 'को विनतेनुरोध इति' । विवर्तमिति षत्वणत्वयोः प्रातिशाख्येषु

---

[1] तस्येत्यधिकम् इं॰ पु॰ ।

प्रसिद्धिः, एकवर्णमनोकारं विनते सुस्मेति, नः पर इति यथा, अनु- रुध्यते आनुकूल्येन प्राप्यतइत्यनुरोधः प्रयोजनं, कृतषत्वस्य निर्देशे किं प्रयोजनमित्यर्थः । 'सुषुप्सतीति' । रुदविदेत्यादिना सनः कित्त्वं, वचि स्वपीत्यादिना संप्रसारणं, सनीत्युच्यमाने सन्मात्रे नियमः स्यात्, ततश्च यथा षत्वभूते सनि धात्वन्तरस्य षत्वं न भवति एवमिहाषत्वभूतेपि न स्यात् । 'कः सानुबन्धेनुरोध इति' । नकारोत्रानुबन्धः, नकारानुबन्धव- तो ग्रहणे किं प्रयोजनमित्यर्थः । णत्वस्य तु प्रयोजनं न पृच्छति, तस्य लक्षणप्राप्तत्वात् । 'सुषुपिषइन्द्रमिति' । स्वपेर्लिट्, छान्दसत्वाद्व्यु- त्ययो बहुलमिति थास्, थासः से, असंयोगाल्लिट् किदिति लिटः कित्त्वात्पूर्ववत्सम्प्रसारणं, द्विर्वचनं, क्रादिनियमादिट्, इन्द्रशब्दे परतो यादेशः, लोपः शाकल्यस्येति यलोपः, अत्र नियमाभावादभ्यासात्परस्य षत्वं भवत्येव, षइत्युच्यमाने तु यावान्कश्चित्षशब्दस्तत्र सर्वत्र नियमः स्यात्, तस्मात्सानुबन्धकग्रहणम् । 'अभ्यासादिति किमिति' । अभ्यासा द्या प्राप्तिस्तस्या नियमो यथा स्यादुपसर्गाद्या प्राप्तिस्तस्या नियमो मा भूत्, अभिषिषिक्षतीत्येतत्तावदप्रयोजनं, कथम्, असिद्धमुपसर्गात्षत्वं, तस्या- सिद्धत्वान्नियमो न भविष्यति । स्यादेतत् । यथाऽत एकहल्मध्यइत्यत्र लिटा आदेशो विशेष्यते तथेह सनाभ्यासः सनि यो ऽभ्यासस्तस्मात् स्तौतिण्योरेवेति, तेन यङि योभ्यासस्तस्मात्षणि धात्वन्तरस्यापि षत्व भवति, स्वपेर्यङ्, स्वपिस्यमिव्येञां यङीति संप्रसारणं, सोषुप्यतेः सन्, इट्, अतो लोपः, यस्य हलः, सोषुपिषते, । तदेतद्भवति प्रयोजनमिति । तत्र । अन्तरङ्गमत्र षत्वं बहिरङ्गो नियमस्तस्मादनर्थकमभ्यासग्रहणमिति प्रश्नः । परिहरति । 'प्रतीषिषतीति' । इणो बोधनार्थत्वाद्गम्यादे- शाभावोऽजादेरिति सशब्दस्य द्विर्वचनं, सन्यत इतीत्वं, तत्राभ्यासा- श्रये प्रत्यस्य षत्वे कृते ऽस्य नियमस्याभावाद्वात्वाश्रयं षत्वमभ्यासस्य प्रवर्त्तते । ननु षणीति परसप्तमी, ततश्च षणि परे स्तौतिण्योरे- वेति षत्वनियमः, क्रियमाणस्तुल्यजातीयस्य षणपरस्य सिसिक्षतीत्यादेः षत्वं निवर्तयति, प्रतीषिषतीत्यत्र तु सनि एव द्विर्वचनमिति षणपर-

त्वाभावादयं नियमो न प्रवर्तिष्यते, सन्यत इतीत्वमपि तर्हि न प्राप्नोति, समुदायस्य सन्रूपत्वात्तस्य च सन्परत्वाभावात्तस्मात्सन्प्रदेशेषु सत्सप्तमी विज्ञेया,[1] ततश्च यथेत्वं प्रवर्तते तथा षत्वनियमोऽपि स्यादित्यभ्यासग्रहणम् ॥

"सः स्विदिस्वदिसहीनां च" ॥ स इत्यविभक्तिको निर्देशः । 'ण्यन्तानामिति'। षत्वप्राप्तौ सत्वमुच्यते, षत्वप्राप्तिश्च ण्यन्तानामिति सामर्थ्यलभ्यमेतत्, किमर्थं पुनः सकारस्य सकार उच्यते ऽत आह । 'सकारे' ति'। नेति प्रतिषेधएव वक्तव्ये सकारवचनं लाघवे विशेषाभावात् ॥

"प्राक् सितादड्व्यवायेऽपि" ॥ इणकोरिति पञ्चमीनिर्देशाद्व्यवाये न प्राप्नोतीति वचनम् । अडित्यागमस्य ग्रहणं न प्रत्याहारस्य, एतच्च हयवरडिन्यत्रोपपादितम् । 'प्राक् सितसंशब्दनादिति'। परिनिविभ्यः सेवसितेत्यतः । अपि ग्रहणं किम् । अव्यवधानेपि यथा स्यात्, अन्यथा विशेषवचनाद्व्यवायएव स्यात् । 'अभ्यषुणोदिति'। षुञ् अभिषवे, लङ्, स्वादिभ्यः श्नुः, अडागमः, प्रागेव णत्वादेशात्षत्वं, कृते वा णत्वे यकारमेवेणमाश्रित्य षत्वम् ॥

"स्थादिष्वभ्यासेन चाभ्यासस्य" ॥ द्वे एते वाक्ये, स्थादिष्वभ्यासेन व्यवाये षत्वं भवति, अभ्यासस्य च षत्वं भवति तेष्वेव स्थादिष्विति, तत्राद्यं विध्यर्थं, द्वितीयं नियमार्थम् । 'अषोपदेशार्थमिति'। षोपदेशे तु परितिष्ठासतीत्यादौ सामान्यलक्षणेनैव सिद्धम् । 'अभिषिषेणयिषतीति'। सेनयाऽभियातुमिच्छतीति विगृह्य सत्यापपाशेत्यादिना णिच्, टिलोपस्ततः सन्, द्विर्वचनं, ह्रस्वः, एच इग्घ्रस्वादेशे, अव्युत्पन्नः सेनाशब्दः, यद्वा सहेनेन वर्त्तत इति सेना, सहस्य सः संज्ञायामिति सादेशः, यदा तु सिनोतेर्नप्रत्यये सेनेति व्युत्पाद्यते तदास्त्येवभिषोपदेशत्वमेति। 'अभितष्टा[2]विति'। आदेशसकारस्याप्यस्य

---

१ विज्ञायते ई· पु· पा· ।

२ 'णत्वे प्रतिषेधार्थं चेति'। इण्कोरिति सिद्धं षत्वं नियमेन व्यावर्त्यते, तदप्युपसर्गमाश्रित्य भवति । ३ पु· पा· ।

षत्वं न सिद्ध्यति इणकोरभावात्। 'अभिषिषिक्षतीति'। यद्यप्ययमादेशसकार इणश्च परस्तथाप्यभ्यासमपेक्ष्य षत्वं न सिद्ध्यति। स्तौतिण्योरेव षणीति नियमात्, अतः षणि यत्प्रतिषिद्धं षत्वं नियमेन व्यावर्तितं तदप्युपसर्गमाश्रित्य भवति। अथाभ्यासस्येति किमर्थं, यावताभ्यासेनेत्यत्र क्रियापेक्षायां प्रकरणाद्व्यवायइति संबन्ध्यते, तच्चापिशब्दसंनिहितमेव प्रकृतमिति अव्यवायेऽपि षत्वं भविष्यति पूर्वसूत्रवत्, नार्थोभ्यासस्येत्यनेनात आह। 'अभ्यासस्येति वचनं नियमार्थमिति'। नियमस्य स्वरूपं दर्शयति। 'स्थादिष्वेवेति'। विपरीतस्तु नियमो न भवति स्थादिष्वभ्यासस्यैवेति, यदि स्यादभ्यासेन व्यवाये षत्वविधानमनुपपन्नं स्यात्। 'अभिसुसूषतीति'। षू प्रेरणे, सन्, सनि ग्रहगुहोश्चेतीड्निषेधः, अत्र धातुसकारस्य स्तौतिण्योरेवेति नियमादषत्वम्, अभ्याससकारस्य त्वस्मान्नियमात्षत्वाभावः॥

"उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्"॥ षुञभिषवे स्वादिः, षु प्रेरणे तुदादिः, षोन्तकर्मणि दिवादिः, ओतः श्यनीति लोपः, ष्टुञ् स्तुतौ अदादिः, उतो वृद्धिर्लुकि हलि, ष्टुभ स्तम्भे, अनुदात्तेत्, एतेषां श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। 'अभिसोषवातीत्यादि'। ष्ठा गतिनिवृत्तौ, सेनयतिर्ण्यन्तः, शपा निर्देशेन नार्थः, यङोसम्भवात्, षिधू गत्यां, षिधू शास्त्रे माङ्गल्ये च भौवादिकौ, तत्र सेधतेर्गताविति प्रतिषेधादन्यत्र षत्वं, शपा निर्देशो यङ्लुङ्निवृत्त्यर्थः, दैवादिकनिवृत्त्यर्थश्च षिधू संराद्धाविति। षिच क्षरणे तुदादिर्मुचादिः, षञ्ज सङ्गे, ष्वञ्ज परिष्वङ्गे, अनुदात्तेत्, दंशसञ्जस्वञ्जां शपीति नलोपः, सिवादीनां यङ्लुक्यपि भवति, अभिषेषिचीतीत्यादि, एतेषामड्व्यवाये ऽभ्यासव्यवाये च यथा संभवं षत्वम्, इणकोरिति वर्त्तते, तत्र कवर्गस्यासंभवादिणइति संबध्यते, तत्र यदीणा उपसर्गो विशेष्येत इणन्तादुपसर्गादिति, इह न स्यात् निष्षुणोति दुष्षुणोतीति, तस्मादुपसर्गेणेणविशेषणीयः, उपसर्गस्थेण इति, ननूपसर्गादिति पञ्चमी तत्कथमिणविशेष्यते, न ब्रूमो वैयधिकरण्येन विशेष्यतइति, किं तर्हि तात्स्थ्यात्ता-

च्छब्दम्, उपसर्गादिणः, उपसर्गस्यादिण इति, तत्र शब्व्यवायस्याश्रितत्वा- चिसोऽपि परस्य षत्वं भवति, तदिदमुक्तम्। 'उपसर्गस्याचिमित्तादिति'। 'दधि सिञ्चतीति'। सात्पदाद्योरितिप्रतिषेध एवात्र भवति, तदपवादो ह्ययम्। 'निःसेचक इति'। निरयमुपसर्ग एव तत्कथमिदं प्रत्युदाहरण- मत आह। 'नायं सिचेरुपसर्ग इति'। यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञे भवतः। 'अभिसावकीयतीति'। सावकशब्दात् ण्वुल- न्तात्क्यच्, तस्याभिना योगः, सुनोतिना योगे तु भवत्येव, अभिषावक- मिच्छति अभिषावकीयतीति, ण्यन्तेऽपि तर्हि णिजर्थेन प्रैषादिनोपस- र्गस्य योगो न प्रकृत्यर्थेनेति षत्वाप्रसङ्ग इत आह। 'अभिषावयतीत्य- त्रेति'। अभिषवविषया प्रयुक्तिर्न तु प्रयुक्तेरभिना योग इत्यर्थः। यदा तु प्रयुक्तेरभिना योगस्तदा नैव षत्वं भवति, किं तु प्रकृत्यर्थेनासंसृष्टस्य प्रयुक्तिमात्रस्याभिना योगः कीदृश इति चिन्त्यम्॥

"सदिरप्रतेः"॥ सदिरिति षष्ठ्यर्थे प्रथमा। 'निषसादेति'। सदिस्वञ्ज्योः परस्य लिटीति प्रतिषेधादभ्यासात्परस्य न भवति॥

"स्तम्भेः"॥ स्तम्भिः सौत्रो धातुः। 'अभिष्टभ्नातीति'। स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्चेति श्नाप्रत्ययः। अनिदितामिति न लोपः। 'अप्रतेरित्येतदिह नानुवर्त्तत इति'। यद्यनुवर्त्तेत पूर्वसूत्र एव स्तम्भिग्रहणं कुर्यात्कि योगविभागेन, अस्ति प्रयोजनं, किम्, अवाच्चालम्ब- नाविदूर्ययोरिति वक्ष्यति तत्स्तम्भेर्यथा स्यात् सदेर्माभूत्। नैतदस्ति। एक- स्मिन्नपि योगे यस्यालम्बनाविदूर्ये स्तः स एवानुवर्तिष्यते, स्तम्भेरेव च ते संभवतः॥

"अवाच्चालम्बनाविदूर्ययोः"॥ आलम्बनमाश्रयणं, विदूरं विप्र- कृष्टं, तदन्यदविदूरं, तस्य भाव आविदूर्यम्, अत एव निपातनान्नञ्पूर्वा- दपि तत्पुरुषाद्भावप्रत्ययः। 'अवष्टभ्येति'। यष्ट्यादिकमवलम्ब्येत्यर्थः। 'अवष्टब्धेति'। आसन्नेत्यर्थः। 'अवस्तब्ध इति'। अभ्यर्हित इत्यर्थः॥

"वेश्च स्वनो भोजने"॥ उदाहरणेषु स्वार्थपरित्यागेन भोजन- मात्रे स्वनिर्वर्त्तत इति शङ्कामपनयति। 'अभ्यवहारक्रियाविशेष इति'।

तमेव विशेषं दर्शयति । 'यत्रेति' । 'विष्वणतीति' । सशब्दं भुङ्क्त इत्यर्थः ॥

"परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" ॥ सेवति भ्वादिष्वनुदात्तेत् । 'सित इति' । षिञ् बन्धने क्तान्तः । 'सय इति' । स एवैरजन्तः, षिवु तन्तुसन्ताने दिवादिः, षह मर्षणेऽनुदात्तेत् । 'सुडिति' । सुट् कात्पूर्व इत्यस्य ग्रहणं, स्तुस्वञ्जी उक्तार्थौ, तयोरुपसर्गात्सुनोतीत्यादिनैव सिद्धे पर्यादिपूर्वयोरुत्तरसूत्रेणाड्व्यवाये विकल्पार्थं वचनम् ॥

"सिवादीनां वा ऽड्व्यवाये ऽपि" ॥ सिवादयः प्रत्यासत्तेः पूर्वसूत्रे संनिविष्टा गृह्यन्ते, उभयत्र विभाषेयम्, स्तुस्वञ्ज्योः प्राक् सितादिति प्राप्ते इतरेषामप्राप्ते ॥

"अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु" ॥ स्यन्दू प्रस्रवणे अनुदात्तेत् । 'अनुस्यन्दते मत्स्योदकेइति' । मत्स्यश्चोदकञ्च, मत्स्योदके, जातिरप्राणिनामित्यनेन यत्र सर्वाण्यवयवपदान्यप्राणिवाचीनि तत्रैकवद्भावः, इह तु मत्स्यशब्दस्य प्राणिवाचित्वादेकवद्भावाभावः, अत्राप्राणिष्विति प्रसज्यप्रतिषेधः, तेन प्राण्यप्राणिसमुदायेऽपि प्राण्यस्तीति प्रतिषेधो भवति, अन्ये तु पर्युदासं मन्यमाना भवितव्यमेवात्र षत्वेनेत्याहुः । इह पर्यादिग्रहणं शक्यमकर्तुम्, एवं वक्ष्यामि, अन्वभिभ्यां चेति, चकारात्परिनिविभ्यश्चेति ॥

"परेश्च" ॥ 'पृथग्योगकरणसामर्थ्यादिति' । अन्यथा विपरिभ्यां स्कन्देरनिष्ठायामित्येव ब्रूयात् ॥

"वेः स्कभ्नातेर्नित्यम्" ॥ स्कम्भिः सौत्रो धातुः ॥

"इणः षीध्वंलुङ्लिटां धोऽङ्गात्" ॥ इणन्तादङ्गादुत्तरेषामित्यादिना इणन्तमङ्गं षीध्वमादीनां विशेषणं तेऽपि धकारस्येति दर्शयति, धकारस्य त्विणन्तमङ्गं विशेषणं न भवति, इणन्तादङ्गादुत्तरस्य धस्य स चेत् षीध्वमादीनामिति, तथा हि सति योषिढ्वमित्यादौ वचनसामर्थ्यात्षीशब्देन व्यवाय आश्रयणीयः स्यात् । 'अच्योढ्वमिति' ।

धि चेति सलोपः । 'इणग्रहणं कवर्गनिवृत्त्यर्थमिति' । प्रकृतं हीणग्रहणं कवर्गेण संबद्धुमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । 'पक्षीध्वमिति' । चोः कुरिति कुत्वे कृते ढत्वप्रसङ्गः । 'यक्षीध्वमिति' । व्रश्चादिना षत्वे कृते षढोः कः सीति कत्वम् । 'स्तुध्वेइति' । टेरेत्वम् । 'अधुध्वमिति' । लङ् । 'परिवेविषीध्वमिति' । विष्लृ व्याप्तौ जुहोत्यादिः स्वरितेत्, निजां त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः, लिङः सलोपोऽनन्त्यस्येति सीयुटः सकारलोपः, अत्र धातुषकारस्य ईध्वंशब्दस्य च यः समुदायस्तदात्मकः षीध्वंशब्दो ऽस्ति न त्वसावङ्गादुत्तरः, षकारान्तं ह्यत्राङ्गं न तु वेवीत्येतावत् । चोदयति । 'अथैवङ्ग्रहणादपीति' । परिहरति । 'एतत्त्विति' । एतदर्थवतो ग्रहणमत्र नाश्रितम् । किं कारणं, न किञ्चिन्नाश्रितमित्येव ॥

"विभाषेटः" ॥ अत्रेणग्रहणमिटो विशेषणं सो ऽपि षीध्वमादीनां, तेऽपि धकारस्येति दर्शयन्नाह । 'इणः परस्मादिट इत्यादि' । तत्र षीध्वमो लिटश्च श्रुतिकृतमानन्तर्यं शास्त्रकृतं तु न संभवति, इटस्तद्भक्तत्वात्तद्ग्रहणेन ग्रहणात्, अत एवानयोः प्राप्तविभाषेयम् ।

तथैव लुङ्यप्यलविढ्ढमादौ धि चेति लुप्ते सति सिचसकारे ।
इणान्तमङ्गं ध्वमि जातमातः पूर्वस्य नित्यस्य विधेः प्रसङ्गः ॥
एवञ्च धातावनिणन्तइष्टमैधिढ्ढमित्यादिषु नित्यं ढत्वम् ।
यदि त्विणन्ताद्विहितस्य ढत्वं तथा न ते ढत्वमधिढ्ढमि स्यात् ॥

तथा

लिहिंदोग्धिनहां ढत्वघत्वधत्वेषु सत्स्वपि ।
इणन्ताद्विहितः षीध्वमिति ढत्वं प्रसज्यते ॥
तथेणो लुङि गादेशे विहिते ध्वमि कर्मणि ।
अगाध्वं यूयमेतेनेत्यत्र ढत्वं प्रसज्यते ॥

एवं ब्रुवो वचिर्वक्षीध्वमिति ।

दृश्यते सर्वमेवैतदिति चेत्प्राप्तवागिह ।
तस्मात्प्राप्तविभाषैव सर्वत्रेयमिति स्थितम् ॥

तथा च तैत्तिरीयके ताः रुद्रा अब्रुवन्नयूयमजनिढ्वमिति ढत्वं प्रयुक्तम्[१], लविषीढ्वं, लविषीध्वमिति[२]। अन्ये त्विटो विभाषाया वक्ष्यमाणत्वाद्गोबलीवर्दन्यायेन तद्व्यतिरिक्तमिणन्तमङ्गमिह गृह्यतइति वदन्त एधिध्वमित्यादौ ढत्वं नेच्छन्ति, तेषामर्थ्याधिढ्वमित्यत्र भवत्येव नत्सीध्वमित्यादौ च न भवति। 'आसिषीध्वमिति'। आस उपवेशने। 'कथं भवितव्यमिति'। किमत्रानेन विकल्पेन भवितव्यमुत नेति प्रश्नार्थः। 'उपदिदीयिध्वइति'। दीङ् क्षये, लिट्, ध्वमि क्रादिनियमादिट्, दीङो युडचि क्ङीतीति युट्। 'युटा व्यवहितमिति'। समुदायभक्तो हि युट् तमेव न व्यवदध्यात् इटन्तु व्यवदधात्येव। 'न भवितव्यं ढत्वेनेति'। अनेन विकल्पेनेति भावः, पूर्वेण तु नित्यं प्राप्नोत्येव। 'अपरेषामिति'। अस्मिन्पक्षे विकल्प एव भवति॥

"समासेऽङ्गुलेः सङ्गः"॥ सङ्ग इति षष्ठ्याः स्थाने प्रथमा, एवमुत्तरेष्वपि योगेषु, सञ्जनं सङ्गः भावे घञ्, अङ्गुलीषु संगोयस्याः साऽङ्गुलिषङ्गा। 'अङ्गुलेः सङ्ग इति'। अत्र शर्व्यवायइत्यधिकारात्प्रसङ्गः। अन्ये त्वङ्गुले संगइति संबुध्यन्तमुदाहरन्ति॥

"भीरोः स्थानम्"॥ 'भीरो स्थानमिति'। पूर्ववत्संबुद्ध्यन्तं षष्ठ्यन्तं वा, समासेऽङ्गुलिभीरुभ्यां सङ्गस्थानइत्युच्यमाने भ्यामित्यधिकं प्राप्नोति, तस्माद्योगविभागः॥

"अग्नेः स्तुत्स्तोमसोमाः"॥ 'अग्निष्टुदिति'। संपदादित्वादधिकरणे क्विप्, यत्राग्निः स्तूयते सोऽग्निष्टुत्, क्रतुविशेषः, तत्रेदं भवति, [३]अपि वा सर्वेषु देवताशब्देष्वग्निमेवाभिसंनमेदिति। 'अग्निष्टोम इति'। सोमयागस्य सप्तसंस्थाः, तत्राद्या संस्थोच्यते। 'अग्नेर्दीर्घादिति'। देवताद्वन्द्वे षत्वमित्यर्थः, तत्रैव दीर्घस्य विधानात्। 'अग्निसोमौ माणवका-

१ प्रयुक्तमित्यनन्तरं तथा महामां विहितमायेयिध्वमिति इं॰ पु॰ पाठः।
२ लविषीढ्वम् लविषीध्वमिति नास्ति इं॰ पु॰।
३ अपि वा सर्वेषु देवताशब्देष्वग्निमेवाभिसन्नमेदिति। 'अग्निष्टोम इति'। सोम यागस्य सप्तसंस्थेत्यादि पाठ इं॰ पु॰ नास्ति,

विति'। अत्र माणवके संज्ञात्वेन विनियुक्तावग्निसोमशब्दाविति दीर्घाभावात्षत्वाभावः। ज्योतिर्लतयोरपि देवतात्वाभावाद्दीर्घाभावात् षत्वाभावः। 'अग्निसोमौ तिष्ठत इति'। आश्वलायनस्तु तत्रापि दीर्घं षत्वे प्रायुङ्क्त। अग्नीषोमौ प्रणेष्यामीति॥

"ज्योतिरायुषः स्तोमः"॥ 'ज्योतिष्टोम इति'। अत्र शर्व्यवायइत्यधिकारात् षत्वम्। एवमायुष्टोमेऽपि॥

"मातुःपितुर्भ्यामन्यतरस्याम्"॥ एकदेशविकृतस्यानन्यत्वाद्विसर्जनीयशर्व्यवायइत्यधिकाराच्च पूर्वेण नित्ये प्राप्ते विकल्पः। 'मातुःष्वसेति'। विभाषा स्वसृपत्योरिति षष्ठ्या अलुक्। 'रेफान्तयोरिदं ग्रहणमिति'। तच्चोत्तरपदे स्पष्टं पूर्वपदमपि तत्साहचर्याद्रेफान्तमेव, यद्येवं रेफस्य विसर्जनीये कृते तस्य वा शरीति पक्षे सत्वे कृते ऽरेफान्तत्वाच्च प्राप्नोति, अत आह। 'एकदेशविकृतस्यानन्यत्वादिति'। यदि तु सकारान्तयोर्ग्रहणं क्रियेत विसर्जनीयान्तयोर्न स्यात्, विसर्जनीयान्तयोस्तु ग्रहणे भ्यामि परतो निर्द्देशो दुर्घटः स्यात्॥

"अभिनिसस्तनः शब्दसंज्ञायाम्"॥ 'अभिनिस्इत्येतस्मादिति'। एतेन समुदायो निमित्तं न प्रत्येकमिति दर्शयति। 'अभिनिष्टानो विसर्जनीय इति'। तथा चापस्तम्बः, द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरं दीर्घाभिनिष्ठान्तं घोषवदाद्यन्तरन्तस्थमिति, द्व्यक्षरं चतुरक्षरं वा नाम कर्त्तव्यं, कीदृशं नामपूर्वं, नाम प्रातिपदिकमक्रियावाचि तत्पूर्वपदमाख्यातोत्तरं क्रियावाच्युत्तरपदं दीर्घात्परो योऽभिनिष्टानो विसर्जनीयस्तदन्तं दीर्घान्तं विसर्जनीयान्तं चेत्यन्ये, घोषवान्वर्ण आदिर्यस्य तद्घोषवदादि, अन्तरन्तस्थं यरलवानामन्यतमं मध्ये यस्य तत्तथोक्तमेवंभूतं नाम कर्त्तव्यं, द्रविणोदा वरिवोदा इत्याद्युदाहरणम्॥

"उपसर्गप्रादुर्भ्यामस्तिर्यच्परः"॥ यं च अच्च यचौ, तौ परौ यस्मात्स यच्परः, यचोरिति सप्तमीनिर्द्देशेनैव सिद्धे परग्रहणं चिन्त्यप्रयोजनम्। 'अभिषन्तीति'। अदादित्वाच्छपो लुक्, श्नसोरल्लोपः। 'अनुसृतमिति'। कथं पुनरत्र प्रसङ्गो यावता सकारस्य प्रकृतत्वात्तमेव

प्रत्युपसर्गत्वमाश्रयिष्यते, न चात्र सकारं प्रत्युपसर्गत्वमस्ति, तावन्मात्रस्याक्रियावचनत्वात्, तत्किमस्तिग्रहणेन, न च प्रादुःशब्दार्थमस्तिग्रहणं कृतं, तस्य कृभ्वस्तिविषयत्वेन नियतत्वात्, तदेतदाशङ्कते तावत् । 'तथापीति' । अनुसुशब्दः शुभ्रादिः चतुष्पाद्वचन इत्यन्ये, ततो ठक्ठञोरन्यतरः, ढे लोपोकद्र्वा इत्यकारलोपे सकारमात्रस्य क्रियावाचित्वात् षत्वप्रसङ्गः ॥

"सुविनिर्दुर्भ्यः सुपिसूतिसमाः" ॥ सुपीत्यागन्तुक इकारो न पुनरिका निर्देशः, तत्र वचिस्वपीति लक्षणप्राप्तेन संप्रसारणेन धातोरेवायं निर्देशः स्यात्ततश्च यत्रास्यैतद्रूपं तत्र षत्वमित्ययमर्थो न लभ्येत तस्मादागन्तुकेनेकारेण प्रयोगस्यास्य कृतसंप्रसारणस्य रूपस्येदमनुकरणं, तदाह । 'सुपीति स्वपिः कृतसंप्रसारणो गृह्यतइति' । एतच्च सुपीति निर्देशादेव लभ्यते, अन्यथा वचिस्वपीतिवन्निर्दिशेत् । 'सूतीति स्वरूपग्रहणमिति' । सूतेः क्तिन्नन्तस्य ग्रहणमित्यर्थः, समेत्यपि स्वरूपग्रहणमेव न षम ष्टम वैक्लव्यइति धातोर्ग्रहणम् । इक्श्तिपोरन्यतरस्याभावात्, अथ किमर्थं स्वपेः सुपि भूतस्य षत्वमुच्यते, 'सुपेः षत्वं स्वपेर्माभूत्,' सुपेःषत्वमुच्यते स्वपेर्माभूदिति, विस्वप्ना विस्वप्नमिति । 'विसुष्वापेति' । अथ क्रियमाणेऽपि विकृतग्रहणे 'विसुष्वापेति केन न' हेतुना केन विसुष्वापेत्यत्राभ्यासस्य षत्वं न भवति, लिट्यभ्यासस्योभयेषामिति संप्रसारणे कृते सुपिरूपस्य भावात् प्रागेव हलादिशेषात्कृते वा तस्मिन्नेकदेशविकृतस्यानन्यत्वादस्ति प्रसङ्गः, 'हलादिशेषाच्च सुपिः,' द्विर्वचने कृते परत्वाद्धलादिःशेषेण यकारे निवृत्ते वकारस्य सम्प्रसारणम्, ततश्च सुपिरूपस्य कदाचिदप्यभावात्षत्वाभावः, 'इष्टं पूर्वं प्रसारणम्,' उक्तं तत्रोभयेषां ग्रहणस्य प्रयोजनं परमपि हलादिशेषं बाधित्वा उभयेषां सम्प्रसारणमेव यथा स्यादिति, तेन सम्प्रसारणमेव पूर्वमिष्टं, विशेषतश्चाचेष्टम्, अन्यथा यकारवद्वकारोऽपि निवर्त्तेत, नह्यत्र हेतुरस्ति, यकारो निवर्तते वकारोऽवतिष्ठतइति, एवं तर्हि स्यादिष्वेवाभ्यासस्येत्येतस्मादेव नियमादत्र षत्वं न भविष्यति, 'स्यादीनां नियमो नात्र,' किं कारणं, 'प्राक्सिताद्दुत्तरः

सुपि:,' प्राक्सितादिति तत्र वर्त्तते, तेन प्राक्सिता ये धातवस्तेषां मध्ये स्थादिष्वेवाभ्यासस्य षत्वमिति नियमेन सुनोतिसुवतिस्यतिस्तोभतय एव निवर्त्यन्ते सुपिस्त्वयं ततोवधेरुत्तरः, एवं तर्ह्यर्थवद्ग्रहणे नानर्थकस्येत्येव-मेतस्य न भविष्यति, स्थाने हि द्विर्वचनेन समुदायोर्थवान् अवयवौ त्वनर्थकौ द्विष्प्रयोगेऽर्थप्रत्यायनास्यानावर्त्तनाद् द्वाभ्यामर्थः प्रत्याय्यतइत्येकस्यानर्थ-क्यमेव तदेतदाह । 'अनर्थकौ विषुपुः,' यद्यनर्थकस्य ग्रहणं न भवति, विषुषुपुरिति न सिद्ध्यति, नैष: दोषः । षुपिभूतो द्विरुच्यते । अयमभि-प्रायः । पूर्वं धातुरुपसर्गेण युज्यते तत्र द्विर्वचनात्परत्वात्सम्प्रसारणं, परत्वादेव षत्वं कृतषत्वस्यैव तस्य द्विर्वचनमिति । ननु षत्वस्यासिद्धत्वा-त्पूर्वं द्विर्वचनमेव प्राप्नोत्यत आह । 'पूर्वत्रासिद्धीयमद्विर्वचनइति' ॥

"निनदीभ्यां स्नातेः कौशले" ॥ 'निष्णातः कटकरणइति' । तत्र कुशल इत्यर्थः । 'नदीष्णइति' । नदीस्नाने कुशल इत्यर्थः । कवयस्तु कुशलमात्रे प्रयुञ्जते । 'नदीस्नात इति' । सप्तमीति योग-विभागात्समासः ॥

"सूत्रं प्रतिष्णातम्" ॥ सूत्रं प्रतेरिति वक्तव्ये निपातनाश्रयणं प्रत्ययान्तरे मा भूत् ॥

"कापिष्ठलो गोत्रे" ॥ गोत्रमिह प्रवराध्यायपठितं गृह्यते, तत्र च स्वसन्तानस्य व्यपदेशहेतुराद्यः पुरुषो गोत्रमित्युच्यते, पारिभाषिक-ग्रहणे तु कापिष्ठलिरित्यत्रैव स्याद्यत्र गोत्राभिधायी प्रत्ययः, यदि तु गोत्रं न षत्वस्य विषयेन निर्दिष्टं, किं तर्हि दर्शनस्य गोत्रे यो दृष्टः कपिष्ठलशब्दः स साधुर्भवति, क्व यत्र तत्रेत्याश्रीयते, पारिभाषिकेऽपि गोत्रे न दोषः ॥

"प्रष्ठोऽग्रगामिनि" ॥ 'प्रस्थे हिमवत इति' । घञर्थे कविधा-नमित्यधिकरणे कः ॥

"वृक्षासनयोर्विष्टरः" ॥ विस्तीर्यतइति विष्टरः, प्रथने वाऽव-शब्दइति घञि प्राप्ते अस्मादेव निपातनादप्, रूढिशब्दत्वाद्वा पचा-

अचि व्युत्पाद्यः, उलपेन कृता टीका औलपी सा वाक्यस्य विस्तरः, अशब्दइति प्रतिषेधादप् ॥

"छन्दोनाम्नि च" ॥ 'विष्टारइति निपात्यतइति'। ननु च विष्टर इति प्रकृतं तत्कथं विष्टार इति निपात्यतेऽत आह। 'विपूर्वादिति'। यदि त्विह छन्दोनाम्नि विष्टारइत्यात्वं क्रियेत घञ्विधौ छन्दोनाम्नि चेति शक्यमकर्तुम्, इह वा विष्टारइत्युच्येत तत्र वा छन्दोनाम्नीति, कोन्वत्र विशेषः, अपर आह। घञ्विधौ वाविति नानुवर्त्तते, तेन प्रस्तारपङ्क्तिः संस्तारपङ्क्तिरित्यपि भवतीति ॥

"गवियुधिभ्यां स्थिरः" ॥ 'गविष्ठिरः युधिष्ठिर इति'। संज्ञायामिति सप्तमीसमासः,। 'गोशब्दादहलन्तादपाति'। यद्यप्यवादेशे कृते सम्प्रति हलन्तो भवति तथापि उत्पत्तिवेलायामहलन्तत्वान्निपातनमाश्रितम् ॥

"विकुशमिपरिभ्यः स्थलम्" ॥ विकुपरिइत्येतेषां कुगतिप्रादय इति समासः, शमीशब्दस्य तु षष्ठीसमासः, ङ्यापोः संज्ञाछन्दसोर्बहुलमिति ह्रस्वत्वं, सूत्रे ह्रस्वोच्चारणे ह्रस्वपक्षएव षत्वं यथा स्यात्तेन प्रयोगे बहुलवचनाद्यदा ह्रस्वत्वं न भवति तदा षत्वमपि न भवति ॥

"अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः" ॥ 'स्थशब्दसकारस्येति'। एतेन स्थ इति सूत्रे स्वरूपग्रहणं प्रथमान्तमिति दर्शयति। यदि स्थातो धातोरिति तिष्ठतेराकारलोपं कृत्वा षष्ठ्या निर्द्देशः स्यात्तदा गोस्थानं भूमिस्थानमित्यादावपि षत्वं स्यादिति भावः, अम्बे तिष्ठत्यम्बष्ठः, सुपि स्थ इति कप्रत्ययः, ङ्यापोरिति ह्रस्वत्वम्। 'आम्बष्ठ इति'। संज्ञेयं जनपदविशेषस्य। 'गोष्ठ इति'। घञर्थे कविधानमित्यधिकरणे कप्रत्ययः, भूमिष्ठादौ सुपि स्थः। 'सव्येष्ठ इति'। हलदन्तात्सप्तम्या इत्यलुक्, यदि स्थ इति स्वरूपग्रहणं स्थास्थिन्स्थूणां न प्राप्नोतीतीदमाह। 'स्थास्थिन्विति'। स्थाशब्दः क्विबन्तः। 'सव्येष्ठा इति'। ईत्वे वकारप्रतिषेध इति वचनात्प्रत्ययलक्षणेनेत्वं न भवति, गमेरिनिरिति वर्त्तमाने परमेस्थः

क्विव्वेति क्विदिनिप्रत्ययः, परमेष्ठीशब्द ईप्रत्ययान्तः बाहुलकादाकारलोपः । सव्ये तिष्ठति सव्येष्ठा सारथिः ॥

"सुषामादिषु च" ॥ क्वचित्सात्पदाद्योरिति प्रतिषेधे प्राप्ते क्वचिच्चादित एवाप्राप्ते षत्वे सुषामादिषु मूर्द्धन्यो विधीयते । 'दुष्षामेति' । विसर्जनीयशर्व्यवायेपीत्यधिकारादत्र षत्वम् । 'सुशब्दस्येत्यादि' । अत्रैवमभिसंबन्धः, सुदुष्शब्दयोस्तु क्रियाविशेषविषयत्वादनुपसर्गत्वे सति निषेधः । 'दुःषेधइति' । 'पाठोयमिति' । तत्र सुशब्दस्य सुः पूजायामिति कर्मप्रवचनीयसंज्ञा, सा चोपसर्गसंज्ञाया बाधिका, आकडाराधिकारात्, निर्दुरोरप्युपसर्गत्वाभावः, क्रियान्तरविषयत्वात्, गमिक्रियाविषयौ हि तौ, निर्गतः सेधो निःषेधः, दुर्गतः सेधो दुःषेध इति । तेनोपसर्गात्सुनोतीत्यादिना नैतेषु षत्वप्राप्तिः, एवं तावत् षिधू हिंसासंराद्धोरित्यस्य घञि सेध इति रूपमित्याश्रित्योक्तम्, यदा तु षिध गत्यामित्यस्य घञन्तस्य रूपं तदाप्याह । 'सेधतेर्गताविति प्रतिषेधबाधनार्थं चेति' । सुषन्धिरित्यादावुपसर्गे घोः किः, समः षत्वम् । 'उणादिष्वेताविति' । पृभिदिव्यधिगृधिधृषिभ्यः कुरिति वर्तमाने अपदुःसुषु स्थ इति कुप्रत्ययः । 'गौरिषक्थ इति' । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । 'प्रतिष्णिकेति' । प्रतिपूर्वात्स्नातेरातश्चोपसर्गइत्यङ् तदन्ताट्टाप्, ततोज्ञातादिषु कः । केण इति ह्रस्वत्वं, प्रत्ययस्थादितीत्वम् । 'नौषेचनमिति' । सिचेर्ल्युट् । 'दुन्दुभिषेवणमिति' । सेवतेः सीव्यतेर्वा ल्युट्, [1]एतिसंज्ञायामगादितिगणसूत्रम् तद्व्याचष्ट । 'एकारपरस्येति' । हरयः सेना अस्य हरिषेणः, परितः सेना अस्य परिषेणः । 'पृथ्वी सेना यस्येति' । स्त्रियाः पुंवदिति पूर्वपदस्य पुंवद्भावः । 'नक्षत्राद्वेति' । पूर्वेण नित्ये प्राप्ते विकल्पः, चकारोऽनुक्तसमुच्चयार्थः, आकृतिगणतामस्य सूचयति, तदाह । 'अविहितलक्षणइति' ॥

---

१ मु० मू० एति संज्ञायामगात्, नक्षत्राद्वा, एतयोः सूत्ररूपेण उपन्यासः स पदमञ्जर्यसंमतः ।

"ह्रस्वात्तादौ तद्धिते" ॥ अपदान्तस्येत्यधिकारादप्राप्तं षत्वं विधीयते, तरबादय एव तावत्तद्धिताः संभवन्तीत्याह। 'त[1]रप्तम-बिति'। 'सर्पिष्टरमिति'। स[2]र्पिर्जातेः प्रकर्षाभावेऽपि सहचारिणो गुणस्य गन्धादेः प्रकर्षे प्रत्ययः। 'चतुष्टयइति'। जसः शी। 'सर्पिष्टइति'। प्रतिप्रयोगे पञ्चम्यास्तसिः। 'आविष्ट्य इति'। अव्ययात्त्यबित्यत्राविः-शब्दाच्छन्दसीतिवचनात्त्यप्। 'सर्पिःसादिति'। विभाषा सातिःकार्त्स्न्ये, ननु च सात्पदाद्योरिति प्रतिषेधादेवात्र षत्वं न भविष्यतीत्यत आह। 'प्रत्ययसकारस्येति'। 'भिन्द्युस्तरां छिन्द्युस्तरामिति'। भिदिछिदिभ्यां लिङ्, झेर्जुसि यासुट्, तिङश्चेति तरप्, किमेत्तिङव्ययघादिति आमु-प्रत्ययः, आदिग्रहणं शक्यमकर्त्तुं, तीत्येव यस्मिन्विधिस्तदादावल्ग्रहणे, पुंसः प्रतिषेधः, पुंस्त्वं पुंस्ता ॥

"निसस्तपतावनासेवने" ॥ 'निस्तप्तं रक्षो निस्तप्ता अरातय इत्यत्रेति'। एवमपि कस्यां चिच्छाखायां पाठमुपलभ्य परिहार उच्यते तैत्तिरीयकास्तु षत्वमेव पठन्ति ॥

युष्मत्तततक्षुःष्वन्तःपादम्" ॥ ततक्षुःष्विति सकारान्तानुकर-णात्परस्य सुप्सकारस्य नुम्विसर्जनीयशर्व्यवायेऽपीति षत्वम्। 'तकारादि-ष्विति'। एतद्युष्मद एव विशेषणमितरयोरव्यभिचारात्। 'त्वं त्वा इत्यादि'। एतेषामेव संभव इत्यर्थः। 'अग्निस्तत्पुनराहेति'। अग्नि-रित्ययं पूर्वस्य पादस्यान्तः यन्मआत्मनो मिन्दाभूदग्निरिति, तेनायं पादान्ते सकारो न पादमध्ये ॥

"स्तुतस्तोमयोश्छन्दसि" ॥ 'पूर्वपदादित्येव सिद्धइति'। पूर्वपदमिति सामान्येन तत्राश्रीते न तु समासावयव एवेति वाक्येऽपि तेनैव सिद्धं षत्वमिति भावः, ततश्च स्तुतस्तोमग्रहणं प्रपञ्चार्थम्, छन्दोग्रहणं तूत्तरार्थं कर्त्तव्यमेव ॥

---

१ मु॰ मू॰ त; तमेति पाठः।
२ सर्पिरिति नास्ति ई॰ पु॰।

"पूर्वपदात्" ॥ 'असमासेऽपीति'। एतच्च सवनादिषु सवनेसवनइत्यादीनां पाठादेवावसीयते ॥

"सुञः" ॥ 'अभीषुणा इति'। इकः सुञीति दीर्घत्वं, नश्च धातुस्थोरुषुभ्य इति णत्वं, क्वचित्तु वृत्तावेवैतत्पठ्यते ॥

"सनोतेरनः" ॥ 'गोषा इति'। जनसनखनक्रमगमो विट्, विड्वनोरनुनासिकस्यात्, क्वचित्त्विदमपि वृत्तावेवास्ति। 'गोसनिमिति'। छन्दसि वनसनरक्षिमथामितीन्प्रत्ययः। 'सिसानयिषतीति'। यद्यप्यण्यन्तः सूत्रउपात्तस्तथाप्यण्यन्तस्य प्रतिषेधश्रवने प्रयोजनं नास्तीति कृत्वा ण्यर्थो[1] विज्ञास्यते, इह तु सिसनियतीति स्तौतिण्योरेव षणीत्येतस्मान्नियमादप्रसङ्गः षत्वस्य। 'सिसनीरिति'। क्विप्यतो लोपः, ततः सुः, हल्ङ्याब्भ्यो लोपः, सनः सकारस्य षत्वं प्राप्नोति रुत्वं च, तत्र षत्वस्यासिद्धत्वाद्रुत्वं र्वोरुपधाया दीर्घ इति दीर्घत्वम्, अत्र सन् षत्वभूतो न भवतीति स्तौतिण्योरेवेत्यस्य नियमस्यायमविषय इति षत्वं प्रसक्तमस्मान्नियमान्न भवति, एतस्मिंश्च प्रयोजने सति सामर्थ्याभावाद् ण्यन्तस्य नियमाभावात्सिषाणयिषतीति षत्वं भवत्येव ॥

"सहेः पृतनर्ताभ्यां च" ॥ 'योगविभागमिति'। तत्र द्वितीयो योगः पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थः। 'संहितायामेवेति'। उभयत्रापि संहिताधिकारादयं विशेषो लभ्यते, नहिवृतिवृषेत्यादिना दीर्घत्वम्।

"न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्" । 'विस्रंसिकाया इति'। संज्ञायामिति ण्वुल्। 'विस्रब्धमिति'। स्रम्भु विश्वासे उक्तः, यस्य विभाषेतीट्प्रतिषेधः, अनिदितामिति नलोपः। 'विसृप इति'। सृपितृदोः कसुन्, सवनेसवनइत्यादौ वीप्सायां द्विर्वचनं, किंसइत्यत्रायोगवाहानामट्सु णत्वं शर्षु जश्भावषत्वे इति वचनात्कुम्र्व्यवाये इति षत्वप्रसङ्गः, यथा तु शर्षूपदेशो न कर्तव्यस्तथा हयवरडित्यत्रोक्तम्, अश्वसनिग्रहणमनर्थकमनिणन्तत्वादत आह। 'अश्वसनिग्रहणमिति'। ज्ञापनस्य प्रयोजनमाह। 'जलाषाहमिति' ॥

[1] ण्यन्तइति ह॰ पु॰ पा॰।

"सात्पदाद्योः"॥ आदिग्रहणं शक्यमकर्तुं, पदादिति पञ्चमी-निर्देशः कर्त्तव्यः, पदात्परस्य सकारस्य नेति, इहापि तर्हि न प्राप्नोति, अग्निषु वायुषु त्वक्षु, सातिप्रतिषेधो ज्ञापयति स्वादौ यत्पदं न तस्मात्प्रतिषेध इति, तत्रायमप्यर्थः, दधिसिक्धुषिगित्यादौ प्रतिषेधः सिद्धो भवति, नह्ययं सकारः पदादिः, गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनात्पदात्परस्तु भवति, तत्रापि पूर्व-पदस्य सुबन्तत्वात्, बहुचस्तु[१] प्रतिषेधः, बहुचस्तु परस्य प्रतिषेधो वक्तव्यः बहुसेक्ता, नह्यत्र पदात्परः सकारः॥

"सिचो यङि"॥ 'परिसेसिच्यतइति'। अत्राभ्याससकारस्य उपसर्गात्सुनोतीत्यादिना प्राप्तिः, धातुसकारस्य त्वादेशसकारत्वात्स्था-दिष्वभ्यासेन चेत्येतस्माच्च, ननु चोपसर्गात्प्रतिषेधविषये षत्वमारभ्यते तद्यथैव पदादिप्रतिषेधं बाधते एवं सिचो यङीत्येतमपि बाधेतात आह। 'उपसर्गाद्या प्राप्तिरिति'। येन नाप्राप्ते तस्य बाधनं भवति, नाप्राप्ते च पदादिलक्षणे प्रतिषेधे उपसर्गात्षत्वमारभ्यते सिचो यङीत्येतस्मिंस्तु प्राप्ते चाप्राप्ते च, अथ वा पुरस्तादपवादा अनन्तरान्विधान्बाधन्ते न परानिति, अनेनैतदपि निरस्तं स्थादिष्वभ्यासेन चेत्यनेन यथाभिषिषि-क्षतीत्यत्र स्तौतिण्योरेवेतिनियमं बाधित्वा षत्वं भवति तथैनमपि प्रति-षेधं बाधित्वा धातुसकारस्य प्रसङ्ग इति॥

"सेधतेर्गतौ"॥ उपसर्गादिति प्राप्तिः प्रतिषिध्यते॥

"प्रतिस्तब्धनिस्तब्धौ च"॥ स्तम्भेरिति प्राप्तिः प्रतिषिध्यते॥

"सोढः"॥ 'सोढ्भूतो[२] इत्यतइति'। निष्ठान्तस्य प्रथमया निर्देशशङ्कामपाकरोति। 'परिसोढेति'। परिनिविभ्य इति प्राप्ते प्रतिषेधः॥

"स्तम्भुसिवुसहां चङि"॥ अत्राद्यस्य स्तम्भेरिति प्राप्तिः, इत-रयोस्तु परिनिविभ्यः सेवसितेति। 'अभ्यतस्तम्भदिति'। प्राक्सितादड्-

१ आदिग्रहणं मनर्थकमिति पा. ह. पु.।
२ अयं पाठो नास्ति ह. पु.।

व्यवायेपीति स्थादिष्वभ्यासेन चेति प्राप्तिः, पर्यषीषिवदित्यत्रापि सिवादीनां वाड्व्यवायेपीति प्राप्तिः । 'उपसर्गादिति वक्तव्यमिति' । किमर्थमित्याह । 'उपसर्गाद्धा प्राप्तिरिति' ॥

"सुनोतेः स्यसनोः" ॥ 'अत्रेत्यादि' । इतिकरणो हेतौ, यस्मात् स्तौतिण्योरेवेति नियमादभ्यासादप्राप्तिः स्थादिष्वेवाभ्यासस्येति नियमादुपसर्गादप्यप्राप्तिः, तस्मादभिसुसूरित्युदाहरन्ति, अथ वा कथं षत्वप्रसङ्ग इत आह । 'अत्र हीति' । यथा चात्र सनुषत्वभूतो न भवति तथा सनोतेरन इत्यत्रोक्तम् । 'अभ्यासात्प्राप्तिरिति' । अभ्यासग्रहणमुपसर्गात्प्राप्तिरसंभवादभ्यासेन व्यवहिताच्च धातुसकारस्य प्रसङ्गः, नाप्यभ्याससकारस्य, स्थादिनियमेन व्यावर्तितत्वात्, एवं चात्राभिग्रहणमतन्त्रं सुसूरित्येवोदाहर्तव्यम् ॥

"सदिस्वञ्ज्योः परस्य लिटि" ॥ लिटि द्विर्वचने कृते द्वौ सकारौ भवतः, तत्र सदेः स्थादिष्वभ्यासेन चेति वचनात्सदिरप्रतेरिति षत्वप्रसङ्गः, स्वञ्जेरप्युपसर्गात्सुनोतीत्यादिना । 'परिषस्वजइति' । कथं पुनरत्र नलोपः, यावता संयोगान्तत्वान्नात्र लिटः कित्त्वमस्ति, अत आह । 'स्वञ्जेरिति' । एतच्चेन्धिभवतिभ्यां चेत्यत्र व्याख्यातं, स्वञ्जिग्रहणञ्च वार्त्तिके दर्शनात्सूत्रे प्रक्षिप्तं, यथाह सदेर्लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानमिति ॥

"निव्यभिभ्योड्व्यवाये वा छन्दसि" ॥ प्रकरणेन प्राप्तस्य सत्वमात्रस्य प्रतिषेधः । 'न्यष्टौदिति' । उतो वृद्धिर्लुकि हलीति वृद्धिः, अभ्यस्याद्विषेः पृतना अरातीरित्यप्युदाहरणम् ॥

इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यामष्टमस्याध्यायस्य तृतीयः पादः ॥

"रषाभ्यां नो णः समानपदे" ॥ निमित्तयोरादेशे षाकार उच्चारणार्थः, समानञ्च तत्पदं, समानपदं, निमित्तनिमित्तिनोश्चाय-माधारनिर्देशः, तदाह । 'समानपदस्थो चेदिति' । एकपर्यायः समा-

नशब्दः। निमित्ते रषौ, निमित्ती नकारः, यद्यप्यसौ प्रागेव सिद्धस्वरूपस्तथापि तत्स्थाने भवतो णकारस्य यन्निमित्तं तस्यापि तेन संबन्धोऽस्त्येव, णकार एव वा निमित्ती तस्य तु विधानोत्तरकालं समानपदस्थत्वम्। 'ग्रहणमुत्तरार्थमिति'। अड्व्यवाये णत्वं वक्ष्यति तदस्मादपि यथा स्यात्, अथेहार्थमपि कस्मान्न भवति अत आह। 'ष्टुत्वेनैव सिद्धमेतदिति'। 'ऋवर्णाच्चेति वक्तव्यमिति'। रषाभ्यां णत्वमुच्यमानमृकारान्न प्राप्नोतीति वचनं, न च शक्यं वक्तुमृवर्णस्थाद्रेफाद्भविष्यतीति। वर्णा ह्यत्र रेफः सूत्रउपात्तः, षकारेण साहचर्यात्। न च वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते। 'तिसृणामिति'। न तिसृचतसृ इति प्रतिषेधान्नामीतिदीर्घत्वाभावः, तत्तर्हि वक्तव्यं नेत्याह। 'रश्रुतिसामान्यनिर्देशात्सिद्धमिति'। र इति श्रुतिः श्रोत्रेणोपलब्धिर्ययोस्ते रश्रुती वर्णात्मिका चावर्णात्मिका च व्यक्तिस्तयोर्यत्सामान्यं तन्निर्दिश्यते न तु वर्णात्मिकैव व्यक्तिरित्यर्थः। नन्वेवमपि ऋकारे त्रयो भागा अभितोऽज्भक्तिर्मध्ये रेफभक्तिर्मात्रा चतुर्भागात्मकास्ततश्च परयाज्भक्त्या व्यवधानान्न प्राप्नोति। अड्व्यवायइत्येवं भविष्यति। न पराज्भक्तिरट्संनिविष्टा, सा ह्यर्द्धमात्रा चतुर्भागात्मिका ऋकारभक्तिः। न च तस्याः सवर्णग्रहणेन नाप्यड्ग्रहणेन ग्रहणमसवर्णत्वात्, नहि तस्याः स्थानं प्रयत्नो वा पृथगस्ति। तस्मात्सामान्यनिर्द्देशेऽपि नैव णत्वं सिध्यति, अत आह। 'वर्णभक्त्या चेति'। वर्णस्य समुदायस्यावयवभूता या पराज्भक्तिस्तयेत्यर्थः। ननु च नृनमनग्रहणं वृद्ध्यर्थं स्यात् नृनमनस्यापत्यं नार्नमनिरिति, नैतदस्ति। बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् असिद्धं बहिरङ्गमन्तरङ्गे। 'अथ वेति'। व्यक्तिनिर्द्देशेऽपि न दोष इत्यर्थः। अपरः प्रकारोऽभितोऽज्भक्ती चतुर्भागात्मिके मध्ये शुद्धो रेफोऽर्द्धमात्रात्मकस्तेन व्यक्तिनिर्द्देशेऽप्यदोष इत्यर्थः। ननु च परयाज्भक्त्या व्यवधानम्। एवं तर्ह्युत्तरसूत्रे योगविभागः करिष्यते। व्यवायेऽपीति। व्यवायेऽपि णत्वं भवति, ततोऽट्कुप्वाङ्नुम्भिरिति। इदमिदानीं किमर्थं नियमार्थं वर्णात्मकैर्व्यवाये यदि भवति अडादिभिरेवेति, अपदान्तस्य मूर्द्धन्य इत्यधिकारादत्र ग्रहणं शक्यमकर्तुम्। उत्तरत्र च पदान्तस्येति प्रतिषेधः॥

"अट्कुप्वाङ्नुम्व्यवायेऽपि" ॥ रषाभ्यामिति पञ्चमीनिर्देशा द्व्यवाये न प्राप्नोतीत्ययमारम्भः । 'पर्यणद्धमिति' । नह बन्धने, पर्याङ्पूर्वः निष्ठा, नहो धः । ननु चाड्व्यवायइत्येवात्र णत्वं सिद्धं तत्किमर्थमाङ्ग्रहणमित्यत आह । 'अड्व्यवायइत्येव सिद्धमिति' । क्वचित्तु आङ्ग्रहणं पदव्यवायेपीत्यस्य बाधनार्थमित्येतावत्पठ्यते । 'तृंहणमिति' । तृहि वृद्धौ, इदितो नुम्, नश्चापदान्तस्य झलीत्यनुस्वारः । यद्येवमनुस्वारेणात्र व्यवायो न नुमात आह । 'नुम्ग्रहणमनुस्वारोपलक्षणार्थमिति' । झल्परस्य नुमोऽनुस्वारविधानात्स्थानिना नुमानुस्वार उपलक्ष्यते, एवमपि योऽनुस्वारो नुम्स्थानिको न भवति तद्व्यवाये न प्राप्नोति तृंह स्तृंह हिंसार्थौ, । तंहणमिति, अत आह । 'तेनेति' । नात्र नुम्स्थानिकोनुस्वार उपलक्ष्यते किं तर्ह्यनुस्वारमात्रं तेनात्रापि भवतीत्यर्थः । यत्र तर्हि नुम एव श्रवणं नानुस्वारस्य तत्र णत्वं भवति वा न वात आह । 'सत्यपि चेति' । यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदिति कालविशेषोपलक्षणपरायां चोदनायां सत्यपि दिवा नक्षत्रदर्शने वाग् न विसृज्यते उपलक्षितस्य कालस्याभावात् । असत्यपि नक्षत्रदर्शने रात्रौ विसृज्यते, तस्य कालस्य भावात्तथेहापि द्रष्टव्यम् । 'प्रेन्वनमिति' । इवि: प्रीणनार्थः । 'इदितो नुम्, अत्रेआदेः सनुम इति णत्वप्रसङ्गः, इह समुदाये वाक्यपरिसमाप्तिर्दृष्टा, यथा गर्गाः शतं दण्ड्यन्तामिति अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति । प्रत्येकमपि दृष्टा, यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः, तत्रेह यदि पूर्वः कल्प आश्रीयते न क्वचित्स्यान्न हि समस्तैरडादिभिर्व्यवायः क्वचिदपि संभवति, द्वितीये तु अर्हणेत्यादौ न स्यात्, अटा कवर्गेण च व्यवायात्, अत आह । 'व्यवायोपलक्षणार्थत्वादिति' । इह ये यदुपलक्षणायोपादीयन्ते तेषामेकेन द्वाभ्यां बहुभिरप्युपलक्षितः स गृह्यते, तद्यथा गर्गैः सह न भोक्तव्यमित्युक्ते प्रत्येकं च सह न भुज्यते, समुदितैरपि, तथेहापि शक्नुवन्त्यडादयः समस्ता व्यस्ताश्च व्यवायमुपलक्षयितुमिति सर्वत्र भवति, अडादिव्यवाये णत्वे ऽन्यवाये प्रतिषेधः, चार्थेन स्पर्शेन, यद्यप्यत्रान्येनापि व्यवायो यस्त्वटा व्यवायस्तदाश्रयं णत्वं प्रा-

प्नोति, यत्र स्वनिर्दिष्टैरेव व्यवायस्तत्रैव न स्यात् कृत्स्नं मृघ्नोतीति, नैष दोषः, रषाभ्यामित्यत्र तस्मादिति परिभाषोपस्थानाद्व्यवाये णत्वासङ्गात्सूत्रमिदमारभ्यमाणमड्व्यादिव्यवायएव णत्वमनुजानाति नान्यव्यवाये, तस्य निर्दिष्टग्रहणेन निवर्तितत्वात्, यदि च निर्दिष्टव्यतिरिक्तेऽपि व्यवाये णत्वं स्यात्, नुम्ग्रहणमनर्थकं स्यात् केवलेन नुमा व्यवायासम्भवात् ॥

"पूर्वपदात्संज्ञायामगः" ॥ रषाभ्यामिति वर्त्तते, न च तयोः पूर्वपदत्वं सम्भवतीति सामर्थ्यात्पूर्वपदस्थान्निमित्तादुत्तरस्येत्ययमर्थो विज्ञायतइत्याह । 'पूर्वपदस्थादिति' । रेफषकारान्तात्पूर्वपदादित्ययं त्वर्थो न भवति व्याख्यानात् । 'द्रुणसइति' । द्रुरिव नासिका यस्येति बहुव्रीहिः, अञ्नासिकाया इत्यच्प्रत्ययो नसादेशश्च । 'वाध्रीणस इति' । वध्र्या विकारो वाध्री रज्जुः, वाध्रीव नासिका यस्य स वाध्रीणसो मृगविशेषः, तत्र पूर्वपदस्योपमाननिष्ठत्वाद्व्यधिकरणत्वात्पुंवद्भावाभावः, नस्शब्दः प्रियादिषु वा द्रष्टव्यः । 'शूर्पणखेति' । नखमुखात्संज्ञायामिति प्रतिषेधः, यदा तु योगो विवक्ष्यते न संज्ञा शूर्पाकाराणि नखानि यस्या इति तदा ङीष् भवति, णत्वं तु न भवति, शूर्पनखी, एवञ्च णत्वङीषौ न सम्भवतः । ततः शूर्पनखीवाक्यादिति । अगइति शक्यमवक्तुम्, कस्मान्न भवति ऋचामयनमृगयनमिति । निपातनादेतत्सिद्धम् । अणृगयनादिभ्य इति । यथान्यत्रोक्तं सर्वनामसंज्ञायां निपातनाण्णत्वाभाव इति । 'पूर्वपदात्संज्ञायामेवेति' । विपरीतस्तु नियमो न भवति पूर्वपदादेव संज्ञायामिति, शिवादिषु सुषेणशब्दस्य पाठात्, सिद्धे सत्यारम्भो नियमाय भवति, कथमत्र सिद्धिरित्याह । 'समानपदेऽपि हीति' । यद्यपि पूर्वपदस्थं निमित्तमुत्तरपदस्थो निमित्तीति भिन्नपदस्थत्वमप्यस्ति तथापि समासे कृते ततो या विभक्तिरुत्पद्यते तया समुदायस्य पदसंज्ञायां सत्यां तस्मिन्समानेपि पदे भावादस्त्येव पूर्वेण प्राप्तिः, समानपदस्थं हि तत्राश्रितं न भिन्नपदस्थं प्रतिषिद्धं, तस्मादुपपन्नं

१ व्यक्तुमिति वा· पै· पु· ।

नियमार्थत्वं, यद्येवं यथोत्तरपदस्थस्य नकारस्य णत्वं नियमेन व्यावर्त्यते चर्मनासिक इति तथा तद्वितपूर्वपदस्थस्यापि व्यावर्त्येत खरपस्यापत्यं नडादिभ्यः फक् खारपायणः, मातृभोगाय हितः भोगोत्तरपदात्खः। मातृभोगीणः, करणं प्रियमस्य करणप्रिय इत्याह। 'स चेति'। संबन्धिशब्दो नियतमेव प्रतियोगिनमुपस्थापयति, तद्यथा मातरि वर्त्तितव्यं पितरि शुश्रूषितव्यमिति, न चोच्यते स्वस्यां मातरि स्वस्मिन्पितरीति, अथ च संबन्धादेतद्गम्यते यस्य या माता तस्यामिति। यो यस्य पिता तस्मिन्निति, पूर्वपदमुत्तरपदमिति च संबन्धिशब्दावेतौ पूर्वपदमपेक्ष्योत्तरपदं भवति उत्तरपदं चापेक्ष्य पूर्वपदं तत्र संबन्धादेतदवगन्तव्यं, यत्प्रति पूर्वपदमित्येतद्भवति तत्स्थस्य नियम इति। किञ्च प्रत्येतद्भवति उत्तरपदम्, अयं तर्हि दोषः, अग इति नियमस्यैव प्रतिषेधः प्राप्नोति, तेनैकवाक्यत्वात् न णत्वस्य, ततश्च संज्ञायाञ्च गान्तरे णत्वं प्राप्नोति अत आह। 'अग इति'। अग इति योयं प्रतिषेधः स णत्वस्य न नियमस्य, अत्र हेतुः। 'योगविभागेनेति'। पूर्वपदात्संज्ञायामित्येको योगः, अग इति द्वितीयः, अनेन च या च यावती च णत्वप्राप्तिः सा सर्वा प्रतिषिध्यते, योगविभागसामर्थ्यात्। 'अरे त्वित्यादि'। कथं पुनः समानमेवेत्यवधारणं लभ्यते ऽत आह। 'समानग्रहणादिति'। पदइत्येव वक्तव्यं, तत्रापदस्थयोर्निमित्तनिमित्तिनोरसंभवात्पदग्रहणमेकत्वविवक्षार्थं विज्ञायते, एवं सिद्धे यत्समानग्रहणं क्रियते तस्यैतत्प्रयोजनं यथैवं विज्ञायेत समानमेव यत्पदमिति, तेषामेवं ब्रुवतां विध्यर्थमेतद्विज्ञायतइत्याह। 'तेषामिति'। विध्यर्थत्वमेवोपपादयति। 'समासे हीति'। अथास्मिन्पक्षे खारपायण इत्यत्र कथं णत्वं, यावता खरपशब्दे खरशब्दस्यापि पदत्वमस्ति तत्स्थत्वाद्रेफस्य समानपदस्थत्वमेव न भवति, नैष दोषः, यत्र द्वावपि निमित्तनिमित्तिनौसमानपदस्थत्वं व्यभिचरतस्तत्र णत्वाभावः, इह रेफस्य व्यभिचारेऽपि नकारस्य समानपदस्थत्वाव्यभिचाराण्णत्वं प्रवर्त्तते,

"वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः"॥ वनमिति षष्ठ्याः स्थाने प्रथमा, उदाहरणे वनगिर्योः संज्ञायामिति पूर्वपदस्य

दीर्घत्वम् । 'अग्रेवणमिति' । षष्ठीसमासे राजदन्तादित्वाद्वनशब्दस्य परनिपातः, हलदन्तादिति सप्तम्या अलुक्, अथ न संज्ञा ततो राजदन्तादिषु निपातनादलुक् । 'सिद्धे सतीत्यादि' । पुरगादिष्वेतदुच्यते, अग्रेशब्दे त्वसंज्ञायां विध्यर्थमित्याहुः । 'एतेभ्य एव वननकारस्येति' । एतेभ्यो वननकारस्यैवेत्ययं तु नियमो न भवति दीर्घाच्चाख्यात्तद्धि दीर्घान्तेष्वयं नियमो भवेदिति, न च वनादन्यत्रोत्तरपदे दीर्घान्तत्वमेषां संभवति यत्रास्य णत्वं दीर्घान्तेषु व्यावर्त्येत ॥

"प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि" ॥ अत्रादितस्त्रिषु संज्ञायामसंज्ञायामप्राप्तं णत्वं विधीयते, कथं, संज्ञायां तावत्पूर्वपदात्संज्ञायामित्येतदस्त्यपि नियमार्थमथापि विध्यर्थमुभयथापि अवश्यं वनं पुरगेत्यादिसूत्रं नियमार्थं पुरगादिष्वेव वननकारस्येति, ततश्च प्रादिष्वप्राप्तिः, असंज्ञायामपि नियमे तावदप्राप्तिः संज्ञायामेवेति नियमात्, विधावपि संज्ञायां विधानादन्यत्राप्राप्तिरेव, शरादिषु त्वोषधिवनस्पतिवाचिषु संज्ञायामसंज्ञायां चोत्तरसूत्रेण प्राप्तस्य विकल्पस्यापवादः, असंज्ञायामपीत्यनुच्यमाने संज्ञायामित्यधिकारात्तत्रैव स्यात् । निवर्तिष्यतेसंज्ञायामिति । यदि निवर्तते संज्ञायां न प्राप्नोति पुरगादिभ्य एव वननकारस्येति नियमात्, अयं तु विधिरसंज्ञायां सावकाशः, संज्ञायामपि परत्वादयमेव विधिर्भविष्यति, पूर्वत्रासिद्धे नास्ति विप्रतिषेधः, तस्मादसंज्ञायामपीति वक्तव्यम् । 'प्रवणं निर्वणमिति' । प्रादिसमासौ । 'अन्तर्वणमिति' । विभक्त्यर्थे ऽव्ययीभावः, शरवणादयः षष्ठीसमासाः ॥

"विभाषौषधिवनस्पतिभ्यः" ॥ असंज्ञायामपीत्यनुवर्तते, तेन संज्ञाऽसंज्ञयोर्द्वयोरयं विकल्पः, अन्ये तु वृत्तावनुक्तत्वात्तस्याधिकारं नेच्छन्ति, तेषां संज्ञाविषये पुरगादिभ्य इति नियमस्तेन भवितव्यं, यदि त्विष्यते यत्नान्तरमास्थेयम्, इह ये पुष्यन्ति फलन्ति च ते वानस्पत्याः, ये फलन्त्येव न पुष्यन्ति ते वनस्पतयः, उभयेपि ते वृक्षा इत्यभिधानविदः, ततश्च वनस्पतिशब्दोपादानेन णत्वं विकल्प्यमानं

शिरीषवणमित्यत्रैव स्यात्, शिरीषादयो हि पुष्यन्ति फलन्ति च, तस्माद्वृक्षग्रहणं कर्त्तव्यं तदिदमाशङ्कते तावत् । 'फलीवनस्पतिरित्यादि' । फलमेव यस्य न पुष्पं स वनस्पतिरुदुम्बरादिः, पुष्पोपगा वेतसादयः, फलोपगा उदुम्बरादयः, उभयोपगा आम्रादयश्च वृक्षाः, अन्तात्यन्तादिसूत्रे डोऽन्यत्रापि[1] दृश्यत इतिवचनाड्डः, फलपाकेन विनाशो यासान्ता ओषध्यः शाल्यादयः, लताप्रतानवत्यो मालत्यादयः गुल्म, ह्रस्वस्कन्धास्तरवः, बहुकाण्ड[2]पत्राः वीरुध इति, यद्यपि वृक्षवनस्पत्योर्भेदः स्मर्यत इति शङ्कां परिहरति । 'इहाभेदेन ग्रहणं द्रष्टव्यमिति' । अत्र च लुपि युक्तवद्व्यक्तिवचन इत्यत्र भाष्यकारवचनं लिङ्गम्, उक्तं हि तत्र व्यक्तिवचन इति किं, शिरीषाणामदूरभवो ग्रामः शिरीषाः तस्य वनं शिरीषवनमिति, वनस्पतित्वं नातिदिश्यते, यद्यतिदिश्येत विभाषौषधिवनस्पतिभ्य इति णत्वं प्रसज्येतेति, यदि चोक्तो भेद इहाश्रितः स्यात्, शिरीषाणामवनस्पतित्वाद्वनस्पतित्वणत्वयोः प्रसञ्जनं नोपपद्येत ॥

अह्नोऽदन्तात्" ॥ 'पूर्वाह्ण इति' । अह्नः पूर्वो भाग इति पूर्वापरेत्यादिसूत्रेण समासः, राजाहःसखिभ्यष्टच्, अह्नोऽह्न एतेभ्य इत्यह्नादेशः । 'निरह्ण इति' । निर्गतोऽह्न इति प्रादिसमासः, शेषं पूर्ववत् । 'दीर्घाह्नी शरदिति' । बहुव्रीहिरयं तेन टज्न भवति, टज्विधौ तत्पुरुषाधिकारात् । अन उपधालोपिनोऽन्यतरस्यामिति ङीप्, अल्लोपोऽनः, अकारान्तस्य ग्रहणादत्र णत्वं न भवति, यदि तु नकारस्यायं षष्ठ्या निर्देशः स्यात् अत्रापि णत्वं स्यात्, अकारान्तस्य तु[3] ग्रहणं प्रकरणाद्विज्ञायते, सर्वत्र प्रकरणे स्थानी प्रथमया निर्दिश्यते, वनं, वाहनं, यानमिति, यद्वा यु[4]वादिषु पाठादस्य णत्वाभावः, अवश्यकर्तव्यश्च यु[5]वादिषु पाठः, प्रातिपदिकान्तेतिविकल्पेन णत्वं माभूदिति, अन्तग्रहणं ज्ञापकमत्र प्रकरणे न षष-

१ अन्यत्रापीति ना· ई· पु· ।
२ बहुकाण्डप्राग्भारायास्ता विरुध इति पा· ई· पु· ।
३ त्विति ना· ई· पु· ।
४ क्षुभ्नादिष्विति पा· ई· पु· ।
५ क्षुभ्नादिष्विति पा· ई· पु· ।

मन्तरेण वर्णेनापि तदन्तविधिर्भवतीति, तेन रषाभ्यामित्यत्र तदन्तविधिर्न भवति ॥

"वाहनमाहितात्" ॥ 'उह्यतेऽनेनेति'। वाहनं शकटादि, करणे ल्युट्, अस्मादेव निपातनादुपधावृद्धिः। आहितमारोपितमुच्यते, यदा वाह्यं नारोपितं केवलं संनिहितं तदा न प्राप्नोति तदापीष्यते यदाह। 'आहितोपस्थितयोरिति वक्तव्यमिति'। न वा भूतकालस्याविवक्षितत्वात्, स्वामिभावनिवृत्तिपरायां चोदनायामाहितमिति भूतकालो न विवक्ष्यते तेनाहितादाधायिष्यमाणाच्च भविष्यति, केवलं स्वस्वामिभावविवक्षायामेव न भवति, यथा प्रत्युदाहरणे उक्तं दाक्षिस्वामिकमित्यर्थ इति, दाक्षादयोऽपि यदा वाह्यत्वेन विवक्ष्यन्ते न स्वामित्वेन तदा णत्वं भवत्येव ॥

"पानं देशे" ॥ 'क्षीरं पानं येषामिति'। कर्त्तरि षष्ठी, उशीनरादयः शब्दा देशद्वारेण पुरुषेषु वर्त्तन्त इति देशाभिधायिनो भवन्ति। 'दाक्षीणां पानमिति'। अत्रापि कर्मसाधन एव पानशब्दः ॥

"वा भावकरणयोः" ॥ 'गिरिनद्यादीनामिति'। संज्ञायां प्राप्ते ऽसंज्ञायामप्राप्त इत्युभयत्र विभाषेयमित्याहुः ॥

"प्रातिपदिकान्तनुम्विभक्तिषु च" ॥ 'माषवापिणाविति'। बहुलमभीक्ष्ण्य इति णिनिः। 'माषवापाणीति'। माषान्वपन्तीति कर्मण्यण्, जश्शसोः शि, नपुंसकस्य झलच इति नुम्, इह कस्मान्न भवति गर्गाणां भगिनी गर्गभगिनीति। भगिनीत्यस्य प्रातिपदिकस्यान्तो नकार इत्यस्ति प्राप्तिरित्यत आह। 'पूर्वपदाधिकारादिति'। एतच्च पूर्वपदात्संज्ञायामित्यत्रैव व्याख्यातं, किमिदानीं नैव भवति गर्गभगिणीति, भवति विवक्षान्तरे शास्त्रान्तरेण नित्यं न त्वनेनेत्याह। 'यदा त्विति'। 'मातृभोगीणवदिति'। एतदपि तत्रैव व्याख्यातं, यद्युत्तरपदं प्रातिपदिकं गृह्यते माषवापिणीत्यत्र णत्वं न प्राप्नोति यदुत्तरपदं वापिनीति न तस्यान्तो नकारः, यस्य चान्तो नकारो वापिनिति न तदुत्तरपदमत आह। 'माषवापिणीत्यादि'। उपपदमतिङिति त्यत्रैतद्व्याख्यातम्। उत्त-

रपदभूतं प्रातिपदिकं गृह्यतइत्यत्र ज्ञापकमाह । 'तथा चेति' । कथमेतज्ज्ञापकमित्याह । 'स हीति' । अङ्गस्य नुम्विधीयते, ततश्च तद्भक्तो नुम् तद्ग्रहणेनैव गृह्यते नोत्तरपदग्रहणेन, यदि च यत्किं च न प्रातिपदिकं गृह्येत नोत्तरपदमेव, ततो नुम्ग्रहणमकर्त्तव्यमेव स्यात्, समासप्रातिपदिकान्त इत्येव सिद्धत्वात् । 'आर्ययूनेति' । विशेषणसमासः । श्वयुवमघोनामतद्धितइति संप्रसारणम् । 'प्रपक्वानीति' । गतिसमासः । अत्र कुमति चेति नित्यं णत्वं प्राप्नोति, दीर्घाह्नी शरदित्ययमपि यवादिषु द्रष्टव्य इत्युक्तम् ॥

"एकाजुत्तरपदे णः" ॥ 'विकल्पाधिकारनिवृत्तेर्विस्पष्टीकरणार्थमिति' । अन्यथा यद्यप्यत्रारम्भसामर्थ्यान्नित्यो विधिः शक्यो विज्ञातुम्, उत्तरत्र त्वनुवृत्तिः संभाव्येत ॥

"कुमति च" ॥ अनेकाजुत्तरपदार्थोयमारम्भः । 'वस्त्रयुगिणाविति' । युगशब्दादिनि कृते पश्चाद्वस्त्रेण समासः कर्त्तव्यः, एवं तद्धुत्तरपदस्य प्रातिपदिकस्यान्तो नकारो भवति, अन्यथा मातृभोगीणवल्लक्षणान्तरेणैव णत्वं सिद्धं स्यात्, कावित्युच्यमानेपि कवर्गमात्रस्योत्तरपदस्यासंभवान्मतुबर्थो लभ्यते नार्थो मतुपा, सत्यं, कावित्युच्यमाने तदादिविधिर्विज्ञायेत कवर्गादावुत्तरपदइति ॥

"उपसर्गादसमासेपि णोपदेशस्य" ॥ ण उपदेशे यस्य स णोपदेशः । 'प्रणायको देश इति' । अत्र गतिक्रियायोगमात्रमेव प्रतिप्रस्योपसर्गत्वं न नमतिं प्रति । 'असमासेपीति किमिति' । विशेषानुपादानादेव समासासमासयोर्द्वयोरपि भविष्यतीति प्रश्नः । 'पूर्वपदाधिकारादिति' । सर्वत्रैवात्र प्रकरणे पूर्वपदादिति वर्तते, समासे एव पूर्वपदं भवति, तेन समासएव स्यात् । 'तदधिकारनिवृत्तिद्योतनार्थमिति' । नानेन विस्पष्टार्थमसमासेपिग्रहणमित्युच्यते । तथाहि । यद्यप्यस्वरितत्वात्पूर्वपदादिति निवर्त्तते तथाप्यसमासेपिग्रहणं कर्त्तव्यमन्यथा ऽसंज्ञायां समासे न स्यात्, पूर्वपदात्संज्ञायामेवेतिनियमादस्य च विधेरसमासे चरितार्थत्वात्तस्मात्पूर्वपदाधिकारनिवृत्तिद्योतनमुखेन समासासमासयोर्द्व-

योरपि यथा स्यादित्यसमासेपिग्रहणमित्ययमर्थो द्रष्टव्यः। नन्वसिद्धमुपसर्गणत्वं, तस्यासिद्धत्वान्नियमो न भविष्यति, तेन पूर्वपदादित्यस्मिन्वृत्ते न कर्तव्यमसमासेपिग्रहणम्। एवं तर्ह्येतज्ज्ञापयति न योगे योगोऽसिद्धोपि तु प्रकरणे प्रकरणमसिद्धमिति, यदा तु पूर्वपदात्संज्ञायामिति सूत्रं नियमार्थमिति पक्षस्तदैतदुच्यते, यदा तु विध्यर्थं तदा नैतदुपपद्यते॥

"हिनुमीना"॥ हि गतौ स्वादिः, मीञ् हिंसायां क्र्यादिः दीर्घान्तः, हिनुमीनाग्रहणे विकृतस्योपसंख्यानम्, इहापि यथा स्यात्, प्रहिणोति प्रमिणीतः, सिद्धं वा स्थानिवत्त्वात्, ईत्वगुणयोः स्थानिवद्भावे सति उपात्तमेव रूपमिति णत्वं भविष्यति। ननु पूर्वत्रासिद्धे न स्थानिवत्, दोष एवायमस्याः परिभाषायास्तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति॥

"आनि लोट्"॥ 'प्रवपाणीति'। वपेर्लोट्, मेनिः। आडुत्तमस्य पिच्च,प्रयाणीतियाते रूपम्। 'प्रवपानीति'। प्रकृष्टा वपा येषु तानि प्रवपानि, आनिलोड्ग्रहणमनर्थकमर्थवद्ग्रहणात्, अर्थवत आनिशब्दस्य ग्रहणं, न चैवोर्थवान्, अनुपसर्गाद्वा, यत् क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञे भवतः, न चैतमानिशब्दं प्रति क्रियायोगः, तदन्तं तु प्रति भवति, कथं नैवं विज्ञायते यस्य क्रिया यत्क्रिया, यत्क्रियायुक्ता इति, कथं तर्हि या क्रिया यत्क्रिया यत्क्रियायुक्ता इति, प्रयोगविषया च क्रिया न क्व चिदसंसृष्टास्तीति समुदायस्याश्रीयतइति आनिशब्दान्तं समुदायं प्रति क्रियायोगः, तत्रायं च सूत्रार्थः, उपसर्गात्परस्यावयवो य आनिशब्दस्तवकारस्य णत्वमिति, तदेवं प्रत्याख्यातं लोड्ग्रहणम्॥

"नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च"॥ गामादाग्रहणेष्वविशेष इति वचनान्मीनातिमिनोतिदीङामित्यात्वे कृते यन्माङ्रूपं यच्च मा मानइति तेषामपि ग्रहणप्रसङ्ग इत्याशङ्क्याह। 'माङ्मेङोर्ग्रहणमिष्यतइति'। इष्टि-

१ न चैवानिशब्दमिति पा· ई· पु·।

रेवेयम्। 'प्रणिष्यतीति'। ओतः श्यनि, उपसर्गात्सुनोतीत्यादिना षत्वं, हन्तिप्रभृतयः प्सातिपर्यन्ता अदादयः, मा माने च। 'प्रणिशाम्यतीति'। शमामष्टानां दीर्घः श्यनि, स्यत्यादिषु तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। 'अड्व्यवायेपीति'। अन्यथाङ्गस्याडुच्यते, विकरणान्तं चाङ्गं, सोसौ संघातभक्तो ऽशक्यो गदादिग्रहणेन ग्रहीतुमिति न स्यात्, आडा चेति वक्तव्यम्, प्रण्यागददिति। तर्हिवक्तव्यं, न वक्तव्यम्, अट्कुप्वाङ्नुम्व्यवायइति वर्त्तते, तेन नेर्गदादीनां चाड्व्यवाये आड्व्यवाये च भविष्यति, प्रन्युपगदतीत्यादौ तु पदव्यवायेपीति प्रतिषेधादप्रसङ्गः॥

"शेषे विभाषा ऽकखादावषान्तउपदेशे"॥ अकखादावषान्तइति चोपसर्गसंविधापितस्य धातोर्विशेषणमित्याह। 'अकखादिरषान्त उपदेशे यो धातुरिति'। आदिग्रहणं शक्यमकर्तुम्, अकखइति वक्तव्यं, यस्मिन्विधिस्तदादावल्ग्रहणे, अन्तग्रहणं तु कर्त्तव्यम्, असति हि तस्मिन ज्ञायेत केन तदादिविधिः, केन वा तदन्तविधिरिति, शेषग्रहणं किं, गदादिषु माभूत्। यदि तेष्वपि स्यात्पूर्वयोगो निर्विषयः स्यात्तस्माच्छेषइति शक्यमवक्तुम्। 'प्रनिपेक्ष्यतीति'। षढोः कः सीति कत्वे कृते सम्प्रत्यषान्तो भवति। 'प्रनिचकारेति'। कुहोश्चुरित्यभ्यासस्य चुत्वे कृते सम्प्रत्ययं न ककारादिर्भवति। 'प्रणिवेष्टेति'। व्रश्चेत्यादिषत्वे कृते सम्प्रति षान्तो भवति, उपदेशे त्वषान्तत्वाणत्वं भवति॥

"अनितेः"॥ 'प्राणितीति'। श्वस प्राणने अन च,रुदादिभ्यस्सार्वधातुकइतीट्॥

"अन्तः"॥ 'अनितेरन्तस्येति'। अनितेः संबन्धिनः पदान्तस्य नकारस्येत्यर्थः। 'हे प्राणिति'। क्विबन्तात्संबुद्धिः, न ङिसंबुद्ध्योरिति नलोपप्रतिषेधः, अन्यत्र तु पदान्तस्य नकारस्य लोपेन भवितव्यमिति संबुद्ध्यन्तमुदाहृतम्। 'अन्तश्च पदापेक्षो गृह्यतइति'। नानित्यपेक्षः, व्यभिचाराभावात्। 'केचित्त्वित्यादि'। अनितेरन्तइत्येकमेव योगं पठन्ति, समीपवचनं चान्तशब्दमाश्रयन्तीत्यर्थः, किमर्थमित्याह। 'निमित्तसमीपस्येति'। ननु च नास्त्येव स विषयो यत्र निमितस्य समीपभूतो ऽनि-

तेनैकारः, प्राणितीत्यादावेकादेशे कृते आकारेण व्यवायः, निरणितीत्यत्राकारेण तत्कथं निमित्तसमीपस्यस्येत्युच्यते ऽत आह । 'एकवर्णव्यवहितस्येति'। सामर्थ्यादेकवर्णेन[1]व्यवधानमाश्रीतमित्यर्थः । न च प्राणितीत्यत्रैकादेशस्य पूर्वस्माद्विधौ स्थानिवद्भावाद्वर्णद्वयव्य[2]वायः शङ्कनीयः, पूर्वत्रासिद्धे स्थानिवत्त्वनिषेधात् । ननु चोक्तं तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति, एवं तर्ह्यनित्यः पूर्वस्माद्विधौ स्थानिवद्भावः, निष्ठायां सेटीति सेड्ग्रहणात्, एतच्च स्थानिवत्प्रकरणएव व्याख्यातम् । 'तैरित्यादि'। एकं ह्यन्तग्रहणं तच्च सामीप्यार्थं पर्यनितीत्यत्र णत्वव्यावृत्त्या चरितार्थं, ततश्च हे प्राणित्यत्र पदान्तस्येति प्रतिषेधः प्राप्नोति, तस्मात्तैर्द्वितीयमप्यन्तग्रहणमावृत्त्या तन्त्रेण वा ऽऽश्रयितव्यम् । ननु च येपि योगविभागं कुर्वन्ति अवयववचनं चान्तशब्दमाश्रयन्ति तैरपि पूर्वसूत्रे सामीप्यवाच्यन्तशब्दः पठितव्य एव, अन्यथा पर्यनितीत्यत्रापि स्यात्, अत आह । 'येषां त्विति'। ते नैकवर्णव्यवहितस्यापि णत्वमिच्छन्त्येव, तस्मान्नार्थस्तेषां पूर्वसूत्रेन्तग्रहणेनेत्यर्थः ॥

"उभौ साभ्यासस्य" ॥ 'प्राणिणिषतीति'। सनि अजादेर्द्वितीयस्येति निशब्दस्य द्विर्वचनम् । 'प्राणिणदिति'। ण्यन्ताल्लुङ्, च्लेश्चङ्, णिलोपः, द्विर्वचनेचीतिस्थानिवद्भावान्निशब्दस्य द्विर्वचनम् । 'पूर्वत्रासिद्धीयमित्यादि'। पूर्वत्रासिद्धीयमद्विर्वचनइत्यस्मिन्नसति प्रानिसतीति स्थिते द्विर्वचनं च प्राप्नोति णत्वं च, तत्र णत्वस्यासिद्धत्वात्पूर्वं द्विर्वचने कृते ऽभ्यासणकारेण व्यवायाद्धातुनकारस्य णत्वं न स्यात्, अस्मिंस्तु सति परत्वाण्णत्वे कृते कृतणत्वस्यैव द्विर्वचने अन्तरेणाप्येतद्वचनं प्राणिणिषतीत्यादि सिद्धं भवति, यद्येवं किमर्थमिदमारभ्यतइत्याह । 'शक्यास्त्विति'। शक्यार्थे कृत्यः, इतिकरणो हेतौ, तुशब्दोवधारणे, यस्मादेतदपवादवचनमेतदर्थं नैव शक्यमाश्रयितुं, तस्मादेतदारभ्यते, अयमभिप्रायः । अस्य वचनस्यानित्यत्वज्ञापनार्थमिदमारभ्यतइति, तेनौजढदित्यत्र ढत्वादीना-

---

१ व्यवाय इति पा॰ ई॰ पु॰ ।

२. वर्णद्वयव्यवायेन व्यवाय इति पा॰ ई॰ पु॰ ।

मसिद्धत्वात् हत इत्येतद् द्विरुच्यते इत्युपपन्नं भवति, अयोभावित्ति किमर्थं, यावताभ्यासनकारस्य पूर्वाणैव णत्वं सिद्धत्यारम्भसामर्थ्याद्धातुनकारस्य व्यवायेप्यनेन भविष्यति, सत्यं, व्यवहितस्य सिद्धति, अनन्तरस्य तु तक्रकौण्डिन्यन्यायाच्च स्यादित्युभावित्युच्यते ॥

"हन्तेरत्पूर्वस्य" ॥ हन्तेरित्यवयवषष्ठी, अत्पूर्वो यस्मादिति बहुव्रीहिः, नकारोन्यपदार्थः, यद्यपि नकारविशेषणानि प्रथमया निर्दिश्यन्ते, अन्तः, उभावित्ति, तथा पीह षष्ठ्या निर्देशः कृतः, इदं हि न्याय्यं व्यतिक्रमोल्पः । 'प्रहण्यतइति' । भावे कर्मणि वा लट् । 'प्रघ्नन्तीति' । गमहनेत्युपधालोपः, हो हन्तेरिति कुत्वम्, अत्र कुव्यवायइति प्रसंगः । 'प्राघानीति'। चिण् भावकर्मणोरिति चिण्। श्तिपा निर्देशो धातुनिर्देशार्थ एव न यङ्लुङ्निवृत्त्यर्थः, प्रजङ्घनीति, अत्र हि चुत्वे कृते अकारेण व्यवायादेव न भविष्यति ॥

"वमोर्वा" ॥ पूर्वेण नित्ये प्राप्ते विकल्पः ॥

"अन्तरदेशे" ॥ अन्तःशब्दस्याङ्किविधिणत्वेषूपसंख्यानमित्युपसर्गसंज्ञाया भावाद्धन्तेरत्पूर्वस्येति सिद्धे देशप्रतिषेधार्थं वचनम् । 'अन्तर्हननो देश इति' । अधिकरणे ल्युट् ॥

"अयनं च" ॥ 'अन्तरयणमिति' । अयेरिणो वा ल्युटि रूपं, कृत्यच इति सिद्धे इदमपि देशप्रतिषेधार्थं वचनम् ॥

"छन्दस्यृदवग्रहात्" ॥ अवगृह्यते विच्छिद्य पठ्यते इत्यवग्रहः, ऋच्चासाववग्रहश्च ऋदवग्रहः, ऋकारादवग्रहात्पूर्वपदादिति, त्रिण्यपि समानाधिकरणाः पञ्चम्यः, तत्र ऋकारमात्रस्य पूर्वपदस्यासंभवादृकारेण तदन्तविधिः, अवग्रहणभूतो य ऋकारः तदन्तादिति, संहिताधिकाराच्च संहिताकालएवेषां णत्वं, पदकाले चावग्रहः क्रियते, तेनावग्रहयोग्यत्वादृकारोवग्रह इत्युक्तः, न तु तद्रूपापन्नः, तथा चावग्रहं दर्शयता णत्वं न प्रयुक्तम् । 'अनवगृह्यमाणादिति' । अनवग्रहयोग्यादित्यर्थः । 'अपदादिति' । पदे ह्यवग्रहः क्रियते पदमत्र विच्छिद्यतइति दर्शनाय ॥

"नश्च धातुस्थोरुषुभ्यः"॥ धातौ तिष्ठतीति धातुस्थो रेफः षकारश्च, उरु इति स्वरूपग्रहणं, षु इति कृतषत्वस्य सुञो ग्रहणं न सप्तमीबहुवचनस्य, तेन इन्द्रो धता गृहेषु न इत्यत्र न भवति, नसिति नासिकादेशस्यास्मदादेशस्य च सामान्येन ग्रहणं, ततोऽत्रास्मदादेश एव कार्यो, तस्यैव धातुस्थादिभ्यः परस्य संभवात्, उत्तरसूत्रे तूभयोः कार्यित्वम्। 'रक्षाणा इति'। रक्षेति लोण्मध्यमपुरुषैकवचनान्तं, द्व्यचोतस्तिङ इति दीर्घः। 'शिक्षाणइति'। शिक्षतिर्दानकर्मा छन्दसि। 'उरुणस्कृधीति'। कृञो लोट्, सेर्हिः, श्रुशृणुपृकृवृभ्यश्छन्दसीति हेर्धिरादेशः, कः करदित्यादिना विसर्जनीयस्य सत्वम्। 'अभीषुणइति'। इकः सुञीति दीर्घः, एवमूषुणा इत्यत्रापि॥

"उपसर्गाद्बहुलम्"॥ न संप्रति क्रियायोगाभावात्प्राद्युपलक्षणमुपसर्गग्रहणं, प्रण इत्यस्मदो नसादेशः, प्रणस इति बहुव्रीहिः, उपसर्गाच्चेत्यच् समासान्तः, नासिकायाश्च नस्भावः, उपसर्गादनोत्पर इति पाठान्तरम्, उपसर्गात्परस्य नसो नकारस्य णत्वं भवति, ओतः परस्य ओकारे वा न भवतीत्यर्थः। उभयथाप्यतिव्याप्त्यव्याप्तिसंभवाद्व्याख्यात एव पाठो वृत्तिकारेणाश्रितः॥

"कृत्यचः"॥ कृत्स्थो यो नकार अच उत्तर इत्यनेनाच इति नकारस्येदं विशेषणं न कृत इति दर्शयति, यदि हि कृत एतद्विशेषणं स्यात् प्रापणमित्यादौ न स्यात्, न भाभूपूकमिगमिप्यायिवेपामित्यत्र च कम्यादीनां प्रतिषेधोनर्थकः स्यात्। 'अनमानेत्यादि'। संभवोदाहरणप्रदर्शनपरं न परिगणनमन्यस्यासंभवात्। 'अन इति'। योरनादेशः, मानइत्याग[1]तमुक्,शानजादिः, तव्यदादिसूत्रविहितोनीयः, आक्रोशे नञ्यनिः, सुप्यजातौ णिनिः, आवश्यके णिनिः, निष्ठादेशो रदाभ्यामितिविहितः। 'प्रहीण इति'। घुमास्थेत्यादिना ईत्वम्। 'प्रमग्नः प्रभुग्न इति'। ओदितश्चेति निष्ठानत्वम्। 'निर्विण्णस्येति'। अचः परः कृत्स्थो नकारो न भवतीति वचनं, तत्र परस्य नस्य णत्वं पूर्वस्य ष्टुत्वम्॥

---

१ माने मुगिति २। ३ पु॰ पा॰।

"णेर्विभाषा" ॥ 'ण्यन्ताद्यो विहित इति'। एतेन णेरित्यस्य विहितविशेषणत्वन्दर्शयति, प्रयोजनं वृत्ताविव वक्ष्यते, अपरः प्रकारः, अड्व्यवायइति वर्त्तते, तेन ण्यन्तस्य कृतश्चाड्व्यवायेपि णत्वस्याभ्यनुज्ञानात् ण्यन्तात्परः कृदित्येवमाश्रीमाणेपि प्रयाप्यमाणमित्यादौ यकारव्यवायेपि णत्वसिद्धिरिति ॥

"हलश्चेजुपधात्" ॥ 'प्रकोपणमिति'। कुप क्रोधने। 'प्रेहणं, प्रोहणमिति'। ईह चेष्टायाम्, ऊह वितर्के, अत्र कृत्यच इति णत्वं नित्यमेव भवति, कथं पुनरसत्यादिग्रहणे हलादेरिति लभ्यतेत आह। 'इजुपधस्येति'। इजुपधस्य हलन्तत्वाव्यभिचारात्सामर्थ्यादादिविशेषणं हल्ग्रहणमित्यर्थः ॥

"इजादेः सनुमः" ॥ 'हल इति वर्त्ततइति'। प्रयोजनमुत्तरत्र वक्ष्यति, ननु तत्रादिविशेषणं हल्ग्रहणमन्तविशेषणेन चेहार्थः, अत आह। 'तेनेति'। इजादेर्हलादित्वासंभवात् सामर्थ्यम्। 'प्रेङ्खणमिति'। इखि गत्यर्थः, इदित्वान्नुम्। ननु चात्रानुस्वारे कृते नायं सनुम्को भवति, काममत्र स्थानिवद्भावात्सिद्ध्यति प्रोम्भणमिति. अत्र त्वादित एव नुम् भवतीत्यत्र न सिद्ध्यति, औत्पत्तिको हि तत्र नकारः, प्रेन्वनमित्यत्र च प्राप्नोति, यत्र नुमेवाविकृतः श्रूयते, तस्मादिहापि नुम्ग्रहणमनुस्वारोपलक्षणार्थं व्याख्येयं, नक्षत्रदर्शनन्यायेनेष्टविषये सर्वत्र भविष्यति, अनिष्टे च न भविष्यति, एवं च कृत्वा नियमार्थतोपपद्यते, अन्यथा प्रेन्वनमित्यत्र विध्यर्थता संभाव्येत, न चाट्कुप्वाङ्नुम्व्यवायेपीत्येतेन सिद्धिः, तत्रापि नुम्ग्रहणस्यानुस्वारोपलक्षणत्वात्। ननु कृत्यच इत्यनेनैव सिद्धे नार्थोनेनात आह। 'सिद्धे सतीति'। 'प्रमङ्गनमिति'। मगिरपि गत्यर्थ एव, प्रमङ्गनमिति पाठे मण्डनार्थः। ननु च कैमर्थ्यान्नियमो भवति, विधेयं नास्तीति कृत्वा, इह चास्ति विधेयं किं ण्यन्ताद्विभाषा प्राप्ता, तत्र नित्यं णत्वं विधेयमत आह। 'हल इत्यधिकारादिति'। ननु च णिलोपे कृते

१ अत्रेत्यारभ्योत्तरसूत्रे इदित्वान्नुमित्यन्तः पा॰ इं॰ पु॰ त्रुटितः।

णयन्तोपि हलन्तो भवति ततः[1] किं, सत्यपि हलधिकारे विध्यर्थता संभवति, नैतदस्ति, विहितविशेषणस्याश्रयणात्, एतदेव ह्यभिप्रेत्य वृत्तिकारेणोक्तं हलन्ताद्धातोर्यो विहित इति ॥

"वा निंसनिक्षनिन्दाम्" ॥ णिसि चुम्बने, णिक्ष रोषणे, णिदि कुत्सायां, णोपदेशत्वादेतेषां नित्ये णत्वे प्राप्ते विकल्पः ॥

"न भाभूपूकमिगमिप्यायिवेपाम्" ॥ 'पूञ्ग्रहणेन पूङो ग्रहणमेष्टव्यमिति'। इष्टिरेवेयम्। 'ण्यन्तानां चेति'। ण्यन्तस्याधात्वन्तरत्वाच्च प्राप्नोतीति वचनं, किं च ण्यन्तेष्वस्य प्रवृत्तौ पक्षे ऽनुवाददोषप्रसङ्गः, णौर्विभाषेत्येव पक्षे[2] निवृत्तेः सिद्धत्वात् ॥

"षात्पदान्तात्" ॥ 'निष्पानं दुष्पानमिति'। इदुदुपधस्य चेति विसर्जनीयस्य षत्वम्, अत्र कृत्यच इति प्रसङ्गः। 'सर्पिष्पानमिति'। कर्मणि षष्ठ्याः समासः। 'यजुष्पानमिति'। कर्तृकरणे कृता बहुलमिति समासः, उभयत्रापि नित्यं समासेनुत्तरपदस्यस्येति षत्वम्, अत्र पानं देशे वा भावकरणयोरिति प्राप्तिः। 'पदे अन्त इति'। सप्तमीतियोगविभागात्समासः। 'सुसर्पिष्केणेति'। शोभनं सर्पिरस्येति बहुव्रीहिः, कप्, इणः ष इति षत्वं, नायं पदे परतः पूर्वमवस्थितस्यान्तो भवति, पदस्य त्वन्तो भवति, स्वादिष्विति पदसंज्ञाया विधानात्, ततश्च षष्ठीसमासे ऽत्रापि प्राप्नोति, कथं पुनर्ज्ञायते सप्तमीसमासोयमिति, अन्तग्रहणात्, अन्यथा वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव षकारान्तात्पदादिति लभ्यते ॥

"नशेः षान्तस्य" ॥ 'प्रनष्ट इति'। मस्जिनशोर्झलीत्यागतस्य नुमो ऽनिदितामिति नलोपः, व्रश्चादिषत्वम्। नशेरशः। अशकारान्तस्य नशेरिति वक्तव्यं, न तु षान्तस्येति, इहापि यथा स्यात्प्रनङ्क्ष्यतीति, षढोः कः सीति कत्वं भवति, तर्हि तथा वक्तव्यं, नेत्याह। 'षान्तग्रहमिति'। षकारेण नशेर्विशेषणात् षान्तस्येति सिद्धे पुनरन्तग्रहणसामर्थ्याद्यः संप्रति षान्तो यश्च भूतपूर्वस्तस्य भवति प्रतिषेधः ॥

---

१. तत इत्यारभ्य संभवतीत्यन्तः पा० ई० पु० नास्ति।
२ पक्षे णत्वेति पा० ई० पु०।

"पादान्तस्य" ॥ हेकर्रिरित्याद्यप्युदाहरणम् ॥

"पदव्यवायेऽपि" ॥ 'माषकुम्भवापेनेति'। अत्र केचिदाहुः। यदा माषाणां कुम्भो माषकुम्भः, तस्य वाप इति प्रक्रिया तदोत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात्पदत्वाभावान्निषेधाप्रवृत्तेर्भवितव्यमेव णत्वेन, तस्मात्कुम्भस्य वापः, कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवाप इति प्रक्रियाश्रयेणोदाहरणमिति। अत्र कुमति चेति प्राप्तिः। 'प्रावनद्धमिति'। उपसर्गादसमासेऽपीत्यवशब्दव्यवायेऽपि अड्व्यवायइति प्राप्तिः। 'प्रगाचयामइति'। छन्दस्ययं व्यवहितः प्रयोगः। गामिति द्वितीयान्तेन पदेन व्यवायः। 'पदव्यवाये ऽतद्धितइति'। योऽयं पदव्यवाये प्रतिषेधः स तद्धिते यत्पदं तत्र न भवतीति वक्तव्यमित्यर्थः। 'आर्द्रगोमयेणेति'। गोश्च पुरीषइति मयट्, तत्र परतो गोशब्दः स्वादिष्विति पदम् ॥

"क्षुभ्नादिषु च" ॥ क्षुभ्नेति स्वरूपग्रहणं न धातुग्रहणं, तेन क्षोभणमित्यादौ णत्वं भवत्येव, क्षुभ्नीतः क्षुभ्नन्तीत्यत्र श्नाल्लोपयोः स्थानिवद्भावादेकदेशविकृतस्यानन्यत्वाद्वा णत्वं न भवति। नृनमयतीति नृनमः, हरिनन्दीति ताच्छीलिको णिनिः। हरिनन्दनः। गिरिनगरमिति[2] षष्ठीसमासौ। 'नरीनृत्यतइति'। रीगृदुपधस्य च। 'तृप्नोतीति'। छन्दसि व्यत्ययेन श्नुः। 'परिनर्त्तनं परिगहनमिति'। प्रादिसमासौ। 'परिनन्दनमिति'। गतिसमासः, शरनिवेशादयो दर्भानूपान्ताः षष्ठीसमासाः। 'आचार्यभोगीनः आचार्यानीति'। अत्रैवास्य प्रतिषेधः, आचार्येण आचार्याणामित्यादौ तु भवत्येव। 'क्षुभ्नातिराकृतिगण इति'। चकारोऽनुक्तसमुच्चयार्थ एतमेवार्थं सूचयति ॥

"स्तोः श्चुना श्चुः" ॥ अत्र संनिपातइत्यध्याहार्यम्। 'वृक्षश्शेतइति'। वा शरीति पक्षे विसर्जनीयस्य सकारः। 'मज्जतीति'। झलां

१ तरन्निति पा॰ ई॰ पु॰।
२ हरिनगरमिति पा॰ ई॰ पु॰।
३ शरनिवासादय इति पा॰ ई॰ पु॰।

जश् झशीति सकारस्य दकारे कृते तस्य चुत्वं जकारः, असिद्धत्वं तु जश्त्वस्य न भवति, न मु नइत्यत्र नेति योगविभागात्तथा च भृज्जतीनां ह्लितीति निर्देश उपपद्यते, इह सकारतवर्गौ कार्यिणौ द्वौ निमित्ते अपि द्वे एव शकारचवर्गौ, ततश्च साम्यात्संख्यातानुदेशः प्राप्नोतीत्याशङ्क्याह । 'शात्तिप्रतिषेध इति' । श्चुनेति तृतीयानिर्देशः पूर्वभूतेनापि योगे यथा स्यात्, यज्ञः, याच्ञेति, सप्तमीनिर्देशे तु तस्मिन्निति निर्दिष्टे पूर्वस्येति परभूतेनैव योगे स्यात् ॥

"ष्टुना ष्टुः" ॥ 'अट्टतीत्यादि'। अतट अतिक्रमणहिंसयोः, चद्ड अभियोगे, तकारदकारोपधयोरेतयोर्गणपाठः क्विबन्तयोः संयोगान्तलोपे कृते तकारदकारयोः श्रवणार्थः, न न्द्राः संयोगादय इति प्रतिषेधोप्यड्डतेर्भवति, इहापि तृतीयानिर्देशः पूर्वभूतेनापि योगे ष्टुत्वं यथा स्यात् यथा द्रोढेति, अत्रापि तोः षीति प्रतिषेधान्निर्मित्तनिमित्तयोः संख्यातानुदेशो न भवति ॥

"न पदान्तात् टोरनाम्" ॥ अनामिति षष्ठीबहुवचनस्यागतनुट्कस्य प्रतिषेधः । 'श्वलिट्साय इति'। धुडभावपक्षे सकारस्य ष्टुत्वं प्राप्नोति, धुट्पक्षे तु चर्त्वस्यासिद्धत्वात्तस्यैव धकारस्येति । 'ईट्टइति' । ईड् स्तुतौ, अदादिरनुदात्तेत्, षडधिका नवतिः षण्णवतिः, षण्णां नगरीणां समाहारः षण्णगरी ॥

"तोः षि" ॥ षीतिसप्तमीनिर्देशात्पूर्वभूतेनापि संनिपाते भवत्येव, लोष्टा पेष्टेति ॥

"शात्" ॥ 'प्रश्नः विश्न इति'। यजयाचेत्यादिना नङ्, च्छ्वोः शूडनुनासिके चेति छकारस्य शकारः, सर्वे विधयश्छन्दसि विकल्प्यन्तइति तैत्तिरीयके नायं प्रतिषेधो भवति । अपोश्ञा[१]ति । तत्रापि काठके भवत्येव ब्रह्मचारिणे प्रश्नान् प्रोच्य यजिषाय । स्वाध्यायब्राह्मणे च भवतीति सकलं भद्रमश्नुते ॥

१ अद्यत्वे तु अपोश्नातीति श्चुत्वाघटित एव पाठ उपलभ्यते ।

"यरोनुनासिकेऽनुनासिको वा" ॥ पदान्तादित्यनुवृत्तं षष्ठ्यन्तं विपरिणम्यते । 'वाङ्मयमिति' । नित्यं वृद्धशरादिभ्य इति मयट् ॥

"अचो रहाभ्यां द्वे" ॥ अर्चयतेर्घञ्, कुत्वम्, अर्कः, मर्चिः सौत्रो धातुः, तस्मादिणभीकायाशल्यतिमर्चिभ्यः कन्, चोः कुरिति कुत्वं मर्कः, अत्राकारादनन्तरो रेफः तस्मादपि ककारः, एवमुत्तरेष्वपि द्रष्टव्यम् ॥

"अनचि च" ॥ 'अनच्परस्येति' । अचोन्योनच्, सपरो यस्मात्सोऽनच्परः, अनेन पर्युदासो दर्शितः, किं प्रयोजनं, न किं चित्, प्रत्युत दोष एव, अवसाने न सिद्ध्यति, वाक्, अच्सदृशस्य वर्णान्तरस्याभावात्, प्रतिपत्तिगौरवप्रसङ्गात्पर्युदास आश्रितः, पक्षान्तरे हि विशेषप्रतिषेधात्सामान्येन विधिरनुमेयः स्यादिति गौरवम् । 'उल्का वल्मीक इति' । लकारो यण् ककारमकारौ यमौ, स्थालीति सकारः शर्, थकारः खय्, वत्सादिषु तकारककारपकाराः खयः, सकारषकारौ शरौ । 'अवसानइति' । पर्युदासाश्रयणादिदमप्राप्तं, प्रसज्यप्रतिषेधे तु परस्य निमित्तस्यानाश्रयणाद्वेत्यधिकारात्सिद्धम् ॥

"नादिन्याक्रोशे पुत्रस्य" ॥ 'पुत्रादिनीति' । ताच्छील्ये णिनिः । 'तत्परे चेति' । स आदिनीशब्दो यस्मात्परस्तत्रापि परतः पुत्रशब्दस्य द्विर्वचनं न भवति, पुत्राश्च पौत्राश्च पुत्रपौत्राः, तानत्तुं शीलमस्याः पुत्रपौत्रादिनी, अन्ये तु तत्परे पुत्रशब्दइति व्याचक्षाणाः पुत्रपुत्रादिनीत्युदाहरन्ति, तत्र पुत्रस्य पुत्रमत्तीति विग्रहः । 'वा हतजग्धपरइति' । हतजग्धं च तत्परं चेति विशेषणसमासः राजदन्तादित्वात्परशब्दस्य परनिपातः । 'पुत्रहतीति' । पुत्रो हतो ऽनयेति बहुव्रीहिः, अस्वाङ्गपूर्वपदाद्वेति ङीष् । 'खयो द्वितीया इति' । खय इति षष्ठी । 'द्वितीया इति' । वर्गेषु खकारादयः ॥

"शरोचि" ॥ 'आदर्शइति' । दृशेरधिकरणे घञ् । 'दर्शइति' । अत्राप्यधिकरणे घञ्, विपरीतलक्षणा चेयं, न दृश्यतेऽस्मिंश्चन्द्रमा इति दर्शइति ॥

"त्रिप्रभृतिषु शाकटायनस्य" ॥ इन्द्र इत्यादौ नकारदकारयोर्द्विर्वचनाभावः । 'आष्ट्रमिति' । दीर्घादाचार्याणामित्यस्यासिद्धत्वात्त्रिप्रभृतिष्वयमेव प्रतिषेधो भवतीति मन्यते ॥

"सर्वत्र शाकल्यस्य" ॥ अत्रिप्रभृत्यर्थोऽयमारम्भः ॥

"दीर्घादाचार्याणाम्" ॥ दात्रमित्यादावनचि चेति प्राप्तिः ॥

"झलां जश् झशि" ॥ उदाहरणेषु भघधानाम्बगदाः ॥

"अभ्यासे चर्च" ॥ 'चिखनिषतीति'। खनेःसन्, द्विर्वचनं, कुहोश्चुरिति चुत्वञ्छकारः, तस्य चर्त्वञ्चकारः । टिठकारयिषतीति । ठकारमाचष्टइति णिच्, टिलोपः, सन्,[1] ठकारस्य टकारः । 'तिष्ठासतीति'। शर्पूर्वाः खय इति थकारस्य शेषः, तस्य चर्त्वं तकारः । 'प्रकृतिचरां प्रकृतिचर इति' । जश्त्वबाधनार्थं पर्जन्यवल्लक्षणप्रवृत्त्या प्रकृतिरूपाश्चरः स्थानिना ऽभिन्नरूपा भवन्तीत्यर्थः । एतच्चान्तरतमपरिभाषया लभ्यते । 'प्रकृतिजशां प्रकृतिजश इति' । व्याख्यातम् । 'डिड्ढइति' । डीङो लिटि द्विर्वचने एरनेकाच इति यण् ॥

"खरि च" ॥ 'युयुत्सतइति' । युधेः सन्,धकारस्य तकारः । 'आरिप्सते आलिप्सतइति' । रभिलभ्योः सनि मीमाघ्वित्यादिना अच इस्, स्कोः संयोगाद्योरिति सलोपः, भकारस्य पकारः ॥

"वावसाने" ॥ झलां जशोन्तइति नित्ये जश्त्वे प्राप्ते चर्त्वं विधीयते, वावचनात्पक्षे सोपि भवति ॥

"अणोऽप्रगृह्यस्यानुनासिकः" ॥ अण् इति पूर्वेण णकारेण प्रत्याहारः । 'अग्नी वायू इति' । ईदूदेदिति प्रगृह्यसंज्ञा ॥

"अनुस्वारस्य ययि परसवर्णः ॥ 'शङ्कितेत्यादि'। शकि शङ्कायाम्, उच्छि उञ्छे, कुडि दाहे, टुनदि समृद्धौ, कपि चलने, इदित्त्वान्नुम्, नश्चापदान्तस्य झलीत्यनुस्वारः, तस्य ककारादिषु परतो यथासंख्यं परसवर्णा वर्गपञ्चमा ङकारादयः, कुर्वन्ति कृषन्तीत्यत्र झोऽन्तादेशे

१ सनीति पा· ई· पु· ।

नकारस्य णत्वं प्राप्नोति तत्कस्मान्न भवतीत्याह । 'इहेति'। णत्वमनुस्वारात्पूर्वं न भवति, यस्माण्णत्वस्यासिद्धत्वात्पूर्वमनुस्वार एव क्रियते, पश्चादपि न भवति, अनुस्वारस्थानिकस्यास्य परसवर्णस्य णत्वे कर्त्तव्ये ऽसिद्धत्वात् । 'परसवर्णेनेति'। परसवर्णार्थेन शास्त्रेणेत्यर्थः । 'एवमित्यादि'। अनुस्वारीभूतो णत्वमतिक्रामतीति भाष्ये यदुक्तं तदेवमुक्तप्रकारेणेत्यर्थः ॥

"वा पदान्तस्य" ॥ 'तङ्कथयेत्यादि'। ककारादिषु परतो ङकारादयः क्रमेण भवन्ति ॥

"तोर्लि"। अत्र तकारस्य शुद्धो लकारः, नकारस्यानुनासिकः ॥

"उदः स्थास्तम्भोः पूर्वस्य" ॥ परसवर्ण इति समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते । 'उत्थानेति'। सकारस्य पूर्वसवर्णस्तकारः । अन्ये तु बाह्यप्रयत्नसाम्यात् थकारमिच्छन्ति, तत्र थकारद्वयस्य श्रवणं, न च पूर्वस्य चर्त्वं तत्र कर्त्तव्ये ऽस्य पूर्वसवर्णस्यासिद्धत्वात् । 'रोगे चेति वक्तव्यमिति'। इदमविशेषेण छन्दसि भाषायां च ॥

"झयो होऽन्यतरस्याम्" ॥ उदाहरणेषु हकारस्य महाप्राणस्य सोष्मणो घोषवतस्तादृश एव घकारादयश्चतुर्था भवन्ति ॥

"शश्छोऽटि" ॥ 'शश्छोमी[1]तीति'। अटीत्यपनीयामीति वक्तव्यमित्यर्थः । तच्छ्लोकेन[2]तच्छ्मश्रुणेत्यत्र लकारम[3]कार परस्यापि[4] शकारस्य भवति ॥

"हलो यमां यमि लोपः" ॥ 'द्वौ यकाराविति'। एकः संज्ञायां समजेत्यादिना विहितस्य क्यपः संबन्धी, द्वितीयो ऽयह्यिक्ष्णितीत्ययकादेशस्य । 'क्रमजस्तृतीय इति'। क्रम आनुपूर्वी, ततो जातः, क्रमजः, स च पुनरनचि चेति द्विर्वचनेन संपादितः । 'तकारात्पर एको यकार इति'।

१ छत्वममीतिवक्तव्यमिति मु· मू· पु· पाठः पदमञ्जर्यसम्मतः ।
२ तच्छ्लोकन्तच्छ्रुणामीति पा· ई· पु· ।
३ ऽकारपरस्येति पा· ई· पु· ।
४ अपीति नास्ति ई· पु· ।

दित्यदित्येत्यादिना विहितस्य यस्य संबधी। 'द्वौ यकाराविति'। एको ऽदितिशब्दात्परस्य यस्य संबन्धी द्वितीय आदित्यशब्दात्। 'अव-मति'। भवत्ययं नकारो यम्, यम्परश्च, न तु हलः परः। 'आर्घ्य-मिति'। पादार्घाभ्यां चेति तादर्थ्ये यत्, भवत्ययं घकारो रेफाद्धलः परो यम्परश्च न तु यम्। 'शार्ङ्गमिति'। शृङ्गस्य विकार इत्यण्, ऋकारस्य रपरा वृद्धिः, अत्र ङकारो यम् भवति हलश्च परः न तु यम्परः। ननु च बहिरङ्गा वृद्धिः, ततः किं, हलः परो न भवति, लोपोऽपि बहिरङ्गो ऽनेक-निमित्तापेक्षत्वात्॥

"झरो झरि सवर्णे"॥ 'त्रयस्तकारा इति'। [2]अव उपसर्गात्त इत्याकारस्य तकारः, दकारस्यापि चर्त्वं तकारः, एकः प्रत्ययसम्बन्धी, अनचि चेति द्विर्वचने क्रमजश्चतुर्थः। 'चत्वारस्तकारा इति'। पूर्वोक्तास्त्रयश्चतुर्थो मरुच्छब्दसम्बन्धी, पञ्चमो द्विर्वचनेन सम्पादितः। 'मरुच्छब्दस्योप-संख्यानसामर्थ्यादिति'। एतच्च मरुच्छब्दस्योपसंख्यानमित्यत्रैव प्रति-पादितम्। 'शार्ङ्गिचिति'। भवत्ययं ङकारो हलः परः झरि सवर्णे परतः न त्वयं झरिति न लुप्यते। 'प्रियपञ्चेति'। प्रियाः पञ्चास्येति बहुव्रीहिः। वा प्रियस्येति प्रियशब्दपूर्वनिपातस्तृतीयैकवचनम्, अल्लोपः, नकारस्य श्चुत्वं ञकारः, भवत्ययं चकारो हलः परः स्वयं च झर् सवर्णे च परतः, न तु ञकारो झरिति न लुप्यते। ननु चाल्लोपस्य स्थानिव-त्वादनन्तरो न भवति सवर्णः, तत्किमेतन्निवृत्त्यर्थेन झरीत्यनेनेत्यत आह। 'अल्लोपस्येति'। 'तर्प्तेति'। तृप प्रीणने, पकारस्य तकारः, स्थानभेदात्सवर्णो न भवति, ननु च निमित्तानां कार्यिणां च संख्यासा-म्यादिह संख्यातानुदेशे सति नैव तर्प्तेत्यत्र लोपः प्राप्नोति, तत्किमेतन्नि-वृत्त्यर्थेन सवर्णग्रहणेनात आह। 'सवर्णग्रहणसामर्थ्यादिति'। नहि यथासंख्येऽस[3]वर्णो झरस्ति यद्व्यावृत्त्यर्थं सवर्णग्रहणं स्यात्। 'शिण्ढि पि-

१ मु. मू. पु. यमामिति किमित्यस्य प्रत्युदाहरणमग्निरित्येवोपलभ्यते, मिश्रानु-सारेणार्घ्यमित्यपि।

२ अव उपसर्गादित्यारभ्य चत्वारस्तकारा इत्यन्तो ग्रन्थ ई. पु. नास्ति।

३. सत्यसवर्णइति पा. ई. पु.।

पठीति'। शिष्लृ विशेषणे, पिष्लृ संचूर्णने रुधादौ, लोट्, सेर्हिः। श्नसोरल्लोपः, हेर्धिः, झलां जश् झशीति षकारस्य डकारः, नश्चापदान्तस्य झलीत्यनुस्वारः, तस्य परसवर्णो णकारः, धकारस्य ष्टुत्वं ढकारः, अनेन डकारस्य ढकारे लोपः॥

"उदात्तादनुदात्तस्य स्वरितः"॥ 'गार्ग्यो वात्स्य इति'। गर्गादिभ्यो यञ्, ञित्त्वादाद्युदात्तत्त्वं, शेषनिघातः, तस्य स्वरितः। 'पचति पठतीति'। शप्तिपावनुदात्तौ, धातुस्वरः, शबकारस्य स्वरितत्वं, तित्स्वरितमित्यस्यानन्तरमिदं वक्तव्यम्, एवं हि स्वरितग्रहणं न कर्त्तव्यं भवति, अत आह। 'अस्येति'। यदि तत्र क्रियेत अनुदात्तं पदमेकवर्जमित्येतत्प्रवर्तेत, इह तु करणे न प्रवर्त्तते, स्वरितस्यासिद्धत्वात्तेन द्वयोरप्युदात्तस्वरितयोः श्रवणं भवति॥

"नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्"॥ उदात्तस्वरितावुदयौ यस्मादिति बहुव्रीहिः, उदयशब्दः प्रत्येकमभिसंबध्यते, यदाह। 'उदात्तोदयस्येति'। उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः, तत्र शब्दो लित्स्वरेणाद्युदात्तः, क्वशब्दः किमोऽदित्यत्प्रत्ययान्तस्तित्स्वरितः। 'उदात्तस्वरितपरस्येति वक्तव्यइति'। एतदप्युपलक्षणम्, उदात्तस्वरितयोरित्येव वक्तव्यमिति, इत एव परशब्दार्थलाभात्। 'मङ्गलार्थमिति'। उदयशब्दोच्चारणमेव मङ्गलं मङ्गलादीनि हि शास्त्राणि प्रथन्ते, मङ्गलमध्यानि मङ्गलान्तानि च वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च, इह चादौ वृद्धिशब्दोमध्ये शिवशब्दः शिवशमरिष्टस्य करइति, अन्ते चायमुदयशब्दः॥

"अ अ"॥ एकोऽत्र विवृत्तः परः संवृतः, द्वावप्यविभक्तिकौ, यो विवृतस्स स्थानी, यः संवृतः स आदेशः। किमर्थमकारस्याकारो विधीयते, इत्याह। 'इहेति'। 'कार्यार्थमिति'। तत्पुनः कार्यमकारस्य दीर्घप्लुताभ्यां सवर्णसंज्ञा अन्यथा प्रयत्नभेदान्न स्यात्, ततश्च ह्रस्वोऽकारो गृह्यमाणो दीर्घप्लुतौ न गृह्णीयात्। तत्र दोषः। अकः सवर्णे दीर्घः, इहैव स्यादैन्द्राग्नमिति, इह न स्याद्दण्डाढकमिति, तस्मादेवमादिकार्यार्थ-

मकार इह शास्त्रे विवृतः प्रतिज्ञाय¹ति, तत्र यदीयं प्रत्यापत्तिर्न क्रियेत तस्य तदा तथाभूतस्यैव प्रयोगः स्यात्, स माभूदिति प्रत्यापत्तिरिह क्रियते, इह स्थान्यकारो विवृतो अण्त्वात् सवर्णानां ग्राहक इति दीर्घप्लुतयोरपि स्थाने संवृतोऽकारः प्राप्नोति आदेशस्त्वकारः संवृतोऽण् न भवतीति सवर्णानां ग्राहको न प्राप्नोति, भाव्यमानत्वात् । ततश्च यद्गुणः संवृत उच्चारितस्तद्गुण एवाष्टादशभेदभिन्नस्यापि अवर्णस्य प्राप्नोति, इत्याशङ्क्याह । 'दीर्घप्लुतयोश्चेति' । इष्टिरेवेयम् । यद्वा तपरनिर्देशात्सिद्धम्, अद इति सूत्रं कर्तव्य, तत्र तः परो यस्मादिति पूर्वो ऽकारस्तपरः, तात्परस्तपर इति द्वितीयः, ततश्च स्थान्याकारो दीर्घप्लुतौ न ग्रहिष्यत्यादेशस्त्वनणापि गुणान्तरयुक्तांस्तत्कालान् ग्रहिष्यति । एकशेषनिर्देशो वायं द्रष्टव्यः, अत्र षड् मात्रिका अकाराः स्थानिनो निर्दिश्यन्ते, आदेशा अपि षडेव, तत उभयत्रैकशेषः, तत्र षण्णां स्थानिनां निर्देशसामर्थ्यात् स्थानिभिर्दीर्घप्लुतौ भिन्नकालौ न गृह्येते । ततः षण्णां स्थानिनां स्थाने षडादेशाः संवृता यथासंख्य भवन्तीति सर्वेष्टसिद्धिरिति शम् ॥

इति श्रीभट्टहरदत्तमिश्रविरचितायां पदमञ्जर्या-
मष्टमस्याध्यायस्य चतुर्थः पादः ।

## समाप्ता चेयं काशिकाव्याख्या पदमञ्जरी ।

## ॥ शुभं भवतु ॥




१ प्रतिज्ञात इति पा॰ ई॰ पु॰ ।

Printed and published by E. J. Lazarus & Co., at the Medical Hall Press, Benares

